# ŚRIMAD-BRAHMASŪTRĀṆUBHĀṢYA

OF

ŚRIMAD VALLABHĀCĀRYA

*with*

the Commentary PRADĪPA

*of*

*Śri Icchārāma Bhaṭṭaji of Petlau*

*Edited by*

LATE PROF. MAGANLAL GANPATIRAM SHASTRI

the then Prof. of Sanskrit, Deccan College, Poona

**BUTALA & CO.**

DELHI BARODA

श्रीमदखण्डभूमण्डलाचार्यश्रीकृष्णवदनविरहवैश्वानरावतार-
श्रीश्रीमद्वल्लभाचार्यप्रादुर्भावितं

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्

अखण्डशुद्धाद्वैतब्रह्मवादप्रतिपादनपरं
पेटलादग्रामस्थेच्छारामभट्टाविर्भावितप्रदीपसमलङ्कृतम्।

श्रीभृगुकच्छस्थगणपतिशास्त्रितनुजनुषा 'एम्० ए०' इत्यादिपदभाजा
शास्त्रिमग्नलालशर्मणा
पुरा नि शुल्क सशोधितम् ।

तदेन्महामहिमोपाध्याय-पद्मश्री-विद्यावाचस्पतिना
अध्या० केशवराम-काशीराम-शास्त्रिणा
प्रतिकृतिमुद्रणप्रकारेण पुन मुद्रापयित्वा प्राकाश्य नीतम् ।

बुटाला एण्ड कम्पनी
दिल्ली बडौदा

श्रीमद्वल्लभाचार्यविरचितं

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

प्रदीपसहितं

---

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥ ( १ )

**इदमत्र विचार्य्यते, वेदान्तानां विचार आरम्भणीयो न वेति ।**

---

॥ श्रीगोवर्धननाथाय नमः ॥ श्रीगोपीजनवल्लभाय नमः ॥ श्रीवल्लभ कृपासिन्धो श्रीविठ्ठल दयानिधे । श्रीगोपालगुरो युष्मत्कृपालेशोस्तु मे सदा ॥ १ ॥ ध्यात्वा चैषां पदाम्भोजे नत्वा श्रीछत्रिकं मुदा । प्रदीपमणुभाष्यीयपदानां विवृणोम्यहम् ॥ २ ॥ सौभाग्य हरिदासानामिच्छारामे भवेद्यदि । तदियं विवृतिः पूर्णा भवत्विति निदर्शनम् ॥ ३ ॥ चक्षुष्मतां प्रकाशाय भाष्यार्थस्य विना श्रमम् । इच्छारामः करोतीमं दीपं दिव्यं सुखावहम् ॥ ४ ॥ अथशब्देन मङ्गलमाचरन्तो ग्रन्थारम्भमाहुः अथेत्यादि, अथशब्दोऽर्थचतुष्टये वर्तते मङ्गलेऽधिकारे आनन्तर्ये अर्थान्तरोपक्रमे च, ' ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मण. पुरा मुख भित्त्वा विनिर्यातौ तेन माङ्गलिकौ स्मृता'वितिवाक्यात् श्रवणमात्रेणैवाथशब्दस्य माङ्गल्यसम्पादकत्वाद्व्यासचरणैर्मङ्गलार्थं तस्यैवादौ प्रयोगात् 'अथ शब्दानुशासन'मित्यत्र महाभाष्यकारैरपि मङ्गलार्थमथशब्दस्यादौ निबन्धात् स्वयमपि भाष्यकाराः शिष्यशिक्षार्थं मङ्गलमाचरन्तो मङ्गलार्थमथशब्दमुपनिबध्नन्तोऽथशब्दघटितसूत्रमेवादौ निबध्नन्ति, अथातो ब्रह्मजिज्ञासा इति । सूत्रलक्षणं तु 'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च सर्वतःसारभूतानि सूत्राण्याहुर्मनीषिण'इति 'स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखमस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु'रिति च, भाष्यलक्षणं च 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि'ति, एतल्लक्षणस्य वाक्येतिव्याप्तिवारणाय सूत्रानुसारित्वमुक्त, वृत्तावतिव्याप्तिवारणाय स्वपदानि च वर्ण्यन्त इत्युक्तम्। अधिकरणमवतारयन्ति इदमत्रेत्यादिना । नन्वधिकरणस्य पञ्चाङ्गत्वात्, पञ्चाङ्गानि च 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरं संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृत'मिति, अत्र विचाररूपविषयस्यानिर्णीतस्य सूत्रादुपस्थितावपि इतराङ्गानां सूत्रादनुपस्थितत्वात्कथमिदमधिकरणात्मकं सूत्रमित्याकाङ्क्षायां, सौत्राण्येव सर्वाण्यङ्गानीति बोधयितुं बुद्धिस्थसकलपदार्थबोधकमिदंपदघटितं वाक्यमाहुः **इदमत्र विचार्यते** इति । इदंपदप्रयोगेणापि कथं तावदधिकरणाङ्गानां लाभ इति चेदित्थ, तथाहि निर्गुणं ब्रह्म सधर्मकं निर्धर्मक वेति संशये निर्गुणं ब्रह्म निर्धर्मकमेवेतिपूर्वपक्षे प्राप्ते, तादृशं ब्रह्म सधर्मकमेवेति निर्णयो यतो व्यासमीमांसातिरिक्तशास्त्रैर्न भवत्यतो ब्रह्मविचारो ब्रह्मजिज्ञासापदबोध्योऽथशब्देनाधिकारार्थेनाधिक्रियते आरभ्यते इति सूत्रार्थे क्रियमाणे विचारकर्तव्यताप्रतिज्ञानात् 'सन्दिग्धे न्यायः प्रवर्तत' इतिन्यायात्, विचाररूपविषये विचारः कर्तव्यो न वेति संशये प्राप्ते विरुद्धयुक्तिभिर्न कर्तव्य इति पूर्वपक्षे प्राप्ते तन्निरासेन वेदानुकूलयुक्तिभिर्विचारकर्तव्यतानिर्द्धारणमेव सौत्रविचारकर्तव्यताप्रतिज्ञाया लभ्यते इति सूत्रविचारकर्तव्यताप्रतिज्ञाबलादेव पञ्चाङ्गानां लाभ इति बोध्यमिति न कापि पूर्वोक्तानुपपत्तिरिति, अग्रिमसूत्रेषु वेदान्तविचारस्य कर्तव्यत्वात् विचारे उपोद्धातसंगतिरपि लभ्यते, तथाहि 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधा' इत्यभियुक्तानां वाक्यात्, वेदान्तार्थः कथ सिध्येदितिप्रकृतवेदान्तार्थसिद्धेरनुकूलत्वं विचारेऽस्तीति उपोद्धातसंगतिलाभात् इदंशब्देनैतावानर्थो बुद्धिस्थः प्रतिपाद्यते इति तमेव सर्वमर्थं प्रकटीकुर्वन्ति **वेदान्तानां विचार आरम्भणीयो न वेत्यादिना ।**

किं तावत्प्राप्तम् ?

नारम्भणीय इति । कुतः ?

साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः ।
निःसन्दिग्धं तदर्थाश्च लोकवत् व्याकृतेः स्फुटाः ॥

अर्थज्ञानार्थं विचार आरम्भणीयः, तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवतीति न मन्तव्यं, विचारं विनापि वेदादेव साङ्गादर्थप्रतीतेः. नचार्थज्ञानमविहितमविचारिताश्च शब्दा नार्थं प्रत्याययन्तीति वाच्यं, ज्ञेयश्चेतिविधानात्

'गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः' इति ॥

बाधोपलब्धिश्च, शब्दश्चक्षुरादिवन्न सन्दिग्धार्थप्रतिपादकः, तदर्थश्च व्याकरणादिना निश्चीयते, यथा लौकिकवाक्ये तथा वेदेऽपि, नच तद्विरुद्धं निर्णेतव्यं, अप्रामाणिकत्वप्रसङ्गात्, तस्माद्वेदार्थज्ञानार्थं विचारो नारम्भणीयः ।

स्यादेतत् । न वेदार्थज्ञानमात्राय विचारः किन्तु ब्रह्मज्ञानाय, तस्य चात्मरूपत्वात्तस्य चाविद्यावच्छिन्नत्वात् देहात्मभावदृढप्रतीतेस्तदतिरिक्तस्य ब्रह्मणोऽभावान्न वेदमात्रादसम्भावनाविपरीतभावनानिवर्त्तकं ज्ञानमुत्पद्यते प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति ।

---

किं तावत्प्राप्तं ? कोटिद्वयमध्ये किं सिद्धम् ?

वाद्यभिप्रेतां पूर्वपक्षकोटिमाहुः नारम्भणीय इत्यादिना, तत्रानारम्भणे हेतुप्रश्नः कुत इति, तत्र विनैव विचारं वेदार्थनिर्णयसम्भवरूपं हेतुमाहुः साङ्गो ध्येय इत्यादिना, शब्दाश्च बोधकाः वैदिकशब्दाः स्वार्थबोधकसामग्रीसहिताः विचाररूपव्याससमीमांसा विनैव स्वार्थबोधका इत्यर्थः, वैदिकशब्दाना शक्तिग्राहक प्रमाणमुपन्यस्यन्ति, निःसन्दिग्धमित्यादिना, लोकवत् धातुप्रकृतिप्रत्ययादिशब्दानामिवेत्यर्थः, व्याकृतेः व्याकरणात्, स्फुटाः तत्तद्धर्मावच्छिन्नशक्तिग्रहविषयाः, एव निघण्टुनिरुक्तादितोऽपि बोध्या., उक्तकारिकार्थं स्फुटीकुर्वन्ति अर्थज्ञानार्थमित्यादिना, तस्य च वेदार्थस्य चेत्यर्थः, तज्ज्ञाने ब्रह्मज्ञाने, वेदादेव साङ्गात् अधीतादिति शेषः, अविहितं केन सम्पादनीयं कथं संपादनीयं किमर्थं संपादनीयमिति अंशत्रयविशिष्टभावनाविषयीभूतं न भवतीत्यर्थः, अविचारिताः मीमांसा तर्केन निर्णीताः 'अक्ताः शर्करा उपदधाति सक्तून् जुहोती'तिवदित्यर्थः, तत्रार्थज्ञानविधिमाहु' ज्ञेयश्चेत्यनेन तथाच पदार्थज्ञानकरणिका गुरूपसत्त्यादीतिकर्तव्यताका इष्टफलिका भावना तयार्थज्ञानस्य लब्धेर्विज्ञानविधिसिद्धिरन्यथानुपपत्तिप्रसूतार्थापत्त्या ससामग्रीकमर्थज्ञानसम्पादनमाहु गीतीत्यादिना, बाधोपलब्धिः अर्थज्ञानं विना वेदाध्ययने अधमत्वापत्तेरर्थज्ञान विना अध्ययनस्यैवासम्भवात् अध्ययनविधेर्बाधापत्तिरतोऽर्थज्ञानमर्थाक्षिप्तमिति बोध्यं, नच ज्ञानस्य सशयात्मकस्यापि सम्भव।द्विरुद्धकोट्यपसारणाय विचार आवश्यक इति वाच्यमिति वदन्ति शब्देत्यादिना, न सन्दिग्धार्थप्रतिपादकः परोक्ष ज्ञानं निश्चयात्मकमेवेतिसिद्धान्तान्न सन्दिग्धार्थप्रतिपादक इत्यर्थः, तदर्थश्च वैदिकशब्दार्थश्च, आदिशब्देन निघण्टुनिरुक्तादि ग्राह्यं, तद्विरुद्धं व्याकरणादिविरुद्धम्, निर्णेतव्यं विचारेण निर्णेतव्यम्, अप्रामाणिकत्वप्रसङ्गात् तादृशनिर्णयस्याप्रामाणिकत्वप्रसङ्गादित्यर्थः ।

एकदेशी स्वमतेन व्याससूत्रात्मकविचारस्य कर्तव्यतामुपपादयति स्यादेतदिति, एतत् वक्ष्यमाणं, स्यात् विचारप्रयोजकं स्यात्, वेदार्थज्ञानमात्राय वेदघटकपदानामर्थज्ञानमात्रायेत्यर्थः, तस्य ब्रह्मणः, आत्मरूपत्वात् जीवात्मस्वरूपत्वात्, तस्य जीवात्मनः, देहात्मभावदृढप्रतीतेः देह एवात्मा इति दृढप्रतीतेरित्यर्थः, तदतिरिक्तस्य देहातिरिक्तस्य, अभावात् विचारशून्यानां ज्ञानाभावात्, वेदमात्रात् वेदघटकप्रत्येकपदार्थज्ञानमात्रात्, असम्भावना 'न तस्य कार्यं करण च विद्यते' 'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च खं ज्योतिर्वायुरापश्च पृथ्वी विश्वस्य धारिणी' 'अणोरणीयान् महतो महीयान्' 'समो नागेन समो मशकेन' इत्यादिविरुद्धधर्माणां ब्रह्मणि

मैवम् ।

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात् परमात्मनः ॥

न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः, ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यं, अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात्,

'योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥'

'नैषा तर्केण मतिरापनेये'तिश्रुतेश्च ।

नच विरुद्धवाक्यानां श्रवणात्तन्निर्द्धारार्थं विचार, उभयोरपि प्रामाणिकत्वेनैकतरनिर्धारस्याशक्यत्वात्, अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च, अत एवोपनिषत्सु तत्तदुपाख्याने बोधाभावे औपाधिकबोधे च तपस एवोपदेशः ।

नच तपःशब्देन विचारः, तस्य पूर्वानाधिक्यात्तप एव ।

---

असम्भावितत्त्वज्ञानरूपासम्भावना, विपरीतभावना सर्ववेदान्तानामेकवाक्यतया प्रामाण्यसिद्ध्यर्थं 'अथात आदेशो नेति नेती'त्यनेनापवादार्थमध्यारोप 'सर्वं खल्विदं ब्रह्म तज्जलानि'त्याद्यध्यारोप विपरीतभावनाशब्देनोच्यते, तस्या विपरीतभावनायास्तत्त्वज्ञानदशायामग्रे बाधनात्, देहात्मभावदृढप्रतीतेः अहं ब्राह्मणः काणः सुखी क्षुधित इत्यादिरूपाया. देहादीनामात्मत्वेन दृढप्रतीते., श्रुतेः 'नित्यशुद्धबुद्धमुक्तस्वभावमे'वविधादिश्रुतेः, उपचरितार्थत्वं मिथ्यार्थप्रतिपादकत्वं, स्तुतित्वं सकलपदार्थाना ब्रह्मत्वेन प्रतीकोपासनाया वेदोक्तत्वेन तस्यास्तत्त्वज्ञानफलकत्वेन चोपासनार्थं 'वाचं धेनुमुपासीत' 'धन्वन्निव प्रपासी'त्यादिश्रुतीनामिव 'तत्त्वमस्या'दिवाक्यानामपि स्तुतित्वं वा मुक्त्यधिकारी कल्पयिष्यतीत्यर्थ., इति हेतोः, प्रमाणमूर्धन्यवेदार्थस्य व्याससूत्रानुसारेण विचारे कृते अध्यारोपापवादाभ्या सर्वस्य मिथ्यात्वेऽवगते 'तत्त्वमस्या'दिवाक्यैस्तत्त्वज्ञान भविष्यतीति विचार आवश्यक इतिभावः ।

एकदेशिमतं दूषयन्ति मैवमित्यादिना, अलौकिकः अलौकिकसाधनगम्यः, युक्त्या लौकिकयुक्त्या, प्रतिपद्यते ज्ञातु शक्यते, वेदार्थज्ञानालौकिकसाधनान्याहुः तपसेत्यादिना, तपसा 'तपसा ब्रह्म विजिज्ञासस्वे'त्युक्ततपसेत्यर्थः, युक्त्या 'न्यग्रोधफलमाहरे'त्याद्युक्तवैदिकयुक्त्येत्यर्थ, प्रसादात् 'भक्त्या तुतोष भगवान् गजयूथपाये'त्याद्युक्तप्रसादादित्यर्थः, स्वोक्तकारिकार्थ स्फुटीकुर्वन्ति नहीत्यादिना, स्वबुद्ध्या वेदाप्रतिपाद्यया, वेदार्थं परिकल्प्य सर्ववेदानामेकवाक्यतासिद्ध्यर्थं वेदतात्पर्यविषयीभूतौ अध्यारोपापवादौ वेदार्थ इति परिकल्प्येत्यर्थः, तदर्थं तयोरध्यारोपापवादयोर्निर्वाहार्थं, विचारः स्वकल्पितनिर्वाहार्थ सूत्रात्मको विचार इत्यर्थः । ननु ब्रह्मणि पूर्वोक्तरीत्याऽसम्भावनाविपरीतभावनाना सम्भवाद्ब्रह्मस्वरूपनिर्णयार्थमेवाध्यारोपापवादपूर्वको विचार. कर्तव्य इत्यत आहु ब्रह्म पुनरित्यादि, यादृशं 'अणोरणीयानि'त्याद्युक्तनानाप्रकारकैकधर्मिविशेष्यकज्ञानविषयीभूत, तादृशमेवेत्येवकारेणान्यादृशाङ्गीकारव्यवच्छेदः, अन्यथाकल्पने वेदोक्तादन्यथाकल्पने, दोषबोधिकां श्रुतिमाहुः योन्यथेत्यादिना, एषा श्रुतिवाक्येभ्यः सम्पन्ना ।

तन्निर्धारार्थं विरुद्धवाक्यानामर्थनिर्वाहार्थं, उभयोरपि 'आसीनो दूरं व्रजति शयानो याति सर्वश' इत्यादि— श्रुतिप्रतिपादितयोर्विरुद्धत्वेन प्रतीतिगोचरयोर्द्वयोरप्यर्थयोरित्यर्थः, एकतरः उभयोर्मध्ये एकमात्ररूप इत्यर्थः, ननु विरुद्धयोरेकधर्मिवृत्तित्वांगीकारे गोत्वाश्वत्वयोरपि तथात्वापात इत्यत आहुः अचिन्त्येत्यादि तथा च यतोऽचिन्त्यानन्तशक्तिमानतः सर्वभवनसमर्थः यतः सर्वभवनसमर्थोऽतो विरोधाभाव इत्यर्थः, गवाश्वादिस्तु नैवविध इति तत्र विरोध एवेतिभावः, अत एव वेदार्थब्रह्मणो लौकिकयुक्त्या निर्णयासम्भवादेव, तत्तदुपाख्याने इत्यादि भृगुवरुणसंवादे भृगोर्बोधाभावे वरुणेन 'तपसा ब्रह्म विजिज्ञासस्वे'त्युक्तं, एवं छान्दोग्ये इन्द्रप्रजापतिसंवादे इन्द्रस्यौपाधिकबोधे प्रजापतिना 'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्य'मिति तपस एवोपदेशः कृतो न तु लौकिकयुक्तेरित्यर्थः ।

ननु 'तप आलोचने'इतिधर्माभिनिष्पन्नस्तप. कदाऽपि विचारार्थक एवेत्यत आहुः न च तप इत्यादि, तस्य यौगिकतपःशब्दार्थविचारस्य, पूर्वानाधिक्यात् लौकिकयुक्तिरूपपूर्वोक्तापेक्षयातिरिक्तस्यासम्भवादित्यर्थः, तप एव

नचोपाख्यानानां मिथ्यात्वं, तथासति सर्वत्रैव मिथ्यात्वं भवेत्, विशेषाभावात्, न ह्यप्रामाणिकोक्ते विधौ वा उपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो यथा लोके, तस्माद्वेदे अक्षरमात्रस्याप्यसत्यार्थज्ञानस्याभावात् वैदिकानां न सन्देहोऽपि, किं पुनर्विरुद्धार्थकल्पना।

विद्यासु च तदश्रुतेः। यदि वेदार्थज्ञाने विचारस्योपयोगः स्यात्, अङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात्।

स्वातन्त्र्ये च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात्, 'तन्त्वौपनिषदं पुरुषं पृच्छामीति' तुशब्देन तेषां निषेधः, अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति, तस्मान्नारम्भणीय एव ब्रह्मविचारः।

अनेन धर्मविचारोऽप्याक्षिप्त एव, न ह्येतन्निराकर्तुः सोऽयमतिभारः। इति पूर्वः पक्षः।

सिद्धान्तस्तु,

सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः।
विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिश्चयः॥
तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः।
अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथादिमः॥

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः सन्देहो भवेत् समानधर्मदर्शनात् पदादिपाठवत्, तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि, तदुक्तं,

---

रूढ्या वृत्त्या तपःशब्देन बोधितोऽर्थो विचारातिरिक्ततयोक्तरूप एव ग्राह्य इत्यर्थः, तप एवेत्येवकारेण निर्धारणार्थकत्वं तपःशब्दे बोधितं, तेन छान्दोग्ये 'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्य'मित्यस्य विचारार्थकता न सम्भवतीत्यपि बोध्यं, एवं चैकत्र ब्रह्मबोधे तपोहेतुत्वसिद्धौ तपःशब्दप्रयोगस्थलेपि तदेव ग्राह्यं नतु विचार इत्यर्थः।

ननु तपसो ब्रह्मज्ञानसाधनत्वमुच्यते परमुपाख्यानेषूच्यते न तु तपसो ब्रह्मज्ञानसाधनताबोधकः कश्चिद्विधिरस्ति उपाख्यानानां तु विद्यास्तावकत्वेनार्थवादतया स्वार्थे प्रामाण्याभावान्मिथ्यार्थप्रतिपादकत्वमेवेति तपसो ब्रह्मज्ञानासम्भवाद्वेदार्थब्रह्मज्ञानाय व्यासविचारः आवश्यक इत्यत आहुः न चोपाख्यानानामित्यादि, तथासति उपाख्यानानामवास्तवार्थप्रतिपादकत्वरूपमिथ्यात्वाङ्गीकारे सति, सर्वत्रैव वेदवाक्यमात्रे इत्यर्थ, विशेषाभावात् ब्रह्ममूलकत्वातिरिक्तस्य वेदे प्रामाण्यप्रयोजकस्याभावात् तस्य चोपाख्यानेष्वप्यविशिष्टत्वादितिभावः, विधौ 'श्रोतव्यो मन्तव्य' इत्यादिरूपे, उपाख्याने श्वेतकेतूपाख्यानस्थत्रिवृत्करणनिरूपणादौ, ब्रह्मस्वरूपे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'निष्कलं शान्तमनवद्य'मित्यादिवाक्यप्रतिपादितब्रह्मस्वरूपे, लोके एकदाऽप्रामाणिकशब्दप्रयोक्तृत्वेन निर्णीतपुरुषप्रयुक्तशब्दे, वैदिकानां वैदिकशब्दमात्रे प्रामाण्यवादिनां, सन्देहोपि वेदे अप्रामाण्यसन्देहोऽपीत्यर्थः, विरुद्धार्थकल्पना उपाख्यानानां मिथ्यार्थत्वकल्पना।

विचारस्याकर्तव्यतायां हेत्वन्तरमाहु' विद्यास्वित्यादि, विद्यासु चतुर्दशविद्यान्तःपातिमुख्यवेदाङ्गेषु षट्स्वित्यर्थः, श्रवणं स्यात् 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमि'तिषडङ्गान्युक्त्वा 'तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते'इतिवद्व्याससूत्ररूपविचारस्यापि ब्रह्मज्ञानसाधकत्वेनाङ्गरूपविद्यासु श्रवणं स्यादित्यर्थः।

स्वातन्त्र्ये च उपनिषदतिरिक्तपुराणादिप्रकारेण व्यासविचारस्य ब्रह्मज्ञानोपयोगित्वे चेत्यर्थः, प्रकारभेदेन अनौपनिषज्ज्ञानसाधनत्वेन, प्रतिपादकत्वं व्याससूत्राणा ब्रह्मप्रतिपादकत्व, तुशब्देन 'तं तु'इतितुशब्देन तेषां उपनिषद्भ्यः सोपस्कराभ्योऽतिरिक्तसाधनानां, निषेधः ब्रह्मप्राप्तिसाधनत्वनिषेधः अन्यथाज्ञानं उपनिषदतिरिक्तयोगसाङ्ख्यपुराणादिसाधनजन्यं ज्ञानं. फलं परमानन्दावाप्तिरूपं फलं, तस्मात् साङ्गवेदाध्ययनेन वेदार्थब्रह्मज्ञानस्य सम्भवात्, ब्रह्मविचारः व्याससूत्ररूपो ब्रह्मविचारः।

अनेन साङ्गवेदाध्ययनादेव कर्मानुष्ठानस्यापि सम्भवेन, एतत् उत्तरमीमांसाशास्त्रं, सः पूर्वमीमांसानिराकरणरूपः।

'असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः, ।
मीमांसानिर्णयः प्राज्ञे' दुर्बुद्धेस्तु ततो द्वयमिति ॥

तथा च निर्णये येनकेनचिद्वक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति व्यासोक्तत्वादपि कर्तव्या ।

कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति, अन्यथा 'अथ योगानुशासन'मितिवत् स्वतन्त्रता स्यात्, तथा च ज्ञानानुपयोगः, तथाहि 'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यं, तद्यदि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत् ।

अथवा अध्याहारकरणापेक्षयाऽथशब्द एवाधिकारे व्याख्येयः, वेदाध्ययनानन्तर्य्यं तु सिद्धमेव, नह्यनधीत[1] एव विचारमर्हति, तत्रैतत् स्यात्, स्वतन्त्रतेति, तत्र प्रतिविधास्यामः, वेदार्थब्रह्मणो वेदानुकूलविचार इति । किमत्र युक्तम्? व्याख्यानमिति. व्याख्यानतो विशेषप्रतिपत्तेः, यथा कर्मणि ' दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः ' ' अथातो दर्शपूर्णमासौ व्याख्यास्याम ' इति ।

---

शास्त्रं मीमांसारूपं शास्त्रं, बुद्धिदोषात् अवैदिकशास्त्रसिद्धान्तावगाहित्वरूपबुद्धिदोषात्, तदुद्भवः सन्देहोद्भवः, सम्भेदात् पदार्थनिर्णये साङ्कर्यात्, सर्वनिर्णयः साधनफलाधिकारिसम्बन्धेत्यनुबन्धचतुष्टयादिनिर्णयः, अन्यथा सूत्रानुसारिविचाराकरणेन, मध्यमः मध्यमाधिकारी, आदिमः हीनाधिकारी, सन्देहो भवेत् वेदार्थे च सन्देहो भवेत्, समानधर्मदर्शनात् पाठे परम्परारूपसमानधर्मदर्शनात्, अर्थे तु 'अक्ताः शर्करा उपदधाती'त्यत्र घृततैलवसास्वञ्जनसाधनत्वरूपसमानधर्मदर्शनादिति बोध्य, पदादिपाठवदिति, तथाहि 'देवाय ते यजमानाय शीकाय ते स्वाहा' इति'संहितापरम्परापाठः 'देवय ते शीकय ते' इतिपदपरम्परापाठः एवमत्र ह्रस्वत्वदीर्घत्वयोर्यथा सन्देहस्तथोपनिषत्स्वपि 'अपाणिपादोऽजवनो ग्रहीते'त्यादिविरुद्धधर्मदर्शनस्थले ब्रह्मसम्बन्धित्वरूपसमानधर्मदर्शनादेवंविधमेवंविधं वा ब्रह्मेतिसन्देहो भवेत्, तत्र संहितापदपाठनिश्चयस्थले केनाक्ताः शर्करा इत्यत्र च, लक्षणानां शाखाव्याकरणादीनां जैमिनिसूत्राणां चेत्यर्थः, एवमेव व्याकरणादिप्रकारेण जैमिनिमीमांसाप्रकारेण चेत्यर्थः, मीमांसायाः व्यासमीमांसायाः सूत्रात्मकविचाररूपायाः, तदुक्तं वेदान्तार्थसन्देहनिराकरणहेतुत्वमुक्तं, मतः इति प्राज्ञेऽन्वेति, मीमांसानिर्णयः व्याससूत्रात्मक. निर्णयसम्पादकः शब्दसमुदाय., दुर्बुद्धेः हीनाधिकारिणो मध्यमाधिकारिणश्च, ततः व्यासमीमांसातः, द्वयं वेदान्तार्थे सन्देहनिवृत्ति. वेदान्तार्थनिश्चयश्चेत्यर्थः ।

निर्णये वेदान्तार्थनिर्णये, तत्कर्तव्यतां विचारकर्तव्यतां, कर्तव्यता निर्णीतवेदान्तार्थस्यापि सन्ध्यावन्दनवद्विचारकर्तव्यताऽऽवश्यकीत्यर्थः, एतेनाग्रे कर्तव्यवेदान्तविचारे प्रथमाधिकरणस्योपोद्घातसङ्गतिः प्रदर्शिता, हरिपदोपादानेन च तपःप्रभृतिसाधनानां कालाभावादेतद्विचारादेवोद्धारोऽपि सूचितः ।

यथाश्रुतसूत्रात् विचारकर्तव्यता न प्रतीयते इति केषांचिदभिप्रेतं सूत्रे कर्तव्यपदाध्याहारमुपपादयन्ति कर्तव्यपदेत्यादिना, स्वातन्त्र्यं न भवतीति तथा चाध्याहारदोषसत्त्वेऽपि विध्यर्थकर्तव्यप्रत्ययघटितकर्तव्यपदाध्याहारे कृते विचारस्य वैधत्व स्याद्वैधश्च विचारो वैदिक इति विचारस्योपनिषदुक्तफलसमर्पकता भविष्यति नतु योगपुराणादीनामिवानौपनिषत्फलसमर्पकतेत्यर्थ., अन्यथा कर्तव्यपदाध्याहाराभावे, तथा च स्वतंत्रतासत्त्वे च, ज्ञानानुपयोग औपनिषज्ज्ञानानुपयोगः, एतदेवोपपादयन्ति तथाहीत्यादिना ।

अथाध्याहारपक्षे दोषात् विचारस्य सौत्राक्षरैरेव कर्तव्यतामुपपादयितुमाहुः अथवेत्यादि । अधिकारेऽधिकर्तव्य इत्यस्मिन्नर्थे, नन्वथशब्दस्याधिकारार्थत्वे वेदाध्ययनानन्तर्यार्थरूपाऽथशब्दार्थस्यालाभात् अनधीतवेदैः शूद्रादिभिरपि वेदान्तविचार. कर्तव्यो भवेदित्यत आहुः वेदाध्ययनेत्यादि, अत्राथशब्दस्याधिकारार्थत्वपक्षेऽपि कर्तव्य-

---

[1] नह्यनधीतवेद एवेत्यपि पाठः

**अथवैतर्हीमानि सिध्यन्ति प्रयोजनानि, अधिकाकाङ्क्षा न भवेत्, अध्याहारश्च, पुरुषार्थश्च सिध्येत्, उच्छेदश्च न भवेदिति। कथम्? अथशब्दोऽर्थचतुष्टये वर्तते मङ्गले अधिकारे आनन्तर्ये अर्थान्तरोपक्रमे च, तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेरर्थान्तरस्य च पूर्वोक्तस्याभावात् नात्र तत्कल्पनं, अथावशिष्येते आनन्तर्य्यं चाधिकार चेति, आनन्तर्य्ये तु अध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति, तथा सति तदभावान्न विचारः सिध्येत् ।**

**तथाहि, न तावद्धर्म्मविचारानन्तर्य्यं, विपर्य्ययसम्भवात्, न च पाठतो नियमः, तत्रापि तथा, न चाचाराद्व्यवस्था, तत्राप्यनियमसम्भवात् प्रत्यवायाश्रवणात्, सम्भवेऽपि न वक्तव्यत्वमध्ययनवत्, तथा च ततोऽप्याकाङ्क्षा भवेत्, नच वैराग्यशमदमादिः पूर्वसिद्धः, तेषामेवाभावात्, नच यदैव सम्भवः तदैव तत्कर्तव्यमिति वाच्यं, तदसम्भवापत्तेः, तथाहि ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते, तज्ज्ञानस्यैव साधनत्वेऽवगते, तच्छेषत्वे च यागादीनामवगते, तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि, इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योऽन्याश्रयः, निर्धारिते**

---

तारूपविध्यर्थस्य लाभेऽपि स्वतन्त्रतादोषः परिहृत एव, अत एव 'अथ शब्दानुशासन'मित्यत्राथशब्दस्य प्रस्तावरूपाधिकारपदवाच्यकर्तव्यतारूपार्थकरणेऽपि व्याकरणस्य नावैदिकार्थोपयोगित्वलक्षण स्वातन्त्र्य तथा 'अथातो ब्रह्मजिज्ञासे'त्यत्रापि न स्वातन्त्र्यसम्भावना, तथापि 'तुष्यतु दुर्जन' इतिन्यायेन अभ्युपगमवादेनाशङ्कामाहुः तत्रेत्यादि तत्र कर्तव्यपदाध्याहाराभावपक्षे, **एतत्** वक्ष्यमाणं स्वतन्त्रतारूपं दूषण, तत्र दूषणनिमित्तं, **प्रतिविधास्यामः** समाधान करिष्यामः, समाधानमेवाहुः **वेदार्थेत्यादिना** वेदार्थब्रह्मणः सम्बन्धी ज्ञापकः वेदानुकूलविचारः वेदार्थज्ञानोपयोगित्वावश्यकारणोपजीव्यः वास्तववेदार्थब्रह्मनिर्णायको विचार इति समुदितार्थः, इत्थं च वेदतदङ्गानामध्येतुरेव विचाराधिकार इत्यर्थस्य विचारपदव्याख्यानादेव लाभान्न स्वतन्त्रतादोषगन्धोऽपीति फलितं, अत्र विचारस्य वैदिकत्वस्थापननिमित्त, किं युक्तं कर्तव्यपदाध्याहारोऽथशब्दस्याधिकारार्थत्वरूपव्याख्यानं वा इति विप्रतिपत्तिः, तत्र सिद्धान्तमाहुः **व्याख्यानमिति**, व्याख्यानपक्षे सम्मतिमाहुः **व्याख्यानत इति**, व्याख्यानतो विशेषप्रतिपत्तेर्नहि सन्देहादलक्षणमिति, तत्र दृष्टान्तमाहुः **यथेत्यादि**, तथा च, **'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः'** इति व्याख्येयं निरूपितं, तत्र तुशब्देन पशुसोमादीनां पूर्वनिरूपणस्य व्यवच्छेदः क्रियते, तत्र किं गमकमित्याकाङ्क्षायां अथातःशब्दयोर्व्याख्यानमित्यतोऽग्रे **अथात** इत्युक्त, व्याख्यान तु यतो दर्शपूर्णमासावथ पूर्वमधिक्रियेतेऽनुष्ठीयेतेऽतो हेतोः पूर्वं व्याख्यास्याम इत्यथशब्दस्याधिकारार्थत्वव्याख्यानरूपमेव समाधानं कृत न तु किंचित्तत्राध्याहृतमित्यर्थः, एवमत्राप्यथशब्दव्याख्यानादेवोपपत्तावध्याहारो निरर्थक इत्यर्थः, **'दर्शपूर्णमासौ व्याख्यास्याम'** इति व्याख्याप्रतिज्ञा ।

इतः परं व्याख्यानपक्षे गुणसमूहं अध्याहारपक्षे दोषसमूहं च वक्तुमाहुः **अथवेत्यादि। एतर्हि** अस्मिन् व्याख्यानपक्षे, **इमानि** वक्ष्यमाणानि, **अधिकाकाङ्क्षा** अथशब्दस्यानन्तर्यरूपेऽर्थे वाच्ये सति वेदार्थविचारे वेदाध्ययनानन्तर्यस्यान्यथानुपपत्तिप्रमाणेनैव लाभेऽनन्यलभ्यस्यैव शब्दार्थत्वात् अथशब्देन कस्यानन्तर्यं बोधनीयमित्यधिकाकाङ्क्षेत्यर्थः, **न भवेत्** साऽधिकाकाङ्क्षा ऽप्यथशब्दस्याधिकारार्थत्वपक्षे न भवेदित्यर्थः, **अध्याहारश्च** कर्तव्यपदाध्याहाररूपदोषश्च न भवेदित्यर्थः, **पुरुषार्थः** मोक्षरूपः पुरुषार्थः, **उच्छेदः** अथशब्दस्यानन्तर्यरूपेऽर्थे वाच्ये यस्यानन्तर्यं व्यासविचारे वक्तव्यं तस्यालाभे विचारोच्छेद इत्यर्थः, **न भवेत्** अथशब्दस्याधिकारार्थत्वपक्षे न भवेदित्यर्थः, अथशब्दस्याधिकारार्थत्वपक्षे उक्तानि दूषणानि केन प्रकारेण न भवन्तीत्यत्र प्रकारं पृच्छति **कथमिति, मङ्गले** 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्त्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभावि'तिवाक्यान्मङ्गले, **अथाधिकारे** अथशब्दानुशासनमित्यादौ, **आनन्तर्ये** 'भुक्त्वाथ व्रजिष्यामी'त्यादौ, **अर्थान्तरोपक्रमे** यथादौ किंचिदुक्त्वाथेदमुच्यते इत्यादौ, **श्रुतिमात्रेण** अथशब्दश्रुतिमात्रेण, **पूर्वोक्तस्याभावात्** अथातो ब्रह्मजिज्ञासेत्यत्र पूर्वोक्तार्थान्तरस्याभावादित्यर्थः, **तत्कल्पनं** अथशब्दस्यात्रत्यस्यार्थान्तरोपक्रमार्थत्वकल्पनं, **स्वतःसिद्धत्वात्** अन्यथानुपपत्तिसिद्धत्वात्, **अधिकाकाङ्क्षा** अथशब्दस्याधिकाकाङ्क्षा, **तथा सतीत्यादि** तथा चेतरेषां अर्थानामसम्भवस्य पूर्वमुक्तत्वादाकाङ्क्षितस्याधिकाररूपार्थस्याप्यनङ्गीकारेऽथशब्दोऽनर्थक एव स्यात् तथा सति वाक्यस्य विचारकर्तव्यताबोधकत्वमपि न स्यात् इत्यर्थः ।

तु वेदान्ते विचारो व्यर्थ एव, न च साक्षात्कारस्तत्फलं, तस्य शब्दशेषत्वेन तत्कल्पनायां प्रमाणाभावात्, 'दशमस्त्वमसी'त्यादौ प्रत्यक्षसामग्र्या बलवत्त्वाद्देहादेः प्रत्यक्षत्वात् स्वदेहमपि पश्यन् दशमोऽहमिति मन्यते, न तथा प्रकृते, मननिदिध्यासनविधीनामानर्थक्यप्रसङ्गात्, नचाधिकारिभेदः कल्पनीयः, शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात्, अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजननात्, प्रमाणसङ्करापत्तिश्च, मनसा तज्जननेऽपि तथा, तस्मात् प्रथमं शाब्दमेव ज्ञानमिति मन्तव्यमनुभवसिद्धत्वात्, इदानीन्तनानामपि शमादिरहितानां निर्विचिकित्सितवेदार्थज्ञानोपलब्धेः, संन्यासानुपपत्तिश्च ।

---

अधिकारमात्रार्थत्वस्थापनार्थमन्यार्थतां दूरीकुर्वन्ति **तथा हीत्यादिना**। **धर्मविचारानन्तर्यं** कर्मविचारानन्तर्यमथशब्दार्थ इत्यर्थः, **विपर्ययसम्भवात्** ब्रह्मविचारानन्तरं कर्मविचार इत्यपि सम्भवात्, 'अथ हृदयस्याग्रे अवद्यति अथ वक्षस' इतिवत् क्रमनियामकवाक्यस्याभावादित्यर्थ , **पाठतः** पूर्वं वेदे धर्मः पठ्यतेऽनन्तरं ब्रह्मेति तदेवाथशब्दस्य धर्मानन्तर्यार्थत्वे नियामकमित्यर्थः, **तत्रापि** पाठेपि तथा, विपर्यये बाधकाभावादित्यर्थः, ननु पाठक्रमे नियामकाभावादस्तु तथा तथापि विचारस्तु शिष्टाचाराद्ब्रह्मणो धर्मविचारानन्तरमेव भविष्यतीत्याहुः **न चेत्यादि**, **तत्रापि** विचारेपि, **प्रत्यवायाश्रवणात्** विपरीतविचारे प्रत्यवायबोधकवाक्याभावादित्यर्थः, ननु धर्मविचारे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां श्रुतिस्मृतिप्रामाण्यप्रबलदुर्बलभावानां विधिमन्त्रार्थवादानां निरूपणात् निरूप्यमाणानां तेषां चोत्तरमीमांसायामुपयोगात् धर्मविचारानन्तर्यमथशब्दार्थः कुतो न स्यादत आहुः **सम्भवेपीत्यादि**, **अध्ययनवत्** अन्यथानुपपत्त्यैव पूर्वं धर्मनिरूपणं अनन्तरं ब्रह्मनिरूपणमितिलाभात्, अनन्यलभ्यस्यैव शब्दार्थत्वात् अथशब्दवाच्यत्वं तादृशानन्तर्ये न वक्तव्यमित्यर्थः, **ततोऽपि** धर्मविचारानन्तर्यस्य ब्रह्मविचारे सत्त्वेऽपि, **अधिकाकाङ्क्षा** कस्यानन्तर्यमथशब्दार्थे इत्यधिकाकाङ्क्षा, ननु वैराग्यशमदममुमुक्षादिमत एव वेदान्तविचाराधिकारात् वैराग्याद्यानन्तर्यमेवाथशब्दार्थोऽस्त्वित्यत आहुः **नच वैराग्येत्यादि**, **तेषां** वैराग्यादीनां, **अभावात्** असिद्धत्वात्, **सम्भवः** वैराग्यादीनां सम्भवः, **कर्तव्यं**, सम्भवोत्तरमेव वेदान्तनिरूपण कर्तव्यमित्यर्थः, **तदसम्भवापत्तेः** वेदान्तार्थनिर्णयात्पूर्वं वैराग्याद्यसम्भवापत्तेरित्यर्थः, **परमपुरुषार्थत्वे** परमफलरूपत्वे, **तज्ज्ञानस्य** ब्रह्मज्ञानस्य, **साधनत्वे** परमपुरुषार्थप्राप्तिसाधनत्वे, **तच्छेषत्वे** चित्तशुद्धिद्वारा ब्रह्मज्ञानसाधनत्वाङ्गीकारे, **तदर्थकर्मकरणे** निष्कामतया ब्रह्मज्ञानार्थं कर्मकरणे, **वैराग्यादि** भवतीति पूरणीयं, **इदं च** पूर्वोक्तक्रमेण वैराग्यादिनिष्पादनं च, **अन्योन्याश्रयः** आदौ वेदान्तविचारो वैराग्यादि वेतिस्थितावन्योऽन्याश्रय इत्यर्थः, ननु गुरुमुखादध्ययनकाले वेदान्तार्थनिर्धारे कृते पश्चाद्वैराग्यादिसम्पत्त्युत्तरकालं वेदान्तविचारः कर्तव्य एवं सत्यन्योऽन्याश्रयगन्धोऽपि नेत्यत आहु· **निर्द्धारितेत्यादि**, ननु गुरुसन्निधाने वेदान्तार्थनिर्णयस्य जातस्य वैराग्यादावुपयोगः वैराग्याद्युत्तरवेदान्तार्थविचारस्य तु ब्रह्मसाक्षात्कारः फलमिति न विचारवैयर्थ्यमत आहुः **नचेत्यादि**, **तत्फलं** विचारफल, तच्च नेत्यर्थः, निषेधे हेतुमाहुः **तस्येत्यादि**, **तस्य** पूर्वमीमांसोक्तषट्प्रमाणानां आकाङ्क्षायोग्यतासन्निधीनां वा उचितानुचितत्वविचारेण वेदान्तवाक्यार्थशाब्दबोधे निर्णीतव्ये विचारस्य शाब्दबोधसामग्रीमध्यनिवेशेन शाब्दबोध एवोपक्षीणत्व न तु शाब्दसामग्र्याः ब्रह्मसाक्षात्कारकारणत्वमपि साक्षात्कारकारणत्वकल्पनायां प्रमाणाभावादित्यर्थः, ननु शब्दादपरोक्षमपि 'दशमस्त्वमसी'त्यादौ सर्वजनानुभवसिद्धमिति तत्त्वमस्या'दिवेदान्तवाक्येभ्यो विचाराज्जायमानं साक्षात्काररूपमपि कुतो न स्यादित्यतो दृष्टान्तवैषम्य शब्दादपरोक्ष च द्वयं निषेद्धुमाहुः **दशमस्त्वमित्यादि**, **बलवत्त्वात्** शाब्दप्रत्यक्षोभयसामग्रीसंवलने प्रत्यक्षसामग्र्याः कार्यस्य दृष्टत्वादित्यर्थः, प्रत्यक्षसामग्रीमुपपादयन्ति **देहादेरित्यादिना**, **मन्यते** इति, तथा च पूर्वं देहचक्षुःसन्निकर्षदशायां दशमत्वविशेषणबाधनिश्चयाभावविशिष्टा प्रत्यक्षसामग्र्येव न स्थिता वाक्यश्रवणानन्तरं त्वबाधितदशमत्वविशेषणविशिष्टसंबोध्यज्ञाने जाते पश्चात्प्रत्यक्षसामग्र्या देहांशे लौकिक दशमत्वांशेऽलौकिकं सुरभिचन्दनमितिवद्दशमोहमितिप्रत्यक्षमेव जायते नतु शाब्दाभिन्न प्रत्यक्षमपि, त्वमसीत्युक्तवाक्यादहमस्मीति शाब्दं तु न, ब्रह्मणापि दुरुपपादत्वात्, **न तथा प्रकृते**, **प्रकृते** तत्त्वमस्यादिवाक्यविचारेण ब्रह्मबोधस्थले, **न तथा** वाक्यजन्यशाब्दबोधकाले न प्रत्यक्षजनकसामग्रीसत्ता, न'न्वात्मा वारे द्रष्टव्यः श्रोतव्य' इत्यादौ प्रत्यक्षार्थं श्रवणविधानादेव शाब्दापरोक्षसिद्धिरत आहुः **मननेत्यादि**, **आनर्थक्यप्रसङ्गात्** श्रवणमात्रेणैव ब्रह्मप्रत्यक्षसम्भवे मननिदिध्यासनयोरकारणत्वेन तयोः कारण-

---

१ साक्षात्कारः फलमित्यपि पाठ

किञ्च, अध्याहारश्च कर्तव्यः, स च कर्तव्यादिपदानां, यदि तत्स्वार्थं, व्यर्थमेव वाक्यं स्यात्, परार्थत्वे त्वशक्यं, न हि तैर्विचारः कर्तुं शक्यते, स्वकृतिवैयर्थ्यञ्च, असङ्गतिश्चास्य सूत्रस्य भवेत्।

किञ्च, अधिकारपक्षे पुरुषार्थः सिध्यति नानन्तर्यपक्षे, उक्तन्यायात्।

किञ्च, तादृशस्याधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनासम्भवात् शास्त्रोच्छेदः।

---

ताबोधकवेदस्याप्रामाण्यप्रसङ्गादित्यर्थः, ननु हीनाधिकारिणः श्रवणादित्रिकेण ब्रह्मसाक्षात्कारः, उत्तमाधिकारिणस्तु श्रवणमात्रादेवेत्यत आहुः नचाधिकारीत्यादि, तत्र हेतुमाहुः शब्दज्ञानेत्यादि, शब्दज्ञाने शब्देन जन्यज्ञाने, तत्कल्पनायां अधिकारविशेषस्य शाब्दबोधे कारणताकल्पने, प्रमाणाभावात् आकाङ्क्षायोग्यतासन्निधिशक्तिज्ञानादिक्लृप्तकारणैरेव कार्यसम्भवेऽधिकारविशेषस्यान्यथासिद्धत्वादित्यर्थ., अधिकारस्य शाब्दहेतुतायां नियमाभावमाहुः अत्यन्तेत्यादिना, तथा च बाधाभावादिघटितशाब्दसामग्रीसत्त्वे खपुष्पमरुमरीचिकादिशब्देभ्यः सर्वेषां शाब्दबोधो जायते तादृशार्थबोधेऽधिकारविशेषस्य कारणताया वक्तुमशक्यत्वेन व्यभिचारादधिकारस्य न क्वापि कारणतेत्यर्थः, किंचोत्तमाधिकारिण. शब्दादपरोक्षाङ्गीकारे खपुष्पादिशब्देभ्योप्यपरोक्षापत्तिरधिकारस्याविशिष्टत्वात्, अधिकारताखण्डनेन शाब्दापरोक्ष खण्डयित्वा प्रकारान्तरेण शब्दापरोक्ष खण्डयितुमाहु. प्रमाणसङ्करेत्यादि, तथाचात्र प्रमाणशब्देन व्युत्पत्तिभेदात्प्रमाणप्रमेये बोध्ये, इत्थ च यत्र शाब्दादपरोक्षात्मक शाब्द जायेत तादृशप्रमायां शाब्दत्वसाक्षात्कारत्वयोः केवलशाब्दबोधप्रत्यक्षयो. परस्परात्यन्ताभावसमानाधिकरणयोरेकस्यां समावेशेन शाब्दत्वसाक्षात्कारत्वयोर्जातित्वं न स्यादित्यर्थ', एवमेव प्रमाणगतयोः शब्दत्वप्रत्यक्षत्वयोरपि साङ्कर्यसम्भवाज्जातित्वबाध इत्यर्थः, ननु तत्त्वमस्यादिवाक्यसहकृतेन मनसैव शाब्दापरोक्षमङ्गीकार्य 'मनसैवानुद्रष्टव्य'मितिश्रुतिसाहाय्यादित्थं च शब्दप्रमाणमादाय न जातिसङ्करापत्तिरत आहुः मनसेत्यादि, तज्जनने शाब्दापरोक्षजनने, तथा पूर्ववदेव मनःप्रमे आदाय सङ्करापत्तिरित्यर्थः, सङ्करापत्तिस्तु मनसि शाब्दप्रत्यक्षयो करणत्वात्प्रमाणसङ्करापत्तिः प्रमितौ च शाब्दत्वप्रत्यक्षत्वयोः सत्त्वात्प्रमितिमादाय सङ्करापत्तिरितिरीत्या बोध्या, एवमुत्तमाधिकारिणः शब्दसहकृतमन.सकाशात् खपुष्पादिशब्देभ्योपि शाब्दापरोक्ष स्यादित्यपि दूषणमवसेय, पूर्वोक्तमुपसहरन्ति तस्मादिति, प्रथमं वैराग्यशमादिभ्यः पूर्व, शाब्दमेव वेदान्तविचारेण वेदान्तवाक्येभ्यः शाब्दमेव परोक्षरूप इत्यर्थ', अनुभवसिद्धत्वात् उपनिषत्सु तत्तदृषीणा तच्छिष्याणां च सवादेन परोक्षरूपशाब्दस्यैव सर्वप्रतीतिगोचरत्वादित्यर्थः, इदानीमित्यादि, तथा च शमादिशून्यानां विचारसमर्थानां यदि वेदान्तार्थनिर्णयो न स्यात् तदेदानीन्तनाना तादृशविचारकाणां निर्विकल्पवेदार्थनिर्णयो न स्यात्, जायते इति सर्वानुभवसिद्धमिति न पूर्वोक्त साध्वित्यर्थ., तत्त्वमस्यादिवाक्येभ्यो ब्रह्मापरोक्षबोधाङ्गीकारे दूषणान्तरमाहुः सन्न्यासेति, यद्युपदेशवाक्यादेव ब्रह्मापरोक्षबोधः स्यात् तदा 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वा. ते ब्रह्मलोके तु परान्तकाले परामृता. परिमुच्यन्ति सर्वे' इतिश्रुतौ वेदान्तार्थनिर्णयोत्तरं सन्न्यासोक्तिर्विरुद्धा स्यादित्यर्थः।

अथशब्दस्यानन्तर्यार्थत्वपक्षे दूषणचतुष्टयमुक्त, अधिकाकाङ्क्षा अध्याहारापत्ति. पुरुषार्थासिद्धिः विचारोच्छेदः इति, तेषां मध्ये प्रथमं निरूप्य द्वितीयमुपपादयितुमाहुः किंचाध्याहार इति, कर्तव्य इति, अथशब्दस्यानन्तर्यार्थत्वेऽनन्तरं विचारः एतावन्मात्रमुक्त्वा तूष्णीं स्थितौ वाक्यं निराकाङ्क्षं न स्यादितिकर्तव्यादिपदानामध्याहारः आवश्यकः, विचारकर्तॄणामिष्टसाधनत्वाग्रहसंपादनेन विचारप्रवृत्त्यर्थमवश्यं कर्तव्यमित्यर्थः, तत् अध्याहृतं पदं, स्वार्थं स्वस्य विचारे प्रवृत्ताविष्टसाधनत्वाग्रहसम्पादनार्थं व्यासाभिप्रेतं, व्यर्थमेवेत्यादि, वाक्यप्रयोगात् पूर्वमेव विचारकस्येष्टसाधनताधीसत्त्वात्, अन्यथा प्रतिज्ञावाक्यमेव न वदेत्, इत्थ च सपूर्णं प्रतिज्ञावाक्यमेव व्यर्थं स्यादित्यर्थः, परार्थत्वे परेषामिष्टसाधनताधीसम्पादनेन विचारे प्रवृत्त्यर्थत्वे, अशक्यत्वमेवोपपादयन्ति नहीत्यादि, तैः परैः, कर्तुं शक्यते अन्येन केनचिदुक्तमिदं कर्तव्यमिति श्रवणमात्रेण सर्वेषां करणार्थ प्रवृत्तौ प्रमाणाभावादित्यर्थः, ननु तादृशाज्ञाकारिणां परेषां प्रवृत्तिरपि स्यादेवेति न वैयर्थ्यमत आहुः स्वकृतीति, तथा च परस्य विचारकरणार्थं वाक्यप्रयोगः परेण तु न क्रियते स्वयं च क्रियते इति-स्वकृतेः प्रतिज्ञाकृतेश्च वैयर्थ्यमित्यर्थः, फलितं दूषणमाहुः असङ्गतिरिति, तथा च स्वपरयोर्मध्ये कस्यापि प्रवृत्तावनुपयोगादसङ्गतिरेव सूत्रस्य फलितेत्यर्थः।

आनन्तर्यार्थपक्षे पुरुषार्थासिद्धिरूपं तृतीयं दूषणमुपपादयन्ति किञ्चेत्यादिना, अधिकारपक्षे अथशब्दस्याधिकारार्थत्वपक्षे, पुरुषार्थः मोक्षः, उक्तन्यायात् कस्यानन्तर्यं वाच्यमित्यत्रानन्तर्यनिरूपकस्यालाभेन तदाकाङ्क्षाया अशान्तेर्मोक्षाकाङ्क्षानुदयप्रसङ्गादित्यर्थः।

शास्त्रविरोधश्च, साधनानामग्रे स्वयमेव वक्तव्यत्वात् । अतोऽनेकदोषदुष्टत्वादधिकारार्थ एव श्रेयान् ।

नच ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यं, जिज्ञासापदस्य विचारार्थत्वात्, अत एव 'जिज्ञासितुमिच्छे'दिति पुराविदां वचनानि । जिज्ञासापदेन चैतत् ज्ञापयति ब्रह्मज्ञानं पुरुषार्थसाधनत्वादिष्टं तदिच्छापूरणाय विचार आरभ्यत इति । यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्यतस्तज्ज्ञानाय विचारोऽधिक्रियत इति अतःशब्दार्थः ।

अधिकारी तु त्रैवर्णिक एव, न हि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते कल्पयितुम् । नहि मन्दमतेर्वेदो नायातीति त्रैवर्णिके मतिमत्त्वमधिकारिविशेषणं कल्प्यते । अन्धपङ्ग्वादीनामिव कर्मणि, गृहाद्यासक्तस्य मननाद्यसम्भवात् साक्षात्कारो न भविष्यति ।

---

उच्छेदश्च भवेदिति चतुर्थं दूषणमुपपादयन्ति किञ्च तादृशस्येत्यादिना, तादृशस्य उत्तमस्य, प्रवचनासम्भवात् समाधिव्यापृतत्वेन वेदान्तविचारस्य शिष्याणां पाठनस्य वाऽसम्भवादित्यर्थः ।

शास्त्रविरोधः आदौ वेदान्तविचारमात्रेण तत्त्वमस्यादिवाक्येभ्यो ब्रह्मसाक्षात्काराङ्गीकारे व्यासशास्त्रवैफल्यमित्यर्थः । वैफल्यमेवोपपादयति साधनानामित्यादिना तथा च पूर्वोक्तरीत्या यदि कृतार्थतामभिप्रेयात्तदाग्रे तृतीयाध्याये व्यासः स्वयं साधनानि न वदेत्, न हि कारणं विना कार्योत्पत्तिः कस्याप्यस्ति सम्मता, सम्मता चेत्स्यात्तदाग्रे साधनानि व्यासो न वदेदित्यन्यथानुपपत्त्या साधनाभावे कार्याभाव इति सिद्धमित्यर्थः । आनन्तर्यपक्षे दूषणसमूहमुद्भाव्याथशब्दस्याधिकारार्थत्वपक्ष सर्वैरूरीकर्तुं योग्य इत्युपपादयन्ति अत इत्यादिना, अतः यतोऽधिकारार्थत्वपक्षो निर्दुष्टोऽत इत्यर्थः । अनेकदोषदुष्टत्वात् अथशब्दस्यानंतर्यार्थत्वपक्षे दूषणचतुष्टयोद्भावनानन्तरमपि बहूनां दूषणानामुद्भावनात् अनेकदोषदुष्टत्वादित्युक्तं, अधिकारार्थ एव अथशब्दस्याधिकाररूपार्थ एव, श्रेयान् निर्दुष्टत्वात् सर्वेषामेव श्रेयानित्यर्थः ।

नन्वथशब्दस्याधिकारार्थत्वपक्षे कर्तव्यत्वमेवार्थः पर्यवस्यति, जिज्ञासाशब्दस्य च ज्ञानगोचरेच्छार्थः, सा च कृत्यसाध्येति कथं कृत्यसाधनीयेत्याशङ्कते नचेत्यादिना ज्ञातुं ज्ञानगोचरा, नाधिकर्तुं न कृत्या साधयितुं, विचारार्थत्वात् जिज्ञासापदस्य यौगिकरूढत्वेन स्वातन्त्र्येण रूढ्या वृत्त्या विचारार्थत्वसम्भवाद्यथोद्भित्पदं योगेन खनित्रं बोधयति केवलरूढ्या च यागविशेषमिति तद्वदित्यर्थः । जिज्ञासापदस्य विचारार्थत्वे उपष्टम्भकमाहुः अत एवेति, यत इच्छाविषयकेच्छायाः असम्भवेन एतद्वाक्यस्याप्रामाण्यं स्यादत एवेत्यर्थः, जिज्ञासितुं विचारयितुमित्यर्थः, ननु जिज्ञासापदस्य विचारार्थत्वे विचारपदं त्यक्त्वा किमिति क्लिष्टजिज्ञासापदप्रयोगः कृत इत्यत आहुः जिज्ञासापदेनेत्यादि, जिज्ञासापदेन ज्ञानविषयकेच्छार्थकजिज्ञासापदेनेत्यर्थः, एतत् वक्ष्यमाणमिष्टत्वं, इष्टमिति तथा च सुखस्येव सुखसाधनेष्वपि इष्टत्वं शास्त्रकारिणां सम्मतं यथा यागादौ, अन्यथा तत्साधने प्रवृत्तिर्न स्यादिति भावः, तदिच्छापूरणाय ब्रह्मज्ञानेच्छाविषयलाभार्थमित्यर्थः । अथ शब्दार्थमाहु आरभ्यत इतीति । सूत्रार्थमाहुः यस्मादित्यादि, ज्ञानमेव ब्रह्मज्ञानमेव, तज्ज्ञानाय ब्रह्मज्ञानाय, अतःशब्दार्थः । अतःपदघटितसूत्रार्थः, अथ अधिक्रियते अधिकारिणमुद्दिश्य ब्रह्मजिज्ञासारभ्यते ।

अस्याधिकार्याकाङ्क्षायामधिकारिणमाहुः अधिकारी त्विति, तथा च वैदिकवाक्येङ्गीभूतो यो विचारः सः प्रधानाधिकार्यधिकारिक एव दर्शपूर्णमासाधिकार्यधिकारिकप्रयाजादिवदित्यर्थः । ननु कर्मादिसर्वफलसाधनापेक्षया ब्रह्मज्ञानमेव परमपुरुषार्थसाधनमिति मतिमानेव विचाराधिकारी कल्पनीयोऽन्यथा स्मार्तकर्ममात्रपरस्यापि विचारेण ब्रह्मसाक्षात्कारः पुरुषार्थसाधको भवेदत आहुः नहीत्यादि, मन्दमतेः त्रैवर्णिकस्य, मतिमत्त्वं ग्रहणधारणसमर्थबुद्धिमत्त्वं, कल्प्यते इति तथा कल्पने तादृशमतिमत्त्वाभावं निश्चित्यापि जडभरते पितृकारितवेदाध्ययनस्यावैधत्वेन प्रत्यवायजनकत्वं स्यादित्यर्थः । ननु शान्तो दान्त उपरतस्तितिक्षुरित्यादिरूपोऽधिकारो विचारेऽवश्यं अधिकारिविशेषणं वाच्योऽन्यथा गृहाद्यासक्तवेदान्तविचारकस्यापि ब्रह्मसाक्षात्कारः पुरुषार्थश्च सिध्येदत आहुरन्धेत्यादि, तथा च यथाऽऽज्यावेक्षणविष्णुक्रमणादिरूपसहकारिकारणाङ्गाभावाद्यथा कर्मकर्तॄणां फलाभावस्तथा विचारकाणामपि शान्त्यादिसहकारिकारणानामभावाद्गृहाद्यासक्तानां ब्रह्मसाक्षात्कारपुरुषार्थाभाव इति भावः ।

न च धर्मन्यायेन गतार्थत्वमस्य, अप्रतिज्ञानादनुपलब्धेश्च । नच जगत्कारणं परमात्मा वा प्रकृतिर्वा परमाणवो वेति सन्देहे किञ्चिदधिकरणमस्ति ।

स्यादेतत् । अथातो धर्मजिज्ञासेति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्मत्वमुक्त्वा, प्रामाण्यपुरःसरं सर्वे सन्देहा निवारिताः तत्र ब्रह्मज्ञानस्यापि धर्मत्वं, 'आत्मेत्येवोपासीत' 'आत्मानं श्लोकमुपासीत' तत् 'ब्रह्मेत्युपासीत' 'आत्मा वारे द्रष्टव्य' इत्यादिनोदनावाक्यार्थत्वात्, 'अयं हि परमो धर्मो यद्योगेनात्मदर्शन'मितिस्मृतेश्च । सृष्ट्यादिवाक्यानां त्वर्थवादत्वं, आरोपापवादविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात् । नच ज्ञानादीनामविधेयत्वं प्रमाणवस्तुपरतन्त्रत्वेनाकृतिसाध्यत्वादिति वाच्यं, नहि सर्वात्मना असाध्यं, प्रकारभेदस्त्वप्रयोजकः, सर्वस्यापि कारणेषु पुरुषव्यापृतिः, तदत्र वृत्तिसम्पादने प्रमाणसम्पादने वा पुरुषकृतिसाध्यत्वं, अन्यथा सिद्धान्तेऽपि मननादिशास्त्रवैफल्यापत्तेः, सा-

---

नन्वथातो धर्मजिज्ञासेत्यत्र धर्मशब्दस्य लक्षणया वेदार्थमात्रपरतया व्याख्यानात् धर्मनिरूपणप्रतिज्ञयैव ब्रह्मनिरूपणप्रतिज्ञायाः कृतत्वेन गतार्थत्वादथातो ब्रह्मजिज्ञासेतिपृथक्प्रतिज्ञाया वैयर्थ्यमत आहुः नन्विति, अस्य वेदान्तविचारस्य, अप्रतिज्ञानात् शक्त्यार्थप्रतिपादकधर्मपदघटितजैमिनिप्रतिज्ञामध्ये ब्रह्मविचारप्रतिज्ञायाः अलाभादित्यर्थः, ननु लक्षणयार्थप्रतिपादकधर्मशब्दघटितप्रतिज्ञया ब्रह्मविचारस्यापि प्रतिज्ञातत्वादपार्थैव पृथग्ब्रह्मविचारप्रतिज्ञेत्यत आहुः अनुपलब्धेरिति, तथा च जैमिनिना स्वसूत्रे यदि ब्रह्मजिज्ञासा प्रतिज्ञाता स्यात्तदा 'चोदनालक्षणोऽर्थो धर्म' इति धर्मजिज्ञासावत् ब्रह्मजिज्ञासाप्युपलभ्येत नत्वेवमित्यर्थः । अनुपलब्धिप्रकारमेवोपपादयन्ति नच जगदित्यादिना, अधिकरणमस्ति जैमिनिमीमांसायामधिकरणमस्तीत्यर्थः ।

पूर्वपक्षी शङ्कते स्यादेतदिति, एतत् स्यात् ब्रह्मज्ञानस्यापि विध्यर्थत्वेन धर्मत्वात् धर्मविचारप्रतिज्ञया प्रतिज्ञातत्वं स्यात्, प्रामाण्यपुरःसरं अर्थवादानां विध्यर्थस्तावकत्वेन विध्येकवाक्यतया प्रामाण्यव्यवस्थापनपुरःसरं, सर्वे सन्देहाः मन्त्रार्थवादानामप्रामाण्यसन्देहाः, तत्र धर्मपदार्थमध्ये, धर्मत्वं विध्यर्थत्वाद्धर्मत्वं, ज्ञानस्य धर्मत्वप्रतिपादकविधिमाह आत्मेत्यादि, श्लोकं स्तुत्यं, ज्ञानस्य स्फुटतया धर्मत्वबोधिकां स्मृतिमाह अयं हीत्यादि, ननूत्तरकाण्डे सृष्ट्यादिप्रतिपादकविधिभिन्नवाक्यानां का गतिरतआह सृष्ट्यादीत्यादि, अर्थवादत्वं उपासनाविध्यर्थस्तावकतया विध्येकवाक्यतया प्रामाण्यमित्यर्थः, तदेव चोपपादयति आरोपेत्यादिना, आरोपः 'ऐतदात्म्यमिदं सर्वं' 'यतो वा इमानि' इत्यादिवाक्यार्थः, अपवादः 'अथात आदेशो नेति नेती'तिरूपः, तद्विषयाः मिथ्याभूताः सर्व एव धर्माः, तत्प्रतिपादकत्वेन सृष्टिब्रह्माभेदप्रतिपादकवाक्यानां तत्प्रतिपादकत्वेन, विधेयोपासना प्रपञ्चकर्तृत्वसर्वाभिन्नत्वादिना विहिता या प्रतीकोपासना, तद्विषयेत्यादिना तादृशोपासनाविषयजगत्कर्तृत्वसर्वाभेदादिस्तावकत्वात् तादृशधर्मसम्बन्धबोधनेनोपास्यस्तुतिपरत्वादित्यर्थः, ननु उपासनायाः ज्ञानरूपत्वात्तस्याः ज्ञानगोचरेच्छायाश्च कृत्यसाध्यत्वात्कृतिसाध्यस्यैव च विधिविषयत्वात् ज्ञानविध्येकवाक्यतया सृष्टिप्रतिपादकार्थवादानां प्रामाण्यमुक्तमसम्भवि ज्ञानविधेरेवासम्भवादिति दूषणं परिहर्तुं वादी शङ्कते नचेत्यादि, ज्ञानादीत्यादिपदेनेच्छा ग्राह्या, अविधेयत्वं यागादीनामिव कृतिसाध्यत्वाभावेनाविधेयत्वं, प्रमाणेत्यादि श्रवणमनननिदिध्यासनादिस्वकारणसामग्र्यधीनत्वेनेत्यर्थः । वादी समाधत्ते नहीत्यादि, सर्वात्मनेत्यादि तथा च ज्ञानोत्पादकसन्निकर्षादिसामग्रीसम्पादनार्थं कृतेरपेक्षणात् न सर्वात्मना कृत्यसाध्यं ज्ञानं परम्परया ज्ञाने कृतिप्रयोज्यतायाः सत्त्वादित्यर्थः । ननु तथापि यागादेरिव साक्षात्कृतिसाध्यत्वाभावान्न कृतिसाध्यं ज्ञानमित्यत आह प्रकारभेद इत्यादि, प्रकारभेदः साक्षात्कृतिसाध्यत्वरूपप्रकारभेदः, अप्रयोजक इति 'न ममे'त्याकारकेच्छाविशेषस्यैव यागत्वेन यागेऽपि क्रियाकलापजनककृतेः साध्यत्वं परम्परयैव वाच्यं, तादृशं च सन्निकर्षादिजनककृतिसापेक्षत्वं ज्ञानेऽपीति साक्षात्कृतिजन्यत्वरूपः प्रकारभेदोऽप्रयोजक इत्यर्थः, तदेवोपपादयन्ति सर्वस्येत्यादि, सर्वस्य ज्ञानयागादेः, करणे सन्निकर्षादिक्रियाकलापादौ, पुरुषप्रवृत्तिः पुरुषकृतिसाध्यत्वं, अन्यथा ज्ञानस्य परम्परया कृत्यधीनत्वामङ्गीकारे, सिद्धान्ते ज्ञानस्याविधेयत्वाङ्गीकारिमते, वैफल्यापत्तेः तेन शास्त्रेण परम्परया कृत्यधीनत्वं बोध्यते ज्ञानस्य तस्य च भवन्मतेऽनङ्गीकाराद्वैफल्यमित्यर्थः, साधनेत्यादि तथा च सर्वथा ज्ञानस्य कृत्यसाध्यत्वे 'तपसा ब्रह्म विजिज्ञास-

धनप्रतिपादकश्रुतिविरोधश्च, येनापि सर्वक्रियाफलत्वं निराकार्यं तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थे । तस्माद्यत्रापि विध्यश्रवणं तत्रापि विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं कल्प्यमिति नार्थोऽनया मीमांसया, अन्यथा विरोधोऽपि ।

स्यादेतत् । ब्रह्मविचार एवारम्भणीयो न धर्मविचारः, सर्ववेदव्यासकर्त्रा वेदव्यासेनाकृतत्वात्तुच्छफलत्वाच्च कल्पोक्तप्रकारेण निःसन्दिग्धं करणसम्भवाच्च, आचारपरम्परयापि करणसम्भवाच्च । एतर्ह्यपि सन्देहे सूत्रभाष्ययाज्ञिकानामेवानुवृत्तिः क्रियते न मीमांसकस्य । तस्मात्साङ्गवेदाध्येतुर्निःसन्देहकरणसम्भवान्न पूर्वयापि कृत्यम् । किञ्च, परमकृपालुर्वेदः संसारिणः संसारान्मोचयितुं कर्माणि चित्तशुद्ध्यर्थं बोधितवानिति कूपेऽन्धपातनवदप्रामाणिकत्वभियाऽवसीयते । विपरीतबोधिका तु पूर्वमीमांसा, तस्मादपि न कर्तव्येति ।

मैवम् । किं विचारमात्रं न कर्तव्यं, पूर्वकाण्डविचारो वा ? नाद्यः, तुल्यत्वात् समर्थित-

---

स्वे'त्यादिसाधनबोधकश्रुतिविरोध इति भावः, सर्वक्रियेत्यादि साक्षात्परम्पराकृतिसामान्यफलत्वं निराकार्यमित्यर्थः, यत्रापि उत्तरकाण्डे 'ब्रह्मविदाप्नोति पर'मित्यादिवाक्येषु, विध्यश्रवणं ब्रह्मविदाप्नुयादित्याकारकविध्यश्रवणं, विधिं परिकल्प्य आप्नोतीत्यस्य पञ्चमलकारत्वं परिकल्प्येत्यर्थः, तत्रत्यानां 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्यानां, तच्छेषत्वं तद्विध्येकवाक्यतया प्रामाण्यमुरीकार्यमित्यर्थः, इतीति हेतौ, पूर्वोत्तरकाण्डद्वयार्थस्यापि पूर्वमीमांसयैव गतार्थत्वात् हेतोः, नार्थोऽनयेत्यादि अनया उत्तरमीमांसया, नार्थः न प्रयोजनं, इत्थं तथा च 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इतिन्यायादुत्तरमीमांसायां प्रवृत्तिरेव न सम्भवतीत्यर्थः, अन्यथा 'ब्रह्मविदाप्नोति पर'मित्यत्र विधिं परिकल्प्य तत्रत्यवाक्यानां तदेकवाक्यतया प्रामाण्यमित्यस्य पक्षस्यानङ्गीकारे, विरोधोपि उत्तरकाण्डस्य सर्वस्य सिद्धार्थमात्रबोधकतया गतार्थत्वाङ्गीकारे विरोधः 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मिति स्मृतिबलात् उत्तरकाण्डस्यानर्थक्यापत्तिरूपो विरोध इति भावः ।

सिद्धान्तैकदेशी पूर्ववादिसिद्धान्तं दूषयितुं प्रत्यवतिष्ठते स्यादेतदिति, एतत् वक्ष्यमाणं पूर्वमीमांसाया अपि निःप्रयोजनत्वं, तदेवोपपादयति ब्रह्मेत्यादिना, सर्ववेदव्यासकर्त्रा सर्ववेदार्थतत्त्ववेत्त्रा इत्यर्थः, तुच्छफलत्वात् 'तद्यथेह कर्मचितो लोकः क्षीयत' इतिश्रुत्युक्तसान्तफलप्रतिपादकत्वेन तुच्छफलत्वादित्यर्थः, ननु निष्कामकृतकर्मणामपि पुरुषार्थपर्यवसायित्वात्तादृशधर्मानुष्ठानार्थं पूर्वमीमांसा सप्रयोजना भविष्यतीत्यत आह कल्पोक्तेत्यादि, कल्पसूत्रोक्तेतिकर्तव्यतामादाय निःसन्दिग्धं करणसम्भवादित्यर्थः, ननु यस्य सूत्रार्थनिर्णयो न जातस्तस्य धर्मानुष्ठानार्थं धर्ममीमांसावश्यकतैवेत्यत आहुः आचारेत्यादि, तथा 'श्रुतिः स्मृतिः सदाचार' इत्यत्र सदाचारस्यापि धर्महेतुत्वेन निरूपणात्परम्पराचारदर्शनादेव धर्मानुष्ठानसम्भवात् अप्रयोजिकैव धर्ममीमांसेत्यर्थः,नन्वाचारेपि मूलान्वेषणेच्छायां आचारस्यानुष्ठापकत्वासम्भवान्मीमांसावश्यकतेत्यत आहुः एतर्ह्यपीत्यादि, आचारस्य समूलकतासन्देहेपि, सन्देहे अनुष्ठानप्रकारे सन्देहे, सूत्रभाष्यं कल्पसूत्रभाष्यं, याज्ञिकानां निरन्तरयज्ञानुष्ठानशीलानां, करणसम्भवात् यज्ञादिकरणसंभवादित्यर्थः, धर्ममीमांसायाः प्रकारान्तरेणाप्रयोजकत्वं सिद्धान्तैकदेशी साधयति किञ्चेति, संसारिणः सांसारिकभोगात् परमपुरुषार्थत्वेन मन्यमानात्, संसारात् सांसारिकभोगेभ्यः, चित्तशुद्ध्यर्थं चित्तशुद्धिद्वारा मोक्षप्राप्त्यर्थं, इति इति अवसीयते इत्यत्रान्वेति, कूपेत्यादि इत्थं च चित्तशुद्धिद्वारा मोक्षार्थं कर्मकृतिबोधकः परमकृपालुर्वेदात्मको भगवान् संसारमध्यपातिक्षयिष्णुस्वर्गादिफलार्थं जीवान् कूपतुल्यकर्मगहनेऽन्धतुल्यान् प्रक्षिपन् प्रतारकोऽप्रामाणिकश्च भवेत् तत्त्वभिया मोक्षार्थं कर्माणि बोधितवानिति अवसीयते फलितोऽर्थः, ननु तथापि क्षयिष्णुफलार्थं कर्मगहने पातयतः प्रतारकत्वं कथं वारितमिति चेत् इत्थं, नरकहेतुसांसारिककर्मभ्यस्तेषां जीवानां निवृत्त्यर्थं प्ररोचनार्थं वैदिके कर्मणि तादृशी फलश्रुतिः कृता, तथा सति पापाभावेन सत्संगेनेव कदाचित् चित्तशुद्ध्या कामाभावे सति मोक्षोऽपि भवेदित्यत्र वेदतात्पर्यादिति न प्रतारकत्वगन्धोपीत्यवसेयं, विपरीतबोधिका वेदातात्पर्यविषयक्षयिष्णुसांसारिकफले वेदतात्पर्यनिर्द्धारिका ।

इतः परं सिद्धान्तैकदेशिदूषणं समाधातुं पूर्वपक्षी प्रतिवदति मैवमिति, पूर्वपक्षी पृच्छति किमित्यादिना, विचारमात्रं मया न कर्तव्यं पूर्वकाण्डविचारो वेति ? नाद्यः विचारमात्रं त्वया न कर्तव्यमिति नेत्यर्थः, तुल्यत्वात्

त्वाच्च। द्वितीये सामान्यन्यायेन सन्देहे निवार्ये लक्षणवत्तदुपयोगः। अनिष्टतया निरूपणं न मीमांसादोषः, किन्तु विचारकाणां स्वभावभेदात्। किञ्च, आवश्यकत्वादपि, निवृत्तानामपि यागादिज्ञानस्य[1] आवश्यकत्वं चित्तशुद्ध्यर्थत्वात्, परमाश्रमभेदेन प्रकारभेदः कायिकादिभेदात्, तत्राद्यस्य वाचिको द्वितीयतृतीययोः कायिकश्चतुर्थस्य मानसिक इत्याश्रमिणाम्। तस्मादेकेनैव चरितार्थत्वात् किं द्वितीयेनेति प्राप्ते,

उच्यते। उपासनाया धर्मत्वेऽपि न ब्रह्मणो धर्मत्वम्, ज्ञानरूपत्वात्, धर्मस्य च क्रियारूपत्वात्। न चार्थवादानां धर्म इव ब्रह्मण्युपयोगः कर्तुं शक्यः, उत्पत्तिप्रकारफलभेदानामभावात्। प्रकृते तु माहात्म्यज्ञानार्थं तदुपयोगः। अस्य च ज्ञानोपयोगो यथा तथा वक्ष्यते।

---

उत्तरमीमांसाविचारकर्त्रो त्वया ममापि तुल्यत्वात्, यथोत्तरमीमांसाविचारस्तवेष्टस्तथा पूर्वमीमांसाविचारो ममापीति तुल्यता, दूषणान्तरमाह **समर्थितत्वाच्चेति**, त्वयोत्तरमीमांसाविचारो विधेयो मया च पूर्वमीमांसाविचारो न विधेय इत्यत्र विनिगमकाभावेन समर्थितत्वादित्यर्थः, द्वितीये पूर्वकाण्डविचारो न कर्तव्य इतिपक्षे, तथा चोत्तरमीमांसाविचार एव कर्तव्यो महाफलत्वात्, न तु पूर्वमिमांसाविचारोऽपि, कल्पसूत्रसदाचारादिनाऽन्यथासिद्धत्वादिति सिद्धान्तैकदेश्यभिप्रायः, पूर्वपक्षी समाधत्ते **सामान्येत्यादिना**, **सामान्यन्यायेन** कर्मानुष्ठाने येन केनचित्सन्देहे निवार्ये इत्यर्थः, **लक्षणवत्** कल्पसूत्राणां सन्देहवारकाणां सत्त्वेऽप्यसाधारणसन्देहवारणार्थं यथा प्रातिशाख्यलक्षणानां करण तथा तद्भिलक्षणसन्देहवारणार्थं धर्मविचारस्याप्युपयोग इति भावार्थः, ननु चित्तशुद्धिद्वारा कर्मणां मोक्षे उपयोगो वेदतात्पर्यविषयस्तद्विपरीतं सकामाधिकारकं विनाशिफलं वेदतात्पर्यविषय इतिनिरूपणं पूर्वमीमांसायाः दोष इत्यत आह **अनिष्टतयेत्यादि**, तथा च सूत्रेषु न क्वापि विनाशिफलसाधकत्वं कर्मणां वेदतात्पर्यविषय इत्युक्तमिति न मीमांसादोष इत्यर्थः, **विचारकाणां** सूत्रभाष्यकाराणां, **स्वभावभेदात्** कर्मैव ब्रह्मेति ज्ञानप्रयोजकस्वभाववत्त्वादित्यर्थः, **आवश्यकत्वात्** कर्मविचारस्यावश्यकत्वादपि कर्तव्यतेत्यर्थः, आवश्यकतामेवोपपादयति **निवृत्तानामित्यादिना**, **निवृत्तानां** निष्कामानां मुमुक्षूणामित्यर्थः, **यागादीत्यादि**, तथा च यागादिज्ञानार्थं पूर्वमीमांसायाः आवश्यकत्वमित्यर्थः, ननु निवृत्तानां ब्रह्मचारिपरमहंसादीनां यज्ञसामग्र्याः असम्भवेन करणासम्भवान्न पूर्वमीमांसावश्यकतेत्यत आह **परमित्यादि**, **आद्यस्य** ब्रह्मचारिणः, **वाचिकः** ब्रह्मयज्ञः, **द्वितीयतृतीययोः** गृहिवानप्रस्थयोः, **कायिकः** अग्निहोत्रादिरूपः, **चतुर्थस्य** प्रव्रजिनः, **मानसिकः** मानसिकमूर्तिपूजनादिरूपः, **तस्मात्** 'स्यादेतत् अथात' इत्यारभ्य एतावत्पर्यन्तनिरूपणात्, **एकेनैव** धर्मविचारेणैव **चरितार्थत्वात्** मोक्षाप्तिपर्यन्तफलस्य सम्भवात्, **द्वितीयेन** ब्रह्मविचारेण, इति **प्राप्ते** पूर्वमीमांसयोत्तरमीमांसायाः गतार्थत्वरूपे पूर्वपक्षे प्राप्ते,

**उच्यते** सिद्धान्तिभिः समाधानमुच्यते इत्यर्थः, **धर्मत्वेऽपि** मानसक्रियारूपतया धर्मत्वेपीत्यर्थः, **न धर्मत्वं** ज्योतिष्टोमादेरिव क्रियारूपत्वाभावेन न धर्मत्वमित्यर्थः, **ज्ञानरूपत्वात्** 'सत्यं ज्ञान'मित्यादिना ज्ञानरूपत्वोक्त्या कृत्यसाध्यत्वादित्यर्थः, सृष्टिवाक्यानां उपासनाविधिशेषतया प्रामाण्यमिति यादुक्तं तद्दूषयितुमाहुः **नचेत्यादि**, ब्रह्मण्यर्थवादानामुपयोगाभावमुपपादयन्ति **उत्पत्तीत्यादि**, तथाचोत्पत्तिविधौ प्रकारबोधकविधौ फलबोधकविधौ वाऽर्थवादानामुपयोगः ब्रह्मोपासनाविधिस्तु नैतेषा एकतर इति न तत्रार्थवादानामुपयोग इतिभाव, तत्रोत्पत्तिविधिः 'सोमेन यजेते'त्यादिरूप., प्रकारभेदः 'समिधो यजती'त्यादिरूपः, फलभेदः 'खादिरो यूपो भवति खादिरं वीर्यकामस्ये'त्यादिरूपः, तत्र 'एष एव वा प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम' इत्युत्पत्तावर्थवादः 'वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते' इति प्रकारभेदेऽर्थवादः 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति फलेऽर्थवादः, इत्थं चात्मेत्येवोपासीतेत्यादिविधौ नोक्तार्थवादोपयोग इति फलितं, ननु तर्हि सृष्ट्यादिप्रतिपादकानामुपयोगाभावाद्वैयर्थ्यमित्यत आहुः **प्रकृतेत्यादि**, **प्रकृते** उत्तरकाण्डे, **तदुपयोगः** सृष्ट्यादिवाक्यानामुपयोग, **तस्य** माहात्म्यज्ञानस्य, **ज्ञानोपयोगः** तरतमतया भजनीयता ज्ञाने, **वक्ष्यते** अग्रे वक्ष्यते इत्यर्थः, **चतुर्थेत्यादि** तथा च पूर्वोक्त उत्पत्त्यधिकारप्रयोगे विधित्रयस्यासम्भवेऽपि विनियोगविधिबोधितधर्मस्योत्तरकाण्डेऽपि सम्भवाद्धर्मविचारेणैव **गतार्थत्वाच्चोपयोग**

---

१ यागादिकज्ञानस्येत्यपि पाठ।

चतुर्थ उपासनादर्शनादिपदानां मनोव्यापारत्वमेव, विचारस्यापि यथा ज्ञानोपयोगित्वं तथा वक्ष्यते । किञ्च, औपनिषदज्ञानस्यापि कर्मोपयोगित्वं 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति । अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यं, अन्यथा आभासत्वमेव । नच ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन कर्तृत्वाभावात् कर्मानधिकार इति वाच्यं, निरध्यस्तैरेव देहादिभिः कर्मकरणसम्भवात्, अत एव जीवन्मुक्तानां सर्वे व्यापाराः, तथा च स्मृतिः,

'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति, अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव, तस्मान्न गतार्थत्वानुपयोगौ ।

ननु फलप्रेप्सुरधिकारी, फलञ्च विचारस्य शाब्दं ज्ञानं, तस्य मननादिद्वारा अनुभवः, तस्य चानर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः, तथा च विरक्तोऽनर्थजिहासुः परप्रेप्सुश्चाधिकारी कस्मान्न भवति ?

'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ।
श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षतः ॥'

इति भगवद्वचनात् केवलस्य निन्दाश्रवणादिति चेत्,

---

उत्तरमीमांसाया इत्याशङ्क्य समादधुश्चतुर्थ इत्यादिना, चतुर्थे सम्भवत्यपि चतुर्थे विनियोगविधावित्यर्थः, उपासनेत्यादि 'आत्मेत्येवोपासीत' 'आत्मा वा द्रष्टव्य' इत्याद्युपासनादर्शनादिपदानामित्यर्थः, मनोव्यापारत्वमेव मनोव्यापारबोधकत्वमेव, एवकारेण करणीभूतक्रियारूपधर्मबोधकत्वव्यवच्छेदः, इत्थं च न पूर्वयोत्तरगतार्थत्वशङ्कापीति भावः, ननु सृष्ट्यादिवाक्यानां सार्थक्यस्योपपादनेऽपि व्यासविचारस्य कथं ज्ञानोपयोग इत्यत आहुः विचारस्येत्यादि, यथा मोहकशास्त्रसम्पादितविरुद्धबुद्धिनिराकरणप्रकारेण, वक्ष्यते जन्माद्यधिकरणमारभ्य सर्वत्र वक्ष्यते इत्यर्थः, अत्र ब्रह्मसाक्षात्कारोपयोग्युपासनाद्यर्थमेव ब्रह्मविचारकरणमिति न किन्तु ब्रह्मसाक्षात्कारोपयोगिकर्मसाकल्यायापि ब्रह्मविचारकरणमावश्यकमिति न पूर्वयोत्तरस्याः गतार्थत्वानुपयोगावित्याहुः किञ्चौपनिषदित्यादि, औपनिषदज्ञानस्य व्यासविचारनिष्पन्नस्येत्यर्थः, कर्मोपयोगित्वं कर्मणा फलसम्पादनेऽसाधारणसहकारिकारणत्वं, विद्यया करणीभूतब्रह्मज्ञानेन, श्रद्धया फलावश्यंभावनिश्चयेन, उपनिषदा प्रत्येकोपनिषदर्थज्ञानेन, वीर्यवत्तरं फलायोगरहितं, अत एव पूर्वोक्तकारणकलापवता कृतकर्मणां वीर्यवत्तरत्वनियमादेव, सर्वदेवेति वक्ष्यमाणद्रव्यभागिदेवसान्निध्यमित्यर्थः, अन्यथा कर्मण्युक्तदेवसान्निध्याभावे, आभासत्वं प्रतिष्ठादिलौकिकफलसमर्पकत्वं, एवकारेण मुख्यफलव्यवच्छेदः, कर्मानधिकारः ब्रह्मविद्यावतः कर्मण्यनधिकारः, निरध्यस्तैः अविद्यापर्वाविषयीभूतैः, तादृशानां कर्मकरणसम्भवे सम्मतिमाहुः अत एवेत्यादि, व्यापाराः श्रूयन्ते इत्यर्थः, युक्तः पूर्वोक्तज्ञानशाली न तु युक्तस्य सर्वदा ज्ञानमित्येवंरूपः, तादृशयुक्तस्य शुकवामदेवादेस्तादृशकर्मकरणासम्भवादितिभावः, उपसंहरन्ति तस्मादित्यादि, गतार्थत्वेत्यादि पूर्वमीमांसायाः गतार्थत्वानुपयोगौ इत्यर्थः ।

न, फलकामनाया अनुपयोगात्, अन्येनैव तत्समर्पणात्, नित्यत्वादप्यर्थज्ञानस्य न फलप्रेप्सुरधिकारी, निन्दार्थवादस्तु मननादिविधिशेष इति मन्तव्यम् ।

ननु ब्रह्मणो विचारे प्रतिज्ञाते, विरोधनिराकरणादीनामप्रतिज्ञातार्थत्वं, नचावक्तव्यत्वं निर्विचिकित्सज्ञानानुदयप्रसङ्गादिति चेत्,

न, 'ब्रह्मण' इति न कर्मणि षष्ठी किन्तु शेषषष्ठी तथा च ब्रह्मसम्बन्धि तज्ज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यम् । नच गौणतापत्तिरजिज्ञास्यत्वञ्च स्यादिति वाच्यं, ब्रह्ममात्रे सन्देहाभावात्, सन्दिग्धस्यैव जिज्ञास्यता, गौणत्वं तु शब्दत एव नत्वर्थतः ।

वेदप्रामाण्यं तु प्रतितन्त्रसिद्धत्वात् न विचार्यते ।

तस्मात् ब्रह्म जिज्ञासितव्यमिति सिद्धम् ।

॥ इति प्रथमाध्याये प्रथमे पादे जिज्ञासाधिकरणम् ॥

---

वेदान्तविचारे त्रैवर्णिकोऽधिकारीति पूर्वं निर्णीते आनन्तर्यार्थकाथशब्दवादी शङ्कते ननु फलेत्यादि, फलप्रेप्सुः फलकामनावान्, तस्य शाब्दज्ञानस्य, अनुभवः निदिध्यासनरूपः, तस्य निदिध्यासनस्य, अनर्थः संसाररूपः, अवाप्तिः साक्षात्कारः, निष्णातः औपनिषदज्ञानवान्, न निष्णायादित्यादि परब्रह्मविषयकसाक्षात्कारवान्न भवेद्यदीत्यर्थः, केवलस्य फलशून्यार्थज्ञानरूपसाधनवतः ।

इत्थं चाधिकारिविशेषणीभूतवैराग्यादीनां विचारात्पूर्वमावश्यकत्वात् तेषामानन्तर्यमेवाथशब्दशक्यार्थो भवेन्न तु आनन्तर्यनिरूपकस्यालाभेनाधिकाररूपोप्यथशब्दस्यार्थः स्यादिति वाद्यभिप्रायः सिद्धः, तद्दूषयन्ति नेत्यादि, अनुपयोगात् अधिकारिविशेषणार्थं अनुपयोगात्, अन्येनैव 'ब्रह्मविदाप्नोति परमि'ति वेदेनैव, तत्समर्पणात् परप्राप्तिकामनावतो ब्रह्मविदोधिकारिणो बोधनात्, नित्यत्वादिति तथा च सन्ध्यावन्दनवद्वेदान्तविचारसम्पाद्यब्रह्मज्ञानस्य नित्यत्वेन फलत्वेन फलकामनावतोऽधिकारकल्पने कामनाशून्येन तादृशज्ञानासम्पादने प्रत्यवायो न भवेदितिभावः, निन्दार्थवादः 'अधेनुमिवे'त्यादिनिन्दार्थवादः, मननेत्यादि तथा च मनननिदिध्यासनाकरणे श्रमफलबोधक इत्यर्थः ।

ब्रह्मणो विचारे सर्ववेदान्तवाक्यानां ब्रह्मणि समन्वयरूपे विचारे, विरोधेत्यादि तथाचाविरोधसाधनफलानामध्यायत्रितयनिरूप्याणामप्रतिज्ञातनिरूपणमधिकं निग्रहस्थानमित्यर्थः, नचावक्तव्यत्वं समन्वयभिन्नस्य अविरोधादित्रयस्यानिरूपणीयत्वं मीमांसायामित्यर्थः, निर्विचिकित्सेत्यादि सिद्धान्तविरोधिप्रकारनिरसनपूर्वकब्रह्मज्ञानानुदयप्रसङ्गादित्यर्थः, इति चेत् ब्रह्ममात्रन्निरूपणे निर्विचिकित्सब्रह्मज्ञानानुदयः निर्विचिकित्सब्रह्मज्ञानसम्पादकाविरोधादित्रयनिरूपणे चाप्रतिज्ञातनिरूपणदोष इत्युभयतःपाशा रज्जुरितिचेत्,

नेत्यर्थः, तत्र हेतुरूपं समाधानमुपवर्णयन्ति ब्रह्मण इत्यादिना, न कर्मणि न 'कर्तृकर्मणोः कृति षष्ठी'तिसूत्रविहिता षष्ठीत्यर्थः, तथा च तादृशषष्ठ्यङ्गीकारे 'हरि भजते' इत्यत्र हरिभिन्नभजनाबोधवत् ब्रह्मभिन्नविचारालाभोऽपि भवेदिति भावः, शेषषष्ठी विशेषरहितं सामान्यं शेष इति सम्बन्धसामान्ये षष्ठीति फलितमित्यर्थः, तज्ज्ञानोपयोगि ब्रह्मज्ञानोपयोगि, सर्वमेव वेदान्ते निरूप्यं सर्वमेवेत्यर्थः, नच गौणतेत्यादि, तथा च जिज्ञास्यकोटिप्रविष्टाविरोधादितुल्यतया ब्रह्मणो गौणतापत्तिरित्यर्थः, अत एवाविरोधादितुल्यतयाऽजिज्ञास्यत्वमपि स्यादित्यर्थः, ब्रह्ममात्रे ब्रह्मस्वरूपसत्तायां, जिज्ञास्यता निश्चयार्थं विचार्यता, नन्वेवं ब्रह्मणोऽजिज्ञास्यत्वे प्रतिज्ञासूत्रविरोध इति चेन्न, परे ब्रह्मणि ज्ञानक्रियाशक्त्योः सन्दिग्धत्वेन तन्निर्णयार्थमेव व्यासशास्त्रप्रवृत्तेः धर्मिनिर्णयं विना च तन्निर्णयासम्भवात् ब्रह्मणोपि जिज्ञास्यतोपपत्तेरिति, गौणत्वमित्यादि तथा च 'ब्रह्मविदाप्नोति पर'मित्यत्र ब्रह्मणो ज्ञानविशेषणतया शब्दमर्यादया गौणत्वेप्यर्थतो यथा प्राधान्यं तथा ब्रह्मणो जिज्ञासेत्यत्र षष्ठ्यर्थसम्बन्धविशेषणतया शब्दतो ब्रह्मणो गौणत्वेप्यर्थतः प्राधान्यमस्त्येवेत्यर्थः ।

ननु वेदान्तवाक्यविचारेणैव सर्वनिर्णयः कार्यः स च वेदप्रामाण्यनिर्णयाधीन इति स आदौ कुतो न कृत इत्यत आहुः वेदेत्यादि, प्रतितन्त्रेत्यादि गौतमकणादादिसकलशास्त्रसिद्धत्वेनाप्रामाण्यकोट्यनुपस्थितेरिति भावः ॥ १ ॥

॥ इति जिज्ञासाधिकरणम् ॥

किञ्च, तत्र किं लक्षणं किं प्रमाणकमिति जिज्ञासायामाह सूत्रकारः,

## जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥ (१-१-२)

ननु कथमत्र सन्देहः यावता 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याह श्रुतिरेव, विरुद्धं चैतत्, स्वरूपलक्षणाकथने कार्यलक्षणस्य वक्तुमशक्यत्वात् विवादाध्यासितत्वाच्च, न हि ब्रह्मणो जगत्कर्तृत्वं सर्वसम्मतं, नचागमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं शक्यते, किञ्च, व्यर्थश्चैवं विचारः, लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं भवति, तच्च स्वरूपलक्षणेनैव भवतीति किमनेन, तस्मादयुक्तमुत्पश्याम इति ।

उच्यते,

सन्देहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
क्रियाशक्तिज्ञानशक्ती सन्दिह्येते परस्थिते ॥

न हि श्रुतिं व्याख्यातुं प्रवृत्तः सूत्रकारः, किन्तु सन्देहं वारयितुं, तत्र 'सत्यं ज्ञानमनन्तं' 'नित्यशुद्धमुक्तस्वभाव'मितिश्रुत्या कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति कर्तृत्वञ्च। तत्र सन्देहः, किं ब्रह्म कर्तृ आहोस्विदकर्तृ ।

किं तावत् प्राप्तम् ?

---

जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥ उक्तरीत्या वेदान्तार्थब्रह्मणो जिज्ञास्यत्वे प्रतिज्ञाते केन प्रकारेण जिज्ञास्यतेत्याकाङ्क्षायां समन्वयाविरोधाभ्यां जिज्ञासा कर्तव्येति तत्रादौ समन्वयनिरूपणं सूत्रकाराभिप्रेतमिति सूत्रमवतारयन्ति किञ्च तत्रेत्यादिना, तत्र जिज्ञासाविषयीभूते ब्रह्मणि, आह सूत्रेण लक्षणप्रमाणे आहेत्यर्थः, योगविभागेन शास्त्रयोनित्वादितिसूत्रं पृथगिति केचित् वदन्ति, तन्न सम्यक्, अग्रिमसूत्रेषु सर्वत्र हेतुसाध्यनिर्देशपूर्वकमधिकरणरचनादर्शनादत्रापि तथैवोचितत्वादिति ।

लक्षणार्थं वादी शङ्कते नन्वित्यादि, कथमत्रेत्यादि, निर्धर्मके ब्रह्मणि साधारणधर्मवद्धर्मिज्ञानरूपसंशयसामग्र्यसत्त्वात्कथं सन्देह इत्यर्थः, यावता निश्चयेन, विरुद्धमित्यादि श्रुतौ 'सत्यं ज्ञान'मित्यादिना स्वरूपलक्षणमुक्त्वा पश्चात्कारणलक्षणमुक्तं 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादि अत्र तु स्वरूपलक्षणमनुक्त्वादौ कारणलक्षणमुक्तमिति श्रुतिविरोध इत्यर्थः, अशक्यत्वात् लक्ष्यज्ञानं विना लक्षणस्य कर्तुमशक्यत्वादित्यर्थः, विवादेत्यादि मायाशबलितेश्वररूपकार्यब्रह्मण एव कारणत्वं निर्गुणस्य वा परब्रह्मण इति जगज्जन्मादिकारणत्वस्य जिज्ञास्ये ब्रह्मणि विवादाध्यासितत्वादित्यर्थः, नहीत्यादि मायावादिभिः कार्यब्रह्मणः कर्तृत्वाङ्गीकारात्साङ्ख्यैश्च प्रकृतेरेव कारणत्वाङ्गीकारादित्यर्थः, नचागम इत्यादि ब्रह्मणि जगत्कारणत्वस्य सकलप्रमाणमूर्द्धन्यो यो वेदः 'यतो वा इमानि भूतानि', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिरूपस्तेनैव सिद्धत्वान्न विवादाध्यासितत्वमिति न वक्तुं शक्यते इत्यर्थः आरोपेणापि कारणत्वस्य श्रुतेर्गतार्थतासम्भवात् अनुमानेनापि कारणसिद्धेर्न वेदमात्रप्रमाणकत्वं वक्तुं शक्यमित्यर्थः, एवं विचारः पूर्वोक्तरीत्या कारणलक्षणप्रयासः, वैयर्थ्यमेवोपपादयन्ति लक्षणेत्यादिना, तच्च ब्रह्मात्मकवस्तुज्ञानं चेत्यर्थः, स्वरूपलक्षणेन 'शुद्धबुद्धमुक्तस्वभाव'मित्यादिस्वरूपलक्षणेनेत्यर्थः, किमनेन कारणलक्षणेन, किञ्चित्प्रयोजनमित्यर्थः, पूर्वपक्षमुपसंहरन्ति तस्मादित्यादि, अयुक्तं जगज्जन्मादिलक्षणकरणमयुक्तमित्यर्थः ।

ननु निरूप्ये ब्रह्मणि सन्देहाभावात्कथं व्यासशास्त्रप्रवृत्तिरितिशास्त्रप्रवृत्तिमुपपादयितुमाहुः उच्यते इत्यादि, नहि ब्रह्मस्वरूपनिर्णयार्थं शास्त्रं प्रवृत्तं स्वरूपस्य सर्वशास्त्रनिर्णीतत्वात् किन्तु ब्रह्मणि वेदविरुद्धवाद्यभ्युपगतप्रकारनिराकरणेन वेदसिद्धप्रकारस्थापनार्थमित्याहुः सन्देहेत्यादि, ननु कथं ब्रह्मणि सन्देहो येन शास्त्रप्रवृत्तिः स्यादित्याकाङ्क्षायां सन्देहप्रकारमाहुः क्रियाशक्तीत्यादि, सन्देहबीजमाहुः तत्रेत्यादि ।

अकर्तृ[1]।

कथम्?

‘ब्रह्मविदाप्नोति पर’मिति प्रधानवाक्यं, फलसम्बन्धात्, ऋचापि विवृतं, ‘सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते’ति, फलार्थं[2] च ब्रह्मज्ञानं, फलञ्च फलवाक्योक्तधर्मज्ञानादेव, नान्यथा, कर्तृत्वञ्च परविवरणतयोक्तं, परं किमित्युक्ते[3] ‘यः सर्वान्तर आनन्द’ इति। कथं सर्वान्तरमित्याकाङ्क्षायां परिचयार्थं भूतभौतिकसृष्टिमुक्त्वा गौणानन्तर्यं परिहृतं, गौणोपासनाफलञ्च प्रधानशेषतयोक्तं, तत्रान्यगतकर्तृत्वारोपानुवादोऽपि सम्भवति, ततश्च ‘भृगुर्वै वारुणिरि’त्युपाख्यानेऽपि परिचायकत्वात् गौणकर्तृत्वमेवानूद्यते फलाश्रवणादिति पूर्वः पक्षः।

सिद्धान्तस्तु

उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत्।
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम्॥
नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते।
सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद्बृहत्॥

---

फलसम्बन्धात् फलसम्बन्धबोधकवाक्यस्य पूर्वतन्त्रे प्राधान्याङ्गीकारादित्यर्थः, ऋचा वक्ष्यमाणविवेरणर्चा, फलं साक्षात्कृतब्रह्मात्मकं फलं, वाक्योक्तेत्यादि सत्यत्वज्ञानत्वानन्तत्वनित्यत्वशुद्धत्वादिवाक्योक्तधर्मज्ञानात्, नान्यथा न कार्यब्रह्मगतकर्तृत्वादिधर्मज्ञानादित्यर्थः, परविवरणतया उपलक्षणतया परब्रह्मपरिचायनार्थमित्यर्थः, परविवरणमेवोपपादयन्ति परं किमित्यादिना, तथा च ‘ब्रह्मविदाप्नोति पर’ मित्यत्र ज्ञेयं परं च परिचायकधर्मविशिष्टं सोपाधिकं निरूपितं शुद्धबुद्धत्वादिधर्मशून्यं तत्र किमपेक्षया परत्वमित्युक्ते इत्यर्थः, तत्र परत्वमुपपादयति यः सर्वान्तर इति तथा चान्नमयादिचतुष्टयापेक्षयान्तरत्वात्तेभ्य एव पर इति ज्ञेयापेक्षयाऽपर इति च सिद्धमिति, ननु ज्ञेयब्रह्मापेक्षया कर्तृब्रह्मणि अवरत्वसाधकं सर्वान्तरत्वं गौणेतरापेक्षयाऽवरत्वसाधकं कुतो नेत्यपेक्षायामाह कथं सर्वेत्यादि, परिचयार्थं परब्रह्मापेक्षया तस्यावरत्वपरिचयार्थं विशेष्यमादाय शुद्धज्ञेयब्रह्मज्ञापनार्थं चेत्यर्थः, गौणानन्तर्यं गौणाकाशाद्यपेक्षया न्यूनत्वं, परिहृतं गौणाकाशादिसर्वकर्तृत्वोक्त्या तत्सर्वादित्वस्य सिद्ध्या ‘स्वतन्त्रः कर्ता’ इत्यनेन स्वातन्त्र्यस्य च सिद्ध्या परिहृतमित्यर्थः। नन्वानन्दमयस्यावरब्रह्मत्वे तस्योपासनं फलं च वेदो न ब्रूयादित्यत आह गौणेत्यादि, गौणोपासनाफलं गौणस्यानन्दमयस्य उपासना सर्वकर्तृत्वादिनोपासना तस्याः फलं ‘सोऽश्नुते’ इत्यादिना कामभोगादिरूपं क्षयिष्णु फलं, प्रधानशेषतया नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मण उपासनायाः यन्मोक्षरूपं फलं तच्छेषतया तस्य तस्य क्षयिष्णुत्वदर्शनेन वैराग्योत्पादनद्वारा मोक्षाङ्गतयोक्तमित्यर्थः, नन्ववरब्रह्मत्वेनोपहितचैतन्यस्यापि उपाधिनिरासेन विशेष्यमात्रविचारे ज्ञेयब्रह्मत्वात् ‘तस्माद्वा’ इत्यादिवाक्ये उक्तं कर्तृत्वमसम्भाव्यमेवेत्यत आह तत्रेत्यादि, तत्र ‘तस्माद्वे’त्यादिवाक्ये अन्यासंश्लिष्टा प्रकृतिस्तद्गतं यत्कर्तृत्वं तस्य यो विशेष्ये आरोपस्तेन यः श्रुतिरूपोनुवादः इत्यर्थः, पूर्वानुवाकोक्तप्रकारमनुवाकान्तरोक्तोपासनास्थलेऽपि अतिदिशति ततश्चेत्यादिना, ततः एकत्र शास्त्रार्थस्य सिद्धत्वतः, परिचायकत्वात् ‘काकवन्तो देवदत्तगृहा’ इत्यत्रेवाविद्यमानमेव कर्तृत्वं, देवदत्तगृहाणां काका इव, शुद्धज्ञेयब्रह्मस्वरूपबोधकं भवति, अनूद्यते ब्रह्मपरिचायनार्थं प्रकृत्यादिगतं कर्तृत्वं श्रुत्याऽनुवादरूपेणोच्यते, फलाश्रवणात् कार्यब्रह्मोपासनाया यत्फलं सर्वकामफलभोगाशनरूपं तस्यैतत्प्रपाठकेऽश्रवणादित्यर्थ., इति पूर्वपक्षः जगज्जन्मादिकर्तृत्वलक्षणस्य शुद्धे ब्रह्मण्यसम्भवरूपः पूर्वः पक्ष इत्यर्थः।

सिद्धान्तमाहुः उत्पत्तीत्यादि, बृहत् वेदान्तवेद्यं ब्रह्म, तत् ब्रह्मणो जन्मादिकर्तृत्वं, अन्यथा श्रुत्यारोप्यानूद्यते इत्येवंरूपं, श्रुतिविरोधः सत्यज्ञानानन्तत्वकर्तृत्वादीनां गोत्वाश्वत्वादीनामिव सहानवस्थानरूपो विरोधः न क्वापि सिद्धोऽस्तीति भावः, कल्पोपि ‘सर्वभावः सर्वभवनं’ मित्येवरूपकल्पसूत्रमपि, न विरुध्यते

---

१ ‘अकर्तृ’ इति नास्ति क्वचित्। २ ‘फलार्थे चेत्यपि पाठः। ३ किमित्युक्तमित्यपि पाठ.।

वेदेनैव तावत् कर्तृत्वं बोध्यते, वेदश्च परमाप्तोऽक्षरमात्रमप्यन्यथा न वदति, अन्यथा सर्वत्रैव तदविश्वासप्रसङ्गात्, नच कर्तृत्वे विरोधोऽस्ति सत्यत्वादिधर्मवत्कर्तृत्वस्याप्युपपत्तेः, सर्वथानिर्धर्मकत्वे सामानाधिकरण्यविरोधः सत्यज्ञानादिपदानां धर्मभेदेनैव तदुपपत्तेः, नच कर्तृत्वं संसारिधर्मो देहाद्यध्यासकृतत्वादिति वाच्यं, प्रापञ्चिके कर्तृत्वे तथैव, नत्वलौकिककर्तृत्वे, अत ए'वास्ये'त्याह, 'अस्ये'ति पुरोवर्ती प्रपञ्च इदमा निर्दिश्यते, अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य मनसाप्याकलयितुमशक्यरचनस्यानायासेनोत्पत्तिस्थितिभङ्गकरणं न लौकिकं, प्रतीतश्च निषेध्यन्नाप्रतीतं न श्रुतिप्रतीतं, सत्यत्वादयश्च लौकिकास्ततः सर्वनिषेधे तदज्ञानमेव भवेत्, नच सत्यत्वादिकं लोके नास्त्येव व्यवहारमात्रत्वात् कारणगतसत्यत्वं प्रपञ्चे भासत इति वाच्यं, तर्हि कर्तृत्वं तथा कुतो नाङ्गीक्रियते? स्मृतिश्च स्वीकृता भवति 'कर्ता कारयिता हरि'रिति, नचारोपन्यायेन वक्तुं शक्यं, तथा सत्यन्यस्य स्यात्, तत्र न प्रकृतेः, अग्रे स्वयमेव निषिध्यमानत्वात्, न जीवानामस्वातन्त्र्यात्, नचान्येषामुभयनिषेधादेव, तस्मात् ब्रह्मगतमेव कर्तृत्वं, एवं भोक्तृत्वमपि, नवा काचित्

---

सर्वभवनसमर्थत्वादकर्त्रपि कर्त्रित्यर्थसम्भवान्न विरुद्ध्यते इत्यर्थः, विरोधाभावे युक्तिमाहुः सर्वभावेत्यादि सर्वरूपैर्भवनं सर्वभावस्तत्र समर्थत्वादित्यर्थः, सर्वभवनसामर्थ्यमुपपादयन्ति अचिन्त्येत्यादि तच्च 'सत्यं चानृतं च सत्यमभवद्यदिदं किञ्च तत्सत्यमाचक्षते' इतिश्रुत्युक्तरूपं, वेदेनैव 'यतो वा इमानि भूतानि' 'आनन्दाद्ध्येवे'त्यादिवेदेनैवेत्यर्थः, परमाप्तः परमसत्यवक्ता, अन्यथा वेदस्य मिथ्यावक्तृत्वे, सर्वत्रैव अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिविधिषु 'निष्कलं शान्तमनवद्य'मित्यादिसर्वस्मिन् वेदे, तदविश्वासेत्यादि वेदप्रामाण्येऽविश्वास इत्यर्थः, विरोधोऽस्ति सर्वभवनसमर्थत्वादेव विरोधो नास्तीत्यर्थः, ननु निर्धर्मके कर्तृत्वधर्मोऽसम्भवीत्यत आहुः सत्यत्वादीत्यर्थः, ननु सत्यज्ञानानन्तादिपदानि शुद्धधर्मिमात्रस्य सत्यज्ञानानन्तस्वरूपस्यैव बोधकानि नतु धर्मैर्विशिष्टस्यापीत्यत आहुः सर्वथेत्यादि, सामानाधिकरण्यविरोधः नानापदार्थतावच्छेदकविशिष्टानामभेदेन बोधस्यैव सामानाधिकरण्यपदार्थत्वात्पदार्थतावच्छेदकधर्माणां धर्मिण्यनङ्गीकारे च तादृशबोधस्यानुत्पत्तिरूपो विरोध इति भावः, तदुपपत्तेः सामानाधिकरण्येन बोधोपपत्तेः, नचेत्यादि संसारिधर्मः 'अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' इतिभगवद्वाक्यात्संसारिधर्म इत्यर्थः, देहेत्यादि आत्मत्वेन देहे ज्ञाते तत्र कर्तृत्वस्यारोपादित्यर्थः, प्रापञ्चिके अविद्याकृतदेहाद्यध्यासवन्निष्ठे, तथैव संसारिधर्मत्वमेव, अलौकिककर्तृत्वे वेदबोधितब्रह्मनिष्ठकर्तृत्वे, अत एव उक्तलक्षणरूपकर्तृत्वस्यालौकिकत्वादेव, अस्येत्याह 'जन्माद्यस्य यत' इत्यनेन सूत्रकार आहेत्यर्थः, अलौकिककर्तृत्वमेवोपपादयन्ति अस्येत्यादिना नाविद्याकृताध्यासवन्निष्ठं, फलितमाहुः प्रतीतमित्यादि तथा च निषेधस्य प्रतियोगिग्रहसापेक्षत्वादप्रतीतनिषेधो न भवतीत्यर्थः, न श्रुतिप्रतीतं श्रुत्या प्रतीतस्य श्रुत्या निषेधे विकल्प एव भवेन्नतु निषेध इत्यर्थः, नन्व'सदेवेदमग्र आसीत्' 'नासदासीन्नो सदासीदि'त्यादिश्रुतिभिः 'सत्यं ज्ञानमि'त्यादिश्रुतिप्रतीतस्य सत्यत्वादेरपि निषेधात् कथं श्रुतिप्रतीतं निषेद्धुमशक्यमित्यत आहु सत्यत्वादय इति तथा च लौकिकसत्त्वादेरेवोक्तश्रुत्या निषेधः कृतो नतु श्रुतिप्रतीतसत्त्वादेरित्यर्थः, नन्वस्तिभातिप्रियमितिब्रह्मस्वरूपान्तःपात्यस्तित्वमेव सत्यत्वं लोके प्रतीयते तच्च सर्वत्र व्यापकब्रह्मस्वरूपान्वयेनैव प्रतीयते तच्च न लौकिकमित्याहु नचेत्यत्वेत्यादिना, व्यवहारेत्यादि प्रपञ्चस्य मिथ्यात्वेन सत्यत्वव्यवहारनिर्वाहार्थं, कारणगतमेव विवर्तोपादानगतमेव, तथा ब्रह्मगतं लोके, ब्रह्मगतकर्तृत्वसत्तासाधिकां स्मृतिमाहुः कर्तेत्यादि, ननु नित्यशुद्धेत्याद्युक्तब्रह्मणि अन्यगतकर्तृत्वारोपेण श्रुत्यानुवादेपि कर्तृत्वव्यवहारोपपत्तेः वास्तवकर्तृत्वस्वीकारे प्रयोजनाभाव इत्यत आहुः नचारोपेत्यादि, वक्तुं शक्यं ब्रह्मणि कर्तृत्वमित्यर्थः, तथा सति अन्यगतजगत्कर्तृत्वस्य ब्रह्मणि आरोपे वक्तव्ये सति, तत्र ब्रह्मान्यपदार्थे जगत्कर्तृत्वं न सम्भवतीत्युपपादयन्ति तत्रेत्यादिना, अग्रे आनन्दमयाधिकरणे द्वितीयाध्याये चेत्यर्थः, स्वयमेव व्यासचरणैरेव, नन्विन्द्रादिजीवगतमेव कर्तृत्व ब्रह्मणि आरोप्यते इत्यत आहुः न जीवानामिति, अस्वातन्त्र्यात् 'स्वतन्त्रः कर्ते'तिस्मृतेः प्रपञ्चोत्पत्तिस्थितिभङ्गकरणे जीवानां प्रपञ्चमध्यपातित्वेन स्वातन्त्र्याभावादित्यर्थः, ननु जडचेतनभिन्नानामन्येषामेव प्रपञ्चकर्तृत्वं ब्रह्मणि आरोप्यते इत्यत आहुः नचान्येषामिति, उभयनिषेधात् उभयेनैवान्येषां निषेधादित्यर्थः, ननु उभयातिरिक्तस्याप्रसिद्धत्वात्कथमुभयेनान्येषां निषेध इति चेदित्थं तथाहि जड-

श्रुतिः कर्तृत्वं निषेधति, विरोधभानात् कल्प्या तु लौकिकपरा, फलवाक्येऽप्यश्रुतानां गुणोपसंहारः कर्तव्यः ।

तथाचायं सूत्रार्थः, जन्मादिर्येषामित्यवयवसमासादतद्गुणसंविज्ञानो बहुव्रीहिः, अथवा जन्मप्रभृति सर्वे भावविकाराः 'आदि'शब्देन गृह्यन्ते, तथा च जन्म च आदिश्चेत्येकवद्भावः, आदिशब्दश्च धर्मवाची स च स्वसम्बन्धिनं लक्षयति तस्योभयसापेक्षत्वादुत्पत्तेर्विद्यमानत्वादन्यानेव भावविकारानुपलक्षयतीत्यादिशब्देनान्ये भावविकाराः, अथवा जन्मनोऽनादित्वं, तदाधारस्य पूर्वमविद्यमानत्वात्, अन्ये त्वादिमन्तः तदाधारस्य पूर्वं विद्यमानत्वात्, अत आ-

---

जीवोभयं वस्तु वेदेन वस्तुत्वेन प्रमीयमाणत्वादात्मवदितिकेवलान्वय्यनुमानेनोभयत्वावच्छेदेन वस्तुत्वे निर्धारितेऽर्थादुभयातिरिक्तवस्तुनो निषेधादिति बोध्य, ननूभयोर्वस्तुत्वप्रमापको वेदः क इति चेदयं 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा' इत्यादिरूपोवसेय', ब्रह्मणि कर्तृत्वमुपसहरन्ति तस्मादित्यादिना, कर्तृत्वतुल्यतया भोक्तृत्वमुपपादयन्ति एवमिति, तथा च यथा कर्तृत्वमलौकिकं तथा ब्रह्मणि भोक्तृत्वमप्यलौकिकमवसेयमित्यर्थः, ननु ब्रह्मणि कर्तृत्व नास्त्येव 'निष्क्रिय' 'असंगो ह्ययं पुरुष' इत्यादिश्रुतिभिर्निषेधादत आहु' नवेत्यादि, कर्तृत्वं भ्रमासमानाधिकरणमलौकिक कर्तृत्वमित्यर्थ. इत्थ च लौकिककर्तृत्वभोक्तृत्वयोर्निषेधेप्यलौकिके ब्रह्मण्यव्याहते एवेत्यर्थ', ननु निष्क्रियत्वासङ्गत्वादीनां ब्रह्मणि श्रुत्या प्रतिपादनादलौकिककर्तृत्वनिषेधिका श्रुतिः कल्प्याऽलौकिककर्तृत्वस्यापि असङ्गादिश्रुतिविरुद्धत्वादित्यत आहु. विरोधेत्यादि तथा च विरुद्धधर्माश्रयत्वस्य ब्रह्मणि सर्वोपनिषत्समन्वयानुरोधेनाङ्गीकाराद्विरोधाभावात्कल्प्या श्रुति. लौकिकपरा लौकिकप्रमाणान्त.पातिन्येव भविष्यतीति नालौकिककर्तृत्वनिषेधनसमर्था भविष्यतीति भावः, नन्वलौकिककर्तृत्वस्य साधितत्वेपि एवं भोक्तृत्वमपीत्यनेन प्रतिज्ञातं अलौकिकभोक्तृत्व कथ सिध्येदित्याकाङ्क्षायां कैमुतिकन्यायेन तत्सिद्धिमाहुः फलवाक्य इत्यादिना, फलवाक्येपि 'ब्रह्मविदाप्नोति परमि'तिफलवाक्येपि, अश्रुतानामित्यादि तथाचोपसंहारपादे तत्तदुपासनानुगुणयोग्यगुणानां धर्माणामुपास्ये यथोपसंहारः क्रियते तथा फलवाक्योक्तफले परस्मिन्नपि माहात्म्यज्ञानोपयोगितया भोक्तृत्वसर्वगतत्वसर्वाधिपतित्वादिश्रुतिबोधितसर्वधर्माणामेवोपसंहारः कर्तव्य. का कथा भोक्तृत्वस्येत्यर्थ. ।

एव सिद्धान्त निरूप्य सिद्धान्तस्य सूत्रतात्पर्यस्य विषयत्वं ज्ञापयितुं सूत्रार्थमाहुः तथाचेत्यादिना, जन्म आदि प्रथमावयवरूप येषां ते जन्मादि, 'सुपां सुलुगि'ति जसो लुक्, तथा चादिपदस्य यत्पदार्थे उत्पत्तिस्थितिभङ्गत्रित्वावच्छिन्ने लक्षणा जन्मपदतात्पर्यग्राहकं एतत्त्रित्वावच्छिन्न यत इति बोध , अतद्गुणेत्यादि तथा च यत्र समासघटकपदार्थतावच्छेदकधर्मप्रकारेण समासघटकपदार्थाना बोधस्तत्राजहल्लक्षणा यथा लम्बकर्ण इत्यत्र लम्बकर्णत्वधर्माभ्यां लम्बकर्णयोर्बोधात् अजहल्लक्षणा अत्र तु उत्पत्तित्वस्थितित्वभङ्गत्वसमानाधिकरणत्रित्वेन रूपेण त्रयाणां बोधात् उत्पत्तित्वादिधर्मत्रयस्य च सामानाधिकरण्यविशेषणतया बोधात्तै रूपैरुत्पत्त्यादीनामबोधादतद्गुणसंविज्ञानबहुव्रीहिरिति परिष्कृतोर्थः, बहुव्रीह्यपेक्षया द्वन्द्वस्य लघुत्वादाहुरथवेत्यादि, सर्वे भावविकाराः जन्मप्रभृति जन्मावधीकृत्य 'जायतेऽस्ति विपरिणमते वर्धतेपक्षीयते नश्यतीति'सिद्धाः षड् भावविकाराः जगज्जन्मोत्तरकालीना , एकवद्भावः समाहारद्वन्द्व इत्यर्थः, धर्मवाची पूर्वमीमांसायां गवादिपदानां गोत्वादिधर्मशक्तिन्यायेनादिपदस्यापि प्राथम्यरूपधर्मे शक्तिरित्यर्थः, विग्रहवाक्यमाहुस्तथाचेत्यादि, धर्मवाची प्राथम्यरूपधर्मवाची, स च प्राथम्यरूपधर्मश्च, स्वसम्बन्धिनं स्वाश्रयनिरूपकात्मकौ सम्बन्धिनौ बोधयतीत्यर्थः, बोधयतीति अनुमानविधया बोधयति, तथाहि प्राथम्यमाश्रयनिरूपकोभयसापेक्षं सम्बन्धिपदार्थत्वात् प्रतियोगितावदितिरीत्या बोधयतीत्यर्थ , तस्य प्राथम्यस्य, उभयसापेक्षत्वात् स्वाश्रयतया जन्मनो निरूपकतयेतरेषां स्थित्यादिपदार्थानामित्येवमुभयसापेक्षत्वादित्यर्थः, विद्यमानत्वात् जन्मपदेन शक्त्यैव बोधनात्, अन्यानेव प्रपञ्चोत्पत्तिभिन्नानेव, भावविकारान् षड् भावविकारान्, लक्षयति लक्षणया प्राथम्यनिरूपकान् बोधयतीत्यर्थः, तथा च जन्म जन्मनिष्ठप्राथम्यनिरूपकाः षड् भावविकाराश्च यतो भवन्तीत्यर्थः, समाहारद्वन्द्वपक्षमेव प्रकारान्तरेण प्रदर्शयन्ति अथवा जन्मन इत्यादिना, अनादित्वं स्वाधिकरणक्षणपूर्वक्षणावृत्तिस्वाधारकत्वमेवानादित्वं पारिभाषिकं तज्जन्मनोस्तीति भावः, तदाधारस्य उत्पत्तेराधारस्य प्रपञ्चस्य, पूर्वं उत्पत्तेः पूर्वः, अविद्यमानत्वात् बहिः प्रकटस्य अविद्यमानत्वादित्यर्थः, तदाधारस्य स्थित्यादेराधारस्य, पूर्वं स्वाधिकरणक्षणपूर्वक्षणे, अतः यतो विद्यमानत्वमत इत्यर्थः, स्वाधारसद्धर्मवाची तथा चात्र कल्पे आदिशब्दः स्थित्यादिभावविकाराश्रयस्य सतः प्रपञ्चस्य बोधकः तत्र स्वशब्देन स्थित्यादयो भावविकाराः

दिशब्दः स्वाधारसद्धर्मिवाची तद्धर्माणामुपलक्षकः, अथवा गमनप्रवेशयोर्भेदात् जन्म आदिर्येषामिति जात्यपेक्षया एकवचनं, जन्म तु श्रुतत्वात् सिद्धं, अथवा किमनया कुसृष्ट्या जन्म आद्यस्य आकाशस्य यत इति 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्येव विचार्यते फलसम्बन्धित्वात्, तेनैकत्र सिद्धः शास्त्रार्थः प्रकारान्तरेपि, 'यतो वा इमानी'त्यत्र विस्फुलिङ्गवत् सर्वोत्पत्तिः अत्र तु क्रमेणेति विशेषः, एतेन सर्व एव प्रकाराः सूचिता वेदितव्याः, ब्रह्मविचारे ब्रह्मणोप्यधिकृतत्वात् तद् ब्रह्मेत्यायाति नत्वध्याहारः, शास्त्रे योनिः शास्त्रयोनिः शास्त्रोक्तकारणत्वादित्यर्थः, शास्तीति शास्त्रं वेदः, सामान्यग्रहणं पूर्वकाण्डे पूर्वसृष्टिवाक्यानां सङ्ग्रहार्थं, यथास्यैव कारणत्वन्नान्यथा तथोपरिष्टाद्वक्ष्यामः, मतान्तरवज्जन्मादीनान्न विकारित्वं किन्त्वाविर्भावतिरोभावावेव, तथोत्तरत्र वक्ष्यते तदनन्यत्वाधिकरणे, नामलीलाया अपि न पृथङ्निरूपणं प्रपञ्चमध्यपातात् ।

केचित् पृथग्रूपनामप्रपञ्चकर्तृत्वं योगविभागेन प्रतिज्ञाय समन्वयादिसूत्रेष्वेव हेतून् वर्ण-

---

तदाधारः सन् प्रपञ्चस्तस्य धर्मः सत्त्वरूपस्तस्य वाची शक्त्या तस्य बोधकः, तद्धर्माणामित्यादि सतः प्रपञ्चस्य धर्माणां स्थित्यादिभावविकाराणां लक्षकः लक्षणया बोधक इत्यर्थ , एतादृशजन्मादि यत इति बोध., बहुसम्मतत्वेन तद्गुणबहुव्रीहिपक्षमाश्रित्याहु अथवेत्यादि, गमनेत्यादि गमनमाविर्भावरूपोत्पत्ति· प्रवेशो भङ्गस्तयोर्भेदात् भिन्नार्थबोधकं'जन्म''आदि' इतिपदद्वयमुपात्तमित्यर्थ , जन्म जन्मपदार्थः आदि अनादित्वाश्रय. येषामितिबहुवचनं तद्गुणसविज्ञानेन बहूनां सङ्ग्रहार्थमुक्तं नतु विग्रहघटकमपि सूत्रे एकवचनस्यैव सत्त्वात् विग्रहवाक्य तु जन्म आदिर्यस्य तत् इत्येवंरूपं, नन्वेकवचनेन सौत्रेण जन्मादिषण्णां बोध कथमित्यत आहुः जात्येत्यादि तथा च विकारत्वधर्मस्यैक्यादेकवचनमिति भावः, नन्वत्राप्यादिपदस्य षट्कसमुदायत्वावच्छिन्ने लक्षणया सर्वेषा बोधेपि जन्मनो जन्मत्वेन रूपेणाबोधादतद्गुणसंविज्ञान एव भवेदत आहुः जन्मेत्यादि, श्रुतत्वात् जन्म तु 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्युपस्थापितत्वात् जन्मविशिष्टजन्मनिष्ठादितानिरूपकसमुदायत्वावच्छिन्ने आदिपदलक्षणातात्पर्यात्तद्गुणसंविज्ञान एवमिहापीत्यर्थः,ऋजुपक्षान्तरेण सूत्रार्थमाहुः किमनयेत्यादिना, इत्येव ब्रह्मण.सकाशात्सर्वस्योत्पत्तिबोधकमिदमेव वाक्यं विचार्यते विषयत्वेन 'जन्माद्यस्य यत' इतिसूत्रेणेत्यर्थः, ननु बहूनां तादृशवाक्यानां मध्ये इदमेव विषयत्वेन विचार्यतेत्र किं गमकमित्यत आहुः फलेत्यादि 'ब्रह्मविदाप्नोति परमि'तिफलबोधकवाक्यघटितप्रपाठकान्तर्गतत्वेन तस्य प्राधान्यादिति भाव , नन्वत्रैवमेवास्तु अन्यत्र तु 'यतो वा इमानी'त्यादिस्थलेषु सर्वत्र तपआदिनिष्पन्नस्य विभूतिरूपस्य वा जीवस्यैव कर्तृत्वमस्त्वित्यत आहुः तेनेत्यादि, तेन ब्रह्मणः कारणतायाः सिद्धत्वेन, एकत्र सिद्ध इत्यादि 'तस्माद्वा एतस्मादात्मन'इत्यत्र ब्रह्मणः प्रपञ्चकारणत्वमिति शास्त्रार्थः सिद्धः स एव 'यतो वा इमानि' 'आनन्दाद्ध्येव खल्विमानी'त्यादिस्थले सर्वत्र बोध्य इत्यर्थ., अत्र तु 'तस्माद्वा एतस्मादि'त्यत्रेत्यर्थः, ननु 'जन्माद्यस्य यत' इतिसूत्रभागेन ब्रह्मण. कारणत्व व्यवस्थापितं तच्च नित्यशुद्धबुद्धमुक्तस्वभावत्वाद्ब्रह्मणो न सम्भवतीति पूर्व पक्षे प्राप्ते सूत्रशेषेण समाधानमाहु. शास्त्रेत्यादिना, शास्त्रोक्तेत्यादि तथा च ब्रह्मणो यथा लौकिकयुक्त्यगम्यत्वं वेदैकसमधिगम्यत्व तथा ब्रह्मनिष्ठकारणत्वमपीति वेदोक्तकारणतायां विप्रतिपत्तौ ब्रह्मापि विप्रतिपन्नं स्यात्तस्माद्वेदोक्तमेवाङ्गीकार्यमितिभावः, सामान्यग्रहणं उपनिषत्पदमनुक्त्वा 'शास्त्रे'तिपदप्रयोगरूपं, पूर्वसृष्टिवाक्यानां 'प्रजापतिरकामयते'त्यादिपूर्वकाण्डीयसृष्टिवाक्यानां, सङ्ग्रहार्थं ब्रह्मणि कारणताप्रतिपादकत्वेन सङ्ग्रहार्थमित्यर्थः, ननु प्रजापतिप्रभृतीनां कारणताप्रतिपादकवाक्यैस्तेषामेव कारणत्वं प्रतिपाद्यते नतु ब्रह्मण इत्यत आहुः यथेत्यादि, अस्यैव ब्रह्मण एव, एवकारेण ब्रह्मभिन्नानां कारणत्वव्यवच्छेद·, उपरिष्टात् अग्रिमसूत्रेषु, ननु प्रपञ्चस्योत्पत्तिमत्त्वे प्रपञ्चस्याब्रह्मत्वापत्तिरित्यत आहु. मतान्तरेत्यादि, जन्मादीत्यादिपदेन स्थितिभङ्गादीनां ग्रहणं, न विकारित्वं न विकाररूपत्वम्, नन्वर्थरूपप्रपञ्चकर्तृत्वस्य ब्रह्मणि लाभेपि नामात्मकेऽलाभात्तत्र कश्चनान्यः कर्ता भविष्यतीत्यत आहुः नामेत्यादि तथा च जन्माद्यस्येत्यत्रेदंशब्देन सन्निकृष्टमात्रपरामर्षान्नामप्रपञ्चस्यापि श्रोत्रसन्निकर्षात् सोपीदशब्देन सङ्गृहीत इति बोध्यम् ।

केचित् शङ्कराचार्याः,तेषां मते दशसूत्रं जन्माद्यधिकरणं,तत्र प्रथमसूत्रेणार्थसृष्टिप्रतिज्ञा, शास्त्रयोनित्वादितिसूत्रं पूर्वसूत्राद्विभज्य तन्मते पञ्चम्यर्थानन्वयात्प्रथमान्तं सूत्रमित्युक्त्वा द्वितीयसूत्रेण शब्दसृष्टिप्रतिज्ञा इत्येवं रूपं सन्मतमुपन्यस्यन्ति पृथगित्यादिना, हेतून् वर्णयन्ति समन्वयार्थहेतून् वर्णयन्तीत्यर्थ., सूत्रस्य प्रथमान्ततामुप·

यन्ति, अन्वयसिध्यर्थश्च अतति व्याप्नोतीति अत्, शास्त्रे योनित्वं प्राप्तं तदिति, नैतत् सूत्रकारसम्मतमिति प्रतिभाति, तस्मात् सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च सिद्धं निरङ्कुशजगत्कर्तृत्वेन ।

ननु न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानं, तपोयज्ञादिप्रयुक्तप्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्वकाण्डे तत्तदुपाख्यानेष्ववगम्यमानत्वात्, नचावान्तरकारणत्वं, परस्याश्रवणात्, उत्तरकाण्डे तु द्वयप्रतिपादनाद्विरोधः सन्देहश्च, मीमांसायाः सन्देहनिवारकत्वेऽप्येकांशस्याप्रामाण्यं स्यात्, उभयसमर्थने शास्त्रवैफल्यं वा, वेदप्रामाण्यादेव तत्सिद्धेः, बाधितार्थवचनं वेदे नास्तीत्यवोचाम, किञ्च, वेदान्ताः किं वेदशेषा वेदा वा? नाद्यः अनुपयोगात्, अनारभ्याधीतत्वेन तदुपयोगित्वे पूर्वकाण्डविचारेणैव गतार्थत्वं विद्याप्रवेशश्च, न द्वितीयः यज्ञाप्रतिपादनात् मन्त्रब्राह्मणत्वाभावाच्च, तस्माद्वेदोषरा वेदान्ता इति तेषां किं स्यादिति चेत्,

मैवं, अस्ति तावद्वेदत्वमध्ययनादिभ्यः स्मरणाच्च, प्रमाणञ्च सर्वोऽपि वेदः स्वार्थे, स च

---

वर्णयन्ति अन्वयेत्यादिना, तद्दूषयन्ति नैतदित्यादिना, दूषण तु शास्त्रयोनिरेतावतैव प्रतिज्ञासिद्धेस्त्वादितिभागस्य वैयर्थ्यं नहि सर्वज्ञः सूत्रकारो व्यर्थं प्रयुङ्क्ते इति, स्वोक्तसूत्रार्थं निगमयन्ति तस्मादित्यादिना ।

जगत्कर्तृत्वेन ब्रह्मणि सर्वज्ञत्वसर्वशक्तिमत्त्वे असहमानाः प्रत्यवतिष्ठन्ते ननु इत्यादिना, प्रभृतिपदेन क्षेत्रज्ञप्रकृत्यादीनां ग्रहण, तत्तदुपाख्यानेषु प्रजापतिक्षेत्रज्ञाद्युपाख्यानेषु, अवान्तरकारणत्वं मुख्यं कारणत्व परब्रह्मण अवान्तरकारणत्व प्रजापत्यादीनां, परस्येत्यादि तथाचेन्द्रियाणा सन्निकर्ष इव यस्यावान्तरकारण प्रजापति. स्यात्तादृशपरस्य प्रपाठके अश्रवणादित्यर्थ., ननूत्तरकाण्डेन ब्रह्मणि कर्तृत्वं व्यवस्थापनीयमत आहु. उत्तरेत्यादि, द्वयप्रतिपादनात् 'तस्माद्वा' 'यतो वा' इत्यादिश्रुतिभि. कर्तृत्वस्य 'नित्यशुद्धबुद्धे'त्यादिभि' कर्तृत्वाभावस्येतिविरोध इत्यर्थ , सन्देहश्च कर्तृत्वतदभावोभयसाधारणचैतन्यधर्मदर्शनात्सन्देहोपीत्यर्थः, मीमांसायाः उत्तरमीमासायाः, एकांशस्येत्यादि तथा च कोटिद्वयमध्ये यत्कोटिनिर्णय. क्रियते तदितरकोटिप्रतिपादकवेदान्तस्याप्रामाण्यं स्यादित्यर्थ , उभयेत्यादि कोटिद्वयस्यापि ब्रह्मण्यङ्गीकारे इत्यर्थ., शास्त्रवैफल्यं विरोधस्यैवाभावेन तन्निद्धारार्थं व्याससूत्ररूपशास्त्रस्य वैफल्यमित्यर्थ , तत्सिद्धेः विरुद्धकोटिद्वयस्य ब्रह्मणि सिद्धेरित्यर्थः, वादी वेदप्रामाण्यमेव दृढ प्रदर्शयति बाधितार्थेत्यादि, वेदान्तप्रामाण्ये तदुक्तोर्थः सिध्येदिति तत्प्रामाण्यमेवाक्षिपति किञ्चेत्यादिना, नाद्य इति तत्र हेतुः अनुपयोगादिति, वेदशेषत्व हि द्वेधा वेदबोधितकर्मोपकारित्वेन कर्मफलोपकारित्वेन वा, नहि वेदान्ताना कर्मस्वरूपोपकारित्वघटकद्रव्यदेवताप्रतिपादकत्वरूप सम्भवति, तत्र द्रव्यदेवते हि कर्मस्वरूप, तत्र नित्यशुद्धबुद्धमुक्तस्वभावोदासीनस्य कर्मस्वरूपाघटकत्वेन स्वरूपोपकारित्वासम्भवात्, नापि फलोपकार्यङ्गत्वं तादृशब्रह्मणोऽकारणत्वेन तत्प्रतिपादनस्य फलोपकारिप्रतिपादनत्वासम्भवात्, अनारभ्येत्यादि 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोक सम श्नुते' इत्यव्यभिचरितक्रतुसम्बद्धजुहूद्वारेण क्रतु स्मारयद्वाक्यं यथा पर्णताया क्रतुशेषता बोधयति तथाऽव्यभिचरितक्रतुसम्बद्धात्मोपस्थितिद्वारेणानारभ्याधीतवेदान्तवाक्यानामपि कर्मोपयोगित्वे पूर्वमीमांसयैव गतार्थता उत्तरस्या अनुपयोग एव, विद्याप्रवेशः पूर्वोक्तरीत्या कर्माङ्गत्वोरीकारे श्रवणादिसम्पाद्यब्रह्मविद्यानुपयोगेनोपनिषदां ब्रह्मविद्योनुपयोगित्वमित्यर्थः, न द्वितीयः वेदा इति द्वितीयः, मन्त्रेत्यादि वेदान्तानां मन्त्रब्राह्मणत्वाभावादित्यर्थ , तत्र हेतुमाहुः यज्ञेत्यादि वेदान्तानामिष्टसाधनीभूतकर्माप्रतिपादकत्वाद्ब्राह्मणत्वाभावादित्यर्थः, मन्त्रस्तु कर्मप्रवृत्तपुरुषस्य व्यापारनिचयसम्पादकः, 'द्वादशशतं ददाति अनुबन्ध्यामालभेते'तिविधिरूपमन्त्राणामपि तादृशनिचयसम्पादकत्वमव्याहतमेव, तस्मादेतदन्यतररूपत्वाभावान्न वेदत्वं वेदान्तानामित्यर्थः, पूर्वपक्षं निगमयन्ति तस्मादिति तस्मात् पूर्वोक्तरीत्या पुरुषार्थसाधनोपयोगित्वाभावेपि वेदपदप्रवृत्तिनिमित्तवेदत्वस्य सत्त्वात् वेदोषराः वेदत्वे सति उषरा. फलानुपयोगिनः यथोषरभूमिर्भूमित्वे सति फलासम्पादनी तथेत्यर्थः, किं स्यात् ? तेषां विचारेण किं फलं स्यात् ? तथा च तेषामतिदुर्बलत्वेन ततो ब्रह्मणः कर्तृत्वप्रतिपत्तिः सुदूरपराहतैवेति फलितम्,

उक्ते पूर्वपक्षे समाधानमाहुः मैवमिति, अस्तीत्यादि वेदान्तेषु न वेदोषरत्वं किन्तु परमपुरुषार्थसाधनोपयोगि वेदत्वमेव, तत्र हेतुमाहु. अध्ययनादिभ्य इति, अध्ययनाध्यापनविधिना वेदत्वेनानध्यायवर्जं शूद्रादिश्रवण-

---

१ युक्तेत्यपिपाठ.

न यज्ञश्चेद्ब्रह्म भवतु, नचैतावता अवेदत्वमतिप्रसङ्गात्, शक्यते ह्यग्निहोत्रादीनामन्यतरदनन्तर्भाव्य तथा वक्तुं, तस्मात् ब्रह्मापि प्रतिपादयन्तो वेदान्ता वेदत्वं न व्यभिचरन्तीति, मन्त्रब्राह्मणरूपत्वं चोत्पश्यामः, ऋगेव मन्त्रः ब्रह्मप्रतिपादकं ब्राह्मणं तच्छेषाः सृष्ट्यादिप्रतिपादकाः, यद्यपि न विधीयते तथापि तादृशमेव ज्ञानं फलायेति युक्तमुत्पश्यामः, पूर्ववैलक्षण्यन्तु भूषणाय, काण्डद्वयस्यान्योन्योपकारित्वाय साधारणग्रहणं, 'यदेव विद्यया करोती'त्यादिना पूर्वशेषत्वं सर्वस्य, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिना सर्वस्योत्तरशेषत्वं, कर्मब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात् कर्तृवाक्येषु सर्वत्र न विरोधः, तस्माच्छास्त्रयोनित्वं सिद्धम् ।

केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति, अन्ये पुनः श्रुत्यनुवादकमाहुः,

---

वर्जं वेदाध्ययनार्थमुक्तनियमपुरःसरं वेदान्तानामध्ययनादित्यर्थः, वेदान्ताना वेदत्वे हेत्वन्तरमाहुः स्मरणाच्चेति, 'साङ्गोपनिषदो वेदानधीत्याध्याप्य विस्तरात् ब्राह्मणो ब्रह्मचर्यस्वी लभते ब्रह्मणः पदमि'तिस्मरणादित्यर्थ , प्रमाणं मुख्यया वृत्त्या स्वार्थप्रमाजनक., स्वार्थे शक्यार्थे, स च स्वार्थश्च, एतावता यज्ञाप्रतिपादकतयाऽवेदत्वाङ्गीकारे, अतिप्रसङ्गात् अवेदत्वस्यार्थवादादावापत्तिप्रसङ्गादित्यर्थः, शक्यते हीत्यादि, तथा च यावद्यज्ञाप्रतिपादकत्वमवेदत्वसाधकमुत यत्किञ्चिद्यज्ञाप्रतिपादकत्व ? तत्र नाद्यः ज्योतिष्टोमादियज्ञप्रतिपादकेपि यावद्यज्ञप्रतिपादकत्वाभावेन अवेदत्वापातात्, नान्त्यः तस्मिन्नेव वाक्ये ज्योतिष्टोमेतरयत्किञ्चिद्यज्ञाप्रतिपादकत्वेनावेदत्वापत्तेः, अथवा शक्यते हीत्यादि तथा च होमयज्ञाद्यन्यतरदनन्तर्भाव्य अप्रतिपाद्यापि तथा वेदान्ता वेदा इति वक्तुं शक्यते एवेत्यर्थः, सिद्धान्तमुपसंहरन्ति तस्मादित्यादि, न व्यभिचरन्ति न वेदत्वशून्या भवन्ति, ननु मन्त्रब्राह्मणत्वाभावे कथं वेदान्तानां वेदत्वमित्यत आहुः मन्त्रेत्यादि, तथा च यत्रार्थवाचकपदानुरोधेन पादव्यवस्था न छन्दोनुरोधेन सा ऋगिति पूर्वमीमांसायां लक्षणकरणात् एतल्लक्षणस्य च वेदान्तेष्वपि सत्त्वात् ऋग्रूपमन्त्रत्वमव्याहतमेवेति भाव., ब्राह्मणरूपत्व व्यवस्थापयन्ति ब्रह्मेत्यादिना एतदपि पूर्वतन्त्र एवोक्त 'शेषे ब्राह्मणशब्द' इत्यत्र शेषे मन्त्रातिरिक्तसर्ववेदभागे ब्राह्मणशब्दः ब्राह्मणपदवाच्यत्वमित्यर्थ· एव ब्रह्मप्रतिपादकवेदत्वेनापि ब्राह्मणत्वमुक्त बोध्यं, ननु सृष्ट्युपासनाप्रकारफलप्रशंसनादिवेदभागानां ब्रह्मप्रतिपादकत्वाभावाद्ब्राह्मणत्वं न स्यादित्यत आहुः तच्छेषा इत्यादि तथा च माहात्म्यज्ञानद्वारा तेषामपि ब्रह्मप्रतिपादकत्वात् ब्रह्मप्रतिपादकवाक्यशेषतया तेषामपि ब्राह्मणत्वमव्याहतमित्यर्थः, यद्यपीत्यादि, न विधीयते सृष्ट्यादिवाक्यैर्माहात्म्यज्ञानं ब्रह्मणि न विधीयते, तथापि विधानाभावेपि, तादृशमेव ब्रह्मबोधकवाक्यार्थज्ञानविषयब्रह्ममाहात्म्यविषयकमेव, फलाय भक्तिरूपफलसम्पादनायेत्यर्थः, नन्वेवं ब्रह्मज्ञानस्य धर्मवैलक्षण्य स्यादतआहुः पूर्वेत्यादि, भूषणाय धर्मस्य त्रिवर्गसाधकत्वात् ब्रह्मज्ञानस्य च तद्विरोधिमोक्षरूपपरमफलसाधकत्वात् धर्मवैलक्षण्य इष्टमेवेत्यर्थ. 'आत्मानं चेद्विजानीयात् अहमस्मीति पूरुषः किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेदि'तिश्रुतेः, ननूत्तरकाण्डस्य पुरुषार्थपर्यवसाने पूर्वस्य च त्रिवर्गोपक्षीणत्वे काण्डद्वयोपसंहारकं शास्त्रयोनित्वादितिसामान्योपादानमनुचित उपनिषद्योनित्वादित्येव चोचितमित्यत आहुः काण्डद्वयस्येत्यादि, तथा चाध्ययनाध्यापनविधिविषयत्वेन सर्वोपि वेदराशिः पुरुषार्थपर्यवसायी पुरुषार्थश्च परब्रह्मप्राप्तिरेव नान्यो भवितुमर्हति, इत्थं च पूर्वकाण्डे स्वर्गकामस्वाराज्यादिकामनाश्रवणात् परमपुरुषार्थपर्यवसाने च सन्देहः प्राप्त , तन्निरासाय उक्तपुरुषार्थपर्यवसानाय च 'यदेव विद्यये'त्यादिना वीर्यवत्तरत्वनिरूपणेन कर्मणा पुरुषार्थपर्यवसानमुक्त, इत्थ च सर्वस्यापि वेदराशे. पूर्वकाण्डोक्तकर्मशेषत्वमागतं, एवमुत्तरस्य पूर्वशेषत्वे गौणत्वं स्यादत आहुः तमेतमित्यादि तथा च वेदानुवचनयज्ञदानतपःप्रभृतिभिर्ब्रह्मज्ञानेच्छापूर्वैः श्रवणात्सर्वस्य वेदराशेरुत्तरशेषत्वमिति न गौणता, सर्वस्य वेदस्य ब्रह्मत्वेन साम्ये त्विष्टापत्तिः, ननु सर्वस्य वेदस्य समप्रामाण्ये प्रजापत्यग्निहोत्रादीनामपि कर्तृत्वप्रतिपादनाद्ब्रह्ममात्रपर्यवसित कर्तृत्वं कथ सिद्ध्येदित्यत आहुः कर्मब्रह्मणोरिति, क्रियाज्ञानयोः क्रियाज्ञानस्वरूपयो., धर्मिपरत्वेनेत्यादि क्रियाया. धर्मिरूपत्व 'यज्ञो वै विष्णुरि'तिश्रुत्या ज्ञानस्य धर्मिरूपत्व 'विज्ञानमानन्दं ब्रह्मे'तिश्रुत्यावसेयं, न विरोधः वेदे यत्र क्वापि प्रतिपादितं कर्तृत्वं ब्रह्मण्येव पर्यवस्यतीति न विरोध इत्यर्थः, तस्मात् पूर्वोक्तरीत्याऽविरोधप्रतिपादनात्, शास्त्रयोनित्वं शास्त्रोक्तकर्तृत्ववत्त्वं ब्रह्मणि सिद्धमित्यर्थः ।

अनुमानं केवलव्यतिरेक्यनुमान तथा हि 'जन्माद्यस्य यत' इत्यनेन हेतुसाध्यप्रदर्शनात् ब्रह्म इतरभिन्नास्तित्व·

**सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानञ्च ब्रह्मणि प्रमाणमिति, ततु 'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति केवलोपनिषद्वेद्यत्वात् उपेक्ष्यं, अनधिगतार्थगन्तृत्वात् प्रमाणस्य, मनननिदिध्यासनयोः श्रवणाङ्गत्वं, सन्देहवारकत्वात् शास्त्रस्यापि तदङ्गत्वमिति ॥ २ ॥**

**॥ इति प्रथमाध्याये प्रथमे पादे द्वितीयं जन्माद्यधिकरणम् ॥**

---

**तत्रैतत् स्यात्तत्र किं समवायि निमित्तं कर्तृ वा ? किमतो यद्येवम् ? एवमेतत् स्यात्, यद्येकमेव स्यात् तदा क्रियाज्ञानशक्त्योर्निरतिशयत्वं भज्येत मृदादिसाधारण्यं च स्यात् मतान्तरवत्, कथमेवं सन्देहः यावता 'यतो वा इमानी'त्यादिभ्यो निःसन्देहश्रवणात् ? एवं हि सः, पञ्चमी श्रूयते यत इति, पञ्चम्यास्तसिरिति, 'आत्मन' इत्यपि पञ्चमी, निमित्तत्वे न सन्देहः पञ्चम्या निमित्तत्वकथनात्, उपादानत्वे कर्तृत्वे च सन्देहः तद्वाचकाश्रवणात्, कल्पनायां प्रमाणाभावात्, समवायित्वे पुनः सुतरां सन्देहः, एवं प्राप्त आह**

---

वत् जगज्जन्मादिकर्तृत्वात् यन्नैवं तन्नैवमिति बोध्य, **श्रुत्यनुवादकं** 'यतो वा' इतिश्रुत्यनुवादक, **सर्वज्ञत्वाय** सर्वकर्तृत्वस्य सर्वज्ञतां विनाऽसम्भवेन सर्वज्ञत्वसिद्धये इत्यर्थः, तन्मतद्वय दूषयन्ति **तत्त्वि**त्यादिना, **केवले**ति तुशब्देनोपनिषदतिरिक्तवेद्यत्वनिरासात् केवलोपनिषद्वेद्यत्वमुक्तमित्यर्थः, **अनधिगते**त्यादि तथा चानधिगतार्थगन्तृत्वरूप प्रामाण्यं वेद एवास्ति नतु अनुमाने इत्यर्थः, ननु ब्रह्मण उपनिषदतिरिक्तावेद्यत्वे मनननिदिध्यासनयोर्ब्रह्मावगतिसाधनत्वोक्तिर्व्यर्था स्यादत आहुः **मनने**त्यादि, **श्रवणाङ्गत्वं** श्रवणेन ब्रह्मप्रमितौ जननीयायां सहकारिकारणत्वमित्यर्थः, **शास्त्रस्य** व्याससूत्ररूपशास्त्रस्य, **तदङ्गत्वं** श्रवणाङ्गत्वम् ॥ २ ॥

॥ इति प्रथमाध्याये प्रथमपादे द्वितीयं जन्माद्यधिकरणम् ॥

---

पूर्वोक्तरीत्या जन्माद्यधिकरणं निर्णीय सूत्रान्तरमवतारयन्ति **तत्रे**त्यादि, **तत्र** जगत्प्रति ब्रह्मणः कारणत्वे, **एतत् स्यात्** वक्ष्यमाणसंशयविषयत्वं स्यादित्यर्थः, तत्र संशयविषयकोटीना मध्ये संशयकोटिगणनामाहुः **समवायी**त्यादि, उक्तसंशये कि दूषणमित्याहुः **किमत** इति यद्येवं सशयोऽतः को दोष इत्यर्थः, **एवमि**त्यादि वक्ष्यमाणप्रकारो दोषः स्यादित्यर्थः, दूषणमेवाहुः **यद्येकमि**त्यादिना, एकं कुलालवत्कर्तृ दण्डवन्निमित्तं मृत्पिण्डवत्समवायि एतेषां अन्यतरदेव स्यादित्यर्थः, तथा सति दूषणमाहुः **क्रियाज्ञाने**त्यादि तथा चोक्तत्रिविधकारणानां मध्ये यद्येकं कारणं ब्रह्म भवेत्तदा तेषामिवेतरकारणसमवधानं विना कार्यजनकत्व न स्याद्ब्रह्मणोपि इत्थ च क्रियाज्ञानशक्तिमत्त्वेन यन्निरतिशयत्वं इतरनैरपेक्ष्येण कार्यजननसामर्थ्यं तद्भज्येतेत्यर्थ , ब्रह्मणः समवायिकारणत्वे दूषणान्तरमाहुः **मृदादी**त्यादि, **साधारण्यं** ब्रह्मणो मृत्तुल्यतयाऽनित्यत्वं सावयवत्वं च स्यादित्यर्थ., तत्रोपष्टम्भकमाहुः **मतान्तरवदि**ति यथा च सांख्यैः पुरुषस्य परिणामित्वमेतद्दोषादेव न स्वीक्रियते प्रकृतेश्च सावयवत्वात्स्वीक्रियते नैयायिकमतमादाय तु कपालतुल्यतया द्रव्यसमवायिकारणतायां ब्रह्मणोऽनित्यत्वमपि स्यादित्यर्थ , अग्रिमाधिकरणघटकं संशयं दृढीकुर्वन्ति **कथमि**त्यादिना, एवं ब्रह्म कारणं न वेत्याकारकः, **यावता** निश्चयेन, **निःसन्दे**हेत्यादि कारणतासन्देहनिर्गमनं येन स्यात्तादृशकारणतायाः श्रुतिवाक्येभ्यो निश्चयादित्यर्थः, **एवं** वक्ष्यमाणप्रकारेण, **सः** सन्देहः, **तसिरितीति** तथाचाश्वतः पतितः स्वर्गतः पतितः दण्डाद्धत इत्यादौ पञ्चम्या अपादानत्वशुद्धनिमित्तकारणत्वयोरेव बोधनादितिभावः, ननु 'यतो वे'तिश्रुतौ तसेः सत्त्वेपि 'तस्माद्वा एतस्मादि'त्यत्र तस्याश्रवणात् कारणत्वान्तरमेव पञ्चम्या बोध्यतामित्याक्षेपे एकवाक्यतया तत्रापि निमित्तकारणताबोधकतां व्यवस्थापयन्ति **आत्मन** इत्यादिना, **निमित्तत्वेने**ति निमित्तत्वेन रूपेण निमित्तकारण बोधयतीत्यर्थः, **निमित्तत्वकथनात्** ब्रह्मणो निमित्तकारणत्वबोधनादित्यर्थः, **तद्वाचके**त्यादि कर्तृत्वसमवायिकारणत्वयोर्वाचकपदाश्रवणादित्यर्थः, ननु तन्तुभ्यः पट इतिप्रयोगस्यापि बाधकाभावेन सम्भवाद्ब्रह्मणः 'तस्माद्वा' इतिपञ्चमीतः समवायिकारणत्वमपि कल्प्यमित्यत आहुः **कल्पनायामि**त्यादि, **सुतरां सन्देहः** सावयवत्वानित्यत्वयोरापत्त्या सुतरां सन्देह इत्यर्थः, **एवं प्राप्ते** ब्रह्मणि कर्तृत्वसमवायिकारणत्वयोरभाव इति पूर्वपक्षे प्राप्ते इत्यर्थः, **आह** समाधानरूपं सूत्रमाहेत्यर्थः,

# तत्तु समन्वयात् ॥ ३ ॥ (१-१-३)

'तु'शब्दः पूर्वपक्षव्यावृत्त्यर्थः, निमित्तत्वस्य श्रुतिसिद्धत्वात् मतान्तरनिराकरणत्वेनाग्रे वक्ष्यते, 'तत्' ब्रह्मैव समवायिकारणं, कुतः? 'समन्वयात्' सम्यगनुवृत्तत्वात्, अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात्, नामरूपयोः कार्यरूपत्वात्, प्रकृतेरपि स्वमते तदंशत्वात्, अज्ञानात् परिच्छेदाप्रियत्वे, ज्ञानेन बाधदर्शनात्, नानात्वं त्वैच्छिकमेव जडजीवान्तर्यामिष्वेवैकैकांशप्राकट्यात्, कथमेवमिति चेत्, न, सद्रूपे घटरूपक्रियास्विव तारतम्येनाविर्भाववत् जडेपि भानत्वादिप्रतीतेस्तारतम्येनाविर्भावोङ्गीकर्तव्यः, भगवदिच्छाया नियामकत्वात्, नच साधारण्येन सर्वजगत्प्रति परमाण्वादीनामन्वयः सम्भवति, एकस्मिन्ननुस्यूते सम्भवत्यनेककल्पनाया अन्याय्यत्वात्, लोके कर्तृविशेषवत् उपादानविशेषग्रहणेपि न ब्रह्मणि व्यभि-

---

तत्तु समन्वयात् ॥ ३ ॥ पूर्वपक्षव्यावृत्त्यर्थः अकर्तृत्वासमवायिकारणत्वरूपपक्षव्यावृत्त्यर्थः, ननु तुशब्दो विशेषावधारणपूजाव्यावृत्तिपादपूरणाद्यर्थहेतुषु दृष्ट इति कथं व्यावृत्त्यर्थ एवात्र गृह्यते इत्यत आहुः मतान्तरेत्यादि, मतान्तरं व्यावृत्त्यतिरिक्तार्थोपादानरूपं मतान्तरं, निराकरणत्वेन निराकरणं यथा स्यात्तेन प्रकारेण, अग्रे 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यत्र 'तु'शब्दस्येतरार्थत्वनिरासो वक्ष्यते इत्यर्थः, ब्रह्मैव 'सत्यं ज्ञानमनन्तं ब्रह्मे'तिश्रुतिप्रतिपादितं ब्रह्मैव, समवायिकारणं नामरूपात्मकप्रपञ्चस्य समवायिकारणं, सम्यगित्यादि कार्यमात्रे सम्यक्सम्बद्धत्वादित्यर्थः, एतदेवोपपादयन्ति अस्तीत्यादिना, ननु ब्रह्मधर्मास्तित्वादीनां कार्येन्वयवत् प्रकृतिगुणसत्त्वादीनामपि कार्येन्वयात्तस्या एव प्रपञ्चोपादानत्वमस्त्वित्यत आहुः प्रकृतेरिति तथा च चैत्रादिकर्तृके कार्ये ब्रह्मणः कर्तृत्वमिवोपादानत्वेपि बाधकाभावः इत्थं चेतरोपादानकेपि ब्रह्मोपादानकत्वमव्याहतमेवेतिभावः, तदंशत्वात् ब्रह्मांशत्वात् 'सदंशेन जडा अपी'त्यनेन सदंशात् प्रकृतेरप्युत्पत्तेरित्यर्थः, ननु प्रपञ्चे परिच्छेदाप्रियत्वयोरपि भानात् तयोरप्युपादानब्रह्मधर्मता स्यादत आहुः अज्ञानादित्यादि अन्यथा गर्भस्थो वामदेवो 'मनुरहं सूर्यश्चे'ति न वदेत् 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वमि'तिश्रुतिश्च न वदेत्, ज्ञानेन ब्रह्मत्वेन सकलपदार्थानां ज्ञानेन, बाधदर्शनात् परिच्छेदाप्रियत्वयोर्बाधदर्शनादित्यर्थः, ननु 'तस्मादेकाकी न रमते द्वितीयमैच्छदि'त्यादिश्रुतिभिः रमणार्थं 'एकोहं बहुस्यामि'त्यादिश्रुत्युक्तं नानात्वं भगवता स्वीकृतं तच्च परिच्छिन्नत्वं विना सकलपदार्थानां प्रत्येकं व्यापकत्वे न सम्भवत्यत आहुः नानात्वमिति परिच्छिन्नतया नानातत्तद्व्यक्तित्वैरेकस्मिन् ब्रह्मण्यनुभूयमानं नानात्वं, ऐच्छिकं स्वस्य रमणार्थं अभेदांशे व्यापकत्वांशे च जीवानां दृष्ट्यावरणसम्पादनं स्वेच्छया तत् कृतमित्यर्थः, ऐच्छिकत्वमेवोपपादयन्ति जडेत्यादिना तथा च जडजीवान्तर्यामिषु प्रत्येकं सच्चिदानन्देतित्रिरूपत्वसत्त्वेपि जडे सदंशस्य प्राकट्यं चिदानन्दांशे इच्छयाऽऽवरणं एवं जीवे चैतन्यांशस्याधिक्यात् सदानन्दांशे ऐच्छिकावरणं एवमन्तर्यामिणि आनन्दांशस्योद्भूतत्वेनानन्दतुल्यत्वाभावात्सच्चिदंशे ऐच्छिकावरणमित्येवं बोध्यमित्यर्थः, ननु सदेकरसस्य ब्रह्मणः कथं पूर्वोक्तरीत्या वैचित्र्येणानुभव इत्याशङ्क्य कैमुतिकन्यायेन समाधानमाहुः कथमित्यादि, एवं उक्तरीत्या वैलक्षण्येन, सद्रूपे इत्यादि तथाचैक एव सदंशः घटरूपक्रियेतित्रिभिः प्रकारैः प्रकटो जातस्तत्रैकस्यैव सदंशस्य घटत्वरूपत्वक्रियात्वधर्माणां परस्परं विरुद्धत्वेनैव भानं ननु सामानाधिकरण्येन तथा सति सच्चिदानन्देतित्रयाणां परस्य वैलक्षण्ये भाने किं चित्रमिति कैमुतिको बोध्यः, भानत्वादीति 'ता आप ऐक्षन्त' 'चक्षुरब्रवीत्' 'अस्पन्दनं गतिमतां पुलकस्तरूणामि'त्यादाविवेत्यर्थः, तारतम्येनेत्यादि सदादित्रिषु एकैकांशप्राकट्यरूपतारतम्येन, आविर्भावः प्रत्यक्षयोग्यता, नियामकत्वात् तरतमभावे नियामकत्वात्, ब्रह्मणः सर्वजगत्प्रति समवायिकारणत्वं अस्तिभातिप्रियत्वादिरूपैर्जगति ब्रह्मणः समन्वयं चोपपाद्येतरस्य जगत्प्रत्युपादानत्वं न सम्भवतीत्याहुः नचेत्यादिना, साधारण्येन सकलकार्यान्वयिकारणधर्मेण, सर्वजगत्प्रति कार्यद्रव्यगुणक्रियासमुदायरूपजगत्प्रतीत्यर्थः, अन्वयः मृत्सुवर्णकार्येषु मृत्सुवर्णानामिव भानमित्यर्थः, परमाण्वादीत्यादिपदेन दिक्कालयोर्ग्रहणं, ननु पार्थिवादिपरमाणुचतुष्टयस्य प्रत्येकं पृथिवीजलादौ समन्वयोऽस्त्येवेत्यत आहुः एकस्मिन्नित्यादि एकस्मिन् ब्रह्मण्यनुगते उपादाने सम्भवति सति अनेकोपादानकल्पनायाः गौरवेणान्याय्यत्वादित्यर्थः, ननु यत्रयत्र कार्यत्वं तत्रतत्र ब्रह्मोपादानकत्वमिति विनियतान्वयो न सम्भवति घटपटादौ कार्यत्वे मृदाद्युपादानकत्वस्य च सत्त्वेन ब्रह्मोपादानकत्वस्य चाभावेन व्यभिचारादित्यत आहुः लोके इत्यादि, तथा च लोके तत्तत्कार्यं प्रति तत्तत्कुलालादिविशेषकर्तृसत्त्वेपि यथा ब्रह्मणः कर्तृत्वमुरीक्रियते तथा तत्तद्घटादिकार्येषु कपालादिविशेषोपादानसत्त्वेपि ब्रह्मोपादानकत्वस्य सत्त्वान्न व्यभिचार इत्यर्थः, ब्रह्मणि ब्रह्मोपादानकत्वस्य, ननु यत्रयत्रास्तित्वप्रियत्वाद्यन्वयस्तत्र-

चारः, अलीकप्रतीतेस्तित्वादिप्रतीतावपि सम्यगन्वयाभावात् न कार्यत्वव्यभिचारौ, तस्माद् ब्रह्मण एव समवायित्वं, एतत्सर्वं श्रुतिरेवाह 'स आत्मानं स्वयमकुरुते'ति, निमित्तत्वं तु स्पष्टमेव सर्ववादिसम्मतम् ।

केचिदत्र शास्त्रयोनित्वपूर्वपक्षनिराकरणाय तत्तु समन्वयादिति योजयन्ति ।

तत् पूर्वपक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यं, तथाहि, जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्रतिपादकस्य पूर्वकाण्डस्य समन्वयमाह, अवान्तरवाक्यानां प्रकारशेषत्वात्, नच सर्वस्मिन् वेदे धर्म एव जिज्ञास्यः, तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्, सन्देहमात्र-

---

तत्र ब्रह्मोपादानकत्वरूपं ब्रह्मकार्यत्वमिति नियमाङ्गीकारे अलीकप्रतीतस्वाप्निकरथरथयोगपथादौ मायाकार्येऽस्तित्वप्रियत्वयोः सत्त्वात्तत्र ब्रह्मोपादानकत्वरूपब्रह्मकार्यत्वस्यासत्त्वाद्व्यभिचार इत्यत आहु अलीकेत्यादि, सम्यगित्यादि जागरणोत्तरं तत्रास्तित्वादिप्रतीतेर्बाधात् अबाधितान्वयाभावादित्यर्थ, न कार्यत्वेत्यादि तथा च तत्रास्तित्वरूपहेतोरेवाभावात् ब्रह्मकार्यत्वमपि न ब्रह्मकार्यत्वस्यास्तित्वे व्यभिचारोपि नेत्यर्थः, ब्रह्मणः समवायिकारणत्वं निगमयन्ति तस्मादित्यादि, निमित्तत्वं ब्रह्मण कार्यमात्र प्रति निमित्तकारणत्वमित्यर्थः ।

स्वोक्तसिद्धान्तं दृढीकर्तुं मतान्तरव्याख्यानान्यनूद्य दूषयितुमाहुः केचिदित्यादि समन्वयसूत्रं वक्तव्यमित्यन्तेन ग्रन्थेन, प्रथमसूत्रे ब्रह्मजिज्ञासाप्रतिज्ञाकरणे किं ब्रह्मपदवाच्यमिति जिज्ञासोत्पत्तौ जातायां जन्मादिसूत्रेण ब्रह्मलक्षणमुक्त्वा ब्रह्मणि सर्वज्ञत्वसर्वशक्तिमत्त्वयोः समर्थनं कृत, एतद्द्वयदृढीकरणार्थमेव पुनः शास्त्रयोनित्वादित्युक्तवान् सूत्रकारः, शास्त्रस्य वेदरूपस्य योनित्वात् कारणत्वादित्यर्थः, शास्त्रे वेदे प्रतिपादकतासम्बन्धेन योनित्व कारणत्वं वा यस्येत्यर्थः, शास्त्रोक्तसर्वकारणतावदिति सिद्धं, एतच्चोक्त सर्वं तदा सिद्ध्येद्यदि क्रियाप्रतिपादकभिन्नानां सिद्धार्थानां वेदान्तवाक्यानां स्वार्थे प्रामाण्य स्यात्, तदेव तु न, तेषां क्रियाप्रतिपादकत्वाभावात्, तस्मात्पूर्वकाण्डे क्रियार्थानां कर्मसम्बन्धप्राशस्त्यकर्तृदेवतादिप्रकाशनद्वारा विधिना एकवाक्यतया प्रामाण्य यथोरीकृतं तथा सिद्धार्थानां वेदान्तवाक्यानामपि कर्मसम्बन्धकर्तृदेवतादिप्रकाशनद्वारा क्रियावाक्यैकवाक्यतयैव प्रामाण्य उपासनाविध्येकवाक्यतया प्रामाण्यं न तु स्वातन्त्र्येण स्वार्थेपि प्रामाण्य, इत्थं च 'यतो वा इमानी'त्यादिशास्त्रोक्तकारणत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वयोरसिद्ध्या शास्त्रयोनित्वादित्यत्रोपष्टम्भको हेतुरसिद्ध इति पूर्वपक्षे प्राप्ते मतान्तरीयाणां समाधानसूत्रं तत्तु समन्वयादिति, तेषां मते सूत्रार्थस्तु तत्तु ब्रह्मणो वेदान्तोक्तकारणत्वन्तु समन्वयात् सिद्धार्थे योग्यत्वेन सम्यगन्वयात् 'तरति शोकमात्मवित्' 'ज्ञानादेव हि कैवल्य' 'ब्रह्मैव सन् ब्रह्माप्येती'त्यादौ ब्रह्मणो वेदान्तैकसमधिगम्यत्वेन तत्प्रापकसाधनफलादिप्रतिपादकतया पुरुषार्थपर्यवसानेन वेदान्तानां स्वार्थे प्रामाण्याभ्युपगमान्न क्रियावाक्याकाङ्क्षा तेषां प्रामाण्यार्थमिति समाधानमाहुः ।

तद्दूषयन्ति तत्पूर्वपक्षेत्यादिना वाद्युक्त पूर्वपक्षसिद्धान्तनिर्वचनं, उपेक्षाबीजमाहुः तथाहीत्यादि, धर्मजिज्ञासामेवेत्येवकारेण ब्रह्मजिज्ञासानिराकरणमुक्त, तत् यज्ञादिरूप कर्म, तथा 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानामिति सूत्रात्कर्मप्रतिपादकस्य पूर्वकाण्डस्य प्रयोगविधिशेषतया सर्वेषां पूर्वकाण्डीयवाक्यानां कर्मणि समन्वयमाहेत्यर्थः, कथं प्रयोगविधिशेषतया सर्वेषा कर्मणि समन्वय इत्यत आहुः अवान्तरेत्यादि, अवान्तरवाक्यानां मन्त्रार्थवादरूपवाक्यानामित्यर्थः, प्रकारशेषत्वात् यज्ञसाधकसाधनसमुदायमध्यपातादित्यर्थः, तथा च पूर्वकाण्डीयवाक्यानां धर्मे समन्वयप्रतिपादनेनैव धर्मजिज्ञासायाः विषयसिद्धेर्दर्शनान्नाप्राकरणिकवेदान्तवाक्यानां सिद्धार्थप्रतिपादनोपक्षीणानां धर्मे समन्वयाकाङ्क्षागन्धोपीतिभावः, नन्वाम्नायस्य क्रियार्थत्वात्सर्वस्मिन्नेव वेदे धर्मः चारणीय इत्यत आहुः नचेत्यादि, सर्वस्मिन् उत्तरकाण्डेपि, धर्म एवेति एवकारेण ब्रह्मविचारनिरासः, नचेत्यत्र हेतु. तद्गुरुणेत्यादि तथा च शिष्यस्य कदाचिद्भ्रमोपि सम्भाव्येत नतु तादृशसर्वज्ञगुरोरिति तादृशेन व्यासेन ब्रह्मविचारप्रतिज्ञायाः पृथक्कृतत्वादुत्तरकाण्डस्य ब्रह्मण्येव समन्वयो नतु कर्मणि, उत्तरकाण्डस्यापि कर्मणि समन्वयाङ्गीकारे तु व्यासीयपृथग्जिज्ञासाप्रतिज्ञाया वैयर्थ्यमेव भवेदितिभाव., ननु प्रोक्षणादिसंस्कारसंस्कृतव्रीहीणामिव जिज्ञासापदवाच्यविचारसंस्कृतानां वेदानामलौकिकार्थसाधकत्वमिति संस्कारार्थमेव वेदान्तानां व्यासजिज्ञासा जैमिनिजिज्ञासायाः पूर्वकाण्डसंस्कारार्थत्वादित्यत आहुः सन्देहमात्रेति,

वारकत्वाज्जिज्ञासयोः, न त्वलौकिकार्थसाधकत्वं, तथा सति वेदानामन्याधीनत्वेनाप्रामाण्यं स्यात्, वेदजिज्ञासेत्येवोक्तं स्यात् ।

किञ्च,

साधनञ्च फलञ्चैव सर्वस्याह श्रुतिः स्फुटम् ।
न प्रवर्तयितुं शक्या तथा चेन्नरको न हि ॥
प्रवर्तकस्तु सर्वत्र सर्वात्मा हरिरेव हि ।
यज्ञ एव हि पूर्वत्र बोध्यते स्वर्गसिद्धये ॥
सिद्ध एव हि सर्वत्र वेदार्थो वेदवादिनाम् ।
मन्त्राणां कर्मणाञ्चैव दर्शनश्रवणाच्छ्रुतौ ॥
कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थे च सन्मतः ॥

'प्रजापतिरकामयत प्रजायेयेति स एतदग्निहोत्रं मिथुनमपश्यत् प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमं च पौर्णमासीं चोकृथ्यञ्चामावास्याञ्चातिरात्रञ्च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोम' इत्यादि, न ह्युपाख्यानानां मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा,

---

तथा च पूर्वोत्तरजिज्ञासाद्वयस्यापि वेदार्थसन्देहनिरसनमेव प्रयोजन नतु वेदसस्कारसम्पादनमपि, इदमेवाहुः नत्वित्यादिना, **अलौकिकार्थसाधकत्वं** वेदस्यालौकिकार्थसाधकत्वोपयोगिसस्कारसम्पादकत्वमित्यर्थः, **तथा सति** वेदानां सस्काराधीनतया लौकिकार्थबोधकत्वाङ्गीकारे सति, **अन्याधीनत्वेन** संस्काराधीनप्रमाजनकत्वेन, **अप्रामाण्यं** इतरानधीनप्रमापकत्वरूपानधिगतार्थगन्तृत्वरूपं प्रामाण्यं वेदानां न स्यादिति भावः, जिज्ञासाद्वयस्यापि संस्कारार्थत्वे दूषणमाहुः वेदेत्यादिना, तथा च व्रीह्यादिषु सकृत्सस्कारस्य यथा लौकिकार्थसिद्ध्युपयोगित्वं तथाथातो वेदजिज्ञासेत्येकजिज्ञासयैव पूर्वोत्तरकाण्डयोरलौकिकार्थसाधनोपयोगिसंस्कारसम्भवेन जिज्ञासाद्वयकृतेर्वैयर्थ्यादिति भावः, अथ प्रवर्तकविधिवाक्यानामेव प्रवर्तकत्वं पुरुषार्थोपयोगित्वं प्रमापकत्वं च तदितरवाक्यानां च तदेकवाक्यतयोक्तार्थेषूपयोगित्वमितिसिद्धान्तात्कथं सिद्धार्थप्रतिपादकवेदान्तवाक्यानां स्वातन्त्र्येण प्रामाण्यमित्येतद्दूषयन्ति **किञ्चे**त्यादिना **साधनं** चेत्यादि, **सर्वस्य** पूर्वकाण्डे कर्मणः उत्तरकाण्डे ज्ञानस्येत्यर्थः तथा चेष्टसाधनताधीसाध्या प्रवृत्तिः फलं च सर्वत्रैवोपपन्नं न कोपि विधेर्विशेषः इत्यर्थः, ननु विधे. प्रवर्तकत्वमेव विशेष इत्यत आहुः **न प्रवर्तयितुमिति, तथा चेत्** 'न निषिद्धमाचरे'दित्यादिविधीनां प्रवर्तकत्वे, ननु विधेरप्रवर्तकत्वे कः प्रवर्तक इत्यत आहु. **प्रवर्तकस्त्वि**त्यादि, ननु हरेः प्रवर्तकत्वे वैषम्यनैर्घृण्ये स्यातामत आहु. **सर्वात्मे**ति, **पूर्वत्र** पूर्वकाण्डे, **सिद्ध एवे**ति, तथा च 'यज्ञो वै विष्णु'रितिश्रुतेर्यज्ञस्यैव सिद्धत्व, का कथेतरेषां? नन्वेवं चेदर्थवादानां प्राशस्त्यज्ञानसम्पादनद्वारा प्रवर्तकत्वव्याघात इति चेन्न अर्थवादैः सिद्धार्थैर्यादृशं यस्य स्वरूपमुक्तं तादृक् तत्स्वरूपज्ञानपूर्वककर्मकरणे एव फलं नान्यथेति स्वरूपबोधने एवार्थवादानामुपयोगात् यथा 'वषट्कारो वै गायत्र्यै शिरोच्छिनत्तस्यै रस. परापतत् स पृथिवीं प्राविशत् स खदिरोभवदित्याद्युक्तखदिरस्वरूपज्ञानपूर्वकं यूपनिर्माणेन पशुनियोजनाद्यनुष्ठाने एव यज्ञात् फलमित्येव नियमात्, सिद्धत्वमेवोपपादयन्ति **मन्त्राणामि**त्यादिना मन्त्राणां दर्शनं 'स एतं कसर्णीर.काद्रवेयो मन्त्रमपश्यत् एतं दीक्षितवादमपश्यत्' इत्यादौ बोध्य, तथा च प्रजापतेरग्निहोत्रादिकर्मणां मन्त्राणां च श्रुतौ दर्शनं श्रूयते निरूप्यं चाग्रेत. सिद्धत्वमुक्तमन्यथा प्रजापतेर्दर्शनोक्तिरनुपपन्नैव स्यादितिभाव', ननु यज्ञादिकर्मणां सिद्धत्वे विधिवाक्यैर्यज्ञादौ प्रवृत्तिरनुपपन्ना स्यादत आहुः **कृतिश्चे**ति तथा च यथा ध्यानादिक्रियया भगवत्प्राकट्य तथाध्यानादिक्रियया यज्ञात्मनो भगवतः प्राकट्यमिति न क्रियागोचरकृतिवैयर्थ्यमिति भावः, **सिद्धतुल्यत्वं** सिद्धघटादितुल्यत्व यज्ञस्य कृतिः सम्पादयतीत्यर्थः, निर्गलितसिद्धान्तमाहु' **वेद** इति, **स्वार्थे** वेदघटकतत्तत्पदवाच्येर्थे, **सन्मतः** सतां दैत्यावेशरहितानां **मतः** प्रमाणत्वेन सम्मत इत्यर्थः, कर्मणां दर्शनप्रतिपादकान्याख्यानानि प्रदर्शयन्ति **प्रजापतिरि**त्यादिना, ननु सिद्धार्थप्रतिपादकतया पूर्वकाण्डार्थविरुद्धतयोपाख्यानानां मिथ्यार्थप्रतिपादकत्वेन मिथ्यार्थत्वमेवास्तामतो न वेदस्य सिद्धार्थत्वसिद्धिरत आहुर्नहीत्यादि, ननु बुद्धावतारेण भगवतैव वेदार्थस्य मिथ्यात्वमुक्तमत आहुः **बुद्धे**त्यादि, **पुरोक्तं** भगवदतिरिक्तेन केनापि पूर्वं वेदार्थमिथ्यात्वं नोक्तमितिभावः, ननु 'यद्यदाचरति श्रेष्ठ' इतिवाक्यादस्माभिरपि तथोच्यते इत्यत आहुः **युक्तं वे**ति तथा च शिवे गरलस्य

---

१ शक्येत्यपिपाठः २ सम्मत इत्यपि पाठः ।

तथा सति वेदानामप्रामाण्यमेव स्यात्, मिथ्योपाख्यानप्रतिपादकलोकवत्, तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खा एव ।

उत्तरवादिनोपि पूर्वाज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति उपनिषज्ज्ञानस्य श्रुतिसिद्धैव कारणता, नच बाधितत्वात् त्यज्यत इति वाच्यं, ब्रह्मात्मज्ञानवत एव वसिष्ठादेर्यज्ञाधिकारात्, नचैवं किमनेनेति वाच्यं, इत्थम्भूतत्वात् यज्ञस्य, किञ्च, कर्मफलवत् ब्रह्मफलस्यापि लौकिकत्वात्, 'य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्येति' अत्यन्ताविद्यावतो यज्ञानधिकारात्तन्निषेधार्थं ज्ञानमुपयुज्यते, नच देहाध्यासस्य कारणत्वं, 'ब्रह्मार्पणं ब्रह्महवि'रित्यादिस्मृतेः ।

तस्मादन्योन्योपयोगित्वे न कोपि दोषः, क्रियाज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतथा शास्त्रप्रवृत्तिः ।

किञ्च, वेदान्तवाक्यानामस्मिन् शास्त्रे समन्वय एव प्रतिपाद्यते सन्देहनिराकरणद्वारा,

---

ग्रीवाभूषणत्ववत् आसुरव्यामोहाय भगवतस्तथावचनमपि भूषणमेव पुण्यपापफलभोक्तृत्वाभावात् जीवाना तु तथाचरणे उभयलोकनाश एव स्यादिति भावः, **तथा सति** एकांशेपि वेदाना मिथ्यार्थत्वे वक्तव्ये सति, **वेदानां** वेदत्वावच्छेदेन वेदानां, **लोकवत्** कदाचिन्मिथ्यावक्तृत्वेन लोकैः प्रतीत. कश्चित्सर्वदा मिथ्यावाद्येवायमिति तदुक्तौ न कोपि प्रामाण्यमुरीकरोति तथा भगवदुक्तवेदेष्येकत्राप्रामाण्यनिश्चये सर्वत्रैव तथा स्यादित्यर्थः, सिद्धान्तमुपसंहरन्ति **तस्मा**दित्यादिना, **पूर्वमीमांसानभिज्ञाः** व्यासशिष्यतत्त्वविज्जैमिनितात्पर्यानभिज्ञाः, **क्रियापरत्वं** कर्मविधायकवाक्यैर्यथाकथञ्चिदेकवाक्यतया सर्वस्य वेदस्य प्रामाण्यम् ।

**उत्तरवादिन** इति ब्रह्मकाण्डे वादिन एव न तु तत्त्वविद इत्यर्थः, **पूर्वाज्ञान**मिति कर्मस्वरूपाज्ञानमङ्गीकृत्येत्यर्थः, **पूर्वानु**पेत्यादि कर्मानुपयोगित्वमित्यर्थः, **वेदानभिज्ञा** इति ते हि न केवलमुत्तरकाण्डार्थानभिज्ञाः किन्तु सर्वस्यैव वेदस्यानभिज्ञा इत्यर्थः, वेदार्थाज्ञाने हेतुमाहुः **यदे**वेत्यादिना, **कारणता** कर्मानुष्ठाने कारणता, **बाधितत्वात्** ब्रह्मज्ञानवतां देहाद्यध्यासाभावेन कर्मानुष्ठानस्य बाधितत्वात्, **त्यज्यते** कर्माधिकारित्वं ब्रह्मज्ञेषु नोरीक्रियते इत्यर्थः, **न च वाच्य**मित्युक्तं तत्र हेतुमाहु. **ब्रह्मात्मे**त्यादि, **ब्रह्मात्मज्ञानवतः** स्वात्मनि ब्रह्माभेदज्ञानवतः, **न चे**त्यादि **किमनेन** मोक्षफलकसिद्धब्रह्मात्मज्ञानवतो यज्ञादिकरणेन किं फले आधिक्यमित्यर्थः, तत्र हेतुमाहुः **इत्थ**मित्यादि **यज्ञस्य इत्थम्भूतत्वात्** 'सर्वापेक्षा च यज्ञादिश्रुते'रितिसूत्रात्फलप्रतिबन्धकयज्ञादिकरणप्रारब्धसमापनद्वारा यज्ञादेरपि मोक्षाधिकारसम्पादकत्वेन व्यासाभिप्रेतत्वादित्यर्थ., ननु मुमुक्षूणां यज्ञा नावश्यकाः कर्मफलस्य मनुष्यादिब्रह्मान्तेषु लौकिकस्यैव परमानन्दात्मकस्य श्रवणात् इत्यत आहु. **किञ्च कर्मे**त्यादि, **ब्रह्मफलस्य** ब्रह्मज्ञानफलस्य, **अत्यन्ते**त्यादि अत्यन्ताविद्यावतो देहस्यैवात्मत्वेन निर्णयात् यज्ञादिफलस्य च देहोत्तरकालीनत्वेन श्रवणात्कस्य फलं भविष्यतीति बुद्ध्या तादृशस्य यज्ञादावुपेक्षासम्भवेनानधिकारादित्यर्थ', **तन्निषेधार्थं** अत्यन्ताविद्यावतो यज्ञाद्यधिकारनिषेधार्थं, **कारणत्वं** यज्ञादौ कारणत्व, **ब्रह्मार्पण**मित्यादि, तथा च कर्तृकर्मादिसर्वस्मिन्नुपस्करे ब्रह्मत्वेन ज्ञानादेव ब्रह्मात्मफलस्योक्तत्वात् नाध्यासस्य कर्मणि तत्फले वा कारणतेतिभावः ।

सिद्धान्तमुपसहरन्ति **तस्मा**दिति तथा च ब्रह्मज्ञानस्य देहात्ममतिनिरासकतया यज्ञादौ यज्ञानां चान्तःकरणशुद्धिद्वारा प्रारब्धसमापनद्वारा वा ब्रह्मविद्यायामुपयोगे न कोपि दोष इति फलितं, नन्वेवं पूर्वोत्तरकाण्डयोरेकैकेन फले सम्पादनीये तदन्यस्य सहकारिकारणताकल्पने एकशास्त्रत्वमेव स्यान्न तु पूर्वोत्तरमीमांसेतिशास्त्रद्वयमित्यत आहुः **क्रिये**त्यादि, **स्वातन्त्र्येणे**ति निष्कामकर्मानुष्ठानेन मोक्षः सकामस्य च त्रिवर्ग एव फलं निष्कामज्ञानिनो मोक्षः सकामस्य तु प्रजापश्वादिरूपमेव फलमिति तत्र काम्यफले परस्परस्योपयोगाभावो यतोतः स्वातन्त्र्येणेत्यर्थ., **पुरुषार्थसिद्ध्यर्थं** त्रैवर्गिकपुरुषार्थसिद्ध्यर्थं, इत्थं च तादृशफले उभयोः स्वातन्त्र्यान्नैकशास्त्रतागन्धोपीतिभाव. ।

एवं पूर्वोक्तग्रन्थेनेतरेषां वेदानभिज्ञत्वं प्रतिपाद्य सूत्रार्थानभिज्ञत्वं प्रदर्शयितुमाहुः **किञ्च वेदान्ते**त्यादि अत्र शङ्कराचार्यैः सर्वज्ञसर्वशक्तिमदुत्पत्त्यादित्रितयकर्तृ ब्रह्मेति वेदान्तैरवगम्यते इति प्रतिज्ञाय समन्वयादितिहेतुस्तत्रोक्तः समन्वयश्च सर्ववेदान्तवाक्यानां तात्पर्यकल्पनया सृष्ट्यादिकर्तृत्वलाभेन, तत्र ब्रह्मपक्षकं सृष्ट्यादित्रितयकर्तृत्वसाध्यकं

तत्कथं सिद्धत्वेन हेतुर्निर्दिष्टः? अग्रिमवैयर्थ्यं च स्यात्, नच प्रतिज्ञागर्भितहेतुत्वं, अनुपयोगात्, गौणमुख्यभावे परं विवादः, नच येन रूपेण समन्वयो मतान्तरस्थैर्विचारितः तथाग्रे सूत्रेषु निर्णयोस्ति, शास्त्रारम्भस्तु प्रथमसूत्र एव समर्थितः, तस्मात् समवायिकारणत्वमेवानेन सूत्रेण सिद्धम् ।

ननु कारणत्वमेवास्तु ब्रह्मणः, किं समवायिकारणत्वेन? विकृतत्वश्च स्यात्, अनर्थरूपत्वेन कार्यस्यायुक्तता च, तस्मादनारम्भणीयमेवैतत्सूत्रमिति चेत्,

मैवं, सर्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः, तद्यदि ब्रह्मणः समवायित्वं न ब्रूयात् भूयानुपनिषद्भागो व्यर्थः स्यात्, 'इदं सर्वं यदयमात्मा' 'आत्मैवेदं सर्वं' 'स सर्वं भवति' 'ब्रह्म तं परादा'दित्यादि 'स आत्मानं स्वयमकुरुत' 'एकमेवाद्वितीयं 'वाचारम्भणं विकार' इत्यादि, एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः ।

नानावेदान्तवाक्यसमन्वयहेतुकमनुमानं केवलव्यतिरेकि तेषामभिमतं, एवं मतान्तरेपि रामानुजादीनां बोध्यं, इदं च तेषां निरूपणं, पूर्वमीमांसकैः सर्ववेदान्तवाक्यानां कर्मविध्यपेक्षितब्रह्मस्वरूपदेवतासमर्पकत्वेन कर्मविध्येकवाक्यतया प्रामाण्यमुपासनादिविधिशेषतया वा प्रामाण्यमिति पूर्वपक्षितं तत्समाधानाय समन्वयादिति हेतुरुपन्यस्तः, सोनुचिततर इति सूत्राज्ञानं बोद्धव्यं, अनौचित्यमेवोपपादयन्ति अस्मिन्नित्यादिना, व्याससूत्ररूपे शास्त्रे, समन्वय एव कर्तृत्वभोक्तृत्वप्रतिपादकवेदान्तानां ब्रह्मणि समन्वय एव, सन्देहेति उक्तार्थानां ब्रह्मणि सन्देहनिरासायेत्यर्थः, तत्कथमित्यादि तथा च ब्रह्मणि विरुद्धार्थप्रतिपादकत्वेन प्रतीयमानसकलवेदान्तानां समन्वयनिश्चयार्थमेव व्यासशास्त्रस्य प्रवृत्तिरिति सन्दिग्धः समन्वयः कथं सिद्धत्वेन निश्चयविषयत्वेन निर्दिष्टः वादिनं प्रति पूर्वपक्षनिरासकत्वेन प्रयुक्त इत्यर्थः, दूषणान्तरमाहु अग्रिमेत्यादि आदावेव समन्वयनिर्णये समन्वयनिर्णयार्थं वक्ष्यमाणाग्रिमशास्त्रस्य वैफल्य स्यादित्यर्थः, नन्वग्रे करिष्यमाणग्रन्थं बुद्धिस्थीकृत्यायं ग्रन्थो मया क्रियते इतिवदग्रे समन्वयं साधयिष्ये इति मनसा प्रतिज्ञाय समन्वयादिति हेतुरुपन्यस्त इत्यत आहुः न च प्रतीत्यादि, प्रतिज्ञागर्भितः अग्रे समन्वयं साधयिष्ये इतिप्रतिज्ञाकर्मीभूत', अनुपयोगादिति तथा च मीमांसकैः कर्मविध्यपेक्षितकर्मसम्बन्धिब्रह्मरूपदेवताप्रकाशकत्वेन वेदान्तानां कर्मविध्येकवाक्यतया प्रामाण्यं स्वीक्रियते तत्र तन्मतं दूषयित्वा स्वातन्त्र्येण ब्रह्मणि वेदान्तानां प्रामाण्यं व्यवस्थापयितुमेष हेतुर्भवद्भिरुद्भावनीयः स चासिद्धो वादिविजयाहेतुरित्यनुपयोगादित्यर्थः, तन्मतदूषणार्थं व्यासानां समन्वयरूपहेतुसाधनमित्यप्यप्रयोजकमित्याहुः गौणेत्यादि तथा च वेदान्तानां ब्रह्मणि समन्वयस्तैरपि स्वीक्रियत एव परं कर्मविधिशेषतया न तु स्वातन्त्र्येणेति तादृशसमन्वयसाधनमपि न व्यासाभिप्रेतमित्यपि दूषणं बोध्यमित्यर्थः, मायावाद्यभिमतसमन्वयस्वरूपं दूषयितुमाहुः न च येनेत्यादि तथा च सर्वविशेषशून्ये निर्धर्मके ब्रह्मणि अध्यारोपापवादाभ्यां सर्ववेदान्तानां समन्वयो भवदभिमतः स च न व्यासविचारगोचरोग्रे 'ईक्षतेर्नाशब्द'मित्यारभ्यासमाप्ति सधर्मके ब्रह्मण्येव वेदान्तानां समन्वयस्य व्यासविचारगोचरत्वादित्यर्थः, ननूपादानाभिन्ननिमित्तकारणं ब्रह्मेतिवादिनां सर्वेषामेव मते 'जन्माद्यस्य यतः शास्त्रयोनित्वात् तत्तु समन्वया'दितिसूत्रद्वयेनैव सर्वज्ञत्वसर्वशक्तिमत्त्वजगदुपादानत्वनिमित्तकारणत्वानां ब्रह्मणि सिद्धेरग्रेतनवेदान्तारम्भवैयर्थ्यं सूत्रद्वयेनैव सर्ववेदान्तसिद्धान्तस्य निश्चयादित्यत आहुः शास्त्रारम्भेत्यादि, तथा च यत्रयत्र विरुद्धवादिसम्पादितो वेदान्तानां ब्रह्मणि समन्वये सन्देहस्तत्र सर्वत्र सन्देहनिरासार्थं सकलव्यासशास्त्रस्योपयोग इति प्रथमसूत्रविचारे एवास्माभिः समर्थितमिति न वैयर्थ्यशङ्कालेशोपीतिभावः, सिद्धान्तमुपसंहरन्ति तस्मादित्यादिना, तस्मात् सर्वज्ञत्वसर्वशक्तिमत्त्वयोर्ब्रह्मणि जगत्कारणत्वस्य च वेदसिद्धत्वं तत्र हेतुत्वेन समन्वयादित्यस्योपन्यासः कृतस्तस्य पूर्वोक्तरीत्या दूषितत्वादित्यर्थः, अनेन सूत्रेण 'तत्तुसमन्वयादि'तिसूत्रेणेत्यर्थः ।

वादी शङ्कते नन्वित्यादि, किमित्यादि समवायिकारणत्वे ब्रह्मणो न कोप्युत्कर्षः सिध्यतीत्यर्थ., विकृतत्वमिति यत्परिणामि तद्विकृतमितिव्याप्तेरित्यर्थः कपालं दृष्टान्तः, दूषणान्तरमाह अनर्थेत्यादि, ब्रह्मणः समवायिकारणत्वे समवायिकारणस्य च कार्यरूपतेतिसिद्धान्तात् ब्रह्मण. कार्यतापत्तिरूपानर्थत्वापत्तेरित्यर्थः, पूर्वपक्षमुपसंहरति तस्मादिति, अनारम्भणीयं समवायिकारणताप्रतिपादनाय नारम्भणीयमित्यर्थः,

सिद्धान्तमाहुः मैवमिति, समवायित्वं उपनिषत्सिद्धं समवायित्वम् ।

---

१ सिद्धवद्धेतुत्वेन निर्देश इत्यपि पाठ· ।

**नन्वेवं निःसन्दिग्धत्वात् कथं सूत्रप्रवृत्तिः ?**

**उच्यते, अस्थूलादिवाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि, ततोन्योन्यविरोधे नैकस्य मुख्यार्थबाधो वक्तव्यः, तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव कश्चित् कल्पयेत्, तन्माभूदिति जन्मादिसूत्रवत् समन्वयसूत्रमपि सूत्रितवान्, तथा च अस्थूलादिगुणयुक्त एव अविक्रियमाण एव आत्मानं करोतीति वेदान्तार्थः सङ्गतो भवति, विरुद्धसर्वधर्माश्रयत्वन्तु ब्रह्मणो भूषणाय।**

**किञ्च, अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्यातां, कर्माधीनत्वे त्वनीशिता, ततः कर्तृत्वमपि भज्येत, ततः सर्वमाहात्म्यनाश एव स्यात्।**

**नन्वेवमेवास्तु अपदार्थत्वात्[1] रज्जुसर्पवदयुक्तार्थकथनेपि न दोषः, 'सर्वं समाप्नोषि ततोसि सर्वं'[2] मिति स्मृतेश्चेति चेत्,**

**मैवं, तथा सति पाषण्डित्वं स्यात्, एतादृशशास्त्रार्थाङ्गीकर्तुरासुरेषु भगवता गणितत्वात्, 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरमपरस्परसम्भूतं किमन्यत् कामहैतुक'मिति शास्त्रानर्थ-**

---

ननु ब्रह्मणः समवायिकारणतायाः श्रुतिसिद्धत्वे सन्देहाभावाद्व्याससूत्रप्रवृत्तिस्तत्रापार्थेत्यत आहुः **नन्वेवमित्यादि** ।

**उच्यते** समवायिकारणतानिश्चयार्थं सूत्रप्रवृत्तेरावश्यकत्वमुच्यते इत्यर्थः, **अन्योन्येत्यादि** सधर्मकनिर्धर्मकप्रतिपादकवाक्यानां परस्परविरोधेनेत्यर्थः, **मुख्यार्थः** शक्यार्थः, तत्र सधर्मकनिर्धर्मकब्रह्मप्रतिपादकवाक्यानामन्यतरस्य मुख्यार्थबाधकल्पनायां, **स्वरूपापेक्षया** 'निष्कल शान्त'मित्यादिवाक्यप्रतिपाद्यापेक्षया, **कार्यस्य** 'स एतावानास ऐतदात्म्यमिदं सर्वं स आत्मान ४ स्वयमकुरुते'त्यादिवाक्यप्रतिपाद्यस्य लोकानां कार्यत्वेनाभिमतस्य, **गौणत्वात्** वादिनो गौणत्वाभिमानात्, **प्रपञ्चरूपेति** प्रपञ्चात्मकब्रह्मरूपेत्यादि, **कल्पयेत्** मुख्यार्थबाध कल्पयेत्, **तत्** कार्यब्रह्मप्रतिपादकानां मुख्यार्थबाधनं, **जन्मादीत्यादि**, तथा च प्रकृत्यादीनां कारणतानिरासार्थं ब्रह्मणः कारणताव्यवस्थापनाय यथा जन्मादिसूत्रं तथा ब्रह्मण. समवायिकारणताव्यवस्थापनाय समन्वयसूत्रमित्यर्थः, फलितार्थमाहुः **तथाचेत्यादि, वेदान्तार्थः** 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्यर्थः, ननु प्रपञ्चतद्धर्मवैलक्षण्य प्रपञ्चतद्धर्मरूपत्वं च ब्रह्मणो विरुद्धमत आहुः **विरुद्धेत्यादि, भूषणाय** नहि एतादृशोन्य. कश्चित्सम्भवति इति ब्रह्मण एवासाधारणधर्मत्वाद्भूषणायेत्यर्थः ।

अविकृतस्यैव समवायिकारणत्वे उपष्टम्भकमाहुः **किञ्चेत्यादि, अन्येत्यादि** ब्रह्मातिरिक्तपदार्थस्य ब्रह्मणःसृष्टिकरणे, **वैषम्येत्यादि** सृष्टानां जीवानां दुःखादिकारणेन वैषम्यनैर्घृण्ये स्यातामित्यर्थ·, ननु शुभाशुभकर्माधीन एव परमात्मा जीवानां सुखदुःखे प्रयच्छति न त्वनधीन इति नोक्तदोष इत्यत आहुः **कर्मेत्यादि, अनीशिता** स्वतःसामर्थ्याभावः, **ततः** अस्वातन्त्र्यात्, **भज्येत** 'स्वतन्त्रः कर्ते'ति तल्लक्षणादस्वातन्त्र्ये भज्येतेत्यर्थः, **ततः** कर्तृत्वभङ्गतः, **सर्वमाहात्म्येत्यादि** कर्तृत्वान्यथानुपपत्त्या कल्प्यमानं सर्वज्ञत्वसर्वशक्तिमत्त्वमपि भज्येतेत्यर्थः ।

ननु निष्कलं शान्तमित्यादिवाक्यप्रतिपाद्ये ब्रह्मणि कर्तृत्वादिधर्मशून्यत्वमेव माहात्म्यमित्थं चोक्तधर्मरूपमाहात्म्यनाशे इष्टापत्तिरिति आहुः **नन्वेवमित्यादि, एवमेव** शुद्धस्य परब्रह्मणः कर्तृत्वादिधर्मशून्यत्वमेवास्त्वित्यर्थ., ननु ब्रह्मणोऽकर्तृत्वेतिरिक्तस्य च कर्तुरभावे प्रपञ्चो न भवेदत आहु· **अपदार्थेत्यादि**, तथा च नावस्तुनः खपुष्पादेः कर्त्राकाङ्क्षास्तीतिभावः, नन्ववस्तुत्वे प्रपञ्चस्य वस्तुत्वेन प्रतीतिर्न स्यादत आहुः **रज्जुसर्पेत्यादीति**, तथा चावस्तुत्वेपि विशेषादर्शनदशायां दोषबलाद्यथा रज्जुसर्पज्ञान तथाऽविद्यादोषबलात्सर्वस्य मिथ्यात्वज्ञानरूपविशेषदर्शनाभावकाले प्रपञ्चस्यापि वस्तुत्वेन भानं नानुपपन्नमित्यर्थः, मिथ्यावादी समाधानान्तरमाह **सर्वमित्यादि** तथा च '**सर्वं समाप्नोषी**'ति सर्वं जगद्व्याप्नोषि, '**ततः**' हेतो· '**सर्वमसि**' सर्वपदवाच्योसीत्यर्थः, इत्थं च 'अथेदं सर्वं यदयमात्मे'त्यादिश्रुतिः 'ऐतदात्म्यमिदं सर्वं तत्सत्य स आत्मे'त्यादिरूपा च या श्रुतिः सा ब्रह्मणो व्यापकत्वेन सर्वस्मिन् मिथ्याभूते जगति ब्रह्मगतस्य सत्यत्वाद्यारोपेण ब्रह्मत्वं वदति नतु जगत्समवायिकारणत्वेनेतिस्मृतितात्पर्यं वाद्यभिमतं,

तद्दूषयन्ति **मैवमित्यादिना, पाषण्डित्वमिति** पापलिङ्गित्व स्यादित्यर्थः, एतदेवोपपादयन्ति **एतादृशेत्यादि** असति बाधे वेदस्य मुख्यार्थबाधकर्तुः, आसुरत्वरूपफलेन तेषां पाषण्डित्व द्रढयन्ति **आसुरेष्वित्यादिना**, तदेवोपपादयन्ति **असत्यमित्यादिना, असत्यं** मिथ्याभूत, **अप्रतिष्ठं** अकाल्पनिकधर्माधर्मतद्व्यवस्थापकप्रमाणशून्य, **अनीश्वरं** अकाल्पनिकेश्वरशून्यं, **अपरस्परसम्भूतं** सर्वस्य कारणकार्यत्वाभिमतस्य मिथ्यात्वात् स्त्रीपुरुषादिरूपकारणजन्यमित्यर्थः, तथा

---

१ अपवादार्थत्वादित्यपि पाठ.. २. 'सर्वं'इतीत्यपि पाठ .

कथञ्च, 'सर्वं समाप्नोषी'त्यप्यसङ्गतं स्यात्, वस्तुपरिच्छेदात्, नहि वेदो निःप्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति, तस्मादध्यारोपापवादपरत्वेन व्याख्यातृभिर्वेदान्तास्तिलापः कृता इति मन्यामहे, सर्ववाक्यार्थबाधात्, यथा निर्दोषपूर्णगुणविग्रहता भवति तथोपरिष्टाद्वक्ष्यामः ।

ननु पुरुषार्थार्थानि शास्त्राणि, इदञ्च शास्त्रं मोक्षरूपपुरुषार्थसाधकं, मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तं, अविद्या चाज्ञानं ज्ञानेनैव नश्यति, ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तं, अतो यथाकथञ्चिद्व्याख्यानेपि पुरुषार्थसिद्धेर्न कोपि दोष इति चेत्,

न, पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं, न स्वबुद्धिपरिकल्पितं, अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः, पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परं' 'न स पुनरावर्त्तते' 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं' 'अनावृत्तिः शब्दादनावृत्तिः शब्दादि'त्येवमादिभिः श्रुतिस्मृतिन्यायैः ब्रह्मप्राप्तेरेव पुरुषार्थत्वं, ब्रह्म च पुनर्न जीवस्यात्ममात्रमज्ञानबद्धा, 'एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोस्याविद्ययानादिर्विद्यया च तथेतर' इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् ।

तस्मात् न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवत् ब्रह्म, तस्य श्रवणमनननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे चित्ते स्वयमेवाविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः, तस्मात् सर्वे वेदान्ताः स्वार्थ एव युक्तार्था इति न्यायैर्वक्तव्यत्वात् ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम् ।

---

सति सर्वं कथं दृश्यत इत्यत आह कामेत्यादि तथा चाविद्यमानापि कामिनी यथा कामिना दृश्यते एवं द्वेषादनिष्टमपि दृश्यते तथा मिथ्याभूतमपि दोषात् दृश्यते इति ते आहुरित्यर्थ., शास्त्रानर्थक्यं ब्रह्मणो जगत्कारणत्वप्रतिपादकश्रुतिसूत्रवैयर्थ्यं, असङ्गतं स्यादित्युपपादयन्ति वस्त्वित्यादिना तथा च ब्रह्मणो व्यापकत्व सर्वात्मकव्याप्यवस्तुपरतन्त्र तत्र सर्वस्य मिथ्यात्वे व्याप्यवस्तुनोऽभावे व्यापकत्वमपि मिथ्यैव भवेदिति फलित, समाधानान्तरमाहुः नहीत्यादिना तथा 'चापहतपाप्मे'त्यादि 'पूर्णकामनिष्कल'मित्यादि प्रपञ्चविलक्षण ब्रह्म प्रतिपाद्य यदि स्वोक्तकर्तृत्वं निषेधेत तदा मृषावादित्वेनाप्रामाण्यं स्यात्सर्वस्यापि वेदस्येत्यर्थ, तिलापः कृताः अप्रमाणीकृता इत्यर्थः, तदेवोपपादयन्ति सर्ववाक्यार्थेत्यादिना, 'सर्वं खल्वि'ति 'ऐतदात्म्य'मिति 'स आत्मानं स्वयमकुरुते'तिवाक्यानां प्रामाण्यबाधादित्यर्थः, सर्ववेदान्तानां मुख्यार्थे प्रामाण्यार्थमाहुः यथेत्यादि, उपरिष्टात् अन्तस्तद्धर्माधिकरणे ।

अध्यारोपापवादखण्डनमसहमानस्तद्वादी पुन. प्रत्यवतिष्ठते नन्वित्यादिना, पुरुषार्थार्थानि पुरुषार्थचतुष्टयसम्पत्तिबोधकानि, इदञ्च वेदान्तरूपञ्च, अज्ञानं पञ्चपर्वात्मकं न तु ज्ञानाभावरूपं तथा सत्यहमज्ञ इति प्रत्यक्षानुपपत्तेः तथा हि अहमज्ञ इति च धीर्ज्ञानसामान्याभावविषयिणी वाच्या अभावप्रत्यक्षस्य प्रतियोगिज्ञानजन्यत्वनियमात् प्रतियोगिज्ञानसत्त्वे च ज्ञानसामान्याभावस्य वक्तुमशक्यत्वात् तथा चाहमज्ञ इति प्रत्ययप्रकारता पञ्चसु सर्वेष्वेव वाच्या नत्वभावे इति फलितं बोध्यं, ज्ञानेनैव मिथ्यापदार्थव्यावृत्तब्रह्मज्ञानेनैव, व्याख्यानं वेदान्तानां व्याख्यानं, यथाकथञ्चित् अध्यारोपापवादप्रकारेणापि,

स्वबुद्धिपरिकल्पितं अवैदिकावध्यारोपापवादौ कल्पयित्वा सर्वेषां वेदान्तानां निर्धर्मके ब्रह्मणि तात्पर्यकल्पनं शास्त्रार्थं इति स्वबुद्धिपरिकल्पितं, तत्र स्वबुद्धिकल्पिततात्पर्यविषये महासाहसिकाः लोकेऽविचारितकर्तारः साहसिकाः वेदार्थातिक्रमेणाविचारितवक्तारो महासाहसिका इत्यर्थः, वादिमतसिद्धं पुरुषार्थं खण्डयित्वा सिद्धान्ते पुरुषार्थस्वरूपमाहुः पुरुषार्थ इत्यादिना, ननु जीवब्रह्मणोश्चैतन्यव्यक्तिभेदाभावात् प्राप्तेश्च भेदपूर्वकत्वनियमाद्ब्रह्मप्राप्तेः कथं पुरुषार्थतेत्यत आहुः ब्रह्म चेत्यादि ।

सिद्धान्तमुपसंहरन्ति तस्मादिति, न्यायोपबृंहितं सर्वव्याससूत्रप्रतिपादित, तस्य सधर्मकब्रह्मणः, स्वार्थे एव वाच्यार्थे एव, समवायित्वाय 'स आत्मानं स्वयमकुरुते'तिश्रुतिप्रतिपादितसमवायिकारणताव्यवस्थापनायेत्यर्थः ।

**एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकजगत्कर्तृ समवायि चेत्युक्तं, एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा ॥ ३ ॥**

**इति प्रथमाध्याये प्रथमे पादे तृतीयं समन्वयाधिकरणम् ॥**

---

**तत्र ब्रह्मणि चतुर्धा विचारः, स्वरूपसाधनफलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि मतान्तरनिराकरणञ्च, तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधनफलयोरनुपयोगात्, अतः प्रथमं स्वरूपनिर्णयः, तदनु मतान्तरनिरासः, तदनु साधनानि फलं चेति, तत्र प्रथमाध्याये स्वरूपवाक्यानि विचार्यन्ते, तानि द्विविधानि सन्दिग्धानि निःसन्दिग्धानि च, तत्र निःसन्दिग्धानां निर्णयो न वक्तव्यः, सन्दिग्धानि पुनश्चतुर्विधानि, कार्यप्रतिपादकानि, अन्तर्यामिप्रतिपादकानि, उपास्यरूपप्रतिपादकानि, प्रकीर्णकानि चेति, तत्र प्रथमपादे कार्यवाक्यानां निर्णय उच्यते, सच्चिदानन्दरूपेणाकाशवायुतेजोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते, अन्यत्रान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति, तत्र लक्षणविचार एव सद्रूपाणां वाचकता निर्णीता, चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थमीक्षत्यधिकरणमारभ्यते सप्तभिः सूत्रैः, सप्तद्वारत्वात् ज्ञानस्य ।**

**तत्रैवं सन्देहः, ब्रह्मणः स्वप्रकाशत्वेन सर्वप्रमाणाविषयत्वा'द्यतो वाचो निवर्तन्त'इतिश्रुतेश्च विचारः कर्तुं न शक्यते, स्वप्रकाशविरोधात् श्रुतिविरोधाच्च, आहोस्विद्विरोधपरिहारेण शक्यत इति ।**

---

प्रतिज्ञाय प्रथमसूत्रेण ब्रह्मविचारप्रतिज्ञां कृत्वा, इत्युक्तं निमित्तकारणत्वसमवायिकारणत्वरूपलक्षणद्वयवद्ब्रह्मेत्युक्तं, एवं त्रिसूत्रोक्तार्थमुपसंहृत्य सिद्धमाहुः त्रिसूत्र्येत्यादि ॥ ३ ॥

प्रथमाध्याये प्रथमपादे तृतीयं समन्वयाधिकरणम् ॥ ३ ॥

---

प्रथममध्यायविभागार्थमाहुः तत्र ब्रह्मणीत्यादि, तत्र पूर्वोक्तविचारविषये, तत्र अर्थचतुष्टयमध्ये **विचारिते** प्रथमाध्यायेन विचारिते, **मतान्तरेत्यादि** द्वितीयाध्यायविचारमन्तरेणेत्यर्थं , **फलञ्चेति** साधनमनु फलञ्चेत्यर्थः, **स्वरूपवाक्यानि** लक्ष्यलक्षणभेदेन स्वरूपप्रतिपादकवाक्यानि, **निःसन्दिग्धानि** 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्मे'त्यादीनि, **न वक्तव्यः** सन्देहनिरसनरूपप्रयोजनाभावाद्व्यासैर्न वक्तव्यः, अध्याये पादविभागप्रयोजकं निरूप्य विभागमाहुः **सन्दिग्धानीत्यादिना**, **कार्यवाक्यानां** कार्यवाचकत्वेन लोके प्रसिद्धानां, वाक्यानां विषयमाहुः **सच्चिदित्यादि**, **षड्विधानि** प्रत्येकं कार्यवाचकत्वेन प्रसिद्धानि त्रिविधान्यपि समुदितसच्चिदानन्दत्वरूपेणैकैकस्य वाक्यस्य कारणस्वरूपप्रतिपादकत्वात् षड्विधानीत्युक्तमिति बोध्य, तत्र सच्चिदानन्दप्रतिपादकवाक्यानां मध्ये, **लक्षणेत्यादि** जन्मादिसूत्रविचारे समन्वयसूत्रविचारे चेत्यर्थः, **सद्रूपाणां** 'यतो वा इमानि भूतानि' 'तस्माद्वा एतस्मादात्मन आकाश' इत्यादिसद्रूपप्रतिपादकवाक्यानां, **सप्तद्वारत्वात्** षडिन्द्रियात्महेतुकप्राकट्यस्य ज्ञाने सत्त्वादित्यर्थः ।

अधिकरणविरचनार्थमाहुः **तत्रैवमित्यादि**, **स्वप्रकाशत्वेन** 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' 'न तद्भासयते सूर्यो न शशाङ्को न पावक' **इत्याद्युक्तप्रकारेण** तस्यैव सर्वावभासकत्वात्स्वस्य ज्ञापकान्तरानपेक्षणेनेत्यर्थः, ननु स्वप्रकाशस्यापि सूर्यादेः प्रमाणगोचरत्वाद्ब्रह्मण्यपि तथास्त्वामित्यत आहुः **यतो वाच** इत्यादि तथा च प्रकाशकान्तरस्योक्तश्रुत्यविषयत्वादस्तु प्रमाणगोचरता ब्रह्म तु प्रमाणाविषय इति व्यर्था विचारप्रतिज्ञेत्यर्थः, ब्रह्मणो ज्ञापकान्तरापेक्षायां दूषणमाहुः **स्वप्रकाशविरोधादिति**[1], **श्रुतिविरोधात्** 'यतो वाच' इतिश्रुतिविरोधादित्यर्थः, व्यासविचारप्रतिज्ञानुरोधमालक्ष्याहुः **आहोस्विदिति**, **विरोधपरिहारेण** स्वप्रकाशत्वश्रुत्योर्विरोधपरिहारेणेत्यर्थः, **शक्यते** वेदान्तविचारः कर्तुं शक्यते इति विधिकोटिः ।

---

१ स्वप्रकाशत्वविरोधादित्यपि पाठ

किं तावत् प्राप्तं?

न शक्यत इति,

कुतः?

ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः ।
सर्वथाऽविषयेऽवाच्येऽव्यवहार्ये कुतः प्रमा?

ऐहिकामुष्मिकव्यवहारयोग्ये पुरुषप्रवृत्तिः, प्रवृत्त्यर्थं हि प्रमाणानि, ब्रह्म पुनः सर्वव्यवहारातीतमिति, नन्वेतदपि वेदादेवावगम्यतइति चेत्, तर्हि बाधितार्थप्रतिपादकत्वान्न वेदान्ता विचारयितव्या इति प्राप्ते,

उच्यते,

## ईक्षतेर्नाशब्दम् । ४ । (१-१-४)

न विद्यते शब्दो यत्रेत्यशब्दं सर्ववेदान्ताप्रतिपाद्यं ब्रह्म न भवति, कुतः? ईक्षतेः, 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मित्युपक्रम्य 'तदैक्षत बहुस्याम्प्रजायेये'ति, 'तत्तेजोसृजत,' तथान्यत्र 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नु सृजा इति स इमान् लोकानसृजते'ति 'स ईक्षाञ्चक्रे' 'स प्राणमसृजते'त्येवमादिषु सृष्टिवाक्येषु ब्रह्मण ईक्षा प्रतीयते ।

किमतो यद्येवम्? एवमेतत् स्यात्, सर्वव्यवहारप्रमाणातीतोपि ईक्षाञ्चक्रे लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीति, अतो यथायथा कृतवान् तथातथा स्वयमेवोक्तवान्, पूर्वरूपं फलरूपञ्च सृष्टस्वांशपुरुषार्थत्वाय, ततश्च प्रमाणबलेनाविषयः, स्वेच्छया विषयश्चेत्युक्तम् ।

ननु सर्वप्रमाणविषयत्वे दूषिते केवलवेदविषयत्वं कथं सिद्धान्तीक्रियते? उच्यते, चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेन, न स्वतः, प्रमानुत्पत्तिप्रसङ्गात्, सत्त्वसहितानामेव चक्षुरादीनां प्रामाण्यात्, अतो निरपेक्षा एव भगवन्निःश्वासरूपवेदा एव प्रमाणं, सङ्केतग्रहस्तु

---

पूर्वपक्षमाहुः न शक्यते इति,

सन्निकर्षादीत्यादिपदेन परामर्षपदजन्यपदार्थोपस्थित्यतिदेशवाक्यार्थस्मृतीनां ग्रहणं, कुतः प्रमा? अविषये अवाच्ये अव्यवहार्ये प्रमाणानामप्रचारात् प्रमा कुतो भवेदित्यर्थः, व्यवहार्ययोग्ये बलवदनिष्टाननुबन्धीष्टसाधनकृतिसाध्ये, पुरुषप्रवृत्तिः फलार्थं पुरुषप्रवृत्तिः, प्रवृत्त्यर्थं प्रवृत्त्युद्देश्यनिश्चयार्थं, सर्वेत्यादि व्यवहारपदवाच्यज्ञानकृतिशब्दागोचरमित्यर्थः, ननु ब्रह्मणि प्रमाणागोचरत्वप्रतिपादकवेदेनैव ब्रह्मविशेष्यकप्रमाणागोचरत्वप्रकारकप्रमाजननात् कथ ब्रह्मणः प्रमाणागोचरत्वमित्याशङ्कन्ते नन्वित्यादि, एतदपि ब्रह्मणि प्रमाणागोचरत्वमपि, वेदादेव 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादिवेदादेव, इति चेत्तर्हि वेदानामेवम्प्रकारसत्त्वकाले इत्यर्थः, बाधितेत्यादि 'मम माता जननी वन्ध्ये'त्यादिवाक्यसमतया बाधितार्थप्रतिपादकत्वात्, नेत्यादि प्रमाणं हि विचार्यं वेदान्तानां तूक्तरीत्याऽप्रामाण्यान्न विचार्यते इत्यर्थः,

उच्यते सूत्रकारेण समाधानमुच्यते,

ईक्षतेर्नाशब्दं, सूत्रार्थमाहुः न विद्यते इत्यादिना, न विद्यते वाच्यतासम्बधेन न विद्यते इत्यर्थ., अशब्दं वादिमते प्रसिद्धमिति नाप्रसिद्धिदोष , प्रसिद्धिमेवोपपादयन्ति सदेवेत्यादिना, मिषत् व्यापारं कुर्वत् ।

किमत इत्यादि एवमुपपादने किं सिद्धमित्यर्थः, सिद्धमाहुः एवमित्यादिना, एवं वक्ष्यमाणप्रकारेण, एतत् वक्ष्यमाणं, वक्ष्यमाणमाहुः सर्वव्यवहारेत्यादिना, किमुक्तवान्? तदाहुः पूर्वरूपमित्यादिना, स्वांशेत्यादि स्वांशो जीवस्तस्य पुरुषार्थप्रदस्वरूपज्ञापनायेत्यर्थ. ।

वादी शङ्कते नन्विति, सर्वप्रमाणेत्यादि जन्यज्ञानमात्रस्य मनोजन्यत्वनियमे ब्रह्मणश्च मनोगोचरत्वाभावे प्रतिपादिते सर्वप्रमाणगोचरत्वमपि दूषितमिति बोध्यं, उच्यते वास्तवप्रमाणगोचरत्वेन समाधानमुच्यते इत्यर्थ., अन्यमुखेत्यादि सत्त्वमात्रप्राधान्याधीनमित्यर्थः, न स्वतः न सत्त्वासहकारेणेत्यर्थः, प्रमाणं अलौकिके ब्रह्मणि वेदात्मकमलौकिकमेव प्रमाणमित्यर्थः, ननु वेदेन प्रमाजनने शक्तिग्रहस्य सहकारित्वात् तस्य चोत्तमवृद्धमध्यमवृद्धबालादिव्यवहाराधीननिर्णयविषयत्वात् कथं सर्वांशे वेदानामलौकिकप्रमाणत्वमत आहुः सङ्केतेत्यादि निघण्टुनि-

वैदिक एव वेदविद्भिः कृतः, आकृतिमात्रार्थं लोकापेक्षा, अनधिगतार्थगन्तृ च प्रमाणं लोकानधिगत इत्यर्थः, यज्ञब्रह्मणोरलौकिकत्वं सिद्धमेव, लौकिको व्यवहारः सन्निपातरूपत्वात् पुरुषार्थासाधक एव, तर्हि शब्दमात्रस्य कथं ग्रहणम्? वेदव्याख्यातृवाग्विषयत्वादिति ब्रूमः, एतेन 'मनसैवानुद्रष्टव्य'मित्यपि समर्थितं, तस्मात् सृष्ट्यादिप्रतिपादका अपि वेदान्ताः साक्षात् ब्रह्मप्रतिपादका इति सिद्धम् ॥ ४ ॥

स्यादेतत्, कर्तृत्वमकर्तृत्वं च वेदे प्रतीयते ब्रह्मणः 'यतो वा इमानि भूतानि जायन्ते स आत्मानं स्वयमकुरुत निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमसङ्गो ह्ययम्पुरुषः' इत्येवमादिवाक्येषु, तत्र द्वेधा निर्णयः सम्भवति, सर्वभवनसमर्थत्वात् विरुद्धसर्वधर्माश्रयत्वेन, अन्यतरबाधाद्वा, अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् कर्तृत्वादेर्लोकसिद्धत्वात् कर्तृत्वबाध एव युक्तः, ईक्षत्यादिकन्तु प्रकृतिगुणसम्बन्धादपि ब्रह्मणो युज्यते, तस्मादलौकिकसर्वभवनसमर्थत्वादिकल्पनापेक्षया लौकिक एवान्यतरबाधो युक्तः, ततश्च सत्यस्वरूपादन्यदेवैतदिति स्वयमेवाशङ्क्य परिहरति सूत्रकारः ।

---

रुक्तादिभिः कृत इत्यर्थः, आकृतीत्यादि तथा च जात्याकृतिविशिष्टव्यक्तौ शक्तिस्वीकारे गौरवात् व्यक्त्याकृत्योः प्रकारान्तरेणापि बोधसम्भवादनन्यलभ्यस्यैव शब्दार्थत्वाज्जातावेव वैदिकः शक्तिग्रहः व्यक्त्याकृतीनां तु लोकतोपि ग्रहसम्भव इत्यर्थः, जात्यंशे शब्दानां प्रामाण्यं व्यवस्थापयन्ति अनधिगतेत्यादिना, लोकेत्यादि तथा च व्यक्त्याकृत्यंशे लोकाधिगमस्यापि सम्भवान्न तदंशेऽनधिगतार्थगन्तृत्वं शब्दानामितिभावः, यदंशे शब्दप्रामाण्यं तमलौकिकं विषयमाहुः यज्ञेत्यादि, तथा च लोके जातिवाचकत्वमितरांशस्य प्रमाणान्तरगम्यत्वादलौकिके तु सर्वस्याप्यनधिगतस्य गम्यत्वात्सर्वांशे प्रामाण्यमित्यर्थः तथा च "यज्ञो वै विष्णुः" "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजते-" त्यादौ सर्वत्र लोकानधिगतार्थगन्तृत्वात् शब्दानां प्रामाण्यमवसेयं, ननु लौकिकशब्देऽयोपि यथार्थज्ञानसंवादिप्रवृत्त्यादेर्दर्शनाद्वेदतुल्यप्रामाण्यं कुतो नाङ्गीक्रियते इत्यत आहुः लौकिक इति, व्यवहारः प्रयुज्यमानः शब्दः ज्ञानं प्रवृत्तिश्च, सन्निपातेत्यादि सत्त्वादिमिश्रितगुणत्रयजन्यत्वेन त्रिदोषरूपत्वादित्यर्थः, तथा च घुणाक्षरन्यायेन कदाचित्संवादसम्भवेपि प्रामाण्यस्य प्रवृत्तिप्रामाण्यनिर्णयात्पूर्वं ज्ञाने सन्दिग्धत्वेन निष्कम्पप्रवृत्तेरसम्भवात्, पुरुषार्थासाधक एव निष्कम्पसकलप्रवृत्तेरसाधक एवेत्यर्थः, अत एव 'यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते अथ तस्य भयं भवती'ति लौकिकव्यवहारस्य भयजनकत्वमपि श्रूयते, ननु लौकिकशब्दस्य सर्वथा प्रामाण्यानङ्गीकारे ईक्षतेर्नावेदमित्येव सूत्रकारो वदेन्नतु नाशब्दमितिचेत्तत्राहुः तर्हीत्यादि, शब्दमात्रस्य शब्दत्वावच्छिन्नसर्वशब्दस्येत्यर्थः, समाधानमाहुः वेदेत्यादि, तथा च वेदव्याख्यातृणां वाग्व्याख्यातारो ये तदीयशब्दानामपि तद्विवरणरूपत्वात्प्रामाण्यमिति सूत्राशयात् सामान्यग्रहणमिति भावः, ननु ब्रह्मणो वैदिकशब्दगोचरत्वप्रतिपादनेन श्रोतव्यत्वसिद्धावपि 'मनसैवानुद्रष्टव्य'मितिश्रुत्यर्थोनुपपन्न एवेत्यत आहुः एतेनेत्यादि, एतेन श्रवणजनितसंस्कारसहभावेन, तथा च श्रवणजनितसंस्कारसहकृतनिष्काममनसापि ब्रह्म द्रष्टुं शक्यमिति न श्रुत्यर्थानुपपत्तिरित्यर्थः, एवकारोप्यर्थः अन्यथा "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरि"तिश्रुत्यर्थबाधापत्तेः, सिद्धान्तमुपसंहरन्ति तस्मादिति, तस्मात् सृष्टिद्वाराप्रमाणव्यवहार्यो भविष्यामीति सृष्ट्यादौ ईक्षतेः श्रवणात्, साक्षादित्यादि तथा च शक्त्यैव प्रतिपादकाः न तु परिचायकधर्मप्रदर्शनद्वारेत्यर्थः ॥ ४ ॥

सूत्रान्तरमवतारयितुमाहुः स्यादेतदिति, एतत् सृष्ट्यादिप्रतिपादकानां ब्रह्मप्रतिपादकत्वं, स्यात् स्यादेव परं न साक्षात्किन्तु परिचायकप्रदर्शनद्वारेत्यर्थः, तदेवोपपादयन्ति कर्तृत्वमित्यादिना, तत्र द्विविधवाक्यप्रतिपादिते ब्रह्मणि, विरुद्धसर्वेत्यादि कर्तृत्वभोक्तृत्वसर्वकामत्वतदभावाः सर्वे विरुद्धधर्मास्तदाश्रयत्वाङ्गीकारेणेत्यर्थः, अन्यतरबाधात् 'निष्कल'मितिश्रुत्यनुरोधात् कर्तृत्वादिधर्माणां बाधात्, 'यतो वा' इतिश्रुत्यनुरोधादकर्तृत्वादीनां वा बाधादिति, ननु तर्ह्यकर्तृत्वाद्येव बाध्यतामत आह लौकिकेत्यादीति, तथा च निष्कलमित्यादिश्रुत्यभिप्रेतमकर्तृत्वाद्यलौकिकं लोके सर्वत्र चेतनमात्रस्य कर्तृत्वादिदर्शनात् कर्तृत्वादि लौकिकमिति तद्बाध एव युक्त इति समुदितार्थः, एतत् मायाशबलितं कर्तृ ब्रह्मेत्यर्थः ।

## गौणश्चेन्नात्मशब्दात् ॥ ५ ॥

ईक्षत्यादियुक्तः परमात्मा गौणः प्रकृतिगुणसत्त्वसम्बन्धवान् इति चेन्न, तथा वक्तुं न शक्यते, कुतः? आत्मशब्दात्, 'आत्मा वा इदमेक एवाग्र आसीदि'त्युपक्रम्य 'स ऐक्षते'त्युक्तं, आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः, तस्यैव जगत्कर्तृत्वं श्रुतिराह ।

ननु चोक्तमन्यतरबाधो युक्त इति,

न युक्तः, स्वातन्त्र्याभावेन सगुणस्य कर्तृत्वायोगात्, वेदाश्च प्रमाणभूताः, ततः सर्वभवनसामर्थ्यमेव श्रुतिबललभ्यमङ्गीकर्तव्यम् ॥ किञ्च, अस्तिभातिप्रियत्वादिधर्मवत् ब्रह्मगतकर्तृत्वं लोके प्रतीयते कार्यत्वात्, तस्मादात्मशब्दप्रयोगात् गुणातीतमेव कर्तृ ॥ ५ ॥

नन्वात्मशब्दोपि लोकवद्गौणोस्तु, लोके हि केनचित् पृष्टो विष्णुमित्र आह यज्ञदत्तो ममात्मेति, अत्र गौणत्वमुपचार इत्येवं प्राप्तेभिधीयते,

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥

एवं हि श्रूयते, 'असद्वा इदमग्र आसीत्' 'ततो वै सदजायत' 'तदात्मानं स्वयमकुरुते'त्युपक्रम्य 'यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येऽनिरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभ-

---

गौणश्चेन्नात्मशब्दात् ॥५॥ सूत्रार्धेन पूर्वपक्ष निरस्यन्त आहुः ईक्षत्यादीत्यादि, तथा प्रकृतिगुणसम्बन्धेनेक्षणकर्तृत्वं, इदं सर्वं प्रपञ्चस्वरूपं, सः आत्मा ।

पूर्वपक्षी शङ्कते नन्विति,

**स्वातन्त्र्याभावेन** मायाशबलितस्य मायाधीनत्वेन स्वातन्त्र्याभावेनेत्यर्थः, **कर्तृत्वायोगात्** 'स्वतन्त्रः कर्ते'तिस्मृतेः स्वातन्त्र्याभावे कर्तृत्वासम्भवादित्यर्थः, ननु सगुणनिर्गुणप्रतिपादकश्रुत्योरेकतरबाधेनैव सर्वोपपत्तौ किमिति विरुद्धधर्माश्रयत्वमङ्गीकृत्य निर्गुणस्य कर्तृत्वमुच्यत इत्यत आहु· वेदाश्चेति, तथा च सगुणनिर्गुणप्रतिपादकश्रुत्योर्मध्ये एकस्या अप्रामाण्योक्तौ सर्वस्यापि वेदस्य तुल्यतया सर्वत्रानाश्वासेन महाननयः स्यादितिभावः, फलितमाहुः तत इत्यादिना, ततः वेदे अक्षरमात्रस्यापि बाधितत्वाभावतः, **सर्वभवने**त्यादि श्रुतिप्रतिपादितं यद्यद्रूपं तत्तद्रूपात्मभवनमित्यर्थः, साक्षात्कर्तृत्वे उपादानत्वे च उपपत्त्यन्तरमाहु· **किञ्चे**त्यादि, कर्तृत्वमित्युपादानत्वोपलक्षणं अन्यथा कर्तृगतधर्माणां कार्यगतधर्मनियामकत्वाभावेन अस्तिभातिप्रियत्वादिधर्माणां कार्ये भान न स्यात्, **कार्यत्वादि**ति लोकेऽस्तित्वादिधर्मप्रतीतौ हेतुः,**तस्मात्** कार्ये तदीयधर्माणां प्रतीतेः, **आत्मशब्दात्** 'आत्मा वा इदमेक एवाग्र आसी'दित्यत्र श्रुतावीक्षणकर्तरि आत्मशब्दप्रयोगात् ॥ ५ ॥

**आत्मशब्दोपि** ईक्षणकर्तर्यात्मशब्दोपि, **गौणोस्तु** चैतन्यधर्मसाम्यात् गौण्या वृत्त्या मायाशबलितेश्वरबोधकोस्त्, गौणीमेवोपपादयन्ति **लोके** हीत्यादिना, **ममात्मा** आत्मतुल्यः स्वहितकारित्वात्, साम्येनात्मेत्युक्तं, **अत्र** आत्मशब्द इतिवाक्ये, **गौणत्वमुपचारः** गौणीलक्षणयेत्यर्थः ।

**तन्निष्ठस्य मोक्षोपदेशात्** ॥६॥ ईक्षणकर्तात्मा मायाशबलितो न वक्तुं शक्यस्तत्रोपपत्तिमाहुः **एवमि**त्यादिना, **श्रूयते** तैत्तिरीयके श्रूयते, **'असद्वा इदमग्र आसीत्'** इदं प्रपञ्चरूपं वस्तु, अग्रे सृष्टिपूर्वकाले, **असत्** अव्याकृतनामरूपं, **आसीत्** वर्तमानकालपूर्वकालसत्त्वाश्रयः, ततः नामरूपव्याकरणोत्तरं, **सदजायत** सत्पदवाच्यमभूत्, तस्यैव समवायिकारणतेतिप्रतिपादनायाहुः **तदात्मानमि**त्यादि, 'यदाह्येवैषे'तिश्रुत्यर्थस्तु **यदा** यस्मिन् काले, **ह्येव** निश्चयेनैव, **एषः** साधकः, **एतस्मिन्** ईक्षणकर्तरि ब्रह्मणि, **अदृश्ये** नामरूपशून्ये, **अनात्म्ये** आत्मसम्बन्धिशरीररहिते, **अनिरुक्ते** निरुक्तियोग्यो हि विकारस्तच्छून्ये निर्वचनानर्हे इत्यर्थ·, **निलयने** अधिकारिस्थानभूते, **अभयं** यथास्यात्तथा, **प्रतिष्ठां** स्थितिं, **अथ** तदनन्तरमेव, सः साधकः, **अभयं** मोक्षरूपं, गतः प्राप्त इति बोध्यः, श्रुतिसिद्धार्थमाहुः

यं गतो भवती'ति, प्रापञ्चिकधर्मरहिते ब्रह्मणि एतस्मिन् पूर्वोक्तजगत्कर्तरि परिनिष्ठितो मुक्तो भवतीत्यर्थः, तत्र यदि जगत्कर्ता गौणः स्यात् तन्निष्ठस्य संसार एव स्यात्, न मोक्षः ॥ ६ ॥
किञ्च,

## हेयत्वावचनाच्च ॥ ७ ॥

इतोपि निर्गुण एव जगत्कर्ता, वेदान्तेषु सर्वत्र साधनोपदेशे पुत्रादिवत् जगत्कर्ता हेयत्वेन नोपदिश्यते, यदि सगुणः स्यात् प्राकृतगुणपरिहारार्थं मुमुक्षुभिर्जगत्कर्ता नोपास्यः स्यात्, पुत्रादिवत्, अत ईक्षत्यादयो न सगुणधर्माः, सूत्रत्रयस्य ईक्षतिहेतुसाधकत्वात् चकारः ।

एवं सूत्रचतुष्टयेन ईक्षतिहेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां ब्रह्मपरत्वमुपपादितम्॥७॥

अतःपरं स्वतन्त्रहेतूनाह 'स्वाप्ययात्' 'गतिसामान्यात्' 'श्रुतत्वाच्चे'तिसूत्रत्रयेण ।

ननु किमर्थं हेत्वन्तराणि ? साधकत्वे एकेनापि तत्सिद्धेः, असाधकत्वे शतेनाप्यसिद्धेरिति चेत्, मैवं, रूपभेदार्थं हेत्वन्तराणि नानाविधान्नभोजनतृप्तिवत्, तद्यथा आत्मशब्दात् 'तन्निष्ठस्य मोक्षोपदेशात्' 'हेयत्वावचनाच्चे'ति निर्गुणस्य स्वरूपपरतया कार्यपरतया च कार्यस्य पुनर्विधिनिषेधभेदात् द्विरूपतेति, एवमुत्तरत्रापि प्रपञ्चिष्यते, तत्र सृष्टिवाक्यानामीक्षतिहेतुना भगवत्परत्वमुक्तं, इदानीं प्रलयवाक्यानामाह,

## स्वाप्ययात् ॥ ८ ॥

ब्रह्मणो न सर्वव्यवहारातीतत्वं, कुतः ? स्वाप्ययात् स्वस्मिन्नप्ययात्, तत्र चित्प्रकर-

---

प्रापञ्चिकेत्यादि प्राकृतधर्मशून्ये, उक्तवैपरीत्ये बाधकमाहु तत्रेत्यादिना, संसार एव सगुणत्वे तस्य सगुणोपासनायाः फल 'आब्रह्मभवनाल्लोका' इत्याद्युक्त ससारपातरूपमेव भवेन्न तु मोक्ष इतिभावः ॥ ६ ॥

ईक्षणकर्तुर्निर्गुणपरब्रह्मत्वे हेत्वन्तरमाह,

हेयत्वावचनाच्च ॥ ७ ॥ इतोपि उपनिषत्सु क्वापि जगत्कर्तुर्हेयत्वानिरूपणादपीत्यर्थः, सूत्रत्रयस्य 'गौणश्चेन्नात्मशब्दात्' 'तन्निष्ठस्य मोक्षोपदेशात्' 'हेयत्वावचनाच्चे'तिसूत्रत्रयस्य, ईक्षतिहेतुसाधकत्वात् निर्गुणपरब्रह्मणो बहुभवनेक्षणकर्तृतासाधकत्वादित्यर्थ , चकारः हेयत्वावचनाच्चेति चकार. ।

चतुष्टयेन ईक्षतिसूत्रमादाय चतुष्टयेनेत्यर्थ , जगत्कर्तृत्वोपपत्त्या परब्रह्मणो जगत्कर्तृत्वसिद्ध्या, सृष्टिवाक्यानां 'यतो वा' 'तस्माद्वा' इत्यादिसृष्टिवाक्यानाम् ॥ ७ ॥

स्वतन्त्रेत्यादि सर्वव्यवहारागोचरस्य परब्रह्मण· ईक्षतिद्वारा सर्वप्रमाणव्यवहारगोचरतामुपपाद्य साक्षाद्ब्रह्मणः प्रमाणव्यवहारगोचरताबोधकहेतूनाहेत्यर्थः, स्वाप्ययात्, गतिसामान्यात्, श्रुतत्वाच्च ।

एकेनापि हेतुना, तत्सिद्धेः ब्रह्मणि सर्वप्रमाणव्यवहारगोचरतासिद्धेः, एकेनापि पूर्वत्रिष्वेकेनापीत्यर्थः, रूपभेदार्थं ब्रह्मण सम्यग्व्यवहार्यतासिद्ध्यर्थ नानाव्यवहार्यतावच्छेदकरूपप्रदर्शनार्थमित्यर्थ., तृप्तिवदिति, तथा च नानाविधान्नभोजनेन निःसन्दिग्धतृप्तिवन्नानाव्यवहार्यतावच्छेदकरूपप्रदर्शनेनापि नि.सन्दिग्धव्यवहार्यतासिद्धिरितिभाव , तदेवोपपादयन्ति तद्यथेत्यादिना, सूत्रत्रयेण ब्रह्मणो द्विधाव्यवहारविषयत्वमुपपादयितुमाहुः आत्मेत्यादि, तथा चात्मशब्दादीक्षणकर्तरि निर्गुणत्वेन व्यवहारविषयत्वमुक्त, मोक्षेत्यनेन विधिमुखतया मोक्षरूपकार्यजनकतया व्यवहारविषयत्वमुपपादितं, एवं हेयत्वेत्यनेन मोक्षोपयोगिहेयत्वाभावविशिष्टत्वेन व्यवहारविषयत्वमुपपादित, निषेधे कार्यरूपतोपवर्णन 'स्वर्गी ध्वस्त' इतिवत् हेयत्ववचनरूपप्रतियोग्यभिप्राय निषेधभेदेनेतिवाच्याख्येयं, एवं चेक्षणकर्तरि त्रेधा व्यवहारविषयत्वमुक्त निर्गुणत्वेन मोक्षजनकत्वेन हेयत्ववचनाभावविशिष्टत्वेनेति फलित, कार्यदृष्ट्या तु द्वेधा, वक्ष्यमाणसूत्रत्रयस्य पूर्वसूत्रैरेकवाक्यतार्थमाहु· एवमित्यादि, एवं धर्मिरूपपरब्रह्मणि व्यवहार्यतोपपादकतया, अत्रापि वक्ष्यमाणसूत्रत्रयेपि, तत्र उपनिषद्वाक्यैर्ब्रह्मणो व्यवहार्यतायां, आह ब्रह्मपरत्वमाहेत्यर्थः ।

स्वाप्ययात् ॥ ८ ॥ पूर्वोक्तं स्वतन्त्रहेतुत्वमुपपादयन्ति ब्रह्मण इत्यादिना, तत्र चित्प्रकरणत्वादिति, तथा च

णत्वाज्जीवस्योच्यते, एवं हि श्रूयते 'यत्रैतत् पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति तस्मादेनं स्वपितीत्याचक्षते' स्वं ह्यपीतो भवतीति स्वपितीति न क्रियापदं किन्तु जीवस्य नाम, तदैव स्वपितिनामत्वं यदा सता सम्पद्यते, सति स्वशब्दवाच्ये अपीतिं लयं प्राप्नोतीत्यर्थः, अहरहर्जीवो ब्रह्म सम्पद्य ततो बलाद्यधिष्ठानं प्राप्य पुनर्नव इव समायाति वासनाशेषात्, स्वशब्देन चाभेदः, अर्थतः सच्छब्दसामानाधिकरण्यात् निर्गुणत्वम् ॥ ८ ॥

ननु प्रलये वक्तव्ये कथं सुषुप्तिः? मोक्षातिरिक्तदशायां तथा कर्मसम्बन्धाभावादिति ब्रूमः। मुक्तिवाक्यानामाह,

## गतिसामान्यात् ॥ ९ ॥

गतौ सामान्यात्, गतिर्मोक्षः समानस्य भावः सामान्यं मोक्षे सर्वस्यापि भगवतापि तुल्यत्वात्, एवं हि श्रूयते 'स यथा सर्वासामपांसमुद्र एकायन'मित्युपक्रम्य 'वागेकायन'मितिदृष्टान्तार्थं निरूप्य 'स यथा सैन्धवखिल्य उदके प्रास्त' इत्यादिना लयदृष्टान्तं निरूप्य 'न प्रेत्य सञ्ज्ञास्ती'ति प्रतिपाद्य तन्निरूपणार्थं 'यत्र हि द्वैतमिव भवति तदितर इतर'मित्यादिना सर्वस्य शुद्धब्रह्मत्वं प्रदर्शितं, आदिमध्यावसानेषु शुद्धब्रह्मण एवोपपादनात् सर्वेषां वेदान्तानां ब्रह्मसमन्वय इति ॥ ९ ॥

किञ्च,

---

जन्मादिसूत्रमारभ्य समन्वयसूत्रान्तेन सद्रूपब्रह्मणः सत्ता प्रतिपादिताऽग्रे चानन्दरूपब्रह्मण आनन्दमय इत्यादिना निरूपणीयत्वेन मध्ये चिद्रूपब्रह्मप्रकरणस्यार्थप्राप्तत्वादितिभावः, उच्यते इति तत्र ब्रह्मणि जीवानां लय उच्यते इत्यर्थः, श्रूयते छान्दोग्ये श्रूयते, एतत्पुरुषः जीवात्मक. पुरुषः, सता ब्रह्मणा, एनं जीवं, स्वपितिनामत्वं जीवस्य स्वपितिनामत्वं, लयं प्राप्नोति जाग्रत्स्वप्नावस्थग्रहजनितवासनाकूटाक्रान्तोपि जीव द्विविधा या सुषुप्तिः सुषुम्णादिनाड्यधिकरणिकान्तर्याम्यधिकरणिका च तयोर्द्वयोर्मध्ये द्वितीयायां सति लयं प्राप्नोतीत्यर्थः, तत्रोपष्टम्भकमाहु. अहरहरिति, बलाद्यधिष्ठानं बलाद्युत्कृष्टधर्माणामधिकरण ब्रह्म तत्प्राप्येत्यर्थ', स्वशब्देन स्वपितीतिश्रुतिस्थस्वशब्देन, तथा चोपनिषत्स्वात्मशब्दो ब्रह्मवाचकस्तादृश एव चैतत्प्रकरणीयः स्वशब्दस्तेन जीवस्यापि ब्रह्मत्व लब्धमित्यभेद उक्तः, अर्थत इत्यादि समानविभक्तिकपदद्वयसमभिव्याहारलभ्याभेदस्यात्रासम्भवेऽपि स्वशब्दप्रयोगसामर्थ्येन जीवस्य ब्रह्माभेदलाभादर्थत इत्युक्तं, सच्छब्देत्यादि ब्रह्मवाचकसच्छब्दार्थेनात्मवाचकस्वशब्दार्थेन च सामानाधिकरण्यात्, आत्मत्वेन जीवस्याभेदात्, निर्गुणत्वं निर्गुणब्रह्मरूपत्व, इत्थं च ब्रह्मणः प्रलयवाक्यगोचरत्वेन न सर्वव्यवहारातीतत्वं, 'ईक्षत्यादौ प्रतिज्ञातं तन्न सम्भवति प्रलयवाक्यानां जीवगोचरत्वात् तथा च ब्रह्म सर्वव्यवहारातीतमेवे'तिशङ्कानेन निरस्ता, जीवस्य ब्रह्मात्मकतानिरूपणेन वाक्यानां ब्रह्मगामित्वादितिभावः ।

नन्वादौ प्रलयवाक्यानां ब्रह्मणि समन्वयं प्रतिज्ञायान्ते सुषुप्तिवाक्यानां समन्वयनिरूपणे प्रतिज्ञाहानिरुपक्रमोपसंहारविरोधश्चेत्यत आहुः नन्वित्यादि, समादधुः मोक्षेत्यादिना, तथा च मोक्षरूपप्रलयातिरिक्तजाग्रत्स्वप्नदशायां यथा कर्मरूपव्यापारसम्बन्धो जीवे तथा कर्मसम्बन्धस्य सुषुप्तावभावाच्छ्रुतौ सुषुप्तेः प्रलयोदाहरणत्वेन निर्देश इति न शङ्कालेश इतिभावः ॥ ८ ॥

मुक्तीत्यादि आह मुक्तिवाक्यरूपव्यवहारविषयत्वं ब्रह्मणि सूत्रकार आहेत्यर्थः,

गतिसामान्यात् ॥९॥ सूत्रार्थमाहुः गतावित्यादिना, श्रूयते बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते, दृष्टान्तार्थं जीवस्य ब्रह्मणि लयदृष्टान्तार्थं, मुक्तौ जीवस्याभेदप्रलय एव न तु सर्वथा स्वरूपनाश इति प्रदर्शयितु दृष्टान्तान्तरमाहुः स यथा सैन्धवेत्यादिना, सञ्ज्ञा जीवसञ्ज्ञा, तन्निरूपणार्थं सञ्ज्ञाऽभावनिरूपणार्थं, इतरं पश्यतीत्यादौ काकूक्तिर्बोध्या, ब्रह्मण एवोपपादनात् एतत्प्रकरणे सर्वत्र ब्रह्मण एवोपपादनादित्यर्थः ॥ ९ ॥

---

१ स्वपितीतिनामत्वमित्यपि पाठ । २ उचित इत्यपि पाठ ।

## श्रुतत्वाच्च ॥ १० ॥

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इति श्रुत्यैवासन्दिग्धं सर्वकार्यत्वं प्रतिपादितं, 'सर्वे वेदा यत्पदमामनन्ती'ति च, चकारोऽधिकरणसम्पूर्णत्वद्योतनाय एवं चिद्रूपस्य कारणतानिरूपणेन वेदान्तानां ब्रह्मपरत्वं निरूपितम् ॥ १० ॥

इति प्रथमाध्याये प्रथमे पादे चतुर्थमीक्षत्यधिकरणम् ॥

---

अतःपरमानन्दरूपस्य कारणत्वोपपादनेन तद्वाक्यानां ब्रह्मपरत्वमुपपाद्यते आनन्दमयाद्यष्टभिः सूत्रैः, तत्र तैत्तिरीयशाखायां ब्रह्मभृगुप्रपाठकद्वयेन तत्र आनन्दमय इति मयट्प्रत्ययान्तस्याब्रह्मत्वेनाजगत्कारणत्वे ब्रह्मप्रपाठकस्याब्रह्मपरत्वं स्यादिति तन्निराकरणार्थमानन्दमयाधिकरणं, षडिन्द्रियस्वरूपद्वयानन्दभेदेनानन्दस्याष्टविधत्वादष्टसूत्राणि ।

ननु कथं सन्देहः ? कथं वास्याब्रह्मत्वे प्रपाठकासङ्गतिरिति ?

---

प्रलयवाक्यानां साक्षाद्ब्रह्मप्रतिपादनाय सूत्रान्तरमाहुः श्रुतत्वाच्च ॥ १० ॥ अस्मिन्सूत्रे सर्वस्य ब्रह्मात्मैकत्वनिर्णयार्थं 'आत्मैवेदमग्र आसीत् पुरुषविधः सोनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इतिश्रुत्यर्थमुपसंहर्तुं विषयवाक्यमाहुः पूर्णमद इत्यादि, इदं श्रुतिवाक्यं बृहदारण्ये द्वितीयदशब्राह्मणे, पूर्णं इदं इन्द्रियगोचरं पूर्णं, ननु परिदृश्यमानस्य कथं पूर्णतेत्यत्र स्वयमेव समाधानमाह पूर्णात्पूर्णमुदच्यते इति, पूर्णात्, पूर्णात्महेतुकं यत्पूर्णत्वं तच्छालीत्यर्थः, व्युच्चरणात्पूर्वदशायामिदं सर्वं पूर्णमित्यर्थः, ननु तर्हि अपूर्णत्वेन कथं जगतो दर्शनं जायतेऽत आह पूर्णस्येत्यादि, तथा चाविद्यावन्तं प्रति सर्वतो ब्रह्मणस्तिरोभावेऽपि विद्यावन्तं प्रति विद्यया सर्वत्र ब्रह्मण आविर्भावात् सर्वं पूर्णं ब्रह्मैव तस्यावशिष्यते ब्रह्मणः पूर्णतामादायावयवेष्वपि पूर्णतैव प्रतीयते इति फलितोर्थः, सर्वकार्यत्वं सर्वकार्यस्य ब्रह्मरूपत्वमुपादेयत्वेनेत्यर्थः, वेदप्रतिपाद्यनिखिलवस्तुनो ब्रह्मरूपतायां श्रुत्यन्तरमाहुः सर्वे वेदा इति, चकारः सौत्रश्चकारः ॥ १० ॥

प्रथमाध्याये प्रथमपादे चतुर्थमीक्षत्यधिकरणम् ॥

---

नन्वीक्षत्यधिकरणे सर्ववेदान्तानां ब्रह्मपरत्वं प्रतिपादितमेवेत्यग्रिमाधिकरणे प्रयोजनाभाव इत्याशङ्कानिरासायाहुः अतः परमित्यादिना, आनन्दरूपस्य परब्रह्मणः, कारणत्वेत्यादि जगत्प्रति कारणत्वोपपादनेनेत्यर्थः, तद्वाक्यानां आनन्दप्रतिपादकवाक्यानां, उपपाद्यत इति तथा च सच्चितो ब्रह्मस्वरूपाघटकयोः कारणत्वे उपपादिते आनन्दे कारणत्वानुपपादने आनन्दांशे जन्मादिसूत्रोक्तकारणलक्षणस्याव्याप्तिः स्यादत उपपाद्यते इत्यर्थः, विषयवाक्यसमूहस्थानं प्रदर्शयन्ति ब्रह्मभृग्वित्यादिना, द्वयेनेत्यस्य आनन्दकार्यं प्रतिपाद्यते इति पूरितेनान्वयः, नन्वानन्दमयस्य कारणतासन्देहे तन्निरासायाधिकरणमारब्धव्यं स्यात् प्रकृते तु 'सत्यं ज्ञानमनन्तं ब्रह्मे'तिलक्षणलक्षितं ब्रह्म प्रकृत्य 'तस्माद्वा एतस्मादात्मन' इत्यादिना प्रथमप्रपाठके कारणत्वं निर्णीतं द्वितीये च 'यतो वा इमानि भूतानि जायन्ते' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यत्र तु आनन्दत्वेनापि कारणता निर्णीतेति सन्देहाभावाद्व्यर्थोऽयमधिकरणारम्भ इत्यत आहुः आनन्दमय इत्यादि, तत्र ब्रह्मप्रपाठके, मयट्प्रत्ययान्तस्य मयट्प्रत्ययान्तार्थस्य, अब्रह्मत्वेन वादिमते मयट्प्रत्ययस्य विकारार्थत्वेन विकारविशिष्टस्य चाब्रह्मत्वेनेत्यर्थः, अजगत्कारणत्वे ब्रह्मण एव कारणत्वेन विकारिणोऽब्रह्मत्वेनाजगत्कारणत्वेनेत्यर्थः, तन्निराकरणार्थमिति आनन्दमयस्यैव ब्रह्मत्वव्यवस्थापनेनाब्रह्मत्वप्रयुक्ताकारणत्वशङ्कानिरासार्थमित्यर्थः, सूत्रसङ्ख्याप्रयोजनमाहुः षडित्यादि, षट् ज्ञानेन्द्रियाणि स्वरूपद्वयं जीवपरमात्मस्वरूपं, एतैरानन्दानुभवसम्भवात् अष्टौ सूत्राण्युक्तानीत्यर्थः ।

तटस्थः शङ्कते नन्विति, कथमिति द्वाभ्यां प्रश्नद्वयं, सन्देहः आनन्दमयस्य ब्रह्मत्वसन्देहः, अस्य आनन्दमयस्य, प्रपाठकेत्यादि 'ब्रह्मविदाप्नोति पर'मित्यारभ्य ब्रह्मप्रपाठकस्य ब्रह्मणः परस्य प्रतिपादकत्वासङ्गतिरित्यर्थः ।

---

१ अजगत्कर्तृत्वे इत्यपि पाठः ।

उच्यते, ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय ज्ञेयांशे कारणत्वायानन्दांशमप्रवेश्य जडत्वपरिहाराय सर्वज्ञानन्दरूपं फलमुपपाद्य, तन्निरूपणार्थं सर्वोऽपि प्रपाठक आरब्धः, तत्र साधनशेषब्रह्मणो वाक्यादेव निःसन्दिग्धप्रतीतेः फलस्य ब्रह्मत्वं प्रतिपादनीयं, तत्राब्रह्मान्नमयादितुल्यवचनात् सुखवाचकशब्दानामेव वचनाच्च सन्देहः, आनन्दांशस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात्तदभावे प्रपाठकवैयर्थ्यञ्च, फलस्य नैकट्यप्रतिपादनायात्मपदप्रयोगेण फलरूपेण जगत्कारणतामुक्त्वा तस्यैव मध्ये सर्वान्तरत्वं प्रतिपादितं, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय'इति अन्ते च'एतमानन्दमयमात्मानमुपसङ्क्रामती'ति आदिमध्यरूपे अनूद्य फलत्वेनोपपादितं, तन्निरूपकस्यापि तत्तुल्यफलत्वं वक्तुमन्नमयादीनामपि ब्रह्मत्वेनोपासनमुक्तं, तत्र पूर्वपक्षेऽन्नमयादेरिवानन्दमयस्यापि न ब्रह्मत्वं, अन्नमयादितुल्यवचनात्तथैव फलसिद्धेरिति,

---

**उच्यते** सशयादिकमुच्यते, **प्रतिज्ञाय** 'ब्रह्मविदाप्नोति पर'मित्यनेन अक्षरब्रह्मविद परब्रह्मप्राप्ति प्रतिज्ञाय, **ज्ञेयांशे** परप्राप्तिसाधनीभूतज्ञानविषयाक्षरे ब्रह्मणि, **कारणत्वाय** परप्राप्तिकारणकोटिनिवेशाय, **आनन्दांश अनिवेश्य** विवरणऋचि अक्षरविवरणांशे 'सत्य ज्ञानमनन्तं ब्रह्मे'तिभागे आनन्दांशमनिवेश्येत्यर्थ', कारणकोटावानन्दप्रवेशे तु प्राप्तेरपि ज्ञानरूपत्वात् आनन्दज्ञानस्यानन्दज्ञानकारणतायामात्माश्रयापत्तिरित्यर्थः, परपदार्थनिरूपणमाहु. **जडत्वेत्यादि**, **जडत्वपरिहाराय** आनन्दमयपदार्थस्य प्रकृतिरूपतापरिहाराय, **फलमुपपाद्य** 'सोऽश्नुते सर्वान्कामा'नित्यनेन सर्वकामफलभोगप्रदत्वेनानन्दरूपत्वं 'ब्रह्मणा विपश्चिते'त्यादिना च सर्वज्ञत्व फलस्योपपाद्येत्यर्थः, **तन्निरूपणार्थं** परपदार्थरूपफलनिरूपणार्थमित्यर्थः, **आरब्धः** फलरूपब्रह्मणो ज्ञानार्थमारब्ध इत्यर्थः, **तत्र** प्रपाठके, **साधनशेषेत्यादि** अक्षरब्रह्मण, **वाक्यादेव** 'सत्य ज्ञानमनन्त ब्रह्मे'तिवाक्यादेव, **निःसन्दिग्धेत्यादि** निर्णयात्मकप्रतीतेरित्यर्थ, **फलस्य** परस्यानन्दमयस्येत्यर्थः, **प्रतिपादनीयं** निर्णेतव्यं, प्रपाठकार्थमुक्त्वा सन्देहबीजमाहु. **तत्राब्रह्मेत्यादि**, **तत्र** प्रपाठकमध्ये, अब्रह्मरूपा येऽन्नमयादयस्तत्तुल्यतयानन्दमयस्यापि निरूपणात्, **सुखवाचकेत्यादि** आनन्दमये 'तस्य प्रियमेव शिर' इत्यत्र न्यूनाधिकसुखवाचकमोदप्रमोदादिशब्दानां प्रयोगात् ब्रह्मणश्चैकरसत्वात् तादृगशब्दप्रतिपाद्ये ब्रह्मत्वस्य सन्दह इत्यर्थः, सन्देहमुपपाद्यानन्दमयस्याब्रह्मत्वे प्रपाठकोक्तकारणत्वमानन्दमयेऽनुपपन्न स्यादित्यन्यथानुपपत्तिरूपां प्रपाठकासङ्गतिमुपपादयन्ति **आनन्दांशस्येत्यादिना**, तथा च पूर्व जगज्जन्मादिहेतुत्वेन सच्चिदशयोर्ब्रह्मत्व निर्णीतं एतत्प्रपाठके चानन्दमयस्य 'आनन्दाद्ध्येव खल्विमानि' इत्यादिना जगत्कारणताप्रतिपादनेनानन्दमयस्य ब्रह्मत्व निर्णीयते प्रपाठकस्यैवंविधार्थकत्वानङ्गीकारे प्रपाठकस्यैव वैयर्थ्यमित्यर्थ. ननु'आत्मा वा इदमेक एवाग्र आसी'दित्यत्र चिद्रूपस्यैव कारणत्वप्रतिपादनात् अत्रापि 'तस्माद्वा एतस्मादात्मन आकाश' इत्यत्राप्यात्मपदप्रयोगाच्चिद्रूपस्यैव कारणत्व प्रतिपाद्यते इत्येवास्त्विति न प्रपाठक आनन्दमयकारणतायां विनिगमक इत्यत आहु **फलस्येत्यादि** तथा च लोकानां लङ्कास्थसुवर्णेऽतिदूरत्वेन दुष्प्रापत्वाद्यथा न सर्वेषा तत्कामाना प्रवृत्तिस्तथाऽतिदूरत्वे आनन्दमयकामानामानन्दमयेऽपि साधकानां प्रवृत्तिर्न स्यादत आत्मपदं प्रयुक्तमित्यर्थ, **फलरूपेण** आनन्दाद्ध्येवेत्यनेनान्दत्वेन रूपेण, **तस्यैव** आनन्दमयस्यैव, **मध्ये** अन्नमयादीनां मध्ये, **सर्वान्तरत्वं** अन्नमयादिचतुष्टयापेक्षयान्तरत्वं, **प्रतिपादितं** आदौ प्रतिपादितं, **आदिमध्यरूपे** 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्म'त्यनेनादिरूप 'एतमानन्दमयमात्मान'मित्यनेन चान्ते मध्य सर्वेषा कोशाना रूप एते द्वे रूपे, **अनूद्य** तदेतच्छब्दाभ्यामनूद्य, **फलत्वेनेत्यादि** आनन्दमयरूपं फलत्वेनोपपादितमित्यर्थ. आनन्दमयस्य फलत्वेऽन्यद्विनिगमकमाहु. **तन्निरूपकस्येत्यादि**, **तत्** आनन्दमयं, तस्य निरूपक स्वोपासनाद्वारानन्दमयोपासनायां योग्यतासम्पादकं अन्नमयादिकोशचतुष्टयं, **तत्तुल्यफलत्वं** आनन्दमयोपासनाजन्यफलसमानफलप्रदत्व, **ब्रह्मत्वेनोपासनमिति** 'येऽन्नं ब्रह्मोपासत' इति आनन्दमयाधिष्ठानत्वेन परम्परयानन्दमयोपासनोपयोग्युपासनाविषयान्नमयादेरपि ब्रह्मत्वोक्तावानन्दमयस्य ब्रह्मत्वे किं वाच्यमिति काकूक्तिरत्रावसेया, नन्वेवमानन्दमयस्य ब्रह्मत्वे निर्णीते तन्निर्णयार्थमग्रे ब्रह्मविचारवैयर्थ्यमित्यत आहु. **तत्र पूर्वपक्ष इत्यादि**, **तत्र** प्रपाठके, **अन्नमयादेरिवेत्यादि** तथा च परब्रह्मोपासनोपयोग्युपासनाविषयत्व यथाऽन्नमयादेस्तथानन्दमयस्यापीति न परब्रह्मत्वपर्यवसानमानन्दमय इति फलितं. **तथैव** आनन्दमयोपासनायामपि अन्नमयाद्युपासनाफलतुल्यफलसिद्धेरित्यर्थ, फलं चान्ते 'एतमानन्दमयमात्मानमुपसङ्क्रामती'तिरूपं सर्वासामुपासनाना बोध्य

---

१ उपपादितमित्यपि पाठ ।

इति प्राप्तेऽभिधीयते,

## आनन्दमयोऽभ्यासात् । ११ । (१-१-५)

आनन्दमयः परमात्मा नान्नमयादिवत् पदार्थान्तरं, कुतः? अभ्यासात्, अभ्यस्यते पुनः पुनः कीर्त्यत इत्यभ्यासः तस्मात्, अभ्यासभेदकत्वं पूर्वतन्त्रसिद्धं, यथा पूर्वतन्त्रे शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानां षण्णां कर्मभेदकत्वमेवमेवानन्दमयस्याप्यभ्यासात् पूर्ववैलक्षण्यं,

---

इति प्राप्ते उक्तरीत्या पूर्वपक्षे आनन्दमयस्याब्रह्मत्वे प्राप्ते, अभिधीयते आनन्दमयस्य ब्रह्मत्वसाधको हेतुरुच्यत इत्यर्थः ।

आनन्दमयोऽभ्यासात् ॥ ११ ॥ परमात्मा परब्रह्म, पदार्थान्तरं अक्षरस्वरूपं, तत्र हेतुरभ्यासादिति आर्थिकानन्दाभ्यासादित्यर्थः, अभ्यासभेदकत्वमिति तथा चानन्दस्याभ्यस्तत्वेनान्नमयादिभ्यो भिन्नस्वरूपत्वं सिद्धं, भेदकान्याहुः शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानां भेदकत्वं, शब्दान्तराद्भेदो यथा 'जयति ददाति जुहोति' इत्यत्र कर्मभेदः, तत्र धात्वर्थभेदेन भावनाभेद उतैका भावना सर्वधात्वर्थसम्बद्धा विधीयते इति संशयः, नानाभावनाविधानेनापूर्वकल्पनायां गौरवादेका भावनेति पूर्वपक्ष., सिद्धान्तस्तु प्रत्ययांशस्य साम्येऽपि प्रकृत्यंशस्य भिन्नत्वात् तत्प्रकृत्यर्थानुकूला भावना भिन्नैवेति, अभ्यासाद्भेदो यथा 'समिधो यजति तनूनपातं यजति इडो यजति स्वाहाकारं यजति बर्हिर्यजति' इत्यत्र पञ्चकृत्वो यजतिपदमभ्यस्त तद्यजतिपदं किमेकां भावनां बोधयत्युतानेकां? ततश्च सर्वैरेको यागो बोध्यते उतानेके? तत्र यागभेदे भावनाभेदस्तदेकत्वे भावनैक्यं तत्र सर्वत्र यजतिपदस्यैकस्यैव श्रवणात् तदर्थस्य चैक्यादेक एव यागो न यागभेद इति पूर्वपक्ष., तत्र यजतिपदाभ्यासाद्यागभेद इति सिद्धान्तः, सङ्ख्यया कर्मभेदो यथा, पृथक्सङ्ख्यानिवेशात्सङ्ख्यया कर्मभेद. उत्पत्तिवाक्यगतकर्मसमानाधिकरणा सङ्ख्या कर्मभेदिका, यथा 'तिस्र आहुतीर्जुहोति द्वादश द्वादशानि जुहोति,' तत्रैक एव होमो विधीयते बहवो वेति संशयः तत्र सकृदाख्यातश्रवणादेक एव होमो बोध्यते इति, तर्हि सङ्ख्यायाः क्व निवेश इति चेत् यथा 'एकादश प्रयाजान् यजती'त्यत्र ज्ञातसङ्ख्येषु प्रयाजेषु आवृत्त्या एकादशत्वनिवेशस्तथात्रापि होमावृत्त्यसङ्ख्यानिवेश इति न कर्मभेद इति पूर्वपक्ष., सिद्धान्तस्तूत्पत्तिवाक्ये सङ्ख्याविशिष्टानामेव होमानां विधानात् आख्यातेनैकत्वविशिष्टहोमविधानासम्भवात्सङ्ख्यया कर्मभेद एव, प्रयाजेपु तु नोत्पत्तिशिष्टा सङ्ख्यास्तीत्यावृत्त्या एकादशत्वनिवेशः कर्मभेदाभावश्चाविरुद्ध एवेतिसिद्धं, गुणभेदात्कर्मभेदो यथा, चातुर्मास्येषु श्रूयते 'तप्ते पयसि दध्यानयति वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं' इति, तत्र संशयः किमामिक्षायागे एव वाजिनरूपो गुणो विधीयते उत वाजिनरूपद्रव्यविशिष्टं कर्मान्तरं विधीयते इति, तत्र पूर्वपक्षः आमिक्षायाग एव वाजिनरूपो गुणो विधीयते कर्मान्तरकल्पनेऽपूर्वान्तरकल्पने च गौरवात्, नचोत्पत्तिशिष्टामिक्षागुणावरुद्धे कर्मण्यलब्धावकाशं वाजिनं कर्मान्तरं कुतो न निविशते इति वाच्यं, उभयोरपि वाक्ययोः समानकालप्रवृत्तत्वेन गुणद्वयस्यापि समानशिष्टत्वेनामिक्षामात्रस्योत्पत्तिशिष्टत्ववचनासम्भवात् इति पूर्वपक्षः, सिद्धान्तस्तु 'वैश्वदेवी'ति तद्धि श्रुत्या विश्वेदेवा देवता अस्येतीदंशब्देन सर्वशब्दार्थेन विश्वेदेवदेवताविशिष्टामिक्षाद्रव्यकर्मणो लाभाद्वाक्यार्थसमाप्तेस्तत्रेतरगुणसमावेशासम्भवाद्वाजिनद्रव्यकवाजिदेवताकं कर्म भिन्नमेवेति, प्रकरणभेदस्य कर्मभेदकत्वं यथा कुण्डपायिनामयने उपसद्भिश्चरित्वा 'मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेते'त्यादि श्रुतं तत्र सन्देहः किं प्राप्ताग्निहोत्रानुवादेन मासो विधीयते उत कर्मान्तरमिति, तत्राग्निहोत्रशब्देन प्रकृतस्यैवोपस्थितेः तत्रैवाप्राप्तो मासो विधीयते न कर्मान्तरमिति पूर्वपक्षः, सिद्धान्तस्तु प्रकरणभेदेन प्राप्ताग्निहोत्रोपस्थापकाभावेन तदुपस्थितेरसम्भवात् प्रकरणान्तरस्य तदुपस्थितिप्रतिबन्धकत्वाच्च मासाग्निहोत्रं कर्मान्तरमेवेति, सञ्ज्ञाभेदात्कर्मभेदो यथा 'अथैष ज्योतिरथैषः सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति, तत्र संशय' किं यजेतेति सन्निहितज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणविधानमुतैतद्गुणविशिष्टकर्मान्तरविधानमिति? तत्र ज्योतिष्टोमबोधकज्योतिःपदसमानाधिकरणयजेतेतिपदेन पूर्वप्रक्रान्तज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणो गुण एव विधीयते न कर्मान्तरमिति पूर्वपक्षः, सिद्धान्तस्तु विषयवाक्यगताधिकारार्थकाथशब्देन प्रकरणान्तरस्य द्योतनात् प्रकरणान्तरेण चाव्यवहितपूर्वस्यापि ज्योतिष्टोमस्योपस्थितिबाधनात् द्वादशशतदक्षिणया सहस्रदक्षिणाविकल्पापत्तेश्चैतत्सञ्ज्ञकं कर्मान्तरमेव विधीयते इति, एवमेव कर्मभेदप्रकारेणैव, अभ्यासात् 'कोह्येवान्या'दित्यादिवक्ष्यमाणाभ्यासविषयत्वात्, पूर्ववैलक्षण्यं

---

१ एवं प्राप्ते इत्यपि पाठ । २ अभ्यासस्य भेदकत्वमित्यपि पाठ. ।

अतोऽतुल्यत्वात् ब्रह्मत्वं, एवमभ्यासः श्रूयते, 'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती'त्यर्थतोऽभ्यासः, स्तुत्या मयडर्थत्वप्रकृतिस्तुल्या, पुनर्वचनेनाभ्यासेन प्रवाहाद्भेदे साधिते ब्रह्मत्वं, न तु भेदापत्तिः, उत्तरस्य साधकत्वात्, तस्मादानन्दमयं ब्रह्मैव ।

अथवा 'स नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानासे'त्यादिश्रुतिभि-'रेष उ एवे'तिश्रुतेश्च तानि तानि साधनानि कारयित्वा तानि तानि फलानि ददद्भगवान स्वक्रीडार्थमेव जगद्रूपेणाविर्भूय क्रीडतीति वैदिकैर्निर्णीयते, एतदेव काण्डद्वयेऽपि प्रतिपाद्यते, अन्यथा जीवस्य साधनफले निरूपयन्त्याः श्रुतेर्जीवपरत्वमेव स्यान्न ब्रह्मपरत्वम्, कर्मब्रह्मणोरपि जीवशेषत्वं नापेयात्, एवं सति पूर्वकाण्डेऽवान्तरफलान्युक्त्वा'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतेर्निरवध्यानन्दात्मकमेव परमं फलमिति तद्विवक्षमाणा पूर्वं सामान्यत आह, समाधनं तैत्तिरीये 'ब्रह्मविदाप्नोति पर'मिति, अक्षरब्रह्मवित् परं ब्रह्माप्नोतीत्यर्थः, अत्र

---

अन्नमयादिचतुष्टयापेक्षया वैलक्षण्य, अतो वैलक्षण्याद्धेतो., अतुल्यत्वात् पूर्वचतुष्केनातुल्यत्वात्, ब्रह्मत्वं आनन्दमयस्य परब्रह्मत्व, अर्थतोऽभ्यासः अर्थस्याभ्यस्यमानत्वेनार्थनिष्ठोऽभ्यास इत्यर्थ, ननु स्तुतिवाक्ये आनन्दशब्द परब्रह्मानन्दवाचक एव आनन्दमयशब्दस्तु विकृतानन्दवाचक इत्यत आहु. स्तुत्या मयडर्थत्वेत्यादि, तथा च मयडर्थ. प्राचुर्य विद्यते यस्मिन्स मयडर्थ प्रचुरानन्दः परब्रह्मव्यापकानन्दः तस्य भावो मयडर्थत्वं प्रचुरानन्दत्वावच्छिन्नबोधिकानन्दशब्दरूपा प्रकृति. सा, तुल्या स्तुतिवाक्ये स्तुत्या परमानन्दप्रतिपादकानन्दमयशब्दे तु प्राचुर्यार्थकमयट्प्रत्ययेन परमानन्दप्रतिपादिका एव तुल्येत्यर्थ , नन्वत्र मयड्विकारार्थक एव कुतो न स्यादिति चेन्न, तथा सति स्तुतिवाक्यवैयर्थ्यापत्तेस्तथा च स्तुतिवाक्यैकवाक्यतार्थं प्राचुर्यमेवार्थो वक्तव्य इति भाव., पुनर्वचनेनेत्यनेन निगमयन्ति पुनर्वचनेन स्तुतिवाक्यद्वयेनानन्दस्य पुनर्वचनेन, प्रवाहात् अन्नमयादिचतुष्कात, भेदे वैलक्षण्ये, ब्रह्मत्वं आनन्दमयस्य परब्रह्मत्वं, नन्वानन्दमयस्य ब्रह्मत्वे 'तस्य प्रियमेव शिर' इत्यादौ षष्ठ्या सुखरूपे शिरसि आनन्दमयस्य भेदप्रदर्शनात् ब्रह्मभेदस्य च 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं' इत्यादौ निषिद्धत्वात् नानन्दमयो ब्रह्मेत्यत आहु ननु भेदापत्तिरिति, कुत इत्याकाङ्क्षायां हेतुमाहु उत्तरस्येति, एतदभ्यासवाक्यादुत्तरस्य 'यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते अथ तस्य भयं भवती'ति अन्तरशब्दस्य भेदबोधकत्वेन तस्य च निन्दाश्रवणात् 'तस्य प्रियमेव शिर' इत्यादौ राहो शिर इतिवदभेदार्थषष्ठीकल्पनात न द्वयापत्तिरिति भावः, सिद्धमाहुस्तस्मादित्यादि, एवमस्मिन् वर्णकेऽन्नमयादीनां ब्रह्मकार्यत्वेन पदार्थान्तरत्वमुपपाद्यानन्दमयस्य फलत्वार्थकथनात् तेभ्यो भेदः साधित ।

साम्प्रत वर्णकान्तरे तु अखण्डब्रह्मवादेन पूर्वसिद्धसकलकार्यस्यापि ब्रह्मत्वमनूद्यानन्दस्य साधनशेषत्वेऽपि रूपभेदेन फलत्वानपायात् ज्ञेयकोटावानन्दं निवेश्यापि अन्नमयादिभ्यः आनन्दमयस्य भेद'तस्यैष एव शारीर आत्मे'त्यादिवाक्याभ्यासादाधिदैविक पक्षमाश्रित्य साध्यते अथवेत्यादि, अखण्डाद्वैतवादपुरःसर सर्वश्रुतीनां ब्रह्मपरत्वेनैकवाक्यत्वाय प्रतीयमानस्य बाध्यताप्रकारबोधनाय च सृष्टिप्रक्रियास्मारणपुरःसरं अखण्डब्रह्मवादस्वरूपं सप्रमाणं निरूपयितुमाहु' स वै नैव रेम इत्यादि, वैदिकैरिति प्राचीनौपनिषदैर्व्यासादिभिरित्यर्थ. एतेनोक्तेऽर्थे शिष्टानां सम्मति. प्रदर्शिता, एतदेव कर्मज्ञानप्रक्रियाप्रकाशनमुखेन भगवतः क्रीडनमेव, अन्यथा सृष्टेर्भगवत्क्रीडार्थत्वाभावे, साधनफले कर्मोपासनरूपाणि साधनानि स्वर्गमोक्षादिरूपाणि फलानि चेत्यर्थः, श्रुतेः पूर्वोत्तरकाण्डश्रुतेरित्यर्थः, न ब्रह्मपरत्वं तथाच 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इतिविरोधः, श्रुतेर्जीवपरत्वापत्तिमुपपाद्य श्रुत्यर्थस्य जीवपरत्वापत्तिमाहुः कर्मब्रह्मणोरित्यादिना, जीवशेषत्वं जीवस्य स्वर्गमोक्षादिफलसम्पत्तौ कर्मब्रह्मणोरुपयोगात् जीवार्थत्वमेव स्यान्न तु रमणार्थत्व तथा च 'स नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् स हैतावानासे'त्यादिश्रुतिभिर्नामरूपसृष्टे रमणार्थत्वोक्तिर्बाध्येतेति भावः एवं सति पूर्वोक्तसर्वदोषनिराकरणाय सर्वस्य वेदराशेर्ब्रह्मपरत्वे उच्यमाने सति, अवान्तरफलानि पशुपुत्रस्वाराज्यादिरूपाणि, एतस्यैव परब्रह्मानन्दस्यैव, अन्यानि भूतानि ब्रह्मादिमनुष्याद्यन्तानि, मात्रां यथायोग्यांश, तद्विवक्षमाणा साधकेषु निरवध्यानन्दरूपं

---

१ द्वयापत्तिरित्यपि पाठ । २ निरवद्यानन्दात्मकमित्यपि पाठः ।

परशब्दस्य पूर्वपरत्वे तदित्येव वदेत्, पूर्वं ब्रह्मोक्त्वाग्रे यत् परमित्याह तेन सान्निध्यात्तत एव परं पुरुषोत्तमरूपमेवात्राभिप्रेतमिति ज्ञायते, किञ्च, प्रतिवादिना तदाप्तिर्ज्ञानात्मिकैव वाच्या, तथा सति ब्रह्मप्राप्तो ब्रह्म प्राप्नोतीत्यर्थः स्यात्, स चासङ्गतः, साधनसाध्यभावव्याहतिश्च, अतःपरं विशेषतस्तद्विवक्षमाणाऽनुभवैकगम्यं तत्स्वरूपं नान्यमानगम्यमिति ज्ञापयितुमन्यमुखेनाह 'तदेषाभ्युक्ते'ति, अन्यथा सर्वार्थतत्त्वप्रतिपादिका श्रुतिरेवं कथं वदेत्? तदित्यव्ययम्, तथा च तत् पूर्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्योपगृह्य ऋगेषा विदितपरब्रह्मकैरुक्ता, पूर्ववाक्योक्तार्थस्य वैशद्यमनया क्रियत इत्यर्थः सम्पद्यते, तामेवाह सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', सोपपत्तिकमानन्दात्मकत्वमग्रे निरूपणीयमित्यधुना तदनिरूप्य सच्चिदंशौ देशकालापरिच्छिन्नत्वञ्चोक्तवती, अथवा अक्षरब्रह्मण्यानन्दात्मके सत्यपि तस्य परिच्छिन्नत्वान्नपरमफलत्वमत आनन्देऽपरिच्छिन्नत्वमेव परमफलतावच्छेदकमिति तद्धर्मपुरःसरं परमानन्द एवानन्दशब्देनोच्यते, अत्र 'सत्यं विज्ञानमानन्दं ब्रह्म' 'सच्चिदानन्दविग्रह'मित्यादिश्रुतिषु त्रयाणामप्येकप्रक्रमपठितत्वात् द्वितयोक्तौ तन्नियतसहचरितत्वेनानुक्तोऽप्यानन्दः प्राप्स्यत एवेत्याशयेन वानन्दः स्फुटतया नोक्तः। अथ वेदनपदार्थमाह 'यो वेदे'त्यादिना,

---

फलं बोधयन्ती सती श्रुतिः सकरुणा, पूर्वं साधनदृष्टसम्पत्ते पूर्वं, सामान्यतः यथाकथञ्चित्साधनतया, परशब्दस्य परब्रह्मवाचकपरशब्दस्य, पूर्वपरत्वे अक्षरब्रह्मार्थत्वे, तत एव अक्षरब्रह्मणः सकाशादेव न त्वक्षरब्रह्मवित्परं ब्रह्मादिदेवापेक्षया पर मुक्त्यात्मकफलरूपतया वा परं अक्षरं प्राप्नोतीत्यर्थो वाच्यो न तु परशब्देन पुरुषोत्तम इति अत आहुः किञ्चेत्यादि, प्रतिवादिना अक्षरापेक्षयोत्कृष्टब्रह्मस्वरूपानङ्गीकर्त्रा, तदाप्तिः परापदार्थीभूताक्षरावाप्तिः, असङ्गतः पुनरुक्तिदोषेण बोधजननासम्भवादसङ्गतः, दोषान्तरमाहुः साधनसाध्येत्यादि, व्याहतिः आत्माश्रयदोषेण कार्यकारणभावभङ्ग इत्यर्थः, तथाचाक्षरवित्परं पुरुषोत्तम प्राप्नोतीत्येवार्थो वाच्य इति फलितं, एवं सामान्यतोऽक्षरात्परपदार्थं निरूप्य विशेषतस्तं निरूपयितुं प्रकारान्तरेण तस्य ज्ञातुमशक्यतया 'भक्त्या मामभिजानाती'तिवाक्यात् भक्त्यानुभवैकगम्यमेव परस्वरूपं न युक्तिगम्यमिति परब्रह्मभक्तैरुक्तां ऋचमेव परपदार्थज्ञानसाधनत्वेन तादृशभक्तमुखेनेत्यर्थबोधकवाक्यावतरणमाहुरत इत्यादिना, अतःपरं पूर्वोक्तप्रकारैः परपदार्थनिर्णयासम्भवानन्तरं, विशेषतः भक्तग्राह्यतावच्छेदकरूपतः, तद्विवक्षमाणेत्यादि परपदार्थनिरूपणेच्छवो ये तद्भक्तास्तदनुभवैकगम्यं परस्वरूपं अनुभवेतरमानगम्यं नेति तन्मुखेन निर्णायकमाहुरित्यर्थः, तदेषाभ्युक्तेति, अन्यथा व्याख्यानश्रुतेरभावे परपदार्थस्य तदनुभवस्य चाभावे, एवं अन्यमुखेन कथन तदेषाभ्युक्तेत्येवंरूप, तदित्यव्ययं पञ्चम्यन्तं अध्याहार्यमित्यर्थः, श्रुतिस्थ तत्पदं परपदार्थरूपवस्तुबोधकं, तथाचेत्यनन्तरं तत् तस्मात्कारणात् तदेवेति ऋगर्थरूपकारणादिति योज्यं, श्रुतिस्थतत्पदार्थमाहुः तत् पूर्वोक्तमिति, उपगृह्य हृदि निश्चित्य, एषा अग्रे वक्ष्यमाणविवरणरूपा, पूर्वेत्यादि 'ब्रह्मविदाप्नोति परमि'तिवाक्यार्थस्य, अनया विवरणर्चा, इत्यर्थः सम्पद्यते 'तदेषाभ्युक्ते'त्यस्यैतावानर्थः सम्पद्यत इत्यर्थः, तां पूर्वप्रतिज्ञातां विवरणर्चं, अग्रे परपदार्थस्य फलस्य निरूपणावसरे, तत् परपदार्थरूपं वस्तु, देशकालापरिच्छिन्नत्वं अनन्तपदेन देशकालापरिच्छिन्नत्व, उक्तवती ज्ञेयांशमुक्तवतीत्यर्थः, अनन्तपदस्यार्थान्तरं वक्तुं वर्णकान्तरमाहुः अथवेत्यादि, तस्य अक्षरानन्दस्य, परिच्छिन्नत्वात् 'स ब्रह्मण एक आनन्द' इत्यनेन गणनाविषयत्वात्, तद्धर्मपुरःसरं परिच्छिन्नत्वरूपधर्मपुरस्कारेण, परमानन्द एव प्रजापतेरानन्दापेक्षयोत्कृष्टानन्द एव, नन्वनन्तशब्दस्यानन्दबोधकतायां किं गमकमित्यत आहुः सत्यमित्यादि, द्वितयोक्तौ सत्यज्ञानयोर्द्वयोरुक्तौ, तन्नियतेति सत्यज्ञानोभयनियतेत्यर्थः। अथ वेद्यनिरूपणानन्तर, वेदनपदार्थे अक्षरातिरिक्तं वेद्यं पदार्थ-

---

१ आनन्दात्मकत्वे इत्यपि पाठः।

अत्रेदमाकूतं, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वा'मितिश्रुत्या वरणेतरसाधनाप्राप्यत्वमुच्यते, एवं सति श्रुतिद्वयविरोधपरिहारायाक्षरब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते, तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयते, तदेव गुहायां परमव्योमाविर्भावः, परो मीयते दृश्यतेऽनेनेति तथा, ज्ञानमार्गीयजीवज्ञेयप्रकारकाद्वैशिष्टयेनापि तथा, परमव्योम्नोऽत्यलौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः, 'भक्त्याहमेकया ग्राह्यः' 'नाहं वेदै'रित्युपक्रम्य 'भक्त्या त्वनन्यया शक्य' इत्यादिस्मृतिरप्येवमेव सङ्गच्छते, अन्यथा ज्ञानमार्गिणामपि ब्रह्मविदां [1]परप्राप्तिरेव स्यान्नत्वेवं 'मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इत्यादिवाक्यैः, एतदेवाह, गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविकृतरूपेण विपश्चिता विविधं पश्यच्चित्वं हि विपश्चित्त्वं, पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः, तेन विविधभोगचतुरेण सह सर्वान् कामानश्नुत इत्यर्थः, एतेन परप्राप्तिपदार्थ उक्तो भवति, शुद्धपुष्टिमार्गीयत्वादस्य भक्तस्य स्वातन्त्र्यं भोग उच्यते, सहभावोक्त्या ब्रह्मणो गौणत्वं, अत एव भक्ताधीनत्वं भगवतः स्मृतिष्वप्युच्यते 'अहं भक्तपराधीनः,' 'वशे कुर्वन्ति मां भक्त्ये'त्यादिवाक्यैः।

यद्यप्यश भोजन इतिधातोरश्नातीत्येव रूपं भवति, अशूङ् व्याप्ताविति धातोर्भवत्यश्नुत इति रूपं विकरणभेदात् पदभेदाच्च, तथाप्यत्राशभोजन इति धातोरेव प्रयोग इति ज्ञायते, तथाहि यत्राशनक्रियायां ब्रह्मणा सहभाव उच्यते, तथा च व्याप्त्यर्थकत्वे ब्रह्मणा सहभूतान् कामान् व्याप्नोतीत्यर्थो भवत्यथवा ब्रह्मणा सहभूतः स जीवः कामान् व्याप्नोतीति, एतौ त्वनुपपन्नौ, नहि

मित्यर्थ, द्वेधा निरूपणस्य किं प्रयोजनमित्याकाङ्क्षायां तद्विशदयन्ति अत्रेदमित्यादिना, आकूतमेवोपपादयन्ति 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वा'मिति श्रुति. वरणैकलभ्यत्वं वदति 'ज्ञानादेव हि कैवल्य ऋते ज्ञानान्न मुक्ति'रितिश्रुतिर्ज्ञानमात्रलभ्यत्व वदति तदेव श्रुतिद्वयविरोध इत्यनेनोच्यते, तादृशे अक्षरज्ञानेन प्राप्तिस्वरूपयोग्यतावति, गुहायां भक्तहृदयाकाशे, परमेत्यादि भगवल्लीलाविशिष्टव्योमाविर्भाव इत्यर्थः, तथा परमपदवाच्य, अलौकिकेत्यादि सप्तम्यन्तव्योमन्निति प्रयोग इत्यर्थ, एवमेव वरणैकलभ्यत्वाङ्गीकार एव, नत्वेवमित्यत्र प्रमाणमाहु मुक्तानामित्यादिना, तेन एवरीत्या विपश्चिच्छब्दव्युत्पादनेन, विपश्चिच्छब्दस्य फलितमर्थमाहु विविधेत्यादि, एतेन 'सोऽश्नुते' इत्यादिश्रुतिभागेन, स्वातन्त्र्यं भोगे कर्तृत्वप्रतिपादनेन स्वातन्त्र्य, उच्यते स इतिपदेनोच्यते।

अश्नातीत्येव परस्मैपदित्वादित्यर्थ., अश्नुते इति ङित्वेनात्मनेपदित्वादित्यर्थ., विकरणभेदात् अश भोजन इत्यस्य नाविकरणत्वात्, प्रयोग इतीति श्रुतौ 'अश्नुते'इति प्रयोग इत्यर्थ, व्याप्त्यर्थकत्वे अशूङ् व्याप्ताविस्य प्रयोगाङ्गीकारे इत्यर्थ, अतिमहत्त्वादिति तथाचातिमहद्ब्रह्माणुजीवेन व्याप्तं भवतीति न सम्भवतीत्यर्थः, जीवस्य ब्रह्मस्वरूपं प्रति व्यापकत्वासम्भवेऽपि कामान् प्रति व्यापकत्व वाच्य तच्च न सम्भवति व्यापकत्वस्य सर्वमूर्तद्रव्यसंयोगित्वरूपत्वात् कामाना चेच्छात्वेन गुणत्वादत. कामानां जीवैः स्वाधीनीकरणमेव जीवानां कामान्

---

[1] 'परप्राप्ति' इत्यपि पाठ.।

कामवज्जीवकर्तृकव्यापनक्रियाकर्मत्वं ब्रह्मणि सम्भवत्यतिमहत्त्वात्, व्यापनं चात्र स्वाधीनीकरणमेव वाच्यं, नहि कामानां तथात्वं स्वतःपुरुषार्थरूपं भोगशेषत्वात्तेषां, पूर्वोक्तपरप्राप्तिव्याकृतिरूपत्वाच्चास्य तथार्थोऽनुपपन्नः, तेनाशभोजन इतिधातोरेवायं प्रयोगः, अर्थस्यालौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः, 'व्यत्ययो बहुल'मितिसूत्रेण छन्दसि तद्विधानात् श्नाप्रत्ययपरस्मैपदयोर्व्यत्ययेन श्नुप्रत्ययात्मनेपदे जात इति भोगार्थक एवायं धातुः, एवमेव 'न तदश्नोति कश्चन न तदश्नोति कश्चने'त्यत्र प्रत्ययमात्रव्यत्ययेन प्रयोगोऽशधातोरेवेति ज्ञेयं, अन्यथा सर्वव्यापकस्य ब्रह्मणस्तन्निषेधोऽनुपपन्नः स्यात् ।

ननु सकामोऽत्रोपासकस्तदुपास्यश्च सगुणं ब्रह्म, द्वयोरपि कामोपभोगश्रवणात् 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्युपक्रम्य, 'यत्रत्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्ये'दित्यादिनाऽन्यदर्शनादिनिषेधात् ब्रह्मविदः कामोपभोगासम्भवश्चेति चेत्,

मैवम्, 'तदेषाभ्युक्ते'ति वाक्येन पूर्ववाक्योक्तार्थनिरूपिकेयमृगित्युक्तत्वेन प्राकृतगुणसम्बन्धस्य तत्र वक्तुमशक्यत्वात्, तथा सति ब्रह्मवित्प्राप्यत्वपरत्वयोरसम्भवापत्तेः, न च वेद्यस्यागुणत्वमुत्तरस्य सगुणत्वमिति वाच्यं, परत्वानुपपत्तेः, साधनशेषस्यागुणत्वं[1] तत्फलस्य सगुणत्वमित्यसङ्गततरश्च, 'यद्धि पश्यन्ति मुनयो गुणापाये समाहिता'इतिश्रीभागवतवाक्येन गुणातीतपुंसां वैकुण्ठदर्शनाधिकार उच्यते यत्र तत्र किमु वाच्यं तत्परदर्शने ?

---

प्रति व्यापकत्वं वाच्यमित्याहुः व्यापनं चात्रेत्यादि,तद्दूषयन्ति नहीत्यादि, तथात्वं स्वाधीनीकरणं, स्वतः पुरुषार्थरूपं भोगवत्फलरूपमित्यर्थः, भोगशेषत्वात् भोगैकप्रयोजनार्थत्वात्, तेषां कामानां, तथा च तेषां स्वाधीनीकरणत्वरूपव्यापकत्वार्थोऽप्यपुरुषार्थपर्यवसायीत्यप्रयोजक एवेति फलित, ऋगुत्तरार्धस्य फलीभूतपरमपुरुषार्थरूपपरपदार्थविवरणरूपता च पूर्वोक्तेऽर्थे क्रियमाणेऽनुपपन्ना स्यादित्याहुः पूर्वोक्तेत्यादिना, अस्य अश्नुते इत्यस्य, तथार्थः कामानां स्वाधीनीकरणत्वरूपः, अनुपपन्नः अपुरुषार्थरूपत्वादनुपपन्न इत्यर्थः, तेन अशूङ् व्याप्तावित्यस्यायं प्रयोग इत्युक्तावुक्तदोषसमूहेन, अयं अश्नुते इति, अर्थस्य परेण सह भोगरूपस्य, अलौकिकत्वेत्यादि वरणमात्रलभ्यत्वज्ञापनायेत्यर्थः, अलौकिकेत्यादि पदविकरणव्यत्ययेन अश भोजन इत्यस्यैव प्रयोगः कृत इत्यर्थः, नन्वलौकिकोऽपि व्याकरणासिद्धश्चेदसङ्गत इति चेत्तत्र व्याकरणेन साधुतामुपपादयन्ति व्यत्यय इत्यादिना, तद्विधानात् पदविकरणव्यत्ययविधानात्, एवमेव व्यत्ययेनैव, तत् ब्रह्म, कश्चन भोज्यमानं, नाश्नोति न भुनक्ति, तत् भोग्यत्वेन कर्मीभूतं ब्रह्मस्वरूपं, कश्चन कर्ता, नाश्नोति न भुनक्तीत्यर्थः, प्रत्ययेत्यादि श्नाविकरणस्थाने श्नुविकरणप्रयोगेनेत्यर्थः, अन्यथा अशूङ् व्याप्तावित्यस्याश्नोतीति प्रयोग इत्यङ्गीकारे, तन्निषेधः 'न तदश्नोति कश्चने'त्यनेन सर्वव्यापकत्वस्य ब्रह्मणि निषेधवचनम् ।

नन्वत्र 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणे'त्यत्र, द्वयोरपि कामश्रवणेन सगुणत्वात् परपदार्थस्य कथं निर्गुणपरब्रह्मरूपत्वमित्याशङ्कामाहुः नन्वित्यादिना, यत्र ब्रह्मप्राप्तौ सत्यां, अस्य प्राप्तब्रह्मजीवस्य, कामोपेत्यादि द्वितीयादर्शनेन भोगासम्भव इत्यर्थः,

समाधानमाहुः तदेषेत्यादिना, तथाच 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य ब्रह्मतज्ज्ञानब्रह्मपरतत्प्राप्तितद्योग्याः ये पदार्था उक्तास्तेषां स्वरूपं न लौकिकप्रमाणगम्यं, अन्यथा 'तदेषाभ्युक्ते'त्यनेनानुभूतपरब्रह्मकैरुक्ता ऋङ्नोदातिष्ठेत् तस्मादुक्तानां तेषां स्वरूप श्रुत्यैकगम्यमितिसत्यमितिऋगुक्ताऽतो न तेषु सर्वेषु प्राकृतगुणसम्बन्धो वक्तुं शक्य इत्यर्थः, तथा सति परपदार्थस्य प्राकृतत्वे सति, वेद्यस्य अक्षरस्य, उत्तरस्य परस्य, साधनशेषस्य अक्षरस्य, तत्फलस्य अक्षरज्ञानफलस्य परस्य, असङ्गतिमेवोपपादयन्ति यद्धीत्यादिना, तथा च यत्साधकानां निर्गुणत्वं तत्फलस्य सगुणत्वमित्यसङ्गतमित्यर्थः ।

---

१ 'साधनशेषभूतस्यागुणत्व'मित्यपि पाठः ।

यच्चोक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासम्भव इति तत्राप्युच्यते, 'यत्र त्वस्य सर्वमात्मैवाभू'दिति श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति न तु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा, पुरुषोत्तमस्वरूपन्तु यावत्स्वधर्मविशिष्टं प्रपञ्चातीतमेवेति तद्दर्शनादौ किमायातम् ? 'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्य'मित्यनेन ब्रह्मात्मकत्वं प्रपञ्चस्योक्त्वैतदपि तस्य विभूतिरूपं पुरुषस्त्वितो महानित्याह 'एतावानस्य महिमा अतोज्यायांश्च पुरुष'इतिश्रुतिरतो न किञ्चिदनुपपन्नं, एवं सति ब्रह्मविदः परप्राप्तेः पूर्वदशा तत् केनेत्यादिनोच्यते, उत्तरदशा तु 'सोऽश्नुत' इत्यनेनोच्यत इति सर्वं सुस्थं, छान्दोग्येऽपि 'यत्र नान्यत् पश्यती'त्यादिना भूमस्वरूपमुक्त्वा 'आत्मैवेदꣳसर्व'मित्यन्तेन तद्विद्भावमुक्त्वोच्यते 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवती'ति । एतच्च लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपीत्यधिकरणे प्रपञ्चयिष्यते ।

अथवा 'तदेषाभ्युक्ते'ति वाक्येन पूर्ववाक्योक्तब्रह्मनिरूपिकेयमृगित्युच्यते, तत्र साधनफले निरूपिते इत्यृच्यपि ते एव निरूप्येते, तथाहि आनन्दस्य फलात्मकत्वेन साधनशेषभूते ब्रह्मणि तमनुक्त्वा 'यो वेदे'त्यन्तयर्चा ब्रह्मविदित्येतावतो वाक्यस्य विवरणं क्रियते, एतेन फलाप्तौ स्वरूपयोग्यतासम्पत्तिरुक्ता, तत उक्तरीत्या भगवद्वरणेन भक्तिलाभे गुहायामाविर्भूतं यत् परमं

---

निर्गुणलीलायां दोषसम्भावनामनुवदन्ति यच्चोक्तमित्यादिना, समाधानमाहु उच्यत इत्यादिना, ब्रह्मविदः अक्षरब्रह्मविद, प्रपञ्चातीतेत्यादि आधिदैविकार्थेत्यादि, किमायातं यत्र त्वस्येतिश्रुत्या किं प्रतिपादितमित्यर्थः, एतदपि यद्ब्रह्मात्मकत्वं प्रपञ्चे प्रतिपादितं तद्ब्रह्मापि, तस्य पुरुषोत्तमस्य, पुरुषः पुरुषोत्तम, इतः अक्षरात्, एतावान् प्रपञ्चविशिष्टाक्षररूपः, अस्य पुरुषोत्तमस्य, महिमा माहात्म्यज्ञानविषयीभूतः पदार्थः, अतः अक्षरात्, ज्यायान् श्रेष्ठतम, पुरुषः पुरुषोत्तम, अतः पुरुषोत्तमस्याक्षरप्रतिपादकश्रुत्यविषयत्वाद्धेतोः, न किञ्चिदित्यादि यत्र त्वस्येति श्रुत्यर्थस्य न काप्यनुपपत्तिरित्यर्थ, उत्तरदशा तु वरणोत्तरकालीना भक्तदशा इत्यर्थः, सर्वं सुस्थं श्रुतिद्वयमविरुद्धमित्यर्थ, अक्षरातीतपुरुषोत्तमलीलासत्त्वे सम्मत्यन्तरमाहु. छान्दोग्य इत्यादिना, छान्दोग्ये सनत्कुमारनारदसंवादे, यत्र विरहदशाया, नान्यत्पश्यति भक्तो येन विरहितस्तदन्यं न पश्यतीत्यर्थः, भूमस्वरूपं भक्तरतिविषयीभूतं पुरुषोत्तमस्वरूपं, आत्मैवेदꣳ सर्वमित्यादिना 'प्रासादे सा दिशि दिशि से'त्यादिवत्, तद्विभाव शृङ्गाररसनिष्पादककारणसमूह, एतदुदाहरणं च 'चरणेन भुवं लिखन्त्य' इत्यत्र पञ्चाध्याय्यामवसेयं, स वा एषः पूर्वतनरससामग्रीशाली अयं भक्तः, एतेन भक्तानां सर्वात्मभावसिद्धिरुक्ता, अग्रे 'एवं विजानन्' इत्यन्तेन 'एवं पश्यन्' इत्यादिना अहङ्कारादेश उक्तः, स च स्वपौरुषेणान्वेषणादिना प्रियं प्राप्स्याम इत्येवंरूपः, सोऽपि भावः पञ्चाध्याय्यां प्रसिद्धः, एवं 'आत्मरतिरात्मक्रीड' इत्यादिना चात्मादेश उक्तः स च स्वस्य भगवत्कृत्यादिकरणरूपः, सोऽपि भावः पञ्चाध्याय्यां भक्तेषु प्रसिद्ध एव, उक्तस्य भावत्रयस्य विवरणस्थानं प्रदर्शयन्ति एतच्चेत्यादिना ।

छान्दोग्योक्तार्थमेव द्रढयितुं वर्णकान्तरमाहुः अथवेत्यादिना, पूर्ववाक्योक्तेत्यादि पूर्ववाक्यं 'ब्रह्मविदाप्नोति पर'मिति तदुक्ते ये साधनफलरूपे ब्रह्मणी तयोर्निरूपिकेयं ऋक् 'सत्यं ज्ञानमनन्त'मिति ऋक्, तत्र 'ब्रह्मविदाप्नोति पर'मिति वाक्ये, ऋच्यपि विवरणऋच्यपि, ते एव साधनफले एव, तमनुक्त्वा 'सत्यं ज्ञानमनन्त'मित्यक्षरनिरूपकभागमध्ये आनन्दमनुक्त्वेत्यर्थः, एतेन अक्षरब्रह्मवेत्तृत्वेन, फलाप्तौ आनन्दरूपपरफलप्राप्तौ, ततः वरणस्वरूपयोग्यतासिद्ध्यनन्तरं, तद्वरणेन भगवत्कृतभक्तवरणेन, यो वेदेत्यन्तेनाक्षरज्ञानसम्पत्तिमुक्त्वा यो वेदेतिभागस्याग्रेऽपि देहलीदीपन्यायेन गुहायां निहितं यो वेदेत्यन्वयं स्वीकृत्य फलनिरूपकभागव्या-

**व्योम तस्मिन्निहितः पुरुषोत्तम एवेति, तं निहितमिति तृतीयार्थे द्वितीया, तथा च तत्र निहितेन ब्रह्मणेत्यग्रे पूर्ववत् ।**

**अथ परमफलत्वान्निरवध्यानन्दात्मकत्वमन्तरङ्गेभ्योऽप्यन्तरङ्गत्वं स्वस्मिन् ज्ञापयितुं सर्वस्य सर्वरूपत्वेन सर्वाधिदैविकरूपत्वमपि ज्ञापयितुमाधिभौतिकादिरूपेणाविर्भवितुं भगवानाकाशादिरूपेणाविर्भूतोऽत एव भवन आकाशस्यैव कर्तृत्वमुच्यते, अग्रेऽन्नमयादीनि चत्वारि रूपाणि पूर्वं निरूपितान्युत्तरोत्तरमन्तरङ्गभूतानि, अन्नरसमयशरीरभूतात् प्राणमयस्तस्मान्मनोमयस्तस्माद्विज्ञानमयः ।**

**कश्चित्त्वेतानि रूपाणि विकारात्मकत्वात् प्राकृतान्येवैतेभ्योऽप्यन्तरङ्गो विमुक्ताविद्यो जीव-एवानन्दमय उच्यत इत्याह,**

**स प्रतिवक्तव्यः, अग्रिमप्रपाठके भृगुणा 'अधीहि भगवो ब्रह्मे'ति पृष्टो वरुणस्तदोक्तमाधिकाराभावात् स्वयं ब्रह्मस्वरूपमनुक्त्वा तपसाधिकारातिशयक्रमेण स्वयमेव ज्ञास्यतीति तदेव साधनं सर्वत्रोपदिष्टवान्, 'तपसा ब्रह्म विजिज्ञासस्वे'ति । ब्रह्मातिरिक्तेन साधनेन न तत् ज्ञातुं शक्यमिति ज्ञापनाय 'तपो ब्रह्मे'ति सर्वत्रोक्तवान्, तथाच तपसा साधनेन ब्रह्मत्वेन ज्ञातानि रूपाणि प्राकृतानीति विचारकेण न वक्तुं शक्यमिति ।**

---

ख्यानमाहुः **गुहायामित्यादिना**, **तृतीयार्थेत्यादि** तथा च 'सक्तून् जुहोती'त्यत्र होमक्रियायां सक्तूनां कर्मत्वेनान्वये जातेऽपि शास्त्रतात्पर्यनिर्वाहाय द्वितीयायाः तृतीयार्थे लक्षणा क्रियान्ते सक्तुभिर्जुहोतीति तद्वदत्रापि निहितमित्यस्य वेदनक्रियाकर्मत्वेनान्वये जातेऽपि अग्रे ब्रह्मणा इत्यनेन निहितस्यान्वयतात्पर्यनिर्वाहाय निहितमिति द्वितीयायाः तृतीयार्थे लक्षणा ततो निहितेनेत्यर्थः पर्यवस्यति, तेन तृतीयार्थे लक्षणायां वेदनक्रियायां गुहानिहितस्य कर्मत्वेनान्वयोऽनुपपन्न इति शङ्का निरस्ता वेदितव्या ।

ननु 'ब्रह्मविदाप्नोति पर'मित्यत्राक्षरस्वरूपं परपदार्थस्य स्वरूपं तस्य फलत्वं च निरूपितं, उभयप्राप्तिसाधनानां च निर्णयः कृतः, इतः परमग्रिमसन्दर्भनिरूपणे प्रयोजनाभावः, तावतैव फलसाधनगोचराकाङ्क्षाया निवृत्तेरत आहुः **अथेत्यादि**, तथा च परपदार्थस्य यथाकथञ्चित्फलत्वनिरूपणेऽपि वक्ष्यमाणप्रकारेण परमानन्दस्य फलरूपता यथा हृदयारूढा भवति तथा न निरूपितमिति तथा निरूपयितुमयमारम्भ इति न वैयर्थ्यशङ्कालेशः, **परमफलत्वात्** परपदार्थस्य परमफलत्वात्, **अन्तरङ्गेभ्यः** अन्नमयादिभ्य उत्तरोत्तरमन्तरङ्गेभ्यः, **अन्तरङ्गत्वं** आनन्दमयस्यान्तरङ्गत्वं, **सर्वस्येत्यादि** 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो यं मनो विदु'रितिरीत्या सर्वस्य सर्वरूपत्वेनेत्यर्थः, **सर्वेत्यादि** जगति प्रसिद्धानि यावन्ति भौतिकानि वस्तूनि तेषां सर्वेषां स्वस्मिन्नाधिदैविकरूपत्वं ज्ञापयितुमित्यर्थः, **आधिभौतिकेत्यादि** आकाशादिरूपेणेत्यर्थः, नन्वत्र कारणात् कार्याणामुत्पत्तिक्रम एव प्रतीयते न तु कार्याणां कर्तृरूपतेत्यत आहुः **अत एवेत्यादि**, **अत एवेति** एव कर्तुः कार्याणां चोपादानोपादेयभावेनाभेदोऽस्त्यत एवेत्यर्थः, **आकाशस्यैव** साक्षादुपादानोपादेयभावेनाभेदस्य स्फुटत्वार्थमाकाशस्यैवेत्यर्थः, अत्राकाशपदं वाय्वादीनामुपलक्षणं, एवं भौतिकानां तद्रूपत्वमुक्त्वाध्यात्मिकानां विभूतिरूपाणां तद्रूपत्वं वक्तुमाहुरग्र इत्यादि, उत्तरोत्तरमन्तरङ्गतां बोधयितुमाहुः **अन्नेत्यादि**, **शरीरभूतात्** अन्तरङ्गभक्तानां विभूत्यात्मकशरीररूपादित्यर्थः ।

अत्र पञ्चस्वपि कोशेषु विकारार्थकप्रत्ययान्तार्थत्वमुरीकृत्य लौकिकत्वं वदति आनन्दमयमपि जीवं तन्मतं निरसितुमनुवदन्ति **कश्चित्त्विति**, **कश्चित्** मायावादी, **प्राकृतानि** प्रकृतिविकारभूतानि, **विमुक्ताविद्यः** विज्ञानेन विमुक्ताविद्यः प्राप्तब्रह्मस्वरूप',

**सः** मायावादी, **प्रतिवक्तव्यः** प्रत्युत्तरणीयः, प्रत्युत्तरमेवाहुः **अग्रिमेत्यादि**, **अग्रिमे** ब्रह्मप्रपाठकस्याग्रिमे भृगुप्रपाठके इत्यर्थः, **अधीहि** उपदिशेत्यर्थः, **तदा** प्रश्नदशायां, **तदेव** तपोरूपमेव, **सर्वत्र** 'अधीहि भगवो ब्रह्मे'तिपञ्चस्वपि प्रश्नेषु, उपदेशमाहुस्तपसेति, **तत्** ब्रह्मस्वरूपं ।

तर्हि पुनर्ब्रह्मविषयकप्रश्नसाधनोपदेशतत्क[1]रणपूर्वातिरिक्तब्रह्मज्ञानानां परम्परा नोपपद्यत इति चेत्,

मैवम्, भगवतो हि विभूतिरूपाण्यनन्तानि, तत्र येन रूपेण यत् कार्यं करोति तेन रूपेण समर्थोऽपि तदतिरिक्तं न करोति, तथैव तल्लीला यतः, तथा चान्नमयादिरूपैः क्षुद्राण्येव फलानि ददाति, हीनाधिकारिणां तावतैवाकाङ्क्षानिवृत्तिर्भवति, एवं सति यादृशेनाधिकारेणान्नमयस्वरूपज्ञानं भवति तादृशे तस्मिन् सम्पन्ने तत् ज्ञानमपि तथा, एवमेवोत्तरत्रापि, तथा चाकाशादिरूपमाधिभौतिकस्वरूपमुक्त्वा आध्यात्मिकं तत्[2] पुरुषस्वरूपं वदन्ती पक्षिरूपमाह, यतस्तेनैव रूपेणाधिभौतिके रूपे आध्यात्मिकस्य पुरुषस्य प्रवेशः, तदुक्तं वाजसनेयिशाखायां, 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविश'दिति, वस्तुतस्तु पुरुष एव परन्तु पुरःसम्बन्धी सन् पक्षी भूत्वा पुरः शरीराण्याविशदित्यर्थः, प्राकृतीषु विविधासु पूर्व्वप्राकृतस्यैकविधस्य प्रवेशोऽनुचितो यद्यपि, तथापि स्वप्रवेशं विना न किञ्चिद्भावीति गतिप्रतिबन्धकमुल्लङ्घ्यालौकिकया गत्या प्रविशामीति ज्ञापनाय पक्षिभवनं, स हि तादृशः, अत एव द्विपदश्चतुष्पद ई[3]त्युक्तं, आधिदैविक एक एवेति यः पूर्वस्येति सर्वत्रोक्तम् ।

तर्हि अविकृतब्रह्मरूपस्यान्नमयाद्यन्यतरस्य साधनेन प्राप्तौ, तत्करणेति तपःकरणमित्यर्थः,

समर्थोऽपि वामनरूपेणैवैकरूपेण सर्वकार्यकरणसमर्थोऽपीत्यर्थः, तदतिरिक्तं जलकार्यातिरिक्तं वह्निकार्यं जलेन न करोति एवं वह्निकार्यातिरिक्त जलकार्यं वह्निना न करोतीत्यर्थः, एवमन्यत्राप्यूह्यं, तथैव स्वस्य बहुभवनपूर्वकालेऽस्मिन्नधिकारिण्यनेन साधनेनेदं कार्यं करिष्ये इति विचारितमस्ति तथैवेत्यर्थः, यत इति एकरूपेणैवोच्चनीचनानाविधलीलाकरणे 'सोऽकामयत बहु स्यां प्रजायेय' 'तस्मादेकाकी न रमते' 'स हैतावानासे'त्यादिषूच्चनीचभावेन नानाविधभवनमनुपपन्नं स्याद्यतोऽत इत्यर्थः, इत्थं च सृष्टनानारूपाणां मध्ये येन रूपेण यत्फलं दातु स्वयं विचारितमस्ति तन्मर्यादारक्षायै स्वयं सर्वदा समर्थेभ्योऽपि रूपेभ्यः स्वविचारितमेव फल ददाति नानियतमित्यर्थः, तदेवोपपादयन्ति तथाचेत्यादिना, क्षुद्राण्येव अन्नादिप्राप्तिरूपाण्येव, ददाति उपासकाय भगवान् ददातीत्यर्थः, ननु तेषा रूपाणां क्षुद्रफलदाननिश्चये तेषां उपासनां कः करिष्यतीत्यत आहुः हीनेत्यादि, तावतैव क्षुद्रफललाभेनैव, एवं सति चित्तशुद्धिरूपाधिकारतारतम्येन ज्ञानफलयोः तारतम्ये सति, तादृशे तत्तज्ज्ञानसम्पादके, तस्मिन् अधिकारे, तज्ज्ञानं अन्नमयादिरूपब्रह्मज्ञानं, तथा अधिकारानुरूप, एवमित्यादि तथाचैकैकोपासनया यथा चित्तशुद्धिस्तथोत्तरोत्तरप्रश्नोपदेशोपासनज्ञानफलानि आनन्दमयोपसङ्क्रमान्तानि मर्यादामार्गे बोध्यानीति फलितं, उक्त्वा'तस्माद्वा एतस्मा'दित्यादिनोक्त्वा, तत् पुरुषस्वरूपं आध्यात्मिकाक्षरपुरुषरूपमन्नमयादिचतुष्कं, तेनैव पक्षिरूपेणैव, तदुक्तं भौतिकद्विपदचतुष्पदादिषु पक्षिरूपस्य प्रवेशनमुक्तं, पुरुष एवेति तथा च वस्तुगत्या द्विपदादिपूर्षु आध्यात्मिकः पुरुष एव प्रविशति तथापि शाखान्तरे तस्य पक्षिरूपेण प्रवेशनमुक्तमिति तथैव सिद्धान्तितं, विविधासु द्विपदचतुष्पदादिषु रूपासु, नन्वप्राकृतस्य सदैकरसस्य ब्रह्मण. प्राकृतशरीरेषु प्रवेशोऽसम्भवी निष्प्रयोजनश्चेत्याशङ्कते प्राकृतीष्वित्यादिना, समाधानमाहुस्तथापीत्यादिना, न किञ्चित् तेन शरीरेण भगवद्विचारितं कर्तव्यं न किञ्चिदित्यर्थः, गतिप्रतिबन्धकेत्यादि गतिः क्रिया तस्याः प्रतिबन्धक व्यापकत्व तदुल्लङ्घ्य पुरुषरूपो भूत्वेत्यर्थः, ननु मूर्तत्वमङ्गीकृत्य पुरुषत्वाङ्गीकारे पुरुषरूप एव सर्वशरीरेषु कुतो न प्रविशति इत्यत आह अलौकिकेत्यादि, तथाच पुरुषरूपेण शरीरे प्रवेशे पुरुषाधिकारिकविहितनिषिद्धनिखिलपदार्थानां स्वस्यापि पालनीयतापत्तेः तत्फलभोगापत्तेश्च तेषामनादरे तु वैदिकमर्यादोच्छेद इत्यत अलौकिकविधिनिषेधानर्हपक्षिरूपेण प्रवेशनमिति फलितं, स हि पुरुषो हि, तादृशः सर्वोचितसर्वकार्यकरणसमर्थ., अत एव विचित्रसामर्थ्यादेव, इत्युक्तं द्विपदचतुष्पदकरणमुक्तमित्यर्थः, नन्वेवमधिभूताध्यात्मिकयोरुक्तौ आधिदैविकः कुतो नोक्त इत्यत आहुः आधिदैविक एक एवेत्यादि, आनन्दमय आधिदैविक एक एवोक्त इत्यर्थः, नन्वाध्यात्मिकपक्षिरूपस्य प्रतिजीवं भिन्नत्वेन नानात्ववत् आनन्दमयस्यापि नानात्व कुतो न स्यात्कथमेक एवेत्युक्तमित्यत्रैकत्वे नियामकमाहुः यःपूर्वस्येत्यादि, सर्वत्र पञ्चस्वपि स्थानेष्वित्यर्थः, तथाचानन्दमयस्य परमकाष्ठापन्नब्रह्मत्वेन तद्भेदेऽद्वैतश्रुतीनां सर्वासां विरोधः स्यादत एवैकत्वं तस्य पञ्चस्वपि श्रुतिर्बोधयति यः पूर्वस्येति ।

१. तत्कारणेत्यपि पाठ. । २. तत् पुरुषरूपमित्यपि पाठ. । ३. 'इति' इत्यपि पाठ. ।

नन्वानन्दमयेऽप्येवमुक्तेर्नायमपि परमकाष्ठापन्नरूपः किन्तु पूर्वोक्तेभ्योऽतिशयितधर्मवान् विभूतिरूप एव, न च शिरआदीनामानन्दरूपत्वेनैवोक्तेरयं परमात्मैवेति वाच्यं, अन्नमये यथाऽवयवानान्तद्रूपत्वं तथा आनन्दमयेऽपि तेषां तद्रूपत्वात्, अन्यथा 'तस्यैष एव शारीर आत्मेति न वदेत्' शरीरं हि पूर्वोक्तं, तत्सम्बन्धी हि शारीरस्तद्भिन्नः प्रतीयते, तथा च परब्रह्मत्वं स्वान्यात्मवत्त्वञ्च सर्वश्रुतिविरुद्धं, नन्वेतदतिरिक्तश्चेद् ब्रह्म स्यात्तदानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि वदेत्, नत्वेवमतोऽयं पर एव इति चेत्, न, आध्यात्मिकरूपाणामेवात्र निरूपणात्, तेषां च पञ्चरूपत्वात् तावतामेव निरूपणं, अतोऽस्मादन्य एव पर इति प्राप्ते प्रतिवदति,

## आनन्दमयोऽभ्यासात् ॥ ११ ॥

आनन्दमयशब्दवाच्यः पर एव, कुतः? अभ्यासात्, 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यन्नमयादिषु सर्वत्रैवात्मत्वेनानन्दमयस्यैव कथनात् ।

ननु न किञ्चिन्मानमत्र पश्यामः, किञ्च आनन्दमयस्यैव सर्वत्रात्मत्वेन कथन आनन्दमयेऽपि 'तस्यैष एवे'त्यादि न वदेदयमेव पूर्वस्यात्मेति वदेदतो नानन्दमयः पर इति चेत्,

उच्यते, न हीश्वरादन्यः सर्वेषामेक आत्मा भवितुमर्हति, तस्यानन्दत्वं तु 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति, 'रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दीभवति' 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' 'एष ह्येवानन्दयाती'त्यादिश्रुतिभिर्निर्णीयते

---

एवं विषयवाक्यार्थोक्तौ य· पूर्वः पक्ष उत्तिष्ठति अधिकरणमारचयितु तमाहुः नन्वित्यादि, एवमुक्तेः 'तस्यैष एव शारीर आत्मा य. पूर्वस्ये'त्युक्तेरित्यर्थः, पूर्वोक्तेभ्यः अन्नमयादितुल्य एव नत्वाधिदैविक· परमकाष्ठापन्नवस्तुरूप इत्यर्थ·, शिरआदीनामिति तथाच दक्षिणोत्तरपक्षात्मशिरःप्रभृतिसर्वावयवानामानन्दरूपत्वेनैकरसत्वात्परमात्मैवेत्यर्थ, तद्रूपत्वं निखिलान्नमयावयवानामपि शिर.पाण्यादीनां तद्रूपत्वमन्नमात्ररूपत्वं, अन्यथा आनन्दमयस्य परमात्मत्वे, न वदेत् अन्नमयादितुल्यतया न वदेदित्यर्थ., पूर्वोक्तं आनन्दमयरूप, तत्सम्बन्धी आनन्दमयशरीरसम्बन्धी, तद्भिन्नः आनन्दमयापेक्षया आत्मा भिन्न इत्यर्थः, सर्वश्रुतिविरुद्धं परब्रह्मणि स्वान्यात्मत्वाभावात्सर्वश्रुतिविरुद्धमित्यर्थः, सिद्धान्ती शङ्कते नन्विति, नत्वेव न तु एवमुक्तमित्यर्थः, अत्र कोशनिरूपणप्रस्तावे, पञ्चरूपत्वादिति तेषा चतूरूपत्वेऽपि तत्प्रायपाठात् आनन्दमयस्यापि तद्रूपतया तेषु गणनात्पञ्चरूपत्वोक्तिरिति भावः, अस्मात् आनन्दमयात्, प्रतिवदति सूत्रकारः समाधत्ते, आनन्दमय इत्यादिना ।

तस्येत्यादि तस्य प्राणमयस्य, एष एव पर एव, पूर्वस्य अन्नमयस्य, सर्वत्र प्राणमयादिषु, अन्नमये तु यः पूर्वस्येत्यनेनैव प्राणमयादन्नमयस्य पूर्वत्वात्परात्मत्वं बुद्ध न तु तत्रापि तस्यैष एवेत्याद्युक्तमिति बोध्यम् ।

अत्र आनन्दमयस्य सर्वात्मत्वे, न वदेत् आनन्दमयादतिरिक्तमात्मान न वदेत, परस्मिन् स्वातिरिक्तात्मनोऽभावादित्यर्थ·, अयमेव आनन्दमय एव, पूर्वस्य अन्नमयादिचतुष्कस्य, अतः एवमुक्त्यभावात् ।

उच्यत आनन्दमयस्य परब्रह्मत्वं प्रतिपाद्यते इत्यर्थः, ननु 'तस्यैष एवे'त्यनेन सर्वेषामात्मैवोक्तो न त्वानन्दमय आत्मेति तथाचाक्षरमेव सर्वेषामात्मा स्यान्न त्वानन्दमय इत्यत आहुः, तस्येत्यादि, तस्य सर्वात्मत्वेनोक्तस्य, तथाचान्नमयादिचतुर्णामाध्यात्मिकत्वेनाक्षररूपत्वादक्षरात्मत्वं च नाक्षरस्य किन्तु पर एवाक्षरस्यात्मेति तस्य परमात्मत्वं सिद्ध, ननु तस्य परमात्मत्व सिध्यतामानन्दरूपतायां कि गमकमत आहुः आनन्दत्वं त्वित्यादि, एतस्यैव परमात्माभिन्नस्यैव, अन्यानि भूतानि अस्मदादिब्रह्मान्तानि, मात्रां एकमंशं, अयं परममुक्त्यधिकारी, अन्यात् चेष्टेत, प्राण्यात् श्वासोच्छ्वास कुर्यात्, अत्राकाशपदं व्यापकपरब्रह्मत्वार्थं, एषः परमात्मा, निर्णीयते परमात्मन

---

१. आनन्दरूपत्वमित्यपि पाठः ।

एवं सति तदेकवाक्यतायै प्रकृतोऽप्यानन्दमयशब्दस्तद्वाच्येवेति मन्तव्यं, अन्यथा आनन्दमयादन्योऽन्तर आत्मेत्यपि वदेत् ।

ननूक्तमाध्यात्मिकानामेवात्र निरूपणादित्यादीति चेत्,

न, उक्तरीत्याधिदैविकस्यान्ते निरूपणात्, अत एव भार्गव्यां विद्यायामपि भृगोरन्नमयादिज्ञानानन्तरमपि पुनर्ब्रह्मजिज्ञासोक्ता, नत्वानन्दमयज्ञाने, न हि भृगोराध्यात्मिकज्ञानार्थं प्रवृत्तिः किन्तु ब्रह्मज्ञानार्थमेव, 'अधीहि भगवो ब्रह्मे'ति प्रश्नवचनात् ।

किञ्च, 'ब्रह्मविदाप्नोति पर'मित्युपक्रमादन्ते ज्ञेयानन्दगणनामुक्त्वा 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इतिवाक्यैर्ब्रह्मविदि पुरुष आदित्ये च तदेवाक्षरं ब्रह्म प्रतिष्ठितमिति तदानन्दोऽपि तथैवेति तयोरानन्दयोरैक्यं एवं रूपं ब्रह्मेति यो वेद तस्य क्रमेणान्नमयादिप्राप्तिमुक्त्वा अन्ते वद'त्येतमानन्दमयमात्मानमुपसङ्क्रामती'ति,एवं सत्युपक्रमे परप्राप्तेः फलत्वेनोक्तेः उपसंहारेऽपि तथैव भवितव्यत्वादानन्दमयप्राप्तेरेवान्ते फलत्वेनोक्तेस्तदुत्तरमन्यस्यानुक्तेरानन्दमय एव परः ।

ननूपसङ्क्रमणं ह्यतिक्रमणमतो न तथेति चेत्,

हन्तैवमतिक्रान्तशब्दार्था त्वन्मतिर्भाति, यतः सङ्क्रमणशब्दः प्राप्त्यर्थकः सर्वत्र श्रूयते, अत एव रवेर्मकरादिराशिप्राप्तौ तत्तत्सङ्क्रमणमित्युच्यते, न चेयं न परममुक्तिः, 'अस्माल्लोकात् प्रेत्ये'ति पूर्वमुक्तेः,अत एव पुरुषोत्तमानन्दानुभवे सत्यनुभवैकगम्योऽयमानन्दो न मनोवाग्विषय इति ज्ञात्वा, लोकवेदकालादिभ्योऽपि न बिभेतीति 'यतो वाच' इति श्लोकेनोक्तवती, अन्यथा

---

आनन्दरूपत्वं निर्णीयते, तस्यानन्देत्यारभ्य निरूपणस्य प्रयोजनमाहुः एवं सतीत्यादि, तदेकवाक्यतायै 'ब्रह्मविदाप्नोति पर'मित्युपक्रमे परस्योपक्रान्तत्वान्मध्ये च 'सोऽश्नुत' इत्यनेन परस्यैव निरूपणात् अन्ते च 'एतमानन्दमयमात्मानमुपसङ्क्रामती'त्युपसंहारादुपक्रमबलीयस्त्वेनानन्दमयशब्दस्य परपदार्थैनैकवाक्यताबोधायेत्यर्थ., प्रकृतोऽपि एतत्प्रकरणपठितोऽपि, तद्वाच्येव परवाच्येवेत्यर्थः, अन्यथा आनन्दमयस्य परमात्मत्वाभावे, इत्यपि वदेत् तथाच यथान्नमयादिनिरूपणानन्तर 'तस्मादन्योऽन्तर आत्मा प्राणमय' एव विज्ञानमयपर्यन्त निरूप्याग्रे आनन्दमयनिरूपणोत्तरं तथा नोक्तमिति ज्ञायते तत. परः कोऽपि नास्तीति ।

वादी शङ्कते नन्विति, अत्र कोशनिरूपणप्रसङ्गे, तथाचानन्दमयस्यापि तन्मध्यपाठादाध्यात्मिकत्वमिति भावः ।

उक्तरीत्या परपदार्थैकवाक्यतयानन्दमयस्यापि परत्वमित्युक्तरीत्येत्यर्थः, अन्ते ब्रह्मप्रपाठकान्ते, निरूपणात् 'एतमानन्दमयमात्मानमुपसङ्क्रामती'त्यनेन निरूपणादित्यर्थः, अत एव आनन्दमयस्य परब्रह्मत्वादेव, अन्नमयेत्यादि अन्नमयादिविज्ञानमयान्तानां ज्ञानानन्तरमपीत्यर्थः ।

आनन्दमयस्य परत्वे साधकान्तरमाहु किञ्चेत्यादि, तदानन्दः अक्षरानन्दः, तथैव पूर्वोक्तानन्दगणनायां गणितत्वेनोक्तरूप एव, तयोः पुरुषादित्यस्थितयो', एवं रूपं पूर्वोक्तस्वरूपं, ब्रह्म अक्षरं ब्रह्मण एव भवितव्यत्वादित्यर्थ., उक्तेः सकलसाधनसम्पत्त्युत्तरं प्रपाठकान्ते 'एतमानन्दमयमात्मानमुपसङ्क्रामती'त्युक्ते', परः परं ब्रह्मेत्यर्थ',

अनभिज्ञ आशङ्कते नन्विति, अतिक्रमणमिति यथा चान्ते आनन्दमयमतिक्रम्य परम्ब्रह्म प्राप्नोतीत्यर्थो भवति, अतः अतिक्रमणरूपार्थकरणात्, न तथा आनन्दमयो न परम्ब्रह्म ।

हन्त इति मतिः खेदरूपा, तत्र हेतुः यत इत्यादि, उच्यते 'कार्मुकं तु परित्यज्य झषं सङ्क्रमते रवि'रितिस्मृतौ प्राप्त्यर्थक उच्यत इत्यर्थः, इयं आनन्दमयप्राप्तिः, समाधानमाहुरस्मादित्यादि, तथा च संसारोत्तरणानन्तरमानन्दमयप्राप्तेरुक्तत्वात् सा परममुक्तिरेवेति फलितं, आनन्दमयप्राप्तेः परममुक्तित्वे उपष्टम्भकमाहुः अत एवेत्यादि, अनुभवैकगम्यः भगवत्कृतवरणादिसामग्रीतोऽनुभवैकगम्यः, अयं आनन्दमयपदवाच्यः, न मन इत्यादि स्वसामर्थ्येन न मनोवाग्विषय इत्यर्थः, उक्तवती 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'तिभागेनोक्तवतीत्यर्थः, अन्यथा स्वसामर्थ्येन मनोवागविषयत्वं भगवद्दत्तसामर्थ्येन च मनोवागादिविषयत्वमित्यर्थानङ्गीकारे, कथं

आनन्दे मनसोऽप्यगम्यत्वमुक्त्वा विद्वानिति कथं वदेत्? एवं सति 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यृचि यत् फलमुक्तं तदेवान्ते विवृतमिति ज्ञायते, अन्यथा 'अस्माल्लोकात् प्रेत्ये'त्युक्तत्वात् देहाभावेन भयानुपस्थित्या तन्निषेधासम्भवः कामभोगासम्भवश्च, अत एव सामानाधिकरण्यमनुक्त्वा आनन्दं ब्रह्मण इत्युक्तं, एतेन लौकिकं पूर्वदेहं त्यक्त्वा साक्षाद्भगवद्भजनोपयोगिनं भगवद्विभूत्यात्मकं सङ्घातं प्राप्नोत्यादौ, तथाहि देहेन्द्रियप्राणान्तःकरणजीवात्मको हि सङ्घातः, तत्र स्थूलं शरीरमाद्यविभूतिरूपं, द्वितीयं स्पष्टम्, तृतीयं सर्वेन्द्रियसम्बन्धित्वेनेन्द्रियरूपत्वेन चान्तःकरणात्मकत्वेन चेन्द्रियान्तःकरणरूपं, तुरीयं जीवतत्त्वात्मकं, यत्र गुहायां भगवद्गुणेन परमव्योमाविर्भावस्ततः पूर्णानन्दात्मकं पुरुषोत्तमस्वरूपं फलरूपं प्राप्य उक्तऋगर्थरीत्या तेन सह सर्वकामाशनमेव मनोवागविषयानन्दवेदनं तद्वान् भवतीति वाक्यैकवाक्यतयावगम्यते ।

अथेदं विचार्यते, 'पुरश्चक्रे द्विपद' इति श्रुतौ वस्तुतस्तु पुरुष एव परन्तु पुरःसम्बन्धी सन् पक्षी भूत्वा पुर आविशदिति निरूपितं, प्रकृते चान्नमयादयस्तथैवोक्ताः, एवं सत्येकस्यां पुरि बहूनां तेषां प्रवेशो न वक्तुमुचितः प्रयोजनाभावादित एकैकस्यां पुरि तथा वाच्यः, तत्र कीदृश्यां तस्यां कस्य प्रवेश इति विचार्यमाणेऽप्राकृतत्वब्रह्मत्वयोरविशेषात् विनिगमकाभावात् सर्वेषां सर्वत्र प्रवेशोऽप्रवेशो वा भवेदिति चेत्,

---

वदेदित्युपलक्षणं, तेन 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदि'त्यप्यनुपपन्नं स्यादिति बोध्यं, तदेव ऋगुक्तमेव, अन्ते प्रपाठकान्ते, विवृतं 'यतो वाचो निवर्तन्त' इति श्लोकेन विवृतं, आनन्दमयप्राप्तेः परममुक्तित्वे विनिगमकमाहुः अन्यथास्मादिति, अन्यथा भयाभावोक्तेः परममुक्तिलिङ्गबोधकत्वाभावे, तथाच भयाभावपरममुक्तिलिङ्गेनाप्यानन्दमयप्राप्तेः परममुक्तित्वं सिद्धं, अन्यथा देहादिरूपभयसामग्र्यभावेनाभयबोधकश्रुतिवैयर्थ्यं स्यादित्यर्थः, लौकिकदेहस्य गतत्वाद्ब्रह्मानन्दज्ञानरूपपरममुक्तिदशायां वरणेनाग्रे भक्त्या प्राप्यालौकिकदेहस्य चाभावेन मध्यदशायां कामभोगः 'सोऽश्नुते' इत्यनेनोक्तोऽप्यसम्भवीत्याहुः कामभोगेत्यादिना, अत एव ब्रह्मानन्दवेदनस्य परममुक्तिरूपस्य संसारावस्थाफलभोगावस्थयोर्मध्यस्थत्वादेव, सामानाधिकरण्येत्यादि संसारावस्थफलावस्थदेहयोरानन्दज्ञाने सामानाधिकरण्यमनुक्त्वा 'आनन्दं ब्रह्मणो विद्वानि'त्यनेन भक्तिफलपूर्वदशारूपा मुक्तिरेवोक्तेति बोध्यं, 'सोऽश्नुते' इति विवरणस्य सिद्धं फलमाहुः एतेनेत्यादि, एतेन विवरणऋचि उक्तफलभोगस्यालौकिकदेहं विना लौकिकदेहेनासम्भवेनेत्यर्थः, आदौ लीलाप्रवेशपूर्वं विरहपूर्णतादशायां, विभूतिरूपसङ्घातमेवोपपादयन्ति तथाहीत्यादिना, आद्यविभूतिरूपं अन्नमयविभूतिरूपं, द्वितीयं प्राणमयविभूतिरूपं, तृतीयमनोमयविभूतिरूपस्येन्द्रियान्तःकरणरूपत्वे हेतुमाहुः तृतीयमित्यादि, तुरीयं विज्ञानमयविभूतिरूपं, तत् जीवस्वरूपाद्भिन्नं बुद्ध्यात्मकान्तःकरणवृत्तिरूपं भविष्यतीतिशङ्काव्युदासायाहुः जीवेत्यादि, तथाच लीलाविशिष्टभगवत्साक्षात्काराधिकारी जीव एव विज्ञानमयशब्देनोच्यत इति फलितं, यत्र जीवतत्त्वपदवाच्ये विज्ञानमये, ततः गुहायां निहितस्य वेदनानन्तरं, तेन पूर्णानन्दपुरुषोत्तमेन, ननु 'एतमेतमानन्दमयमात्मानमुपसङ्क्रामती'त्यत्रानन्दमयप्राप्तिमात्रस्योक्तत्वादृगर्थो भक्तप्राधान्यतया लीलाकरणरूपो वक्तुं कथं शक्यत इत्यत आहुः मनोवागविषयेत्यादि, तथाचोपक्रमे विवरणं चेमुक्त्वोपसंहारे मनोवागविषयत्वमुक्त्वा 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'त्युक्तं, इत्थं च मनोवागविषयस्य वेदनं न लौकिकसाधनसाध्यं किन्तु फलरूपः परमानन्द एव तद्वेदने हेतुर्वाच्य इति फलरूपप्रधानस्यैव गौणत्वं साधनरूपत्वमुक्तं, ऋच्यपि प्रधानस्य गौणीभूय लीलाकरणत्वमुक्तमिति, आनन्दसङ्क्रमणश्रुत्यापि एकवाक्यतया ऋगर्थ एवोक्त इति नानुपपत्तिलेशोऽपीति बोध्यम् ।

वाजसनेयके पुरुषस्य पक्षिरूपेण पुरः प्रवेश उक्तः तैत्तिरीयके चान्नमयादिपञ्चविभूतिरूपाणामेव पक्षिरूपेण पुरः प्रवेश उक्तः, स चाग्रिमलीलानिष्पत्त्यर्थ एवेति तच्छ्रुत्यर्थाविचारे तत्स्फुटं ज्ञातुमशक्यमिति पक्षिप्रवेशबोधकश्रुतिविचारं प्रतिज्ञाय तद्विचारबीजं वक्तुं प्रथमतो विषयमाहुः अथेदमित्यादि, प्रकृते तैत्तिरीयशाखायां, तथैव पक्षिरूपेण प्रवेशकर्तारः, एवं सति अन्नमयादिपञ्चसु पूर्षु अन्नमयादिपञ्चविभूतिरूपपक्षिणां प्रवेशस्य प्राप्तत्वे सति, एकस्यां पञ्चानां मध्ये एकस्यां, तेषां विभूतिरूपाणां पञ्चपक्षिणां, तथा वाच्यः एकैकस्य प्रवेशो वाच्यः, अप्राकृतत्वेत्यादि तथाच पञ्चस्वपि पक्षिषु अप्राकृतत्वब्रह्मत्वयोस्तुल्यत्वादित्यर्थः ।

अत्रेदं प्रतिभाति, 'अस्माल्लोकात् प्रेत्ये'तिवाक्ये इदंशब्दप्रयोगात् प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोतीत्यवगम्यते, तत्प्राप्त्यैव भगवद्भावे सम्पन्ने पूर्वं भगवद्विरहभावेनातितीव्रत्वेन सर्वोपमर्दिना शरीरेन्द्रियप्राणान्तःकरणानि नष्टान्येव स्युर्यदि तत्तद्रूपं ब्रह्म तेषु तेषु न प्रविष्टं स्यात्, जीवस्य च ब्रह्मण्येव लयेन लीलारसाननुभवेन नाश एव सः, तथा च तत्तद्रूपं ब्रह्म तेषु तेषु स्थितमिति न तेषां नाशः, जीवे त्वानन्दमयः पुरुषोत्तमः प्रविशतीति रसात्मकत्वादानन्दात्मकमेव विरहभावरसाब्धिमनुभूय पश्चात् प्रादुर्भूतं प्रभुस्वरूपं प्राप्य 'न बिभेति कुतश्चने'तिवाक्येन लोकात्तद्भावमुक्त्वा 'एतꣳ ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव'मितिवाक्यैर्वेदाद्भयाभाव उच्यते, शरीरप्राणमनोन्तःकरणजीवात्मनां शरीरत्वं वाजसनेयिशाखायामन्तर्यामिब्राह्मणे पठ्यते 'यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक् शरीर'मित्यादेरन्ते 'यस्यात्मा शरीर'मिति, अत्र पूर्वोक्तनिर्गुणदेहानां भगवच्चरणरेणुजत्वेन भूतरूपत्वात् ब्रह्मशरीरत्वं, तत्रान्नमयतत्प्रवेशेन तत्स्थितिः, प्राणेष्वपि तथा, ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात्तथा, मनसि मनोमयप्रवेशात्तथात्वं, जीवे त्वानन्दमयः प्रविशतीति तथात्वमतो युक्तं पक्षित्वकथनं, आनन्दमयस्य स्वरूपं विशेषतो

---

समाधानमाहुरत्रेदमित्यादिना, इतिवाक्ये 'अस्माल्लोकात्प्रेत्य तमेतमानन्दमयमात्मानमुपसङ्क्रामती'तिवाक्ये, इदमित्यादि सन्निकृष्टार्थबोधकेदंशब्दप्रयोगादित्यर्थः, इत्यवगम्यते सन्निकृष्टार्थत्यागोक्त्या भयाभावोक्त्यानन्दवेदनोक्त्या 'एवं पश्यन्नेवं मन्वान एवं विजानन्नि'त्याद्युक्त्या च अवगम्यत इत्यर्थः, तत्प्राप्त्यैव गुणातीतभगवल्लीलोपयोगिदेहप्राप्त्यैव, भगवद्भावे रसात्मकभगवद्भावे, पूर्वं संयोगात्मकरसदललाभात्पूर्वं, शरीरेत्यादि गुणातीतलीलोपयोगिशरीरेन्द्रियप्राणान्तःकरणानीत्यर्थः, तत्तद्रूपं अन्नमयादिपञ्चात्मकानि पक्षिरूपाणीत्यर्थः, तेषु तेष्वित्यादि अन्नमयेऽन्नमयं प्राणमये प्राणमय मनोमये मनोमय विज्ञानमये विज्ञानमयं ब्रह्मात्मक पक्षिरूपं प्रविष्टं न स्यादित्यर्थः, ननु जीवस्य नित्यत्वेन नाशासम्भवात् स एव लीलारसानुभवं स्वप्रकाशचिता करिष्यतीत्यत आहुः जीवस्येत्यादि, लयेनेत्यादि तथाच सायुज्यमुक्त्यात्मकलये सम्पन्ने तस्य च 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इत्यनेनाफलत्वकथनात्फलनाशेन नाश एव फलाविशिष्टस्येतिभावः, फलितमाहुस्तथा चेत्यादि, तत्तद्रूपं अन्नमयादिप्रत्येकरूपं, तेषु तेषु अन्नमयादिस्वसजातीयेषु तेषु तेष्वित्यर्थः, तेषां अलौकिकशरीरघटकानां पञ्चकोशानां, जीवे तु इति तुशब्देन जीवातिरिक्तेषु पुरुषोत्तमविभूतिरूपाणां प्रवेशो न तु साक्षादानन्दमयपुरुषोत्तमस्येति बोधितं, प्रादुर्भूतं गुहायां निहितमनुभूतमित्यर्थः, इत्थं च 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यादिना बोधितोऽभेदो न विज्ञानमयजीवप्रविष्टेन वक्तुं शक्यः किन्तु पूर्वेषु प्रविष्टानां सर्वेषामभेदमात्र पुरुषोत्तमे प्रतिपाद्यत इति बोध्यं अन्यथा जीवे त्वानन्दमय इत्यस्यासङ्गतिः स्यादिति भावः, प्राप्तपूर्णानन्दस्य भक्तस्यावस्थामाहुः न बिभेतीत्यादिना, वेदाद्भयाभाव इति तथा च प्राप्तपरमदशायां पूर्वकृतपुण्यपापपुञ्जानामनुसन्धानं कृत्वा तेषां फलभोगाभावं स्वस्मिन्निश्चित्य वेदात् वेदाविहितनिषिद्धकरणात् यद्भयं तदभाववान् भवतीत्यर्थः, ननु 'तस्यैष एव शारीर आत्मे'त्यादिनाऽन्नमयादीनां शरीरत्वं ब्रह्मणश्चात्मरूपत्वमुक्तं तत्र किं मूलमित्यत आहुः शरीरेत्यादि, शरीरत्वं ब्रह्मशरीरत्वं, अत्र ग्रन्थे, पूर्वोक्तेत्यादि लीलानुभवार्थं पूर्वमुक्तानामित्यर्थः, भगवच्चरणेत्यादि 'या वै लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्बुनेत्री'त्यत्र सुबोधिन्यां सिद्धमवसेयं, भूतरूपत्वात् अलौकिकलीलोपयोगिशरीरघटकविभूतिरूपभूतरूपत्वादित्यर्थः, ब्रह्मशरीरत्वं पूर्वोक्तशरीरप्रभृतीनां ब्रह्मशरीरत्वं, तत्प्रवेशेन ब्रह्मप्रवेशेन, तत्स्थितिः विरहदशायामन्नमयस्य स्थितिः, तथा प्राणमयब्रह्मणः प्रवेशेन प्राणमयस्य स्थितिः, ननु जीवस्य वरणेनैव सर्वसामर्थ्यसिद्धेस्तत्र विज्ञानमयप्रवेशो व्यर्थ इतिप्राप्तशङ्कावारणाय मध्य एव समाधानमाहुः ज्ञानेन्द्रियेष्वित्यादि, तथा च विज्ञानमयप्रवेशाधिकरणं ज्ञानेन्द्रियाण्येवान्यथा तेषां लीलारसानुभवसामर्थ्यं न स्यादित्येतदर्थं तेषु

---

१. विभूतिभूतरूपत्वादित्यपि पाठः ।

वक्तुमशक्यमिति 'यः पूर्वस्ये'ति सर्वत्रोक्तं, शरीरप्रवेशप्रयोजनकपक्षिरूपित्वं पञ्चस्वपि साधारणमिति तेषु तथा वदन्त्यानन्दमयेऽपि तथोक्तवती[1] श्रुतिरिति ज्ञेयं, एवं सति स्पर्शमणिसम्बन्धेन रजतादेर्हेमत्वमिवोक्तप्रकारकप्रवेशादाश्रयाणामपि तत्तदात्मकत्वमित्युच्यते, वस्तुतस्तु परोक्षवादोऽयमिति ज्ञायते, तथाहि 'ब्रह्मविदाप्नोति पर'मितिवाक्येन ब्रह्मविदः परप्राप्तिं सामान्यत उक्त्वा तत्तात्पर्यं 'सत्यं ज्ञान'मित्यृचोक्तं, तत्र सर्वात्मभाववान् भक्तो भगवता सह तत्स्वरूपात्मकान् कामान् भुङ्क्ते इत्युक्तव्याख्यानेन तदर्थोऽवधार्यते, उक्तभक्तस्य सदैव विरहभावे तु विशेषतः प्रियस्वरूपातिरिक्तास्फूर्त्या अन्नप्राणादिरूपः स एवेतिज्ञापनाय तत्तद्रूपत्वमुच्यते, तेन परमप्रेमवत्त्वं सिध्यति, ततो भगवदाविर्भावे सत्यपि पूर्वभावस्यातितीव्रत्वेन ज्ञानादिसर्वतिरोधानेनाग्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवतीतिज्ञापनाय विज्ञानरूपत्वमुच्यते, तदानुभवविषयः प्रकट आनन्दमय इति तत्स्वरूपमुच्यते, तत्र निरुपधिप्रीतिरेव मुख्या नान्यदितिज्ञापनाय प्रियस्य प्रधानाङ्गत्वमुच्यते, तदा प्रियेक्षणादिभिरानन्दात्मक एव विविधरसभावसन्दोह उत्पद्यते यः स दक्षिणः पक्ष उच्यते, ततः स्पर्शादिभिः पूर्वविलक्षणः प्रकृष्टानन्दसन्दोहो यः स उत्तरः पक्ष उच्यते, नानाविधपक्षसमूहात्मकत्वात्तयोः पक्षयोर्युक्तं तथात्वं, स्थायिभावस्यैकरूपत्वादात्मत्वमुच्यते,

---

विज्ञानमयप्रवेशो न तु जीवेऽपीत्यर्थः, विशेषतो वक्तुमशक्यमिति 'यतो वाचो निवर्तन्त' इतिवाक्यात्स्वसामर्थ्येन वक्तुमशक्यमिति फलितं, पञ्चस्वपि आनन्दमयान्तेषु, तथोक्तवती प्रवेशमुक्तवती, तथा च तस्य पक्षित्वनिमित्तमेव तथावचनं नतु तत्र प्रवेशे किञ्चित्प्रयोजनमस्तीति भावः, उक्तेत्यादि पक्ष्याकारपुरुषोत्तमप्रवेशादित्यर्थः, आश्रयाणां अन्नमयादिचतुर्णां, तदात्मकत्वं भगवद्रूपत्वं, गूढाभिसन्धिमुद्घाटयन्ति वस्तुतस्त्वित्यादिना, परोक्षवादः 'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे परोक्षवाद ऋषयः परोक्षं च मम प्रिय'मितिवाक्यात, अयं विभूतिरूपकोशेष्वन्नमयादिषु पक्षिरूपेण प्रवेशनपदार्थः, परोक्षवादमेवोपपादयन्ति तथाहीत्यादिना, सामान्यतः विवरणऋचि वक्ष्यमाणप्रकारमनुद्घाट्येत्यर्थः, तत्तात्पर्यं 'ब्रह्मविदाप्नोति पर'मितिवाक्यतात्पर्यमित्यर्थः, तदर्थः विवरणऋगर्थः, उक्तभक्तस्य भगवच्चरणरेणुजन्यदेहवत्त्वेन परमव्योम्नि दृष्टभगवद्रूपत्वेनाग्रे भगवता सह सर्वकामाशनयोग्यस्य, सदैव विरहभावे 'तत्र सर्वात्मभाववान्' इत्याद्युक्तसर्वात्मभावपदवाच्यविरहभावस्य सर्वदा सत्त्वे, अन्नप्राणादिरूप इति तथाच तादृशभक्तानां सर्वदैव भगवदतिरिक्ता स्फूर्तिरस्ति तथापि विप्रयोगस्यातितीव्रत्वेन कालान्तरीणस्फूर्तिसमानविषयस्फूर्तौ भक्तदेहादि तिरोहितमेव स्याद्यदि तेषामन्नप्राणमनोरूपो भगवान्न भवेदित्यर्थः, स एवेत्येवकारेण तद्दशायामतद्रूपत्वव्यवच्छेदः, तत्तद्रूपत्वं भक्तीयान्नमयादेराध्यात्मिकस्य भगवदीयाधिदैविकान्नमयादिरूपत्वमित्यर्थः, तेन भक्तीयान्नमयादिषु भगवतः प्रवेशेन, सिद्ध्यतीति तादृशप्रवेशाभावे तु तादृशयोग्यताया असत्त्वेन परमप्रेमाधिकरणतानुपपन्नैव स्यादित्यर्थः, ततः परमप्रेमसिद्ध्यनन्तरं, ज्ञानादिसर्वेत्यादि ज्ञानेन्द्रियाणां तथा सामर्थ्याभावेन ज्ञानेन्द्रियकार्यस्य तिरोधानेनेत्यर्थः, स्वयमेवेत्यादि भक्तज्ञानेन्द्रियेषु विज्ञानमयस्य स्वस्य प्रवेशेन तदिन्द्रियाणां भगवद्रूपत्वेन तदिन्द्रियसम्पाद्यानुभवस्यापि भगवद्रूपत्वात् स्वयमेव भक्तानुभवरूपो भवतीति बोध्यं, विज्ञानरूपत्वं भक्तेन्द्रियेषु ज्ञानजनकेषु विज्ञानमयप्रवेशेन तेषां भगवद्विज्ञानरूपत्वं, तदा पुरुषोत्तमस्य भगवदीयप्रवेशानन्तरकाले, अनुभवविषयः भक्तानुभवविषयः, प्रकट इत्यादि भक्तलौकिकप्रत्यक्षविषयः, तत्स्वरूपं अनुभवविषयानन्दमयस्वरूप, उच्यते 'तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठे'तिश्रुत्या कल्पनयोपदिश्यत इत्यर्थः, इत आरभ्यैव कल्पनोपदेशो बोध्यो न तु पूर्वोक्तेऽपीति ध्येयं, प्रियस्य आनन्दस्य, प्रधानाङ्गत्वं 'तस्य प्रियमेव शिर' इत्यनेन शिरोरूपत्व, दक्षिणः पक्ष उच्यते कल्पनयोच्यत इत्यर्थः, एवमग्रे सर्वत्रापि कल्पनोपदेशो ज्ञेयः, पक्षसमूहेति नानाविधान्तररससमूहेत्यर्थः, तयोः दक्षिणोत्तरत्वेन निर्दिष्टयोः, तथात्वं पक्षत्वेन निर्वचनं, स्थायीत्यादि शृङ्गारे स्थायिभावस्य रतिपदवाच्यानन्दस्य पक्षवन्नानावयवत्वाभावादेकात्मरूपत्वमुक्तं तस्यैव तद्रसे

---

१. तथैवोक्तवतीत्यपि पाठः ।

यतस्तत एव विभावादिभिर्विविधभावोत्पत्तिः, परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोऽपि यः पूर्वमनुभूतः स गणितानन्द इत्येतदानन्दानुभवानन्तरं तुच्छत्वेन भातीष्टगताव- साधनत्वेन स्वरूपतोऽपि तस्माद्धीनत्वं चेति पृष्ठभागादपि दूरस्थितपुच्छरूपत्वं ब्रह्मण उच्यते, पुरुषोत्तमाधिष्ठानत्वात् प्रतिष्ठारूपत्वं च, एवं सत्यक्षरादप्युत्तमत्वेऽप्यप्रधानीभूय भक्तकामपूरणकर्तृत्वेऽसम्भावना विपरीतभावना च सम्भवति तदभावा'यासन्नेव स भवती'त्याद्युक्तं, स्वानुभवाभावेऽपि गुरूपदेशेनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविदः सन्तं सत्त्वधर्मविशिष्टं वर्तमानं च विदुरित्यग्रेऽवद'दस्ति ब्रह्मेति चे'दित्यादिना, ब्रह्मासत्त्वज्ञाने'ऽसन् भवती'त्युक्त्वा तदस्तित्वज्ञाने सन् भवतीत्यनुक्त्वा 'सन्तमेनं विदुरि'ति तत्त्वेनान्यज्ञानं यदुक्तं तेनोक्तपुरुषोत्तमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदुः, अननुभवे केवलं गुरूपदेशादिना तादृक्ब्रह्मास्तित्वज्ञाने स्वरूपतः सन्तं तं विदुर्न तु ज्ञानादिमन्तं, तदसत्त्वज्ञाने त्वलीकतुल्यमितिश्रुतितात्पर्यमिति ज्ञायते ।

एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे ।
आनन्दमयतानन्दसन्दोहायावधार्यते ॥ ११ ॥

42737б

नन्वानन्दमयस्य न ब्रह्मता वक्तुं शक्या, मयटो लोके विकाराधिकारविहितत्वादित्याशङ्क्य स्वयमेव परिहरति,

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥

अनेनैव पूर्वसूत्रार्थः सिद्धो भविष्यति ।

28 ... 19 37

---

आत्मस्वरूपत्वादित्यर्थः, तत एव स्थायिभावत एव, न तु स्थायिभावशून्यस्य वैयाकरणादेः रसकारणसम्भवः रतिशून्यस्य ज्ञानिनो वा, विभावादिभिरित्यादिपदेन व्यभिचारभावालम्बनोद्दीपनभावा ग्राह्याः, विविधभावोत्पत्तिरिति पूर्वभावानुकारिविविधभावोत्पत्तिरित्यर्थः, 'ब्रह्म पुच्छ प्रतिष्ठे'त्यस्यार्थं वक्तुमाहुः परप्राप्तीत्यादि, ब्रह्मज्ञानेत्यादि, 'ब्रह्मविदाप्नोति पर'मितिवाक्योक्ताक्षरज्ञानदशायामित्यर्थः, तदानन्दः अक्षरानन्दः, पूर्वं अक्षरज्ञानदशायां, इष्टगतौ 'सोऽश्नुते सर्वान्कामानि'तिफलप्राप्तौ, असाधनत्वेन सर्वात्मभाववत्साक्षादसाधनत्वेन, स्वरूपतोऽपि गणितानन्दस्वरूपतोऽपि, तस्मात् पुरुषोत्तमानन्दात, पृष्ठभागात् पुरुषोत्तमपृष्ठभागात्, ब्रह्मण. अक्षरब्रह्मणः, एवं सति पूर्वोक्तरीत्या श्रुत्यर्थपरिष्कारे सति, अप्रधानीभूय 'सह ब्रह्मणा'इत्यत्र भक्तस्य प्राधान्येन स्वयमप्रधानीभूय लीलाकरणेन, असम्भावना नेदं ब्रह्म पर किन्तु तद्विभूतिरूपः कश्चिदन्य एव भविष्यत्यन्यथा स्वयमप्रधानीभूय न क्रीडेतेत्येवंरूपासम्भावना, विपरीतभावना 'सह ब्रह्मणा' इत्यत्र ब्रह्मपदोपादानादप्रधानत्वस्यापि बोधनाद्ब्रह्मैव मायिक मायोपाधिकं विग्रहं स्वीकृत्य क्रीडते नत्वानन्दात्मकविग्रहेणापि अन्यथा तस्य क्रीडायामप्राधान्यं न स्यादिति विपरीतभावना, तदभावाय परब्रह्मणि असम्भावनाविपरीतभावनयोरभावाय, 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रित्युक्तमित्यर्थः, श्रुतिपूर्वार्द्धेनोक्ताशङ्कां निरस्य श्रुत्युत्तरार्द्धस्यार्थं वक्तुमाहुः स्वानुभवेत्यादि, तदस्तित्वेत्यादि अस्तित्वमात्रपदेनैश्वर्यादिव्यवच्छेदः, अग्रे उत्तरार्द्धे, अवदत् श्रुतिवक्तावदत्, तत्त्वेन सत्त्वेन वर्तमानत्वेन चेत्यर्थः अन्यज्ञानं विदुरितिक्रियाकर्तृणां ज्ञानं, उक्तसूत्रार्थमुपसंहरन्ति एवमित्यादिना ॥ ११ ॥

161-5
331

सूत्रान्तरमवतारयन्ति नन्वित्यादिना, स्वयमेव सूत्रकार एव ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥ ननु पूर्वसूत्रेणैवानन्दमयस्याभ्यासेनान्नमयाद्याध्यात्मिकेभ्यः उत्कृष्टाधिदैविकरूपत्वं साधितमेवेति किमनेन सूत्रेण सेत्स्यतीत्यत आहुः अनेनैवेत्यादि, पूर्वसूत्रार्थः आनन्दमयस्याविकृतब्रह्मतारूप.,

विकारवाची शब्दो मयट्प्रत्ययो यस्मिंस्तद्विकारशब्दं तस्मात्तच्छब्दवाच्यं ब्रह्म न भवति ब्रह्मणोऽविकारित्वादिति चेत्,

नात्र विकारे मयट् किन्तु प्राचुर्यात्, प्राचुर्यं अतति प्राप्नोतीति प्राचुर्यात्, तथा च पाणिनिः 'तत्प्रकृतवचने मयट्', तेन प्रस्तुतं तद्वचनं तत्प्रकृतवचनं तस्मिन् मयट्प्रत्ययो भवतीत्यर्थः, प्राचुर्येण पूर्वापेक्षयाप्याधिक्येन 'को ह्येवान्यात् कः प्राण्या'दितिवाक्ये प्रकर्षेण स्तुतं, अतो मयट् पूर्वापेक्षया प्राचुर्यमयते, एकदेशनिर्देशेन तदर्थलक्षणया प्राचुर्यः, प्राचुर्येण प्रस्तुतार्थवाचकत्वादित्यर्थ इति वा, छन्दसि द्व्यज्व्यतिरिक्तस्थले मयटो विकारे विधानाभावात् व्याकरणमप्यर्थनिर्णायकं, विज्ञानमयानन्दमयशब्दौ पश्यन्नपि पाणिनि'र्मयड्वैतयोर्भाषायां' 'द्व्यचश्छन्दसी'ति कथमवोचत्?

अत्र केचित्सर्वविप्लववादिनो विकारार्थत्वं वदन्ति श्रुतिसूत्रादीनामर्थाज्ञानात्, तद् वेदाद्यर्थविद्भिर्भगवतो नवमावतारकार्यं ज्ञात्वोपेक्ष्यं, योऽर्थस्तमवोचाम ॥ १२ ॥

---

सूत्रार्थमाहुः विकारवाचीत्यादि, तच्छब्दवाच्यं विकारार्थकप्रत्ययान्तशब्दवाच्यम्,

अत्र आनन्दमयशब्दे, 'तत्प्रकृतवचने मयट्' इतिपाणिनीयसूत्रार्थमाहुः तेन प्राचुर्येण, प्रस्तुतं स्तुतिविषयीभूतं आनन्दशब्दार्थरूपं वस्तु, तद्वचनं तद्वचनान्तबोधनं मयट्शब्देन, तस्मिन्नित्यादि तथा च व्यापकानन्दबोधकानन्दशब्दार्थः परब्रह्मानन्दरूपस्तदर्थक एवात्र मयट्प्रत्यय इतिपाणिनीयसूत्रार्थः सिद्धः, पूर्वापेक्षया अन्नमयादिचतुष्टयापेक्षया, अयते गमयत इत्यर्थः, नन्वानन्दमयशब्दे मयट्प्रत्ययः प्राचुर्यार्थक एवास्तु तथापि स प्राचुर्यमेव बोधयेन्न तु प्रचुरानन्दमित्यत आहुः एकदेशेत्यादि, तथा च यथा 'सोमेन यजेते'त्यत्र सोमपदस्य मत्वर्थलक्षणया धर्मिबोधकता तद्वन्मयटोऽपि मत्वर्थलक्षणया प्राचुर्यविशिष्टानन्दबोधकतेत्यर्थः, प्राचुर्यः प्राचुर्यवानित्यर्थः, प्राचुर्यादितिपञ्चमीपक्षे मयटा शक्त्या धर्मिबोधनार्थमाहुः प्राचुर्येणेत्यादि, तथा च प्राचुर्येण प्रस्तुतः 'को ह्येवान्या'दित्यादिना स्तुतः प्रचुरानन्दः तद्वाचक इति, तथा च वैयाकरणानां मते प्रत्ययानां विशिष्टे शक्तिः विशिष्टस्य प्रकृत्यर्थेऽभेदेनान्वयः, इत्थं च शक्त्या मयट् प्राचुर्यवतो बोधकः, प्राचुर्यवतश्चानन्दशब्दार्थेऽभेदेनान्वय इति परिष्कारो बोधकः, एवं मयट् इति शक्त्यैव प्रचुरानन्दं धर्मिणं बोधयतीत्यर्थः, अत्रत्यमयटो विकारार्थत्वाभावे गमकमाहुः छन्दसीत्यादि, मयट् इत्यस्यानन्तरं विकारार्थस्येति शेषः, छन्दसि द्व्यज्व्यतिरिक्ताद्यचः सकाशान्मयटो विकारार्थत्वे बाधमाहुः व्याकरणमित्यादिना, द्व्यच इत्यादि एतयोरर्थयोः छन्दसि द्व्यच एव भवति त्र्यचः प्रभृतिसकाशात्तु विकारार्थको न भवेदेवेत्यर्थः।

पाणिनीयानुशासनस्य प्रस्तुतं समाप्य मतान्तरं दूषयितुमुपन्यस्यन्ति अत्रेति, केचित् शङ्कराचार्याः, अत्र आनन्दमय इत्यत्र मयट्प्रत्यये, तथाहि अत्रान्नमयादिविज्ञानमयान्तप्रायपाठादानन्दमयशब्दस्य प्राचुर्यार्थत्वं ब्रह्मार्थत्वं वा वक्तुं न शक्यते प्रायपाठविरोधादाकस्मिकार्थत्वापत्तेश्च, ब्रह्मप्रपाठकपठितत्वाद्ब्रह्मत्वाङ्गीकारेऽन्नमयादीनामपि ब्रह्मत्वापत्तिः, अन्नमयादीनामन्य आन्तर आत्मा उक्तः आनन्दमये सोऽन्यो नोक्त इति तत्र ब्रह्मत्वाङ्गीकारे आनन्दमयस्यैव शिरःपुच्छान्तोक्तावयवरूपत्वमवयविरूपत्वं स्वीकार्यं, इदं च सर्वथा विरुद्धं, ऐक्येऽवयवावयविभावासम्भवात्, किञ्च तस्मिन्नवयवसम्बन्धाङ्गीकारे सर्वविशेषवत्त्वं स्यान्न तु निर्विशेषब्रह्मत्वं इतोऽपीष्टासिद्धिः, किञ्च मोदप्रमोदाद्यवयवविशिष्टस्य सर्वत्र प्रसिद्धत्वा'दसन्नेव स भवति असद्ब्रह्मेति वेद चेदि'तिश्रुत्युक्तासत्त्वोक्तिरपि तस्मिन्न सम्भवतीत्यतोऽप्यतिरिक्तं ब्रह्म वाच्यं, किञ्च तादृशसावयवस्य सर्वत्र सर्वैः प्रतिपाद्यत्वात् 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इतिश्रुतिविरोधोऽपि, अन्यच्च यत्र ब्रह्मणि 'नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाती'ति सुखैकरसे भूम्नि ब्रह्मणि अधिकारतारतम्येन तरतमभावापन्नमोदप्रमोदादीनामुपपादनमपि विरुद्धतरं स्यात् तदात्मकत्वे ब्रह्मस्वरूपेऽपि तरतमभावापत्तेरतो नानन्दमयस्य ब्रह्मत्वं वक्तुं शक्यं, 'सत्यं ज्ञानमनन्तं ब्रह्मे'तिश्रुतौ 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मे'तिश्रुतौ च ब्रह्मणोऽनन्तैकत्वयोः श्रवणात्, किञ्चोक्तोऽभ्यासोऽपि आनन्दस्यैव नत्वानन्दमयस्यापीत्यतोऽपि नानन्दमयस्य ब्रह्मत्वं, 'तमेतमानन्दमयमात्मानमुपसङ्क्रामती'त्येतदपि प्राणमयादिसङ्क्रमणप्रवाहपठितत्वान्न ब्रह्मत्वसाधकमतो नानन्दमयो ब्रह्मेतिपूर्वः पक्षः, समाधानं त्वधिकरणसमाप्तौ भविष्यत्यत्रोपेक्षामात्रमुक्तं, सर्वविप्लववादिनः विकारार्थत्वं त्र्यचो मयटो विकारार्थत्वं,

---

१. प्राचुर्येणेत्यपि पाठः। २. वचनमित्यपि पाठः।

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितं, अर्थबलविचारेणापि निराकरोति ।

## तद्धेतुव्यपदेशाच्च ॥ १३ ॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेशः तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेशस्तस्मात्, 'एष ह्येवानन्दयाति' आनन्दयतीत्यर्थः, सर्वस्यापि विकारभूतस्यानन्दस्यायमेवानन्दमयः कारणं, यथा विकृतस्य जगतः कारणं ब्रह्म अविकृतं सच्चिद्रूपं एवमेवानन्दमयोऽपि कारणत्वादविकृतोऽन्यथा तद्वाक्यं व्यर्थमेव स्यात्, तस्मान्नानन्दमयो विकारार्थः, चकारः समुच्चयं वदन् सूत्रद्वयेनैकोऽर्थो मध्ये प्रतिपादित इत्याह ॥ १३ ॥

ननु किमिति निर्बन्धेन सूत्रत्रयेणैवं वर्ण्यते? अन्नमयादिवदुपासनापरत्वेनापि श्रुत्युपपत्तेः पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्तत्वाच्च, तस्मात् ब्रह्मत्वेन साधितमपि आवश्यकोपपत्त्यभावात् न ब्रह्मपरत्वमिति प्राप्तेऽभिधीयते,

## मान्त्रवर्णिकमेव च गम्यते ॥ १४ ॥

'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'तिमन्त्रः, मन्त्रेणाभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकं, तदुपपादनग्रन्थे तदेव मुख्यतया ज्ञायते, यत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यं, उपपादनीयं च सन्दिग्धं,

---

श्रुतिसूत्रेत्यादि उपसंहारे 'तमेतमानन्दमयमात्मानमुपसङ्क्रामती'तिश्रुतिः, सूत्रं 'विकारशब्दादि'ति 'तत्प्रकृतवचने'त्यादि व्याकरणसूत्रं च, तेषां अर्थस्य पूर्वविवृतस्याज्ञानात्, तत् सर्वस्य जगतो नामरूपात्मकस्य मिथ्यात्ववादिनो मतं, नवमावतारकार्यं बुद्धावतारस्य वेददूषणरूपं कार्यं, योऽर्थेत्यादि तथाच पूर्वसूत्रेऽभ्यासादित्युक्तत्वात् आनन्दमयस्य परब्रह्मत्वं साधितं एतत्सूत्रे तु प्राचुर्यादियुक्तेः पञ्चस्वपि मयटो प्राचुर्यार्थकथने बाधकाभावेन सर्वत्र प्राचुर्यार्थकथने आनन्दमयशब्देऽप्येतदर्थस्य प्रायपाठेनैव सिद्धान्तितत्वाद्विकारार्थत्वं सुदूरं पराहतमेवेत्ययमर्थस्तं, अवोचामावदाम इत्यर्थः ॥ १२ ॥

सूत्रमवतारयन्ति शब्दबलेत्यादिना, 'शब्दबलं व्याकरणबलं तद्विचारेणेत्यर्थः, निवारितं पूर्वसूत्रे निवारितं, अर्थबलेत्यादि अर्थस्य शेषित्वेन तद्बलस्यापि प्रधानत्वात्तद्विचारेणेत्यर्थः ।

तद्धेतुव्यपदेशाच्च ॥ १३ ॥ सूत्रार्थेन सिद्धान्तमाहुः हेतुत्वेनेत्यादि 'एतस्यैवान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुत्यानन्दमयस्यैवान्यानन्दहेतुत्वेन, व्यपदेशः श्रुतावुक्तिः, एष ह्येव सन्निधानादानन्दमय एव, कारणत्वात् उक्तसकलेतरानन्दकारणत्वात्, अन्यथा सकलेतरेषामानन्दे आनन्दमयस्याहेतुत्वे, तद्वाक्यं 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिवाक्यं, विकारार्थः विकाररूपोऽर्थः, चकारः सौत्रश्चकारः, समुच्चयं आनन्दमयेऽविकारित्वसमुच्चयं, मध्ये अधिकरणमध्ये, इत्याह चकार इममर्थमाहेत्यर्थः ॥ १३ ॥

सूत्रमवतारयन्ति ननु किमित्यादिना, सूत्रत्रयेण आनन्दमयसूत्रमारभ्य तद्धेतुसूत्रान्तसूत्रत्रयेणत्यर्थः, एवं आनन्दमयस्य परब्रह्मत्वं, उपासनापरत्वेन आनन्दमयस्य फलत्वानङ्गीकारेणोपासनार्थत्वनिर्वचनेनापीत्यर्थः, उक्तत्वाच्च उपासनार्थमुक्तत्वाच्चेत्यर्थः, साधितं आनन्दमयस्येदं साधितं, न ब्रह्मपरत्वं आनन्दमयशब्दस्य न ब्रह्मार्थत्वं,

मान्त्रवर्णिकमेव च गम्यते ॥ १४ ॥ नन्वनेन मन्त्रेण कथमभिधयानन्दमयः प्रतिपाद्यते तत्राहुः तदुपेत्यादि आनन्दमयप्रतिपादके सकलब्रह्मप्रपाठके इत्यर्थः, आनन्दमयशब्दप्रतिपाद्यं ब्रह्मैव, आनन्दमयस्य मुख्यत्वे उपपत्तिमाहुः यत्र यदित्यादि, यत्र प्रकृते ब्रह्मप्रपाठके, तदेव प्रकृते आनन्दमयमेव, उपपादनीयं सम्पूर्णब्रह्मप्रपाठकेनोपपादनीयं, सन्दिग्धं 'ब्रह्मविदाप्नोति पर'मित्यत्रानन्दमयप्रतिपादकं परपदं द्वितीयान्तं 'ब्रह्मणा विपश्चिते'त्यत्र ब्रह्मपदं तृतीयान्तमिति परपदब्रह्मपदयोः सामानाधिकरण्येनानन्दमयरूपैकार्थप्रतिपादकत्वं सन्दिग्धं,

---

१. 'गीयते' इत्यपि पाठः ।

**तत्र 'ब्रह्मणा विपश्चिते'ति सन्दिग्धं, सर्वज्ञं ब्रह्म, तस्य हि फलत्वं वाक्येनोपपाद्यते, फलन्तु सर्वैः स्तुत आनन्दः, अभ्यासात् स्तुतत्वमित्यवोचाम, शिरःपाण्यादिकन्तु स्तुत्यर्थमेव पुरुषविधत्वाय, लोके हि अन्तर्भूतं बहिर्वेष्टितं च तदाकारं भवति, जीवोऽत्र मुख्यः कर्तृत्वेन व्यपदेशात्, स च वस्तुतो हंसरूपः, पुरुषाधिकारकं हि शास्त्रं, तेन पुरुषशरीरे तदाकारः सर्वं फलं प्राप्नोति, अतः पुरुषं हंसरूपेणानुवर्णयति, पञ्चस्वपि शारीर आत्मा जीव एक एव, तत्रान्नमये निःसन्दिग्धत्वात्'तस्यैष एव आत्मे'ति नोच्यते द्वितीयादिषु प्रथमोक्तमेवातिदिश्यते, तत्रान्नमये हस्तेन प्रदर्शयन्निव निःसन्दिग्धं व्याख्यातं, तदन्तरो हि प्राण आन्तरव्यवहारकारणं बलभोजनविसर्गादिषूपयोगात्, तस्य सञ्चार आकाशे, परिनिष्ठितः पृथिव्यां, एवं**

---

सन्देहे बीजमाहुः **तत्रे**त्यादि, तथा च 'सह ब्रह्मणा विपश्चिते'तिविवरणक्रचि मुख्यतया भक्तस्य फलभोक्तृत्वमुक्तं, ब्रह्मणस्तु गौणतयेति 'ब्रह्मविदाप्नोति पर'मित्यत्र च फलस्य परत्वेन मुख्यतयेति ब्रह्मपदवाच्य फलवाक्योक्तं परमेव तदन्यद्वेतिरीत्या सन्दिग्धमित्यर्थः, **सर्वज्ञं ब्रह्म** 'ब्रह्मणे'तितृतीयान्तेन प्रतिपाद्यं सर्वज्ञं ब्रह्मेत्यर्थः, **वाक्येन** 'ब्रह्मविदि'तिवाक्येन, ननु परब्रह्मपदयोः श्रवणेऽपि आनन्दमयस्य कथं फलत्वं लब्धमित्यत आहुः **फलन्त्वि**ति, **सर्वैः** सर्वैः प्रकारैः, प्रकारस्तु आनन्दमयस्याभ्यस्तत्वं सर्वान्तरत्वप्रतिपादन अग्रे प्रश्नाभावेन सर्वाधिकत्वबोधनं चेति, **स्तुतः** अत्युत्कृष्टत्वेन बोधितः, **अभ्यासा**दिति इदं तु 'को ह्येवे'त्यादिनोक्तं पूर्वं, नन्वानन्दमयस्य फलत्वे अमूर्तानन्दत्वेनैवोपपादन स्यान्न तु शिर पाण्यादिमत्त्वेनातो ज्ञायते उपासनार्थमेवानन्दमयोक्तिरित्यत आहुः **शिर** इत्यादि, स्तुतितात्पर्यमाहुः **पुरुषे**त्यादि, तथाचानन्दमय'स्यानन्दमात्रकरपादमुखोदरादि'पुरुषोत्तमस्वरूपताबोधनतात्पर्येण तथा कल्पनयोपदेशः कृतो न तूपासनार्थमिति न काचित्फलत्वेऽनुपपत्तिरितिभावः, **पुरुषविधत्वाय** आनन्दमयस्य पुरुषविधत्वे हि विज्ञानमयमनोमयप्राणमयान्नमयानां आनन्दमयोपर्युपरितनानां वेदोक्तं पुरुषविधत्वं सम्भवेत्तत्त्वायेत्यर्थः, नन्वानन्दमयस्य पुरुषविधत्वे इतरेषां पुरुषविधत्वं कथं स्यादित्यत आहुः **लोके ही**त्यादि, **अन्तर्भूत**मित्यादि तथाच लोके सिक्थप्रतिमां कृत्वा तां मृदा वेष्टयित्वा सिक्थं बहिर्निःसार्य तन्मूषायां धातुरसानां पूरणे अन्तर्भूतसिक्थाकारा प्रतिमा भवति, एवं बहिः पुरुषादौ सीवितवस्त्रादिकं च तदाकारं भवति, इत्थं च प्रकृते तादृशोऽयं देहस्तत्र देहे आन्तरः तादृशः कश्चिदस्ति यदुपरि समागता अन्नरसादयः पुरुषाकारा भवन्ति नियामकाभावे तु सर्वे राशीभूता भवेयुः, अत्र तु श्रुतौ 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तरात्मा प्राणमयस्तेनैष पूर्णः स वा एष पुरुषविध एव तस्य पुरुषविधतां अन्वयं पुरुषविध' इत्यादौ आन्तरेण पुरुषविधेन प्राणमयेनान्नमयस्य पुरुषविधतोक्ता, एवमुत्तरोत्तरं आनन्दमयस्य पुरुषविधतयेतरेषां चतुर्णां पुरुषविधतावसेया, **अत्र मुख्यः**, अत्र फलभोगे, मुख्यः फलभोगकर्तृत्वान्मुख्यः, **व्यपदेशात्** 'सोऽश्नुत'इतिश्रुतौ स इत्यनेन जीवस्य व्यपदेशात्, **स च** जीवश्च, **वस्तुत** इति उपलक्षणनयोपासनार्थमवास्तवं हंसरूपत्वमत्रोक्तमिति कस्यचिन्मतनिराकरणायोक्तं, तत्र वास्तवत्वे प्रमाण तु 'द्वासुपर्णा'वितिश्रुतिः 'एवं स मानसो हंसो हंसेनैव प्रबोधित' इति स्मृतिश्च, **पुरुषाधिकारक**मित्यादि तथा च पुरुषाधिकारेण प्रवृत्तं शास्त्रं यदि पुरुष प्रत्यर्थवन्न भवेद्व्यर्थमेव स्यादिति जीवस्य फलभोगार्थं शास्त्रप्रवृत्तिस्तत्र विजातीयाकारेषु तद्विजातीयाकाराणां रसोदयभोगयोरसम्भवाद्भगवानपि पुरुषो जीवस्यान्तर्निविष्ट आनन्दमयस्ततस्तद्वेष्टनरूपो जीवोऽपि विज्ञानमयः पुरुषाकारो जातः, **तेन** आनन्दमयपुरुषवेष्टनरूपत्वेन, **तदाकारः** प्राप्तपुरुषाकारो जीवः, **सर्वं फलं** दृष्टान्ते लौकिकं सर्वं दार्ष्टान्तिके वैदिकं सर्व फलमित्यर्थः, **अतः** पञ्चस्वपि कोशेषु फलभोगप्रवेशयोः समानत्वात्, **पुरुषं** जीवं तन्नियामकं परमात्मानं चेत्यर्थः, **एक एव** फलभोक्ता एक एवेत्यर्थः, ननु 'तस्यैष शारीर आत्मा यः पूर्वस्ये'ति प्राणमयादिषु प्रदर्शनं कृतं तथान्नमये कुतो न कृतमत आहुः **तत्रे**त्यादि, तत्र पञ्चानां मध्ये, तथा च लौकिकान्नमयकोशस्य शरीरत्वस्यैकात्मभोग्यत्वस्य च सर्वजनसिद्धत्वाल्लौकिकान्नमयकोशेऽपि शरीरत्वैकात्मभोग्यत्वयोस्तद्दृष्टान्तेनैव सिद्धत्वान्नोच्यत इति फलितं, **द्वितीयादिषु** प्राणमयादिषु, **प्रथमोक्तं** शरीरत्वैकात्मभोग्यत्वं, **हस्तेने**त्यादि 'यः पूर्वस्ये'त्यनेन हस्तेन प्रदर्शयन्निवेत्यर्थः, एवमन्नमयनिष्ठपञ्चावयवत्वादिकं प्राणमयादिष्वतिदिश्यातिदेशदृढत्वार्थं अग्रेऽप्युपपादितं, द्वितीये विशेष उच्यते **तदन्तर** इत्यादिना, **तदन्तरः** अन्नमयकोशस्यान्तरः, **आन्तरव्यवहारं** स्फुटीकुर्वन्ति **बले**त्यादिना, इदं चालौकिककोशानां दृष्टान्ततया प्रदर्शनार्थं लौकिकानां निरूपणं न त्वाध्यात्मिकब्रह्मरूपान्नमयादिपुरुषाणां कोशानामपीदमेव फलमिति बोध्यं, **तस्य** प्राणमयस्य, **परिनिष्ठितः** स्थितः,

लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयं, तदनु वैदिकव्यवहारः, स च मनोमयः पुरुषः, आदेशः कर्मचोदना, ब्राह्मणानि सशेषाणि, अथर्वाङ्गिरसे ब्रह्मकर्मत्वात् प्रतिष्ठा, तदनु नानाविधयागादिसाधनवतः फलं विज्ञानमयः, तत्र श्रद्धा आपः, तृतीयाध्याये त्वयमर्थो विस्तरेण वक्ष्यते, यथोक्तकर्तृत्वात् क्रममुक्तिः, ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ, योगश्च मुख्यत्वादात्मा, अधोभागो महर्लोकः, तादृशस्य ततोऽर्वाक्संसृत्यभावात्, ततोऽपि ब्रह्मविद आनन्दमयः फलं, तस्य स्वरूपस्यैकत्वात् धर्मभेदेन शिरःपाण्यादि निरूप्यते, तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तच्छिरः, मोदप्रमोदौ परिनिष्ठितापरिनिष्ठितावानन्दातिशयौ, आनन्दस्तु स्वरूपं, साधनरूपत्वात् ब्रह्म पुच्छमिति, श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय,

---

पृथिव्यां पृथिव्यास्तत्पुच्छत्वेन प्रतिष्ठारूपत्वादितिभावः, **लौकिकव्यवहारार्थं** दृष्टान्तदार्ष्टान्तिकान्तर्भावदर्शनार्थं, **द्वयं** द्वेधा कोशप्रदर्शनं कृतमित्यर्थः, अन्नमयप्राणमयकोशयोर्निरूपणं फलितं, तत्रान्नमयस्य शिर' तस्य पाण्याद्यवयवा प्रसिद्धाः, प्राणमयस्य तु नासिकानिस्सरणे वृत्तिरूपः प्राण एव प्राधान्यात्स्थिरः तस्य प्राधान्यं च तद्रोधे सर्वेषां व्याकुलीभावात्, व्यानस्य दक्षिणपक्षत्वं सर्वशरीरक्रियाहेतुत्वात्, अपानस्य ततो हीनत्वादुत्तरपक्षत्वं, समानस्यात्मत्वं तस्याकाशे सञ्चारात् मध्यस्थत्वात्, पृथिवी देवतारूपाध्यात्मिकस्य प्राणस्य धारयित्रीति पुच्छरूपा, लौकिकव्यवहारोपयोगिकोशद्वयनिरूपणमनु वैदिकव्यवहारोपयोगिकोशद्वयं निरूप्यत इत्याहुः **तदन्वित्यादिना**, तथाचाद्यकोशद्वयेन शरीरपाटवे सत्येव वैदिकव्यवहारप्रवृत्तिरिति तदन्वित्युक्तमित्यर्थः, **मनोमयः पुरुषः** आध्यात्मिक इत्यर्थः, अनियताक्षरपदावसानो मन्त्रो यजुस्तस्य मनोमयवेदपुरुषे शिरस्त्वं हविर्दानकरणत्वेन प्राधान्यात्, यजुषा हि हविर्दीयते प्राधान्यात् स्वाहाकारादिना, ऋचां दक्षिणपक्षत्वं अर्थप्राधान्यात्, साम्नामुत्तरपक्षत्वं गीतिप्राधान्यात्, आदेश इत्यादि कर्मविधायकानि ब्राह्मणवाक्यानि अर्थवादसहितानि अतिदिष्टविधायकसहितानि तेषामात्मत्वं प्रवर्तकत्वेन प्राधान्यात्, **अथर्वाङ्गिरसे** अथर्ववेदे ब्रह्मकर्मत्वात् ब्रह्मणः कृताकृतावेक्षणेन शान्तिकपौष्टिककर्मभिर्यागोपयुक्तऋत्विगादिरक्षणसम्पादनद्वारा यागोपयुक्तत्वात्पुच्छत्वं, एतेन नानावृत्तिकान्मनोमयकोशाल्लौकिकादाध्यात्मिकस्य भेदोऽपि दर्शितः, एवं बाह्याभ्यन्तरभेदेनैहिकनानाविधभोगोपयिकं विज्ञानमयकोशं निरूपयितुमाहुः **तदनु नानाविधेत्यादिना**, **नानाविधयागादिसाधनवतः** पञ्चाग्निविद्यावत इत्यर्थः, **फलं विज्ञानमयः** विज्ञानप्राचुर्यं ब्रह्मसाक्षात्कार इत्यर्थः, विज्ञानमयावयवानाहुः **तत्र श्रद्धेत्यादिना**, तथा च शुद्धिहेतुत्वाच्छ्रद्धैव विज्ञानमयस्य शिरः, कल्पनोपदेशवारणायाहुः **तृतीयेत्यादि** रंहत्यधिकरणे इत्यर्थः, ननु प्रथमाहुतौ दैवैः श्रद्धारूपा आप एव हूयन्ते मृताग्निहोत्रे ततः संस्कृतपञ्चभूतसहितस्य यजमानस्य सोमलोकाग्नौ होमस्तैः क्रियते, ततो वृष्ट्यग्नौ ततोऽन्नेऽग्नौ ततो रेतोऽग्नौ इति क्रमेण यजमानाहुतिकरणेन रेतसः पुरुषभाव इत्यवयवपूर्त्यभावात् कथमाहुतीनां फलसाधकतेत्यत आहुः **यथोक्तेत्यादि**, तथा च पूर्वमन्नमयाद्युपासनादशायां श्रद्धारूपाङ्गस्याभावेऽपीदानीं श्रद्धारूपाङ्गस्य दार्ढ्यात् सर्वावयवनिष्पत्त्या क्रममुक्तिरूपसर्वफलभोगोपपत्तिरिति फलितं, एवंविधविज्ञानमयनिरूपणेनैतस्य संशयविपर्यासाद्यात्मकलौकिकविज्ञानमयकोशाद्भेदोऽपि प्रदर्शितः, **प्रमीयमाण**धर्मस्य प्राथम्याद्दक्षिणपक्षत्व, अनुष्ठीयमानधर्मस्य तदुत्तरत्वादुत्तरपक्षत्व, **योग** इति चित्तवृत्तिनिरोधः, तस्य विद्यायां मुख्यत्वादात्मरूपत्व, **अधोभागः** प्रतिष्ठापुच्छरूपः, **तादृशस्य** विद्यासम्पन्नदेवयानमार्गाधिकारिणः, **ततोऽर्वाक्** महर्लोकादधः, ज्ञानप्राप्त्या यन्मुख्यं फल भवति तन्निरूपयितुमाहुः **ततोऽपीत्यादि**, **तस्य** आनन्दमयस्य, **स्वरूपस्य** यावदवयवविशिष्टब्रह्मस्वरूपस्य, **धर्मभेदेन** भक्तप्रतीतधर्मभेदेन, **प्रीतिविषयत्वं** भक्तप्रीतिविषयत्वं, **आनन्दातिशयौ** भक्तयोरानन्दातिशयौ, **आनन्दः** क्रमेण दक्षिणोत्तरपक्षरूपः, **स्वरूपं** आत्मेत्यर्थः, **साधनरूपत्वात्** 'यो वेद निहितं गुहायां परमे व्योमन्' इत्यत्र ज्ञानविषयत्वेन सर्वकामफलभोगसाधनरूपत्वादित्यर्थ., तथा च गुहायां भक्तहृदयाकाशे परमव्योमपदवाच्यभगवद्ब्रह्मात्माक्षराधिकरणकपुरुषोत्तमाविर्भावे तत्पृष्ठतोऽक्षराविर्भावावश्यम्भावादक्षरस्य पुच्छत्वेनोक्तिरिति भावः, **श्लोकौ तु** अक्षरस्य प्रजाप्राणनादिहेतुताबोधकौ श्लोकौ तु, तौ तु 'अन्नाद्वै प्रजाः प्रजायन्ते' 'प्राणं देवा अनु प्राण'न्त्येतौ, प्रथमस्य सदंशप्रतिपादकत्वं, द्वितीये' केवलवायोः देवप्राणनहेतुत्वासम्भवाच्चित्संवलितप्राणस्यैव हेतुत्वाङ्गीकाराच्चित्प्रतिपादकत्व, **केवलेत्यादि**

अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन, अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय, तस्मात् सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते, अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैव, चकारो मध्ये प्रयुक्तो विधिमुखविचारेणाधिकरणसम्पूर्णत्वबोधकः ॥ १४ ॥

निषेधमुखेन च चतुःसूत्र्येदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय ।

इदमत्राकूतं, जीव एवानन्दमयो भवतु फलस्य पुरुषार्थत्वात्, स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवदलौकिकमेव रूपमानन्दमयं जीवस्य फलभूतमिति प्राप्तेऽभिधीयते,

## नेतरोऽनुपपत्तेः ॥ १५ ॥

इतरो जीवः न, आनन्दमयो न भवति, कुतः? अनुपपत्तेः, जीवस्य फलरूपत्वमात्रेणानन्दमयत्वं नोपपद्यते, तथा सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वेऽप्यलौकिकमाहात्म्यवत्त्वेन निरूपणं नोपपद्येत, अतो न जीव आनन्दमयः ॥ १५ ॥

## भेदव्यपदेशाच्च ॥ १६ ॥

इतोपि न जीवः आनन्दमयः, यतो भेदेन व्यपदिश्यते 'रसꣳह्येवायं लब्ध्वानन्दीभवती'ति, आनन्दोऽस्यास्तीत्यानन्दी, 'एष ह्येवानन्दयाति' आनन्दयतीत्यर्थः, चकारात् सूत्रद्वयेन जीवो नानन्दमय इति निरूपितम् ॥ १६ ॥

---

अक्षरस्यागणितानन्दाभावायेत्यर्थः, आयुर्दानार्थं तु प्राणोपादान, अपराविति तौ तु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति 'विज्ञानं यज्ञं तनुते विज्ञानं ब्रह्म चेद्वेदे'ति च, अत्र वाक्पदं मनोभिन्नेन्द्रियलक्षणं, माहात्म्येत्यादि तथा च जीवसाधनैरिन्द्रियागोचरं भगवत्सामर्थ्येन चेन्द्रियागोचरत्वा'द्विद्वानि'त्युक्तं 'चेद्वेदे' त्युक्तं 'प्रत्यगात्मानमैक्षदावृत्तचक्षु'रिति चोक्तं, एतेन कर्तुं अकर्तुं सामर्थ्यं माहात्म्यं प्रदर्शितं बोध्यं, ननु मनुष्यानन्दमारभ्याक्षरानन्दपर्यन्तमानन्दगणनायाः क्वोपयोग इत्यत आहुः अवान्तरेत्यादि, अवान्तरानन्दाः मात्रारूपा इत्यर्थः, तस्मात् पुरुषोत्तमानन्दात्, न्यूनतया गणनाविषयत्वेन न्यूनतया, तदुत्कर्षत्वेत्यादि इतरानन्दोत्कर्षापेक्षया पुरुषोत्तमानन्दे उत्कृष्टोत्कृष्टत्वबोधनायेत्यर्थः, तस्मात् पूर्वोक्तरीत्यानन्दमये परब्रह्मधर्मरूपलिङ्गप्रदर्शनात्, प्रपाठके ब्रह्मप्रपाठके, मान्त्रवर्णिकमेव 'सत्यं ज्ञान'मितिमन्त्रप्रतिपादितमेव, अतः सकलप्रपाठके प्रतिपादनात्, मुख्योपपत्तेः श्रुत्याभिधया वृत्त्या परब्रह्मत्वेन बोधनरूपोपपत्तेः, चकारः सौत्रश्चकारः ॥ १४ ॥

सूत्रान्तरमवतारयितुमाहुः निषेधमुखेनेत्यादि, इदमेव आनन्दमयाधिकरणमेव, सुदृढत्वाय स्थूणाखननन्यायेन दृढत्वसम्पादनायेत्यर्थः ।

नन्वानन्दमये कस्य सन्देहस्य निरासाय निषेधमुखेन पुनश्चतुःसूत्र्याधिकरणरचनेत्यत आहुः जीव एवेत्यादिना, तत्र हेतुमाहुः फलस्येत्यादि, जीवार्थत्वेन गौणत्वान्न परब्रह्मत्वमित्यर्थः, 'सोऽश्नुत'इतिमन्त्रविरोधं परिहर्तुमाहुः स इत्यादि, सः ब्रह्मवित्, सर्वान्कामानश्नन् विपश्चिता ब्रह्मणा सहभूत आनन्दमयो भवतीति व्याख्यानान्न मन्त्रविरोध इत्यर्थः, दृष्टान्तार्थमाहुः स्वर्गादीति, तथा च प्राप्तस्वर्गसुखावस्थ यथा जीवस्वरूपं लौकिकं सुखरूपमुच्यते तथा प्राप्तमुक्तिरूपपरमानन्दं जीवस्वरूपमपि अलौकिक आनन्दमयमुच्यते, फलभूतं फलावस्थं, इति प्राप्ते आनन्दमयो जीव एवेति पूर्वपक्षे प्राप्ते,

नेतरोऽनुपपत्तेः ॥ १५ ॥ सूत्रार्थेन समाधानमाहुः इतर इत्यादि, तथा सति जीवस्यानन्दमयरूपताङ्गीकारे सति, तस्य जीवस्य, स्वातन्त्र्येण सृष्टेः पूर्वं कारणसामग्रीविरहेण, जगत्कर्तृत्व इत्यादि 'तस्माद्वा एतस्मादात्मन' इत्यनेनोक्तं जगत्कर्तृत्वं, फलितमाहुः अत इति ॥ १५ ॥

भेदव्यपदेशाच्च ॥ १६ ॥ इतोऽपि जीवस्यानन्दमयतो भेदव्यपदेशतोऽपि, भेदव्यपदेशमाहुः रसमित्यादिना, तथाचानन्दमयस्य कर्मत्वेन जीवस्य कर्तृत्वेन च भेदो व्यपदिष्ट इति बोध्यं, प्रकारान्तरेणानन्दमयतो भेदं जीवे बोधयितुमाहुः आनन्दोऽस्यास्तीत्यादि, एवकारेण 'एष ह्येवे'त्यनेन जीवव्यवच्छेदः, चकारात् सौत्रचकारात ॥ १६ ॥

तर्हि जडो भवत्वानन्दमयः, न, आन्तरत्वान्न कार्यरूपो भवति किन्तु कारणरूपः, यः[1] स्वमते नास्त्येव ।

मतान्तरे प्रकृतिर्भवेत्, तन्निवारयति,

## कामाच्च नानुमानापेक्षा ॥ १७ ॥

जडा प्रकृतिर्नास्तीति कारणत्वेन निराकृतैव, अथैतद्वाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपा कल्प्येत, सा कल्पना नोपपद्यते, कुतः? कामात्, आनन्दमयनिरूपणानन्तरं 'सोऽकामयते'ति श्रूयते, स कामश्चेतनधर्मः, अतश्चेतन एवानन्दमय इति, चकारात् 'स तपोऽतप्यते'त्यादि, अतोऽनुमानपर्यन्तमर्थमबोधयद्वाक्यं न तिष्ठतीत्यर्थः ॥ १७ ॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥

इतश्च न जड आनन्दमयः, अस्मिन्नानन्दमये अस्य जीवस्य च 'आनन्दमयमात्मानमुपसङ्क्रामती'ति तेन रूपेण योगं शास्ति फलत्वेन कथयतीति, न हि जीवस्य जडापत्तिर्युक्ता, 'ब्रह्मैव सन् ब्रह्माप्येती'तिवदस्यार्थः[2], तस्मान्नायं जीवो नापि जडः, पारिशेष्याद् ब्रह्मैवेति सिद्धम् ।

ये तु[3] पुनरधिकरणभङ्गं कुर्वन्ति तेषामज्ञानमेव, यतस्तैरप्यानन्दमयः कः पदार्थ इति वक्तव्यं, न तावज्जीवः, तस्य ब्रह्मज्ञानफलत्वेन 'ब्रह्मणा विपश्चिते'त्यानन्दमयस्योक्तत्वात्, अथ जडः

---

कामाच्चेत्यादिसूत्रद्वयमवतारयितुमाहुः तर्हि जड इत्यादि, न आनन्दमयो जडो न भवत्येवेत्यर्थः, तत्र विभज्य दूषणमुपपादयन्ति आन्तरत्वादित्यादिना, आन्तरत्वात् आनन्दमयस्य कोशचतुष्टयान्तरत्वात्, न कार्यरूपः आनन्दमयो न कार्यरूपः, कारणरूपः 'तस्माद्वा एतस्मा'दित्याद्युक्तकारणरूपः, यः कारणत्वेनाभिमतो जडस्वरूपः ।

मतान्तरे साङ्ख्यानां मते, प्रकृतिर्भवेत् कारणीभूतो जडः प्रकृतिपदवाच्यो भवेदित्यर्थः ।

कामाच्च नानुमानापेक्षा ॥ १७ ॥ निराकृतैव जडाया ईक्षणासम्भवेनेक्षणपूर्वककर्तृत्वासम्भवेन निराकृतैवेत्यर्थः, एतद्वाक्येत्यादि 'अथ तस्य प्रियमेव शिर' इतिवाक्येत्यर्थः, तथा चैतदवयवकल्पनावाक्यस्य निरवयवे पुरुषेऽसम्भवादन्यथानुपपत्त्यानन्दस्य सुखरूपत्वाद्धेतोः सत्त्वपरिणामरूपा पञ्चावयवरूपा कार्यरूपा च प्रकृतिरेव कल्प्यत इत्यर्थः, सा वाक्येनानन्दस्य प्रकृतिरूपतात्मिका, अतः अचेतने आनन्दमयपदवाच्यत्वासम्भवात्, अनुमानपर्यन्तं 'अथ तस्ये'तिवाक्यश्रवणानन्तरमनुमानपर्यन्तं, आनन्दमयः सत्त्वपरिणामः पञ्चधा आनन्दविकारित्वात् लौकिकोत्कृष्टसुखवदित्यनुमानेनानन्दमये सत्त्वपरिणामत्वानुमितिपर्यन्तं, तथा च प्रकृतेः शाब्दत्वेऽपि अनुमानगम्येति वक्तुं न शक्यत इत्यर्थः ॥ १७ ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥ सूत्रार्थस्तु—अस्मिन् आनन्दमये, अस्य उपासकजीवस्य, तद्योगं आनन्दमयीभूतस्यानन्दमयप्राप्तिरूपं योगं, इतः एवं सूत्रार्थसम्भवात्, न हीत्यादि तथा च चेतनस्य जीवस्य जडरूपतासिद्धिः फलरूपा न युक्ता हीनतासम्पादकत्वादित्यर्थः, इतिवदस्यार्थ इति तथा 'चानन्दमानन्दमयोऽवसान' इतिवाक्यात् उपासकः आनन्दमयः सन्नवसाने आनन्दमयप्राप्त्यव्यवहितपूर्वकाले तादृशः सन् 'आनन्दमयमात्मानमुपसङ्क्रामती'त्यर्थः, उपसंहरन्ति तस्मादिति, अयं आनन्दमयः, पारिशेष्यात् जीवजडप्रकाराणां दूषितत्वात् ।

इदानी स्वसिद्धान्तदृढीकरणाय परमतं दूषयितुमाहुः ये त्वित्यादि, ये शाङ्कराः, अधिकरणभङ्गं विकारशब्दान्नेति चेन्नेतिसूत्रव्याख्याने 'अत्र केचि'दित्यादिस्थले पूर्वपक्षे उक्तरीत्यानन्दमयपदार्थस्य ब्रह्मत्वखण्डनपुरस्कारेण व्यासोक्ताधिकरणस्याष्टसूत्रस्य भङ्गं, कुर्वन्ति विधिमुखचतुःसूत्रैर्भिन्नमधिकरणं निषेधमुखैश्च भिन्नमधिकरणमितिरीत्याधिकरणभङ्गं कुर्वन्तीत्यर्थः, तेषां शाङ्कराणां, अज्ञानं श्रुतिसूत्राज्ञानं, तत्र हेतुमाहुः यत इत्यादि, आनन्दमयपदार्थः अयमिति ब्रह्मातिरिक्तस्तैरपि वक्तुं न शक्यत इत्यर्थः. तदेवोपपादयन्ति न तावदित्यादिना, तथा च ब्रह्मातिरिक्तं जीवजडात्मकं जगदेव सम्भवति तत्र जीवो वक्तुं न शक्यत इत्याहुः, तस्येत्यस्याग्रे आनन्दमयस्येत्यनेनान्वयः, इत्थं च तस्य भवतां जीवत्वेनाभिमतस्य, ब्रह्मज्ञानफलत्वेन 'ब्रह्मविदाप्नोति पर'मित्यत्र परपदवाच्यानन्दमयस्य ब्रह्मज्ञानफलतयोक्तत्वेनेत्यर्थः, ब्रह्मणा विपश्चितेति ब्रह्मविपश्चित्पदाभ्यामप्यानन्दमयस्यैवोक्तेर-

---

१ स इत्यपि पाठः । २ 'वदस्याप्यर्थे' इत्यपि पाठः । ३ ये पुनरित्यपि पाठः ।

स्वर्गवत्, तदा किमाश्रित इति वक्तव्यं, जडाश्रितत्वे कर्मफलमेव स्यात्, ज्ञानस्याप्यवान्तरफलमिति चेत्, न, तर्हि किमानन्दात् तस्यातिरिक्तं फलं भविष्यति? जडचिद्रूपतायाः पूर्वमेव विद्यमानत्वात् 'अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतिविरोधश्च, पुच्छत्वेन ब्रह्मवचनात् प्रद्वेष इति चेत्, तर्हि 'स एको ब्रह्मण आनन्द' इत्यत्रापि षष्ठ्या भेदनिर्देशाद् ब्रह्मणः परमपुरुषार्थत्वं नाङ्गीकुर्यात्, उपक्रमादिसर्वविरोधश्च पूर्वमेव प्रतिपादितः, यद्यप्यधिकरणमन्यथारचितं ब्रह्म पुच्छमिति, तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते, येनान्यथासमाधानं

---

बाधितब्रह्मत्वसिद्धेर्जीवत्वमशक्यवचनमित्यर्थ., ब्रह्मप्रकरणेऽग्रेऽन्नमयादिप्राप्तिद्वारान्ते 'तमेतमानन्दमयमात्मानमुपसङ्क्रामती'त्यानन्दमयप्राप्तेरुक्तत्वादित्यर्थ., अथ पक्षान्तरे, जडः आनन्दमयो जडः स्यात्, तत्र जडफलं दृष्टान्त उच्यते स्वर्गवदिति, तत्र जडस्य घटादेः मृत्पिण्डाद्याश्रितत्वस्यैव दृष्टत्वादानन्दमयस्यापि जडत्वाङ्गीकारे क्वचिज्जडे आश्रितत्व वाच्य तत्राश्रयीभूत जड किमित्याकाङ्क्षायां कर्मफलमेव जडमभेदेन तदाश्रयः स्यादित्याहुः **जडाश्रितत्वे** इत्यादि, आश्रितत्वं चात्र सम्बद्धत्वरूप पारिभाषिकमेव यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' तत्र प्रणयनाश्रितं गोदोहन फलाय विधीयते तेनाभेदे आश्रितत्वानुपपत्तिः परिहृता बोध्या, तथा च कर्मफलस्यानित्यत्वाद् ब्रह्मज्ञानफलस्य च नित्यत्वादानन्दमयस्य च ब्रह्मज्ञानफलत्वादुक्तकर्मफलाश्रितत्व बाधितमेवेत्यर्थ., पुनराशङ्कते **ज्ञानस्ये**त्यादि, **अवान्तरे**त्यादि आनन्दमयो ज्ञानस्यावान्तर फलमित्यर्थ., तथा च क्रममुक्तावपि तत्तल्लोकीयानन्दमेव भुनक्ति न तु ज्ञानस्यानन्दातिरिक्तमपि फलं किञ्चिद्दृष्टं श्रुतमस्तीति भावः, ननु चिज्जडात्मकमेव किञ्चित् फलं भवत्वत आहुः **जडे**त्यादि, **पूर्वमेव** ज्ञानसाधनसम्पत्तेः पूर्वं जीवस्य सत्वादित्यर्थः, नन्वानन्दमयस्यानन्दरूपत्वेऽपि वैषयिकानन्दवन्न ब्रह्मत्वमतो न फलत्वमत आहुः **अस्ये**त्यादि, **अस्यैव** पूर्णानन्दस्यैव, **अन्यानी**त्यादि मनुष्यादिब्रह्मान्तानीत्यर्थः **मात्रां** अंशं, **उपजीवन्ति** फलत्वेनोपभोगं कुर्वन्तीत्यर्थः, **श्रुतिविरोधः** तस्य फलत्वानङ्गीकाराद्भवतां श्रुतिविरोध इत्यर्थ', चकारेण पूर्वोक्तदूषणानां समुच्चय, अधिकरणभङ्गे बीजान्तरं वादिन उपन्यस्यन्ति **पुच्छत्वेने**त्यादि, **पुच्छत्वेन** आनन्दमयपुच्छत्वेन, **ब्रह्मवचनात्** अस्माक प्रधानतया फलत्वेन जिज्ञास्याक्षरब्रह्मणो निर्देशात्, **प्रद्वेष इति** आनन्दमयस्य ब्रह्मताप्रतिपादकैकाधिकरणरचनायां प्रद्वेपस्तथाचानन्दमयस्य ब्रह्मताखण्डनार्थं अधिकरणभङ्गकरणमित्यर्थ, तद्दूषयन्ति **तर्ही**त्यादिना, तथा च ब्रह्मपुच्छमित्यत्र ब्रह्मणः पुच्छमित्यत्राक्षरस्य षष्ठ्या ब्रह्मभेदबोधनेनाब्रह्मत्वमायातीति प्रद्वेष इति चेत्, 'स एको ब्रह्मण आनन्द' इत्यत्राप्यक्षरानन्दस्य षष्ठ्या ब्रह्मभिन्नत्वबोधनेनानन्दस्याब्रह्मत्वेन पुरुषार्थत्वासम्भवात् आनन्दातिरिक्तस्य च मुख्यफलत्वासम्भवाद्ब्रह्मणोक्षरस्य पुरुषार्थत्वं न स्यादिति फलित, यदि तु 'स एको ब्रह्मण आनन्द' इत्यत्र 'राहोः शिर'इतिवदभेदषष्ठ्यानन्दस्य ब्रह्मतामुपपाद्य ब्रह्मणः पुरुषार्थतोपपाद्यते तदा ब्रह्मणः पुच्छमित्यादावपि पुच्छादीनामभेदषष्ठ्यानन्दस्य ब्रह्मतामुपपाद्य ब्रह्मणः पुरुषार्थतोपपाद्यते, एवं ब्रह्मणः पुच्छमित्यादावपि पुच्छादीनामभेदषष्ठ्यानन्दमयब्रह्मरूपतासिद्धेः पुच्छत्वस्य परोक्षवादेन भाक्तत्वात् प्रद्वेषे बीजाभावादधिकरणभङ्गोऽज्ञानविजृम्भित एवेति बोध्य, आनन्दमयस्य ब्रह्मत्वे पूर्वं दत्तानि वादिमते उपक्रमोपसहारविरोधरूपाणि दूषणानि स्मारयन्ति **उपक्रमे**त्यादि, तथा च 'ब्रह्मविदाप्नोति पर'मित्यत्र परपदेनानन्दमय एवादौ ब्रह्मप्रपाठके उक्तः, मध्येऽपि 'सह ब्रह्मणा विपश्चिते'त्यनेनानन्दमय एवोक्तः, अन्ते च 'तमेतमानन्दमयमात्मानमुपसङ्क्रामती'त्यनेनोक्तत्वादस्याब्रह्मत्वे सर्वोपि प्रपाठकोऽसङ्गत एव स्यादिति प्रतिपादितमित्यर्थः, ननु न वयमधिकरणभङ्गं कुर्मः किन्तु पूर्वोक्तमेवाधिकरणं विधिमुखतयोक्तं निषेधमुखतयानन्दमयस्याब्रह्मत्वप्रतिपादनेन परिष्कुर्म इति तद्दूषयितुमाहुः **यद्यपी**त्यादि, 'अन्यथाहुस्ते, आनन्दमयस्य पुच्छरूपावयवत्वेनाक्षरस्य ब्रह्मत्वं विवक्षितं अवयवावयविनोरभेदात् उत स्वयमक्षरस्य प्राधान्यत्वेने'ति, तत्र पूर्वः पक्षःअक्षरे पुच्छशब्दप्रयोगादानन्दमयावयवत्वेनाक्षरं ब्रह्म विवक्षितं धर्मिरूपेण तस्यानन्दमयब्रह्मभिन्नत्वादिति, तत्र तेषा सिद्धान्तः 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र स्वय प्रधानं ब्रह्मैवोच्यते ब्रह्मत्वे सति पुच्छत्वं निषेधशेषत्वेनान्यत्वादुक्तं, सर्वाधारत्वाच्च प्रतिष्ठारूपत्वमुक्तं, तत्र पुच्छप्रतिष्ठारूपस्यैव प्रधानब्रह्मत्वे विनिगमक तु 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रितिश्लोके परशब्दानन्दमयशब्दावनुपादाय केवलं ब्रह्मशब्दाभ्यास एवेति, तन्मतं दूषयितुमाहुः **तत्रे**त्यादि, तत्र 'ब्रह्म पुच्छ प्रतिष्ठे'तिवाक्ये, **न पुच्छस्ये**त्यादि आनन्दमयस्य पुच्छमुद्दिश्य वेदनविषयीभूत प्रधान ब्रह्माभेदेन विधीयत इति नेत्यर्थः, **येन** अप्रधानपुच्छरूपतायाः प्रधानीभूतवेदनविषयब्रह्मण्ययुक्तत्वेन, **अन्यथासमाधानं** 'असन्नेवे'ति श्रुत्युक्ताभ्यासेन वेदनविषयब्रह्मणः प्रधानतयोपपाद-

भवेत्, किन्तु ब्रह्मणः पुच्छत्वमिति, पूर्वन्यायेनेदं पुच्छं प्रतिष्ठेतिवत्, तत्र श्रुतिबाधो ब्रह्मणाप्यशक्यः, मौर्ख्यं चैतत्, आनन्दमयस्यैव ब्रह्मत्वे न कोऽपि दोषः स्यात्, आनन्दमयस्याब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितमिति ज्ञात्वा तत्समाधानार्थं यतमानो महामूढ इति विषयफलयोः किं मुख्यमित्यप्यनुसन्धेयं, पुच्छत्वोक्तिस्तु पूर्वभावित्वाय, अत एव ज्ञानविषयत्वं प्रतिष्ठा च, आनन्दमयो ब्रह्मण्येव प्रतिष्ठित इति, अत्राऽवयवावयविभावो भाक्त इति तु युक्तं, प्राणमयादीनामपि तथात्वात्, अन्तःस्थितस्य बाह्यानुरोधेन तथात्वमिति सर्वं सुस्थम् ॥ १८ ॥

**इति प्रथमाध्याये प्रथमे पादे पञ्चममानन्दमयाधिकरणम् ॥**

---

'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः

---

नरूपं समाधान, किन्त्वित्यादि तथा च ब्रह्मोद्देशेन पुच्छमेवाभेदेन विधीयते इति ब्रह्मणः प्राधान्यशङ्कैव नास्तीत्यपार्थमेव समाधानमिति भावः, इदमुपलक्षणं वस्तुतस्तु शिरःपक्षादिसर्वेषामेव प्रियादिब्रह्मोद्देशेन विधानात्सर्वत्र ब्रह्मण एव प्राधान्य न त्ववयवानामिति न क्वापि शङ्कावकाश इति बोध्यं, पूर्वन्यायेनेत्यादि 'समिधो यजती'त्यादिन्यायेनेत्यर्थः, तथा च 'समिधो यजती'तिन्यायेऽभ्यासेन समभिव्याहृतसमिदादिपदार्थानां परिच्छेद एव क्रियते न तु बाधस्तद्वदिहापि श्रुतौ ब्रह्मपदाभ्यास. ब्रह्मपदसमभिव्याहृतपुच्छप्रतिष्ठापदार्थयोः परिच्छेदपूर्वकं निर्णयमेव करिष्यति न तु तयोर्बाध इति ब्रह्मणः श्रुत्युक्तपुच्छरूपावयवताबाधो ब्रह्मणाप्यशक्यवचन इति तद्बाधनार्थं स्वीयमन्यथाधिकरणनिर्वचनं व्यर्थमेवेतिभावः, वत् इतीवार्थ, तथा च पूर्वन्यायेनेव पुच्छप्रतिष्ठादिक निश्चेतव्यमित्यर्थः, तत्र ब्रह्मणि, श्रुतिबाधः पुच्छप्रतिष्ठाबोधकश्रुतिबाध, दूषणान्तरमाहुः मौर्ख्यमित्यादि, एतत् प्रकारान्तरेणाधिकरणरचनं अधिकरणभङ्गश्चेत्यर्थ., मौर्ख्यमुपपादयन्ति आनन्देत्यादिना, तथा चानन्दमयस्याब्रह्मत्वार्थं सर्वोऽपि पूर्वोक्तः प्रयासस्तस्य च ब्रह्मत्व पूर्वोक्तप्रकारैः सर्वथासिद्धमिति वृथाप्रयासकरणान्मौर्ख्यमेव पर्यवसितमित्यर्थः, आनन्दमयस्येत्यादि अब्रह्मत्वमित्यादि मयटो विकारार्थत्व परिकल्प्य तादृशप्रत्ययान्तार्थत्वेनानन्दमयस्याब्रह्मत्व परिकल्प्येत्यर्थ., तत्पुच्छत्वेन अब्रह्मानन्दमयपुच्छत्वनेत्यर्थ, ब्रह्म अक्षरं, तत्समाधानार्थं अब्रह्मपुच्छत्वेन ब्रह्मणोऽप्यब्रह्मत्वापत्तिदूषणसमाधानार्थं, महामूढः 'विकारशब्दा'दितिसूत्र 'ब्रह्मविदाप्नोति पर'मित्यादि श्रुत्युपक्रमोपसहारश्च तेषामज्ञानाद्दूषणभूषणोपन्यासान्महामूढ इत्यर्थः, तदेवोपपादयन्ति विषयेत्यादिना, विषयः परप्राप्तिसाधनीभूतज्ञानविषयोऽक्षर ब्रह्म, फलं परपदार्थ आनन्दमयः, पूर्वभावित्वाय परप्राप्तेः पूर्वज्ञातत्वबोधनायेत्यर्थः, ज्ञानविषयत्वं परप्राप्तिकारणज्ञानविषयत्वं, प्रतिष्ठा च अक्षरस्य प्रतिष्ठारूपता च, 'यद्गत्वा न निवर्तन्ते तद्धाम परम मम' 'विष्णोर्धाम परं साक्षा'दित्यादिवाक्यैर्बोध्या, तदेतत्साधनायोक्त आनन्दमय इत्यादि, नन्वानन्दमयस्य ब्रह्मत्वे कथमवयवावयविभावस्तस्यानन्दैकरसत्वेनावयवेषूपदिष्टतरतमभावस्य तस्मिन्नसम्भवादत आहुः अत्रेत्यादि, अत्र आनन्दमयादौ, भाक्तः तत्तद्धर्मिणि तत्तदवयवकार्यनिर्वाहकत्वमेव तत्तदवयवत्वव्यवहारप्रयोजकं इदमेव भाक्तत्वं नाम, कैमुतिकन्यायं आनन्दमयस्यावयवावयविभावे उपपादयन्ति प्राणेत्यादिना, अन्नमये लौकिकेऽन्नमयानां प्रत्यक्षत्वेन भाक्तत्वस्य वक्तुमशक्यत्वात् प्राणमयपर्यन्तमनुगमन, वस्तुतस्तु अलौकिकविभूतिरूपान्नमयकोशेऽपि धर्मिस्वरूपेणैव सर्वावयवव्यवहाराद्भाक्त एवावयवावयविभावः, एवं पञ्चस्वपि तादृशव्यवहारस्य भाक्तत्वं बोध्यं, तथात्वात् भाक्तावयवावयविभाववत्त्वात्, धर्मिस्वरूपेणावयवावयविकार्यनिर्वाहकत्वरूपभाक्तावयवावयविभावाङ्गीकारप्रयोजनमाहु' अन्तइत्यादिना, अन्तःस्थितस्य आनन्दमयविज्ञानमयादेः, बाह्यानुरोधेन बाह्यकोशानामाकारसम्पादनानुरोधेनेत्यर्थ., तथात्वं अन्तःस्थितानां धर्मिस्वरूपेणावयवावयविकार्यकरणं, इति हेतोः भाक्तत्वाङ्गीकाराद्धेतोः, सर्वं आनन्दमयस्य परब्रह्मत्वं पुच्छप्रतिष्ठात्वेनोक्तस्याक्षरब्रह्मत्वमिति सर्वं सुस्थमित्यर्थः ॥ १८ ॥

**प्रथमाध्याये प्रथमपादे पञ्चममानन्दमयाधिकरणम् ॥**

'अथ य' इत्यादि छान्दोग्ये प्रथमप्रपाठके श्रूयते, एतच्छ्रुतौ हि सवितरि विद्यमानत्वेनाधेयत्वेन परिच्छिन्नत्वं पुरुषत्वेन शरीरित्वं हिरण्यश्मश्रुत्वादिना रूपवत्व नामनिर्वचनेन तादृङ्नामवत्त्वं श्रूयते, ब्रह्म तूक्तयावद्धर्मशून्यमिति कथमस्य परब्रह्मत्वमिति संशयबीजात्संशयमाहुः ।

पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्ममथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यादि ।

तत्र संशयः, किमधिष्ठातृदेवता, शरीरं, आहोस्वित् परब्रह्मेति ब्रह्मणो वा शरीरमिति ? तदर्थमिदं विचार्यते, हिरण्मयशब्दः सुवर्णविकारवाची आहोस्वित् प्रकाशसाम्येनानन्दवाचीति, 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य आनन्दमयस्य फलत्वमुक्त्वा द्वितीयोपाख्याने 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविदि'ति साधन'स्यानन्दमयमात्मानमुपसङ्क्रम्ये'ति फलं श्रुतं, तत्र सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यत इति विचारारम्भः ।

तत्र हिरण्मयशब्दो विकारवाची केशनखादयश्चोच्यन्ते शरीरधर्माः, 'मृता वा एषा त्वगमेध्या यत् केशश्मश्रुवि'ति शरीरमन्तरा नोपपद्यते, परिच्छेदश्च, आधिदैविकादिवचनञ्च बाधकं, अतः सर्वथा तच्छरीरमिति तु मन्तव्यं, चाक्षुषत्वाच्च, इन्द्रियवत्त्वञ्च श्रूयते 'यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्ये'ति, कपेरासः आसनं, आरक्तं तस्यासनं भवतीति, असभ्यतुल्यता च, अतो देहेन्द्रिययोर्विद्यमानत्वात् जीवः कश्चिदधिकारी सूर्यमण्डलस्थ इति गम्यते, फलं तत्सायुज्यद्वारेति, अथोच्येत 'एष सर्वेभ्यः पाप्मभ्य उदित'इति अपहतपाप्मत्वादिधर्मश्रवणात् पूर्वदोषस्यापि विद्यमानत्वाद् ब्रह्मण एव केनचिन्निमित्तेन शरीरपरिग्रह इति तस्य च शरीरस्य कर्मजन्यत्वाभावादपहतपाप्मत्वादि सङ्गच्छते, सुवर्णशरीरत्वमप्यलौकिकत्वाद् ब्रह्मण एव सङ्गच्छते, शरीरवदिन्द्रियस्यापि परिग्रहः, वर्णमात्रपरिग्रहान्ना—

---

तत्रेत्यादिना, तत्र उक्तवाक्यार्थे, किमधिष्ठातृदेवता सूर्यमण्डले चक्षुषि चावयभूता तदधिष्ठात्री तदभिमानिनी देवता इत्येका कोटि, शरीरं विद्याकर्मातिशयात्प्राप्तचक्षुः सूर्याधिष्ठानस्य जीवस्य श्रुत्युक्तं शरीरं चेति द्वितीया कोटिः, परब्रह्मेति तृतीया कोटि, ननु 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'त्यनेन यज्ज्ञानस्य सर्वपाप्मतरणहेतुत्वमुक्तं सोऽभिमानी कथं स्यादभिमानिज्ञानस्य वा कथं पाप्मतरणहेतुत्वं ? प्राप्तब्रह्मपदजीवज्ञानस्य कदाचित्पाप्मतरणहेतुत्वं सम्भवत्यपि निरभिमानित्वादत आहुः ब्रह्मणो वा शरीरमिति तृतीया कोटि, तदर्थं परब्रह्मणः संशये कोटित्वार्थं, इदं हिरण्मयपदं, विकारवाची 'मयड्वैतयोर्भाषाया' 'द्व्यचश्छन्दसी'ति स्मृत्या द्व्यचः सकाशाच्छन्दसि विकारार्थकमयटोऽपि सम्भवादित्यर्थः, प्रकाशसाम्येन प्राप्तौ सुखसाम्येनेत्यर्थः, ननु पूर्वश्रुत्युक्तस्याब्रह्मत्वे का क्षतिरित्यत आहुः ब्रह्मविदित्यादि, यद्यपि प्रथमोपाख्यान एव 'स यश्चायं पुरुषो यश्चासावादित्ये स एकः य एवंविदि'त्येतज्ज्ञानलक्षणस्य साधनसहितस्यानन्दमयात्मोपसङ्क्रमणं फलमुक्तं, तथापि द्वितीयोपाख्यानोक्तिरूपाख्यानद्वयस्यैकवाक्यताबोधायेत्यवसेयं, फलं नोपेत्यादि य एवंविदिति ज्ञानस्य फलं परब्रह्मप्राप्तिरूपं नोपपद्यत इत्यर्थः ।

पूर्वपक्षमाहुः तत्रेत्यादिना, विकारवाची तथा च संसारी जीव एवोच्यत इत्यर्थः, शरीरधर्माः संसारिजीवशरीरधर्मा इत्यर्थः, उक्तजीवशरीरधर्मत्वं दृढीकुर्वन्ति मृतेत्यादिना, परिच्छेदश्च चक्षुषि आदित्ये च स्थितेरुक्त्या परिच्छेदः, आधिदैविकेत्यादि 'इत्याधिदैवतमध्यात्म'मितिवचनं, बाधकं 'आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविक' इतिस्मृतौ तस्याध्यात्मिकाभेदकथनादाध्यात्मिकस्य जीवत्वात्तद्वचनमपि परब्रह्मत्वे बाधकमित्यर्थः, अतः ब्रह्मत्वबाधकहेतूक्तितः, तच्छरीरं तत्स्थानप्राप्तजीवशरीरं, चाक्षुषत्वात् 'पुरुषो दृश्यत' इत्युक्त्या चाक्षुषत्वात्, बाधकान्तरमाहुः इन्द्रियेत्यादि, इन्द्रियबोधकश्रुतिमाहुः यथा कप्यासमित्यादि, असभ्येत्यादि तथाचाप्राकृतेन्द्रियेष्वसभ्यदृष्टान्तस्यानौचित्यात्प्राकृतान्येव तदिन्द्रियाणीत्यर्थः, गम्यते पूर्वोक्तश्रुत्या बोध्यते, ननु तस्य जीवत्वे तज्ज्ञानात्पाप्मतरणोक्तिरनुपपन्ना स्यादत आहुः फलं त्विति, तथा च तादृशाधिकारी जीवसायुज्येऽपि यथोचितमुक्तिपापतरणयोः सम्भवाच्छ्रुत्युक्तफलोपपत्तिर्बोध्या, ननु 'एष सर्वेभ्यः पाप्मभ्य उदित' इतिश्रवणात् अपहतपाप्मत्वलक्षणब्रह्मधर्मश्रवणात्परमात्मैवायमित्यत आहुः अथोच्येतेत्यादि, पूर्वेत्यादि केशश्मश्र्वादिदोषस्येत्यर्थः, केनचिदित्यादि भक्तविशेषोपर्यनुग्रहविशेषेण लीलासुखदानार्थमित्यर्थः, तस्य ब्रह्मणा लीलार्थं गृहीतस्य, शरीरवत् लौकिकशरीरवत्, परिग्रह इति सङ्गच्छत इत्यनेनान्वयः, वर्णेत्यादि कप्यासवर्णसदृशवर्णपरिग्रहान्नासभ्यतेत्यर्थः, ननु रक्तकमलदलोपमानं त्यक्त्वा किमिति निषिद्धोपमानमुक्तमत आहुः

सम्यता, स्थावरापेक्षया जङ्गमस्योत्कृष्टत्वात् स्थावरावयवोपमानवज्जङ्गमावयवोपमानं स्थावरस्यापीति सर्वब्रह्मभावाय श्रुत्युक्तत्वाच्च, तस्माद् ब्रह्मण एवेदं शरीरं इत्येवं प्राप्त उच्यते,

## अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥ ( १-१-६ )

अन्तर्दृश्यमानः परमात्मैव, कुतः? तद्धर्मोपदेशात्, तस्य ब्रह्मणो धर्मा उदित्यादिधर्मा उपदिश्यन्ते 'स एष सर्वेभ्यः पाप्मभ्य उदित' इति,

अयमाशयः, ब्रह्म कारणं जगत् कार्यमिति स्थितं, तत्र कार्यधर्मा यथा कारणे न गच्छन्ति तथा कारणासाधारणधर्मा अपि कार्ये, तत्रापहतपाप्मत्वादयः कारणधर्मास्ते यत्र भवन्ति तद्ब्रह्मेत्येवावगन्तव्यं बलिष्ठत्वात् कारणधर्मस्य, नामतुल्यतामात्रमुभयेषामपि धर्माणां, ते श्रुत्यैकसमधिगम्या ब्रह्मणि, लोके प्रमाणान्तरमपि प्रवर्तते, अतः सर्वग्मादयो ब्रह्मनिष्ठा एव धर्माः, स्थूलत्वादयस्तु ये ब्रह्मणि निषिध्यन्ते अस्थूलादिवाक्येषु ते कार्यधर्माः, 'अणोरणीया'नित्यादिषु कारणधर्मा एव, अत एकोऽप्यसाधारणो धर्मो विद्यमानः शिष्टान् सन्दिग्धानपि ब्रह्मधर्मानेव गमयति, इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकारः, तथा च श्रुत्यतिरिक्तस्थले[1] तथैवावगन्तव्यं, 'अनन्त'मित्यनन्तमूर्तिता च ब्रह्मणः प्रतिज्ञाता, अन्यथा

---

स्थावरेत्यादि, स्थावरावयवेत्यादि तथाच स्थावरावयवो रक्तोत्पलदलं तदुपमावान् कप्यासस्तदुपमेयता चाक्षणोरिति परम्परया स्थावरोपमेयत्वान्न दोष इत्यर्थ, ननु तथापि परम्परया स्थावरोपमानतापि तादृशाक्ष्णोर्दोष एवेत्यत आहु स्थावरस्येत्यादि, तथाच 'सर्वं खल्वि'तिश्रुत्या सर्वस्यैव ब्रह्मत्वोक्तेः स्थावरस्यापि ब्रह्मत्वात् तदुपमानता न दोषायेत्यर्थ, एवं कप्यासोपमानतापि निर्दुष्टा ज्ञेया, उच्यते सूत्रेण सिद्धान्त उच्यत इत्यर्थ,

अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥ सूत्रार्थमाहु अन्तरित्यादिना, आदित्यान्तर्दृश्यमान इत्यर्थः परमात्मैवेत्येवकारेणाधिकारिजीवव्यवच्छेद, उदित्यादि उदितिनामत्वादि, उपदेशमेवाहु स एष इत्यादिना,

ननु ब्रह्मधर्म कारणगतोऽपहतपाप्मत्वादि कार्ये जीवे सङ्क्रमिष्यति तन्तुधर्माणा पटे सङ्क्रमवत् तथा च जीव एव श्रुत्युक्तोपहतपाप्मा स्यादित्यत आहुः ब्रह्म कारणमित्यादि, कारणासाधारणेत्यादि तन्तुत्वपटसमवायिकारणत्वादय, तत्र कारणवातासाधारणधर्माणा मध्ये, कारणधर्माः कारणासाधारणधर्मा., अपहतपाप्मत्वादय इत्यादिपदेनागणितानन्दत्वादयो ग्राह्या, बलिष्ठत्वात् असाधारणधर्मवत्त्वेन परब्रह्मत्वानुमापकत्वात्, ननु 'उदेति ह वै सर्वेभ्य पाप्मभ्यो य एवं वेदे'ति ब्रह्मवेदनवतो जीवस्यापि अपहतपाप्मत्वस्य श्रुत्योक्तत्वात्कथमपहतपाप्मत्वमसाधारणो ब्रह्मधर्म इत्यत आहु नामतुल्यतेत्यादि, उभयेषामित्यादि ईश्वरीयापहतपाप्मत्वस्य जीवीयापहतपाप्मत्वादिधर्माणां च नामतुल्यतामात्र न त्वर्थतुल्यतेत्यर्थ, ईश्वरे त्रैकालिकपापशून्यत्वरूपस्य तस्य जीवे कदाचित्पापसम्भवेनासम्भवात्, तत्र विनिगमकमाहु त इत्यादि, ते ब्रह्मधर्मा, लोके जीवीयकादाचित्कापहतपाप्मत्वे, प्रमाणान्तरं अनुमान, तथा च जीवीयापहतपाप्मत्वं पापसमानाधिकरण ध्वंसत्वाद्यो यो ध्वंसः स प्रतियोगिसमानाधिकरण शब्दध्वंसवदिति, अतः श्रुत्या ब्रह्मासाधारणधर्मत्वेन प्रतिपादनत, कार्यधर्माः 'अस्थूलमनणु' इत्यादिश्रुत्या परमाणुगताणुत्वस्याकाशादिगतमहत्त्वस्येत्यर्थ, ननु निषिध्यमानाणुत्वमहत्त्वादीना कथं कार्यमात्रधर्मत्वं? 'अणोरणीया'नितिश्रुत्या तेषामेव ब्रह्मणि विधानादत आहु कारणधर्मा एवेति, एवकारेण कार्यधर्मत्वं व्यवच्छिद्यते, तथा हि निषेध्यास्तु कार्यीभूतपरमाण्वाकाशयोर्धर्मा. 'अणोरणीयान्महतो महीयानि'तिश्रुत्या विधेयास्तु परमाण्वाकाशाणुत्वमहत्त्वातिरिक्ताणुत्वमहत्त्वधर्मा एव, स्फुट श्रुतित एव तथाप्रतीतेरन्यथा बाधितार्थप्रतिपादकत्वेन श्रुत्योरप्रामाण्यापत्ते, अतः असाधारणधर्माणा बलिष्ठत्वत, असाधारणः अपहतपाप्मत्वादिलक्षण., सन्दिग्धान् अणुत्वमहत्त्वादिरूपान्, इममेव सन्दिग्धार्थश्रुतितात्पर्यं निश्चित्यायमेव श्रुत्यभिप्रेतोऽर्थ इति निश्चयार्थमेव, अन्यथा सर्वत्र श्रुत्या निर्णीतार्थकथने व्यासशास्त्रवैयर्थ्यापत्तेरितिभावः, फलितार्थमाहु. तथाचेत्यादिना, इत्थं च ब्रह्मणि श्रुतिमात्रगम्ये श्रुत्युक्तासाधारणधर्मैरेव निर्णय, श्रुत्यतिरिक्तस्थले श्रुत्यतिरिक्तलौकिकप्रमाणगोचरे लौकिक पदार्थे ब्रह्मस्वरूपे, तथैवावगन्तव्य लौकिकप्रमाणैरेव वस्तुस्वरूप निश्चेतव्य, ननु श्रुतिमात्रगम्यं ब्रह्म श्रुतितद्व्यतिरिक्तलौकिकप्रमाणगम्यमपि ब्रह्मैव 'सर्वं खल्वि'तिश्रुतिदर्शनादित्थ च 'तद्वैतत्'श्रुतिविरोध इत्यत आहु. अनन्त-

---

1. श्रुतिव्यतिरिक्तस्थले इत्यपि पाठ ।

'गुहायां निहितमि'ति विरुध्येत, तस्मात्साकारं तादृशमेव ब्रह्म, ब्रह्मणः शरीरमिति तु सर्वथा असम्भवं[1], सर्वकर्तु[2]र्ब्रह्मणः का वा अनुपपत्तिः स्याद् येन तस्या[3]पि शरीरं कल्पयेत्? किन्तु लीलया व्यामोहनार्थमन्यथा भासयेन्नटवत्, तस्माद्वेदातिरिक्तेऽप्युपपत्तिपूर्वकं यत्र ब्रह्मधर्मस्तद्ब्रह्मेति मन्तव्यं, ब्रह्म तु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम, प्रकृतेपि 'हिरण्मय' इत्यत्र यकारलोपश्छान्दसः, अतो न क्वचित्, हिरण्यशब्द आनन्दवाची, लोकेपि तस्यानन्दसाधकत्वात्, अतः केशादयोपि सर्वे आनन्दमया एव, तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यं, अत एव 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः केयूरवान् मकर[4]कुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र' इत्यत्रापि वपुः स्वरूपं, 'माया ह्येषा मया सृष्टा' इत्यादिभगवद्वाक्यं भगवान्मायया[5] भगवन्तमन्यथा पश्यतीत्याह न तु भगवानेव मायिक इति, शरीरे सति जीवत्वमेवेति निश्चयः, अतो ब्रह्मधर्मोपदेशात् सूर्यमण्डलस्थः परमात्मैव ॥ १९ ॥

## भेदव्यपदेशाच्चान्यः ॥ २० ॥

इतोपि सूर्यमण्डलस्थः परमात्मा, भेदव्यपदेशात्, 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इति– श्रुत्यन्तरे आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टं, यद्यपि तत्राकारो न श्रूयते तथापि हिरण्मयवाक्येनैकवाक्यत्वात्सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम् ।

---

मित्यादि, तथाच 'सत्य ज्ञानमनन्त ब्रह्मे'तिस्वरूपलक्षणे एकस्यैव ब्रह्मणोनन्तमूर्तिताप्रतिपादनान्न श्रुतिविरोध इत्यर्थः, न चानन्तपदस्याविनाशित्वमेवार्थं इति वाच्यं, ब्रह्मपदेनैवाविनाशित्वलाभात् अनन्यलभ्यस्यैव शब्दार्थत्वात् अन्यथा परिच्छिन्नपरिमाणकनानामूर्तितानङ्गीकारे, **गुहायां** भक्तहृदयाकाशे, **निहितमित्यादि** तथाच गुहाया अत्यल्पप्रमाणवत्त्वेन आकाशतोप्यतिव्यापकस्य ब्रह्मणो निहितत्वासम्भवात् श्रुतिविरोधः स्फुट इत्यर्थः, उपसंहरन्ति **तस्मादित्यादिना**, **तादृशमेव** व्यापकं श्रुतिमात्रगम्य कारणरूप नानामूर्तिक कार्यरूप लौकिकप्रमाणगम्यं यादृश यादृशं श्रुत्युक्तं तादृशमेवेत्यर्थः, श्रुतिप्रतिपाद्यस्य हिरण्मयपुरुषस्य ब्रह्मत्वं निर्णीय संशयोल्लिखितां तृतीयां कोटिं दूषयितुमाहुः **ब्रह्मण इत्यादि**, **सर्वकर्तुः** निमित्ताभिन्नोपादानस्य सर्वकर्तुः, ननु शरीरतद्ग्रहणत्यागादीनामुपलभ्यमानत्वाल्लीलाविशेषं कर्तुं शरीरपरिग्रहे को दोष इत्यत आहुः **किन्त्वित्यादि**, अत एव 'अज्ञत्वं पारवश्यञ्च विधिभेदादिक तथा तथा प्राकृतदेहन्व देहत्यागादिकं तथा असुराणां विमोहाय दोषा विष्णोर्न हि क्वचि'दित्यादिस्मृतिरप्युपपन्ना ज्ञेया, श्रुत्युक्तस्य कैमुतिकन्यायेन ब्रह्मत्व वक्तुमाहुः **तस्मादित्यादि**, **वेदातिरिक्ते** भक्तानुभूतस्मृतिप्रतिपादितब्रह्मस्वरूपस्थले, **उपपत्तिपूर्वकं** निराबाधयुक्तिपूर्वकं, **यत्र** 'किं स्वप्न एतदुते'त्यादिना यत्र ब्रह्मत्वनिर्णयस्तादृशस्थले इत्यर्थ इत्थं च वेदैकसमधिगम्यस्य ब्रह्मत्वे किं वाच्यमित्यर्थः, ननु क्वचप्रकृतिकहिरण्मयशब्दार्थस्य कथं न विकारित्वमत आहु. **प्रकृतेपीत्यादि**, **अत एव** तादृशपुरुषस्यानन्दमयमात्रस्वरूपत्वादेव, **वपुः स्वरूपमित्युपलक्षणं** वस्तुगत्या यावद्धर्मविशिष्टं ध्येयस्वरूपं प्रतिपादितं तावत्सर्वमेवानन्दस्वरूपमिति बोध्यं, नन्वेवं च 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदे'ति कथमुपपद्येत इत्यत आहु. **मायेत्यादि**, तथा च भूतगुणैर्युक्तं मां यत्पश्यति सा मायेत्यर्थः, **भगवान्** नारदः, **अन्यथा पश्यति** भूतगुणैर्युक्तं पश्यति, **ब्रह्मधर्मः** अपहतपाप्मत्वम् ॥ १९ ॥

पूर्वोक्तार्थदृढीकरणाय हेत्वन्तरमाह **भेदव्यपदेशाच्चान्यः** ॥ २० ॥ **इतोऽपि** एतद्धेतुतोऽपि, भेदव्यपदेशमेवाहुः **य आदित्य** इत्यादिना, 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीर य आदित्यमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृत' इति, **श्रुत्यन्तरे** एतस्यां श्रुतौ, **आधिदैविकमिति निर्दिष्टमि**त्यनेनान्वयः, **सूर्यमण्डलेत्यादि** तथा च मण्डलं जड अभिमानी जीवश्चेतनस्ताभ्यां भेदेनेत्यर्थः, **तत्र** श्रुत्युक्तान्तर्यामिस्वरूपे ।

---

१ असङ्गतमित्यपि पाठः । २ सर्वकर्तृब्रह्मण इत्यपि पाठः । ३ स्वस्यापीत्यपि पाठ. । ४ कनकेत्यपि पाठः । ५ भगवन्मायये त्यपि पाठ. ।

अन्तर्यामिब्राह्मणे चत्वारोऽर्था उच्यन्ते, सर्वत्र तिष्ठन् तद्धर्मैर्न सम्बध्यत, सप्रमुक्तपरिहाराय स्वधर्मैस्तन्न बध्यते, स्वलीलासिद्ध्यर्थं तच्छरीरमिति, तस्य नियमनन्तदर्थमिति, चकाराद्धर्मा उच्यन्ते, तस्मात् सर्वविलक्षणत्वादन्य एव, नाभिमानी, उपचारव्यावृत्त्यर्थमन्यपदेनोपसंहारः, ब्रह्मत्वे सिद्धे ज्ञानं वा उपासना वेति नास्मत्सिद्धान्ते कश्चन विशेषः, कारणे कार्यधर्मारोपस्त्वयुक्त एव, कार्ये पुनः कारणधर्माधिकरणत्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थितिः ॥ २० ॥

इति प्रथमाध्याये प्रथमे पादे षष्ठमन्तस्तद्धर्माधिकरणम् ॥

---

'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण'मिति ।

तत्र संशयः, भूताकाशो ब्रह्म वेति ? ननु कथमत्र सन्देहः ? आकाशव्योमशब्दाः ब्रह्मण्येव प्रयुज्यन्ते ब्रह्मप्रकरणे, कार्यनिरूपणे तु महाभूतवचनः, यथा 'आकाश आनन्दो न स्यात्' 'परमे व्योमन् प्रतिष्ठिते'त्यादि, 'आत्मनः आकाशः सम्भूत' इति कार्यनिरूपणं, अतः प्रकरणादेव सन्दिग्धनिर्णये किमिति सूत्रारम्भः ? जन्मादिलक्षणसूत्रेण चायमर्थो निर्णीतः, अन्यथा ब्रह्मशब्देऽपि सन्देहः स्यात् महाभूतवेदादिवाचकत्वात्, तस्मात्प्रकरणादेव परिज्ञानं भविष्यतीति चेत्, उच्यते, असन्दिग्धे प्रकरणे तथैव निर्णयः, इह पुनः प्रकरणमपि सन्दिग्धं, अतो विचारः ।

---

नन्वत्र भेदनिर्देशमात्रेण कथं परमात्मलाभ इत्यत आहु अन्तर्यामीत्यादि, तद्धर्मैः आधारधर्मैः, 'य आदित्ये तिष्ठन्नादित्यादन्तर' इत्यनेन जड मण्डलमाधारत्वेन निर्दिश्य तस्याप्यन्तरत्वोक्त्या तद्भेदः प्रदर्शित, आदित्यादन्तरत्वं तदभिमानिनो जीवस्याप्यस्तीति तज्जीवतोऽपि भेदबोधनाय 'यमादित्यो न वेदे'त्यनेनाभिमान्यज्ञेयत्वमुक्त, यद्यभिमानी जानीयान्मुक्त एव स्यादित्यर्थः, तच्छरीरं 'यस्यादित्य· शरीर'मित्युक्तमित्यर्थ , तस्य नियमन 'य आदित्यमन्तरो यमयती'त्यनेन नियमनमुक्तमित्यर्थ , तदर्थं लीलाकरणार्थं, चकारात् सूत्रस्थचकारात्, धर्माः हिरण्मयपुरुषधर्माः, उपचारेत्यादि तथा च सूर्यमण्डलाभिमानिन उपासनार्थ 'आत्मान्तर्याम्यमृत' इत्युक्तं न तु वास्तवामृतत्वादिरूपताप्यस्तीत्युपचारस्तद्व्यावृत्त्यर्थं, अन्यपदेन उक्तान्तर्यामिणि साक्षादभिमानिभेदबोधकान्यपदेन, न'न्वोमित्येतदक्षरमुद्गीथमुपासीते'त्युपासनोपक्रमादुपासनायाश्चारोपितधर्मेणैव करणसम्भवात् कथमेतद्वाक्ये ब्रह्मत्वेन ज्ञानसिद्ध्यर्थं वास्तवब्रह्मतानिर्णायकत्वमत आहुः ब्रह्मत्वेत्यादि, कश्चनेति तथा च ज्ञानं वोपासनावा वास्तवधर्मैरेव न तूपासनायामारोपाकाङ्क्षेत्यविशेष इतिभाव., ननु सर्वत्रोपास्ये वास्तवोपास्यधर्मा न सम्भवन्ति ओङ्काररूपत्वेनोद्गीथोपासनाया उद्गीथे ओङ्काररूपत्वधर्मस्यासम्भवादत आहु· कारण इत्यादि, अयुक्त एव युक्तिबाधित एव, कार्ये उद्गीथादिरूपे, कारणधर्मा ओङ्कारादिकारणाना धर्माः, उपासना कार्योपासना, अभेदात् कार्ये कारणाभेदात् ॥ २० ॥

प्रथमाध्याये प्रथमपादे षष्ठमन्तस्तद्धर्माधिकरणम् ॥

---

छान्दोग्यप्रथमप्रपाठकस्थविषयवाक्यमुक्त्वाधिकरणप्रयोजनं स्फुटीकर्तुं संशयादिकमाहु तत्रेत्यादिना, श्रुत्युक्ताकाशशब्दे, ब्रह्मार्थकत्वमाहु यथाकाश इत्यादि, कार्याकाशमाहु आत्मन इत्यादि, ननु ब्रह्मण उत्पत्तिस्थितिभङ्गादिहेतुत्वरूपलक्षणार्थमिद सूत्रमत आहुः जन्मादीति, निर्णीतः तथा च वैयर्थ्यमेव पर्यवसित सूत्रस्य, अन्यथा आकाशशब्दे ब्रह्मार्थकत्वनिर्णायकप्रकरणसत्त्वेपि सन्देहाङ्गीकारे, ब्रह्मशब्देत्यादि तथा च ब्रह्मशब्दनिर्णयार्थमपि किञ्चित्सूत्रं स्यादितिभावः, इति चेत् इति पूर्वपक्ष· प्राप्तश्चेदित्यर्थः, उच्यते सिद्धान्त उच्यते, सन्दिग्धं भूताकाशवाचकाकाशशब्दस्य ब्रह्मवाचकाकाशशब्दैकप्रकरणपठितत्वेनोभयो· सन्देहात्प्रकरणिनोपि सन्देहइत्यर्थ इति बोध्य,

अवान्तरविद्यायां पर्यवसितप्रकरणवदस्यापि प्रकरणस्य भूताकाश एव पर्यवसानमिति लोकभाष्यन्यायेनाकाशो भौतिक एवेति पूर्वपक्षस्तत्राह,

## आकाशस्तल्लिङ्गात् ॥ २१ ॥ ( १-१-७ )

आकाशः परमात्मैव, कुतः? तल्लिङ्गात्, श्रुतिलिङ्गादयो नियामकत्वेन पूर्वतन्त्रवदिहापि गृह्यन्ते, लिङ्गश्रुतिसामर्थ्य एकवाक्यता च सर्वासां ब्रह्मश्रुतीनां, तत्र ब्रह्मैव जगत्कारणमिति निःसन्दिग्धेषु सिद्धं, सर्वशब्दवाच्यत्वं ब्रह्मण्येव, तत्र वाक्यार्थापेक्षया पदार्थस्य दुर्बलत्वाद् वाक्यार्थः सर्वगतित्वादिः, तद् वाक्यार्थान्यथानुपपत्त्या आकाशपदार्थो ब्रह्मेति सर्वशब्दवाच्यत्वाच्च, न लक्षणा मुख्यत्वाच्च, यावन्मुख्यब्रह्मपरत्वं सम्भवति तावन्न कस्यापि वेदान्तस्यापरब्रह्मपरत्वमिति मर्यादा, तस्माद् 'यदेष आकाश आनन्दो न स्या'दितिवदत्राप्याकाशो ब्रह्मैवेति सिद्धम् ॥ २१ ॥

इति प्रथमाध्याये प्रथमे पादे सप्तममाकाशस्तल्लिङ्गाधिकरणम् ॥

---

अवान्तरविद्यायामिति तथा च जानश्रुत्युपाख्यानं यथा सवर्गविद्यायां पर्यवसितं तथेदमपि प्रकरणं भूताकाश एव पर्यवसितं स्यादित्यर्थः, **लोकभाष्यन्यायेन** लोके गृहीतशक्तिकः शब्दो वेदेपि बोधक इतिन्यायेन, इत्थं च विचार आवश्यक इत्यर्थः. **तत्राह** पूर्वपक्षे सूत्रकारः समाधानमाहेत्यर्थः,

**आकाशस्तल्लिङ्गात् ॥ २१ ॥ तल्लिङ्गात्** 'यदेष आकाश आनन्दो न स्या'दित्यत्राकाशपदस्य ब्रह्मप्रकाशनसामर्थ्यात्, **नियामकत्वेन** अर्थविशेषनिर्णायकत्वेन, 'अर्थविप्रकर्षा'दितिजैमिनिसूत्रोक्ताः, **इहापि** व्याससमीमांसायामपि, **सामर्थ्यं** अर्थप्रकाशनं, **सर्वासां** 'यतो वा इमानि भूतानि जायन्ते' 'आकाशादेव सर्वाणि भूतानि जायन्ते' इत्यादिरूपाणां, तत्र जगत्कारणतायां ब्रह्मणि व्यवस्थापकश्रुतौ, **निःसन्दिग्धेषु** 'यतो वा' 'तस्माद्वा' इत्यादिवाक्येषु, **सर्वशब्देत्यादि** श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यतात्पर्यालोचने 'सर्वाणि ह वा इमानि भूतान्याकाशादेवेतिश्रुतिघटकसर्वपदप्रतिपाद्यत्वं,' **तत्र** 'अस्य लोकस्य का गति'रितिश्रुतिवाक्ये, **वाक्यार्थापेक्षया** 'का साम्नो गति'रित्यारभ्य लोकपर्यन्तसर्वेषां गतिमाश्रयरूपामुक्त्वा 'अस्य लोकस्य का गति'-रितिप्रश्ने 'आकाश'इत्युक्तेः सर्वगतित्वं आकाशपदार्थब्रह्मण एव न तु भूताकाशस्य तथा च वाक्यार्थः सर्वगतित्वं तच्च ब्रह्मण्येवोपपन्नं न तु भूताकाशे इति ब्रह्मैवाकाशपदवाच्यं न तु भूताकाशस्तस्य लोकान्तःपातित्वेन सर्वलोकगतित्वासम्भवात्, **पदार्थस्य** भूताकाशरूपपदार्थस्य, **तद्वाक्यार्थेत्यादि** आकाशे सर्वगतित्वबोधकवाक्यार्थ इत्यर्थः, **सर्वशब्देत्यादि** 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इतिश्रुत्युपात्तासङ्कुचितवृत्तिकसर्वशब्दवाच्यत्वस्य भूताकाशेपि सत्त्वात् तथा चाकाशपदेन भूताकाशोपादाने तस्यापि स्वस्मादुत्पत्त्यापत्तिः स्यात् सा तु बाधितात्माश्रयदोषप्रसङ्गादित्यर्थः, ननु शक्त्याकाशपदं ब्रह्मबोधकं लक्षणया भूताकाशं बोधयत्वत आहुः **न लक्षणेत्यादि**, तथा च युगपद्वृत्तिद्वयविरोधात् मुख्यार्थे बाधाभावाच्च न लक्षणेत्यर्थः, **मुख्यब्रह्मपरत्वं** उत्पत्त्यादित्रितयकर्तृब्रह्मपरत्वं **कस्यापि** आकाशप्राणज्योतिरादिशब्दानां मध्ये कस्यापीत्यर्थः, **अपरेत्यादि** आध्यात्मिकादिब्रह्मपरत्वमित्यर्थः, **आकाशो ब्रह्मेति** तथा च श्रुतावाकाशपदे ब्रह्मरूपार्थप्रकाशनसामर्थ्यरूपलिङ्गादाकाशपदार्थोऽत्र ब्रह्मैव न तु भूताकाश इति फलितम् ॥ २१ ॥

प्रथमाध्याये प्रथमपादे सप्तममाकाशस्तल्लिङ्गाधिकरणम् ॥

## अत एव प्राणः । २२ । (१-१-८)

'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते'त्युपक्रम्य श्रूयते, 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते'ति,

तत्र संशयः, प्राण आसन्यो ब्रह्म वेति,

पूर्वपक्षसिद्धान्तौ पूर्ववदेवेत्यतिदिशति,

नन्वधिकरणानां न्यायरूपत्वात् सर्वत्र गमिष्यति किमित्यतिदिश्यत इति,

उच्यते, प्राणस्य मुख्यस्यापि सर्वभूतसंवेशनं स्वापादौ श्रुतावेवोपपाद्यते 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येती'त्यादिना, तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति न न्यायेन प्राप्नोति, अतोतिदिशति, अनेन चायमतिरिक्तो न्याय आपादितः, यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किञ्चिद्बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति, न त्वन्यस्मिन् सम्भवे तत्परत्वमिति, अत एव तल्लिङ्गात् प्राणशब्दवाच्यं ब्रह्मेति ॥ २२ ॥

**इति प्रथमाध्याये प्रथमे पादेऽष्टमं प्राणाधिकरणम् ॥**

---

## ज्योतिश्चरणाभिधानात् । २३ । (१-१-९)

इदमामनन्ति, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते, विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदन्तावद्यदिदमस्मिन्नन्तः पुरुषे ज्योति'रिति,

तत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्विद् ब्रह्मैवेतिसंशयः,

अत्रासाधारणब्रह्मधर्माभावात् पूर्वपक्षः,

---

**अत एव प्राणः** ॥ २२ ॥ **अत एव** श्रुतौ प्राणपदे ब्रह्मप्रकाशनरूपसामर्थ्यस्य लिङ्गस्य सत्त्वादेव, **प्राणः** प्राणपदवाच्य परमात्मैवेत्यर्थ', छान्दोग्यप्रथमप्रपाठकवाक्यं विषयवाक्यत्वेनाहुः **प्रस्तोतर्ये**त्यादि, अत्र देवतापदेनोपक्रमात् आदित्यसहपाठाच्च न ब्रह्मप्रकरण, 'प्राणस्य प्राण'मित्यादिश्रुति. ब्रह्मप्रकरणस्येति सन्देहबीज, **प्रस्तावमन्वायत्ते**ति प्रस्ताव सामोपासनाविशेषस्तादृशोपासनाविषयीभूता नियता अन्वायत्तपदेनोच्यते देवतेत्यर्थ ,

**तत्र** श्रुत्युपात्तप्राणपदे, **प्राणः** श्रुत्युपात्त प्राणपदवाच्यः, **आसन्यः** वायुभेदो ब्रह्म वेत्याकार इत्यर्थ',

**पूर्ववदेव** लोकपुराणादिप्रसिद्ध्या वायुभेद एवेतिपूर्वपक्ष , श्रुत्युक्तसर्वभूतसंवेशनरूपलिङ्गस्य ब्रह्मण्येव सम्भवेन प्राणपदेन ब्रह्मैवोच्यत इतिसिद्धान्त., **अतिदिशति** अत एवेत्यनेन लिङ्गाद्यर्थकेन सूत्रकारोतिदिशतीत्यर्थ ,

एतदधिकरणे वैयर्थ्यमाशङ्कते **नन्वि**त्यादिना, **सर्वत्र** 'प्रस्तोत'रित्यादिविषयवाक्यस्थलेपि, **गमिष्यति** पूर्वोक्ताधिकरणमेव समानन्यायस्थले गमिष्यति,

**मुख्यस्य** वायुभेदरूपस्य, **अस्यापि** एतच्छ्रुतिस्थप्राणपदस्यापि, **न्यायेन** अतिदिष्टाधिकरणान्तरेण, **प्राप्नोति** प्राणपदस्य ब्रह्मार्थत्व प्राप्नोति, **अनेन** अतिदेशेन, **अतिरिक्तः** पूर्वाधिकरणादतिरिक्त , **न किञ्चिद्बाधकं** यथा 'प्राणं तर्हि वागप्येति प्राण चक्षु प्राण श्रोत्र प्राण मनो यदा बुध्यते प्राणादेवाधि पुनर्जायते' इत्यत्रेन्द्रियरूपभूतानां वायुरूपप्राणसन्निवेशेन प्राणविद्याया प्राणस्य बोधे न बाधकत्व तथेत्यर्थ , **अन्यस्मिन्** प्राणादिरूपेऽन्यस्मिन्, **तत्परत्वं** ब्रह्मपरत्व, **तल्लिङ्गात्** श्रुतौ ब्रह्मप्रकाशनरूपसामर्थ्यस्य प्राणपदे सत्त्वात ॥ २२ ॥

**प्रथमाध्याये प्रथमपादेऽष्टमं प्राणाधिकरणम् ॥**

---

**ज्योतिश्चरणाभिधानात्** ॥ २३ ॥ **आमनन्ति** छान्दोग्यपञ्चमप्रपाठके पठन्तीत्यर्थ', **विश्वतः पृष्ठेषु सर्वत** उत्तरितस्यैव विवरण **सर्वतः पृष्ठेष्विति**,

**असाधारणे**त्यादि 'ज्योतिषामपि तज्ज्योति'रितिब्रह्मासाधारणधर्मस्तस्यात्रानुक्तेः, प्राकृत जाठररूपं ज्योतिरेवेदमिति पूर्व. पक्ष',

सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्वमिति, 'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतन्दिवी'ति पूर्ववाक्यं, 'गायत्री वा इदं सर्वभूतं यदिदं किञ्चे'ति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्याः पादचतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तं, पुरुषसूक्तेऽपि आश्रमचतुष्टयस्य जीवाः पादत्वेनोक्ताः, तथा प्रणवब्रह्मविद्यायामपि अकारोकारमकारनादवाच्याश्चत्वारः पादा विश्वतैजसप्राज्ञतुरीया उक्ताः, 'तद्विष्णोः परमं पद'मिति च, 'ब्रह्मपुच्छ'मिति

---

एतावानित्यादि सर्वसृष्टमारभ्याक्षरब्रह्मान्त, अस्य परब्रह्मण, महिमा माहात्म्य, अत माहात्म्यविशिष्टाक्षरब्रह्मण, ज्यायान् श्रेष्ठतम, पूरुषः पुरुषोत्तम, पाद इत्यादि सर्वभूतविशिष्टाः जीवा, अस्य पुरुषोत्तमस्य, एक पाद इत्यर्थ, पूर्वपादस्य ब्रह्मधर्मत्वेपि मुख्य धर्मरूप द्वितीय पादमाह त्रिपादस्येत्यादिना, त्रय. पादा विद्यन्ते यस्मिन् तत्त्रिपाद् एतादृश, अमृतं मोक्षसुखरूप, दिवि विद्यमान, पूर्ववाक्य 'अथ यदत· पर' इत्यस्य वाक्यस्य पूर्ववाक्य, इत्थ च पूर्ववाक्ये ब्रह्मणश्चरणविशिष्टस्य निरूपणादुत्तरवाक्यस्य च पूर्ववाक्ये एकवाक्यतापन्नत्वादुत्तरवाक्ये चरणानुपादानात्सूत्रे 'चरणाभिधाना'दितिहेतु स्वरूपासिद्ध इत्याशङ्का निरस्ता बोध्या, एकवाक्यता च पूर्वश्रुतौ 'एतावानस्य महिमे'त्येनच्छब्दोपादानादुत्तरश्रुतौ च 'यदत पर'मिति यच्छब्दोपादानाद् बोध्या, ननु तथापि 'यदत पर'मित्यनेन विश्वात्मकाक्षरादूरस्थितत्व बुध्यते, निराधार च ब्रह्म, तस्य सर्वविश्वाधारकत्वमसम्भवदुक्तिकमिति चेन्न, वृक्षाग्रस्थिते श्येने वृक्षाग्रात्पर श्येन इत्युपरिदेशसङ्गवति श्येने वृक्षाग्राधिकरणके तथा पञ्चमीपरशब्दयो. प्रयोगदर्शनात्, 'य आदित्ये तिष्ठन्नादित्यादन्तर' इतिश्रुतौ ब्रह्मण. साधिकरणताया निरूपणाच्चानुपपत्तिलेशाभावात्, नानास्थलेषु ब्रह्मणः पादानां निरूपण प्रदर्शयितुमाहु· गायत्रीत्यादि, तस्याः ब्रह्मत्वेन प्रतीकोपासनाविषयीभूताया., प्रतिपाद्येत्यादि तथा च गायत्र्या ब्रह्मप्रतीकत्वेनोपासनार्थ ब्रह्मण पादा एव गायत्रीपादत्वेन निरूपिता इति ब्रह्मण एवात्र पादनिश्चय कृत इतिफलित, गायत्र्याख्यब्रह्मविद्यां गायत्री या छन्दोरूपा तस्याः ब्रह्मत्वेनोपासनारूपा विद्यामित्यर्थ पूर्वप्रतीकस्य बोध्य, पूर्वोक्तार्थदृढीकरणाय ब्रह्मणश्चरणनिर्णायकस्थलान्तरमाहुः पुरुषसूक्त इत्यादि, 'त्रिपादूर्ध्व उदैत् पुरुष. पादोस्येहाभवत्पुन ततो विश्वङ् व्यक्रामत् साशनानशने उभे' इत्यत्राश्रमत्रयस्थान् जीवान् पादत्वेनोक्त्वा 'पादोस्येहे'त्येकवचनेन चतुर्थाश्रमजीवस्य भगवति स्थितस्य पादत्वमुक्त, तेभ्य पादेभ्य साशनानशनपदवाच्ये नित्यानित्यफले विशेषेणाक्रामत् प्राप्तवानित्याश्रमचतुष्टयस्था जीवा· पादत्वेनोक्ताः, नह्यब्रह्मण एते पादा. सम्भवन्तीति, अन्यत्रापि पादान् प्रदर्शयितुमाहु. प्रणव इत्यादि, अकारोकारमकारनादाना पादानां नामान्याहु. विश्वतैजसप्राज्ञतुरीया इति, इत्थ च प्रणवब्रह्मविद्याया ब्रह्मणश्चत्वारपादा उक्तास्तथा 'यदत परो दिवो ज्योति'रित्यत्र ज्योति पदवाच्यस्य ब्रह्मण. पादा निर्णीता ज्ञेया, एव ब्रह्मणश्चरणनिर्णायकान्तरमाहु· तद्विष्णोः परमं पदमिति, 'सदा पश्यन्ति सूरय' इत्यनेन चरणे प्रत्यक्ष प्रमाणमुक्त, पुनर्निदर्शनान्तरमाहु· ब्रह्म पुच्छमिति चेति, अत्र पुच्छपदेन पुरुषोत्तमस्थितिस्थानमक्षरं चरणरूपमुक्तमिति पादसत्त्वे सम्मतिरुक्ता, नि.सन्दिग्ध ब्रह्मपादानां निर्णायकस्थलमाहुः सत्यकामब्राह्मण इत्यादिना, तथाहि सत्यकामनामा जबालापुत्रो जाबालो मातर प्रत्यामन्त्रयाञ्चक्रे, मातर्ब्रह्मचर्य चरित्वा गुरुकुले वसन् स्वाध्यायमध्येष्य इतीच्छा जातास्ति ममेत्यत किङ्गोत्रोहमिति मा वद यतो गुरु त्व किङ्गोत्रोसीति वर्णनिश्चयार्थं प्रश्न करिष्यति, त्रैवर्णिकानामेवाधिकारात्तन्निर्णयार्थमेवम्पृष्टा जबाला नाह तव गोत्र जानामीत्युवाच, ततो मात्रा उक्त नाम तु तव जानामि सत्यकामजाबालस्त्वमिति, ततो जाबालो हारिद्रुमत गुरुमुपेयिवान्, तदनन्तर गुरुणा पृष्टस्तथैवोक्तवान्, तत सत्योक्त्या निश्चितब्राह्मण्यो गौतमस्तमुपनीतवान्, तदनन्तर गुरुणा समुदायात् पृथक् पृथग् गवां शतचतुष्टयं तस्मै चारयितुं दत्त, आसां सहस्रसङ्ख्यापूर्तौ प्रत्यानेया इति चोक्तं, ततस्तथैव यवसजलशिवेऽरण्ये मनः समाधाय कृतवान्, ततस्तावत्सङ्ख्यासिद्धौ दिक्सम्बन्धिनी वायुदेवता प्रसन्ना ऋषभमनुप्रविश्योक्तवती, अस्माक सङ्ख्यापूर्तिर्जाता आचार्यमस्मान् प्रापयाह तुष्टास्मि ते ब्रह्मणः पाद कथयिष्यामि, तज्ज्ञानेन ते श्रेयो भविष्यति, ततो दिक् चतुष्कल प्रकाशवान्नामानमेकं पादमुपदिश्याग्रे द्वितीयपादमग्निर्वदिष्यतीत्युक्त्वोपरराम, ततो द्वितीयदिवसे आश्रमाभिमुखः सायमग्निसमिन्धनोत्तर अनन्तनामान द्वितीयचरणं तमग्निरुपदिष्टवान् हंसस्त्वां तृतीयमुपदेक्ष्यतीति चोक्तवान्, ततस्तदुत्तरदिनेऽग्निसमीपे हंसोग्निसूर्यचन्द्रविद्युच्चतुष्कल ज्योतिष्मन्तं पादमुपदिश्य मद्गुनामा जलचरः पक्षी चतुर्थं त्वामुपदेक्ष्यतीत्युक्त्वोपरराम, तदनन्तरदिने पूर्ववदेव मद्गुः प्राणचक्षुःश्रोत्रमनोरूपचतुष्कलं आयतवान्नामानं चतुर्थचरणमुपदिश्योपरराम, एवं सत्यकामब्राह्मणे स्पष्टं ब्रह्मणश्चत्वारः पादा उक्ता इति ज्योतिःपदवाच्यब्रह्मणः पादा एतद्दृष्टान्तेन सिद्धा इति चरणाभिधानादिति हेतुर्नासिद्ध इति भावः, ननु ब्रह्मणः पादानां चतुः-

च, सत्यकामब्राह्मणे तु स्पष्टा एव ब्रह्मणश्चत्वारः पादा निरूपिताः, अतः सच्चिदानन्दरूपस्य प्रत्येकसमुदायाभ्यां चतूरूपत्वं, तत्र केवलानां कार्यत्वमेव, चतुर्थपादस्य तु ब्रह्मत्वं, तत्रापि षड्विधत्वप्रतिज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वमनिरूप्य हृदयस्य षड्विधत्वं निरूपयन् 'तस्य ह वा एतस्ये'त्यादिना पञ्च देवपुरुषान्निरूप्य तेषां द्वारपालत्वज्ञानानन्तरं 'अथ यदतः परो ज्योतिर्दीप्यते' इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनात्, ततश्चतुर्थपादे पञ्च पुरुषास्ततः परो दिवो ज्योतिः षष्ठस्तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेवान्तःपुरुषे उपसंहरति, तस्मात् पूर्वं 'त्रिपादस्यामृतं दिवी'त्युक्तत्वादस्य त्रिपात्सम्बन्धि अमृतमुपरितनलोकेष्विति, अतोऽत्र चतुर्थः पादो निरूप्यत इति सिद्धं, अतः पादानां ब्रह्मधर्मपरत्वात् ज्योतिषो ब्रह्मत्वमिति ब्रह्मधर्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्यावृत्त्यर्थं, एतन्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः ॥ २३ ॥

---

सङ्ख्यावैशिष्टये ब्रह्मण एकत्वाद्द्वैतश्रुतिविरोधोऽवयवावयविभावे लौकिकत्वापत्तिश्चेत्यत आहु. अतः सच्चिदानन्दे-त्यादि, तथाचात्र गायत्र्या भूतपृथिवीशरीरहृदयरूपाश्चत्वारः पादा उक्ता, हृदयरूपचतुर्थस्य षड्विधत्व चाग्रे स्फुट वाच्य. 'पादोस्य सर्वा भूतानी'तिश्रुतौ तु सर्वाणि भूतान्येक पाद उक्तः, अमृतरूपः पादस्तु त्रिपाद्रूपत्वात्पादत्रयमुच्यते, एवंरीत्या चतुष्पाद्ब्रह्मत्वे सन्देह इति तन्निरासार्थमाहु प्रत्येकेत्यादि, इत्थ च 'पादोस्य सर्वा भूतानी'त्यत्र सर्वभूतान्येकः पाद, अमृतरूपस्तु पादत्रयसमुदाय एव चतूरूपत्व, द्वितीयस्थले भूतपृथिवीशरीराणा प्रत्येकरूपेण पादत्व, चतुर्थस्य हृदयरूपस्य षण्णा समुदायात्मकस्यैकपादत्व, एव प्रत्येकसमुदायाभ्यां चतुष्पादत्वमित्यर्थ, तत्र आद्यपादत्रिकद्वये तेजोबन्नरूपे, केवलानां तेजस्त्वाप्त्वपृथिवीत्वरूपप्रत्येकधर्मावच्छिन्नानां, कार्यत्वमेव प्रत्येकरूपे कार्यत्वमेव, समुदायत्वेन ब्रह्मरूपत्वं चरणरूपत्वं चेति बोध्यं, वस्तुतस्तु सिद्धान्ते आविर्भावतिरोभावावेवोत्पत्तिविनाशाविति न शङ्कावकाश इतिभाव., चतुर्थपादस्य प्रथमचतुर्थस्यामृतरूपस्य, द्वितीयचतुर्थस्य हृदयरूपस्येत्यर्थः, तत्रापि हृदयरूपचतुर्थेपि, प्रतिज्ञानात् 'सैषा चतुष्पात् षड्विधा गायत्री'त्युपसंहारे गायत्री यार्थरूपा ब्रह्मात्मिका तस्याः पादचतुष्टयमध्ये हृदयरूपस्य ब्रह्मात्मकस्य षड्विधत्वप्रतिज्ञानादित्यर्थः, परिचायकत्वेन कार्यरूपतया चरणत्रयस्य कारणरूपब्रह्मात्मकचतुर्थचरणानुमापकत्वेन, अनिरूप्य तेषा ब्रह्मत्वेपि परिचायककोटौ निवेशादनिरूप्येत्यर्थः, तस्य ह वेत्यादि 'तस्य ह वा एतस्य हृदयस्य पञ्च देवे'त्यादिना, पञ्च देवपुरुषानित्यादि तथा च पूर्वद्वारस्य पालक. प्राणो देवस्तदुपासनया स्वर्गो गौण फल भवति, एव ब्रह्मात्मकचतुर्थचरणरूपहृदयस्य पञ्च द्वाराणि भवन्ति, चतुर्दिक्षु चत्वारि ततो'थ योस्योर्ध्वः सुषि'रित्यनेन पञ्चमोर्ध्वमुख उक्त., तत्र पूर्वद्वारस्य प्राण उक्त', दक्षिणद्वारस्य व्यानो देवता पालकस्तदुपासकस्यापि गौणं फल स्वर्ग एव, प्रत्यग्द्वारस्यापानस्तदुपासनस्यापि पूर्वोक्तमेव फल, उदङ्मुखद्वारस्य समान. पालको देवस्तदुपासनस्यापि तदेव गौणं फल, ऊर्ध्वद्वारस्योदानो देवस्तदुपासनस्यापि स्वर्ग एव गौणं फलमुक्तं, एवमुक्त्वोपसंहरति 'य एतान् एव पञ्च ब्रह्मपुरुषान् स्वर्गस्य द्वारपान् वेदे'त्यादिना, ततः पुरुषपञ्चकोपासनानन्तर ब्रह्मोपासनाधिकारो भवतीति ज्ञापयितु 'अथ यदत' परो ज्योतिर्दीप्यते'त्राथशब्द उक्त, ततः तदनन्तर पञ्चपुरुषेभ्यः पर इत्यर्थ, तदेव दीप्यमानमेव, अन्तःपुरुषे हृदयान्त.स्थराजस्थानापन्ने परमात्मनि, उपसंहरति हृदयान्तःस्थो ज्योति.पदवाच्य इति 'परो दिवो ज्योति'रित्यनेन व्यवस्थापयति, उपसहरन्ति तस्मादित्यादि, पूर्वं 'परो दिवो ज्योति'रितिमन्त्रात्पूर्वं, त्रिपादित्यादि अस्य भगवतः, 'अमृत क्षेममभय'मिति त्रिपाद्रूपममृताख्यं पादं दिवीत्यर्थः, सम्बन्धि अभेदरूपसम्बन्धवत्, अमृतं मोक्षवाचकामृतपदवाच्य, उपरितनलोकेषु लोकचतुष्टयस्योपरितना ये जनतप.सत्यलोकास्तेषु तिष्ठतीत्यर्थ., अतः अमृतरूपपादस्य ब्रह्मत्वेन ब्रह्मधर्मत्वसम्भवतः, अतः भूतादिपादसूत्रे सर्वेषा पादानां ब्रह्मधर्मत्वनिर्वचनत, पादानां श्रुत्युक्तानामेषा पादाना, औपचारिकत्वेत्यादि अकारोकारमकारनादेतिपादचतुष्टयवत्प्रणवसादृश्येन गौण्या लक्षणयोपासनार्थं ज्योतिःपदवाच्ये ब्रह्मपादानामारोपवारणार्थमित्यर्थः, एतन्निर्णयेन पादवैशिष्टयेन ज्योतिषो ब्रह्मत्वनिर्णयेन, प्रणवादीत्यादि पादविशिष्टविद्याविषयाणां ब्रह्मता निर्णीतेत्यर्थ. ॥ २३ ॥

---

१. अतश्चतुर्थपाद इत्यपि पाठ. । २ ब्रह्मधर्मत्वादित्यपि पाठः ।

## छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ २४ ॥

ननु नात्र ब्रह्म चतुष्पात् निरूपितं किन्तु गायत्री छन्दः, 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्चे'त्युपक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय 'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्युक्तं तावानस्य महिमे'ति, तस्यामेव व्याख्यानरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद् ब्रह्म चतुष्पादभिदध्यात् ? यद्वैतद्ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात् तत्परमेवावगन्तव्यं, शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः ब्रह्मोपनिषदितिवत् शब्दब्रह्मेति च, तस्मात् छन्दस एव पादाभिधानात् न ब्रह्मधर्माः पादा इतिचेत्,

नैष दोषः, तथा चेतोऽर्पणनिगदात्, तथा तेन द्वारेण चेतसोर्पणं निगद्यते, 'गायत्री वा इदं सर्वं यदिदं किञ्चे'ति, न हि वर्णसमाम्नायरूपस्य सर्वत्वमनुपचारेण सम्भवति, यथा सूचीद्वारा सूत्रप्रवेशस्तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति, कुत एतदेवं प्रतिपाद्यत इति तत्राह तथा हि दर्शनं, तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति, स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति, एतेन सर्वा मन्त्रोपासना व्याख्याताः, हि युक्तश्चायमर्थो लोके स्वतो यन्न प्रविशति तदुपायेन विशतीति, न त्वदृष्टद्वारा, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्, तस्मात् पादा ब्रह्मधर्माः ॥ २४ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २५ ॥

किञ्च, भूतादयोऽत्र पादा व्यपदिश्यन्ते, भूतपृथिवीशरीरहृदयानि चत्वारि, न ह्येतानि

---

किञ्चिदाशङ्कापरिहारेण पूर्वोक्तार्थदृढीकरणाय सूत्रकार सूत्र निर्वक्ति, छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ २४ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, अत्र 'त्रिपादस्यामृत दिवी'तिपूर्वमन्त्रे, गायत्री प्रकृत्येतन्मन्त्रपठनादितिभाव, तदेतत् गायत्र्या पादवत्त्व, ऋचा 'तावानस्ये'तिऋचेत्यर्थ, तस्यां पादचतुष्टयविशिष्टतया पूर्वोक्तायां, व्याख्यानरूपायां शब्दात्मिकायामित्यर्थ, मन्त्रः 'तावानस्य महिमे'तिमन्त्र., अकस्माद् प्रकरण विना, ब्रह्मेत्यादि पादचतुष्टयविशिष्टतया परमात्मान कथमभिदध्यादित्यर्थ., नन्वेतत्प्रकरणोक्तं ब्रह्मत्व शब्दात्मिकाया गायत्र्यामनुपपन्नमतो मन्त्रस्यान्यथानुपपत्त्या परमात्मपरतोच्यतेत आहु यद्वै तदित्यादि, छन्दसः वर्णसमुदायरूपगायत्र्या, तत्पर वर्णात्मकगायत्रीबोधक, ब्रह्मवाचकत्वसिद्धिः, ब्रह्मपदेन बोधकतासिद्धेरित्यर्थः, ब्रह्मपदस्य वाचकोदाहरणमाहु ब्रह्मोपनिषदित्यादि, उपसहरन्ति तस्मादित्यादि,

एवम्पूर्वपक्षे प्राप्ते सूत्रकारः समाधत्ते नैष दोष इत्यादि, तथा तेनेत्यादि तथा च ब्रह्मस्वरूपस्यातिसूक्ष्मतया स्थूलबुद्ध्यग्राह्यत्वाच्छन्दोमय्या. गायत्र्या. ब्रह्मधर्मैर्वर्णने कृते तादृशधर्मैर्गायत्रीस्वरूपज्ञाने जाते चेत शुद्ध्या ब्रह्मणि चेतस' प्रवेशार्थ तथा गायत्रीनिरूपणमित्यर्थ, गायत्र्याः वास्तवोक्तधर्मसत्त्वे बाधकमाहु नहीत्यादि, अनुपचारेणेति धर्म्यभेदेन तथावर्णनानङ्गीकारेणेत्यर्थ, तथा च ब्रह्मण सर्वरूपत्वाद्गायत्रीरूपावयवेष्यभेदसत्त्वाद्धर्मिधर्मैर्वर्णनमित्यर्थः, तद्द्वारेण चेतसः प्रवेशे दृष्टान्तमाहु. यथेत्यादि, कुत एतत् कस्माद्धेतोरुपचारेण गायत्र्या ब्रह्मरूपतया वर्णनमित्यर्थ', तेनैवेत्यादि गायत्रीद्वारेणैवेत्यर्थ, ज्ञानं ब्रह्मज्ञान, नाहत्य नियमपुर सरगा, एतेन उत्सर्गतया ब्रह्मरूपतानिरूपणप्रकारेण, मन्त्रोपासनाः मन्त्रप्रतिपाद्यरूपाणामुपासना. 'मनो ब्रह्मत्युपासीते'त्याद्या, सौत्रहिशब्दार्थमाहु. हि युक्त इत्यादिना, ननु सूचिप्रवेशे दृष्ट द्वार साधकाना ब्रह्मणि चित्तप्रवेशे त्वनेकजन्मसिद्धसंस्काररूपमदृष्ट द्वार वाच्यमिति कथं गायत्रीरूप दृष्ट द्वारमुच्यत इत्यत आहु न त्वदृष्टेत्यादि, दृष्टे गायत्रीरूपे दृष्टे द्वारे ॥ २४ ॥

ननु 'सैषा चतुष्पदा षड्विधा गायत्री'तिमन्त्रेण साक्षाद्वर्णसमुदायरूपगायत्र्या उक्ता पादा कथमुपलभ्यन्त इत्याशङ्कायां सूत्रकारः समाधानमाह, भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२५॥ एतानि भूतादिचत्वारि, गायत्र्याः

गायत्र्याः पादा भवितुमर्हन्ति ब्रह्मपरिग्रहे तूपपद्यन्ते, यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम् ।

अयमर्थः, पूर्वहेतौ छन्दसोऽपि पादा व्यपदेशाद्भवन्ति तथापि ब्रह्मण एव युक्ता इति, पुरुषसूक्ते 'एतावानस्ये'त्यस्य ब्रह्मपरत्वात्, अस्मिन्वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः किन्तु ते ब्रह्मण एव पादा इति, तद्वाचकत्वेन गायत्र्यामुपचारेणोपसंहारः, चकारादर्था न शब्दस्य पादा भवन्ति किन्त्वर्थस्यैवेति, तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्वमुपपद्यते नान्यथेति, तस्मात्पादादीनां ब्रह्मधर्मत्वम् ॥ २५ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥

'पादोऽस्य विश्वा भूतानि' सर्वाणि भूतान्येकः पादः, पादत्रयममृतं दिवीत्येकोऽर्थः, 'पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु' इत्यपरः, पुरुषसूक्तानुरोधे द्वितीय एवार्थः, प्रथमे तावत्, ननु 'दिवी'तिमन्त्रे सप्तम्या आधारत्वं प्रतिपाद्यते, 'अतः पर'मित्यत्र पञ्चम्या अनाधारत्वमत उपदेशभेदात् पूर्वोक्तपरामर्शाभावान्न ज्योतिषो ब्रह्मत्वमिति चेत्,

---

वर्णात्मिकायाः ब्रह्मपरिग्रहे गायत्रीपदेन ब्रह्मपरिग्रहे, उपपद्यन्ते ब्रह्मण. पादानां चार्थरूपत्वेन साजात्यात्पादा उपपद्यन्त इत्यर्थः, मुख्यं साक्षादवयवनिरूपण, गौण धर्म्यभेदेनोपचारेणावयवकल्पनम् ।

अयमर्थः अभेदोपचारेण छन्दस. पादकल्पनारूपोऽर्थः, पूर्वहेताविति तथा चेतोर्पणनिगदादितिपूर्वहेतौ सति छन्दसो ब्रह्मप्राप्तिसाधनत्वावगमाद् ब्रह्मप्राप्तिसाधनानामपि ब्रह्मतुल्यत्वादभेदोपचारेण छन्दसोपि ब्रह्मत्वेन प्रतीकोपासनार्थं पादा· व्यपदेशात् सादृश्यात्सम्भवन्तीत्यर्थः, युक्ताः उपचाराभावाद्युक्ता इत्यर्थः, युक्तत्वमेवोपपादयन्ति, पुरुषसूक्तेत्यादिना, अस्येत्यस्य षष्ठ्यन्ते इदम्शब्दस्य, अस्मिन् वाक्ये 'पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'तिवाक्ये, किं त्वित्यादि भूतपृथिवीशरीरहृदयपदोक्तास्तेजोऽबन्नब्रह्मरूपाः पादा', ब्रह्मण एव 'पादोस्ये'त्यनेकवाक्यसत्त्वाद्ब्रह्मण एवेत्यर्थ. तद्वाचकत्वेन गायत्र्याः ब्रह्मवाचकत्वेन, उपचारेण नामसादृश्येन, उपचारः परम्परासम्बन्धेन छन्दसि पादव्यवहारः, चकारात् सौत्रचकारात्, अर्थाः तेजोबन्नादिरूपाः, शब्दस्य छन्दोरूपवर्णसमुदायरूपगायत्र्याः, उपसहरन्ति तस्मादित्यादि, ब्रह्मवाक्यत्वे छन्दसो ब्रह्मरूपार्थोपादाने ॥ २५ ॥

नन्वस्तु पूर्ववाक्योक्तं चतुर्थचरणरूपं ब्रह्म तथापि 'अथ यदतः परो दिवो ज्योति'रितिवाक्ये चरणानुपादानादुपदेशभेदाज्ज्योतिर्वाक्य न पूर्ववाक्यैकवाक्यतापन्नमित्याशङ्कायामाह सूत्रकारः, उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥ पूर्वं 'सैषा चतुष्पात् षड्विधा गायत्री'ति ब्रह्मणः पादचतुष्टयोक्तेस्तदनुरोधेन 'पादोस्य सर्वा भूतानी'त्यत्रापि पादचतुष्टयं ब्रह्मणो निरूपितमित्येका व्याख्या, द्वितीया तु पुरुषसूक्तीयो यो मन्त्रः 'पादोस्ये'त्यादिरूपस्तदनुरोधेन ब्रह्मणो द्विपात्त्व निरूप्यते तदेवाहु. पादोस्येत्यादिना, एकोर्थः पादत्रय मिलित्वा एक· पाद इत्यर्थः, तथा 'चतुष्पात् षड्विधा गायत्री'त्यत्रापि भूतपृथिवीशरीराणि मिलित्वा एक. पादः, षड्विधहृदयरूपश्च द्वितीय इति द्वितीयव्याख्यायां बोध्यं, पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु इति अर्थस्तु स्थितिशब्देन जनानां निवासभूताः भूरादिलोका उच्यन्ते, ते पादा. यस्येति स्थितिपाद् भगवान् तस्य पुंसः अमृतं क्षेममभयमितिसुखरूपं पादत्रयं, त्रिमूर्ध्नः भूरादिलोकत्रयस्य मूर्ध्नः महर्लोकस्य मूर्धसु जनतपःसत्यलोकेषु अधायि स्थापितवानित्यर्थः, एतेनाद्यलोकचतुष्टयेपकृष्टसुखमायातं, द्वितीय एवार्थः 'पादोस्ये'तिमन्त्रानुरोधेन ब्रह्म द्विपादेवेत्यर्थः पुरस्कार्य इत्यर्थः, उपदेशभेदसूत्रोक्तमुपपादयितुमाहुः प्रथम इत्यादि, प्रथमे 'अथ यदतः परो दिवो ज्योति'रित्यत. प्रथमे, दिवीतिमन्त्रे 'त्रिपादस्यामृतं दिवी'तिमन्त्रे, आधारत्वं त्रिपाद्रूपब्रह्मणो दिवि आधारत्वं, अतःपरमित्यत्र 'अथ यदतः पर'मित्यत्र, अनाधारत्वं दिवः सकाशादतिरिक्तदेशवृत्तित्वबोधनेन दिवि अनाधारत्वं, उपदेशभेदात् निरूप्यवस्तुभेदलाभात्, निरूप्यवस्तुभेदमुपपादयन्ति पूर्वोक्तेत्यादि, पूर्वोक्तं 'त्रिपादस्यामृतं दिवी'तिमन्त्रे 'अस्ये'त्यनेन ब्रह्मोक्त तस्य परामर्शः, तस्य 'अथ यदतः परो दिवो ज्योतिरितिब्राह्मणवाक्यस्थज्योतिःपदेन कर्तुमशक्यत्वादित्यर्थः, परामर्शाभावे च पूर्वोक्तसप्तमीपञ्चमीकृतोपदेशभेदेन वस्तुभेदो हेतुः, ज्योतिषः 'अथ यदतः परो दिवोज्योति'रिति ज्योतिःपदोक्तस्य,

अतोऽमृतज्योतिःशब्दयोरेकार्थत्वेन विरोधाभावादेकवाक्यत्वं, अतोऽत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वात् ज्योतिर्ब्रह्मैव ॥ २६ ॥

**इति प्रथमाध्याये प्रथमपादे नवमं ज्योतिश्चरणाधिकरणम् ॥**

## प्राणस्तथानुगमात् ॥ २७ ॥ ( १-१-१० )

अस्ति कौशीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनसंवादः 'प्रतर्दनो ह वै दैवोदासि'रित्यादिना, 'एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्या-दि'त्येतदन्तं, तत्र वरदाने 'मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य' इत्युपक्रम्य त्वाष्ट्रवधादिनात्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वमिति विवक्षायाम् 'प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्वे'त्युक्त्वा आयुषः प्राणत्वमुपपाद्यामृतत्वञ्च प्राणस्योपपाद्य 'प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोती'ति अमृतत्वं योगेन प्रतिपादयति,

तत्र सन्देहः, प्राणः किमासन्यो ब्रह्म वेति, 'अत एव प्राण' इत्यत्र प्राणशब्दमात्रे सन्देहः, अत्रार्थेऽपि सन्देहः बाधकश्च वर्तत इति पृथगधिकरणारम्भः।

तत्र साधकासाधारणधर्मस्याभावाद् बाधकानां विद्यमानत्वात् न ब्रह्मत्वमिति पूर्वपक्षः, सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते, तत्र प्रथमं साधकधर्ममाहैकेन, त्रिभिर्बाधकनि-

---

एकवाक्यत्व ज्योति पदार्थस्य ब्रह्मत्वाद् ब्रह्मणश्च मन्त्रे पादाभिधानात् ज्योति पदार्थेपि पादाकाङ्क्षासत्त्वादर्थैक्यादक वाक्य साकाङ्क्ष चेद्विभागे स्यादिति एकवाक्यतालक्षणसत्त्वादेकवाक्यत्वमित्यर्थ , अतः मन्त्रेणकवाक्यत., अत्र ज्योति.-पदार्थे, **तस्य** अमृतरूपचरणस्य ॥ २६ ॥

**प्रथमाध्याये प्रथमपादे नवमं ज्योतिश्चरणाधिकरणम् ॥**

---

**प्राणस्तथानुगमात् ॥ २७ ॥ प्रतर्दनो** हेत्यादि, एतद्ब्राह्मणे इन्द्रप्राणजीवब्रह्मणां चतुर्णां बोधकानि लिङ्गानि सन्ति, तथाहि 'मामेव विजानीही'ति देवतात्मन इन्द्रस्य बोधकं, 'अथ खलु प्राण एव प्रज्ञात्मा इदं शरीर परिगृह्योत्थापयतीति' प्राणस्य बोधक, 'न वाच विजिज्ञासीत वक्तार विद्या'दिति जीवबोधक, 'आनन्दोऽजरोऽमृत' इत्यादि ब्रह्मबोधक बोध्य, स म आत्मेति इन्द्रोक्ति , **वरदाने** इन्द्रेण प्रतर्दनाय वरदाने, **मामेवेति** इन्द्रोक्ति., **तदेव** उपदेष्टुरात्मनो ज्ञानमेव, **विवक्षायां** प्रष्टुरिच्छाया, **प्राणेन** प्राणपदवाच्यन, **अमुष्मिन्** परलोके,

**तत्र** उक्तब्राह्मणार्थे, तथा चैतद्ब्राह्मणे चतुर्णां प्रकाशकानि लिङ्गानि सन्तीत्यन्ये प्राणो वा, इन्द्रदेवतात्मा वा, जीवो वा, ब्रह्म वेति चतुष्कोटिक संशयं मन्यन्ते, तत्र 'प्राणेन ह्येवामुष्मिँल्लोके अमृतत्वमाप्नोती'ति प्राणयोगेनामृतत्वे अमृतदातृत्वे स्वस्मिन् प्रतिपादिते सति इन्द्रे प्राणब्रह्मणोरेव लिङ्गप्राबल्याद् द्विकोटिक एवात्र सशयो न तु चतुष्कोटिक इत्याहु **प्राणः** प्राणपदवाच्य, **किमासन्यो ब्रह्म वेति** न'न्वत एव प्राण' इति पूर्वाधिकरणेनैव प्राणपदस्य ब्रह्मार्थत्वनिश्चयात तेनैव गतार्थत्वात् किमित्यधिकरणान्तरारम्भ इत्यत आहु· **अत एवे**त्यादि, **शब्दमात्रे सन्देहः** किं प्राणो वायुविशेषो ब्रह्म वेत्याकारकस्तद्विषयवाक्यानुसारी, **अत्रार्थेपी**त्यादि एतत्सूत्रविषयवाक्ये, **अर्थेपि सन्देह.** प्राणदेवतात्मजीवब्रह्मणा चतुर्णामर्थाना सन्देह इति तन्निरासायाधिकरणान्तरमावश्यकमित्यर्थ , **बाधकश्चे**त्यादि जीवप्राणादिलिङ्गाना ब्रह्मबोधे बाधकाना च सत्त्व वर्तत इत्यर्थ. ।

पूर्वपक्षमाहु **तत्र साधके**त्यादि, **तत्र** विषयवाक्ये, **साधके**त्यादि प्राणपदस्य ब्रह्मार्थसाधकेत्यर्थ. ।

**सिद्धान्तस्तु** ब्रह्मार्थत्वनिर्णयस्तु, **तत्र** चतुर्णा मध्ये, **प्रथम** आदौ, **साधकधर्म** प्राणपदस्य ब्रह्मार्थत्वसाधकधर्म, **एकेन** प्रथमसूत्रेण **त्रिभिः** वक्ष्यमाणैस्त्रिभिः **सूत्रैः**, सूत्रार्थमाहु· **प्राण** इत्यादिना, **तथा** प्राण-

राकरणं, प्राणः परमात्मा भवितुमर्हति, कुतः? तथाऽनुगमात्, तथाहि, पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते, उपक्रमे तावद्वरं वृणीष्वेति इन्द्रः प्रतर्दनोक्तः परमपुरुषार्थं वरमुपचिक्षेप 'त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्? न हि परमात्मनोऽन्यद्धिततममस्ति परमानन्दस्वरूपत्वात्, पापाभावश्च ब्रह्मविज्ञान एव 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इतिश्रुतेः, प्रज्ञात्मत्वञ्च तस्यैव सम्भवति, उपसंहारे'प्यानन्दोजरोमृत इति एष लोकाधिपति'रित्यादि च, तस्मात्सर्वत्रानुगमात् प्राणो ब्रह्म ॥ २७ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २८ ॥

बाधकमाह, यदुच्यते प्राणो ब्रह्मेति तन्न, कुतः? वक्तुरात्मोपदेशात्, वक्ता हीन्द्रः आत्मानमुपदिशति 'मामेव विजानीही'त्युपक्रम्य 'प्राणो वा अहमस्मि प्रज्ञानात्मानं मामायुरमृतमित्युपास्स्वे'ति, स एष प्राणो वक्तुरात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात्? तथा च वाचो धेनुत्वोपासनवत् देवतायाः प्राणत्वोपासना बोध्यते, अन्ये च ब्रह्मधर्माः प्राणस्तावका इति कथमस्य ब्रह्मोपाख्यानत्वमिति चेत्,

न, अध्यात्मसम्बन्धभूमा ह्यस्मिन्, अस्मिन् प्रकरणे अध्यात्मसम्बन्धः आत्मानमधिकृत्य यः सम्बन्धः, आत्मशब्दो ब्रह्मवाची, वस्तुतो जीवस्य ब्रह्मत्वाय तथावचः, तस्य सम्बन्धः तद्धर्माः, तेषां बाहुल्यं प्रतीयते 'एष लोकपाल' इत्यादि, यावद्यथाकथञ्चिदपि ब्रह्मप्रकरणत्वं सिद्ध्यति तावदन्यप्रकरणत्वमयुक्तमिति हिशब्दार्थः, प्राणस्य प्रज्ञात्मत्वं स्वातन्त्र्येणायुर्दातृत्वं, 'न वाचं विजिज्ञासीत वक्तारं विद्या'दिति चोपक्रम्य 'तद् यथा रथस्यारेषु नेमिरर्पिता नाभावरा

पदस्य ब्रह्मपरत्वे **अनुगमात्** सर्वेषां विषयवाक्यानां ब्रह्मणि समन्वयात्, समन्वयमेवोपपादयन्ति **तथाहीत्या**दिना, **वाक्ये** इन्द्रप्रतर्दनसंवादरूपविषयवाक्ये, **प्रतर्दनोक्तः** प्रतर्दनेनोक्त इत्यर्थः, **परमपुरुषार्थं** मोक्षरूपं, **उपचिक्षेप** दातुं प्रतिज्ञातवान्, त्वमिति प्रतर्दन, मे मत्त इन्द्रादित्यर्थः, **हिततमं** सर्वोत्कृष्टं मोक्षरूपं, **तस्मै** प्रतर्दनाय, **परमात्मनोन्यदित्यादि** 'आत्मनस्तु कामाय सर्वं प्रियं भवती'तिश्रुतेरित्यर्थः, **पापाभावः** प्रतिबन्धकाभाव, **तस्यैवेत्यादि** प्रज्ञात्मत्वं परमात्मन एव सम्भवति न तु प्राणस्य वायुरूपस्येत्यर्थः, **उपसंहारे** प्राणपदार्थस्योपसंहारे, उपसंहरन्ति **तस्मादित्यादि**, **सर्वत्र** आदिमध्यावसानेषु, **अनुगमात्** धर्माणां ब्रह्मणि समन्वयप्रदर्शनात्, **प्राणः** अत्रत्यप्राणपदवाच्यः ॥ २७ ॥

प्राणपदस्य ब्रह्मपरत्वे किञ्चिद्बाधकमाशङ्क्य समाधातुमाह सूत्रकार, **न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २८ ॥ बाधकं** प्राणपदस्य ब्रह्मपरत्वे बाधकं, सूत्रार्थमाहुः **वक्ता हीत्यादिना**, आत्मोपदेशमाहुः **मामेवेत्यादिना**, अहं इन्द्रः, वक्तुः इन्द्रस्य, ननु प्राणपदस्य वायुविशेषे रूढत्वात् कथमिन्द्रबोधकतेत्यत आहुः **वाचो धेनुत्वेत्यादि** तथा च धेनूनामिव वाचामुपासने फलसम्भवात् सदृशलक्षणया वाचि धेनुपदप्रयोगस्तथा क्रियाकारणशक्तेर्बलरूपाया इन्द्रेपि सत्त्वात् 'प्राणो वै बल'मिति श्रुते, बलवत्त्वसाजात्यात् प्राणपदस्येन्द्रे गौणीलक्षणया इन्द्रबोधसम्भवान्नेन्द्रबोधकतानुपपत्तिरित्यर्थः, **देवतायाः** इन्द्रात्मरूपदेवतायाः, **प्राणत्वोपासना** प्राणत्वेन रूपेणेन्द्रात्मदेवताया उपासनेत्यर्थः[1] **अन्ये चेत्यादि** अन्ये प्राणत्वातिरिक्ता, **ब्रह्मधर्माः** अमृतत्वसर्वलोकाधिपतित्वादयो धर्माः, **प्राणस्तावकाः** प्राणपदबोध्येन्द्रस्य ब्रह्मत्वेनोपासनार्थं स्तावका इत्यर्थः, **अस्य** इन्द्रप्रतर्दनसंवादरूपस्य,

**तथावचः** ब्रह्मपदं विहाय 'स मे आत्मे'त्यात्मपदप्रयोग, **तस्य** ब्राह्मणः, सम्बन्धपदस्य धर्मार्थत्वमाहुः **तद्धर्मा इति**, **तेषां** ब्रह्मधर्माणां, **बाहुल्यं** इन्द्रप्रतर्दनसंवादे बाहुल्य, ननु जीवप्राणदेवतात्मनामपि लिङ्गसत्त्वात्ते एव कुतो न निर्णीयन्ते इत्यत आहुः **यावदित्यादि**, **हिशब्दार्थः** सौत्रहिशब्दार्थः, **प्राणस्येत्यादि** 'प्राणोहमस्मि प्रज्ञात्मानं मामायुरमृत'मित्यत्रोक्त प्राणस्य प्रज्ञात्मत्वं, **आयुर्दातृत्वं** प्राणपदवाच्यस्य भगवत स्वातन्त्र्येणायुर्दातृत्वं,

१. प्राणत्वेनोपासनेत्यपि पाठ. । २. एकस्मिन् पुस्तके आत्मानमधिकृत्येति नास्ति ।

अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' 'स एष प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणे'त्यादिविषयेन्द्रियव्यवहारे अरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति, 'स म आत्मेति विद्या'दिति चोपसंहारः, तस्मादध्यात्मसम्बन्धबाहुल्याद् ब्रह्मोपदेश एवायम् ॥ २८ ॥

तर्हि बाधकस्य का गतिरित्यत आह,

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ २९ ॥

पूर्वसूत्रेणापहृतमत्र परिहरति तुशब्दः, अयं दोषो व्यवहारदृष्ट्योपदेशे, 'अहं ब्रह्मे'त्यार्षेण दर्शनेन तूपदेशः ।

ननु 'तत्त्वमसि' 'अयमात्मा ब्रह्मे'तिवाक्येषु जीवस्य ब्रह्मत्वं बोध्यते तत्र 'प्रत्यधिकारं शास्त्रप्रवृत्ति'रितिन्यायेन स्वात्मन एव ब्रह्मत्वावगतिर्मुख्या,

न प्रतर्दनस्येन्द्रजीवब्रह्मत्वावगतिरुपासनं वा पुरुषार्थाय, अतः शास्त्रदृष्टिरपि नैवंविधा,

केवलस्य चैतन्यमात्रस्य तादृशे ब्रह्मण्यैक्यावगतिः विरोधा'त्तत्त्वमस्या'दिवाक्यार्थोऽध्यवसीयते, न तु ब्रह्मधर्मा जीवे वक्तुं शक्यन्त इत्याशङ्क्य परिहरति,

वामदेववत्, 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे'ति, य एव प्रत्यबुद्ध्यत स सर्वं भवति, तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसङ्गात् सर्वमेकमेवेति वक्तव्यं, ततः

---

**भूतमात्राः** शब्दस्पर्शरूपरसगन्धात्मिका., **प्रज्ञामात्रासु** चक्षुरादिपञ्चेन्द्रियेषु, **प्राणेर्पिताः** प्राणाधीनाःकृताः, प्राणपदेनात्र परमात्मा बोध्य., **सः** पूर्वोक्त, **एषः** प्राणपदवाच्य, **न साधुनेत्यादि** 'न साधुना कर्मणा भूयान् भवति नो एवासाधुना कनीया'नित्यनेन जीवकृतसाध्वसाधुकर्मफलासम्बन्ध प्राणे प्रतिपाद्य 'एष उ एव साधु कर्म कारयती'त्याद्युक्त, तत उपसंहार. कृत इत्याहु **विषयेन्द्रियेत्यादि**, **व्यवहारे** विषयविषयकज्ञानजननियमने, **अरनाभिभूतं** तदात्मकं, **ब्रह्मोपदेशः** प्राणपदेन ब्रह्मोपदेश., अयं इन्द्रप्रतर्दनसंवादरूप. ॥ २८ ॥

अग्रिमसूत्रावतरणमाहु· **तर्हीत्यादि**,

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्** ॥ २९ ॥ **अपरिहृतं** इन्द्रस्य स्वात्मोपदेशरूप दूषणं, **अयं दोष** इति वेदान्तेषु ब्रह्मण एवोपास्यत्वात् इन्द्रस्य स्वात्मोपदेशरूप दूषण, **व्यवहारदृष्ट्या** लौकिकदृष्ट्या, **आर्षेण** ब्रह्मत्वप्रकारकाखण्डब्रह्मज्ञानेन ।

शास्त्रदृष्ट्या इन्द्रस्य प्रतर्दनोपदेश दूषयितुमाहु **ननु तत्त्वमित्यादि**, **प्रत्यधिकारमित्यादि** यस्य ब्रह्मत्वेन स्वात्मान ज्ञातुमधिकारो वर्तते तं प्रत्येव शास्त्रप्रवृत्तिरित्यर्थ., **स्वात्मनः** प्रतर्दनात्मन., **ब्रह्मत्वावगतिः** 'अह ब्रह्मासी'ति धीः, **मुख्या** प्रतर्दनस्य मुक्तिसाधिका,

**इन्द्रजीवेत्यादि** इन्द्रजीवो ब्रह्मास्तीत्यवगतिरित्यर्थः, **उपासनं** इन्द्रजीवस्य ब्रह्मत्वेनोपासनं, **नैवंविधा** न ब्रह्मप्रापकोपदेशसम्पादिकेत्यर्थः,

'तत्त्वमस्या'दिवाक्यार्थपरिष्कारपूर्वकं पूर्वपक्षं समाधानायाहु· **केवलस्येत्यादिना**, **तादृशे** चैतन्यरूपे, **ऐक्यावगतिः** योग्यताबलाजीवचैतन्यस्यैक्यावगतिः एतस्यावसीयते इत्यनेनान्वय., **विरोधात्** अज्ञत्वसर्वज्ञत्वाभ्यां सुखित्वदु.खित्वाभ्यां जीवस्य सर्वथा ब्रह्मत्वे विरोधात्, **ब्रह्मधर्माः** अपहतपाप्मत्वसर्वभवनसामर्थ्यसार्वज्ञ्यादयो ब्रह्मधर्मा., **परिहरति** सूत्रकार. परिहरति,

**वामदेववत्** वामदेवस्य ब्रह्मज्ञानावेशादुक्तिर्यथा ब्रह्मोक्तिस्तथेन्द्रस्यापि ब्रह्मावेशादुक्तिर्ब्रह्मोक्तिरेवेत्यर्थः, तत्र बृहदारण्यकीय पुरुषविधब्राह्मणवाक्यप्रमाणमाहुः **तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति**, **प्रत्यबुध्यत** ब्रह्मस्वरूप ज्ञातवान् जीवन्मुक्तो जात इत्यर्थ., सर्वस्य सर्वभावे वादी पूर्वपक्षयते

---

१. ब्रह्मण्यैक्यावगतिविरोधादित्यपि पाठ ।

कारणलय एव सर्वभाव इति 'मनुरभवं सूर्यश्चे'त्यवयुत्यानुवादोऽनुपपन्नः, तत्र यथा ज्ञानावेशात् सर्वधर्मस्फूर्तिः, एवमत्रापि ब्रह्मावेशादुपदेशः, इति त्वाष्ट्रवधादयो ब्रह्मधर्मा एव, तदावेशेन क्रियमाणत्वात्, 'नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः। तेनैव शत्रुं जहि विष्णुयन्त्रितः' इतिवृत्रवचनं भागवते, तस्माद्युक्तं ब्रह्मधर्मवचनम्।

ननु 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही'तिसूत्रे सुपुप्तौ ब्रह्मसम्पत्तौ च ब्रह्माविर्भावो न त्विन्द्रे इति कथमेवमिति चेत्,

मैवं, उपदेशभावनादिष्वपि कदाचिदुत्तमाधिकारिविषये ब्रह्मप्राकट्यमित्यङ्गीकर्तव्यं 'मय्येव सकलं जात'मित्यादिवाक्यानुरोधात्, 'इहैव समवलीयन्ते प्राणाः ब्रह्मैव सन् ब्रह्माप्येती'त्यपि आविर्भावापेक्षं, तस्य च प्रायिकत्वात् न सूत्रे फलत्वमाह, जीवन्मुक्तानामपि परममुक्तेर्वक्तव्यत्वात्, असम्प्रज्ञातसमाधाविवाविर्भावदशायामेव शरीरवियोगे वियोजकाभावाद् वागादिमात्रं लीयते, तस्य च प्रायिकत्वादेव नार्चिरादिगतिः, तथापि प्रायिकत्वात् न सूत्रगी-

---

तत्रेत्यादि, इयं स्वस्य सर्वात्मभावस्फूर्तिः सर्वेषां मुक्तानां वाच्या तेषां चानन्त्यात्सर्वपदार्थानन्त्य स्यात् अतोऽनेकत्वेन भासमानं सर्वपदवाच्यं ब्रह्मैवेतिप्रतीतिरवोरीकार्या, सा च कारणीभूते ब्रह्मणि सर्वेषां लयादेव सूपपादा, तादृशकारणलय एव च सर्वभावपदवाच्य इत्युपेय, इतीति अतो हेतोरित्यर्थः, तथाच सर्वं ब्रह्मेत्याकारिका प्रतीतिरेवार्षं ज्ञानं न तु अवयुत्य पृथक्कृत्य मनुसूर्यादिशरीरावच्छिन्नानां स्वात्मनि अभेदग्रहः सर्वभाव आर्षज्ञानं वेति श्रुतावार्षज्ञानानुवादोनुपपन्न एवेत्यर्थः, पूर्वोक्ताशङ्कायां समाधानमाहु तत्र यथेत्यादिना, नहि कारणलये एव सर्वभाव इत्यत्र किञ्चिन्नियामकमस्ति किन्तु वस्तुयाथात्म्यज्ञानमेव सर्वभावे आर्षज्ञाने च नियामकं, अन्यथा वामदेवस्य तथा ज्ञानं श्रुतिर्नानुवदेत्, तथाच तस्य ब्रह्मांशत्वेन ब्रह्मरूपत्वात्स्वस्य ब्रह्मात्मत्वस्फूर्तौ याथात्म्यज्ञानात् सर्वरूपत्वादिब्रह्मधर्माणामपि स्वस्मिन् स्फूर्त्या 'अहं मनुरभव'मित्याद्युपदेशो यथा ज्ञानावेशात् तथेन्द्रेपि ब्रह्मावेशादुक्तोपदेशो द्रष्टव्य इत्यर्थः, तदावेशेन ब्रह्मावेशेन, ब्रह्मावेशेनोपदेशकरणे प्रमाणमाहु. नन्वेष इत्यादि।

पूर्वपक्षमाहु· नन्वित्यादिना, स्वाप्ययेति स्वाप्ययः सुषुप्तिः, सम्पत्तिः मोक्षः, एतदन्यतरदुपेक्ष्य ब्रह्माविर्भवतीत्यर्थः, कथमेव उक्तावस्थान्यतरस्या अभावादिन्द्रे कथं ब्रह्माविर्भाव इति पूर्वपक्षिप्रश्नः,

समाधानमाहुः मैवमित्यादि, उपदेशेत्यादि तथाचोत्तमाधिकारिभिर्यदोपदेशः क्रियते तदाधिकारोत्कर्षात् तेषु ब्रह्माविर्भावो भवत्येव, एवं तादृशाधिकारिभिर्ब्रह्मभावनाकरणेपि तेषु ब्रह्माविर्भावो भवति, तत्र नियमबोधकाभावात् कदाचिदित्युक्तं, तत्राविर्भावे प्रमाणमाहुः मय्येवेत्यादि, श्रुतिसम्मतिमाहुः इहैवेत्यादि, उत्तमाधिकारिणि उपदेशभावनादिना यदान्तर्ब्रह्माविर्भावो जातस्तदैव तदीयाः प्राणा ब्रह्मणि समवलीयन्ते इत्युक्तश्रुत्यनुरोधादुपदेशभावनादिस्थलेप्यवश्यं ब्रह्माविर्भावोङ्गीकर्तव्य इति फलितं, इत्यपि ब्रह्मणि प्राणविलापनमपि, तस्य तादृशाविर्भावस्य, प्रायिकत्वात् अनियतत्वात्, मुक्ते यथा सार्वदिक आविर्भावस्तथा न भवतीत्यर्थः, ननु तादृशसर्वभाववतां जीवन्मुक्तानामावेशिनां च फलावश्यम्भावात् सूत्रे तत् कुतो नोक्तमत आहु. जीवन्मुक्तानामित्यादि, तथाग्रे वक्तव्यत्वादिदानीं नोक्तमित्यर्थः, ननु 'ब्रह्मैव सन् ब्रह्माप्येती'त्युक्ता मुक्तिर्ब्राह्मभावोत्तरकाले जायमाना ब्रह्माविर्भावेन ब्रह्मभावे सम्पत्तिकाले एव कुतो न भवति? ब्रह्मसम्बन्धस्यावशिष्टत्वादत आहुः असम्प्रज्ञातेत्यादि, तथाचासम्प्रज्ञातसमाधिस्थानां ब्रह्माविर्भावेन ब्रह्मभावस्य सत्त्वेपि मुक्त्यव्यवहितप्राक्क्षणरूपकारणस्य शरीरादिवियोजकस्याभावाद्यथा न मुक्तिस्तथात्र ब्रह्मभावकालेपि न मुक्तिस्ततः पूर्वं मुक्तिजनककालरूपकारणस्याभावात्, ब्रह्मभावकाल एव मुक्तिजनककालस्य सत्त्वात्तदुत्तरक्षण एव मुक्तिर्न तु ब्रह्मभावकाल इत्यर्थः, तथाच ब्रह्मभावकाले मुमुक्षोर्वागादीन्द्रियलय एव जायते, तदुत्तरक्षण एव मुक्तिरितिफलितं, असम्प्रज्ञातसमाधित्वं बहिर्वेदनशून्यत्वं, ननु स मुमुक्षुरर्चिरादिदेवमार्गे कुतो न गच्छतीत्यत आहुः तस्येत्यादि, तस्य ब्रह्मणः, प्रायिकत्वात् अनुग्रहमात्राधी-

---

१. ब्रह्मधर्माविर्भावइत्यपि पाठः। २. प्राप्तत्वादित्यपि पाठः।

तादिषु तद्वचनं, सगुणनिर्गुणभेदेन नियमवचनन्त्वप्रामाणिकमेव ब्रह्मवादे, गुणानङ्गीकाराच्च, तस्माद्युक्तमुक्तं शास्त्रदृष्ट्या तूपदेश इति ॥ २९ ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३०॥**

अन्यद् बोधकद्वयमाशङ्कते,

ननु यद्यपि ब्रह्मधर्मा भूयांसः प्रकरणे श्रूयन्ते, तद्वज्जीवधर्मा मुख्यप्राणधर्माश्च बोधकाः सन्ति, 'न वाचं विजिज्ञासीत वक्तारं विद्या'दित्यादि, अत्र हि वागादिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते, 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्ये'ति शरीरधारणं मुख्यप्राणधर्मः, 'मा मोहमापद्यथा अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'ति— श्रवणात्, 'यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राण' इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञाप्राणयोः सहवृत्तित्वादुपचारो युज्यते, उत्क्रान्तिश्च, न तु सर्वथाविलक्षणस्य ब्रह्मणः, तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरणमिति चेत्,

न, उपासात्रैविध्यात्,

अयमर्थः, किमत्र चोद्यते ? जीवमुख्यप्राणलिङ्गाद् ब्रह्मधर्माणां जीवपरत्वं त्रयाणामपि

---

न्त्वेन तादृशसद्योमुक्तेः साधनासाध्यत्वेनानियतकालत्वादितिभावार्थ', केषाञ्चिन्मतमुपन्यस्यन्ति सगुणेत्यादि, **नियमवचनमि**त्यादि तथा च सगुणोपासकस्यार्चिरादिमार्गेण गति. निर्गुणोपासकस्य सद्योमुक्तिरितिव्यवस्था रूपानियम इति नेत्यर्थः, तत्रोपपादकं **ब्रह्मवाद** इति तथा च ब्रह्मवादे जीवनुत्यतापत्त्य। सगुणनिर्गुणभेदस्य ब्रह्मण्यनङ्गीकारात् सगुणपक्षस्य मायाधीनत्वकृतत्वात्तस्य च ब्रह्मण्यसंवादादप्रामाणिकत्वमेवेत्यर्थ , ननु ब्रह्मणः पुरुषत्वात् तत्र च प्रकृतिगुणसम्बन्धावश्यकत्वाद्ब्रह्मणः सगुणत्वं वाच्यमत आहु **गुणानङ्गीकारा**दिति, सूत्रकारेण तन्मतखण्डनादिति भावः, 'सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं सत्यं चानृतं च सत्यमभवद्यदिदं किञ्च तत्सत्यमित्याचक्षते'इत्यादि ब्रह्मवादे ब्रह्मातिरिक्तासम्भवेनापि सगुणवादोऽशक्यवचन इत्यपि बोध्य, उपसंहरन्ति **तस्मा**दिति, ब्रह्मदृष्टेरभ्यासबाहुल्यादित्यर्थः ॥ २९ ॥

शास्त्रोपदेशं दृढीकर्तुं किञ्चिदाशङ्क्य परिहरति सूत्रकारः, **जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्** ॥ ३० ॥ **बोधकद्वयं** जीवस्य मुख्यप्राणस्य च वाक्ये बोधकं लिङ्गद्वयं,

**न वाच**मित्यादि जीवबोधकं तदेवात्रेत्यादिनोच्यते, **वागादिकरणाध्यक्षस्य** वागादिकरणानि इन्द्रियाणि तदध्यक्षस्य तन्नियामकस्य, **विज्ञेयत्वं** उपदेश्यत्वं प्रकरणे इत्यर्थः,प्रकरणे मुख्यप्राणबोधक लिङ्गमाहुः **अथ खल्वि**त्या— दिना, प्रज्ञात्मा ज्ञानेन्द्रियाणां सामर्थ्यसम्पादकः, **मुख्यप्राणधर्मः** मुख्यप्राणबोधकं लिङ्गं, तत्र श्रुत्यन्तरसंवादमाहु **मा मोह**मित्यादि, प्राणसंवादे वागादीन् प्रकृत्य तान् वरिष्ठः प्राण उवाच 'मा मोहमापद्यथा अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'तिसंवादः, श्रुतौ बाणपदेन शरीर बोध्यं, 'यो वै प्राणः सा प्रज्ञे'त्यभेदः कथमुपपद्यत इत्यत आहुः **सहवृत्तित्वा**दित्यादि, तथा च सहवृत्तित्वादभेदोपचारो न तु वास्तवोऽभेद इत्यर्थः, **जीवमुख्यप्राणवाच्यत्वे** जीवमुख्यप्राणयोरभेदेन बोधकतायामित्यर्थः, सहवृत्तित्व दृढीकर्तुमाहुः **उत्क्रान्तिश्चे**ति, 'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामती'ति उत्क्रमणे सहभाव उक्तः, इत्थं चात्र जीवप्राणयोरेव धर्मा उक्ता न तु ब्रह्मण., तत्र हेतुः सर्वविलक्षणः इति, तथा च 'निष्कलं निष्क्रियं शान्त'मितिरीत्या विलक्षणं ब्रह्म, तत्र वक्तृशरीरोत्थापकत्वेन्द्रियोपकारकत्वायुर्दातृत्वादीनि लिङ्गानि सर्वथा बाधितानीति न ब्रह्मप्रकरणमित्यर्थ.,

उक्तं वादिमतं निरसितुं सूत्रकार आहि इति **चेन्ने**ति, ब्रह्मप्रकरणं नेति वादिना यदुक्तं तन्नेत्यर्थः,

वाद्यभिप्रायप्रकटनाय प्रश्नः **किमत्रे**त्यादि, अत्र एतद्विषयवाक्ये, **चोद्यते** आशङ्क्यते इत्यर्थः, **जीवपरत्वं** श्रुत्युक्तब्रह्मधर्माणां जीवपरत्वं तवाभिप्रेतमित्येका कोटिः, **त्रयाणां** जीवप्राणब्रह्मणां, **स्वतन्त्रत्वं** स्वातन्त्र्येणो-

---

१. बाधकेत्यपि पाठः ।

स्वतन्त्रत्वं वा? लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा, आद्यः पूर्वमेव परिहृतः, न हि ब्रह्मधर्मा अन्यपरत्वेन परिमातुं[1] शक्या इति, द्वितीये दूषणमाह, उपासात्रैविध्यात्, तथासत्युपासनं त्रिविधं स्यात्, तद्वाक्यभेदप्रसङ्गान्न युक्तं, तृतीये तूपपत्तिरुच्यते, जीवधर्मा ब्रह्मणि न विरुध्यन्ते, आश्रितत्वात्, जीवस्यापि ब्रह्माधारत्वात् तद्धर्मा अपि भगवदाश्रिता एव, इहेत्युभयत्र सम्बन्धो, ब्रह्मवादे, मुख्यप्राणे तु तद्योगात्, तेन योगस्तद्योगः तस्मात्, प्राणधर्मा भगवति न विरुध्यन्ते, प्राणस्य भगवत्सम्बन्धात् तद्धर्माणामपि भगवत्सम्बन्धात्।

अथवा वक्तृत्वादयो न जीवधर्माः किन्तु ब्रह्मधर्मा एव, जीवे आश्रितत्वाद् भासन्ते, 'परात्तु तच्छ्रुते'रितिन्यायात्, प्राणेऽपि तथा, स्वाप्ययसम्पत्त्योर्जीवस्य ब्रह्माश्रितत्वं, आध्यात्मिकाधिदैविकरूपत्वान्न संयोगः, प्राणस्य तु संयोग एव, तस्मात्सर्वे धर्मा ब्रह्मणि युज्यन्ते, सहोत्क्रमस्तु क्रियाज्ञानशक्त्योर्भगवदीययोर्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्वस्यापि बोध्यते।

ननु 'प्राणस्तथानुगमा'दिति प्राणशब्देन ब्रह्मैव प्रतिपादितं, तत्कथं धर्मयोरुत्क्रमणमिति चेत्,

---

पास्यत्वं सवाभिप्रेतमिति द्वितीया कोटिः, लिङ्गद्वयस्य जीवप्राणलिङ्गयोरित्यर्थः, इयं तृतीया कोटिः, आद्यः पक्षः ब्रह्मधर्माणां जीवपरत्वपक्षः, पूर्वमेव परिहृतः 'न वक्तु'रितिसूत्रव्याख्याने ब्रह्मधर्माणां बाहुल्याद् बहूनामनुग्रहो न्याय्य इतिरीत्या परिहृत इत्यर्थः, परिहारप्रकारमाहुः नहीत्यादि, अन्यपरत्वेन जीवपरत्वेन, परिमातु शक्याः लाक्षणिककार्यस्यायुक्तत्वादित्यर्थः, द्वितीये त्रयाणामपि स्वतन्त्रत्वमितिपक्षे, त्रिविधं जीवप्राणब्रह्मणां त्रयाणामपि प्रत्येकरूपेणोपासनं वाक्येन बोधनीयं स्यादित्यर्थः, तथासति दोषमाहुः तद्वाक्यभेदेत्यादि, तृतीये जीवप्राणधर्माणां ब्रह्मपरत्वपक्षे, ब्रह्माधारत्वात् ब्रह्मवृत्तित्वात, नच घटपटाद्यवयविनामेवावयववृत्तित्वं अनुभवसिद्धं न त्ववयवानामवयविवृत्तित्वमिति चेन्न, संयोगेन कार्योत्पत्तिस्थले तथानुभवेपि विभागेन कार्योत्पत्तिस्थलेवयवानामेवावयविवृत्तित्वं स्वीकार्यं, 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे'त्यादिप्रमाणसिद्धत्वात्, तद्धर्माः जीवधर्माः, भगवदाश्रिता एव अवयवानामवयव्यभेदाद्भगवदाश्रिता एवेत्यर्थः, इहेत्युभयत्रेत्यादि, तथाच इह ब्रह्मणि जीवस्याश्रितत्वात्तद्धर्माणां पञ्चवृत्तिशून्यस्य मुख्यप्राणस्य तु सुपुप्तौ प्राज्ञेन सङ्गात् तद्धर्माणां भान स्फटिके जपाकुसुमधर्माणामिव, इत्थ च उभयत्र आश्रितत्वे तद्योगे च ब्रह्मणः सम्बन्ध इत्यर्थः, ब्रह्मवादे इति मायावादिनां मते जीवस्यैव ब्रह्मत्वेन ऐक्यादाश्रयाश्रयिभावासम्भवात्तद्बोधकश्रुतिविरोधप्रदर्शनायोक्तं, मुख्यप्राणे वृत्तिपञ्चकशून्ये, तद्योगात् सुषुप्तौ ब्रह्मसंयोगात्।

अस्मिन् पक्षे जीवप्राणधर्माणां साक्षाद्भगवद्धर्मत्वं नायातीति पक्षान्तरमाहुः अथवेत्यादि, वक्तृत्वादयः इन्द्रकर्तृत्वेन प्रतीयमानाः वक्तृत्वादयः, ब्रह्मधर्माः साक्षाद्ब्रह्मधर्माः, तत्र प्रमाणमाहुः परात्त्वित्यादि, तथा ब्रह्मधर्मा एवेत्यर्थः, स्वाप्ययः सुपुप्तिः, सम्पत्तिः मोक्षस्तयोरित्यर्थः, आध्यात्मिकेत्यादि जीवान्वयी, न संयोगः ऐक्यान्न संयोगः, संयोग एव प्राणस्य भौतिकत्वात् सुषुप्तौ प्राज्ञेन संयोग एवेत्यर्थः, सर्वे धर्माः इन्द्रप्रतर्दनोक्ताः सर्वे धर्माः, नन्वन्यधर्माणां भगवति सत्त्वसम्भवेपि जीवस्य ज्ञानशक्तिः प्राणस्य क्रियाशक्तिरूपस्य भगवत्त्वे प्राणपदवाच्यत्वस्य च ब्रह्मण्युरीकारे 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण' इत्यभेदनिर्देशानन्तरमपि 'सहैवास्मिन् शरीरे वसतः सहोत्क्रामत' इति द्विवचनमनुपपन्नं ब्रह्मणो व्यापकत्वादित्यत आहुः सहोत्क्रमस्त्ववित्ति, भगवदधीनत्वमित्यादि सर्वस्यापि प्रपञ्चव्यवहारस्य जीवप्राणात्मकभगवदधीनत्वबोधनायैव तथोक्तिर्न तु तयोर्भेदबोधनार्थेति भावः।

प्रज्ञाप्राणयोर्धर्मिरूपत्वे समाधानाय शङ्कामाहुः नन्वित्यादि, धर्मयोः जीवप्राणयोः, उत्क्रमणं धर्मोत्क्रमणस्य धर्म्युत्क्रमणाधीनत्वात् धर्मिणश्च व्यापकत्वादितिभावः,

---

१. परिणेतुमित्यपि पाठः।

अत्र धर्मधर्मिणोरेकत्वपृथक्त्वनिर्देशयोर्विद्यमानत्वात्, 'प्राणो वा अहमस्मिन् प्रज्ञात्मे'ति, अत्र क्रियाज्ञानशक्तिमान् निर्दिष्टः, तदन्वेकैकस्य धर्मप्रशंसा 'यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राण' इत्युपसंहारान्तं, पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां 'सह ह्येवास्मिन् शरीरे वसतः सहोत्क्रामत' इत्युपक्रम्य सुषुप्तिमूर्छामरणेषु प्राणाधीनत्वं सर्वेषामिन्द्रियाणामुक्त्वा आसन्यव्यावृत्त्यर्थं प्रज्ञयैक्यं प्रतिपाद्योपसंहरति पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुं 'अथ खलु यथा प्रज्ञाया'-मित्यारभ्य 'न हि प्रज्ञापेतोऽर्थः कश्चन सिद्ध्येते'त्यन्तेन, ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निर्दिशति 'न हि प्रज्ञातव्य'मित्यारभ्य मन्तारं विद्या'दित्यन्तेन, तदनु ज्ञानक्रियाशक्त्योर्विषयभूतभूतमात्रारूपजगतो भगवदभेदं प्रतिपादयन् 'स एष प्रज्ञात्मानन्दोऽजरोऽमृत' इति उपसंहरति ब्रह्मधर्मैः, अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य न तावन्मात्रं ततोऽप्यधिक इत्येकोपासनैव विहिता, तस्माज्जडजीवरूपत्वात् सर्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः ॥ ३० ॥

इति प्रथमाध्याये प्रथमपादे दशममनुगमाधिकरणम् ॥

॥ इतिश्रीमद्वेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥

---

अत्र एतद्वाक्ये, एकत्वपृथक्त्वेत्यादि तथा च 'यो वै प्राण. सा प्रज्ञा' इत्यनेनाभेदमुक्त्वापि 'सहैवास्मिन् शरीरे वर्ततः सहोत्क्रमत' इत्यनेन भेदस्यापि निर्देशात् 'प्राणो वाह'मित्यनेनाप्यभेदनिर्देशादभेदेपि हस्तोत्क्षेपणापक्षेपणवदुत्क्रमणं न विरुद्धमितिफलितोऽर्थः, उपसंहरन्ति उपसंहरति ब्रह्मधर्मैः उपसंहारविषयत्वं क्रियाज्ञानयोः, ननु जीवप्राप्यतद्विषयाणामवयवब्रह्मत्वेनोपासनानियमे इतरोपासनाविषयाणां ब्रह्मत्वं तेषामुपासनं बाधितं स्यादत आहुः न तावन्मात्रमिति, ननु तर्हि सर्वाण्युपासनान्यत्र कुतो नोक्तानीत्यत आहुः एकोपासनेत्यादि, तथाचात्रैकोपासनोक्तावपि अन्यत्रान्यान्युपासनानि बोध्यानीत्यर्थः ॥ ३० ॥

प्रथमाध्याये प्रथमपादे दशममनुगमाधिकरणम् ॥

इति श्रीगोस्वामिश्रीवल्लभजीसुतश्रीगोपालकृते श्रीमद्ब्रह्मसूत्राणुभाष्यपदप्रदीपे प्रथमाध्यायस्य प्रथमश्चरणः ॥

# ॥ अथ प्रथमस्याध्यायस्य द्वितीयः पादः ॥

समन्वये प्रथमेऽध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः, तत्रोद्गीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्यङ्गत्वं, ब्रह्मवाक्यानां पुनर्निःसन्दिग्धानां समन्वयः स्वतःसिद्धः, सन्दिग्धानि द्विविधानि, शब्दतोऽर्थतश्च, तदर्थश्चैतद्विचारितं ब्रह्मणि व्यवहारोऽस्ति कश्चिन्न वेति, तत्र प्रथमसूत्र एव व्यवहारः स्थापितः, 'यतो वाचो निवर्तन्त' इत्यादीनां विशेषेणेदमित्थतया निरूपणनिषेधनपरत्वं, एवमेव कार्यसिद्धेः, अधीतानां ब्रह्मवाक्यानाञ्चतुर्लक्षण्या ब्रह्मपरत्वे सिद्धे श्रवणं सिद्ध्यति, श्रुतस्य कालान्तरेऽप्यसम्भावनाविपरीतभावना-

---

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

अथ द्वितीयपादं व्याचिख्यासवः पादानां परस्परमेककार्यत्वरूपां सङ्गतिमवसरसङ्गतिं च क्रमनियामिकां प्रतिपादयितुं व्याख्येयाध्यायार्थकथनपूर्वकं पूर्वपादसिद्धः सर्वोऽप्यर्थः सङ्क्षेपेण वक्तव्योऽन्यथा मन्दमतीनां प्रथमपादार्थानवधारणेन द्वितीयपादस्य वक्ष्यमाणेऽर्थे सन्देहः स्यादतस्तमाहुः **समन्वय** इत्यारभ्य **सन्देहो निवारित** इत्यन्तेन, **समन्वये** सर्ववेदान्तवाक्यानां समन्वयप्रतिपादकत्वेन समन्वयाख्यया प्रसिद्धे प्रथमेऽध्याये इत्यर्थः, **ब्रह्मणि** परब्रह्मणि, **समन्वयः** अबाधितार्थतया ऋजुरीत्या शक्यार्थान्वयः, **तत्र** वक्तव्ये समन्वये, **उद्गीथे**त्यादि तथा चान्तस्तद्धर्माधिकरणाद्यधिकरणेषु यानि उद्गीथोपासनाबोधकानि वाक्यानि तेषां, एवमन्यसर्वोपासनाबोधकवाक्यानां च तत्तन्नानारूपैर्नानाफलदातृत्वस्य भगवति बोधकतया माहात्म्यज्ञानसम्पादनेनाभेदेन चात्मनि ब्रह्मोपासनाबोधनेन ब्रह्मणि आत्मत्वेन ज्ञाने जाते सति माहात्म्यज्ञानपूर्वकपरप्रेमलक्षणभक्तौ पर्यवसानाय भक्तिरूपसाधनस्य परमफलबोधकानि प्रधानवाक्यानि 'भक्तिरस्य भजनं' 'भजति रसती'त्यादीनि तैरेकवाक्यतया फलोपकार्यङ्गत्वमित्यर्थः, एतेन नानेतरोपासनाबोधकवाक्यानां बाहुल्याद् दुर्ज्ञेयत्वेनान्योपास्यबोधनेन च न ब्रह्मणि समन्वय इतिशङ्का अपास्ता वेदितव्याः, **निःसन्दिग्धानां** 'नित्यशुद्धबुद्धमुक्तस्वभाव'मित्यादीनां, **शब्दतः** प्राणाकाशादिशब्दतः, शब्दकृतसन्देहस्यार्थसन्देहे उपजीव्यत्वादादौ शब्दत इति उपन्यस्तं, **अर्थतः** गायत्र्यादिशब्दानां वर्णसमुदायोऽर्थो ब्रह्म न वेत्यर्थतः सन्देहः, **तदर्थं** उक्तसन्देहानां निरासार्थं, **विचारितं** प्रथमपादे विचारितं, **व्यवहारः स्थापितः** व्यवहारः शब्दज्ञानयोर्विषयतारूपः सः प्रथमसूत्र एव व्यवस्थापितः, व्यवहाराविषये जिज्ञासाप्रतिज्ञाबाधापत्तेः, ननु ब्रह्मणि वाग्ज्ञानगोचरत्वाङ्गीकारे 'यतो वाच' इतिश्रुतिविरोध इत्यत आहुः **यत** इत्यादि, **इत्यादीना**मित्यादिपदेन 'अगृह्यो नहि गृह्यते' इत्यादीनां सङ्ग्रहः, **इदमित्थतये**त्यादि तथाच परिच्छिन्नतया वाङ्मनोभ्यां निर्णयः श्रुत्या निषिध्यत इत्यर्थः, एवमर्थकरणे प्रमाणं तु 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति उक्तश्रुत्युत्तरार्धमेवेतिध्येयं, उक्तार्थकरणावश्यतामाहुः **एवमेव** ब्रह्मणो वाग्ज्ञानगोचरत्वाङ्गीकार एव, **कार्यसिद्धेः** 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति वाग्गोचरब्रह्मज्ञानेन मोक्षरूपकार्यसिद्धेरित्यर्थः, **अधीतानां** पठितानां, **ब्रह्मवाक्यानां** ब्रह्मप्रतिपादकोपनिषद्वाक्यानां, **चतुर्लक्षण्या** चत्वारि लक्षणानि समन्वयाविरोधसाधनफलात्मका विषया यस्यां सा चतुर्लक्षणी अध्यायचतुष्टयात्मिका व्यासमीमांसा तया, **ब्रह्मपरत्वे** परब्रह्मपरत्वे, **श्रवणं** शक्तितात्पर्यनिर्धाररूपश्रवणं, मननार्थमुपपत्तिमाहुः **श्रुतस्ये**त्यादिना, **असम्भावना** कर्मातिरिक्तं ब्रह्म नास्तीत्यादिरूपा, **विपरीतभावना** जीवमात्रं ब्रह्मेतिविपरीतभावना, पूर्वस्थितानां निर्धारक-

निवृत्त्यर्थं पूर्वस्थितानामङ्गानामनपेक्षितानामुद्वापेनान्येषामपेक्षितानामावापेन तस्यैवार्थस्य निर्धारणे मननं भवति, ततोऽप्येवं ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपं मनसि सर्वतोनिवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म, इदमेव ब्रह्मज्ञानमिति, अतस्तादृशस्यानुभवैकवेद्यत्वाद्युक्तमविषयत्वं पाकभोजनतृप्तिवत्, अतः श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानामन्यपरत्वेन्यवाक्यानाञ्च भगवत्परत्वे दिव्यधर्मादिव्यधर्मव्यत्यासेन वैपरीत्यं फलमापद्येत, तदर्थं दिव्यधर्मनिर्धारो द्वितीयाधिकरणे विचारितः, वेदा एव वाचका अलौकिकमेव कर्मेति, ततः पूर्णलौकिकत्वाय विधिनिषेधमुखेनाधिकरणद्वयं समन्वयेक्षतिरूपं, तदनु प्रथमे पादे शाब्दसन्देहो निवारितो निश्चितार्थे, तत्रापि प्रथमं प्रत्ययसन्देहो निवारितो द्वयेन, प्रकृतिसम्बन्धोप्यधिकरणत्रयेण, पुनरन्तिममधिकरणं संश्लेषनिराकरणाय, एवं प्रथमे पादे शब्दसन्देहो निवारितः ।

---

वाक्यपूर्वपठितानां, अङ्गानां धर्माणां, अनपेक्षितानां प्रकृतार्थान्वयायोग्यानां, उद्वापेन त्यागेन, अन्येषामित्यादि प्रकृतान्वययोग्यार्थानां आवापेन ग्रहणेनेत्यर्थः, तस्यैव प्रकृतापेक्षितस्यैव, निर्धारण इति सतिसप्तमी, इत्थ च तादृशनिर्धारणमेव मननमित्यर्थं, 'ब्रह्मसंस्थोऽमृतत्वमेती'तिवाक्यान्निदिध्यासनमाहु तत इत्यादिना, ततः मननानन्तर, एव मननिर्णीतधर्मप्रकारेण, इदमेव आनन्दात्मकोक्तब्रह्मोपलब्धिरूपमेव, ब्रह्मज्ञानं सुखात्मकानुभवरूपं ज्ञानमित्यर्थ, अतः अनुभवान्तरस्यानन्दरूपत्वाभावत', तादृशस्य आनन्दात्मकानुभवविषयब्रह्मण', अनुभवैकवेद्यत्वात् उक्तानुभवैकवेद्यत्वात्, युक्तमित्यादि तथा च लौकिकसाधनज्ञानविषयत्वस्य सत्त्वेपि यथोक्तानुभवविषयत्वं ब्रह्मणि तथेतरग्रहविषयत्व नास्तीति 'यतो वाच' इत्यस्यार्थ., लौकिकब्रह्मज्ञानापेक्षया सुखात्मकब्रह्मज्ञानस्य वैलक्षण्ये दृष्टान्तमाहु. पाकेत्यादिना, तथाचामान्नभक्षणेन तृप्त्यनुभवापेक्षया पक्वान्नभोजनतृप्त्यनुभवस्य वैलक्षण्यवत् प्रकृतेऽवसेयमित्यर्थ., एव जिज्ञासाधिकरणेऽनुपपत्ति परिहृत्य जन्माद्यधिकरणे तां परिहर्तुमाहुः अत इत्यादि, यत 'श्रोतव्यो मन्तव्य' इतिवाक्याद् ब्रह्मविद्याया मुख्यमङ्ग श्रवण तच्च 'अथातो ब्रह्मजिज्ञासे'त्युपक्रमाधीनं, अतो मीमांसाया अपि श्रवणाङ्गत्व, इत्थ च मीमांसाङ्गिन. श्रवणस्य स्वविषयीभूतब्रह्ममाहात्म्यज्ञानमवान्तरं फलमिति मीमांसाया अपि तदेवावान्तर फलमिति माहात्म्यज्ञानफलायामित्युक्त, भगवद्वाक्यानां परब्रह्मप्रतिपादकवाक्यानां, अन्यपरत्वे सोपाधिकब्रह्मपरत्वे, अन्यवाक्यानां परब्रह्मभिन्नप्रतिपादकवाक्यानां, दिव्येत्यादि दिव्यधर्माः जगत्कर्तृत्वशास्त्रैकसमधिगम्यत्वापरिच्छिन्नत्वसर्वज्ञत्वादयः, अदिव्यास्तद्विपरीता, तेषां व्यत्यास. अब्रह्मणि ब्रह्मधर्मज्ञानं ब्रह्मणि चादिव्यधर्मज्ञानं तेन, वैपरीत्य फलं 'अन्यथा सन्तमात्मान'मित्याद्युक्त फलमित्यर्थ, तदर्थं फलवैपरीत्यनिराकरणार्थं, दिव्यधर्मेत्यादि जगत्कारणत्वशास्त्रैकसमधिगम्यत्वरूपदिव्यधर्मनिर्धार इत्यर्थः, द्वितीयाधिकरणे 'जन्माद्यस्य यत. शास्त्रयोनित्वा'दित्यधिकरणे इत्यर्थः, ननु द्वितीयाधिकरणे दिव्यधर्माः कुतोऽवगता अत आहुः वेदा एवेत्यादि, तथाच 'तस्माद्वा एतस्मादात्मनः' 'यतो वा इमानि भूतानि जायन्त' इत्यादयो वेदा एव जगज्जन्मादिहेतुत्वरूपदिव्यधर्मबोधका यतस्तत इत्यर्थ., एवं द्वितीयाधिकरणे उपपत्तिमुक्त्वा तृतीयचतुर्थाधिकरणयोस्तामाहुः पूर्णलौकिकेत्यादिना, तथाचाभिन्ननिमित्तोपादानत्वस्येक्षतिमात्रेणानेकब्रह्माण्डात्मकप्रपञ्चनिर्माणस्य च परब्रह्मातिरिक्ते कुत्राप्यभावादेतद्धर्मद्वयवत्त्व पूर्णलौकिकत्वं बोध्यं, विधिनिषेधेत्यादि, समन्वयाधिकरणं अन्वयेन ईक्षत्यधिकरण च व्यतिरेकेण पूर्णलौकिकत्वबोधके इत्यर्थ', तदनु पूर्वोक्ताधिकरणचतुष्टयोत्तरं, शाब्दसन्देहः आनन्दमयहिरण्मयशब्दगतमयट्प्रत्ययप्रयुक्तो यः शाब्दबोधसन्देहः स आनन्दमयाधिकरणान्तस्तद्धर्माधिकरणाभ्यां निवारित इत्यर्थः, निश्चितार्थे पूर्वाधिकरणचतुष्टयेन निश्चितार्थे ब्रह्मणीत्यर्थः, तत्रापि आनन्दमयहिरण्मयशब्दद्वयेपि, प्रथमं प्रकृत्यर्थनिर्णयात् प्रथमतः, प्रत्ययसन्देहः मयट्प्रत्यये सन्देह., द्वयेन आनन्दमयाद्यधिकरणद्वयेन, प्रकृतीत्यादि, आकाशप्राणतेजसां श्रौतशब्दार्थानां प्राकृतत्वनिराकरणेन ब्रह्मत्वव्यवस्थापनेन चाब्रह्मत्वसन्देहो निवारित इत्यर्थ, संश्लेषनिराकरणाय ब्रह्मजीवप्राणलिङ्गानां ब्रह्मणि उपपत्तिदर्शनायेत्यर्थः, पूर्वपादसिद्धाधिकरणार्थाननूद्योपसंहरन्ति एवमित्यादि, शब्दसन्देहः परब्रह्मप्रतिपादकशब्दानां ब्रह्मेतरप्रतिपादकत्वसन्देहः, निवारितः सूत्रकारेण निवारितः ।

---

१. सश्लेषवारणायेत्यपि पाठः ।

ये पुनः क्वचित्सगुणनिर्गुणभेदं प्रतिपादयन्ति ते स्वयमेव स्वस्य ब्रह्मजिज्ञासानधिकारं बोधयन्ति, ब्रह्मवादे साङ्ख्यानामिव गुणानामनङ्गीकारात्, भौतिकगुणानामसम्बन्धार्थमेव ह्यध्यायारम्भः, अन्यथा सर्वस्यापि तत्कारणत्वेन तत्सम्बन्धस्य विद्यमानत्वाद् अन्यनिराकरणेन तत्प्रतिपादकत्वनिर्धारकाधिकरणानां वैयर्थ्यमेव ।

अर्थसन्देहनिराकरणार्थं द्वितीयाद्यारम्भः, तत्रार्थो द्विविधो जीवजडात्मकः, प्रत्येकसमुदायाभ्यां त्रिविधः, तत्र प्रथमं जीवपुरःसरेण सन्देहा निवार्यन्ते ।

इदमाम्नायते, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर' इत्यादि,

तत्र वाक्योपक्रमे 'सर्वं खल्विदं ब्रह्मे'ति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय 'तज्जलान्' इति सर्वविशेषणं हेतुत्वेनोक्त्वा तत्त्वेनोपासनमुक्तं, नचायं शमविधिः, वाक्यार्थे लक्षणाप्रसङ्गात्, कार-

---

पूर्वोक्तरीत्या प्रथमचरणाधिकरणानां स्वयंसङ्गतिमुक्त्वान्यैरन्यथोक्तां प्रथमचरणसङ्गतिं दूषयितुमाहुः ये त्वित्यादिना, तथाहि ते हि 'अथातो ब्रह्मजिज्ञासे'त्यत्र निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय निर्गुणस्य ज्ञानाविषयत्वात्तत्र जिज्ञासोदयासम्भवात् जन्मादिसूत्रे प्रथमतः सगुणमेव ब्रह्म प्रतिपाद्यते, शाखारुन्धतीन्यायेन तत्प्रतिपादनं निर्गुणब्रह्मपरिचयायोपयुज्यत इति ये वदन्ति ते इत्यर्थः, ते सगुणस्य विचार्यतावादिनः, अनधिकारं ब्रह्मविचारानधिकारं, तत्र हेतुस्तेषां मते परब्रह्मणो ज्ञानागोचरत्वमेव, ननु गुणाधीनब्रह्मणो ज्ञानजिज्ञासागोचरत्वाच्चैतन्यांशमादाय तस्यैव परब्रह्मत्वात्कथं जिज्ञासानधिकार इत्यत आहुः ब्रह्मवाद इत्यादि, 'सर्वं खल्विदं ब्रह्म' 'सर्वस्येशान' इति ब्रह्मवादे ब्रह्मातिरिक्तस्य सर्ववशीकरणसमर्थस्य च गुणस्य सम्भवाभावादित्यर्थः, साङ्ख्यानामित्यादि तथा च साङ्ख्यमते ब्रह्मातिरिक्तप्रधानाङ्गीकारेपि सूत्रकारैस्तन्मतस्याग्रे दूष्यत्वाद् वक्तुं न शक्यत इत्यर्थः, ननु 'प्रधानक्षेत्रपतिर्गुणेश' इतिश्वेताश्वरोपनिषद्युक्तत्वात्कथं भगवति गुणानां निषेध इत्यत आहुः भौतिकेत्यादि, तथा च नित्याधिदैविकगुणानां ब्रह्मणि सत्त्वेपि भौतिकगुणानां जनकत्वातिरिक्तसम्बन्धनिराकरणार्थमेव प्रथमाध्यायारम्भ इति भावः, अन्यथा जगज्जनकत्वादिरूपाधिदैविकगुणानां ब्रह्मण्यनङ्गीकारे, सर्वस्य कार्यजातस्य, विद्यमानत्वात् ब्रह्मणि विद्यमानत्वात्, अन्यनिराकरणेन सगुणप्रजापतिप्रभृतीनां जगत्कारणतानिराकरणेन, तत्प्रतिपादकत्वेत्यादि परब्रह्मणः सर्वकार्यं प्रति कारणताप्रतिपादकाधिकरणानां वैयर्थ्यमेव सगुणकारणनिराकरणपूर्वकनिर्गुणकारणताव्यवस्थापनवैयर्थ्यमेव स्यात्, जनकतासम्बन्धेन परब्रह्मणोपि भौतिकगुणसम्बन्धसद्भावादिति भावः ।

प्रासङ्गिकं समाप्याग्रिमपादत्रयस्य प्रयोजनं प्रदर्शयितुमाहुः तत्रार्थ इत्यादि, प्रत्येकेत्यादि उभयात्मकः समुदायः प्रत्येकं जीवजडात्मकं चार्थद्वयमेवमर्थस्त्रिविध इत्यर्थः, तत्र जीवजडोभयेषां सन्देहे निराकार्ये सति, जीवपुरःसरेण जीवं पुरस्कृत्य यः सन्देहस्तादृशसन्देहप्रकारेणेत्यर्थः, सन्देहाः उक्तत्रयाणां सन्देहाः, निवार्यन्ते द्वितीये जीवे तृतीये जडे चतुर्थचरणे उभयेषु सन्देहा निवार्यन्त इत्यर्थः ।

आदौ जीवसन्देहनिराकरणाय छान्दोग्यपञ्चमप्रपाठकस्थं विषयवाक्यमाहुः इदमित्यादि, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर' इति, तत्र सर्वमिदं प्रतीयमानं ब्रह्मत्वेनोपास्यमिति वक्तुं विकृतत्वेन प्रतीयमानस्य कथं ब्रह्मत्वमित्याशङ्कानिरासाय सर्वपदार्थविशेषणं तज्जलानिति, यतस्तस्माद्ब्रह्मणो जायते तस्मिल्लीयते तस्मिन् स्थितिकालेऽनिति चेष्टतेऽतः सर्वं ब्रह्मैवातः शान्तः सन् उपासीतेति सर्वस्यापि ब्रह्मत्वेनोपासनं निर्णीतमित्यर्थः,

ननु तज्जलानिति यथा सर्वपदार्थविशेषणमुक्तं तथा शान्त इत्युपासकविशेषणमप्युक्तं, इतिशब्दो हेत्वर्थः, तथा च यतो हेतोर्जगतो ब्रह्मत्वं अतः सर्वत्र रागद्वेषादि त्यक्त्वा शान्तो भवेत्, तथा भूत्वा चाग्रे वक्ष्यमाणोपासनं कुर्यादिति पूर्वोक्तं शमविधिमङ्गीकृत्याग्रे मनोवैशिष्ट्यादिधर्मकथनाद् उक्तवाक्ये जीवोपासनमेव विहितं कुतो न स्यादितिपूर्वपक्षं मनसि निधायाहुः न चायमित्यादि, निषेधे हेतुमाहुः वाक्यार्थ इत्यादि, तथा च शान्तो

णत्वेन सामान्यत एव सिद्धत्वाच्च, अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तं, इदमेव पुराणादिषु विराट्त्वेनोपासनं, अतःपरमग्रिमवाक्यार्थे सन्देहः, 'क्रतुं कुर्वीते'ति, क्रतुर्धर्मो यज्ञ इतियावत्, तस्य स्वरूपं 'मनोमयः प्राणशरीर'इति, उपासनाप्रकरणत्वादुपासनैवैषा, तत्र 'मनोमय' इति प्रमाणभूतो वेद उक्तः, 'प्राणशरीर' इति कार्यकारणयोरभेदोपचारः, अग्रे सत्यसङ्कल्पादिधर्मवचनात्, किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्य उत ब्रह्मैवान्तर्यामी यः पुराणेषु सूक्ष्म उक्तः ?

तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वात् जीवस्यापि ब्रह्मत्वेनोपासनमेव युक्तं, न त्वाहत्यैव ब्रह्मवाक्यं भवितुमर्हति, 'विज्ञानं ब्रह्म चेद्वेदे'तिशाखान्तरे स्पष्टत्वाच्च, तस्मात्कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्य इति प्राप्ते,

उच्यते,

## सर्वत्र प्रसिद्धोपदेशात् । १ । ( १–२–१ )

'अथ खल्वि'त्यादि ब्रह्मवाक्यमेव, कुतः ? सर्वत्र प्रसिद्धोपदेशात्, 'कुर्वीते'त्युपदेशो, न

---

भवेदितिवाक्यार्थे लक्षणापत्तिः, एवं उपासीतेतिपदस्य शमपूर्विकामुपासनां कुर्यादितिवाक्यार्थे लक्षणापत्तिदोषादुक्तार्थस्त्याज्य इतिभावः, दूषणान्तरमाहुः कारणत्वेनेत्यादि, तस्मात् 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दित्यत्र ब्रह्मज्ञानकारणत्वेन शमस्य ज्ञातत्वादपूर्वत्वाभावाद्विधानं सम्भवत्यपि नेत्यर्थः, सिद्धं विषयवाक्यार्थमाहुः अतः सर्वेत्यादिना, इदमेव ब्रह्मत्वेन सर्वोपासनमेव, पुराणादिषु 'पातालमेतस्य हि पादमूल'मित्यादिषु, प्रकृतमाहुः अतःपरमित्यादिना, अग्रिमेत्यादि 'स क्रतुं कुर्वीते'तिवाक्यार्थे सन्देह इत्यर्थः, सन्देहमुपपादयितुमाहुः क्रतुर्धर्म इति, ननु यज्ञस्वरूपघटकद्रव्यदेवतयोरलाभात् कथं यज्ञत्वोक्तिसम्भव इत्यत आहुः तस्येत्यादि, तस्य यज्ञस्य, मनोमयः द्रव्यादिरहितोयं ज्ञानस्वरूपो यज्ञ इत्यर्थः, प्राणशरीरः प्राणाभिव्यङ्ग्यः, एषा क्रतुपदवाच्या, तथा च रूढिमनादृत्य योग्यताबलात् क्रियतेऽसौ क्रतुरितियौगिकार्थ एवात्रादरणीय इत्यर्थः, मनोमय इति मनोमयपदवाच्यः, वेद इति मनोमयनिरूपणस्थले 'तस्य यजुरेव शिर' इति निरूपणान्मनोमयस्य वेदत्वं निर्विवादमित्यर्थः, ननु 'वेदो नारायणः साक्षात् स्वयम्भू'रित्यादिवाक्यात्तस्य प्राणशरीरत्वं कथमुपपद्यतेत आहुः कार्यकारणयोरित्यादि, तथा च वेदानां ब्रह्मत्वात् प्राणादीनां च तत्कार्यत्वात् कार्यकारणयोश्चाभेदात् प्राणशरीरत्वमुक्तमित्यदोषः, मनोमयस्य ब्रह्मरूपत्वे उपपत्तिः अग्रे सत्यसङ्कल्पेत्यादि, आदिपदेन 'एष मे आत्मे'त्यादेर्वेदव्यावर्तकधर्मस्य सङ्ग्रहः, अयं मनोमयपदवाच्य', विज्ञानमयः भारूपचिदात्मकतया प्रकाशमानो जीव इत्यर्थः, 'प्राणशरीर' इत्यनेन प्राणधारणप्रयत्नवत्त्वं जीवे बोध्यते, स जीवो ब्रह्मत्वेनोपास्य इत्येका कोटिः, सत्यसङ्कल्पादिधर्मोक्तेर्द्वितीयां कोटिमाहु. उतेत्यादि, अन्तर्यामित्वे सम्मतिमाहु , पुराणेष्विति, 'केचित्स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्त'मित्यादिषु ।

पूर्वपक्षमाहुः तत्रेत्यादि, तत्र कोटिद्वयमध्ये, पूर्ववाक्ये 'सर्वं खल्वि'तिवाक्ये, जीवस्यापि 'मनोमयः प्राणे'त्याद्यग्रिमवाक्येन जीवस्यापि, आहत्यैव युक्तिं विनाग्रहमात्रेणैव, विज्ञानं प्रकाशमानं स्वजीवात्मानं, नन्वत्र जीवोक्तौ प्रकरणपठितसत्यसङ्कल्पादिनानाविधब्रह्मधर्माणां जीवे कथमुपपत्तिः स्यादत आहुः कार्यकारणयोरित्यादि, तथा च ब्रह्माभेदात् सर्वेषामुपपत्तिर्बोध्या इतिभाव , इति प्राप्ते जीवस्य ब्रह्मत्वेनोपासनं कार्यमितिपूर्वपक्षे प्राप्ते,

उच्यते सूत्रेण समाधानमुच्यते,

**सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥** समाधानमुपपादयन्ति अथ खल्वित्यादिना, ब्रह्मवाक्यमेव सम्पूर्णवाक्यं ब्रह्मोपदेशार्थमेव, कुर्वीतेत्यन्वयोऽवसेयः, तत्र हेतुः सौत्रः सर्वत्र प्रसिद्धेत्यादि, सर्वत्र वेदान्तेषूत्कृष्टत्वेन

---

१ इत्येवम्प्राप्ते इत्यपि पाठ. ।

तूपासना, तत्र परमशान्तस्य सर्वस्य जगतो ब्रह्मत्वेनोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपः, न तु क्वचित् प्रसिद्धस्य जीवस्योपासना, शाखान्तरे त्वग्रे आनन्दमयस्य वक्तव्यत्वात् तथा युक्तं, न त्विह तथा, तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः ॥ १ ॥

ननु 'क्रतुमयः पुरुष' इति यथासङ्कल्पमग्रिमदेहकथनात् लोकान्तरभाविफलार्थमन्योपासनैव तु युक्ता, न तु ब्रह्मज्ञानस्य तादृशं फलं युक्तमित्याशङ्क्य परिहरति,

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः सा प्रकृतेऽप्युपपद्यते, भगवत्स्वरूपलाभात् सारूप्यलाभाद्वा, न च व्याप्तिरुक्तेत्यधमप्राप्त्युपायो युक्तः, सत्यसङ्कल्पादिवचनं च ब्रह्मवाक्यत्वपोषकमिति चकारार्थः ॥ २ ॥

नन्वेतावतापि नैकान्ततो ब्रह्मवाक्यत्वमुपपत्तेरुभयत्रापि तुल्यत्वादित्याशङ्क्य परिहरति,

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

न च प्राणशरीररूपो जीवो भवति, तिरोहितानन्दत्वेन निराकारत्वात्, अध्यासेन तथात्वे

---

प्रसिद्धस्यैव ब्रह्मण 'सर्वं खल्वि'तिवाक्येन ब्रह्मज्ञानार्थमुपदेश इत्यर्थः, न तूपासना ब्रह्मत्वेन जीवोपासनावाक्यार्थो नेत्यर्थः, नन्वेवं चेत् श्रुतिर्ब्रह्मोपदेशमेव वदेन्न तु सर्वरूपत्वातिशान्तत्वादि चेत्यत आहुः तत्रेत्यादि, तत्र ब्रह्मोपदेशे कर्तव्ये सति, परमेत्यादि परमशान्तस्य शुद्धसत्त्वाकारान्तःकरणवृत्तिमत , सर्वस्येत्यादि तथा च 'सर्वं खल्वि'ति 'शान्त उपासीते'त्यादि च ब्रह्मोपदेशयोग्यतासिद्ध्यर्थं ब्रह्मत्वेन सर्वोपासनार्थमुक्तमित्यर्थः, क्वचित्प्रसिद्धस्य शाखान्तरे 'विज्ञानं ब्रह्म चेद्वेदे'त्यनेनोक्तस्येत्यर्थं, इत्थं च मननरूप. क्रतुब्रह्मोपदेश एवात्रेतिफलितं, ननु शाखान्तरेपि'विज्ञानं ब्रह्म चेद्वेदे'त्यपि ब्रह्मोपदेशकमेवास्तु तथा च जीवोपासनोच्छेद अत आहुः शाखान्तरे इत्यादि, तथा च 'विज्ञानं ब्रह्मे'त्यत्र ब्रह्मोपदेशेऽग्रे आनन्दमयब्रह्मोपदेशेन पौनरुक्त्यापत्तिरतः, तथा युक्तं शाखान्तरवाक्ये जीवोपासनं युक्तमित्यर्थः, न त्विह तथा क्रतुमयोपदेशस्थले जीवोपासनं नेत्यर्थं, उपसंहरन्ति तस्मादित्यादिना, आनन्दरूपेत्यादि आनन्दात्मका प्राणाः शरीरं यस्येति परमात्मा 'अथ खलु क्रतुमय' इतिवाक्यस्यार्थ इत्यर्थः ॥ १ ॥

अग्रिमसूत्रमवतारयन्ति नन्वित्यादिना, यथा 'क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती'तिपूर्ववाक्यात्, यथासङ्कल्पं जन्मान्तरीयदेहप्राप्तिबोधकश्रुत्युक्तं सङ्कल्पमनतिक्रम्येत्यर्थं, अग्रिमेत्यादि 'तथेतः प्रेत्य भवती'त्यनेनाग्रिमदेहकथनादित्यर्थं, लोकान्तरेत्यादि भवान्तरीयभाविदेहरूपफलार्थमित्यर्थः, अन्योपासना वेदाभिमानिदेवतोपासना, उपासकात्मनो वा ब्रह्मत्वेनोपासना भाविफललाभार्थमित्यर्थं, तादृशं भावान्तरीयदेहात्मकं, युक्तमिति 'तमेव विदित्वातिमृत्युमेती'तिब्रह्मज्ञानस्य मोक्षफलत्वश्रुतेर्न युक्तमित्यर्थः,

विवक्षितगुणोपपत्तेश्च ॥ २ ॥ विवक्षिता वक्तुं योग्या, तादृशरूपप्राप्तिः आनन्दात्मकप्राणस्वरूपदेहप्राप्तिः, प्रकृतेपि ब्रह्मज्ञानेपि. उपपद्यते 'ब्रह्मविदाप्नोति पर'मितिश्रुतेरलौकिकदेहलाभान्नानुपपत्तिरित्यर्थः, व्याप्तिः यत्र यत्र देहत्वं तत्र तत्र प्राकृतत्वमितिव्याप्तिरित्यर्थं, अधमेत्यादि प्राकृतदेहप्राप्त्युपायो जीवोपासनरूप इति च नेत्यन्वयः, तत्र हेतुः देहत्वप्राकृतत्वयोरप्राकृतदेहे व्यभिचाररूपोवसेय, चकारसमुच्चितार्थं वक्तुमाहुः सत्यसङ्कल्पेत्यादि, 'स ईक्षाञ्चक्रे'इत्यनेनेक्षामात्रेणानेकब्रह्माण्डादिरूपेण भवन सत्यसङ्कल्पत्व, इदं च ब्रह्मातिरिक्तेऽसम्भवीति ब्रह्मवाक्यमेवेदमित्यवसेयमित्यर्थः ॥ २ ॥

सूत्रान्तरमवतारयितुमाहुः नन्वेतावतेत्यादि, एतावतापि उक्तसूत्रद्वयेनोक्तवाक्यस्य ब्रह्मार्थत्वव्यवस्थापनेपि, नैकान्ततः ब्रह्मपक्षविनिगमकप्रबलयुक्त्यभावतः, उपपत्तेः साधकयुक्तेः, उभयत्रापि जीवपक्षे ब्रह्मपक्षे चेत्यर्थः, तुल्यत्वात् पूर्वपक्षोक्तरीत्या जीवपक्षोपपत्तेः सिद्धान्तोक्तरीत्या ब्रह्मपक्षोपपत्तेश्च समबलत्वादित्यर्थं,

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ सूत्रार्थेन समाधानमाहुः न चेत्यादि, भौतिकशरीरवान् जीवो वाक्यार्थो न भवति तत्र हेतुरनुपपत्तेरिति, अनुपपत्तिमेवोपपादयन्ति प्राणशरीरेत्यादिना, प्राणशरीररूपः आनन्दात्मक-

---

१ सिद्धस्येत्यपि पाठः ।

त्वनुपास्यत्वमेव, इदानीमेवोपासकस्यापि तथात्वात्, न च प्राणादेर्लौकिकत्वं, उपदेशानर्थक्य-प्रसङ्गात्, अत आनन्दरूपप्राणशरीररूपत्वाभावान्न वाक्यार्थो जीवः, पूर्वपक्षस्यात्रैव निवृत्त-त्वात् तुशब्दः, विज्ञानमये तु प्राप्ताप्राप्तविवेकेन धर्मस्यैवोपासना ॥ ३ ॥

ननु प्राप्तव्यताद‍ृशरूपफलाभिप्रायं भविष्यतीति परिहरति,

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'एतमितः प्रेत्याभिसम्भवितास्मी'ति 'यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य' इति अग्रे फलवाक्यं, एतं प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन प्राप्यत्वेन च व्यपदि-शति, कर्तृत्वेन च शारीरं व्यपदिशति, न च भजनीयरूपाकथने ताद‍ृशं फलं सिध्यतीति चकारार्थः अधिकरणसम्पूर्णत्वद्योतकश्च ॥ ४ ॥

इति प्रथमाध्याये द्वितीये पादे प्रथमं सर्वत्रप्रसिद्धोपदेशाधिकरणम् ॥

---

प्राणशरीररूप', प्राणस्यानन्दरूपता तु 'प्राणस्तथानुगमा'दित्यस्य विषयवाक्ये प्राणमुपादाय 'एष प्रज्ञात्मानन्दोजरो-मृत'इतिव्याख्याता बोध्या, ताद‍ृशशरीरत्वाभावे हेतुमाहु. तिरोहितेत्यादि, आकारसमर्पकप्राणपदवाच्यानन्दस्य जीवे व्युच्चरणकाले तिरोहितत्वादित्यर्थ, ननूपास्यजीवस्यापि प्रतीकोपासनाकाले 'ब्रह्माहमस्मि' 'सर्वं मयि वर्तते' 'आन-न्दशरीरश्चाह'मित्याद्याध्यासिकज्ञानसत्त्वेनाध्यासिकानन्दाकारस्य सत्त्वात्तदुपासनमेवास्तामित्यत आहु. अध्यासेने-त्यादि, तथात्वे आरोपितानन्दाकारत्वे, अनुपास्यत्वमेव अध्याससम्पादकाविद्यावत्त्वेन जीवस्यानुपास्यत्वमेवेत्यर्थ., इदानीमेव मुक्तिपूर्वकाल एवेत्यर्थः, उपासकस्यापि भवदभिमतजीवोपासकस्यापीत्यर्थ., तथात्वात् अविद्याकृत-पूर्वोक्ताध्याससम्भवादित्यर्थ., ननु प्राणानां सर्वत्र लोके प्रसिद्धानामेव 'मनोमयः प्राणशरीर'इत्यस्यापि सम्भवात् किमिति आनन्दमयत्वं स्वीक्रियतेत आहुः न च प्राणादेरित्यादि, तत्र हेतुमाहु. उपदेशेत्यादि, प्राणानां लौकि-कत्वे ताद‍ृशप्राणशरीरस्य 'मनोमयः प्राणशरीर'इत्यनेन ब्रह्मज्ञानार्थमुपदेशो निष्फल. स्यादित्यर्थः, उपसंहरन्ति अत इत्यादिना, ननु प्राणमयादौ धर्मिरूपेण ब्रह्मत्वेन यथोपासनमुक्तं तथा मनोमयपदवाच्यविज्ञानमयेपि ब्रह्मोपासनमेव कुतो नोक्तं आनन्दमयप्राणशरीरत्वेन धर्मोपासनं च कुत उक्तमत आहुः विज्ञानमये इत्यादि, प्राप्ताप्राप्तेत्यादि, विज्ञानमयोपासनाङ्गानि श्रद्धादीनि तेषामादावेव प्राप्तत्वात् यदप्राप्तं ब्रह्मज्ञान तदर्थमुपायस्यैव कर्तुमुचितत्वाद् ब्रह्म-धर्मज्ञानस्यैवात्रोपासनमुक्तमित्यर्थ, ततश्चाग्रे आनन्दमयलाभः फलमितिपर्यवसितम् ॥ ३ ॥

अग्रिमसूत्रावतरणमाहुः ननु प्राप्तव्येत्यादिना, तथादौ स्वात्मनो जीवस्योपासनायां ब्रह्मत्वेन कर्तव्यायां भा-वि फल आनन्दरूपप्राणशरीररूपता भाविनी तदभिप्रायकमेवेद 'मनोमय. प्राणशरीर'इतिवाक्यं भविष्यतीतिदूषणं परिहरति सूत्रकारः,

**कर्मकर्तृव्यपदेशाच्च** ॥ ४ ॥ प्राप्तव्यफलाभिप्राय उक्तवाक्यं न भवतीत्यर्थकां श्रुतिमाहुः एतमित्यादि, 'एत-मितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य'इति, एतं आनन्दमयप्राणशरीर परमात्मानं, इतः प्रेत्य भौतिकशरीर त्यक्त्वा, अभिसम्भवितास्मि प्राप्स्यामि, यस्य अधिकारिण., स्यादद्धा परमात्मा यस्य प्रत्यक्षो भवेत् तस्य, इह एतल्लोके, न विचिकित्सास्ति न किञ्चित् कर्तव्यमवशिष्यत इत्यर्थः, ह इति प्रसिद्धौ, आह स्मेत्यर्थः, अग्रे उक्तवाक्यादग्रे, क्रतुपदवाच्योपासनाविषयानन्दरूपप्राणशरीरबोधकवाक्यादग्रे इदं फलबोधकं वाक्यमित्यर्थः, शारीरं भौतिकशरीरादिमन्तं जीवमित्यर्थः, न च भजनीयेत्यादि, तथा च फलवाक्ये प्राप्तकथनेनैनोपपत्तौ क्रतुविषयप्राणशरीरमनोमयस्य भजनीयस्य पूर्ववाक्ये उक्तिर्व्यर्थेत्याशङ्का निराकृता, भजनकाले तद्रूपाज्ञानेग्रे तस्य फलत्वासम्भवादित्यर्थ ॥ ४ ॥

प्रथमाध्याये द्वितीयपादे प्रथमं सर्वत्रप्रसिद्धोपदेशाधिकरणम् ॥

इदमाम्नायते, 'यथा व्रीहिर्यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मय' इति,

तत्र सन्देहः, हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति, उपक्रमबलीयस्त्वे जीवः उपसंहार-बलीयस्त्वे ब्रह्मेति,

यत्रैकस्यान्यपरत्वेनैकार्थता सम्भवति तद्बलीयस्त्वमितिसिद्धं पूर्वतन्त्रे, तत्र चतुर्विधभूत-निरूपणार्थं जीवस्यैवाराग्रमात्रस्यान्तर्हृदये प्रतिपादकमिदं वचनं फलतो हिरण्मयत्वमिति न त्वेतादृशाभाससमानत्वं ब्रह्मणो युक्तमतो जीवप्रतिपादकमेवेदं वाक्यमितिप्राप्ते,

उच्यते,

## शब्दविशेषात् । ५ । (१-२-१)

हिरण्मयः पुरुषो न जीवस्य फलमपि, तत्प्राप्तेरेव फलत्वात्, नाप्ययं नियमस्तस्यामेव मूर्तौ लय इति, अतः शब्देनैव विशेषस्योक्तत्वात् न हिरण्मयः पुरुषो जीवः ॥ ५ ॥

ननु हृदये विद्यमानत्वाद् अभिमान्येव जीवो युक्त इति चेत्, तत्राह,

## स्मृतेश्च ॥ ६ ॥

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति,

ननु सर्ववेदानां यन्निःश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृतिरिति,

---

इदमाम्नायते वाजिशाखायामाम्नायते,

ननु 'य एषोन्तरादित्ये हिरण्मयः पुरुष'इत्यत्र हिरण्मयपुरुषस्य ब्रह्मत्वमन्तस्तद्धर्माधिकरणे विषयवाक्ये 'य एषोऽन्तरादित्ये हिरण्मयो दृश्यत इत्युपक्रमे हिरण्मयपुरुषोपादानं कृत, उपक्रमश्चासञ्जातविरोधित्वेनोपसंहारापेक्षया प्रबल इति तस्य ब्रह्मत्वनिर्णयः कृत , अत्र तु विषयवाक्ये उपक्रमे व्रीहियवादिक्षुद्राणां दृष्टान्तीकरणादुपक्रमे जीव एव प्रतीयते, उपसंहारे तु 'हिरण्मय' पुरुष'इति, तथाचोपक्रमबलीयस्त्वे जीवो विषयवाक्यार्थ., उपसंहारस्यापि क्वचिद्बलीयस्त्वमस्तीतिपक्षे तु ब्रह्मैव सिद्ध्येदितिसंशय. सूक्त एव,

एतदेवोपपादयन्ति यत्रेत्यादि, यत्र विषयवाक्ये, एकस्य उपक्रमोपसंहारार्थयोर्मध्ये एकस्यार्थस्य, अन्यपरत्वे इतरार्थेनान्वये क्रियमाणे, एकार्थता सम्भवति वाक्यभेदो न भवति असन्दिग्धा चैकवाक्यता भवति, तद्बलीयस्त्वं उपक्रमोपसंहारयोर्मध्ये तस्य बलीयस्त्वमित्यर्थ., सिद्धं पूर्वतन्त्रे तदेकशास्त्र्यादत्राप्युपादेयमतोत्रेति पूर्वतन्त्रे सिद्धमित्यर्थः, तत्र जीवब्रह्मपक्षयोर्मध्ये, चतुर्विधेत्यादि, जरायुजस्वेदजाण्डजोद्भिज्जभेदेन चतुर्विधानि भूतानि जीवशरीराणीतिनिरूपणार्थमेतस्यार्थ., 'न हिंस्यात् सर्वा भूतानी'त्यत्रत्यभूतशब्दनिर्णयार्थमित्यर्थ., इदं वचनं 'यथा व्रीही'त्यादिवचनं, फलत इत्यादि जीवस्य मुक्तिदशायामित्यर्थ., एतादृशेत्यादि व्रीहियवादिदृष्टान्तसमानत्वमित्यर्थ', इति प्राप्ते तत्र चतुर्विधेत्यादिना पूर्वपक्षे प्राप्ते इत्यर्थ',

शब्दविशेषात् ॥ ५ ॥ हिरण्मयेतिब्रह्मवाचकशब्दस्य विषयवाक्ये श्रवणात् , ननूक्तं जीव एवात्रोपास्यत्वेनोक्तस्तस्यैव फलदशाया हिरण्मयरूपतानुवादेनोपासनाबोधनादित्यत आहुः न जीवस्येत्यादि, तत्प्राप्तेरित्यादि तथा च हिरण्मयप्राप्तिरेव फलं न तु जीवस्य हिरण्मयरूपतापीत्यर्थः, ननु सायुज्यमुक्तिपक्षे तद्रूपताप्यविवादैवेत्यत आहुः नाप्ययमित्यादि, तथा च ब्रह्मण आनन्दमयादिनानारूपसत्त्वात्तस्य कस्यां मूर्तौ सायुज्यं भविष्यतीति भगवदिच्छया निर्णयासम्भवादित्यर्थः, उपसंहरन्ति अतः नियमाभावत., शब्देन हिरण्मयशब्देन, विशेषस्य ब्रह्मत्वरूपजीवव्यावर्तकधर्मस्य ॥ ५ ॥

नन्वणुत्वबोधकैर्व्रीह्यादिदृष्टान्तैरुपक्रमबलीयस्त्वेन च हृदये विद्यमानो देहाभिमानी जीव एवास्तामित्याहु. नन्वित्यादि,

स्मृतेश्च ॥ ६ ॥ 'अन्तरात्मन् पुरुषो हिरण्मय'इत्यनेनोक्तस्य ब्रह्मत्वसाधिकां स्मृतिमाहुः ईश्वरेत्यादि, उक्तवाक्यस्य स्मृतित्वे साधकमाहुः ननु सर्वेत्यादिना,

उच्यते, 'तं त्वौपनिषदं पुरुषं पृच्छामी'तिश्रुतेः केवलोपनिषद्वेद्यं ब्रह्म न प्रमाणान्तरवेद्यं, ततश्चार्जुनस्य शिष्यरूपेण प्रपन्नस्य पुष्टिभक्तत्वाभावाद्, भगवद्वाक्ये निर्विचिकित्सविश्वासाभावाद्, रथित्वेनैव श्लाघ्यत्वात्, न तादृशाय तादृशदेशकालयोरुपनिषदामवक्तव्यत्वाद् गुरुरूपतादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा, तदर्थमपि स्मृत्वा, भगवान् पुरुषोत्तमो वाक्यान्युक्तवान् स्मृतिरूपाणि, ततो ब्रह्मविचारे तान्यप्युदाहृत्य चिन्त्यन्ते, पुनश्च भगवान् तदधिकारेण ब्रह्मविद्यां निरूप्य स्वकृपालुतया 'सर्वगुह्यतम'मित्यादिना भक्तिप्रपत्ती एवोक्तवान्, अतोऽङ्गत्वेन पूर्वं सर्वनिर्णयाः उक्ताः इत्यध्यवसेयं, तथैवार्जुनविज्ञानात् 'करिष्ये वचनं तवे'ति, चकारात्तन्मूलभूतनिःश्वासोऽप्युच्यते, व्यासस्यापि भगवज्ज्ञानांशत्वाददोषः ॥ ६ ॥

उपक्रमबलीयस्त्वमाशङ्क्य परिहरति,

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

ननु व्यापकस्येश्वरस्य हृदयदेशस्थितिरयुक्ता व्रीह्यादिरूपत्वञ्च, अतः अर्भकमल्पकमोकः हृदयस्थानं यस्य तत्त्वात् व्रीह्यादितुल्यत्वाच्च न परमात्मा वाक्यार्थ इति चेत्,

न, निचाय्यत्वात्, पूर्वं प्रथमदूषणं परिहरति, हृदये ज्ञातुं शक्यत इति तदायतनत्वेन

---

प्रमाणान्तरं उपनिषदन्यप्रमाणं, पुष्टिभक्तत्वाभावो निर्विचिकित्सविश्वासाभावे हेतुः, अविश्वासबोधकं च वाक्यं 'अपरं भवतो जन्म परं जन्म विवस्वत'इतिवाक्यं, रथित्वेनैवेत्यादि भगवतो रथित्वाभिमानितयार्जुनस्य श्लाघ्यत्वादित्यर्थः, न तादृशाय उक्ताभिमानिने उपनिषदर्थो नोपदेष्टव्य इत्यर्थः, तादृशदेशकालयोरिति युद्धोपयोगिबुद्धिभ्रमसम्पादकदारुणदेशकालयोरित्यर्थः, तदर्थं निःश्वसितरूपवेदार्थं स्मृत्वेत्यर्थः, वाक्यानि 'ईश्वरः सर्वभूताना'मित्यादीनि, चिन्त्यन्ते सूत्रकारेण 'स्मृतेश्चे'त्यादिसूत्रैरुदाहृत्य चिन्त्यन्ते इत्यर्थः, तदधिकारेण स्मृतिद्वारार्जुनस्य ब्रह्मविद्योपदेशाधिकारेणेत्यर्थः, स्वकृपालुतयेत्यादि अर्जुनस्य ब्रह्मविद्योपदेशार्हशिष्यसमानगुरूपसत्तिप्रपत्त्यभावेपि स्वस्य भक्तेष्वत्यन्तं दयालुतया स्वस्मिन् भक्तिं शरणागमनं चोपदिष्टवानित्यर्थः, अतः उपदिष्टयोर्द्वयोः सर्वोत्कृष्टफलसाधकत्वात्, पूर्वं एतदुपदेशद्वयं 'मन्मना भव''सर्वधर्मा'नित्यादिना कृतं ततः पूर्वं, यावत्फलतारतम्यज्ञानायोक्तं ते सर्वे निर्णया एतदङ्गत्वेनोक्ता इत्यर्थ., तथैव भक्तिप्रपत्त्योरनुभावरूपतयैव । चकारात् सौत्रचकारात्, तन्मूलभूतेति स्मृतिमूलभूतनिःश्वासोप्युच्यते ईश्वरस्य हृदयवृत्तिनिर्णायको वेदोप्यस्तीतिभावः, ननु भगवता स्वकृतवेदस्वरूपं कर्तृस्वरूपं च स्मृत्वा तथोक्तमिति ताः स्मृतयो वेदान्तेषूदाह्रियन्तां नाम तथापि व्यासैः स्वकृतपुराणवाक्यान्युदाह्रियन्ते तत्र किं मूलमित्यत आहुः व्यासस्येत्यादि, तथा च स्वस्य भगवदभेदेन स्वकृतस्वरूपं स्वस्वरूपं च स्मृत्वा वदतीति नानुपपत्तिरित्यर्थः ॥ ६ ॥

अग्रिमसूत्रमवतारयितुमाहुः उपक्रमेत्यादि, बलीयस्त्वं उपक्रमस्यासञ्जातविरोधित्वेन बलीयस्त्वमित्यर्थः, परिहरति अत्रोपक्रमबलीयस्त्वं परिहरतीत्यर्थः,

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सूत्रेण पूर्वपक्षं समाधातुमाहुः नन्वित्यादि, व्यापकस्य ब्रह्मशब्दार्थस्य 'सर्वं खल्विदं ब्रह्मे'त्यनेनोपक्रान्तस्य, अयुक्ता व्यापकस्य स्वल्पस्थाने मातुमशक्यत्वादित्यर्थं, व्रीह्यादिरूपत्वं व्रीह्यादिरूपकप्रदर्शनं चायुक्त व्रीह्यादीनां परिच्छिन्नत्वादित्यर्थः, तत्त्वात् हृदयरूपस्वल्पदेशवृत्तित्वात्, वाक्यार्थः 'अन्तरात्मन् पुरुषो हिरण्मय'इतिवाक्यस्यार्थः, तथा 'चेश्वरः सर्वभूताना'मितिस्मृतिरीश्वरबोधिकायोग्यतानिर्णयादुक्तवाक्यार्थेनैव प्रवर्तते इत्यर्थः, इति चेत्,

न उक्तवाक्यार्थो ब्रह्म नेतिचेन्नेत्यर्थः, तत्र हेतुः निचाय्यत्वादिति हृदये ब्रह्मणः परिचेयत्वादित्यर्थः, प्रथमदूषणं ब्रह्म हृदये मातुं न शक्नोतीतिदूषणं, निचाय्यत्वादस्यार्थमाहुः हृदये ज्ञातुमित्यादि, इतीति हेतौ, तदायतनेत्यादि तथा च ब्रह्म यतो हृदये ज्ञातुं शक्यतेतो हृदयायतनं प्रतिपाद्यते न तु हृदयमात्रवृत्तित्वमपीति-

---

१ एकस्मिन् पुस्तके अल्पकमितिनास्ति ।

२ 'हृदय' इत्यारभ्य 'तदन्त.करण एवेति' इत्यन्तमेकस्मिन् पुस्तके नास्त्येव ।

प्रतिपाद्यते, निदिध्यासनानन्तरं हि साक्षात्कारस्तदन्तःकरण एवेति निचाय्यत्वं, भक्तौ तु बहिरपीतिविशेषः, द्वितीयं परिहरति, एवं व्योमवत्, एवं व्रीह्यादितुल्यतया यत् प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय, यथा 'चत्वार उपरवाः प्रादेशमात्रा' इति तथा तद्धृदयाकाशे प्रकटस्य सच्चिदानन्दस्वरूपसर्वतःपाणिपादान्तस्य तत्स्वरूपमिति, पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्योपपत्तिसमुच्चयार्थं, तेन 'अत एव प्राण'इतिवदधिकरणान्तरमपि सूचितमिति ॥ ७ ॥

बाधकमाशङ्क्य परिहरति,

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

यदि सर्वेषां हृदये भगवान् जीववत्तिष्ठेत् तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कारस्तत्साधनादिपरिग्रहश्च प्राप्नोतीति चेत्,

न, वैशेष्यात्, विशेषस्य भावो वैशेष्यं तस्मात्, सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषस्तद्भावो ब्रह्मणि वर्तते न जीवे इति जीवस्यैव भोगो न ब्रह्मण इति, वैशेष्यपदादयमर्थः सूचितः, अपेक्षित एव भोगो नानपेक्षित इति, न तु तस्य भोगाभाव एव, अग्रिमाधिकरणविरो-

---

भाव., हृदये ज्ञातुं शक्यत्वमेवोपपादयन्ति निदिध्यासेत्यादिना, तदन्तःकरणे जीवान्तःकरणे, निचाय्यत्वं ब्रह्मणः साक्षात्कारविषयत्वमित्यर्थः, इत्थं च सर्वत्र ब्रह्मण. साक्षात्कारविषयत्वाद् व्यापकत्वेन न स्मृत्या बोधजननेऽयोग्यतानिर्णय इत्यर्थः, द्वितीयं ब्रह्मणि परममहत्परिमाण न भविष्यतीतिदूषण, एवं व्योमवदिति एवं ब्रह्मणो वृत्तित्वदूषणपरिहारवत्, व्योमवत् उपरवे प्रतीयमानव्योमदृष्टान्तेनेत्यर्थ, चतुर्विधेत्यादि, जरायुजाण्डजस्वेदजोद्भिजभेदेन स्थूलसूक्ष्मतरभूतान्तरत्वख्यापनायेत्यर्थः, व्योमवदितिदृष्टान्तमुपपादयन्ति यथेत्यादिना, चत्वार उपरवाः सोमयागे हविर्धानशालाग्नेय्यां प्रादेशमात्रबिलाश्चत्वार उपरवाः क्रियन्ते, तत्र च प्रादेशमात्रपरिमाणवत्तया यथाकाशः प्रतीयते तथा तत्तुल्यतया तद्धृदयाकाशे चतुर्विधभूतहृदयाकाशे, तत्स्वरूपं चतुर्विधभूतान्तर्हृदये प्रकटस्य ब्रह्मणः स्वरूपमित्यर्थ, एतदेवोपपादितं तैत्तिरीये 'अतः पर नान्यदणीयसं हि परात्पर यन्महतो महान्तमिति नानापरिमाणमेकमेव ब्रह्मोक्तमवसेयं, चकारद्वयं सौत्रचकारद्वयं, एतादृशवाक्यान्तर इत्यादि पूर्वोक्तसूत्रद्वये यौ पूर्वपक्षसिद्धान्तावुक्तौ तदपेक्षयार्भकोकःसूत्रात्मक यद्वाक्यान्तर तत्र पूर्वपक्षसिद्धान्तयोराधिक्येनोपपत्तिः, तथा च 'शब्दविशेषात्' 'स्मृतेश्चे'तिसूत्रद्वयेन हिरण्मयपुरुषस्य ब्रह्मत्वं निर्णीतमेव पुनरनेन सूत्रेण स्वातन्त्र्येण पूर्वं पक्षं कृत्वा हिरण्मयपुरुषस्य ब्रह्मत्वं निर्णीयते, तादृशार्थद्योतनाय चकारद्वयमित्यर्थः, तेन भिन्नपूर्वपक्षसिद्धान्ताभ्यां निर्णयकरणादेव, अधिकरणान्तरं पूर्वसूत्रद्वयरचिताधिकरणापेक्षया इदमधिकरणान्तरमित्यर्थः ॥ ७ ॥

बाधकं हिरण्मयपुरुषस्य ब्रह्मत्वे बाधकं.

सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ॥ ८ ॥ आशङ्कामाहुः यदीत्यादि, सर्वेषां पूर्वोक्तचतुर्विधभूतानां, तत्साधनादीति सुखप्राप्तेः दुःखनिवृत्तेश्च साधनपरिग्रह ईश्वरस्यापि कर्तव्यो भवेदित्यर्थः,

समाधानमाहुः नेत्यादि, स्वकर्तृत्वं 'स एतावानासे'ति'आत्मान ९ स्वयमकुरुते'तिश्रुतिभिः स्वात्मकप्रपञ्चकर्तृत्वमित्यर्थः, ननु जीवतुल्यतया ब्रह्मणो भोगवारणार्थं निर्विशेषत्वशुद्धत्वबुद्धत्वमुक्तस्वभावत्वाद्येव सूत्रे हेतुः कुतो नोक्तः 'वैशेष्या'दिति किमित्युक्त इत्यत आहुः अपेक्षित एवेत्यादि, तथा च ब्रह्मणि यथा सर्वरूपत्वसर्वकर्तृत्वादिरूपो विशेषो जीवापेक्षया वर्तते तथा भोगेपि वर्ततेतो भोगोपेक्षित एव नानपेक्षित इति वैशेष्यादित्येव सौत्रो हेतुः समीचीन इत्यर्थ., न 'त्वन्योऽनश्नन्नभिचाकशीति'श्रुतिबलाद् ब्रह्मणो भोगाभाव एव वाच्य इत्यत आहुः न तु

धात्, यथेन्द्रियाधिष्ठातृदेवतानां, 'तत्त्वमस्या'दिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति ॥ ८ ॥

### इति प्रथमाध्याये द्वितीयपादे द्वितीयं शब्दविशेषाधिकरणम् ॥

कठवल्लीषु पठ्यते, 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति, अत्र वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन् यच्छब्दार्थस्य भोक्तृत्वमाह,

तत्र संशयः, किं जीवो ब्रह्म वेति, सच्चिदानन्दरूपत्वं सर्वोपास्यत्वं पूर्वाधिकरणद्वयेन सिद्धं, सर्वभोक्तृत्वं साधयति, ब्रह्मक्षत्रयोरशक्यवधयोः सर्वमारकस्य च मृत्योर्भक्षयिता जीवो न भवत्येवेति कथं सन्देह इति चेत्, उच्यते, ओदनोपसेचनरूपकत्वात् जीवधर्मत्वं, स्थानाज्ञानाच्च, न हि सर्वगतस्य स्वहृदयेऽपि प्रतिभासमानस्य 'क इत्था वेद यत्र स' इत्यज्ञानमुपपद्यते, अलौकिकसामर्थ्याच्च सन्देहः,

तत्र निषिद्धत्वाल्लौकिकभोजनवन्निरूप्यमाणत्वात् स्थानाज्ञानाच्च कश्चिदुपासनोपचितालौकिकसामर्थ्यो महादेवादिरत्ता भविष्यति, नतु तद्विरुद्धधर्मा भगवान् भवितुमर्हति अक्लिष्टकर्मत्वादिधर्मवान्, तस्माज्जीव एवोपासनोपचितमहाप्रभावो वाक्यार्थ इत्येवम्प्राप्तेऽभिधीयते,

## अत्ता चराचरग्रहणात् । ९ । (१-२-३)

अत्ता भगवानेव, कुतः? चराचरग्रहणात्, चरं सर्वप्राणिवधार्थं परिभ्रमन्मृत्युः, अचरं ब्रह्मक्षत्ररूपं कस्याप्यचाल्यं, तयोरत्ता न जीवो भवितुमर्हति, यत्राप्यतिशयो दृष्टः स 'स्वार्थान-

---

भोगाभाव इति, कैमुतिकन्यायेन भगवतो भोग साधयितुमाहु. यथेन्द्रियेत्यादि, तथा च 'चक्षुषश्चक्षु'रित्यादिश्रुत्युक्तेन्द्रियाधिष्ठात्राधिदैविकदेवानां यथेन्द्रियजभोगभोक्तृत्वं तथा 'तत्त्वमस्या'दिवाक्येन सद्गुरुकृपया जीवस्यापि तथात्वे भगवत्सम्बन्धत्वे, तस्यापि जीवस्यापि, तद्वदेव भोगभोक्तृभगवत इव भोगभोक्तृत्वं भविष्यतीत्यर्थ. ॥८॥

प्रथमाध्याये द्वितीयपादे द्वितीयं शब्दविशेषाधिकरणम् ॥

पूर्वोक्तं भगवद्भोगं दृढीकर्तुमधिकरणमाह सूत्रकार., कठवल्लीस्थ विषयवाक्यमाहुः यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति,

सिद्धं ब्रह्मण. सिद्धं, सर्वभोक्तृत्वं ब्रह्मणः सर्वभोक्तृत्वं, ओदनेत्यादि तथा चौदनस्य जीवभोग्यत्वेन घृताद्युपसेचनस्य च तद्भोजनोपकारित्वेन प्रसिद्धत्वात्, क इत्था वेदेत्यनेन स्थानाज्ञानाच्चेत्यर्थ, इत्यनेन जीवकोट्युपस्थितिरुपस्थितिरुक्ता ब्रह्मकोट्युपस्थित्यर्थमाहु अलौकिकेत्यादि, ब्रह्मक्षत्रमृत्युभोक्तृत्वस्यात्यलौकिकस्य ब्रह्मातिरिक्तासाध्यत्वादित्यर्थ,

तत्र उक्तभोक्तृपदार्थे, निषिद्धत्वात् ब्राह्मणादिप्राणहिंसनस्य ब्रह्मण्यदेवे निषिद्धत्वादित्यर्थ., लौकिकेत्यादि घृताद्युपसेचनयुक्तौदनभोजनस्य लौकिकस्य समानतया ब्रह्मक्षत्रमृत्युभोजनस्य निरूप्यमाणत्वादित्यर्थः, स्थानाज्ञानाच्च 'क इत्था वेदे'त्यनेन स्थानाज्ञानाच्चेत्यर्थ., कश्चिदित्यादि उग्रोपासनया भौमवत्प्राप्तालौकिकसामर्थ्यो महातामसो जीवो महादेवो वा तामसश्रेष्ठोऽत्ता भविष्यतीत्यर्थ., महादेवस्यैव तादृशनिषिद्धभोक्तृत्वं स्वगस्त्यसंहितायां महादेवेन प्रथमाध्याये पार्वतीं प्रत्युक्त 'भक्त्यार्पयन्ति ये मह्यं तत्रापि निशितादिकं तृप्तिमुत्पादयत्येव विधिनाविधिनार्पित उत्पादयति चानन्दं गणेभ्यो वा सुरेश्वरी'त्यादिवाक्यात्, प्राप्ते परब्रह्मातिरिक्तस्योक्तभोक्तृत्वरूपे पूर्वपक्षे प्राप्ते, अभिधीयते सूत्रेण समाधानमुच्यते,

अत्ता चराचरग्रहणात् ॥ ९ ॥ अत्ता चराचरभोक्ता, मृत्योश्चरत्वमाहुः चरमित्यादिना, ब्रह्मक्षत्रयोरचरत्वमाहुः अचरमित्यादिना, अचाल्यं प्रवाहनित्यतयाचाल्यं, 'यस्य ब्रह्म च क्षत्रं चे'तिचकारद्वयेन वर्णान्तरस्यापि ग्रहणं, तस्यापि भक्तियोग्यतया मुक्त्यधिकारात्, नन्वमृत्युसम्पादकत्वे संहारकत्वेन ज्ञानदातृत्वेन प्रसिद्धः परमशिव एवात्तास्तु अत आहुः यत्रापीत्यादि, अतिशयो दृष्टः तथाचातिशयः स्वामिसमानकार्यकारित्वं,

तिलङ्गना'दितिन्यायात्, अस्मदादिप्रतिपत्त्यर्थं तु लौकिकवद्वचनं भोक्तृत्वाय, प्रलयकर्तृत्वान्नायुक्तत्वं, सर्वत्र विद्यमानस्याप्यज्ञायमानत्वात् फलतः स्थानाज्ञानमुक्तं, ब्रह्मक्षत्रयोरपि मोक्षापेक्षितत्वात् मृत्युसम्बन्धमात्रेण भगवति भोक्तरि प्रवेशार्थं योग्यरूपमेवोदनत्वं प्राणानां तत्रैव समवलयान्मृत्युरपि तत्रैव लीनोऽग्रे जन्ममरणाद्यभावाय भगवत्येव प्रविशति, तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणादत्ता भगवानेवेति सिद्धम् ॥ ९ ॥

ननु किमित्येवं प्रतिपाद्यते, पूर्वपक्षन्यायेन यमोऽन्यो वा मृत्युं साधनीकृत्य स्ववशे सर्वं करोतीतिजीववाक्यमेव किं न स्यादित्यत आह,

## प्रकरणाच्च ॥ १० ॥

प्रकरणं हीदं ब्रह्मणः, 'न जायत'इत्यारभ्य 'आसीनो दूरं व्रजती'त्यादिना माहात्म्यं वदन्नन्ते च ब्रह्मक्षत्रं चेत्याह, अतः प्रकरणानुरोधात् पूर्वोक्तप्रकारेण ब्रह्मवाक्यत्वमिति, अन्यथा प्रकृतहानाप्रकृतकल्पने स्यातामिति चकारार्थः,

### इति प्रथमाध्याये द्वितीयपादे तृतीयमत्त्राचराचराधिकरणम् ॥

तस्यैवाग्रे पठ्यते, 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता' इति,

---

यथामात्ये युवराजे वा तत्रापि स्थानितिलङ्गनादृष्टं, राजमात्रकार्यं यच्छत्रचामराद्यसाधारणं स्वामिमात्रासाधारणधर्मरूपं तस्यानतिलङ्घनेनैवान्यस्य कार्यं दृष्टमितिन्यायात्, 'यतो वा इमानी'तिश्रुत्या चराचरस्य स्वस्मिन्निवेशनं परब्रह्मण्येवोक्तमिति नान्यस्य स धर्म इति भावः, ननूपसेचनविशिष्टौदनभोजनदृष्टान्तो लौकिकः किमित्युक्त अत आहुः अस्मदादीत्यादि, भोक्तृत्वाय भगवतो भोजनबोधनाय, ननु ब्रह्मणो व्यापकत्वेन सर्वत्र स्थितत्वात् 'क इत्थे'त्यादिनाज्ञानोक्तिरसङ्गतेत्यत आहुः सर्वत्रेत्यादि, फलतः अर्थवशतः, ननु ब्रह्मण्यदेवस्यैव तादृशनिषिद्धभोक्तृत्वं कथं सम्भवतीत्यत्र समाधानमाहुः ब्रह्मक्षत्रयोरित्यादि, मोक्षापेक्षितत्वात् मोक्षापेक्षा विद्यते येषु ते मोक्षापेक्षिणस्तेषां भावस्तत्त्वादित्यर्थः, योग्यरूपमेवेत्येवकारेणायोग्यतावच्छेदः उक्तः, जीवानां मुक्तानां सम्बन्धि मृत्योर्भक्षणमाहुः प्राणानामित्यादिना, तत्रैव भगवत्येव, अग्रे भगवति प्रवेशोत्तरकाले, उपसंहरन्ति तस्मादित्यादि ॥ ९ ॥

सूत्रान्तरमवतारयितुमाहुः ननु किमित्यादि, एवं ब्रह्मणो भोक्तृत्वं,

प्रकरणाच्च ॥१०॥ प्रकरणमुपपादयन्ति न जायत इत्यादिना आहेत्यन्तेन, अतः एतद्वाक्यस्य ब्रह्मप्रकरणित्वतः, अन्यथेति अन्यथा 'यस्य ब्रह्म च क्षत्रं चे'त्यत्र यच्छब्दस्य जीवार्थत्वे, प्रकृतहानेत्यादि प्रकरणपठितानां ब्रह्मधर्माणां हानमुद्वापः प्रकरणापठितानां जीवधर्माणां कल्पनमावापश्च स्यादित्यर्थः ॥ १० ॥

### प्रथमाध्याये द्वितीयपादे तृतीयमत्त्राचराचराधिकरणम् ॥

'यस्य ब्रह्म चे'त्यनेनोक्तो भोगः कुत्र? व्यापिवैकुण्ठे अन्यत्र वा? एवं जीवस्यापि, उभयोरपेक्षितभोगस्थानानि निश्चेतुमधिकरणमारभ्यते तस्यैवाग्र इत्यादिना, तस्यैव कठवल्ल्यां 'यस्य ब्रह्म चे'त्यस्याग्रे इत्यर्थः, ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता इति, ऋतं सत्यं, सुकृतस्य सम्यक्त्वं निश्चित्य कृतस्य कर्मणः फलं, पिबन्तौ भुञ्जानौ, यद्यपि जीवः कर्मफलं भुङ्क्ते नेश्वरस्तथापि 'छत्रिणो यान्ती'ति छत्रिपदस्य छत्र्यच्छत्रिसमुदाये लक्षणावदत्रापि भोक्त्रभोक्तृसमुदाये लक्षणा बोध्या, तथैव द्वित्वसामानाधिकरण्येन 'पिबन्ता'वितिपानान्वयो न तु द्वित्वावच्छेदेन, इत्थं च योग्यताबलाद् द्वित्वसामानाधिकरण्येन जीव एव कर्मफलभोगान्वयसम्भवात् लक्षणा न कार्येत्यपि ध्येयं, लोके अस्मिन् शरीरे, गुहां हृदयाकाशं, परमे परार्धे बाह्यपुरुषावयवापेक्षयोत्कृष्टे, तत्रोत्कर्षः परार्धं ब्रह्मणः स्थानं, तद्वाचकशब्देन हृदयोल्लेख इति तद्विभक्तज्ञान्युपासकानां ब्रह्मोपलब्धिस्थानं भवति, छायातपौ संसारित्वासंसारित्वाभ्यां विलक्षणौ भवत इति ब्रह्मविदो वदन्ति, पुनर्ये पञ्चाग्नयः श्रौतस्मार्तानुष्ठानकर्तारः, त्रिणाचिकेताः त्रिर्वा त्रयं नाचिकेतोऽग्निर्यैस्तेऽग्निचयनत्रयकर्तारो गृहस्था अपि वदन्तीत्यर्थः,

किमिदं ब्रह्मवाक्यमाहोस्विदन्यवाक्यमिति, अस्य वाक्यस्योत्तरशेषत्वे जीवप्रकरणपठितत्वात् न ब्रह्मवाक्यत्वं, पूर्वशेषत्वे तु ब्रह्मवाक्यमिति हि प्रकरणनिर्णयः, मध्ये पाठादेवं सन्देहः, अर्थविचारे तु द्विवचननिर्देशात् पूर्वशेषत्वे बद्धमुक्तजीवौ भविष्यतः, उत्तरशेषत्वे त्विन्द्रियमनसी, उभयथापि न ब्रह्मवाक्यं, द्वयोर्मुख्यत्वेन प्रतिपादनात्, ब्रह्मवाक्यत्वेऽपि न प्रयोजनसिद्धिः,

अथ मन्यते उपनिषत्पाठादन्यत्रानिर्धाराज्जीवब्रह्मपरत्वेऽपि तयोरभेदाद् ब्रह्मपरतैव वाक्यस्य युक्तेति, तथापि कस्य निर्णायकत्वं? प्रकरणस्यार्थस्य वेति? उभयोरपि सन्दिग्धत्वादयुक्तो विचार इति चेत्,

उच्यते,

सन्देहवारकं शास्त्रं पदशक्त्या तु निर्णयः ।

---

एतद्वाक्ये संशयमाहु. किमिदमित्यादिना, ब्रह्मवाक्यं ब्रह्मनिर्णायकं वाक्य, अन्यवाक्यं ब्रह्मान्यनिर्णायक वाक्यं वा इत्यर्थ , आदौ 'अन्यत्र धर्मादन्यत्राधर्मा'दिति द्वितीयवल्लीस्थ ब्रह्मप्रकरणस्थ वाक्यं तदनन्तरं 'ऋतं पिबन्ता'वितिवाक्य तदनन्तरं 'आत्मान रथिन विद्धी'त्यारभ्य जीवनिरूपणाज्जीवस्य प्रकरण, एव स्थिते आहु. अस्येत्यादि, अस्य 'ऋतं पिबन्ता'वितिवाक्यस्य, उत्तरशेपत्वे 'आत्मान रथिन विद्धी'त्यादिजीवप्रकरणघटकत्वे, पूर्वशेपत्वे 'अन्यत्र धर्मा'दित्यादिब्रह्मप्रकरणघटकत्वे, प्रकरणनिर्णयः कर्तव्य इतिशेषः, मध्ये पाठात् ब्रह्मप्रकरणजीवप्रकरणयोर्मध्ये एतद्वाक्यस्य पाठात् , एवं सन्देहः वाक्ये किंप्रकरणीयमिद वाक्यमितिसन्देहः, तत्प्रयुक्तश्च वाक्ये ब्रह्मजीवपरत्वसशय इत्यर्थः, 'ऋत पिबन्ता'वितिवाक्येऽन्यतरप्रकरणित्वनिर्णयापेक्षया प्रकरणस्य चतुर्थप्रमाणत्वेन 'पिबन्ता'वितिप्रथमश्रुते. द्वित्वविशिष्टार्थप्रकाशनसामर्थ्यरूपलिङ्गस्य च प्रकरणापेक्षया प्रबलत्वात् श्रुतिलिङ्गपुरस्कारेणाहुः अर्थविचारे त्वित्यादि, द्विवचनेत्यादि पिबन्ता'वितिप्रथमाद्विवचनेन द्वित्वविशिष्टार्थप्रकाशनात्, पूर्वशेपत्वे पूर्वं 'न जायते म्रियते वा विपश्चि'दित्यादिना बद्धं जीवं निरूप्य 'महान्तं विभुमात्मान मत्वा धीरो न शोचती'त्यारभ्य मुक्तस्यापि निरूपितत्वात् तदनन्तर च 'ऋत पिबन्ता'वित्यस्य पठनात्, तदेकवाक्यतया बद्धमुक्तजीवौ आयास्यत इत्याहुः बद्धमुक्तेत्यादि, उत्तरशेपत्वे प्रकरणापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वेन उत्तरत्र 'आत्मान रथिनं विद्धी'त्यादिभिरिन्द्रियमनसोरेव प्राधान्येन निरूपणात् तदेकवाक्यतया 'ऋत पिबन्ता'वित्यपि वाक्य इन्द्रियमनोबोधकमेव भविष्यतीत्याहु. इन्द्रियमनसीत्यादि, उभयथापि एतद्वाक्यस्योक्तोभयप्रकरणान्यतरप्रकरणघटकत्वेपि, ब्रह्मवाक्याभावे हेतुमाहु द्वयोरित्यादि 'पिबन्ता'वितिद्विवचनोपयुक्तयोर्द्वयोरित्यर्थ', मुख्यत्वेन समप्राधान्येन, ब्रह्मवाक्येपि 'ऋत पिबन्ता'वितिवाक्यस्य जीवब्रह्मोभयार्थत्वाङ्गीकारेपि, न प्रयोजनसिद्धिः ब्रह्मणि वाक्यस्य समन्वयरूपा न प्रयोजनसिद्धि., तत्र हेतुः द्वयोर्मुख्यत्वेन प्रतिपादनादिति पूर्वोक्त एवावसेय.,

उभयप्राधान्येपि उभयोरैक्याद् वाक्यस्य ब्रह्मणि समन्वयो न विरुद्ध इत्येकदेशिमतं दूपयितुमनुवदन्ति अथेत्यादिना, मन्यते वादी वक्ष्यमाण मन्यते, 'त त्वौपनिषद पुरुपं पृच्छामी'तिश्रुतिमवलम्ब्य वदति उपनिषदित्यादि, पाठात् 'ऋत'मितिवाक्यस्य पाठादित्यर्थ , अन्यत्रेत्यादि उपनिषद्भिन्ने जीवब्रह्माभेदानिरूपणात् एतद्वाक्यस्य जीवब्रह्मोभयपरत्वेपि तयोरैक्याद् वाक्यस्य ब्रह्मणि समन्वयो नानुपपन्न इत्यर्थ., तन्मत दूपयन्ति तथापीत्यादिना, निर्णायकत्वं जीवब्रह्मणोस्तदभेदस्य च निर्णायकत्व, उभयोः प्रकरणार्थयो , सन्दिग्धत्वात् पूर्वोक्तरीत्या सन्दिग्धत्वात्, अयुक्तो विचारः अर्थप्रकरणयोर्निर्णायकयो सन्दिग्धत्वान्निर्णयासम्भवात् विचार एतद्वाक्यस्यायुक्त इत्यर्थ , इति चेत् विचारकर्तव्यताया अयुक्तत्व प्राप्त चेत् ,

उच्यते समाधानं उच्यते,

सन्देहवारकमित्यादि, तथाहि, 'वेदैश्च सर्वैरहमेव वेद्य.' 'सर्वे वेदा यत्पदमामनन्ती'त्यादिभिर्वाक्यैरेकवाक्यतया सर्वेषा वेदान्ताना ब्रह्मणि जीवमुक्तिप्रतिपादनतात्पर्यकत्वेपि कालदोषेण बुद्धिमान्द्यात् जीवानां वेदतात्पर्यानवगमेन मुक्त्युच्छेदं दृष्ट्वा दयालुतया जीवाना वेदतात्पर्यविपयीभूतार्थबोधनाय सूत्रात्मकं शास्त्रं कृतवानिति तेनैव वेदार्थसन्देहो निरसनीय इतिभाव , ननु पूर्वमुक्तं प्रकरणापेक्षया श्रुतिलिङ्गयोर्बलिष्ठत्वात् पूर्वशेपत्वे जीवद्वयमुत्तरशेपत्वे इन्द्रियमनसी इति आहोस्वित् जीवब्रह्मणी इति वक्ष्यमाणः संशय' कथ सम्भवत्-क्तिक इत्यत आहु पदशक्त्या त्विति, तथा च यावत्पर्यन्तं वेदानां पदशक्त्या निर्णय. सम्भवति तावत्पर्य-

जीवादुत्कर्षशब्देन द्वयोर्वाक्येऽपि न क्षतिः ॥ १ ॥

गुहातपशब्दाभ्यामित्यर्थः, 'ऋतं पिबन्ता'वित्यत्रैवं संशयः, किं जीवद्वयं निरूपयति आहोस्विज्जीवब्रह्मणी वेति,

तत्र ब्रह्मप्रकरणस्य सामान्यत्वात् 'यस्त्वविज्ञानवान् भवती'त्यग्रे विद्वदविदुषोर्वक्तव्यत्वात् तदर्थमुभयोः प्रथमनिर्देश उचितः, मन्त्रेऽपि ऋतं स्वर्गापवर्गलक्षणं सुखं, मार्गद्वयस्यापि विहितत्वात् सुकृतलोकत्वं, गुहा तत्त्वविचारो हृदयं वा, जात्यपेक्षया त्वेकवचनं, परमपरार्धे सत्यलोकः, तत्रोभयोर्भोगात्, अविद्यया पिहितप्रकाशत्वात् अविदुषः छायात्वं, ब्रह्मज्ञानेनातिप्रकाशत्वादातपत्वं विदुषः, अत एव विदुषः स्वरूपं ब्रह्मविदो वदन्ति, पञ्चाग्नयः त्रिणाचिकेताश्चेतरत्, इन्द्रियमनसोस्त्वचेतनत्वात् न वाक्यार्थसङ्गतिः, वाक्यार्थयोगे हि विशेषणनिर्णयः, तस्माद् बद्धमुक्तजीवपरतयोपपन्नत्वात्तत्प्रकरणपाठान्न ब्रह्मवाक्यमिति,

एवम्प्राप्त उच्यते,

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । ११ । ( १–२–४ )

'गुहां प्रविष्टावात्मानौ' गुहा हृदयाकाशः, तत्र सकृदेकस्मिन् प्रविष्टौ जीवपरमात्मानावेव,

---

न्तमर्थनिर्णयार्थं कारणान्तरं नानुसरणीयमित्यर्थः, ननु पदशक्त्या निर्णये कर्तव्ये सति छायातपशब्दाभ्यां शक्त्या लब्धार्थमादाय जीवब्रह्मोभयकोटिक एव संशयो युक्तो न तु जीवद्वयकोटिकोपीत्यत आहुः जीवादुत्कर्षेत्यादि, तथा च छायातपशब्दाभ्यां मिलित्वाद्येन जीव उक्तः, द्वितीयेन जीवादुत्कृष्टश्च जीवाज्जीवोपि मुक्तः सम्भवतीश्वरोपीत्यतो जीवद्वयसन्देहो नानुपपन्न इतिभावः ।

गुहातपशब्दाभ्यामित्यस्योत्कर्षशब्देनेत्यनेनान्वयः, संशयस्वरूपमाहुः किं जीवद्वयमित्यादिना,

पूर्वपक्षमाहुः तत्र ब्रह्मेत्यादिना, सामान्यत्वादित्यादि, तथाच ' अन्यत्र धर्मा'दित्यारभ्य 'अशब्दमस्पर्श'मेतदन्तं ब्रह्मप्रकरणमेवास्तीतितन्मध्यपातित्वेन 'ऋतं पिबन्ता'वित्येतद्वाक्यस्यापि ब्रह्मपरत्वमेवोचितं तथापि सर्वस्यापि वेदराशेर्ब्रह्मप्रकरणत्वेप्यवान्तरप्रकरणानां तत्तदर्थनिर्णायकानां मध्ये सत्त्वमविरुद्धं, इत्थं च सामान्यब्रह्मप्रकरणस्यात्र सत्त्वेपि जीवद्वयप्रकरणमविरुद्धमितिभावः, जीवद्वये विनिगमकमाहुः यस्त्वित्यादि, वक्तव्यत्वात् 'न जायते म्रियते वा विपश्चि'दित्यनेन बद्धस्य 'महान्तं विभुमात्मानं मत्वा धीरो न शोचती'त्यस्य मुक्तस्य इत्यनेन वक्तव्यत्वात्, तदर्थं तादृशवाक्ययोर्निर्वाहार्थं, उभयोः बद्धमुक्तजीवयोः, उक्तार्थे लिङ्गमाहुः मन्त्रेपीत्यादिना, स्वर्गेत्यादि तथा च बद्धः स्वर्गं भुङ्क्ते मुक्तोपवर्गमित्यर्थः, ननु बद्धभोग्यस्वर्गस्य कथं सुकृतफलत्वमत आहुः मार्गद्वयस्यापीत्यादि, स्वर्गापवर्गलक्षणमार्गद्वयस्यापीत्यर्थः, ननु 'निहितं गुहाया'मित्यादौ सर्वत्र गुहानिधानं ब्रह्मणः श्रूयत इति कथं जीवद्वयस्य गुहाप्रवेशः सम्भवतीत्यतो गुहाशब्दार्थमाहुः गुहेत्यादिना, तथा च तत्त्वविचारे हृदये वा जीवप्रवेशो न दुर्घट इत्यर्थः, नन्वेकवचनान्तगुहाशब्देनार्थद्वयं कथं लब्धमत आहुः जातीत्यादि, तत्रापि सुखत्वरूपा जातिर्बोध्या, तत्र ब्रह्मलोके, उभयोः सुकृतकर्त्रोः, छायातपशब्दार्थमाहुः अविद्ययेत्यादि, अत एव अत्र वाक्ये जीवद्वयोपादानादेव, पञ्चाग्नयः श्रौतस्मार्तानुष्ठातारः, त्रिणाचिकेताः चयनत्रितयकर्तारः, इतरत् छायापदवाच्यं, नन्वस्य वाक्यस्योत्तरशेषत्वे इन्द्रियमनसोरपि लाभसम्भवात् कथं जीवा एव वाक्यार्थ इत्यत आहुः इन्द्रियमनसोरिति, तथाचाचेतनयोः सुकृतफलभोक्तृत्वासम्भवात् गुहाप्रवेशानुकूलयत्नस्य चासम्भवान्न तौ वाक्यार्थबोधविषयौ अयोग्यत्वात् ननु सुकृतफलभोगे प्रवेशे च वाक्यार्थे इन्द्रियमनसोः ज्ञापकौ इतिलक्षणाकरणात् ऋतज्ञापकौ प्रवेशज्ञापकावित्यर्थकरणाद्योग्यतयान्वयः सुवच एवेत्यत आहुः वाक्यार्थयोगे हीत्यादि, यथा वाक्यार्थे तीरे लक्षणा क्रियते तथेन्द्रियमनसो भोगप्रवेशे च वाक्यार्थे सम्बन्धसत्त्वे शक्यसम्बन्धरूपा लक्षणा स्यात् तथा सति लाक्षणिकार्थविशेषणतया इन्द्रियमनसोः बोधः स्यात् स च न सम्भवत्येवेत्यर्थः, पूर्वपक्षी उपसंहरति तस्मादित्यादि, उपपन्नत्वात् ऋतं पिबन्तावितिवाक्यस्योपपन्नत्वात्, तत्प्रकरणेत्यादि जीवप्रकरणपाठात्,

सिद्धान्तमाहुः उच्यत इत्यादिना,

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ सम्मत्यर्थं श्रुत्यन्तरमाहुः गुहां प्रविष्टावात्मानाविति,

'अनेन जीवेनात्मनानुप्रविश्य'त्युभयोः प्रवेशश्रवणात्, न ह्येकस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुमर्हति, अर्थस्त्वेवं सम्भवति, पूर्वाधिकरणे यथाभिलषितभोगो भगवति साधितः, प्रकारान्तरेणापि 'ऋतं सत्यं परं ब्रह्मे'ति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपामृतपातारौ, सुकृतमपि ब्रह्मैव, 'तस्मात्तत् सुकृतमुच्यत' इतिश्रुतेः, स एव लोकः, उपचारात् षष्ठी, अक्षरं वा, परमपरार्धोपरि तत्रत्यानां परिदृश्यमानत्वात्, छाया प्रतिमारूप्यं, सायुज्यं गतस्य जीवस्यापि तथात्वात्, ततोऽपि विशिष्टं ब्रह्म प्रकटानन्दत्वात् आतपः, परोक्षवादः, काण्डत्रयेऽपि तद्वाद इति त्रयाणां ग्रहणं, अतो युक्त एवायमिति हिशब्दार्थः, नन्वप्रकृतत्वात् कथमेवमिति तत्राह, तद्दर्शनात्, तयोर्दर्शनं तद्दर्शनं तस्मात्, जीवब्रह्मणोः प्रतिपादनीयत्वात्, 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाह'मिति जीवः पृष्टः, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् अन्यत्र भूतात् भव्याच्च यत्तत् पश्यसि तद्वदेति' ब्रह्मापि पृष्टं, तत्र ब्रह्म निरूप्य जीवं निरूपयन् उभयोस्तुल्यत्वेन महाभोगं निरूपयन् फलार्थं मध्ये स्वरूपं कीर्तयति, अतो ब्रह्मवाक्यमेवेति सिद्धम् ॥ ११ ॥

---

एतद्वाक्ये आत्मपदाभावेपि श्रुत्यन्तरानुरोधात् जीवपरमात्मानौ ग्राह्यौ, तत्र श्रुतिमाहुः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, तथा च श्रुत्यन्तरेणास्या 'ऋतं पिबन्तौ'विति श्रुतेरेकवाक्यत्वसम्भवे वाक्यभेदस्यान्याय्यत्वात् जीवपरमात्मानावेवात्रोपादेयाविति फलितं, ननु 'अनेनात्मने'ति श्रुतौ परमात्मपदाभावादत्रापि जीवद्वयमेवास्तु अत आहुः न ह्येकस्मिन्नित्यादि, जीवपरमात्मप्रवेशस्यैव बहुषु श्रुतिवाक्येषु दर्शनात् तथेत्यर्थः, पूर्वपक्षग्रन्थोक्तार्थापेक्षया ऋतं पिबन्ता वित्यस्य सिद्धान्तार्थं वक्तुमाहुः अर्थस्त्वित्यादि, एवं वक्ष्यमाणप्रकारेण, साधितः 'यस्य ब्रह्म चे'त्यनेन साधितः, प्रकारान्तरेण 'ऋतं पिबन्ता'विति वाक्योक्तप्रकारेण ऋतपदार्थस्य ब्रह्मत्वबोधिका श्रुतिमाहुः ऋतं सत्यं परं ब्रह्मेति स्वरूपेत्यादि, तथा च 'ऋतं पिबन्ता'वित्यस्यायमर्थः, सुकृतस्य च ब्रह्मत्वे प्रमाणमाहुः तस्मात्तत् सुकृतमुच्यतइतिश्रुतेः, 'सुकृतस्य लोके' इत्यत्र 'राहोः शिर' इतिवदभेदार्थकषष्ठ्या सुकृताभिन्नो लोक इत्यर्थं प्रदर्शयितुमाहुः स एव लोक इति, स एव सुकृतमेव, उपचारात् अभेदार्थाभिप्रायात्, सुकृतशब्देन परं ब्रह्मेति प्रतिपाद्य तदात्मकं लोकमुक्त्वा सुकृतलोकत्वमक्षरस्य व्यापिवैकुण्ठस्याहुः अक्षरं वेति, 'परमे परार्धे' इत्यस्यार्थमाहुः परमपरार्धोपरीति, परो मीयते यत्र वा परस्य मा लक्ष्मीर्यत्रैतादृशं सर्वोत्कृष्टं स्थानं व्यापिवैकुण्ठात्मकं परमशब्देनोच्यते तत्र परार्धं परस्य ब्रह्मणः पुरुषोत्तमस्यार्धं स्थाने तादृशस्थानोपरीत्यर्थः, छायाशब्दार्थमाहुः छायेत्यादिना, प्रतिमारूप्यं जीवस्य परब्रह्मसारूप्यं समानत्वं, तथात्वात् ब्रह्मसमानत्वात्, ब्रह्मच्छायारूपत्वमित्यर्थः, ततोपि प्राप्तसायुज्यजीवतोपि, आतपः आतपपदवाच्यमित्यर्थः, ननु पूर्णानन्दपदं त्यक्त्वा किमर्थमातपशब्दः प्रयुक्त इत्यत आहुः परोक्षवाद इति, 'परोक्षप्रिया वै देवा' 'परोक्षं च मम प्रियं'मितिसिद्धान्तात्तथोक्तमित्यर्थः, काण्डत्रये ज्ञानकाण्डे उपासनाकाण्डे कर्मकाण्डे चेत्यर्थः, तद्वादः स्वरूपामृतपानप्रशंसारूपो वादः, त्रयाणां ज्ञान्युपासककर्मिणां, ग्रहणं श्रुतौ 'ब्रह्मविदः पञ्चाग्नयः त्रिणाचिकेता' इतिशब्दैर्ग्रहणमित्यर्थः, अयमुक्तोर्थः, हिशब्दः सौत्रो हिशब्दः, नन्व'स्थूलमन'णिवत्यादौ ब्रह्मणोऽप्रकृतत्वात्, कथमेव कथं जीवतुल्यतयोक्तामृतपानकर्तृत्वं ? तत्र उक्तानुपपत्तिपरिहारे, तद्दर्शनादिति, तयोः जीवब्रह्मणोः, दर्शनं स्वरूपामृतत्वेन प्रकरणे निरूपणं, फलितार्थमाहुः जीवब्रह्मणोरित्यादिना, प्रतिपादनीयत्वात्, प्रतिपादनमेवाहुः येयमित्यादिना, अयं विचिकित्सास्त्वपक्षः, 'येयं प्रेते विचिकित्सा मनुष्य'इत्यादिना नाचिकेता जीवगोचरे प्रश्ने कृते गुरुणा लोकवरैः प्रलोभ्यमानोपि नाचिकेता यदा न चचाल तदा जीवस्वरूपं तज्ज्ञानं तज्ज्ञानफलं तं दुर्दर्शं गूढमनुप्रविष्टमित्यादिना गुरुर्निरूपितवान् तदनन्तरं 'एतद्विद्यामनुशिष्टस्त्वयाह'मित्युक्तवान् नाचिकेता, एतदन्तेन जीवः पृष्ट उत्तरितं च तत्र गुरुणा, ततो ब्रह्मापृष्ट्वा 'अन्यत्रे'त्यादिना 'तद्वदे'त्यन्तेन, तत्र प्रश्ने कृते सतीत्यर्थः, ब्रह्म निरूप्य जीवं प्रति ब्रह्म निरूप्येत्यर्थः, जीवं निरूपयन् शिष्यं प्रति गुरुर्जीवस्वरूपं निरूपयन्, ज्ञातज्ञेयभावं निरूप्याग्रे 'पुनर्न जायते'इत्यादिना जीवपरमात्मानावेव श्रुत्या निरूपितवान् तदनन्तरं मध्ये 'यस्य ब्रह्म चे'त्यनेनालौकिकं महाभोगमुक्तवान्, तदनन्तरं जीवस्य कथं स्वरूपामृतपानं कथं वा तादृशभोगे ब्रह्मणः सहभाव इत्याशङ्कानिराकरणाय 'यस्य ब्रह्म चे'ति 'सेतुरीजानानामिति ब्रह्मनिरूपकश्रुत्योर्मध्ये जीवब्रह्मणोरुभयोरपि समानतया महाभोगं प्रदर्शयितुं फलभोगार्थं तयोः स्वरूपमपि प्रदर्शयितुं 'ऋतं पिबन्ता'विति श्रुतिमुक्तवानित्यर्थः, एतेन

## विशेषणाच्च ॥ १२ ॥

विशेषणानि पूर्वोक्तानि, जीवब्रह्मणोरेव सङ्गतानि, अग्रिमं वाक्य'मात्मानं रथिनं विद्धि' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति, जीवप्राप्यं ब्रह्माह, अत उभयोरेव सर्वव्यावृत्त्या कथनादग्रिमग्रन्थपर्यालोचनयापीदं ब्रह्मवाक्यमेव, 'द्वा सुपर्णे'ति निःसन्दिग्धं, चकारः प्रकरणोक्तसर्वोपपत्तिसमुच्चयार्थः ॥ १२ ॥

॥ इति प्रथमाध्याये द्वितीये पादे चतुर्थं गुहाम्प्रविष्टावित्यधिकरणम् ॥

'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति, तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'त्यादि श्रूयते ।

तत्र संशयः, प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेवेति वा विरुद्धार्थवाचकत्वात् सन्देहः,

---

जीवस्य तादृशफलभोगेधिकारः ब्रह्मणश्च परमदयालुता बोधितेति नोक्तार्थे शङ्कालेश इति भाव., इत्थं चात्र ब्रह्मप्रकरणेवान्तरप्रकरणानुरोधेन जीवनिरूपणेपि सर्वं प्रकरणं ब्रह्मवाक्यमेवेत्याहुः अत इत्यादिना ॥ ११ ॥

एतत्प्रकरणे जीवब्रह्मणोरेव निरूपण न बद्धमुक्तयोर्जीवयोरित्यस्मिन्नर्थे साधकं हेतुमाहुः **विशेषणाच्च** ॥ १२ ॥ **पूर्वोक्तानीति** तानि 'च तं दुर्दर्श गूढमनुप्रविष्ट गुहाहितं गह्वरेष्ठं पुराण'मितिप्रभृतीनि विशेषणानि, **उभयोः** तथैव 'न जायते म्रियते वे'त्यादीनि जीवस्य 'अणोरणीया'नित्यादीनि च ब्रह्मण, इत्यादीनि विशेषणानि जीवब्रह्मणोरेव सङ्गतानि न तु बद्धमुक्तजीवयोरितिफलितं, ननूक्तं 'ऋतं पिबन्ता'वितिवाक्यं उत्तरशेष इत्यत आहुः **अग्रिम**मित्यादि, तथा चाग्रिममपि द्वयोरेव जीवब्रह्मणोर्निरूपकमिति निरूपयन्ति **आत्मान**मित्यादिना, 'आत्मानं रथिनं विद्धि शरीर रथमेव वि'त्यादिना परेण ग्रन्थेन रथिरथादिकल्पनया संसारं त्यक्त्वा मुमुक्षुर्भवति 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परम पद'मिति च गन्तव्यस्थानमुक्तं, एवं 'ब्रह्मविदो वदन्ती'ति जीवस्य वक्तृत्वं ब्रह्मणश्च निरूप्यत्वं एवमादीनि उत्तराण्यपि विशेषणानि जीवब्रह्मणोरेवोक्तानीति बोध्ये, ननु 'द्वासुपर्णे'तिश्वेताश्वतरीयं विषयवाक्यमत्र कुतो नोदाहृतमत आहुः **द्वासुपर्णे**त्यादि, निःसन्दिग्धमिति 'नानुपलब्धे न निर्णीतार्थे न्यायः प्रवर्ततेऽपि तु सन्दिग्धेर्थे'इतिन्यायात्, एतद्वाक्ये त्वशनानशनाभ्यां जीवपरमात्मनो. निर्णयात् न विषयवाक्यत्वमस्येति बोध्य, **सर्वोपपत्तिः** प्रकरणोक्तसर्वधर्माणां जीवब्रह्मणोरुपपत्तिरित्यर्थः ॥ १२ ॥

इति प्रथमाध्याये द्वितीयपादे चतुर्थं गुहाम्प्रविष्टावित्यधिकरणम् ॥

अक्षरापेक्षया स्थानान्तरमपि पुरुषोत्तमस्याम्नीति बोधयितुमाह सूत्रकार., छान्दोग्यषष्ठप्रपाठकस्थं उपकोसलविद्यास्थं विषयवाक्यमुदाहरन्ति 'य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'त्यादि, **एतदर्थस्तु** अक्षिपुरुषोपासकैरक्षिणि **य. पुरुषो दृश्यते** स **आत्मा** परं ब्रह्म इति **होवाचाचार्यः**, अत्रात्मशब्देन सर्वेषामात्मस्वरूप उक्तः, **अमृतं** मृत्युभयनिवारकं, **अभयं** मोक्षसुखरूपं, **ब्रह्म** व्यापकं सर्वभवनसमर्थं च, पूर्ववाक्ये आचार्येण यदुक्तं 'अह तु ते तव वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते तत्र निदर्शनमाचार्य.', **तद्यद्यपी**त्यादि **तत्** इदं वक्ष्यमाणं निदर्शनं, **यद्यपि** **अस्मिन्**नक्षिपुरुषस्थानभूतेऽक्षिणि **सर्पिर्वोदकं वा सिञ्चति** धारया पातयति, **वर्त्मनी** पक्ष्मणी एव, **गच्छति** संयुनक्ति, ते एवार्द्रे भवतो न त्वक्षि, तथाच यत्पुरुषस्थानस्येदृशं माहात्म्यं तस्य ज्ञाने पापसंश्लेषो न भवतीत्यत्र किं वक्तव्यमिति बोध्यः ।

अत्र वाक्ये केचिच्च चतुष्कोटिकं संशयं वदन्ति प्रतिबिम्बपुरुषो वा विज्ञानात्मा वा इन्द्रियाधिष्ठाता देवो वा परमात्मा वेति, स तु न सम्भवति, 'पुरुषो दृश्यते' इत्यनेनैव विज्ञानात्मदेवतयोर्निरासात्, अतः संशयाकारमाहुः **तत्र संशय** इत्यादिना, संशयबीजमाहुः **विरुद्धार्थे**त्यादि, दृश्यत्वामृतत्वादीनां विरुद्धार्थानां वाचकशब्दानां वाक्ये सत्त्वात् संशय इत्यर्थः ।

तत्र 'दृश्यत' इतिवचनात् प्रतिबिम्ब एवायं, ब्रह्मप्रकरणस्य च समाप्तत्वादेषा तेऽस्मद्विद्या आत्मविद्या चेत्युपसंहारदर्शनात् तत्सिद्ध्यर्थमुपासनापरतैव वाक्यस्य युक्ता, अविरोधे हि ब्रह्मपरता, उपास्यत्वेन ब्रह्मधर्माणामन्वयो भविष्यतीत्येवम्प्राप्त उच्यते,

## अन्तर उपपत्तेः । १३ । (१-२-५)

अन्तरः अक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव, कुतः ? उपपत्तेः, उपपद्यते हि तस्य दर्शनमार्षं, सर्वत्र ब्रह्म पश्यन् बहिः सन्निधाने तस्य स्थानस्योत्कृष्टत्वात् तत्र भगवन्तमुपदिशति, 'लोकं वाव तेऽवोचन्नहं तु ते तद्वक्ष्यामी'तिमहदुपक्रमाच्च, प्रतिबिम्बमात्रस्य च न पुरुषत्वनियमः, तस्माद्विरोधाभावाद् ब्रह्मवाक्यमेव ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

'एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनीरेष हि सर्वाणि वामानि नयति एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती'ति, वामानि कर्मफलानि, तेषामेव मनोहरत्वेन तदर्थं कर्मकरणात्, कर्मफललयः कर्मफलदानञ्च यत इति स्वर्गापवर्गफलदातृत्वमुक्तं. सर्वलोकेषु भानञ्च 'एष' इति, तमेवाक्षिपुरुषं निर्दिश्य स्थानादि व्यप-

---

पूर्वपक्षमाहु तत्रेत्यादिना, वचनात् 'य एषोक्षिणि पुरुषो दृश्यते' इतिदर्शनाक्ष्णोरतीन्द्रिये ब्रह्मण्यसम्भवात् प्रतिबिम्ब एवायमितिभाव, ब्रह्मप्रकरणस्य समाप्तौ हेतु. उपसंहारेत्यादि, तत्सिद्ध्यर्थं छायापुरुषोपासनार्थं छायापुरुषे दृश्ये आत्मत्वाभयत्वामृतत्वब्रह्मत्वादीना आरोपणसिद्ध्यर्थं, उपासनापरता छायापुरुषस्योपासनापरता, अविरोधेत्यादिना दृश्यत्वामृतत्वादीना ब्रह्मण्यविरोधसम्भवे वाक्यस्य ब्रह्मपरता स्यात स तु न सम्भवतीत्यर्थं, उपास्यत्वेनेत्यादि, उपासनार्थं ब्रह्मधर्माणा वैज्ञानिकोन्वयो भविष्यतीत्यर्थं, उच्यते सिद्धान्त उच्यते.

अन्तर उपपत्तेः ॥ १४ ॥ सूत्रार्थेन सिद्धान्तमाहु अन्तर इत्यादिना, तस्य परब्रह्मण, आर्षं भगवत्सम्पादितर्षित्वेन, तच्च दर्शन 'पराञ्चि खानि व्यतृणत स्वयम्भू' 'कश्चिद्धीर. प्रत्यगात्मानमैक्षतावृत्तचक्षु.' 'दिव्यं ददामी'त्यादिभिर्वाक्यैर्बोध्य, तथा च भगवत्सामर्थ्येन भगवतो दर्शनं उपपद्यते न त्वनेनोपदिष्टमत आहुः सर्वत्रेत्यादि, तथाचाचार्य. सर्वत्र सर्वदेशेषु ब्रह्म पश्यन्नपि बहिः चक्षुर्भिन्नदेशे, सन्निधाने भगवत. स्वस्य प्रत्यक्षेपि, सर्वत्रोपदेशेऽविदुषां प्रत्ययासम्भवात, यथा'सङ्गो ह्यय पुरुष' इत्यादिनासङ्गित्व पुरुषेस्ति तादृशमेव स्थानं इतरासङ्गि 'सर्पिर्वोदक वे'त्यादिनोक्त' बाह्याङ्गापेक्षयोत्कृष्ट भगवत. स्थानत्वेनोपदिशतीत्यर्थ, लोकमित्यादि अत्रोपकोसलं विहाय क्वचिदाचार्या दूरदेश गतस्तत्स येऽग्निभिरुपकोसलाय सगुणब्रह्मविद्योपदिष्टा, तत आगत्याचार्येणोक्तं उपकोसल त्व 'केनचिदुपदिष्टब्रह्मविद्यो भासी'ति, तदुत्तरं तेन किञ्चिदपह्नुत्योक्त'मग्निभिरहमुपदिष्ट' इति तदुत्तरं बहुकालविरहिणाचार्येण प्रेम्णोक्त 'लोकं वा व तेऽवोचन्,' अग्नय. लोकं सगुणं ब्रह्म, ते तुभ्य अवोचन् उपदिष्टवन्त., अह तु ते तुभ्य, तत् पर निर्गुण ब्रह्म वक्ष्यामीत्युक्तं, महदुपक्रमेत्यादि तदुपदेशार्थमाचार्य तत् ज्ञानफलं वक्तु यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवविदि पाप कर्म न श्लिष्यत इति महदुपक्रम कृतवानिति परं ब्रह्मैवात्रेति ज्ञेय, महदुपक्रमश्च तादृशपुरुषे पुण्यपापाभावनिरूपणोपक्रमलक्षणो बोध्य, चक्षुषि परिदृश्यमानस्य पुरुषस्य प्रतिबिम्बत्वे दूषणमाहु. प्रतिबिम्बेत्यादि, अपुरुषाणामपि प्रतिबिम्बसम्भवान्न पुरुषत्वनियम इत्यर्थ., उपसंहरन्ति तस्मादित्यादि, विरोधाभावात् ब्रह्मानुग्रहेण ब्रह्मदर्शनसम्भवात् ब्रह्मदर्शनविरोधाभावात्, ब्रह्मवाक्यमेव 'य एषोऽक्षिणि पुरुषो दृश्यते' इद परब्रह्मवाक्यमेवेत्यर्थ. ॥ १३ ॥

पूर्वोक्तमेवार्थं दृढीकर्तु हेत्वन्तरमाह सूत्रकारः,

स्थानादिव्यपदेशाच्च ॥ १४ ॥ अक्षिपुरुषनिरूपणोपयोग्यर्थमाहु श्रुत्या एतं इत्यादिना, एतं अक्षिपुरुषं, संयद्वाम सर्वजीवानां स्वाधीनीकृतकर्मफलं, एतं अक्षिपुरुषं, सर्वाणि वामानि सर्वाणि कर्मफलानि, अभियन्ति प्राप्नुवन्ति, एतस्मिन् लीयन्ते इत्यर्थं, एष उ इत्यादि सर्वकर्मफलरूप इत्यर्थ., नयति जीवेभ्य· प्रयच्छति, भामानि सर्वाणि भासकानि, 'एष आत्मेति होवाचे'त्यत्रोक्तेनैष इत्यनेनेत्यर्थ·, स्थानादिव्यपदेशः 'य एषोऽक्षिणि'

दिश्यते, न हि प्रतिबिम्बात्मनः स्थानादिव्यपदेशः सम्भवति, चकारादेतत्तुल्यवाक्यस्याप्यय-मेवार्थः इन्द्रविरोचनप्रजापतिसंवादे, 'अथ योऽयं भगवोप्सु परिख्यायत इत्यासुरं,' न तु 'यएषोऽक्षिणि पुरुषो दृश्यत' इत्यादि, तस्मादक्षिपुरुषो ब्रह्मैव ॥ १४ ॥

ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं सम्पाद्यते, उपासनापरत्वे को दोष इत्याशङ्क्याह,

## सुखविशिष्टाभिधानात् ॥ १५ ॥

'एतदमृतमभयमेतद् ब्रह्मे'ति यद्यत्रोपासना विधीयेत एष आत्मेति तदा अमृतादिवचनं व्यर्थं स्यात्, तद्धर्माणां पूर्वमेव प्राप्तत्वात्, तस्मादमृतमानन्दः अभयं चित् ब्रह्म सत् सच्चिदा नन्दरूप आत्मेत्युक्तं भवति, अत 'एष' इति अक्षिपुरुषं निर्दिश्य सुखविशिष्टमभिधीयते, सच्चितोर्न ब्रह्मख्यापकत्वमिति सुखमेव निर्दिष्टं, अतः सुखविशिष्टाभिधानादेव ब्रह्मवाक्यमिति, एषा मुख्योपपत्तिरित्येवकारः, चकारात् सदादिभिरपि, तस्माद् ब्रह्मैवाक्षिपुरुषः ॥ १५ ॥

स्वरूपतो निर्णीय फलतो निर्णयमाह,

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुतोपनिषत्कस्य श्रुता उपनिषद्विद्या येन तस्य प्रविदो या गतिः देवयानाख्या साक्षि-

---

'यश्चक्षुषि तिष्ठन् चक्षुषोन्तर' इत्यादिना स्थानादिव्यपदेशः, आदिपदेन कर्मफलप्रदत्वादि ग्राह्यं, चकारात् सौत्रचकारात्, एतत्तुल्यवाक्यस्य छान्दोग्यदशमप्रपाठके 'य एषोऽक्षिणि पुरुषो दृश्यते' एतद्वाक्यसमानार्थवाक्यस्य, तच्चैतत्तुल्य वाक्य दशमप्रपाठके इन्द्रविरोचनप्रजापतिसंवादे 'य एषोऽक्षिणि पुरुषो दृश्यते एतदात्मेति होवाचैतदमृतमभय ब्रह्मे'ति, तस्यापि पूर्वोक्तवाक्यार्थसमानार्थत्वमित्यर्थः, नन्वेतद्वाक्योत्तरमेव 'अथ योय भगवोप्सु परिख्यायते यश्चायमादर्शे' इतिवाक्ये प्रत्यक्षत एव छायापुरुषाभिधानात् 'य एषोऽक्षिणी'तिवाक्येपि अयमर्थः कुतो नोच्यते? एकवाक्यतासम्भवादत आहुः अथ योयमित्यादि, तथाच 'योय'मितिवाक्य विरोचनोक्तमादर्शपदान्तं, विरोचनश्चासुरश्रेष्ठः इन्द्रश्च देवानां श्रेष्ठोतो विरोचनवाक्यार्थोऽसुराणां सिद्धान्त इतिब्रह्मणासुरमित्युक्त, इत्यादीति तु आसुर नेत्यन्वय , उपसंहरन्ति तस्मादित्यादि ॥ १४ ॥

अक्षिपुरुषस्य ब्रह्मतासाधकं स्थानादिव्यपदेशादितिहेतुं दृढीकर्तुमाहु. नन्वित्यादि ब्रह्मवाक्यत्वं 'य एषोऽक्षिणि पुरुषो दृश्यते' इतिवाक्यत्वं, उपासनापरत्वे छायापुरुषस्य ब्रह्मत्वेनोपासनापरत्वे, आह सूत्रकार. सूत्रेण समाधानमाहेत्यर्थः,

**सुखविशिष्टाभिधानात्** ॥ १५ ॥ सुखविशिष्टाभिधानादिति, उपासनापक्षे दूषणमाहु· एतदमृतमित्यादि, अत्र 'य एषोक्षिणि' इतिवाक्ये, अमृतादीति आदिपदेनाभयपदमपि व्यर्थं स्यादित्यर्थः, उपासनाविधिवैयर्थ्यमुपपादयन्ति तद्धर्माणामित्यादि, पूर्वमेव छायापुरुषे ब्रह्मत्वेनोपासनाविधाने उपासनाविधे पूर्वमेव, ब्रह्मणि अमृताभयत्वादिधर्माणां प्राप्तत्वेन तद्धर्मोपादानस्य विधेयकोटौ वैयर्थ्यमितिभावः, तस्माद्ब्रह्मस्वरूपप्रतिपादिकैवेयं श्रुतिरित्युपसहरन्ति, स्वरूपप्रतिपादकशब्दानेव प्रदर्शयन्ति अमृतमानन्दमित्यादि, अत इति यत. 'एष' इतिसर्वनामशब्देन ब्रह्मोद्दिश्यामृतादिशब्दैः सुखविशिष्टं विधीयते यत इत्यर्थः, न ब्रह्मख्यापकत्वं सच्चितोर्जीवेपि सत्वात्तत्र चावयविब्रह्मणस्तादात्म्याभावात् सच्चिन्निष्ठव्याप्यतानिरूपिता व्यापकता ब्रह्मणि नास्तीति ताभ्यां ब्रह्मनिर्णयासम्भवात्सुखविशिष्टं ब्रह्म व्याप्यं ब्रह्मरूपनिर्णायकमुक्तमित्यर्थः, ब्रह्मवाक्यं 'य एषोऽक्षिणी'ति ब्रह्मवाक्यमित्यर्थ.- एषा सुखविशिष्टाभिधानरूपा, एवकारः सौत्र एवकारः, चकारात् सौत्रचकारात्, सदादिभिः अपहतपाप्मत्वाद्यव्यभिचारिसच्चित्सुखादिभिरपि ब्रह्मनिर्णयो भवतीत्यर्थः, उपसंहरन्ति तस्मादित्यादिना ॥ १५ ॥

अक्षिपुरुषस्य ब्रह्मत्वसाधकं पुनर्हेत्वन्तरमाह सूत्रकारः, एतत्सूत्रपूर्वं हि 'अमृतमभय'मित्यादयो धर्मा उक्तास्तेक्षिपुरुषे ब्रह्मण्येव सम्भवन्तीत्यक्षिपुरुषो ब्रह्मैवेतिस्वरूपनिर्णयः कृत', इदानीमेतत्सूत्रेणाक्षिपुरुषज्ञानस्य फलमाह,

**श्रुतोपनिषत्कगत्यभिधानाच्च** ॥ १६ ॥ तदेवाहुः, श्रुतोपनिषत्कस्येत्यादिना अक्षिपुरुषोपासनाफलबोधिका

पुरुषविदोऽप्युच्यते, 'अथ यदु वै वास्मिन् शव्यं कर्म कुर्वन्ति यदि च नार्चिषमेवाभियन्ती'-त्युपक्रम्य 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ' इत्येतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त इति ब्रह्मविदोऽप्येष एव मार्गः पुनरावृत्ति-रहितः, चकारस्तूक्तसमुच्चयेनाधिकरणपूर्णत्वबोधकः ॥ १६ ॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति,

ननूपासनापरत्वेऽपि सर्वमुपपद्यते, तद्धर्मव्यपदेशेनैवोपासनोपपत्तेः, अतः सर्वा उपपत्तयो व्यपदेशिवद्भावेन सङ्गच्छन्त इत्येवम्प्राप्त उच्यते,

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

इतरो नात्र वाक्यार्थः, अनवस्थितेरस्थिरत्वात्, उपदेशकवाक्यत्वादुपदेष्टुरेव चक्षुर्गतं भवेत्, तथा च वक्तुर्दर्शनाभावादनाप्तत्वं द्रष्टुरपगमे चापगच्छति सद्वितीये सद्वितीयः, उपासनाकाले च सुतरामनवस्थितिः, सद्वितीयोपासनायामपि श्रवणमननयोर्भिन्नविषयत्वादनवस्थितिः, वक्तु-रेव नियमे गुरोर्निर्बन्धेन सुतरामनवस्थितिः, किञ्च, मनसा ह्युपासनं कर्तव्यं, तत्र चासम्भव

---

श्रुतिमाहु 'अथ यदु वै वास्मिन् शव्यं कर्म कुर्वन्ति यदि च नार्चिषमेवाभियन्तीत्यादि, अथ अक्षिपुरुषोपा-सनानन्तर, यत् यदि, उः सबोधने, वै निश्चयेन, अस्मिन् मृतेऽक्षिपुरुषोपासके, शव्यं कर्म तदौर्ध्वदेहिक यदि च न कुर्वन्ति तस्य बान्धवा. तेर्चिरादिमार्गेणैव गच्छन्तीत्यर्थः, उपक्रम्येत्यादि, तथाचोत्तरायणीयषण्मासैः संवत्सरदेव प्राप्नुवन्ति, तत आदित्यं, ततश्चन्द्रमसं, ततो विद्युत, एवक्रमेण ते गच्छन्तीत्यर्थ , तत्र गमने प्रापकमाहुः अमानवः देवपुरुष इत्यर्थः, सः अमानव , एतान् उपासकान्, तथा च चतुर्मुखलोकादागतपुरुष. तत्तत्स्थानादेतान् ब्रह्म गम-यति, ब्रह्मणा सह ते मुच्यन्ते इत्येकोर्थ., भगवल्लोकादागतोऽमानव. पुरुषो वा पर ब्रह्म गमयतीत्यर्थः, उक्तेत्यादि उपनिषदि अक्षिपुरुषोपासकस्य ये धर्मा उक्तास्तेषां सर्वेषा तत्पुरुषे समुच्चयार्थमित्यर्थ. ॥ १६ ॥

शङ्कन्ते नन्वित्यादिना, उपासनेत्यादि प्रतिबिम्बस्य ब्रह्मत्वेनोपासनापक्षेपि पूर्वोक्ताः यावन्तोऽर्थास्ते सर्वे उपपद्यन्त एवेत्यर्थ., उपपत्तिमेवाहु तद्धर्मेत्यादिना, व्यपदेशिब्रह्मतद्धर्माणामक्षिपुरुषे व्यपदेश सादृश्योपपादनं तेनोपासनोपपत्तिरित्यर्थ , सर्वा इत्यादि यावत्पूर्वोक्तवाक्यार्थानां छायापुरुषे व्यपदेशिवद्भावो ब्रह्मदृष्टान्तता तेने-त्यर्थः, इत्येवम्प्राप्ते 'य एषोऽक्षिणी'तिवाक्यस्य छायापुरुष एवार्थ इतिपूर्वपक्षे प्राप्ते, उच्यते सूत्रेण सिद्धान्त उच्यते,

अनवस्थितेरसम्भवाच्च नेतरः ॥१७॥ इतरः ब्रह्मेतर., छायापुरुष इत्यर्थ , तत्र हेतुमाहुः अनवस्थितेरिति, बहुकालावस्थिते हि उपासन भवति तच्च तत्रासम्भवि, अनवस्थितो हेतु , अस्थिरत्वादिति पुरुषस्य चक्षुःसम्मुख-स्थितौ प्रतिबिम्बस्थितिस्तद्व्यतिरेके छायापुरुषव्यतिरेक इत्यस्थिरत्व तस्य,पुनः प्रतिबिम्बपुरुषपक्षे दूषणमाहु. उपदेशे-त्यादि, चक्षुर्गतं उपदेष्टुः चक्षुषि विद्यमानं प्रतिबिम्बस्वरूप वक्तव्यं भवेदित्यर्थ , दर्शनाभावादित्यादि तथाचो-पदेष्टृचक्षुर्गतप्रतिबिम्बस्योपदेष्टुर्दर्शनाभावात् 'पुरुषो दृश्यते' इत्युक्तेश्चोपदेष्टुरनाप्तत्वापत्तिरित्यर्थः, ननु मच्चक्षुषि त्वया दृश्यते इतिवक्तुरभिप्रायान्नानाप्तोक्तत्वमत आहु. द्रष्टुरित्यादि, तथाच श्रवणकाले तस्य सत्त्वेपि देशान्तरे मननकाले तस्याभावाद्देशान्तरगतपुरुषेणानुपास्यता स्यादुपास्याभावादितिभावः, उपास्याभावमेवोपपादयन्ति सद्वितीय इत्या-दिना, सद्वितीये प्रतिबिम्बनिष्ठानुयोगितानिरूपकप्रतियोगिताश्रयद्रष्टरि सति, सद्वितीयः द्रष्टृगतप्रतियोगितानिरू-पकानुयोगिताश्रय. प्रतिबिम्ब. सभवतीत्यर्थ., इत्थ च द्वितीयाभावे प्रतिबिम्बाभावादुपासनमसङ्गतमित्यर्थः, दूषणा-न्तरमाहु उपासनेत्यादि, उपास्य अग्रे स्थापयित्वा तत्र चित्तनिरोध उपासना, तत्काले चोपास्याभावादुपासना बाधिता स्यादित्यर्थ', ननूपासनाकाले पूर्वदृष्टप्रतिबिम्बाकार पुरुष स्वसन्मुखं स्थापयित्वोपासनं कार्यमत आहुः सद्वितीयेत्यादि, भिन्नेत्यादि, तथा च श्रुतश्चाक्षुषो मन्तव्यश्चाप्रत्यक्ष पुरुष इति भिन्नविषयत्वमित्यर्थ', अनवस्थितिः उपदिष्टोपास्या-नवस्थिति., ननु वक्तारमेवाभिमुखं स्थापयित्वा तच्चक्षुर्गतचाक्षुषपुरुषे उपासना कार्या इत्यत आहु' वक्तुरेवेत्यादि, नियमे सर्वदोपासनाकाले गुरोः सन्मुखस्थापनरूपनियमे, गुरोर्निर्बन्धेन गुरो' शिष्याधीनतया तथास्थितेरावश्य-कतयेत्यर्थः, तथाच गुरोस्तादृशशिष्यनिर्बन्धसहनस्याप्रामाणिकत्वेनासम्भवात्, तादृशचाक्षुषपुरुषस्योपासनाकालेऽनव-स्थितिरेवेति फलितं, उपदेशकाल एवातिकृपया गुरोः सन्निधानं तस्य शिष्याधीनतया तु स्थितिर्दुर्लभेतिज्ञापनाय सुतरामित्युक्तं, पुनरक्षिपुरुषस्य छायात्वाभावसाधक हेतुमाहु. किंचेत्यादिना, मनसेत्यादि तथाचोपासनं मनो-

एव, तादृशधर्मवत्त्वं च न सम्भवति, आसुरत्वं च भवेदिति चकारार्थः, तस्मादक्षिस्थाने सहज एव यो भगवानस्ति तत्परमेवैतद्वाक्यमिति सिद्धं, व्यापकमर्वगतस्य सर्वतःपाणिपादान्तत्वादानन्दमूर्तिर्भगवानेव, ब्रह्मवादे त्वेपैव मर्यादा, सगुणवादो ब्रह्मवादाज्ञानादिति ॥ १७ ॥

॥ इति प्रथमाध्याये प्रथमे पादे पञ्चममन्तर उपपत्तेरित्यधिकरणम् ॥

'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयती'त्युपक्रम्य श्रूयते, 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इत्यादि, 'तत्र अधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मञ्च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति' श्रूयते,

तत्र संशयः, किमन्तर्याम्यधिदैवादिषु सर्वत्रैक एव अथाधिदैवादीनां नामभेदाद् भिद्यत इति, सामान्यत'स्त्वन्तस्तद्धर्मोपदेशा'दितिन्यायेनात्रापि ब्रह्मत्वं सिद्धमेव, तथा शब्दभेदात् सन्दिह्यते, अधिदैवादिपड्भेदा आधारधर्मा भगवत्युपचर्यन्ते अथवा सञ्ज्ञाविशिष्टा अन्य एवेति,

तत्र तत्तदधिकृत्य यो वर्तते अभिमानेन तस्य तादृशशब्दप्रयोगः, अधिलोकादयश्च शाखान्तरेऽन्यत्रैव प्रसिद्धाः योगख्यापकाः पञ्चस्वधिकरणेषु 'अधिलोकमधिज्योतिष'मित्यादि, अतोऽधिदैविकादिशब्दा यौगिकाः सन्तो न भगवति वर्तितुमुत्सहन्ते, नाप्यन्ये कल्पनीया

व्यापार, स च हृद्देशे, तत्र च छायापुरुषासम्भवादुपासनोच्छेद इत्यर्थः, तादृशपुरुषस्य छायात्वोक्तौ दूषणान्तरमाहुः **तादृशधर्मे**त्यादि, छायापुरुषेऽभयामृतत्वादिधर्माणा असम्भव इत्यर्थ, **आसुरत्व**मित्यादि तथाच 'अथ योयं भगवोऽप्सु परिख्यायत इत्यासुर'मितिप्रतिबिम्बोपासकस्य ब्रह्मणासुरत्वोक्त. उपासकस्यासुरत्वापत्तिरित्यर्थ, **चकारार्थः** सौत्रचकारार्थ, उपसहरन्ति **तस्मा**दित्यादि, **एतद्वाक्यं** 'य एषोऽक्षिणि पुरुष' इतिवाक्य, नन्वक्षिमात्रस्थितत्वं व्यापकस्य ब्रह्मणः कथ सम्भवेदत आहु. **व्यापके**त्यादि, तथा च न तन्मात्रस्थितत्व ब्रूम. किन्तु सर्वत्र विद्यमानस्य चक्षुषि स्थितत्व, **भगवानेव** अक्षिपुरुषो भगवानेवेत्यर्थ, ननु 'सर्वतः पाणिपादान्त ब्रह्म' किमिति स्वीक्रियत इत्यत आहु **ब्रह्मवाद** इति 'स ह एतावानास' 'एकोह बहु स्या'मित्याद्युक्तो ब्रह्मवादस्तस्मिन् **एषैव मर्यादा** 'सर्वत. पाणिपादान्तत्वमर्यादा ब्रह्मण' इत्यर्थ., ननूपासनाविषयस्य सगुणत्वादक्षिपुरुषस्य कथ परब्रह्मत्वमुच्यत इत्यत आहु. **सगुणे**त्यादि **ब्रह्मवादे**त्यादि 'त त्वौपनिषद'मित्याद्युपनिषदर्थाज्ञानादित्यर्थ ॥ १७ ॥

॥ इति प्रथमाध्याये द्वितीयपादे पञ्चममन्तर उपपत्तेरित्यधिकरणम् ॥

अधिकरणमारचयितु बृहदारण्यकस्थविषयवाक्यमाहु. **य इमं चे**त्यादि, इमं जीवदशाकालीनं, परं उत्तरकालीन, **अन्तरो यमयती**त्यादि सर्वाणि भूतादीनि अन्त स्थितो आमयतीत्यर्थ.,

सशयमाहु **किमन्तर्यामी**त्यादि. **अधिदैवादिष्वि**त्यादि अधिदैवादीत्यनेन षट्स्थानानामधिष्ठाता एक इत्येका कोटि, द्वितीयामाहुः **अथाधिदैवादीना**मित्यादिना, **नामभेदाद्भिद्यते** इति, शब्दान्तराभ्याससङ्ख्यागुणक्रियानामधेयाना षण्णा भेदकत्वस्य पूर्वतन्त्रे सिद्धत्वात्, षडभिमानिनो भिन्ना एवेत्यर्थ., **सामान्यतः** अधिदैवादिषट्शब्दभेदानदृष्ट्वा, अत्रापि 'यः पृथिव्यां' इतिवाक्यार्थेपि, तथापि **शब्दभेदात्** अधिदैवादिषट्शब्दभेदात्, उक्तसशय दृढीकुर्वन्ति **अधिदैवादिषड्भेदा** इत्यादिना **आधारधर्मा**. देवलोकवेदयज्ञभूतात्मान आधारा ब्रह्मणस्तद्गताः षड् भेदा स्फटिके जपाकुसुमारुणिमान्यायेन भासन्ते तथाच सर्वत्राधिष्ठाता एक एवेतिसिद्ध, द्वितीयकोटिस्तु **अथवे**त्यादि, **सञ्ज्ञाविशिष्टाः अन्य एव** षट् परमात्मभिन्ना एवेत्यर्थ,

सशयमुपपाद्य पूर्वपक्षमाहु **तत्रे**त्यादिना, **तत्र** विषयवाक्ये, **तत्त**दित्यादि तत्तदधिकरणं स्वीकृत्येत्यर्थ., **अभिमानेन** अधिकरणभेदाभिमानेन, **तस्ये**त्यादि तत्तदधिकरणाभिमानेतत्तच्छब्दवाच्यत्व तु ब्रह्मण इत्यर्थः, **अधिलोकादयः** अधिलोकादिशब्दा इत्यर्थ', **शाखान्तरे** तैत्तिरीयाणा शिक्षोपनिषदि, पञ्चाधिकरणान्याहु **अधिलोक**मित्यादिना. **न भगवती**त्यादि तथा च तेभिमानिनो भिन्ना एवेत्यर्थ., ननु बहूना कल्पने गौरवाद् विद्यया प्राप्तसामर्थ्यः कश्चित्तादृशाधिकारी जीवस्तादृशसामर्थ्यवान् योगी प्रधानं वा एक एवाधिष्ठाता कल्पनीय इत्यत आहुः **नाप्यन्य** इत्यादि, **उपचारे**त्यादि यद्धर्मसदृशा धर्मा भगवति भवेयुरित्यर्थ, तथा च तत्तदधिष्ठात्री

१ अथाधिदैवादीना भेदाद् भिद्यतइत्यपि पाठ.।

यद्धर्मा उपचाराद् भगवति भवेयुः, कल्प्यमानस्य सर्वानुस्यूतस्य तादृशस्य भगवद्व्यतिरिक्तस्यासम्भवात्, तस्मादन्तर्यामिब्राह्मणं कुत्राप्ययुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति, अज्ञानश्चासन्देहे सन्देहवदुपपद्यते, 'देहोऽसवोऽक्षा' इतिन्यायाद्वा, न तु निषिद्धसञ्ज्ञा भगवति कल्पयितुं शक्येत्येवम्प्राप्ते, उच्यते,

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । १८ । (१-२-६)

अन्तर्याम्यधिदैवादिषु, अधिदैवादिष्वन्तर्यामी भगवानेव, नान्यस्तादृशो भवितुमर्हति, ननु चोक्तं भगवति कथं निषिद्धकल्पनमिति तत्राह तद्धर्मव्यपदेशात्, तेषां धर्माः तद्धर्माः तत्प्रयुक्तिबोधकाः, ते विशेषेण भगवत्यपि दृश्यन्ते, सर्वेषां तत्तत्कार्यं सामर्थ्यञ्च भगवतो न तु स्वतस्तेषामिति, एवं सत्यन्यत् सर्वं सङ्गतं भवति, तस्माद् ब्रह्मवाक्यमेव,

अन्यथा त्वधिकरणरचना अन्तस्तद्धर्माधिकरणेन गतार्थत्वादयुक्तैव ॥ १८ ॥

---

देवता तादृशीतिभावः, प्राप्तसामर्थ्यजीवयोगिनां नियामकत्वोक्तौ 'य आत्मनि तिष्ठन्नात्मनोन्तर' इतिश्रुतेस्तस्यापि नियामकोन्यो वक्तव्यः, स नियामको ब्रह्मभिन्नश्चेत्तस्यापि नियामकोन्यो वाच्य इत्यनवस्था, देवतायास्तन्नियामकत्वाङ्गीकारे तु सर्वत्रैव तस्या नियामकत्वसम्भवेन्यवैयर्थ्यमित्यर्थः, प्रधानस्यान्तर्यामित्वाधिष्ठातृत्वाङ्गीकारे तु तत्रोक्तस्येच्छावत्वश्रोतृत्ववक्तृत्वविज्ञातृत्वादीनामनुपपत्तिः, तस्य जडत्वेन तत्र तेषामसम्भवादितिभावः, उपसंहरन्ति तस्मादित्यादि, तत्तदभिमानीत्यादि देवलोकादीनामभिमानिदेवतेत्यर्थः, स्तुतिपरमित्यादि अधिदेवतावाक्यं अन्तर्यामिवाक्यं च तत्तदभिमानिदेवतायाः उपासनार्थं स्तुतिपरमित्यर्थ, नन्वभिमानिदेवतायाः विग्रहादिसकलोपकरणयुक्तायाः 'यं पृथिवी न वेदे'त्याद्यज्ञानोक्तिरयुक्तेत्यत आहु अज्ञानं चेत्यादि, असन्देहेत्यादि, तथा च 'सोङ्ग वेद यदि वा न वेदे'त्यत्र यथा कल्पनया सन्देह उच्यते तथात्राज्ञानमपि स्थूणाखननन्यायार्थं कल्पनयोच्यते इत्यर्थः, इत्थं च तत्र एकवचनमपि 'यं पृथिवी न वेदे'त्यादिरूपं जात्यभिप्रायकं, अन्तर्यामित्वं तु देवतात्वात्, अमृतत्वं चास्मदाद्यपेक्षया बहुकालस्थायित्वात्, ननु जडायाः पृथिव्याः अज्ञानोक्तिरयुक्तेत्यत आहुः, देहोऽसव इत्यादि, इदं वाक्यं षष्ठस्कन्धे दक्षस्तुतावस्ति, 'देहोऽसवोक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे'इति, अर्थस्तु देहः प्रसिद्धः, असवः प्राणाः, अक्षा इन्द्रियाणि, मनवोन्तःकरणानि, भूतानि तन्मात्राश्च, आत्मानं स्वस्वस्वरूपाणि, अन्य स्वभिन्नं, विदुः परं, यत्सर्वं जीवः पुमान् वेद, सर्वकारणीभूतगुणांश्च पुमान् वेद, तज्ज्ञः पूर्वोक्तसर्वज्ञोपि, यमनन्तं सर्वज्ञं न वेद, तं ईडे स्तौमीत्यर्थः, तथा चात्र देहादिजडानामज्ञानोक्तिर्नित्यानुवादस्तथा 'यं पृथिवी न वेदे'त्यत्रापि बोध्यमित्यर्थः, ननु कोयमाग्रहः? भगवानेव तत्तदधिष्ठाता एक एवास्त्वित्यतआहुः निषिद्धेत्यादि, निषिद्धसञ्ज्ञा अभिमानीतिसञ्ज्ञा, सा भगवति कल्पयितुमयुक्ता इतिहेतोस्ते भिन्ना एवेत्यर्थ., इति प्राप्ते उक्तरीत्या पूर्वपक्षे प्राप्ते, उच्यते सिद्धान्त उच्यते इत्यर्थः,

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ सूत्रेण सिद्धान्तमाहुः अन्तर्यामीत्यादि, सौत्रान्तर्यामिशब्दस्यार्थः अधिदैवादिष्वन्तर्यामीति, एतस्यापि निष्कृष्टार्थमाहुः अधिदैवादिष्विति, तथा च पृथिवीमारभ्य अधिदैवमारभ्यात्मपर्यन्तं सर्वत्रान्तर्यामी भगवानेव, तादृशः सर्वेषामात्मरूपोमृतोन्तर्यामी चेत्यर्थः, सौत्रं हेतुं योजयितुमाहुः नन्वित्यादि, निषिद्धेत्यादि अभिमानीतिसञ्ज्ञाकल्पना निषिद्धकल्पनेत्यर्थः, सौत्रं हेतुं व्याकुर्वन्ति तेषां धर्मा इत्यादिना, तेषां पृथिव्याद्यभिमानिनां जीवस्थानीयदेवानामित्यर्थः, धर्माः अभिमानादियावत्तत्कृतिसामर्थ्यादिरूपाः, तत्प्रयुक्तिबोधकाः स्वेषु भगवत्प्रेरितत्वबोधका इत्यर्थः, ते अभिमानिधर्माः, विशेषेण नियम्यनियामकभावसम्बन्धेन, अपि दृश्यन्ते अभिमानिष्विव भगवति अपि भासन्ते इत्यर्थः, एवं सति एकस्य भगवतः पूर्वोक्तसर्वान्तर्यामित्वे सिद्धे सति, अन्यत्सर्वं 'एष ते आत्मान्तर्याम्यमृत'मित्यादि, सर्वं सङ्गतं भवति यथाश्रुतार्थमेव सङ्गतं भवति, न तु लक्षणाकरणादिकमपीत्यर्थः, एवमदृष्टाश्रुतत्वादिकमपि लौकिकेन्द्रियाग्राह्यत्वादुपपद्यते, एवमेकवचनमपि, उपसंहरन्ति तस्मादित्यादि,

ये तु तस्य भगवतो धर्मास्तेषामभिमानिषु अतिदेश इत्यधिकरणरचनामाहुस्तन्मतं दूषयितुमाहुः अन्यथेत्यादि ॥ १८ ॥

---

१. अन्तर्यामी अधिदैवादिष्वित्यपि पाठ. । २. अपदिश्यन्त इत्यपि पाठः ।

ननु ब्रह्मवादे अन्तर्यामी न प्रसिद्धः, जीवब्रह्मजडानामेव प्रसिद्धत्वात्, अतोऽन्तर्यामिणः साङ्ख्यपरिकल्पितस्य गुणयोगात्तादृशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत्? नहीश्वरं प्रकृतिधर्मारूढमन्तर्यामिणं मन्यन्ते, तादृशस्योपनिषत्स्वभावात्, पूर्वपक्षन्यायेन स्तुतिपरता, तन्मतस्य चाश्रौतत्वमित्याशङ्क्य परिहरति,

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

नच स्मार्तं स्मृतिप्रसिद्धं स्मार्तं साङ्ख्यमतसिद्धमिति यावत्, तादृशमन्तर्यामिरूपमत्र भवितुं नार्हति, कुतः? अतद्धर्माभिलापात्, तद्धर्माणामनभिलापात् तद्विरुद्धधर्माणां चाभिलापात्, नह्यत्र सत्त्वरजस्तमोगुणास्तत्कार्यं वा अभिलप्यते, तद्विरुद्धाश्चैते धर्मा 'यस्य पृथिवी शरीर'मित्यादि, तस्मात् साङ्ख्यपरिकल्पितं नान्तर्यामिरूपमत्र भवितुमर्हतीति सिद्धं, एवं सति ब्रह्मधर्मा एवैते भवन्तीति ब्रह्मवादः फलिष्यति ॥ १९ ॥

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

ननूक्तन्यायेन शारीर एव भवतु, को दोषः? किमिति ब्रह्मपरत्वं कल्प्यमिति, तत्राह,

शारीरश्च, नेत्यनुवर्तते, शारीरश्च जीवो नान्तर्यामिब्राह्मणे तत्तदभिमानिरूपो 'यस्य पृथिवी शरीर'मितिवाक्यानुरोधेन भवितुमर्हति, ततोऽपि भिन्नतयान्तर्यामिणो वचनात्, उभयेऽपि काण्वमाध्यन्दिनब्राह्मणद्वयेऽपि एनञ्जीवं भेदेनैवाधीयते ब्राह्मणाः, निःसन्देहार्थमुभयग्रहणं, 'यो विज्ञाने तिष्ठ'न्निति काण्वाः, 'य आत्मनि तिष्ठ'न्निति माध्यन्दिनाः, न चात्मशब्देनान्यः सम्भवति, अन्येषां पूर्वमेव पठितत्वात्, अन्ते हि जीवमाह, तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ २० ॥

॥ इति प्रथमाध्याये द्वितीये पादे षष्ठमन्तर्यामीत्यधिकरणम् ॥

---

प्रधानस्यान्तर्यामित्व परिहर्तुं सूत्रमाह न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ सूत्रमवतारयितुमाशङ्कामाहु नन्वित्यादि, ब्रह्मवादे 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं' इति हि ब्रह्मवाद·, अन्तर्याम्यप्रसिद्धौ हेतुमाहु· जीवेत्यादि, ब्रह्मणः कारणत्वेन जडजीवयोः कार्यत्वेन प्रसिद्धत्वादित्यर्थ·, अतः यतो वेदान्तेष्वन्तर्याम्यप्रसिद्धोऽत इत्यर्थ, ननु प्रकृत्यवच्छिन्नपुरुषस्य साङ्ख्यप्रसिद्धस्यान्तर्यामित्व वाच्यमत आहुः गुणेत्यादि, तथा च सत्त्वादिगुणयुक्तस्यान्तर्यामित्वे तादृशस्य सगुणस्य वा ब्रह्मत्वे कः पुरुषार्थो भवेत्? न कोपीत्यर्थः, प्रकृतिधर्मारूढं प्रकृतिधर्मगुणयुक्तं, मन्यन्ते उपनिषद· मन्यन्ते इत्यर्थः, तत्रहेतुस्तादृशस्येत्यादि, तादृशस्य सगुणस्य, पूर्वपक्षन्यायेन पूर्वोक्तरीत्या, स्तुतिपरता प्रकृत्यधिष्ठातुरुपासनार्थमन्तर्यामिब्राह्मणं तत्स्तुत्यर्थमित्यङ्गीकार्यं, तन्मतस्य साङ्ख्यमतस्य, चाश्रौतत्वमङ्गीकार्यमित्याशङ्केत्यर्थः,

एवं पूर्वोक्तरीत्याशङ्क्यान्तर्यामिब्राह्मणस्य देवतास्तुतिपरतायाः अग्रिमसूत्रे निराकर्तव्यत्वात् साङ्ख्यमतस्य चाश्रौतत्वं निराकरोति सूत्रकार इत्याहुः न च स्मार्तमित्यादिना, स्मार्तपदस्यार्थमाहुः स्मृतिप्रसिद्धमित्यादिना, तादृशं प्रकृत्यधिष्ठातृरूपं, अत्र श्रुतिषु, तद्धर्माणां प्रकृत्यधिष्ठातृविरुद्धधर्माणामित्यर्थ·, अत्र अन्तर्यामिब्राह्मणे, तत्कार्यं उत्पत्तिस्थितिलयाः, उपसहरन्ति एवं सतीत्यादि, एते 'यः पृथिव्यां तिष्ठ'न्नितिब्राह्मणोक्ताः ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ सूत्रमवतारयन्ति नन्विति, उक्तन्यायेन यथा संवर्गविद्याया ब्रह्मत्वेन जीवोपासनरूपाया ब्रह्मविद्याङ्गत्वं तथान्तर्यामिविद्याया अप्यस्तु, तथाचान्तर्यामिब्राह्मणं शारीरस्योपासनार्थं ब्रह्मत्वेन स्तुत्यर्थमिति शारीरस्य जीवस्यान्तर्यामित्वे न कोपि दोष इत्यर्थ·, नेत्यनुवर्तते पूर्वसूत्रादनुवर्तनीयमित्यर्थः, सूत्रेण समाधानमाहु· शारीरइत्यादिना, तत्तदभिमानीत्यादि देवाद्यात्मान्तानामधिष्ठातेत्यर्थः, वचनादित्युक्तं वचनमेवाहुः उभयेऽपीतिसूत्रभागेन, उभयग्रहणं सूत्रे उभये इत्युपादानमित्यर्थ·, निःसन्देहार्थमित्यत्र विज्ञानपदेन बुद्धिसन्देहः स्यात्तन्निवारणं च द्वितीयश्रुतावात्मनि इति आत्मपदग्रहणाद् बोध्यं, नन्वतति व्याप्नोतीत्यात्मेतियोगात् मनोदिगाकाशादय एव कुतो न गृह्यन्त इत्यत आहुः नचात्मेत्यादि, अन्येषां देवभूताद्यात्मान्तानां, पठितत्वात् अन्तर्यामिनियम्यत्वेन पठितत्वादित्यर्थः, उपसहरन्ति तस्मादित्यादि ॥ २० ॥

॥ इति प्रथमाध्याये द्वितीये पादे षष्ठमन्तर्यामीत्यधिकरणम् ॥

मुण्डके हि श्रूयते, 'कस्मिन्नु भगवो विज्ञात'इतिपृष्टे 'द्वे विद्ये वेदितव्ये' इत्युत्तरमाह,

तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशे वेदादिः, रूपांशे परा च, तत्र वेदादिविद्यायां न सन्देहः, परायां सन्दिह्यते, किमेषा साङ्ख्यमतविद्या ब्रह्मविद्या वेति, साङ्ख्यधर्माभिलापात् सन्देहः, 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीरा' इत्यादि, अग्रे च 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः पर' इति उक्त्वा 'एतस्माज्जायत' इति निरूप्य 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्या'वित्यादिना रूपमुक्त्वा पुनः पुरुषात् सृष्टिमाह,

तत्रैकप्रकरणत्वादेकवाक्यता वक्तव्या, तत्राक्षरपुरुषयोर्भेदः प्रतीयते, तयोरुभयोरपि सृष्टिः, तद् ब्रह्मवादे न सङ्गच्छते, तस्मात्साङ्ख्यमतमेवैतत्, प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येनोभयोः स्रष्टृत्वं, उभयात्मकत्वात् जगतः, रूपमपि, समष्टिव्यष्टीनामग्रे ह्युत्पत्तिरिति, तिरोहितरूपत्वान्न ब्रह्मविद्या किन्तु स्मृतिरेवेति, ब्रह्मविद्या वेदविद्या, उपचाराद्वेति, एवं प्राप्ते उच्यते,

---

अथर्वणोपनिषदि मुण्डके श्रूयतेऽस्य विषय, तत्रोपक्रमे 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति, ततोऽङ्गिरा उवाच 'द्वे विद्ये वेदितव्ये' इत्युत्तरमाह,

**नामरूपात्मकस्य जगतः** सर्वशब्दाभिधेयस्य **विज्ञानार्थं**, तत्र **नामांशे**परा विद्योक्ता ऋग्वेदो यजुर्वेदः सामवेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासः पुराणं न्यायो मीमांसा धर्मशास्त्राणीति, एतद्विद्यायाः अपरत्वं तु शाब्दज्ञानजनकत्वेन, तत्र तु सन्देह एव नास्तीति तस्यां विचारो न युक्त इति **परायामेव** रूपात्मकस्य जगतो विज्ञानार्थमुक्तायां सामान्यशब्ददर्शनाद्भवति संशयः, सा च 'परा यया तदक्षरमधिगम्यत'इत्यधिगमोपायत्वात्तस्याः, अधिगमश्चापरोक्षसाक्षात्कार एवात्र ग्राह्योऽन्यथा परत्वानुपपत्तेः, तत्र सन्देह. **सन्दिह्यते** इत्यनेनोच्यते, **साङ्ख्यविद्या** भूतकारणप्रधानविद्या, **साङ्ख्यधर्मे**त्यादि अक्षरशब्दाभिलापादित्यर्थ., अक्षरशब्देन प्रधानं अक्षरं ब्रह्म वेतिसन्देह इत्यर्थः, सन्देहबीजमुपपादयन्ति **अथे**त्यारभ्य **सृष्टिमाहे**त्यन्तग्रन्थेन, 'परिपश्यन्ति धीराः'इत्यन्तं प्रथममुण्डकीयमुक्त्वा द्वितीयमुण्डकीयमाहुः **अग्रे चे**त्यादिना, तथा चादृश्यत्वादिगुणकप्रधाने पूर्वमुण्डकोक्ते भूतयोनित्वस्य साङ्ख्यैरङ्गीकारात्, द्वितीयमुण्डके च 'दिव्यो ह्यमूर्त.' इत्यादिना पुरुषस्वरूपं निरूप्य ततोऽग्रे 'पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः'इतिकथनात्, प्रकृत्या सह संयोगात्पुरुषेण सृष्टिरुक्तेति संशयबीजमुक्तम्,

पूर्वपक्षमाहु. **तत्रे**त्यादिना, **एकवाक्यता** एकार्थप्रतिपादकता, नन्वस्त्वेकवाक्यता को दोष इत्यत आहुः **तत्राक्षरे**त्यादि, **भेद**इति अदृश्यत्वादिगुणकं प्रधानमुक्तं तदभिन्नमग्निर्मूर्धेत्यादिरूपं च पुरुषस्वरूपमुक्तमितिभेदादतो नैकवाक्यता एकार्थप्रतिपादकत्वाभावादितिभाव, **तयो**रित्यादि प्रधानपुरुषोभयस्मात् श्रुत्या सृष्टिरुच्यते इत्यर्थ', 'तथाक्षरात्सम्भवतीह विश्व'मित्यक्षरतः, 'एतस्माज्जायते प्राण' इतिपुरुषतः, **तद् ब्रह्मवादे** इत्यादि, तथा च ब्रह्मवादे ब्रह्मातिरिक्तवस्तुनोऽभावेन ब्रह्मण एव अभिन्ननिमित्तोपादानताङ्गीकारात् द्वयो' कारणत्वं न सङ्गच्छते इत्यर्थः, पूर्वपक्षमुपसंहरन्ति **तस्मादि**त्यादिना, **तस्मात्** उक्तकारणताया ब्रह्मवादेऽसम्भवादित्यर्थः, **एतत्** उभयोःकारणताप्रतिपादकं, **अन्यतरप्राधान्येन** प्रकृतिप्राधान्येन पुरुषस्य निर्लेपत्वादित्यर्थः, **उभयात्मकत्वात्** जडजीवोभयात्मकत्वादित्यर्थः, ननु पुरुषस्य नीरूपत्वात् कथं तत्र रूपनिरूपणमत आहुः **रूपमपी**ति, तथा च प्रकृतिश्लेषात्तदीयमेव रूपं पुरुषे नतु वास्तवमितिभावः, **समष्टिव्यष्टी**त्यादि 'तस्मादग्निः समिद्धो यस्ये'त्यारभ्य व्यष्ट्युत्पत्तिरुक्ता, 'पुरुष एवेदं विश्व'मित्यादिना समष्टेरिति[1] ध्येयं, तत्र सार्वज्ञोक्तिरपि पुरुषोपरागाद्बोध्या, ननु ब्रह्मविद्यैवैषा कुतो न स्यादत आहुः **तिरोहिते**त्यादि, सच्चिदानन्दानां तथानिरूपणान्न ब्रह्मविद्येत्यर्थः, **स्मृतिरेव** साङ्ख्यमतविद्यैवेत्यर्थः, ननु तर्ह्युपक्रमे ब्रह्मविद्येति कथमुक्तमत आहु' **वेदविद्ये**ति, वेदोक्तत्वादित्यर्थः, ननु सर्वविद्याप्रतिष्ठारूपत्वमस्याः कथमुक्तमतआहुः **उपचारात्** ,कारणत्वेन प्रकृतिपुरुषयोर्ब्रह्मसाम्यात् तयोर्विद्याया अपि ब्रह्मविद्यासाम्यादग्निर्माणवक इतिवत्सदृशलक्षणयोपपत्तेरित्यर्थः, **एवम्प्राप्ते** पूर्वोक्तरीत्या पूर्वपक्षे प्राप्ते, **उच्यते** समाधानमुच्यते इत्यर्थः,

---

१. समष्टेरित्यपि पाठ ।

## अदृश्यत्वादिगुणको धर्मोक्तेः । २१ । ( १-२-७ )

अदृश्यत्वादिगुणकः परमात्मैव, ब्रह्मविज्ञानेनैव सर्वविज्ञानात्, तत एव विद्याया अपि परत्वं, अक्षरस्यापि ब्रह्मत्वं, पुरुषस्यापि, तयोः परापरभावः अभेदश्च, एतादृश एव ब्रह्मवादः, तत्र प्रथममक्षरस्य ब्रह्मत्वमाह, अदृश्यत्वादिगुणकः परमात्मैव, कुतः? धर्मोक्तेः, 'तथाक्षरात्सम्भवतीह विश्व'मिति, इयं चोपनिषत्, न ह्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्तिरस्ति, पुरुषस्य ब्रह्मत्वं निःसन्दिग्धमेव, ईषदानन्दतिरोभावेन ब्रह्माक्षरमुच्यते प्रकटानन्दः पुरुष इति 'ब्रह्मविदाप्नोति पर'मित्यत्रैव तथानिर्णयात्, तस्माददृश्यत्वादिगुणकः परमात्मैव ॥ २१ ॥

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिर्ब्रह्मविद्यैवास्तु, 'द्वे ब्रह्मणी वेदितव्ये मूर्तं चामूर्तं चे'त्यत्र विकारस्यैव ब्रह्मपदवाच्यत्वं, अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति,

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतरौ न भवतो वाक्यार्थरूपौ, कुतः ? विशेषणभेदव्यपदेशाभ्यां, विशेषणभेदः व्यपदेशश्च ताभ्यां, अदृश्यत्वादयो गुणा न प्रकृतेर्भवन्ति, सर्वस्यापि तद्विकारत्वात्, न हि घटदर्शनेन मृन्न दृश्यत इति वदितुं युक्तं, ब्रह्मवादे पुनः सर्वभवनसमर्थत्वात् ब्रह्मणि विरोधाभावः, न हि नित्यं सदैकरूपं विक्रियमाणञ्च भवितुमर्हति, सर्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः, 'यः सर्वज्ञः सर्ववि'दित्यादयस्तु सुतरामेव न प्रकृतिधर्माः, व्यवधानाच्च न

---

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ अदृश्येत्यादि तथाच योऽदृश्यत्वादिगुणकः परविद्यासम्बन्धित्वेनोक्तः सः परमात्मैव, धर्मोक्तेः यतस्तस्यैव धर्माः अस्यां विद्यायां बहुश प्रतिपाद्यन्ते, तथाहि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति एकविज्ञानेन सर्वविज्ञानोपपत्ति. सर्वात्मके ब्रह्मण्येव युज्यते, तत एव परमात्मसम्बन्धित्वादेव, परत्वं 'अथ परे'तिविद्याया. परत्वं सर्वोत्कृष्टविषयत्वे एव सम्भवेदित्यर्थः, नन्व'क्षरात् परतः पर'इत्यनेनाक्षरभिन्नोत्कृष्टस्यैव पुरुषस्य ब्रह्मत्वमित्यक्षरस्य प्रधानत्वमेवोरीकार्यमतआहुः एतादृश इति, तत्र परापरब्रह्मणोर्मध्ये, धर्मोक्तेः विश्वजननधर्मोक्तेरित्यर्थः, तदेवाहुः तथाक्षरादित्यादिना, उपनिषत् ब्रह्ममात्रप्रतिपादिका, अत्र उपनिषदि, तथानिर्णयात् परापरभावनिर्णयात्, उपसंहरन्ति तस्मादित्यादि, तस्मात् अक्षरशब्दस्य ब्रह्मपरत्वनिर्धारणात् ॥ २१ ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ सूत्रमवतारयन्ति नन्वित्यादि, पूर्वपक्षेत्यादि, यदुक्तं अत्रोपनिषदि अक्षरशब्देन प्रधानोक्तौ ब्रह्मविद्येतिसमाख्या कथमुपपद्यते इति तत्रोच्यते स्मृतिरित्यादि, स्मृतिरेव ब्रह्मविद्येतियोजना, मूर्तं प्रधानं, अमूर्तं पुरुष इत्यर्थः, विकारस्य जगत्परिणामिनः प्रधानस्य, एवकारोऽप्यर्थस्तेन पुरुषस्यापि ब्रह्मत्वं, अतः अनयोर्ज्ञानस्यैव श्रुतौ ब्रह्मविद्यात्वेनानुवादात्, वाक्यार्थः स्मृत्यनुवादो भूतोपनिषद्वाक्यार्थः, परिहरति उक्तपूर्वपक्षं सूत्रकारः,

इतरौ सांख्यमतपरिकल्पितौ प्रधानपुरुषौ, नेत्यादि उपनिषद्वाक्यार्थरूपौ न भवत इत्यर्थः, पृच्छति कुत इति, उत्तरमाह विशेषणेत्यादि, विशेषणमदृश्यत्वादि, व्यपदेशो ब्रह्मशब्दवाच्यत्वं, ताभ्यां, इतरौ उपनिषदि वाक्यार्थौ न भवत इत्यर्थः, तदेवोपपादयन्ति अदृश्यत्वेत्यादिना, सर्वस्यापि घटपटादेरित्यर्थः, तद्विकारत्वात्, जगति विद्यमानपदार्थदर्शने सति प्रकृतेर्दृश्यत्वमुपपादयन्ति न हीत्यादिना, सर्वभवनेत्यादि, तथा चादृश्यस्यापि ब्रह्मणः कर्तुमकर्तुं सर्वशक्तिमत्त्वेन कार्यस्य प्रत्यक्षत्वेपि स्वस्यादृश्यत्वमुपपद्यत एवेति न विरोध इत्यर्थः, नन्वेवं सर्वशक्तिमत्त्वं प्रधानेप्यस्त्वित्यत आहुः नहीत्यादि, अदृश्यत्वादिकतिपयधर्माणां प्रधाने सत्त्वेपि नित्यत्वसदैकरूपत्वाविक्रियमाणत्वादिधर्मवत्प्रधानं भवितुमर्हतीति तु नेत्यर्थः, ननु सर्वशक्तिमत्त्वादि यावद्ब्रह्मणि भवद्भिः स्वीक्रियते तावत्सर्वं प्रधानेप्यस्माभिः स्वीकार्यमत आहुः सर्वब्रह्मेत्यादि, तथा च ब्रह्मण एव प्रधानेतिनामान्तरं सिद्धं न तु प्रधानपदवाच्यं पदार्थान्तरमपि भवदभिमतं सिद्धमिति ब्रह्मवादिभिर्जितमित्यर्थः, पुनर्विशेषणभेदमाहुः यः सर्वज्ञ इत्यादि, न प्रकृतिधर्माः यः सर्वज्ञ इत्यादय. न प्रकृतिधर्माः, प्रकृतेर्जडत्वान्न प्रकृतिधर्मा इत्यर्थः, ननु प्रकृत्यसंभववृत्तीनां धर्माणां पुरुषविशेषणताङ्गीकार्येत्यत आहुः व्यवधानादित्यादि, प्रथममुण्डके-

पुरुषसम्बन्धः, अक्षरनिरूपण एव पुरुषविशेषणाच्च, 'येनाक्षरं पुरुषं वेद सत्य'मिति, तस्मादक्षरविशेषणानि न प्रकृतिविशेषणानि, नापि पुरुषविशेषणानि साङ्ख्यपुरुषस्य, न हि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति, न हि तन्मते पुरुषभेदोऽङ्गीक्रियते जीवब्रह्मवत्, न च तस्य बाह्याभ्यन्तरत्वं सर्वत्वाभावात्, न हि तस्माज्जायते प्राणादिः, तस्मात् पुरुषविशेषणान्यपि न साङ्ख्यपुरुषविशेषणानि, अतो विशेषणभेदः, व्यपदेशभेदश्च ब्रह्मविद्यैवेति, 'स ब्रह्मविद्यां सर्वविद्या'मित्युपक्रमे 'प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मितिमध्ये 'तेषामेवैतां ब्रह्मविद्यां वदे' त्यन्ते, तस्मान्न साङ्ख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः, न हि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदतीति चकारार्थः ॥ २२ ॥

## रूपोपन्यासाच्च ॥ २३ ॥

'अग्निर्मूर्धा चक्षुषी'त्यादिरूपं नहि प्रकृतिपुरुषयोरन्यतरस्य सम्भवति, ब्रह्मवादे पुनर्विश्व[1]कायस्यैतद् रूपं, सूत्रविभागात् पुनर्मुख्योपपत्तिरेषेति सूचितम्, चकारेण श्रुत्यन्तरै[2]र्विरोधः,

दृश्यत्वसर्वज्ञत्वादिधर्मा उक्ता, द्वितीयमुण्डके च पुरुषो निरूपित इति प्रहरे प्रहरे सहोच्चारिततुल्यत्वेनासत्तिरूपकारणाभावेन पुरुषविशेषणत्वेन तेषां बोधो बाधित इत्यर्थः, पुनर्विशेषणान्तरमाहुः अक्षरनिरूपणइत्यादि अक्षर एव पुरुषत्वसत्यत्वादिविशेषणानां निरूपणादित्यर्थ, एतदेवोपपादयन्ति येनाक्षरमित्यादि तथा चोपनिषदि अक्षरपदं अक्षरब्रह्मण पुरुषस्य बोधकं न तु प्रधानस्येत्यर्थ, नापि पुरुषेत्यादि साङ्ख्यमतप्रसिद्धपुरुषस्यापि विशेषणानीमानि नेत्यर्थः, ननु साङ्ख्यमतप्रसिद्धपुरुषे उक्तविशेषणसत्वे किं बाधकमत आहुः नहि दिव्यत्वेत्यादि साक्षित्वकैवल्यमाध्यस्थत्वादृश्यत्वाकर्तृत्वातिरिक्तधर्माणा पुरुषे तैरनगीकाराद् दिव्यत्वादयो धर्मास्तन्मतपुरुषे न सम्भवन्तीत्यर्थः, तद्धर्माणामप्यगीकारे तु तेषा मतमेव नश्यतीति स्वाहजिक एव पराजयस्तेषामिति फलित, ननु बहूनां पुरुषाणां मध्ये कश्चनैको दिव्यत्वादिधर्मवानपि भविष्यतीत्यत आहु न हि तन्मतइत्यादि साङ्ख्यानां मते पुरुषभेद एव नास्तीति दिव्यत्वादिधर्मवास्तादृश पुरुषोऽसम्भवीति तन्मते तादृशधर्मबोधकश्रुतिविरोधोऽपरिहार्य इत्यर्थ., ननु नानापुरुषा एव तन्मतेऽप्यगीकार्या इत्यत आहु. जीवब्रह्मवदिति, तथा च ब्रह्मवादे जीवब्रह्मणां नियम्यनियामकभावो न्यूनाधिकभावो धर्मवैषम्य च यथास्ति तथा न तेषां मते, बहुपुरुषागीकारेपि सर्वे समा एवेति तेषां सिद्धान्त., वैषम्यांगीकारे तु तन्मतभङ्ग एव भवेदिति भाव, ननु दिव्यत्व पुरुषे प्रकृतिविलक्षणधर्मवत्त्वमेवास्तां, एकवचन जात्यपेक्षयोपपाद्यं, अमूर्तत्वं चोभयवादिसम्मत, इत्थ च कथ दिव्यत्वानुपपत्त्या तन्मतखण्डनमत आहु न च तस्येत्यादि, तथा च पुरुषे श्रुत्युक्तबाह्याभ्यन्तरत्वं तन्मते बाधितमितिदूषण, तदेवोपपादयन्ति सर्वत्वाभावादिति, तन्मते एकस्यैव पुरुषस्यान्तर्यामिजीवादिनानारूपत्वाभावाद्बाह्याभ्यन्तरत्वादिश्रुत्युक्ति· पुरुषे तन्मते बाधितैवेत्यर्थ., दूषणान्तरमाहुः न हि तस्मादित्यादि, तस्मात् प्रधानात्, तथा च तन्मते महदादिक्रमेणैव सृष्टि, न तु 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी'त्यादिक्रमेणेत्यर्थ, विशेषणभेद व्युत्पाद्य व्यपदेशभेदं व्युत्पादयन्ति व्यपदेशेत्यादि, व्यपदेशो नाम्ना तत्तद्वस्तुनिरूपण, तत्रादिमध्यावसानेषु त्रिषु त्रिष्वपि स्थलेषूपनिषदि ब्रह्मविद्येत्येव व्यपदेश. कृतो न तु क्वचिदपि मध्ये साङ्ख्यविद्या तत्त्वविद्येति वा व्यपदेश कृत इत्यर्थ, उपसहरन्ति तस्मादित्यादि, वाक्यार्थः उपनिषद्वाक्यस्यार्थ., उपपत्त्यन्तरमाहु न हीत्यादि, ब्रह्मा वेदगर्भश्चतुर्मुख इत्यर्थः ॥ २२ ॥

पूर्वोक्तावक्षरपुरुषौ न साङ्ख्यमतसिद्धौ किन्तूपनिषन्मात्रवेद्यावित्यत्र हेतुमाह सूत्रकार. रूपोपन्यासाच्च ॥२३॥ पुनर्विशेषणभेदेन ब्रह्मभेदं तन्मतापेक्षया निरूपयन्ति अग्निर्मूर्धेत्यादिना, न हीत्यादि यथा 'सुदीप्तात्पावकात्' इत्यादिनाऽक्षरात्सृष्टिं निरूप्य तदनन्तरं 'दिव्यो ह्यमूर्त. पुरुष' इत्यनेनाक्षरादुत्कृष्टपुरुषं निरूप्य, तदनन्तरं 'एतस्माज्जायते प्राण' इतिमन्त्रेण एतच्छब्देन पुरुषोत्तम परामृश्य प्राणादिपृथ्वीपर्यन्तानामुत्पत्तिरुक्ता, न हि तत्कारणतायां प्रकृतिनिवेशः सम्भवति, न वा तत् कार्यं क्लिष्टस्य पुरुषस्येतिभावार्थ, ननु ब्रह्मवादेऽग्निर्मूर्धेत्यादि कस्य रूपमत आहु. विश्वेत्यादि, विश्वरूपत्वेन प्रसिद्धस्यैवेद रूपमिति न साङ्ख्यमतगन्धोऽप्यस्तीति भाव., सूत्रविभागेत्यादि, तथा च विशेषणभेदव्यपदेशरूपोपन्यासेभ्यः इति सूत्रमनुक्त्वा यद्भिन्नं सूत्रं रचितं तद्रूपोपन्यासस्यासाधारणं तन्मतनिराकरणहेतुत्वमवधार्यमित्यर्थः, चकारेण सौत्रचकारेण, श्रुत्यन्तरविरोधः अभिन्ननिमित्तोपादानतया ब्रह्मणः कारणताबोधिका श्रुतिः 'एकोऽहं बहु स्या' 'स ह एतावानास'त्यादिरूपायास्तन्मते विरोधः,

१. विश्वाकारस्येत्यपि पाठ. । २. अविरोधइत्यपि पाठः ।

एकवाक्यता च सर्वेषां वेदान्तानामिति, तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविद्यैवैषेति सिद्धम् ॥ २३ ॥

॥ इति प्रथमाध्याये द्वितीये पादे सप्तममदृश्यत्वेत्यधिकरणम् ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ (१-२-८)

अधिकरणत्रयेण भोगमुपपाद्य, पूर्वाधिकरणे अदृश्यत्वादिगुणानुक्त्वा प्रसङ्गाद् रूपमुपन्यस्तं, अधुना साकारब्रह्मतामुपपादयितुमिदमधिकरणमारभते,

'को न आत्मा किं ब्रह्मे'ति, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही'ति चोपक्रम्य 'द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च मूर्धादिभावमुपदिश्याम्नायते, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मात्मा, सन्देहो बहुलो, बस्तिरेव रयिः, पृथिव्येव पादौ, उदर एव वेदिः, लोमानि बर्हिः, हृदयं गार्हपत्यो, मनोऽन्वाहार्यपचनं, आस्यमाहवनीय'इत्यादि,

तत्र संशयः, किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति, अर्थस्यातिसन्दिग्धत्वात्सन्देहः, तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोऽस्ति, नान्यत् किञ्चित्, उपपादने त्वतद्धर्मा एव साकारस्य तु लोकन्यायेनाब्रह्मत्वं, वैश्वानरो यद्यप्यग्नावेव प्रसिद्धः, तथापि पूर्वकाण्डसिद्धत्वा-

यत्किञ्चिच्छक्त्यैकदेशं गृहीत्वा सांख्यैः स्वमतोपपादनं सर्ववेदान्तानामेकवाक्यताभंग इति एते द्वे तन्मतविघटके इत्यर्थः, उपसंहरन्ति तस्मादित्यादि, ब्रह्मविद्यैवेत्येवकारेण साङ्ख्यमतविद्याव्यवच्छेदः ॥ २३ ॥

॥ इति प्रथमाध्याये द्वितीयपादे सप्तममदृश्यत्वेत्यधिकरणम् ॥

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ पूर्वाधिकरणेन साकमस्याधिकरणस्योपोद्धातसंगतिं प्रदर्शयितुं आहुः अधिकरणत्रयेणेत्यादि, अत्ता चराचरग्रहणात्, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्, अन्तरुपपत्तेरित्यधिकरणत्रयेणालौकिकं भोगं भगवत्युपपाद्य, पूर्वाधिकरणे सप्तमाधिकरणे, अदृश्यत्वादीत्यादि अननुगृहीतजनैरदृश्यत्वादीत्यर्थः, प्रसंगात् प्रसंगसंगत्या, तत्र स्वरूपाभावाददृश्यत्वं भविष्यतीतिशंकानिरासाय रूपमुपन्यस्तमित्यर्थः, अधुना वैश्वानराधिकरणेन, 'को न आत्मे'त्यादि इदं च छान्दोग्ये सप्तमप्रपाठके वर्तते, तत्रोपक्रमे प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलनामानः पञ्चापि श्रुताध्ययनसंपन्ना क्वचन समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेत्यादि, अस्मदुपास्य आत्मा कः किं ब्रह्म तदेकदेशो वेतिसंशयो विचारबीजं, ते पञ्चापि स्वयं विचारेण निश्चयमप्राप्यमाणाः उद्दालकनामानं प्रष्टुं गतास्तेन च तद्विद्याविदः कैकेयराजस्य सन्निधौ प्रेषिताः, तत्र गतेषु तेषु कैकेयराजो बहु धनं पुरोहितद्वारा पूजां कृत्वा दातुमुक्तवांस्तैस्तु धनं न गृहीतं, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तं नो ब्रूही'त्युक्तवन्त इति चोपक्रम्य 'ब्रूही'त्यन्तमुक्त्वा द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमुक्त्वा वैश्वानरस्य मूर्धैव सुतेजाः इति एकैकस्मिन् द्युप्रभृतिषु वैश्वानरोपासनमुक्तं, तत एकैकस्मिन् वैश्वानरत्वेनोपासने मूर्धपात इत्येकैकोपासनं निन्दयित्वा, मूर्धादिभावं मूर्धाद्यवयवसम्बन्धं, उपदिश्य वैश्वानरे उपदिश्य, आम्नायते 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'इत्याद्युच्यते इत्यर्थः, द्यौर्मूर्धा सुतेजाः, चक्षुर्विश्वरूपः सूर्यः, प्राणो वायुः, पृथक् वर्त्म स्वभावो यस्य स पृथक्वर्त्मात्मा सन्देहो देहमध्यभागः, बहुलः आकाशः व्यापकत्वात्, बस्तिः नाभेरधोभागः, रयिः जलं तस्यान्नवृत्तिहेतुत्वेन रयिरूपत्वमित्यर्थः, पृथिवी पादौ तस्याः पादस्थितिस्थानत्वादित्यर्थः, सः वैश्वानरोपासकः, लोकेषु द्युप्रभृतिषु, भूतेषु स्थावरजगमेषु, आत्मसु देहेन्द्रियमनोबुद्धिजीवेषु, अन्नमत्ति सर्वेषां सुकृतफलं भुंक्ते इत्यर्थः, एतद्वैश्वानरोपासकस्य भोजनस्याग्निहोत्रतां प्रतिपादयितुं आहुः उदर एव वेदिरित्यादि, अन्वाहार्यपचनं दक्षिणाग्निः,

तत्र संशयः, को न आत्मा किं ब्रह्मेतिवाक्योपक्रमे संशय इत्यर्थः, शंकाया आकारमाहुः किं वैश्वानरेत्यादिना, संशयबीजमाहुः अर्थस्येत्यादि, तथाचोपक्रमे को न आत्मा किं ब्रह्मेति निःसंदिग्धशब्दसत्त्वे वैश्वानरशब्दश्रवणात् द्युमूर्धत्वादिश्रवणात् ब्रह्मणश्च निराकारत्वात् सावयवस्य च ब्रह्मत्वासम्भवात् अर्थस्यातिसन्दिग्धत्वमित्यर्थः, तत्र उपनिषदि, उपक्रमेत्यादि, को न आत्मा किं ब्रह्मेत्यादिब्रह्मत्वनिर्णायकशब्दोऽस्ति, नान्यदित्यादि ब्रह्मत्वनिर्णयविरोधि किंचिन्नास्तीत्यर्थः, उपपादने तु वैश्वानरपुरुषोपपादने तु, अतद्धर्माः मूर्धाद्यवयवरूपाः अब्रह्मधर्माः, वैश्वानरः वैश्वानरशब्दः, अग्नावेव भूताग्नावेव, अथवा पूर्वकाण्डेत्यादि 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्व'न्नित्यादावहः-

देवतात्मपरिग्रहो युक्तः, ततश्च 'संवत्सरो वा अग्निर्वैश्वानर' इतिश्रुतेः संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिदमिति गम्यते, ब्रह्मात्मशब्दावपि हि तत्रैव युक्ततरौ, तदुपासकस्यैवान्नभोजनत्वमपि सर्वत्र युक्तं, प्रादेशमात्रत्वमपि मुख्यजीवत्वादसदाद्यपेक्षया स्थूलत्वाभिप्रायं, विराडभिमानित्वाच्च लोकावयवत्वं, वेदगर्भत्वादग्नित्रयात्मकत्वमिति, तस्माद्धिरण्यगर्भोपासनापरमेवैतद्वाक्यं न भगवदुपासनापरमित्येवम्प्राप्ते, उच्यते,

वैश्वानरः परमात्मैव, कुतः ? साधारणशब्दविशेषात्, साधारणशब्दात् विशेषः, ये पूर्वपक्षे साधारणशब्दा हिरण्यगर्भपरतया ततोऽपि विशेषोऽस्ति, येन भगवानेव वैश्वानरो भवति, प्रादेशमात्रस्यैव द्युमूर्धत्वादिधर्मः, न हि विरुद्धधर्माश्रयत्वं भगवद्व्यतिरिक्ते सम्भवति, सर्वभवनसामर्थ्याभावात्, साधारणाद्धर्मात् शब्द एव विशेष इति वा, विशेषादित्येव वक्तव्ये साधारणशब्दशब्दौ प्रादेशमात्रस्यैव वैश्वानरशब्दवाच्यत्वं द्युमूर्धत्वादिकं तस्यैवेति समासेन द्योतयतः, अन्यथा विरोधाभावात्, यदपि लोकात्मकं स्थूलं रूपं तदपि भगवत एव, न हिरण्यगर्भस्येति, पुरुषत्वात्तस्य, विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वा'द्देवताद्वन्द्वे चेति विश्वानरौ, तौ निवासो यस्येति 'तस्य निवास' इत्यण्, तेन परमेश्वर एव

---

केतुत्वकथनेनोत्कर्षवत्तया सिद्धत्वाद्देवतात्मपरिग्रह इति युक्तः पक्षः, ततः तदनन्तरं एवं देवतात्मपरिग्रहप्राप्तावपि, बृहदारण्यकसप्तान्नब्राह्मणे 'संवत्सरो वा अग्निर्वैश्वानर'इति तैत्तिरीयाणां बृहन्नारायणीयोपनिषदि 'प्रजापतिः संवत्सर'इतिश्रुतेः संवत्सरस्य प्रजापतित्वात् प्रजापतिर्यो हिरण्यगर्भस्तत्परमेव वैश्वानरपदमित्यवगम्यते इत्यर्थः, तत्रैव प्रजापतौ हिरण्यगर्भे एव, युक्ततरौ प्रजापतेर्ब्रह्मनामकत्वात् सर्वजीवसमष्टिरूपत्वाच्च युक्ततरौ इत्यर्थः, तदुपासकस्य हिरण्यगर्भोपासकस्य, अन्नभोजनत्वं 'तं योहंग्रहेणोपास्ते तस्य यथाक्रतुरि'तिन्यायेन क्रतुभावात् तदुपासकस्यैव सर्वत्रान्नभोजनत्वं अन्नभोक्तृत्वमित्यर्थः, ननु हिरण्यगर्भस्यापि जीवत्वात्तस्य अणुत्वमेव स्यादेवं प्रादेशमात्रत्वोक्तिरनुपपन्नेत्यत आहु. प्रादेशेत्यादि, विराडभिमानित्वात् हिरण्यगर्भस्य विराडभिमानित्वात्, लोकावयवत्वं द्युमूर्धत्वादिकं, वेदगर्भत्वात् हिरण्यगर्भस्य अग्निदैवतवाक्कार्यवत्त्वादित्यर्थः, पूर्वपक्षमुपसंहरन्ति तस्मादित्यादि, एतद्वाक्यं वैश्वानरप्रतिपादिकं, उच्यते समाधानं उच्यते,

ब्रह्मत्वसाधकं सौत्रं हेतुं विवृण्वन्ति साधारणशब्दविशेषादिति, साधारणेत्यादि पूर्वपक्षे ब्रह्मात्मवैश्वानरशब्दाः हिरण्यगर्भपरतयाप्युपपद्यन्त इति ते साधारणशब्दा', येन विशेषेण, तं विशेषमाहुः प्रादेशेत्यादिना, नहीत्यादि, प्रादेशपरिमाणं अभिविमानं व्यापकत्वं एतद् द्वयं विरुद्धमित्यर्थः, साधारणाद्धर्मात् पूर्वपक्षे हिरण्यगर्भसाधारणतयोक्तधर्मापेक्षया इत्यर्थः, शब्द एव 'प्रादेशमात्रमभिविमान'मितिशब्द एव, वाशब्दोऽस्वरसे, स च पूर्वव्याख्यायां हिरण्यगर्भपरतया एतस्यानन्तरं उच्यते इत्यध्याहारापत्तिरूपः, विशेषादित्येवेत्यादि तथाच हिरण्यगर्भापेक्षया विशेषादितिवक्तव्ये इत्यर्थः, इत्थं च वैश्वानरो विशेषात् एतावन्मात्रे सूत्रे वक्तव्ये यत्साधारणइति शब्दइति च यदधिकमुपात्तं तत्प्रादेशमात्रत्वरूपसाधारण्यवैश्वानरत्वद्युमूर्धत्वादिरूपाभिविमानत्वेतित्रयाणां धर्माणां परस्परविरुद्धानां सामानाधिकरण्यबोधनायेति फलितं, समासेनेत्यादि तथाच विशेषः विशेषबोधकः शब्दो यस्मिन्निति विशेषशब्दः, साधारणशब्दश्च विशेषशब्दश्चेतिसाधारणविशेषशब्दं तस्मात्साधारणविशेषशब्दादितिसमासेनेत्यर्थः, अन्यथा प्रादेशमात्रत्ववैश्वानरत्वद्युमूर्धत्वादीनां पूर्वपक्षोक्तरीत्या हिरण्यगर्भपरतया ज्ञापनेन परब्रह्मण्येषां सामानाधिकरण्यानंगीकारे, विरोधाभावात् पूर्वपक्षोक्तरीत्या हिरण्यगर्भे विरोधाभावात्, तथाच पूर्वपक्षस्यैव सिद्धान्ततासम्भवेनाग्रे सिद्धान्तासम्भवादधिकरणभंगः स्यादिति फलित, द्युमूर्धत्वादिधर्माणां हिरण्यगर्भपरतानिरासेन ब्रह्मपरतां व्यवस्थापयितुं आहुः यदपीत्यादि, लोकात्मकं चतुर्दशलोकात्मकं, ननु चतुर्दशलोकानामवयवत्वनिरूपणात् कथं ब्रह्मणस्तदवयवित्वमत आहुः पुरुषत्वात्तस्येत्यादि 'पुरुष एवेदं सर्वं' 'अतो ज्यायांश्च पुरुष' इत्यादिना श्रुतिषु ब्रह्मणि पुरुषत्वोक्तेस्तत्र च द्युमूर्धाद्यवयवानां सम्भवेन बाधकाभावादितिभावः, वैश्वानरशब्दस्य योगरूढिभ्यां ब्रह्मप्रतिपादकत्वमाहु. विश्वस्येत्यादि, विश्वस्य जडस्य चतुर्दशलोकात्मकस्येत्यर्थः, नरस्य जीवस्य हिरण्यगर्भपदवाच्यस्येत्यर्थः, भगवदंशत्वेन साक्षात्सच्चिद्रूपांशत्वेन, देवतात्वात् तयोरंशयोराध्यात्मिकतया देवतात्वादित्यर्थः, अन्यत्रापि 'नरे च सञ्ज्ञाया'मित्यनेन विश्वपदस्य दीर्घत्वं, तथा च विश्वश्च नरश्च विश्वानरौ, विश्वो वैश्वानरः प्रथमपादरूपः, तैजसो हिरण्यगर्भो द्वितीयपादरूपः, तदन्तर्गतो जीवस्थानीयः, तौ निवासोऽधिष्ठानं यस्येति तस्य निवासार्थकाणि कृते इत्यर्थः, तेन पूर्वोक्तरीत्या वैश्वानर-

वैश्वानरो भवति, नान्यः, भगवदंशत्वादन्यत्रोपचारात् प्रयोगः, तस्माद्वैश्वानरः परमात्मा ॥२४॥

व्याख्यानेन भगवत्परत्वात् वाक्यस्य प्रमाणान्तरमाह ।

**स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥**

'केचित् स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ती'ति, स्मर्यमाणं रूपमनुमानं स्यात् प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे, स्मरणं हि मननं श्रुतस्य भवति, श्रुतिवाक्येभ्य एव हि श्रवणं, यदि प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानां न ब्रह्मवाक्यत्वं स्यात् तदा स्मरणं नोपपद्येत, अत इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति सिद्धम् ॥ २५ ॥

किञ्चिदाशङ्क्य परिहरति,

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥**

ननु यदि स्मर्यमाणमनुमानं स्यादिति वाक्यार्थो निर्णीयते, तदा स्मृत्यन्तरेणान्यथापि व्याख्येयं, 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध'मिति जाठर एवाग्निर्वैश्वानरो भवति, तस्यैव भगवद्विभूतित्वात्, वाक्यार्थो यथाकथञ्चित् योजयिष्यते,

---

शब्दस्य योगरूढ्या ब्रह्मपरत्वव्याख्यानेन, ननूक्तरीत्या वैश्वानरशब्दस्य परब्रह्मपरत्वे श्रुतौ वैश्वानरशब्दस्य संवत्सरहिरण्यगर्भलौकिकाग्न्यादिबोधकत्वं न स्यादतआहुः भगवदंशत्वादित्यादि, तथा च तेष्वपि भगवदंशत्वेनाभेदात् प्रकाशकत्वरूपभगवद्धर्मस्य तेषु सत्त्वात्, सदृशलक्षणया तथाप्रयोगान्नानुपपत्तिगन्धोपीत्यर्थः, उपसंहरन्ति तस्मादित्यादि,॥२४॥

ननु पूर्वसूत्रेणैव वैश्वानरस्य परब्रह्मत्वे सिद्धे सूत्रान्तरं किमर्थमत आहुः व्याख्यानेत्यादि, 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तं' इतिवाक्यस्य व्याख्यानबलेन ब्रह्मपरतयोपपादनेपि ऋजुरीत्या वैश्वानरपदस्य ब्रह्मपरतायाः अनुपपादनात् ऋजुरीत्या ब्रह्मपरतोपपादनाय सूत्रान्तरमित्यर्थः, प्रमाणान्तरमाह,

**स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥** स्मर्यमाणपदार्थं स्फुटीकर्तुमाहुः केचिदित्यादि, स्मर्यमाणं रूपमित्यादि, अनुमानं स्यादित्यादि, केचिदित्यादिना स्मर्यमाणमिदं रूपं श्रुत्युक्तप्रादेशमात्रस्य ब्रह्मत्वे लिंगं भवति, तदेवोपपादयन्ति स्मरणं हीत्यादिना, स्मरणं हि मननं तच्चानुचिन्तनं श्रुतार्थस्यैव भवति, 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः,' 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिवाक्यात्, तदनुमानं प्रदर्शयन्ति यदीत्यादिना, तथा च प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानि वाक्यानि ब्रह्मवाक्यानि, ब्रह्मप्रतिपादकवाक्यार्थं श्रवणजन्यानुचिन्तनात्मकमननप्रतिपादकवाक्यत्वात् यत्र प्रतिपादकवाक्यत्वाभावः तत्र मननप्रतिपादकत्वाभावः यथा घटमानयेतिवाक्यं इत्यनुमानं बोध्यं, निगमयन्ति अत इत्यादिना, इति हेतोः ब्रह्मप्रतिपादकवाक्यत्वसाधकमननप्रतिपादकवाक्यत्वाद्धेतोः ॥ २५ ॥

**शब्दादिभ्योन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥**

सूत्रमवतारयन्ति किञ्चिदित्यादि, ननु यदीत्यादि, ननूपक्रमे को न आत्मा किं ब्रह्मेति आत्मब्रह्मशब्दयोः परमात्ममात्रबोधकयोः श्रवणेन परमात्मनः प्रथमतो निर्णयात् चरमावगताग्निवैश्वानरादिशब्दानामपि प्रथमावगतार्थ एव नयनमुचितं न तु चरमावगतानुरोधेन प्रथमस्य नयनमित्याशंकाऽसंगता, ननु नाशंकाऽसंगतिः यतः वाजसनेयिनां वैश्वानरविद्याया उपक्रमे 'वैश्वानरं ह वै सम्प्रति वेद तन्नो ब्रूहि' इत्यत्रात्मपदब्रह्मपदाभावात् कथं वैश्वानरवाक्यात् ब्रह्मनिर्णयोऽतोऽत्रापि छान्दोग्यवाक्ये वाजसनेयिवाक्यानुसार्येव निर्णय उचितः स्यादेकवाक्यतानुरोधादिति चेन्न, निश्चितार्थानुरोधेनैव संदिग्धार्थस्य निर्णेतुं शक्यत्वात् वाजसनेयिवाक्यस्य संदिग्धत्वात् छान्दोग्यवाक्यस्य च निर्णीतार्थकत्वात्, अन्यच्च द्युमूर्धत्वादीनां अपहतपाप्मत्वादीनां च ब्रह्मातिरिक्तेऽसंभवान्नैतत्सूत्रोक्ताशंकासंभवः इतिप्राप्ते, उच्यते, उपक्रांतनिर्णीतानुरोधेन हि संदिग्धस्य तत्र निर्णयः स्यादत्र बाधो न स्यात् ब्रह्मणि तु पुरुषेतः सूत्रोक्ताशंका वैश्वानरशब्दार्थे सूपपन्ना एव, तदा स्मृत्युक्तलक्षणस्मर्यमाणत्वनिर्णायकत्वे, अन्यथापि अग्निपरतयापीत्यर्थः, नन्वग्नौ ब्रह्मात्मद्युमूर्धत्वादिधर्माणां कथं अन्वयः स्यादतआहुः यथा कथंचिदिति, तथा चाग्नेर्ब्रह्मविभूतित्वादभेदेन योजनेति नानुपपत्तिरितिभावः,विभूतित्वं चा'हं वैश्वानरो भूत्वा' इत्यादिवाक्याद्बोध्यं,

न तु विरुद्धधर्माणां विद्यमानत्वाद् भगवत्परत्वं वाक्यस्य, विरुद्धधर्माः शब्दादयः अन्तःप्रतिष्ठानञ्च, 'अग्निर्वैश्वानर'इतिशब्दः केवलवैश्वानरपदे भवेत्, भगवत्परत्वं योगेन, तदग्निसाहचर्यादग्निरेव भवेत्, तस्यैव च त्रेताग्निकल्पनमुपासनार्थं, 'प्राणो हि देवता तद् यद्भक्तं प्रथममागच्छेत् तद्धोमीय'मित्यादिना, तदेतेभ्यो हेतुभ्योऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः, 'पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति भिन्नहेतुर्हेतुश्च भवतीति न चकारः, तस्माद्विरुद्धधर्माणां विद्यमानत्वात् न भगवान् वैश्वानर इति चेत्,

न, तथादृष्ट्युपदेशात्, सर्वभोक्तृत्वं भगवतो वक्तुं तथादृष्टिरुपदिश्यते, विरुद्धधर्माणां तत्तद्भावापत्तिरित्यैश्वर्यमेव भगवतो वर्णितं,

तर्हि कार्यवाक्यमेवास्तु स्मृत्यनुरोधादितिचेत्,

असम्भवात्, नहि तस्य द्युमूर्धत्वादयो धर्माः सम्भवन्ति,

---

तथा चामात्ये राजपदप्रयोगवद्वैश्वानरे भगवत्सादृश्याद्गौण्या ब्रह्मात्मद्युमूर्धत्वादिबोधकशब्दानां प्रयोग इति फलितं, ननु मुख्ये सम्भवत्यमुख्यकल्पनस्यान्याय्यत्वाद्विरुद्धधर्माश्रयत्वस्य प्रादेशमात्रमभिविमानत्वादिसम्बन्धरूपस्य भगवल्लिंगस्य एवमग्निवैश्वानरशब्दान्त.प्रतिष्ठितत्वयोर्व्यापके विरुद्धयोर्भगवल्लिगस्य चाह वैश्वानर इतिवाक्ये सत्वादेतद्वाक्यस्थवैश्वानरपदस्यापि ब्रह्मपरत्वमास्तामित्याशंकन्ते नन्वित्यादि[1] उक्तविरुद्धधर्मा इत्यादिना, उक्तविरुद्धधर्माश्रयत्वरूपबोधकबलादेवोक्तवैश्वानरपदस्य ब्रह्मपरत्वं भवतीत्याशयेनाहुः अग्निर्वैश्वानर इत्यादि, तथा चोक्तःशब्दो यदि केवलवैश्वानरपदे ब्रह्मस्थाने ब्रह्मप्रकरणे भवेत्तदा योगेन पूर्वोक्तेन विश्वनरोभयवृत्तिब्रह्मबोधके वैश्वानरपदस्य भगवत्परत्वं भवेत्, रूढ्या वृत्त्या वैश्वानरपदस्याग्निपरत्वं व्यवस्थापयन्ति तदग्नीत्यादिना, तत् वैश्वानरपदवाच्यं, अग्निसाहचर्यात् अग्निरितिप्रसिद्धपदरूपरूढिशक्तिग्राहकसान्निध्यात्, अग्निरेवेत्येवकारेण ब्रह्मव्यवच्छेदः, अग्निवाचकत्वे साधकान्तरमाहु तस्यैवेत्यादि, तस्यैव वैश्वानरपदेनोक्तस्यैव, त्रेताग्निकल्पनं हृदयं गार्हपत्य इत्यनेनोपासनार्थं त्रेताग्निकल्पनमित्यर्थः, प्राणो हि देवता अग्रे पठ्यते इति शेषः, तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेतिचतुर्थ्यन्तार्थत्वादाहुतेः प्राणो देवतेत्यर्थः, अग्निस्तस्य मुखं जाठर आहुतिप्रापकत्वात्, अयमग्निर्वैश्वानरो योयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यत इति वाजसनेयिब्राह्मणोक्तलिंगात्, तदिदं शब्दादिभ्य इतिसूत्रस्थादिपदस्यार्थः, तत् तस्मात्कारणात्, एतेभ्यः वैश्वानरपदस्याग्निपरताव्यवस्थापकहेतुभ्यः, न भगवद्धर्मः यतो वाजसनेयिभिः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेदेत्युक्तमतोन्तःप्रतिष्ठितत्वं न भगवद्धर्मः किन्तु जाठरधर्म एवेत्यर्थः, ननु ब्रह्मभिन्नजठराग्निबोधकता वैश्वानरशब्दस्य शब्दादिभ्य इतिहेतुना साध्यते अन्तःप्रतिष्ठानादिति हेतुनापि साध्यते, इत्थं च द्वितीयहेत्वनन्तरं प्रथमहेतुसामुच्चयकश्चकारोपेक्ष्यते स कुतो नोक्त इत्यत आहुः पुरुषेन्त इत्यादि, भिन्नहेतुः अन्तःप्रतिष्ठानादिति भिन्नहेतुः, हेतुरपि वैश्वानरशब्दस्य ब्रह्मबोधकतैव सिध्यति न तु जठराग्निबोधकतापि, अन्तःप्रतिष्ठानादितिहेतूक्तौ तु व्यापके ब्रह्मणि तद्धेतोरसम्भवाज्जाठरवृत्तित्वस्य च सम्भवात् द्वितीयहेतुसाहचर्यात् प्रथमहेतोरपि जाठराग्निबोधकतैव सिध्यति न तु ब्रह्मबोधकतापीतिरीत्या द्वितीयहेतोः प्रथमहेतुसार्थक्यसम्पादकत्वात् समत्वाभावाच्च न सूत्रे चकारोपेक्षित इत्यर्थः, पूर्वपक्षमुपसंहरन्ति तस्मादित्यादिना, न वैश्वानरः न वैश्वानरपदवाच्यः,

समाधानमाहुः नेत्यादिना, शब्दादिभ्यो हेतुभ्यो वैश्वानरशब्दस्य ब्रह्माबोधकता न सम्भवतीत्यर्थः, तत्र हेतुः तथादृष्टीत्यादि सर्वत्र भोगाधिकरणेषु भगवतो भोक्तृत्वस्य प्रदर्शनार्थं जठराग्नौ वैश्वानरपदप्रयोगादित्यर्थः, ननु लौकिकफलभोक्तृत्वे भगवत. परब्रह्मत्वं व्याहन्येतेत्यत आहु विरुद्धधर्माणामित्यादि, तत्तद्भावापत्तिरित्यादि लौकिकफलतत्तत्फलभोक्तृत्वादीनां भगवद्रूपत्वसिद्धिः, लौकिकफलानां तद्भोक्तृत्वादीनां ब्रह्मवादे भगवद्व्यतिरिक्तानां त्वसम्भवादितिभावः, इत्थं च भगवानेवभोक्तृभोग्यादिसर्वरूपो भूत्वा क्रीडतीति महदैश्वर्यं सिद्धं भवतीत्यर्थः,

सूत्रावयवान्तरं वक्तुमाशंकन्ते तर्हीत्यादि, ननु जाठरे वैश्वानरपदप्रयोगस्य भगवदैश्वर्यद्योतनार्थत्वे किं विनिगमकं, अहं वैश्वानरो भूत्वेतिस्मृत्या ऋजुरीत्यैव कार्यरूपजाठरस्य वैश्वानरपदेन लाभसम्भवात्,

अतआहुः सूत्रस्थमसम्भवादिति, तस्य जठराग्नेः, द्युमूर्धत्वादय इत्यादिपदेन प्रकरणपठिताः सर्वे ब्रह्मधर्माः आत्मत्वब्रह्मत्वान्वयो ग्राह्याः,

---

१. नन्विति टीकाकारपाठः ।

उपचारादुपासनार्थं परिकल्पनं भविष्यतीतिचेत्,

न, पुरुषमपि चैनमधीयते वाजसनेयिनः, 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति, तस्मात् पुरुषत्वं पाठान्तरे पुरुषविधत्वं वा जाठरस्य न सम्भवतीति भगवानेव वैश्वानरः, भगवत्परत्वे सम्भवत्यन्यकल्पनाऽयुक्तेति ॥२६॥

## अतएव न देवता भूतञ्च ॥ २७ ॥

'वैश्वानरो न ऊत्ये'त्यादिमन्त्रैर्देवताया महाभूताग्नेर्वा वाक्यार्थतेति कस्यचिद् बुद्धिः स्यात् तदपि अतिदेशेनैव परिहरति, मुख्योपपत्तिर्भगवत्परत्वे सम्भवति नान्यकल्पना युक्तेति ॥२७॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अधुना परिमाणविशेषो विचार्यते, प्रादेशमात्रत्वं भगवतः स्वाभाविकं कृत्रिमं वेति, अस्मिन् सिद्ध एव पूर्वोक्तं सिद्धं भवेदिति विचार्यते,

तत्रास्मिन्नर्थे चत्वार ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन, तत्र केवलं शब्दबलविचारका आचार्याः, शब्दार्थयोर्जैमिनिः, आश्मरथ्यस्तु शब्दोपसर्जनेनार्थविचारकः, केवलार्थविचारको बादरिरिति, आचार्यः पुनर्विचाराविचारयोर्दोषं पश्यन् विचारमपि वदन् तेषामल्पबुद्धिख्यापनाय नामान्याह, तत्र जैमिनिरुभयबलविचारकः प्रथमं निर्दिश्यते,

व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैवाविरोधं मन्यते जैमिनिः, आकाशवद्व्यापकं सर्वतःपाणिपादान्तं ब्रह्म, अत एव साकारत्वमनन्तमूर्तित्वं ब्रह्मणः,

---

उपचारात् आरोपात्, परिकल्पनं जाठरे ब्रह्मधर्माणां परिकल्पन,

उपसंहरन्ति **तस्मादित्यादि**, तस्मात् वैश्वानरस्य पुरुषविधत्व श्रुत्यन्तरे च पुरुषत्वं च उच्यते यत इत्यर्थः ॥ २६ ॥

**अत एव न देवता भूतं च** । **वैश्वानरो न ऊत्येत्यादिमन्त्रैः** आदिपदेन वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्यादिवाक्यैर्देवतास्वरूपं अथवा एष वा अग्निर्वैश्वानर इत्यादौ भूताग्निस्वरूपं प्रतिपादितं तदेवात्रत्यवैश्वानरपदस्यार्थः स्यादिति कस्यचिद्बुद्धि. स्यादित्यर्थ., **अतिदेशेनेत्यादि** तथाच पूर्वोक्तश्रुतिस्मृतिसिद्धद्युमूर्धत्वादिब्रह्मात्मपदवाच्यत्वादिहेतुभिरेव भूतदेवताग्निबोधकता वैश्वानरपदस्य सूत्रकारेण परिहृतेत्यर्थः, **मुख्योपपत्तिरित्यादि**, तथा च सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिभिः सूत्रकारेण सर्वस्यापि वेदस्य ब्रह्मणि समन्वय उपपादितो वैश्वानरपदस्य ब्रह्मपरत्वे सम्भवति सति मुख्योपपत्तिर्भवतीत्यन्यपरतोपपादनमयुक्तमेवेत्यर्थः ॥ २७ ॥

**साक्षादप्यविरोधं जैमिनिः** । पूर्वसूत्रैर्वैश्वानराग्निशब्दानां ब्रह्मपरत्वनिर्णयादग्रिमसूत्राणां प्रयोजनाभावोऽत आहुः **अधुनेत्यादि**, तथा चास्मिन्नेव प्रकरणेऽभिविमानत्व व्यापकत्वं प्रादेशमात्रत्वं चोक्तं, न चैकस्मिन्स्वाभाविकं विरुद्धोभयं संभवत्यतो ब्रह्मणि व्यापकत्वस्य बहुप्रमाणसिद्धत्वात्प्रादेशमात्रत्व एव भाष्ये सन्देह उक्तः **स्वाभाविकमित्यादिना**, **अस्मिन्** प्रादेशमात्रत्वसमानाधिकरणाभिविमानत्वे, **पूर्वोक्तं** विरुद्धधर्माश्रयत्वे न ब्रह्मत्वं, **तत्र** ब्रह्मविचारेऽर्थे, **शब्दबलेन** शब्दशक्तितात्पर्यबलेन, **शब्दार्थयोर्जैमिनिः** शब्दार्थयोः समप्राधान्येनेत्यर्थः, **शब्दोपसर्जनत्वेन** शब्दानामुपसर्जनत्वं लाक्षणिकत्वं तद्बलेनार्थविचारक इत्यर्थः, **केवलार्थविचारकः** युक्तिप्राधान्येनार्थविचारक इत्यर्थ., ऋषिनामग्रहणप्रयोजनमाहु. **आचार्य इत्यादिना**, **विचाराविचारयोर्दोषमिति**, गार्गीब्राह्मणे मा ते मूर्धा व्यपतदनतिप्रश्न्या वै देवता अतिपृच्छसि गार्गि मातिप्राक्षीरित्यतिप्रश्ने दोषोक्तेः, कठवल्ल्यां च नैषा तर्केण मतिरापनेयेतिकाल्पनिकविचारेपि दोषोक्तेः, तैत्तिरीये च तत्त्वेव भयं विदुषोऽमन्वानस्येत्यविचारेपि दोषोक्तेः, **सूत्रकारः** सर्वज्ञत्वादुचितविचारं कुर्वन्नामान्याहेत्यर्थः, **निर्दिश्यते** सूत्रेण तन्मत उच्यते इत्यर्थः,

**अत एव** सर्वतःपाणिपादान्तत्वस्य श्रुत्युक्तत्वादेव, श्रुतावनन्तपदार्थमाहुः **अनन्तमूर्तित्वमित्यादिना**, यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तादितिश्रुतिरपि प्रमाणमनुसन्धेया, **स्वेच्छया** पंचाध्यायीलीलायां

स्वेच्छया परेच्छया स्वभावतश्च विभक्तमिव, त्रयोपि नियतपरिमाणाः, अनियतपरिमाणास्तु आकाशवत्परिच्छेदनिरूप्याः, तद्वृद्धिह्रासाभ्यां तथा भवन्ति, स्मृतावप्युक्तं 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितं तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत' इति, भूतेषु पञ्चधा, उदरेऽङ्गुष्ठमात्रः, हृदये प्रादेशः, मूर्धनि च, मनसीन्द्रियेषु चाणुः, चित्ते व्यापकः, एकस्याप्युपक्रमे सर्वेषु तथात्ववादो विभूतिरभेदाय, तस्माद् वैश्वानरस्य पुरुषत्वात् सच्चिदानन्दरूपेणैव प्रादेशमात्रत्वं न विरुध्यते, अतः साकारब्रह्मवाद एव जैमिनेः सिद्धान्तः ॥ २८ ॥

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेणाधिदैविकदेवताधिष्ठितेनाभिव्यक्तः पुरुषोऽन्तर्यामी, अत एव 'पुरुषविध' इति, अभिव्यक्तेर्हेतोः साकारत्वमपि, मायापगमनकृतत्वात् न स्वाभाविकत्वं तथापि निर्दिश्यमानं सच्चिदानन्दरूपमेवाश्मरथ्यो मन्यते ॥ २९ ॥

## अनुस्मृतेरिति[1] बादरिः ॥ ३० ॥

बादरिः केवलयौक्तिकश्चिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिरिति, 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' इतिवाक्यानुरोधात्, अन्यथा बहुकल्पनायां बुद्धिसौकर्याभावात् तार्किकादिमतेष्वपि तथात्वाद् युक्त्यनुरोधेन ब्रह्मवादोऽप्य-

---

स्वेच्छया, परेच्छया तत्तद्वपुः प्रणयसे सदनुग्रहायेत्यादौ परेच्छया, स्वभावतः यदेकमितिश्रुत्युक्तरूपाणि स्वभावतः, न[2] ब्रह्मभेदापत्तिः 'यदेकमिति श्रुतेः' 'अविभक्तं च भूतेषु विभक्तमिव चास्थित'मितिगीतावाक्यात् न ब्रह्मभेदापत्तिरित्यर्थ., त्रीणि रूपाणीत्यादि पुरुषः पुरुषविधः पुरुषेन्तःप्रतिष्ठितश्चेति त्रीणि रूपाणीत्यर्थः, तान्येवाहुः प्रथममित्यादिना, एते च त्रयोपि नियतपरिमाणाः यदा त्वाकाशवत् सर्वगतश्चेतिश्रुत्यर्थः तथा विचार्यते तदा त एवाकाशवत् ज्ञेयाः, परिच्छेदकपरिमाणेन नानापरिमाणा भवन्ति समो नागेन समो मशकेनेत्यादौ तथानिरूपणात्, भूतेषु पञ्चधेत्यादि, उदरेगुष्ठमात्र आश्रयार्थः, हृदये प्रादेशमात्रो ध्यानार्थ., स एव च मूर्धन्यवसेयः, मनसीत्यादि चक्षुषश्चक्षुर्मनसोयं मनो विदुरित्यादिश्रुतेस्तत्तत्कार्यनिर्वाहाय तत्र तत्र स्थितिरिति ध्येयं, चित्ते व्यापकः चित्तस्य तथात्वात्सोपि व्यापक इत्यर्थः, ननु प्रक्रमे प्रादेशमात्रस्यैव प्रकृते विचार्यत्वात् इतरविचारो नि प्रयोजक इत्यत आहुः एकस्यापीत्यादि, एकस्य प्रादेशमात्रस्योपक्रमेपीतियोजना, सर्वेषु सर्वभूतस्थनानारूपेषु, तथात्ववादः भगवत्त्वेनोक्तिः, अभेदाय तत्तद्विभूतिरूपाणां भगवता वैश्वानरेणाभेदबोधनायेत्यर्थ, तस्मात् वैश्वानरस्य सर्वरूपत्वेन नानापरिमाणवत्त्वात्, न विरुध्यते अभिविमानत्वेन सह न विरुध्यते इत्यर्थः, अतः जैमिनीयकृतचतुर्लक्षणीसमाप्तौ 'स विष्णुराह हि' 'तद् ब्रह्मेत्याचक्षते तद्ब्रह्मेत्याचक्षते' इतिजैमिनिना सूत्रद्वयप्रणयनादेव ॥ २८ ॥

अभिव्यक्तेरित्याश्मरथ्यः । एतदादिसूत्रत्रयेऽविरोधमित्यनुषञ्जनीयं, तथा चाभिव्यक्तेर्हेतोः प्रादेशमात्रत्वाभिविमानत्वयोः परिमाणयोर्ब्रह्मणि वैश्वानरेऽविरोध आश्मरथ्यो मन्यते इत्यर्थः, तदपगमेन मायावरणस्यापगमेन, आधिदैविकदेवतेति ब्रह्मविष्णुशिवरूपतयाधिष्ठितेन शरीरतयांगीकृतेन स्वरूपेण, अभिव्यक्तः परमात्मा पुरुषाकारेण ज्ञानविषयो जातः, अत एव पुरुषाकारेण प्रकटीभवनादेव, मायापगमनकृतत्वात् जलमालिन्यनिराकरणेन जले नानाकारप्रतीतिवदित्यर्थः, न स्वाभाविकमिति किन्तु अर्भकौकःसूत्रोक्तव्योमदृष्टान्तेन उपरव इत्यर्थः, तथा चाकाशस्येवागन्तुक इत्यर्थः ॥ २९ ॥

अनुस्मृतेरिति बादरिः। श्रुतिः द्युमूर्धत्वादिविशिष्टपुरुषत्वेन प्रतिपादिका श्रुतिः, आकारभेदेन[3] नानाकल्पने, बहुकल्पनायां ब्रह्मस्वरूपनानात्वकल्पनायां, बुद्धीत्यादि मुक्त्यर्थं कस्य रूपस्य श्रवणादि कर्तव्यमित्यत्र नियामकाभावाद् बुद्धिसौकर्याभावइत्यर्थः, ननु युक्त्या ब्रह्मनिर्णयः कुत्र सिद्ध इत्यत आहुः तार्किकेत्यादि, तथात्वात्

---

१. सूत्रे इतिरहितं पाठान्तरम । २. इदं भाष्ये न दृश्यते ।३. इद भाष्ये न दृश्यते ।

न्यथा नेय इति हि मन्यते, अस्मिन् पक्षे त्वतात्त्विकत्वं, अथवा मायास्थाने अनुस्मृतिः, अभिव्यक्तिस्तु तुल्या, एवं सति बादरिमतेऽपि तात्त्विकमेव रूपम् ॥ ३० ॥

## सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

जैमिनिमते आकारवादे नियतसाकारं मन्यमानस्तदेकदेशी नियतमेव प्रादेशमात्रं भगवद्रूपं मन्यते, तन्निराकरणाय सर्वत्र प्रादेशत्वं सम्पत्तिकृतमित्याह,

तत्र का सम्पत्तिः कथमिति स्वयमेव श्रुत्या प्रदर्शयति, वाजसनेयिब्राह्मणे द्युप्रभृतीन् पृथिवीपर्यन्तान् वैश्वानरस्यावयवान् अध्यात्म्ये च मूर्धप्रभृतिषु चिबुकपर्यन्तेषु सम्पादयन् 'प्रादेशमात्रमिह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर' इत्यादिना सम्पत्तिनिमित्तमेव प्रादेशमात्रत्वं वैश्वानरस्याह, न तु प्रादेशमात्र एव वैश्वानरइति तदेकदेशिपरिहारं जैमिनिर्मन्यते ॥ ३१ ॥

मुख्यं स्वसिद्धान्तमाह,

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

व्यापक एव प्रादेश इति, न हि विरुद्धमुभयं भगवत्यनवगाह्यमाहात्म्ये, तस्मात् प्रमाणमेवानुसर्तव्यं न युक्तिः, शब्दबलविचार एव मुख्यः, न तु प्रातीतिकविरोधादन्यथात्वकल्पनं, वैश्वानरस्य पुरुषत्वं पुरुषविधत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति, न हि तस्य तद्विधत्वं तस्मिन् प्रतिष्ठितत्वं च सम्भवति युक्त्या, अतोऽन्ये ऋषयो भ्रान्ता एव येऽन्यथाकल्पयन्तीत्यभिप्रेत्य स्वमतमाह, एनं वैश्वानरमस्मिन् मूर्धचिबुकान्तराले जाबालाः समामनन्ति, 'एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित' इति, 'सोऽविमुक्तः कस्मिन् प्रतिष्ठित' इत्यादिना 'भ्रुवोः प्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च

---

युक्त्या ब्रह्मनिर्णयकरणात्, अन्यथा नेयः वेदानुसरणं त्यक्त्वा नेय इत्यर्थः, यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर इति वाक्यादित्यर्थः, अस्मिन्पक्षे युक्त्या ब्रह्मनिर्णयपक्षे, अतात्त्विकं वेदविरुद्धत्वान्निर्णयस्यातात्त्विकत्वं, पक्षान्तरमाहुः अथ वेत्यादि, मायेत्यादि, तथा यथाऽश्मरथ्यमते माया प्रयोजिका तथैतन्मते परंपरागता वृद्धानां स्मृतिराकारव्यवहारनियामिकेत्यर्थः, अभिव्यक्तिः ब्रह्मस्वरूपाभिव्यक्तिः, तुल्या आश्मरथ्यमतेन तुल्या, तन्मते माययाऽभिव्यक्तिः एतन्मते च तत्तद्वपुः प्रणयसे इत्याद्यनुस्मृतिरूपचिन्तनेनाभिव्यक्तिरितितुल्येत्यर्थः, तात्त्विकमेव वस्तु सत एवाभिव्यक्तिर्नतु अलीकस्येति तात्त्विकत्वं बोध्यमितिभावः ॥ ३० ॥

संपत्तेरिति जैमिनिस्तथाहि दर्शयति । पूर्वं जैमिनिमतप्रदर्शनेपि पुनर्जैमिनिमतप्रदर्शनं किमर्थमुच्यतेऽतआहुः जैमिनिमतेत्यादि, आकारवादे ब्रह्मसाकारमितिवादे, तदेकदेशी जैमिनिमतैकदेशी, नियतमेव सर्वदा सर्वत्र प्रादेशमात्रं प्रादेशातिरिक्तप्रमाणशून्यं सत् प्रादेशप्रमाणमित्यर्थः, इत्याह जैमिनिराहेति व्यास आहेत्यर्थः,

स्वयमेव जैमिनिरेव, अध्यात्म्ये आत्मान वैश्वानरमधिकृत्योद्दिश्येत्यर्थः, सम्पादयन् ब्रह्मणः स्थितिं वदन्, श्रुतिमाहुः प्रादेशमात्रमित्यादिना, संपत्तिनिमित्तमेव ब्रह्मावच्छेदकदेशपरिमाणकृतमित्यर्थः, तदेकदेशी जैमिनिमतैकदेशीत्यर्थः ॥ ३१ ॥

आमनन्ति चैनमस्मिन् । सूत्रमवतारयन्ति मुख्यमित्यादिना, मुख्यं शब्दबलविचारेण निर्णीतं, स्वसिद्धान्तं व्याससिद्धान्तं, अन्यथात्वकल्पनं श्रुतिसिद्धं परित्यज्य यौक्तिकार्थकल्पनमित्यर्थः, नहीत्यादि सादृश्यस्य भेदघटितत्वात् अभेदे आधाराधेयभावस्य चासम्भवाद्युक्त्या न सम्भवतीत्यर्थः, श्रुत्या सिद्धं स्वमतमाहेत्यर्थः, श्रुतिमाहुः एनमित्यादिना, सोऽविमुक्तः न मुक्तः, तथा च सर्वाणीन्द्रियकृतानि पापानि वारयतीति वरणा सर्वानिन्द्रियकृतान् पापान् नाशयति तेन नासी नासिकेत्यर्थः, अविमुक्तः भ्रुवोः वरणायाः प्राणस्य नासिकायाः, स एषः उक्तः सिद्धे

सन्धिर्भवती'ति, न ह्यनन्तः संकुचितस्थाने भवति विशेषणवैयर्थ्यापत्तेः, युक्तिगम्या त्वब्रह्मविद्यैव, अविरोधेऽपि वक्ष्यति 'श्रुतेस्तु शब्दमूलत्वा'दिति ।

ननु तथापि काचित् वेदानुसारिणी युक्तिर्वक्तव्या शास्त्रसाफल्यायेति चेत्,

उच्यते, विरोधएव नाशङ्कनीयो वस्तुस्वभावात्, अयःकान्तसन्निधौ लोहपरिभ्रमणे या युक्तिः, गर्भस्यौदर्यादाहे, रेतसो मयूरत्वादिभावे, न हि सर्वत्र स्वभावदर्शनाभ्यामन्योपपत्तिः कैश्चिदपि शक्यते वक्तुं, तस्मान्ते 'सुषिर'मित्यादिना श्रुतिरेवमेवाह, यशोदास्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा स्वप्नमायाऽविद्यानिराकरणाय सिद्धान्तमाह, 'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोग' इति, उलूखलबन्धने चायमर्थो निर्णीतः, तस्मादानन्दांशस्यैवायं धर्मो, यत्र स्वाभिव्यक्तिस्तत्र विरुद्धसर्वधर्माश्रयत्वमितिचकारार्थः, तस्मात्प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धम् ॥ ३२ ॥

इति प्रथमाध्याये द्वितीये पादेऽष्टमं वैश्वानराधिकरणम् ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

रेव, तथा चाविमुक्तः सन्धौ तिष्ठतीत्यर्थः, विशेषणेत्यादि व्यापकत्वार्थकानन्तेतिविशेषणवैयर्थ्यादितिभावः, अविरोधे प्रादेशव्यापकत्वयोरेकस्मिन्नविरोधे, तामुक्तिमेवाहुः श्रुतेस्त्वित्यादिना, श्रुतेः एकस्मिन् विरुद्धधर्मद्वयप्रतिपादिकाया प्रादेशमात्रमभिविमानमित्यादिश्रुतेः, शब्दमूलत्वात् शक्तितात्पर्यग्रहाधीनार्थप्रतिपादकत्वादित्यर्थः,

वस्तुस्वभावात् ब्रह्मणो विरुद्धधर्माश्रयत्वस्य स्वभावाविलक्षणत्वादित्यर्थः, ननूक्तयुक्तेः श्रुत्यनुसारित्वे किं गमकमतआहुः तस्यान्तइत्यादि, तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमित्यादि, तैत्तिरीयाणां बृहन्नारायणीये तथोक्तेः सर्वमुपपन्नमित्यर्थः, उपसंहरन्ति तस्मादित्यादि ॥ ३१ ॥

॥ इति प्रथमाध्याये द्वितीयपादेऽष्टमं वैश्वानराधिकरणम् ॥

इतिश्रीगोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते अणुभाष्यपदप्रदीपे प्रथमस्याध्यायस्य द्वितीयश्चरणः ॥

# ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

द्वितीयपादे आधेयरूपो भगवान् प्रतिपादितः, आधाररूपोऽत्र प्रतिपाद्यते, तेन सर्वं ब्रह्मेति फलिष्यति,

इदं श्रूयते, 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरिति,

बाधकानां बलिष्ठत्वात् साधकानामभावतः । आधारधर्मा बाध्येरन्निति पादोऽभिधीयते ॥ १ ॥
'यस्मि'न्नित्यादिवाक्ये च वाक्यार्थः सर्वबाधितः । अर्थात् प्रकरणात् लिङ्गादिति पूर्वं विचार्यते॥२॥

अत्र संशयः, द्युभ्वाद्यायतनं ब्रह्म आहोस्वित् पदार्थान्तरमिति,

अर्थान्तरमेव भवितुमर्हति, द्युभ्वादीनां सूत्रे मणिगणा इव प्रोतानां भारत्वान्न तद्ग्राहकः परमात्मा, अन्यवाग्विमोकश्चासङ्गतः, एकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात् कथमन्यविमोकः, सेतुश्च गतिसाधनः, तस्मादफलत्वमपि, आत्मलाभान्न परं विद्यत इति विरोधश्च, अतो न ब्रह्मविद्यापरमेतद्वाक्यं किन्तु स्मृतिमूलं भविष्यतीत्येवं प्राप्ते,

उच्यते,

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ (१-३-१)

द्युभ्वाद्यायतनं ब्रह्मैव, द्यौः भूश्चादिर्येषां ते द्युभ्वादयः तेषामायतनं, यस्मिन् द्यौरितिवाक्योक्तानां साधकं वदन् प्रथमपरिहारमाह स्वशब्दात्, आत्मशब्दो व्याख्यातः स्वशब्देन, अत्र न जीवस्यात्मत्वेनोपासनार्थमात्मपदं, किन्तु पूर्वोक्तानामात्मभूतं, तेन न भारकृतो दोषः, कारणे हि कार्यमोतं भवति, सेतुत्वं च युज्यते, तज्ज्ञानेनामृतत्वप्राप्तेः, अभेदेऽपि 'ब्रह्म-

---

॥ अथ प्रथमाध्यायस्य तृतीयपादः ॥

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ अथ तृतीयपादं विवरिषवोऽध्यायसंगतिस्फोरणाय पूर्वपादार्थं वदन्तः प्रस्तुतस्यार्थमाहुः, द्वितीयेत्यादि, अयमर्थः, पूर्वपादस्यान्तस्तद्धर्माधिकरणप्रपञ्चरूपतया अष्टाधिकरण्यां उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इतिलक्षणं विचारितं, अतः परं तल्लिंगाद्यधिकरणेषु य आधाररूपो विचारितः सोत्र विचार्यते, तेन पुरुषः स परः पार्थं भक्त्या लभ्यस्त्वनन्यया यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततमितिवाक्योत्तरार्धं स्फुटं भविष्यति, तदेतदुक्तमाधाररूपोत्र प्रतिपाद्यत इति द्वितीयपादोक्तमनन्यभक्तिलभ्यत्वं तु गुणोपसंहारपादे फलिष्यतीत्यतो नोक्तं, एवं पादद्वयोक्तस्य फलं समन्वयस्तत्स्वरूपं वदन्ति तेनेत्यादि, बाधकानां ब्रह्मणि प्रतिपादिताधेयधर्माणां आधाररूपतायां बाधकानां, तथाचाभेदे आधाराधेयभावानुपपत्तिरेव बाधिकेतिभावः, साधकानामभावतः विरोधपरिहारकाणामप्रतिपादनत इत्यर्थः, बाधमेव प्रदर्शयन्ति यस्मिन्निति, यस्मिन्निदमोतं च प्रोतं चेत्यत्र सर्वस्य स्वस्मिन्प्रवेशः सर्वस्मिंश्च स्वस्य प्रवेश' प्रतिपादित एवमेवानन्तस्थानेषूपपादितं, इदं च युक्त्याद्यगोचरत्वात् सर्वप्रकारैर्बाधितं, तदेवाहुः अर्थादित्यादिना, प्रकरणात् एकविज्ञानापेक्षया सर्वविज्ञानस्य पृथक्तया निर्देशात्, 'अन्या वाचो विमुञ्चथ' इति द्वितीयमुण्डकश्रुतिस्थं विरुद्धमिति भावः, अफलत्वं फललिंगाभावादफलत्वमित्यर्थः, विरोधः एतच्छ्रुतिप्रतिपाद्यस्य ब्रह्मात्मत्वासम्भवाद्विरोध इत्यर्थः,

विदाप्नोति पर'मितिवदर्थः, तस्मादबाधितार्थत्वाल्लक्ष्यस्य सर्वगतत्वव्युत्पादकत्वाद् द्युभ्वाद्यायतनं ब्रह्मैव ॥ १ ॥

ननु चोक्तं सर्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोको विरुद्ध इति, नैष दोषः,

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

मुक्तानां जीवनमुक्तानां शरीराद्यध्यासरहितानामवान्तरप्रकरणशरधनुर्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते, तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयमिति, किञ्च, वाग्विमोक एव न वस्तुविमोकः, वस्तुनो ब्रह्मत्वात्, वाचारम्भणमात्रत्वाद्विकारस्य, अतो न सर्वविज्ञानबाधः, अतो बाधकाभावादिदं ब्रह्मवाक्यमेव ।

ये तु श्रुतेरन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिन उपेक्ष्याः ॥ २ ॥

ननु जडधर्माः जडदृष्टान्ताः प्रकरणे बहवः सन्ति, 'अरा इव' 'ब्रह्मपुरे' 'मनोमय' इत्यादि तस्मात् प्रकृतिपुरुषनिरूपकसांख्यानुमापकमेवैतत्प्रकरणमस्तु, निर्णीतमप्यक्षराधिकरणे जडधर्मात् पुनरुज्जीवनं, तस्मात् द्युभ्वाद्यायतनं प्रकृतिरेव भवितुमर्हतीति चेत्,

## नानुमानमतच्छब्दात् ॥ ३ ॥

न, अनुमानं तन्मतानुमापकं न भवति, कोपि शब्दो निःसन्दिग्धस्तन्मतख्यापको नास्ति, ब्रह्मवादख्यापकास्तु बहवः सन्ति आत्मसर्वज्ञानन्दरूपादिशब्दाः, अतः सन्दिग्धाः जडधर्मत्वेन प्रतीयमाना अपि ब्रह्मधर्मा एवेति युक्तं, न हि ब्रह्मवादः श्रुतिव्यतिरिक्ते[1] सिद्धोस्ति येन ब्रह्मधर्माभावो निश्चेतुं शक्येत, तस्मात् सर्वाधारत्वेन निरूप्यमाणः परमात्मैव न प्रधानमिति ॥ ३ ॥

नन्वस्ति निर्णायकं प्राणानामोतत्ववचनं, मनोमयः प्राणशरीरनेतेति च, अतो जीवधर्माः

---

स्मृतिमूलं साख्यस्मृतेर्मूलीभूतमिदमित्यर्थः, तथा च प्रधानमेवात्र वाक्याभिप्रेतं, आत्मपदप्रयोगानुकूलव्यापकत्वस्य प्रधानेपि सम्भवान्नात्मपदप्रयोगानुपपत्तिरपीत्यर्थ.,

इतिवदर्थः इति अभेदेऽपि अवस्थावैलक्षण्येन आधाराधेयभावोपपत्तिः, लक्ष्यस्येति लक्ष्यं सर्वगतं चैव शरो मे सर्वतोमुख इति पूर्वमन्त्रोक्तस्य ब्रह्मणो लक्ष्यस्येत्यर्थः ॥ १ ॥

मुक्तोपसृप्यव्यपदेशात् ॥२॥ अवान्तरप्रकरण इत्यादि, अवान्तरप्रकरणे हि तद्वेद्धव्यं सौम्य विद्धि इत्यैकाग्र्येण तदेकतानता प्रतिज्ञाय सा कथ स्यादित्याकाङ्क्षाया धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धीयत आयाम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षर सौम्य विद्धीतिशरधनुर्न्यायेनैकाग्रतां बोधयित्वा कि धनुः कः शर इत्याकांक्षायां प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदित्यनेनन लक्ष्ये प्रविष्ट. शरो यथा तन्मयो भवति तथा स्वयमपीति बोधित, अथवा लक्ष्यं सर्वगत चैव शरो मे सर्वतोमुख. वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न संशय. इति ब्रह्मण· सकाशात्पृथक्त्वेन ज्ञातं जीव लक्ष्ये ब्रह्मणि योजयितुमुपासनार्थं अन्यवाग्विमोक उच्यते न तु सर्वविज्ञानविघाताय, वाग्विमोकोऽप्यैकाग्र्यार्थं एव, न तु पार्यन्तिकः ।

ये तु मायावादिनस्तु, अन्यार्थत्वं तमेवैक जानथ इति सावधारणं अन्या वाचो विमुञ्चथ विषयस्य मिथ्यात्वेनाभावाद्वाचामपि त्यागत इत्यर्थं कुर्वन्ति, स्पष्टश्रुतीनि यथासुदीप्तात्पावकात् विस्फुलिगा इति एतस्माज्जायते प्राण इति अग्निर्मूर्धा चक्षुषीत्यादि ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥ इदमेवाधिकरण पुनर्निषेधमुखेन विचारयन् पूर्वं जडं निरस्यतीत्याशयेन पूर्वपक्षं दर्शयन्ति नन्वित्यादिना, कुत्र सन्तीति अपेक्षाया तन्मपप्रतीक प्रदर्शयन्ति अराइति, अरा इव रथनाभौ संहता

---

१ श्रुतिव्यतिरिक्त इति ख० ।

केचन जडधर्माश्चापरे सर्वज्ञत्वादयोऽपि योगप्रभावाज्जीवधर्मा इति, तस्माज्जडजीवविशिष्टः सांख्यवाद एव युक्त इति चेत्, न,

## प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवो न सम्भवति, अतच्छब्दादेव, न ह्यानन्दामृतरूपः स भवितुमर्हति तन्मते, पृथग्योगकरणमुत्तरार्थं ॥ ४ ॥

विशेषहेतुमाह ।

## भेदव्यपदेशात् ॥ ५ ॥

'तमेवैकं जानथे'ति कर्मकर्तृभावः प्रतीयते, अतो भेदव्यपदेशात् न प्राणभृज्जीवः ॥ ५ ॥
जीवजडसाधारणनिराकरणाय विशेषहेतुमाह,

## प्रकरणात् ॥ ६ ॥

प्रकरणं हीदं ब्रह्मणः, ब्रह्म देवानामित्यारम्भे स ब्रह्मविद्यामिति, तेषामेवैतां ब्रह्मविद्यामित्यन्ते च, ब्रह्मविद्याया एव प्रकरणित्वमवगम्यते, 'ब्रह्मैवेदममृतं पुरस्तादि'त्यादिभिर्विस्पष्टः ब्रह्मवादः प्रतीयते ॥ ६ ॥

सर्वस्याप्यन्यथाभावशङ्कया विशेषहेतुमाह,

---

यत्र नाड्य. स एषोन्तश्चरते बहुधा जायमान इत्यत्र नाडीसंघाताधिकरणत्वं शरीरधर्मत्वाज्जडधर्मः रथनाभिदृष्टान्तः, तथा यः सर्वज्ञ. सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठित इत्यत्र पुरमिव पुर इति पुरपदबोधितो भूमिष्ठमहिमवत्त्व शरीरधर्म तथा मनोमय प्राणशरीरनेता इत्यत्र मनोमयत्व विकारधर्म·, इत्यादीत्यादिपदेन हिरण्मये परे कोश इत्यादिमन्त्रोक्ताना शुभ्रत्वप्रकाशाभावादीना संग्रह , आत्मसर्वज्ञादिशब्दाश्चेतनधर्मबोधकाः पुरुषनिरूपकाः, तस्मात् प्रकृतिपुरुषबोधकशब्दसत्त्वात्, नन्वस्य प्रकरणस्यादृश्यत्वाधिकरणे ब्रह्मपरताया. व्युत्पादितत्वात् सिद्धे तथात्वे पुन. किमर्थोयं प्रयास इत्यत आहु· निर्णीतमित्यादि, यद्यपि तत्र तथा निर्णीत तथापि तत्रान्तरात्मत्वेनाधेयतया ब्रह्म सिद्ध न त्वाधारतयेति रथनाभ्यादिदृष्टान्तसहकृतात् नाडीसघाताधारत्वादिरूपात् जडधर्मादाधारभूतेऽक्षरे प्रकृतिरूपतायाः पुनरुज्जीवन सम्भवतीति विशिष्टाद्वैतमेव भवेत् न तु शुद्धब्रह्मवाद इति तन्निरासाय प्रयासः इत्यर्थ., सिद्धान्तमाहु अनुमानमिति, तथाहि, इदं प्रकरणं सांख्यमतमूलीभूत तदसाधारणधर्मबोधकशब्दवत्त्वात् इत्यनुमानप्रकार , स न सम्भवति, तत्र हेतुः कोपीत्यादि, ननु मास्तु सांख्यमतसिद्धि. सन्दिग्धशब्दैर्मतान्तरमेव सिध्यतामित्यतआह नहीत्यादि, किं तन्मतान्तर ब्रह्मबोधकमन्यद्वा ? यद्याद्य. पक्षः तदा तु श्रुत्येकसिद्धत्वाद्ब्रह्मवादस्यैव सिद्धि·, यद्यन्यस्तदात्वात्मसर्वज्ञत्वानन्दरूपत्वादीनां ब्रह्मधर्मत्वाभावसाधक हेत्वन्तर मृग्यं येन श्रुतिसिद्धो ब्रह्मवादो न भवेदित्यर्थ , ॥ ३ ॥

**प्राणभृच्च** ॥ ४ ॥ **निर्णायकं** सांख्यमतनिर्णायकं, **मनोमय**इत्यादि, मनोमयः प्राणशरीरनेता प्रतिष्ठितोन्नेता, हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभातीति इत्यनेन प्राणशरीरनेतृत्वमुक्त, **जडधर्माः** प्राणादि, **जीवधर्मा** नेतृत्वादय·, **अतच्छब्दात्** सांख्यमतस्थापकासाधारणधर्मबोधकशब्दस्य श्रुतावभावात्, **सः** जीवः, **तन्मत इति** तन्मते आनन्दस्य प्रकृतिधर्मत्वेन जीवधर्मत्वानङ्गीकारादित्यर्थः, **पृथग्योगकरणं** एतत्सूत्रस्य पूर्वसूत्राद्विभागकरणं, **उत्तरार्थं** उत्तरसूत्रार्थेऽन्वयार्थम् ॥ ४ ॥

**भेदव्यपदेशात्** ॥ ५ ॥ कर्मभावो ब्रह्मणि कर्तृभावो जीवे अतो हेतोरित्यर्थः ॥ ५ ॥

**प्रकरणात्** ॥ ६ ॥ **जीवेत्यादि**, अत्र साधारणनिराकरणपदयोरादौ कर्मधारयस्तदनन्तरं जीवजडपदाभ्यां षष्ठीतत्पुरुषोवसेयः ॥ ६ ॥

## स्थित्यदनाभ्याञ्च ॥ ७ ॥

‘द्वा सुपर्णे’तिवाक्ये ‘अनश्नन्नन्यो अभिचाकशीती’ति केवलस्थितिः परमात्मनः कर्मफलभोगो जीवस्य, अतः **स्थित्यदनाभ्यां** जीवपरमात्मानावेव मध्ये परामृष्टौ, न हि साङ्ख्यमतमेतादृशं भवति, अतोस्य वैशेषिकोपपत्तेर्विद्यमानत्वात् प्रातिलोम्येन सर्वा उपपत्तयो दृढा इति द्युभ्वाद्यायतनं भगवानेवेति सिद्धं, यद्यपि पैङ्ग्युपनिषदि ‘द्वा सुपर्णे’त्यस्यान्यथाव्याख्यानं प्रतिभाति तदृचां प्रदेशविशेषेण्यथाव्याख्यानं न दोषाय, तस्मात् सत्त्वक्षेत्रज्ञौ जीवब्रह्माणौ व्याख्येयौ ॥७॥

॥ इति प्रथमाध्याये तृतीयपादे प्रथमं द्युभ्वाद्यायतनमित्यधिकरणम् ॥

इदं च श्रूयते, ‘यो वै भूमा तत्सुखमि’तिसुखलक्षणमुक्त्वा भूम्नो लक्षणमाह ‘यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे’ति,

तत्र संशयः, भूमा बाहुल्यमाहोस्वित् ब्रह्मेति ?

तत्र प्रपाठकारम्भे ‘ततस्त ऊर्ध्वं वक्ष्यामी’ति प्रतिज्ञातत्वाद् वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्तानामुक्त्वा मुख्यप्राणविद्याया अत्रब्रह्मविद्यात्वख्यापनायार्धप्रपाठकं समाप्य ततोपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूयस्त्वमुक्त्वा, सुखस्य फलत्वात् तस्यैव भूयस्त्वं वदति, यद्यपि ‘तरति शोकमात्मवि’दिति नारदप्रश्नाद् भूम्नो ब्रह्मत्वं प्रकरणाद् वक्तुं शक्यते तथापि तस्यैवा‘थात आत्मादेश’ इत्यहङ्कारादेशवदात्मादेशोप्यस्ति तेनाब्रह्मत्वेपि प्रश्नसिद्धिः, तस्य सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेपि भवति सुषुप्तावपीति तयोरन्यतरद् ग्राह्यं, तत्राप्यन्तरङ्गत्वात् सुषुप्तिरेवात्र भूमत्वेनोच्यते न सुखबाहुल्यं, सुषुप्तिरूपमेव भूमेत्येवं प्राप्ते, उच्यते,

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥ ( १. ३. २. )

भूमा भगवानेव ? कुतः, **सम्प्रसादादध्युपदेशात्**, सम्प्रसादः सुषुप्तिः तस्मादधि आधिक्येनोपदेशात्, यद्यपि ‘नान्यत् पश्यती’त्यादि समानं तथापि ‘स एवाधस्तादि’त्यादिना तु ततोप्यधिकधर्मा उच्यन्ते, न हि सुषुप्तेः सर्वत्वादिधर्माः सम्भवन्ति, आत्मशब्दश्च मुख्यतया परिगृहीतो भवति, भावशब्दस्यापि सर्वत्वाद् भगवति वृत्तिरदोषः, तस्माद् भूमा भगवानेव ॥८॥

---

**स्थित्यदनाभ्याञ्च** ॥ ७ ॥ **सर्वस्य** श्रुतिस्थसर्वब्रह्मपदस्य, **अन्यथाभावशङ्कया** चतुर्मुखपरतया वा अब्रह्मपरत्वशङ्कया, **विशेषहेतुं** अब्रह्मव्यावृत्तिहेतुमनश्नन्नभिचाकशीतिरूपमित्यर्थः, **प्रातिलोम्येनेत्यादि** स्थित्यदनयोर्जीवब्रह्मप्रकरणबलाधायकत्व तस्य च पूर्वश्रुत्युक्तहेतुबलाधायकत्वमेवप्रातिलोम्येनेत्यर्थ., ननु न दृढाः द्वासुपर्णेतिमन्त्रस्य पैङ्गिरहस्यब्राह्मणे सत्त्वक्षेत्रज्ञपरत्वेन व्याख्यानादित्यतआहु· **यद्यपीत्यादि, जीवब्रह्माणौ** व्यष्टिसमष्टिजीवावित्यर्थः ॥ ७ ॥

॥ इति प्रथमतृतीये प्रथमाधिकरणम् ॥

**भूमा सम्प्रसादादध्युपदेशात्** ॥ ८ ॥ **श्रूयत** इति छान्दोग्ये नवमप्रपाठके सनत्कुमारनारदसवादे श्रूयते, संशयमुपपादयन्ति **तत्रेत्यारभ्य वदतीत्यन्तेन, समाप्य** एकार्थनिर्णयार्थं समाप्येत्यर्थ·, **भूयस्त्वं वदतीत्यनेन** भूयस्त्वकोटिर्दृढीकृता, पूर्वपक्षमाहुः **यद्यपीत्यादिना, तस्यैव** भूम्न एव, **तथापि** तस्यैवोपान्ते ‘अथातो अहङ्कारादेश इतिवदथात आत्मादेश इति आत्मादेशोप्यस्ति इत्यत्राहङ्कारादेशे सर्वत्र विद्यमानत्वेन च भूयस्तयोक्तस्याप्यहङ्कारस्य तदुपहितस्यात्मनो वा यथा न ब्रह्मत्व तथात्मादेशे तथोक्तस्य केवलस्यात्मनोपि न ब्रह्मत्वं, **पूर्णविषयेत्यादि** तथाचोत्कृष्टसाधनादिसम्पन्ने तादृशे जीवेपि स्वे महिम्नि प्रतिष्ठितं सुखं सम्भवत्येव, एवं **सुषुप्तावपीति** न ब्रह्मत्वनिर्णयः, **भावशब्दस्य** भूमशब्दार्थस्य, **सर्वत्वात्** सर्वपदार्थत्वात्, **अदोषः** दोषरूपो न भवतीत्यर्थः ॥ ८ ॥

---

१ वकार क्वचन नास्ति ।

## धर्मोपपत्तेश्च ॥ ९ ॥

'नान्यत् पश्य'तीत्यादयोपि धर्मा ब्रह्मणि न विरुध्यन्ते, 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही'तिन्यायेन 'यत्र हि द्वैतमिव भवती'त्यादिश्रुत्या उभयत्राम्नानादन्यादर्शनादयो भगवति न विरुध्यन्ते, चकारात् फलं तस्यैवोपपद्यत इत्याह 'स वा एष एवं पश्यन्नि'त्यादिना 'सहस्राणि च विंशति'रित्यन्तेन, तेन भूमा ब्रह्मैवेति सिद्धम् ॥ ९ ॥

॥ इति प्रथमाध्याये तृतीयपादे द्वितीयं भूमाधिकरणम् ॥

गार्गीब्राह्मणे 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति स होवाच 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि'त्यादि श्रूयते ।

तत्र संशयः, किमक्षरशब्देन पदार्थान्तरं ब्रह्म वेति ?

तत्राचेतनसाधारण्याद्वर्णतुल्यत्वादाकाशवदस्याप्यब्रह्मत्वमेव, द्युभ्वाद्यायतनविरोधस्तु तुल्यः, अत एवागतार्थता अदृश्यत्वाद्यधिकरणेन, न हि तत्र विरुद्धधर्मा आशङ्क्य निराक्रियन्ते, अतोऽचेतनतुल्यत्वाद् ब्रह्मवादस्यासमाप्तत्वाद् आग्रहाविष्टत्वात् प्रष्टुः स्त्रीत्वाच्च 'स्मरो वाव आकाशाद्भूया'निनिवत् कयाचिदुपपत्त्या स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थं, अत्र हि प्रापञ्चिकसर्वधर्मराहित्यं ब्रह्मधर्मत्वञ्च प्रतीयते, तदुपासनार्थत्व उपपद्येत, ब्रह्मत्वपरिग्रहे तु वैयर्थ्यमेव, उपदेष्टृत्वाभावात्, तस्मादक्षरमन्यदेव ब्रह्मधर्मत्वेनोपास्यमित्येवं प्राप्ते, उच्यते

## अक्षरमम्बरान्तधृतेः ॥ १० ॥ ( १. ३. ३. )

अक्षरं परमात्मैव, कुतः ? अम्बरान्तधृतेः, श्रुतिं व्याख्याय सिद्धं हेतुमाह, अत्रैक एव प्रश्न उत्तरश्चैकं, आकाशस्यावान्तरत्वमेव, तेनाम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव, द्युभ्वाद्यायतनसिद्धो धर्मोत्र हेतुः, 'न तदश्नोति कश्चने'ति मुख्यतया परिगृहीतो भवति, अन्यथा मूर्ध्नो विपतनञ्च भवेत्, न ह्यन्यः सर्वाधारो भवितुमर्हति, परोक्षेण ब्रह्मकथनार्थमक्षरपदं, अन्यनिराकरणार्थं तद्धर्मोपदेशश्च, तस्मादक्षरं परमात्मैव ॥ १० ॥

---

धर्मोपपत्तेश्च ॥९॥ स्वाप्ययः सुपुप्ति., संपत्तिर्मोक्ष., एतदन्यतरापेक्षं भगवत आविर्भावरूपमाविष्करणं, उभयत्र सुपुप्तिमोक्षयोः, अन्यादर्शनादयः अन्यविपयकादर्शनविपयत्वादय. उभयत्रापि ब्रह्मण एव विपयत्वादितिभाव., तस्यैव भेदाद्दृष्टुरेव, तादृशस्य फलमाहुः 'स वा' इत्यादिना ॥ ९ ॥

॥ इति प्रथमतृतीये द्वितीयाधिकरणम् ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥ पदार्थान्तरं जडजीवयोरन्यतरत्, अचेतनसाधारण्यात् ओतप्रोतत्वादीनां विकारिधर्मत्वेन वर्णतुल्यतायामय हेतु', तुल्यः एवमेवावसेय इत्यर्थः, अत एव एतदधिकरणस्य पूर्वापेक्षया विपयभेदादेव, अचेतनतुल्यत्वात् वर्णतुल्यताया. सम्भवात्, ब्रह्मवादस्यासमाप्तत्वात् ब्रह्मवादस्यारुणिसंवादे असमाप्तत्वात्, स्त्रीत्वात् ब्रह्मविद्यानधिकारात्, इतिवदिति तथाच स्मरावेशवतो भासमानमपि स्मरे आकाशाद्भूयस्त्व स्वप्रतीतिसिद्धमेव न तु वास्तवं तथा प्रकृतेपि अक्षरे आकाशापेक्षया प्रतिपाद्यमानोप्युत्कर्षस्तादृशस्मरणकाल एव स्वबुद्धिकल्पितो न तु वास्तव इत्युपपत्त्या, तथासति सिद्धमाहु भूतेत्यादिकमुपास्यं, परिग्रहः अक्षरपदेन परिग्रह., तत्र अक्षरे, वैयर्थ्यमेव सम्पूर्णवाक्यवैयर्थ्यमेव, तत्र हेतु. उपदेष्टृत्वाभावादिति श्रोतुर्ब्रह्मविद्यानधिकाराद् वक्तुरुपदेष्टृत्वासम्भवाद्ब्रह्मवाक्यत्वोक्तौ वैयर्थ्यमेव स्यादित्यर्थः, अम्बरान्तधृतेरितिहेतुर्विषयवाक्यादसिद्धोपि सर्वाधारत्वात् तात्पर्यसिद्धो बोध्यः, एकः प्रश्नः अनेकप्रश्नानां मध्ये आकाशस्याप्येकः, उत्तरं तथैवोत्तरमपीतिभावः, अवान्तरत्वमेव अनेकप्रश्नावान्तर एक आकाशस्यापि प्रश्न इत्यर्थ., ननु सर्वभोग्या प्रकृतिरेवाक्षरपदवाच्यास्त्वित्यत आहुः अन्यथेत्यादि, अन्यथा अनधिकारे, तथाचाधिकारानर्हप्रश्ने मूर्धपातस्य प्रतिज्ञातत्वेपि तया ब्रह्मप्रश्ने कृतेपि तथा न जातमतस्तस्या अधिकारोस्तीति निश्चीयते, अक्षरपदं न ब्रह्मपदमुक्तमित्यर्थः 'परोक्षप्रिया वै देवा' इतिश्रुतेरित्यर्थः, तद्धर्मोपदेशः 'न तदश्नोती'त्यनेन ब्रह्मधर्मोपदेशः ॥ १० ॥

---

१ गुणा इत्यपि पाठ ।

ननु कचिद्वाक्ये विधारणं ब्रह्मधर्मत्वेनाश्रितमित्यन्यत्रापि न तथाश्रयितुं शक्यते नियामकाभावादित्यत आह,

## सा च प्रशासनात् ॥ ११ ॥

**सा च** विधृतिरत्रापि वाक्ये ब्रह्मधर्म एव, कुतः? **प्रशासनात्**, 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत' इतिप्रशासनेन विधारणमन्यधर्मो भवितुं नार्हति, अप्रतिहताज्ञाशक्तेर्भगवद्धर्मत्वात्, तस्मादक्षरं ब्रह्मैव ॥ ११ ॥

ननूक्तमुपासनापरं भविष्यतीति, तत्राह,

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

**अन्यभावव्यावृत्तेः**, अन्यस्य भावः **अन्यभावः** अब्रह्मधर्म इति यावत्, तस्मात् **व्यावृत्तेः**, अब्रह्मत्वे हि ब्रह्मत्वेनोपासना भवति कार्यकारणभावभेदेन, न ह्यत्र तादृशो धर्मोऽस्ति, चकारा'द्यो वा एतदक्षरमविदित्वा गार्गी'त्यादिना शुद्धब्रह्मप्रतिपादनमेव नोपासनाप्रतिपादनमिति, तस्मादक्षरं ब्रह्मेवेति सिद्धम् ॥ १२ ॥

**॥ इति प्रथमाध्याये तृतीयपादे तृतीयमक्षरमम्बरान्तधृतेरित्यधिकरणम् ॥**

पञ्चमप्रश्ने 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैकतरमन्वेति यद्येकमात्र' इत्यादिना एकद्वित्रिमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकप्राप्तिपुनरागमने निरूप्या'र्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत स तेजसि परे सम्पन्नो यथा पादोदरस्त्वचे'त्यादिना 'परात् परं पुरिशयं पुरुषमीक्षत' इति।

तत्र संशयः, परपुरुषः परमात्मा ध्यानविषयः, आहोस्विद्विराट्पुरुषो ब्रह्मा वेति?

तत्रामुख्यप्रवाहपतितत्वाद् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते, न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवति, तस्माद् विराट् ब्रह्मा वाभिध्यानविषय इत्येवं प्राप्ते, उच्यते,

---

सा च प्रशासनात् ॥ ११ ॥ कचिद्वाक्ये 'यस्मिन् द्यौ'रितिवाक्ये, अत्रापि एतद्विषयवाक्येपि, **अप्रतिहते-** त्यादि तथाच स्वर्गात्पतत्त्रिशङ्कोस्तिष्ठेति विश्वामित्राज्ञया जाता स्थितिर्विश्वामित्रधर्म एव न तु त्रिशङ्कोरन्यथा पतेत्तेव न तद्वत्सर्वविधृतिरक्षरधर्म एवेत्यर्थः ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥ उक्तं अनुशासनं, उपासनापरं विधारकत्वारोपेणोपासनापरं, तथाच ब्रह्मान्य एवोपास्योऽनुशासनेन बोध्यते इतिपूर्वपक्षाशयः, ब्रह्मत्वेन ब्रह्मत्वारोपेण, तत्र हेतुः **कार्यकारणभावभेदेनेति** ब्रह्मत्वारोपे विशेषणज्ञानरूपकारणकोटिप्रविष्टतया ब्रह्मत्व कारणं तदनाक्रान्तोपासनं कार्यमितिरीत्या भेदः, अत्र ब्रह्मणि, तादृशः आरोपविषयीभूतः ॥ १२ ॥

॥ इति प्रथमतृतीये तृतीयाधिकरणम् ॥

## ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ ( १. ३. ४. )

**सः** अभिध्यानविषयः परपुरुषः परमात्मैव, कुतः ? **ईक्षतिकर्मव्यपदेशात्**, जीवघनात् केवलजीवाधारभूताद् ब्रह्मलोकात् पररूपपुरुपदर्शनं ईक्षतिः, तस्याः **कर्मत्वेन व्यपदेशात्**, उभयोः कर्मणोरेकत्वमपरं त्रिमात्रपर्यन्तं निरूप्य परं ह्यग्रे निरूपयति, तथैव च श्लोके 'तिस्रो मात्रा' इत्यादि, अभिध्यानस्य हि साक्षात्कारः फलं, अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव ।

मन्दशङ्कानिवृत्त्यर्थमेवेदं सूत्रं, अत्र सर्वसङ्करवादिनामन्यथापाठो भ्रमात्, तत्रापि विचारस्तुल्यः ॥ १३ ॥

**॥ इति प्रथमध्याये तृतीयपादे चतुर्थमीक्षतिकर्मव्यपदेशादित्यधिकरणम् ॥**

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यन्तद्वाव विजिज्ञासितव्य'मित्यादि श्रूयते ।

तत्र संशयः, किं जीवोऽन्वेष्टव्यो ब्रह्म वेति ? जीवब्रह्मवादो निर्णीयते, श्रुत्यर्थो हि निर्णेतव्यः, तद् यदस्मिन्वाक्ये परमार्थतो जीव एव ब्रह्म चेत् शास्त्रश्च तत्रैव समाप्तश्चेत् व्यर्थमधिकरणारम्भः, इदमेव च वाक्यं श्रुत्या वक्तव्यं च भवेत्, तस्मादस्मिन्नधिकरणे मुख्या सर्वसङ्करवादादिनिराकृतिः ।

किं तावत् प्राप्तम् ?

दहर आकाशो जीव इति, अत्रावान्तरप्रकरणद्वयं, तत्र द्वितीये प्रजापतिप्रकरणे जीव एवामृताभयरूपः प्रतिभाति, स्पष्टार्थश्च द्वितीयप्रकरणं, तस्मात् प्रथमेपि जीव एव तादृशधर्मवान् भवितुमर्हति, अर्थानुगुण्यमपि व्याख्येयं, अयमेव जीवो ब्रह्म 'अयमात्मा ब्रह्मे'तिश्रुतेः, मैत्रेयीब्राह्मणं चानुगुणं भविष्यति, तस्य पुरं शरीरं तत्र हृदयकमलं सूक्ष्मं तत्राराग्रमात्रो जीव एवाकाशः, तात्स्थ्यात्तद्व्यपदेश इति, अन्वेष्टव्यस्तु तस्मिन् विद्यमानस्तन्महिमा, वासनारूपेण सर्वातत्र वर्तत इति, अन्यथोभयत्र सर्वकथनं विरुद्धमापद्येत, भूतानि महाभूतानि पुत्रादयो वा, 'तश्चेद् ब्रूयु'रित्यादिना नित्यतामुपपाद्य 'एष आत्मे'त्यादिना तस्यैव ब्रह्मत्वमुपदिशति तज्ज्ञानञ्च प्रशंसति, स्वात्मज्ञानिनः कामसिद्धिश्चाह 'य इहे'त्यादिना, येपि च विरुद्धा धर्माः प्रतिभान्त्यहरहर्गमनादयस्तेपि स्वकल्पितजीवानां, स्वप्नमायामनोरथादिषु तेषामेव गमनागमने[1], प्रतिस्वातिरिक्तस्य ब्रह्मणोऽभावात्, एवं लोकाधारत्वमपि, ब्रह्मचर्यं च तस्य साधनमिति, योगश्च 'तयोर्ध्वमायन्नमृतत्वमेती'ति च, तस्माज्जीव एव दहर इत्येवं प्राप्ते, उच्यते,

---

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ पञ्चमप्रश्नः इति आथर्वणाना प्रश्नोपनिषदः पञ्चमे प्रश्ने, अर्धचतुर्थमात्रानादरूपा नहीत्यादि 'ब्रह्मविदाप्नोतिपर'मितिफलान्तरश्रवणादित्यर्थः, उभयोः कर्मणोरेकत्वं ध्यानेक्षणकर्मणोरैक्यमित्यर्थः, पाठइत्यादि शङ्कराचार्यैः 'यः पुनरेतन्त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः स सामभिरुन्नीयते ब्रह्मलोक'मितिपाठोऽङ्गीक्रियते सा भ्रान्तिरिदानीन्तनपुस्तकाध्येतृष्वनुपलम्भात् ॥ १३ ॥

**॥ इति प्रथमतृतीये चतुर्थाधिकरणम् ॥**

---

१ 'गमनागमने प्रति, स्वातिरिक्तस्ये'तिपाठ प्रकाशकृताम् ।

## दहर उत्तरेभ्यः ॥ १४ ॥ ( १. ३. ५. )

**दहरः** परमात्मा न जीवः, कुतः? **उत्तरेभ्यः**, उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः, तेषामपि साध्यत्वादेवमुक्तं, जीवो नाम भगवदंशो न भगवानेवेत्यग्रे वक्ष्यते, 'अंशो नानाव्यपदेशा'-दिति, नापि ब्रह्म तावन्मात्रमिदमप्यग्रे वक्ष्यते, 'अधिकन्तु भेदनिर्देशा'दिति, तस्मादिदं प्रकरणं न जीवब्रह्मविद्यापरं किन्तु ब्रह्मवाक्यमेवेति ॥ १४ ॥

उत्तरहेतूनां मध्ये हेतुद्वयमाह,

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥

**गतिशब्दाभ्यां**, गतिर्ब्रह्मलोकगमनं, 'एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती'ति, 'एष आत्मापहतपाप्मा सत्यकामः सत्यसङ्कल्प' इति केवलभगवद्वाचकाः शब्दा ब्रह्मलोकशब्दश्च ।

---

**दहर उत्तरेभ्यः** ॥१४॥ **श्रूयते** छान्दोग्ये दशमप्रपाठकारम्भे श्रूयते, **द्व्यर्थमिति** तथा चोपाधिभेदेपि जीवचैतन्यस्य ब्रह्माभिन्नत्वात् जीवस्य प्रत्यक्षसिद्धत्वात् तदन्वेषणाविचारार्थं अधिकरणस्य वैयर्थ्यं सन्दिग्ध एव न्यायप्रवृत्तेः, **इदमेवेत्यादि** जीव एव ब्रह्मेतिवाक्यं श्रुतिर्वदेदित्यर्थः, **निराकृतिः** निराकृतिरेव प्रयोजनमित्यर्थः, **प्रकरणद्वयं** एकं दहरविद्यारूपं द्वितीयं इन्द्रप्रजापतिसवादरूपं उभयत्राप्यपहतपाप्मत्वादिगुणक आत्मैव प्रतिपाद्यः, **तत्र द्वितीये प्रजापतिप्रकरणे** चतुर्भिः पर्यायैः जाग्रत्स्वप्नसुषुप्तिमुक्तावस्थाभेदेन जीवस्यैव प्रतिपादनात्, **जीव एवामृताभयरूपः** श्रावितः **प्रतिभाति, स्पष्टार्थमिति** प्रकटार्थ, **अर्थेत्यादि** द्वितीयप्रकरणार्थानुगुण्यमपि जीवे व्याख्यातु शक्यमित्यर्थः, **अनुगुणं** जीवपक्षेनुगुणं, इदमेव तापनीयेप्युक्तं 'सर्वं सर्वमयं सर्वे जीवाः सर्वमयास्तथाप्यल्पा' इति, ननु ब्रह्माकाशादिरूपता जीवस्य कथ सम्भवेदत आहुस्तात्स्थ्यादिति, **तात्स्थ्यात्** वासनया तेषां सर्वेषां जीवे विद्यमानत्वात्, **तद्व्यपदेशः** तैस्तैर्नामभिर्जीव उच्यते इत्यर्थः, **अन्यथा** वासनाया जीवमाहात्म्यरूपत्वानङ्गीकारे, **उभयत्र** वाक्यद्वये **सर्वरूपतानिरूपके** तदा यावानित्यादिवाक्ये तं चेद्ब्रूयुरस्मिन्श्चेदिद ब्रह्मपुरइतिवाक्ये चेत्यर्थः, **इदं** दहरनित्यताप्रतिपादकं वाक्यं, **भूतानि** श्रुत्युपात्तभूतपदेन महाभूतानि ग्राह्याणि न तु विश्वमित्यर्थः, **सर्वेषां** विश्वेषां वासनाना जीवेऽसम्भवादित्यर्थः, **तस्यैव** जीवस्यैव, **उपदिशति** उपासनार्थमुपदिशतीत्यर्थः, **य इहेत्यादि** 'य इहात्मानमनुविद्य व्रजन्ती'त्यादिवाक्येन, **विरुद्धधर्माः** जीवस्य ब्रह्मत्वे व्यापकतया गमनागमनादयो विरुद्धधर्माः, **अहरित्यादि** प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीत्याद्युक्ताः, **स्वकल्पितानां** स्वाज्ञानकल्पितानां, ते क्व प्रसिद्धा इत्याकाङ्क्षायामाहुः **स्वप्नेत्यादि**, तथाच कल्पितानामेव गमनागमने इति न श्रुतिविरोध, **प्रतिस्वातिरिक्तस्य** प्रत्येकत्वेन कल्पितजीवचैतन्यातिरिक्तस्य तथाहि तत्त्वमसि अयमात्मा ब्रह्म स यो ह वै तत् परं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्यन्तरे तथैव सिद्धमित्यर्थः, **लोकाधारत्वं** य आत्मा सेतुर्विधृतिरेषां लोकानामसम्भेदायेतिश्रुत्युक्तं लोकाधारत्व, **एवं** पूर्वोक्तरीत्या कल्पितमित्यर्थः, ब्रह्मचर्येणानुविदन्तीत्यादिना यज्ञादीना ब्रह्मचर्यत्वेन रूपेण ब्रह्मप्रापकत्वमुक्त **ब्रह्मचर्यं, तयेत्यादि** तया योगचर्यया, **ऊर्ध्वं आयन्** ब्रह्मस्वरूपं प्राप्नुवन्, **एतीति च** इतिश्रुत्योक्तश्च, **इदं** सर्वं तस्य अज्ञानकल्पितजीवस्य नतु ब्रह्मभूतस्य व्यापकस्यैव सम्भवत्वतो न कोपि विरोधो जीवपक्षे इति फलितं, **सिद्धमाहुस्तस्मादिति, उच्यत** इत्यादिना सिद्धान्त इति ॥ १४ ॥

**गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च** ॥ १५ ॥ सूत्रमवतारयन्ति **उत्तरेत्यादि**, व्याकुर्वन्ति **गतिरित्या**-रभ्य **युक्ताविलन्तेन, ब्रह्मलोकशब्दाः** ब्रह्मात्मकलोकबोधकाः शब्दाः, **गतिशब्दौ** गतिब्रह्मलोकशब्दौ, **तेषां** अज्ञाना-

ननूक्तं जीवस्यैवैते शब्दा गतिश्च मनोरथादिकल्पितानामिति, तन्निराकरणायाह, तथाहि, तथैव गतिशब्दौ भगवत्येव युक्तौ, अनृतेनापिधानं हि तेषां विशेषणं, अज्ञानावेष्टितत्वमित्यर्थः, नत्वज्ञानपरिकल्पितत्वं, दृष्टत्वात्, तथैव हि दृश्यते, सर्वोऽप्याह 'न किञ्चिदवेदिष'मिति, न च गन्तुरभाव एव, शास्त्रवैफल्यापत्तेः, नह्यात्मनाशः पुरुषार्थः, कर्मकर्तृविरोधश्च, तथापहतपाप्मत्वं च, तद्विरुद्धधर्माणामनुभवात्, भगवति त्विदानीमेन तेषामनुभवः, ध्यानादावुपलब्धेः, पृथिवीशरावववदेव जीवब्रह्मविभागो नत्वज्ञानकृतः, तथाहि, अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपमनादि उत बहिर्भूतं साङ्ख्यवत्? न बहिर्भूतं, बहिर्भूतं चेत् साङ्ख्यनिराकरणेनैव निराकृतं, अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्या न स्वरूपविभेदकत्वमाश्रयनाशप्रसङ्गात्, कल्पनायाश्चाप्रामाणिकत्वात्, बहिःस्थितस्यैव हि भेदकत्वं, कुठारादिवत्, नापि वायुवत्, तच्छक्तित्वात्, किञ्च, कोऽयं ब्रह्मवादे प्रद्वेषो येन मिथ्यावादः परिकल्प्यते? अज्ञानादिति चेत्, पीतशङ्खप्रतिभानवद्युक्तं मतकरणं ब्रह्मविदुपासनयानुगमिष्यति, शर्कराभक्षणेनेव पीतिमप्रतीतिः, सर्वज्ञेन हि वेदव्यासेन भाविमिथ्यावादनिराकरणेनेदमधिकरणमारब्धं, तस्माज्जीवानामेवाज्ञानदर्शनाद् ब्रह्मणः सर्वज्ञत्वदर्शनाद् गतिशब्दौ ब्रह्मविषयावेव, न जीवविषयौ।

किञ्च, लिङ्गञ्च वर्तते, 'यथैवेह कर्मजितो[1] लोकः क्षीयत एवमेवामुत्र पुण्यजितो[2] लोकः

---

वेष्टितजीवानां, न किञ्चिदित्यादि सुष्वापादुत्थितः सर्वोऽपि न किञ्चिदवेदिषमिति सुषुप्तौ स्वस्याज्ञानावेष्टितत्वमेवाहेति दृश्यते यदि हि गन्ता अज्ञानकल्पित स्यात् तदा जागरणे अज्ञाननाशे तस्यापि नाशात् स्मरण न घटेतेत्यर्थ, ननु जीवोऽज्ञानकल्पित एव ज्ञाननाशे च नश्यतीति गन्तैव नास्तीत्येवास्तामतआहुः नचेत्यादि, शास्त्रवैफल्यापत्तेः "अथ य इहात्मानमनुविद्य व्रजन्ती"त्याद्युक्तगतिबोधकशास्त्रवैफल्यापत्तेरित्यर्थः, ननु गन्तृत्वेन विवक्षितस्य चरमवृत्तिपर्यन्तं स्थितेर्न गमनशास्त्रवैफल्यमतआहुः नहीत्यादि, तथा चरमवृत्त्युत्तरमात्मनाशाङ्गीकारे न कोऽपि पुरुषार्थः पर्यवस्येदित्यर्थ, कर्तृकर्मेत्यादि 'आत्मानमनुविद्य व्रजन्ती'त्यादौ कर्तृत्वं जीवगत कर्मत्व चात्मगत न हीद जीवाभावे भेदाभावे वा सम्भवति, तथाच वेदनगमनोभयकर्तृत्वकर्मत्वविरोधो दुर्वार इत्यर्थ., कायव्यूहकरणदशायां उपाधिभेदेन योगिभेद इव जीवब्रह्मभेदोऽप्यशक्यवचन', तत्र व्यूहानां मध्ये एकस्यापि व्यूहस्य व्यूहान्तरभेदाज्ञानात् जीवब्रह्मणो स्थाने तु जीवाना बहुशो भेदानुभव उक्त., तद्विरुद्धेत्यादि उक्तब्रह्मधर्मविरुद्धधर्माणा जीवेनुभवसिद्धत्वात् न हि जीवे विरुद्धधर्माः सम्भवन्ति, तेषां ब्रह्मगतापहतपाप्मत्वादिधर्माणां, उपलब्धेः अनुभवसिद्धत्वादित्यर्थ., ननु ब्रह्मवादेऽपि सर्वस्य ब्रह्मरूपत्वाज्जीवब्रह्मणोरशांशिकर्मकर्तृभावोऽपि भेद एव सभवति श्रुतौ बहुवचनैकवचनयोरपि भेद एवोपपत्तिरिति, अपहतपाप्मत्वं चेति अपहतपाप्मेत्यनेन एष अपहतपाप्मा सत्यकामः सत्यसङ्कल्प एते केवलब्रह्मवाचकाः शब्दाः वादिना जीवे योजिता न सम्भवन्ति, तत्र हेतुः तद्विरुद्धेति, भावनियामकमज्ञानमेव वाच्यं तदेव विभाजकं वाच्यं क्रियायाः विभाजकतायां घटसम्बद्धकपालानां क्रियया विभागे घटनाशवत् ब्रह्मणो विनाशापत्तिरिति घट्टकुटीप्रभातन्यायात् किं तन्मतदूषणेनेत्यत आहुः पृथिवीत्यादि, चैतन्यान्तर्भूतं तच्छक्तिरूपं ब्रह्मशक्तिरूप, अन्तरित्यादि अयमर्थः यदि सा स्वरूपाविरोधिनी तदा सा स्वरूपभूतान् जीवान् न तुच्छीकुर्यात् यदि स्वरूपविरोधिनी तदा ब्रह्मापि तुच्छीकुर्यादित्यर्थ· स्वस्वरूपतायास्तुल्यत्वात्, ब्रह्मस्वरूपनाशने तच्छक्तित्वमपि नश्येदितिभाव, कल्पनायाः अन्तःस्थितस्य भेदकत्वकल्पनायाः, ननु सत्त्वादिशक्तिगुणा एव विभाजका न स्वयमतो नोक्तानुपपत्तिरतआहु. अप्रामाणिकत्वात् लोके वेदे च क्वापि तादृशार्थबोधकप्रमाणाभावादित्यर्थ, ननु 'नासिके निरभिद्येतां दोधूयति नभस्वती'त्यन्तःस्थितस्यापि वायोर्भेदकत्वं दृष्टं इति चेत्तत्राहुः नापीत्यादि, तथाच वायोरन्तःस्थत्वेपि न ब्रह्माण्डशक्तित्वं एतस्यास्तु ब्रह्मशक्तित्वमितिदृष्टान्तवैषम्य, निराकरणेनेति हेतुतृतीया, किञ्च लिङ्गमित्यादि गतिशब्दयोर्ब्रह्मपरत्वलिङ्गमपि वर्तत इत्यर्थ·, पूर्वं गतेर्लिङ्ग व्युत्पादयन्ति यथेत्यादि, अत्र हि वाक्यशेषे 'तद्य इह आत्मानमननुविद्य व्रज॰

---

१ कर्मचित इति वा पाठ। २ पुण्यचित इति वा पाठ।

क्षीयत' इति, नहि स्वाज्ञानं स्वस्य सम्भवति, हिताकरणप्रसक्तिश्च, न च ज्ञानेन सामर्थ्यमुद्बुद्धमिति वाच्यं, विरोधित्वात्, नहि ज्ञाने जाते कर्तृत्वमस्तीति विप्लववादिनोऽङ्गीकुर्वन्ति, विरुद्धा च कल्पना 'अहं ब्रह्मासी'ति, अत एव सर्वभावश्रुतेः, तज्ज्ञानञ्च तस्य सार्वज्ञे लिङ्गं, तस्य हि स गुणो भगशब्दवाच्यानामन्यतरः, स चेज्जीवे समायाति तत्कृपया तस्येवास्यापि माहात्म्यं भवति, तस्माल्लिङ्गादपि गतिशब्दौ ब्रह्मविषयौ ।

चकारात् 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाये'तिश्रुत्या ब्रह्मत्वेन ज्ञानं नात्मनो मोक्षाय ब्रह्मण एव तु ज्ञानमात्मत्वेनापि, तस्माद् दहरः परमात्मा ॥ १५ ॥

अपरं हेतुमाह,

## धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेः, 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये'ति, न हि सर्वलोकविधारकत्वं ब्रह्मणोन्यस्य सम्भवति, चकारात् सेतुत्वमपि, 'तदन्वेष्टव्यं तद्विजिज्ञासितव्य'मिति लोकविधारणस्य माहात्म्यरूपत्वात्, तस्यैव कर्मत्वमित्याह **महिम्न** इति, महिमैष पुरुषस्य, न तु वासनारूपेण तस्मिन् विद्यमानत्वं, संसारिधर्मत्वेनामाहात्म्यरूपत्वात्,

---

न्ती'त्यात्माज्ञानं लोकक्षयहेतुत्वेनोच्यते यद्यात्मा ब्रह्माभिन्नः स्यात् तदापहतपाप्मादिगुणकत्वात् स्वस्य स्वाज्ञानं न सम्भवति लोकक्षयज्ञानमेव स्वाज्ञानं स्वस्य ब्रह्मत्वे लोकप्राप्तितन्नाशयोरेव स्वस्मिन्नसत्त्वादित्यर्थः, अत इदमज्ञानं जीवस्य ब्रह्मभिन्नत्वं बोधयत् गते ब्रह्मकर्मकत्वे जीवकर्तृकत्वे च लिङ्ग भवतीत्यर्थ , किञ्च यदि गन्तृणां कल्पितत्वं स्यात्तदाऽज्ञानिनामिव ज्ञानिनामपि मिथ्यात्वेन तेषां सर्वलोककामचारादिहितकरणमपि न स्यादित्यर्थः, **हिताकरणे**त्यादि, तथाचेदमपि गतेर्ब्रह्मभिन्नसत्यजीवकर्तृकत्वे ब्रह्मकर्मकत्वे च लिङ्गमित्यर्थः, नन्विदं हितकरणं न गतेर्जीवभिन्नब्रह्मकर्मकत्वे लिङ्गं किन्तु ब्रह्मरूपस्यैव जीवस्य ज्ञानेनाज्ञाननाशात् कल्पिततदीयसर्वपदार्थनिवृत्तौ सत्यां सामर्थ्यस्योद्बुद्धत्वेनानेकलोककामचारादिना स्वहिताचरणं संभवदुक्तिकमेवेत्यतआहुः **नचे**त्यादि, **विरोधित्वात्**, विरोधित्वमेव विवृण्वन्ति **नही**त्यादि, **कर्तृत्वं** गमनादिकर्तृत्वं, तथाच तेषां मते उपाधिनाशे व्यापकस्यैवावशिष्टत्वान्नसम्भवतीतिभावः, **विरुद्धे**त्यादि, तथाचापहतपाप्मत्वसत्यकामत्वसत्यसङ्कल्पत्वप्रतिपादकाः शब्दा अपि ब्रह्मप्रतिपादकाः जीवे विरुद्धा', इदमपि जीवभिन्नब्रह्मपरत्वे शब्दानां लिङ्गं, **अहं ब्रह्मास्मीति**कल्पना भगवद्धर्माप्राप्तिदशायां विरुद्धेत्यर्थ., **अत एव** भगवद्धर्मप्राप्तेः पूर्वमुक्तकल्पनायाः विरुद्धत्वादेव, **सर्वभावश्रुतेः** सर्वस्य ब्रह्मत्वेन ज्ञानस्य श्रुतिसिद्धत्वादित्यर्थः, **तज्ज्ञानञ्च** जीवस्य सर्वं ब्रह्मेतिज्ञानञ्चेत्यर्थ., **तस्य** जीवस्य, **तस्य** ब्रह्मणः, **सः** सर्वज्ञतालक्षणः, **अन्यतरः** ऐश्वर्येत्यादिषण्णामन्यतर., **तस्येव** भगवतः इव, **तस्यापि** जीवस्यापि, श्रुतिस्थं तमेवेत्यंशं व्याकुर्वन्ति **ब्रह्मत्वेने**त्यादि, तथाचात्मन. स्वात्मन. ब्रह्मत्वेन ज्ञानं न मोक्षाय किन्तु ब्रह्मण. सर्वरूपत्वेन ज्ञाने स्वात्मरूपताज्ञानस्यापि सम्भवाद् ब्रह्मण एवात्मत्वेन ज्ञानं मोक्षायेत्यर्थ. ॥ १५ ॥

**धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः** ॥ १६ ॥ **हेतुं** दहरपदवाच्यपरब्रह्मत्वे हेतुं, **सेतुः** यावत्सृष्टपदार्थानां यद्यत्कार्यार्थत्वं स्वयमुद्दिष्टं तस्य तस्य तत्तत्कार्यकरण तदितराकरणं च तत्र नियामक , **विधृतिः** स्वयं यथा स्थापिताः पदार्थास्तथैव तिष्ठन्ति तत्र हेतुभूता, **असम्भेदाय** धारकाभावपतनेन सर्वेषां लोकाना एकत्र मिश्रीभाववारणाय, **तस्यैव** सर्वधारकस्यैव, **कर्मत्वं** अन्वेषणविजिज्ञासाकर्मत्व, **एषः** पूर्वोक्त', **पुरुषस्य** पुरुषसम्बन्ध्येव वास्तव एवेत्यर्थः, **वासनारूपेण** सर्वस्याहं सेतुर्धर्ताइतिभ्रमात्मकज्ञानत्वेन, **तस्मिन्** ब्रह्मणि, **विद्यमानत्वमिति** वर्तित्वं, तत्र हेतुः **संसारी**त्यादि, तथाचाध्यासिकसेतुत्वधारणादेर्ब्रह्मणि कल्पनेऽज्ञानित्वसिद्धौ माहात्म्यनाशः, सेतुत्वस्य श्रुति-

न च विरुद्धमुभयत्रैकस्य दर्शनमिति वाच्यं, अस्यास्मिन्नुपलब्धेः, अस्यैतादृशविरुद्धधर्माश्रयमाहात्म्यस्यास्मिन् भगवत्येवोपलब्धेः, 'ज्यायानाकाशाद्यावान् वा अयमाकाशः अणुः स्थूल' इति, यशोदादयश्च बहिःस्थितमपि जगदन्तः प्रपश्यन्ति, नत्वेतादृशो जीवो भवितुमर्हति, तस्माद् ब्रह्मैव दहरः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

आकाशशब्दवाच्यत्वप्रसिद्धिः, अपहतपाप्मत्वादिप्रसिद्धिः, किं बहुना? प्रकरणोक्तसर्वधर्मप्रसिद्धिर्भगवत्येव न जीवे सम्भवत्यतोपि भगवानेव दहरः, चकाराद्विधिमुखेनाधिकरणसमाप्तिः सूचिता ॥ १७ ॥

अन्यनिषेधमुखेन पुनर्विचारयति,

ननु ब्रह्मैतादृशं जीवो नैतादृश इति न क्वचित् सिद्धमस्ति श्रुत्येकसमधिगम्यत्वादुभयस्वरूपस्य ब्रह्मवादे, अतो यथा सर्वत्र ब्रह्मणोसाधारणधर्मदर्शनात् तत्तत्प्रकरणं ब्रह्मण इति निश्चीयते एवमिहापि जीवस्यासाधारणधर्मदर्शनाज्जीवप्रकरणमिति कुतो न निश्चीयते? निश्चिते तु तस्मिन्नाकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्ति नान्यस्येत्यभिप्रायेणाह,

## इतरपरामर्शात् स इतिचेन्नासम्भवात् ॥ १८ ॥

**इतरपरामर्शात् सः**, इतरो जीवस्तस्य परामर्शः, उपक्रमोपसंहारमध्यपरामर्शैः सन्दिग्धे निर्णयः, तत्रात्मविदः सर्वान् कामानुक्त्वा मध्ये 'अथ[1] य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभय'मित्यादि मध्ये, अग्रे 'अथ य आत्मा स सेतु'रिति, तत्र सम्प्रसादः सुषुप्तिर्जीवावस्था, तत्र परसम्बन्धनिमित्तेन स्वेनैव रूपेणाभिनिष्पत्तिवचनाज्जीव एवैतादृश इति गम्यते, नह्यत्र परमात्मनोयं धर्मः सम्भवति, अतः सर्वमेव प्रकरणं जीवपरं भविष्यतीति स एव जीव एव प्रकरणार्थ इति चेत्,

न, जीवस्तादृशो न भवति, विरुद्धधर्मत्वेनैव सर्वत्र तन्निश्चयात्, उभयोरेकत्वे ह्युभयत्वमेव न स्यात्, 'ऋतं पिबन्ता'वित्यादिवाक्यविरोधश्च, अतो न जीवस्तादृश इत्यभिप्रायेणाह **असम्भवात्**,

---

सिद्धत्वाद् धारणस्य च बहिःस्थितधर्मत्वादुभयं चैकस्य विरुद्धं कथं सम्भवेदित्यत आहुः नचेत्यादि, **उभयत्र** अन्तर्बहिः, **एकस्य** भगवतः, **दर्शनं** अनुभवः, **अस्य** भगवतः, **अस्मिन्नुपलब्धेः** अन्तर्बहिश्चोपलब्धेरित्यर्थः, श्रीयशोदाया एव दर्शनरूपोपलब्धेः सर्वजनीनत्वान्मुखस्य बहिरन्तश्च भगवद्दर्शनात्, **विरुद्धधर्मे**त्यादि 'अणोरणीयान् महतोमहीया'नित्यादावप्युपलब्धिः ॥ १६ ॥

**प्रसिद्धेश्च** ॥ १७ ॥ आकाशपदस्य अपहतपाप्मत्वादिनिखिलप्रकरणस्थधर्माणां शब्दानां भगवत्येव प्रसिद्धेः दहरपदवाच्यः परमात्मैवेत्यर्थः ॥ १७ ॥

**इतरपरामर्शात् स इति चेन्नासम्भवात्** ॥ १८ ॥ पूर्वं चतुःसूत्र्या विधिमुखेन ब्रह्मणि दहरपदवाच्यत्वं स्थापितं एतदादिचतुःसूत्र्या तु दहरपदवाच्यत्वं जीवे न सम्भवतीति व्यतिरेकमुखेन दहरपदवाच्यत्वं ब्रह्मणि स्थापयन्ति नन्वित्यादिना, **परामर्शैः** उपपादनसम्भवैः, **सन्दिग्धे** दहरपदवाच्यत्वे सन्दिग्धे, **निर्णयः** पूर्वोक्तपरामर्शैर्निर्णयः, **उक्त्वा** उपक्रमे उक्त्वा, **अग्रे** उपसंहारे, **अभिनिःपत्तिवचनात्** अनुभवनिरुक्तिकरणात्, **अयं** सुषुप्तिरूपः सम्प्रसादः, एवं इतरपरामर्शं व्याख्याय तस्य जीवे प्रकरणित्वसाधकतां व्युदस्यन्ति नेत्यादिना, **तादृशः** प्रकरणी,

---

१ 'अथ' क्वचिन्नास्ति ।

नहि जीवे जगदाधारत्वादिकं सम्भवति, नहि परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते, परामर्शस्यान्यार्थत्वमुत्तरत्र वक्ष्यति, तस्माद्दहरो जीवो न भवितुमर्हति, वाक्यार्थो यथोपपद्यते तथोत्तरत्र वक्ष्यते, ब्रह्म त्वेकमेव नोभयमिति निश्चयः ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरात् प्रकरणात् प्राजापत्यात्, तत्र हि 'दिव्ये चक्षुषि मनोरूपे प्रतीयमानो जीव एवामृताभयरूपो निरूपितः, तस्यैवोदशरावे जाग्रत्साक्षित्वं तदनु स्वप्नसाक्षित्वं तदनु सुषुप्तिसाक्षित्वं निरूप्य सर्वत्र तस्यामृतरूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वमुक्त्वा समाध्यवस्थायां मनसि तमेव जीवं तादृशं प्रतिपादयति, अतो जीवोपि वस्तुतस्तादृश एवेति प्रकृतेपि परामर्शात् स एवेति चेदेवमाशङ्क्य परिहरति तुशब्देन, नायमर्थो दूष्यते किन्तु किञ्चिदन्यदस्तीति न नकारप्रयोगः, तदाह आविर्भूतस्वरूपः, स्वाप्ययसम्पत्त्योर्भगवदाविर्भावो जीवे भवति नृसिंहोपासकस्य नृसिंहाविर्भाववत्, ब्रह्मण उपदेशसमये भगवदाविर्भावात् सर्वत्र स्वात्मानं पश्यन्निन्द्रेपि तथैवोपदिष्टवान् प्रजापतिः, अन्यथा प्रतिबिम्बादावमृताभयवचनं मिथ्या स्यात्, इन्द्रे त्वाविर्भावाभावात् प्रजापत्यसन्निधाने विपरीतं पश्यति, अतस्तावन्मात्रदोषपरिहारायान्यथोपदेशः स्वप्नादिषु तथा प्रकृतेपि सुषुप्तावस्थायां[1] भगवदाविर्भावात् तथावचनं, तस्मादुभयमपि भगवत्प्रकरणमेव, एवमन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा ऊह्याः[2], तस्माद्दहरः परमात्मैव ॥ १९ ॥

परामर्श[3]प्रयोजनमाह,

---

विरुद्धेत्यादि ब्रह्मविरुद्धधर्मत्वेनैव श्रुतिस्मृत्यादिषु जीवस्य निश्चयात्, उभयोः जीवब्रह्मणोः, एकत्वे एकव्यक्तिरूपत्वे, उभयत्वमेव न स्यात् उभयत्वस्य व्यक्तिद्वयमात्रपर्याप्तव्यासज्यवृत्तिधर्मत्वादित्यर्थः, ननूभयत्वमाध्यासिकं नतु वास्तवमतआहुः ऋतमित्यादि तथाच पिबन्ताविति द्विवचनमनुपपन्नं स्यादित्यर्थः, नहि श्रुतिप्रणेतुरध्यासः सम्भवति, तादृशः एतत्प्रकरणी, असम्भवात् हृदयान्तर्वर्तिनि जीवे अखिलजगदाधारत्वस्यासम्भवादित्यर्थः, विरुद्धं जीवत्वब्रह्मत्वोभयं, कल्पयितुं एकस्मिन् व्यक्तिविशेषे कल्पयितु, उत्तरत्र सूत्रान्तरे ॥ १८ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१९॥ तस्य प्रकरणस्य जीवपरत्वं व्युत्पादयन्ति तत्रेत्यादिना, 'दिव्ये चक्षुषि मनोरूपे'इति 'मनोस्य दिव्यं चक्षु'रितिप्रजापतिना वक्ष्यमाणत्वात्, नन्वग्रे 'योय भगवोप्सु परिख्यायते यश्चायमादर्शे कतम एष' इतिप्रश्ने 'एष उ एवैषु सर्वेष्वन्तरेषु परिख्यायत'इतिप्रत्युत्तरात् प्रतिबिम्बपुरुष एवात्र प्रतीयत इति कथमस्य मनसि प्रतीयमानजीवस्वरूपत्वमित्यत आह तस्येत्यादि, यदि हि प्रतिबिम्बात्मैवात्रोपदेश्यः स्यात् तदा 'उदशराव आत्मानमवेक्ष्य यदात्मनो विजानीथस्तन्मे प्रब्रूत'मित्यनेन यः सम्बन्धिप्रतिबिम्बेऽज्ञातत्वेनोक्तः स आत्मेति बोधितं, ततस्ताभ्यामुदशरावेक्षणेन शरीरस्यात्मत्वे बोधिते ततोपि निवार्य जाग्रत्साक्षिण मनस्यहंवित्त्या बोधयितुं 'साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेवेक्षेथा'मित्यादिना 'एष आत्मे'तिवाक्येन द्रष्टात्मा बोधितः ततस्तावता तदज्ञाने देहात्मज्ञानवतां पराभव तेषामासुरत्व चोक्त्वा तत इन्द्रस्य पुनः प्रत्यागमने तं प्रति जीवस्यैव स्वप्नसाक्षित्वं पुनः सुषुप्तिसाक्षित्व प्रतिपादयति तेनात्र जीव एवोपदेष्टव्यो न प्रतिबिम्बो देहो वा, तेन सिद्धमाहुः अतइति, तादृश इत्यादि, तादृशः अमृताभयरूपोपहतपाप्मा च वस्तुतो ब्रह्मात्मक एवोत्तरप्रकरणे सिद्ध इति सर्वत्रापि स एव गृह्यतामित्यर्थ, परिहरति जीवे ब्रह्मरूपतयामृतादिविशेषणान्युक्तानि त पक्षं परिहरतीत्यर्थः, अयमर्थः अमृताभयादिरूपर्जीवस्यानुभवरूपोर्थः, किञ्चित् उक्तानुभवस्योपपादने प्रकारविशेषः, तं प्रकारमाह आविर्भूतस्वरूप इति आविर्भूतं प्रकटीभूतं ब्रह्मस्वरूपं यस्मिन् स प्रजापतिस्तथेत्यर्थः, आविर्भाव एव कथमित्यतआहुः स्वाप्ययेत्यादि, अनुगमाधिकरणे 'मय्येव सकल जात'मित्यादिवाक्यानुरोधात् उत्तमाधिकारिणामुपदेशकाले भावनादिनापि जीवे ब्रह्माविर्भावसम्पत्तिर्भवतीत्युपपादितमतोत्रापि प्रजापतिजीवे ब्रह्माविर्भावात् सर्वविशेषणान्युद्घोष्यन्ते नतु जीवो ब्रह्मैवात, अन्यथा प्रतीतिमात्रेण ब्रह्मत्वाङ्गीकारे, प्रतिबिम्बादाविति आदिपदेन शरीरपरिग्रहः, प्रजापतेः सर्वत्रैव ब्रह्मभावेन सर्वत्रैव तथोपपादनादितिभावः, तावन्मात्रदोषः असन्निधाने विपरीतदर्शनदोषः, अन्यथोपदेशः देहादिविलक्षणतयोपदेश. ॥ १९ ॥

---

१ स्वप्नावस्थायामिति पाठः प्रकाशे । २ आह्या इतिपाठः प्रकाशे । ३ परामर्शस्येति पाठः प्रकाशविवरणयोः ।

## अन्यार्थश्च परामर्शः ॥ २० ॥

अन्य एवार्थः प्रयोजनं यस्य तस्माद् 'यमहरहर्वा एवंवित् स्वर्गलोकमेति' स्वस्यैवंज्ञाने हि ब्रह्मसुखं फलं ब्रह्मज्ञानापेक्षायामुपयुज्येत, भगवतश्च तदाविर्भावो भवतीति चकारार्थः, सम्पत्तौ भगवदावेशकथनार्थं वक्ष्यति च 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही'ति चतुर्थे, तस्मान्न परामर्शेनान्यथाकल्पनम् ॥ २० ॥

ननु न वयं जीवे उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः, किन्तु ब्रह्मणि नायमर्थ उपपद्यते,

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

अल्पश्रुतेः, अल्पे हि पुण्डरीके कथं भगवदवस्थानं व्यापकत्वश्रवणात्, 'यावान् वा अयमाकाश' इति? तस्माद् विरोधपरिहाराय जीव एवाराग्रमात्रस्तया भवत्विति कल्प्यत इति चेत्तर्हि भवान् सम्यग्विचारकोऽस्मदीय एव, परं तत्समाधानं पूर्वमेवोक्तं, 'निचाय्यत्वादेवं व्योमवच्चे'त्यत्र, तन्न प्रसर्तव्यं, विरोधस्तु सर्वभवनसमर्थे ब्रह्मणि नाशङ्कनीयः, तथा पुरुषशरीरश्च, 'पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितमि'ति-भगवद्वाक्यात्, तस्माद्भगवानेव दहर इति सिद्धम् ॥ २१ ॥

॥ इति प्रथमाध्याये तृतीयपादे पञ्चमं दहराधिकरणम् ॥

दहरविरुद्धं वाक्यमाशङ्क्य परिहरति, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति कठवल्ल्यामन्यत्र च श्रूयते, यत्तच्छब्दानामेकार्थत्वं प्रकरणाद् ब्रह्मपरत्वश्चावगतं, अर्थाच्च सन्देहः, 'यस्मिन् द्यौ'रित्यत्र सूर्यादीनां ब्रह्माधारत्वमुक्तं, अस्मिंश्च वाक्ये पूर्वार्धे तत्र तेषां भानं निषिध्यते,

यत्र यत् सर्वदा तिष्ठेत् तत्र चेत्तन्न भासते ।
क्व भासेताप्यपेक्षायां कर्मत्वे श्रुतिबाधनम् ॥

यत्रेत्यधिकरणसप्तमी, यत्र लोकान्तरस्थितानामप्यभानं तत्राग्नेः का वार्तेतिवचनात् सत्यलोकस्थितः कश्चित्तेजोविशेष एव वाक्यार्थ इत्येवं प्राप्ते, उच्यते,

---

अन्यार्थश्च परामर्शः ॥ २० ॥ यस्य परामर्शस्य, प्रयोजनमेवाहुः तस्मादित्यादिना, प्रथमे प्रकरणे 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सतियमिति यद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एववित् स्वर्ग लोकमेती'तिवाक्ये स्वस्य भगवद्विषयके अमृतमर्त्ययमयितृत्वज्ञाने सति ब्रह्मसुख फलमुक्तमतस्तत्साधनभूतब्रह्मज्ञानापेक्षायां मुक्त्यधिकारिजीवज्ञानमपेक्षितं नहि नियम्यज्ञानं विना नियामकज्ञान सम्भवति अतः मर्त्यस्य प्रसिद्धत्वादमृतज्ञानार्थं जीवपरामर्श इति फलितं, उपयुज्येत जीवपरामर्शः जीवज्ञानं उपयुज्येतेत्यर्थः ॥ २० ॥

अल्पश्रुतेरितिचेत्तदुक्तम् ॥ २१ ॥

इति प्रथमतृतीये पञ्चमाधिकरणम् ॥

---

१ स्वर्गमितिप्रकाशविवरणयो पाठ । २ अन्यथावन्मानमिति पाठ. क्वचित् । ३ 'तु' इति क्वचिदधिकम् । ४ अस्मिन्निति पाठः क्वचित् ।

## अनुकृतेस्तस्य च ॥ २२ ॥ (१. ३. ६.)

भगवदनुकारार्थमेवैतद्वचनं, स्वतो भाननिषेधः पूर्वार्धे, सर्वोपि पदार्थः तमेवानुकरोति सूर्ये रश्मय इव छाया पुरुषमिव, तस्माद्वाक्ये भगवदनुकारित्ववचनान्नान्यार्थकल्पनं, किञ्च 'तस्य भासा सर्वमिदं विभाती'ति सूर्यादीनां स्वतःप्रकाशो नास्त्येव घटवत्, भगवत्प्रकाशेनैव प्रकाशवत्त्वमिति चकारार्थः, तस्मात् स्वतोऽभावे लक्षणया कर्मत्वे वा भगवत्परत्वे सिद्धे नान्यार्थकल्पनम् ॥ २२ ॥

व्याख्यातेर्थे सम्मत्यर्थमाह,

## अपि स्मर्यते ॥ २३ ॥

अपीति समुच्चयः, 'न तद्भासयते सूर्यो न शशाङ्को न पावकः यदादित्यगतं तेजो जगद्भासयतेखिलं यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति च, तस्माद्भगवानेव सर्वावभासकस्तमेव सर्वमनुकरोतीति सिद्धम् ॥ २३ ॥

### इति प्रथमाध्याये तृतीयपादे षष्ठमनुकृत्यधिकरणम् ।

---

अनुकृतेस्तस्य च ॥ २२ ॥ उपोद्घातसङ्गतिं प्रदर्शयितुमाहुः दहरेति, मुण्डककठवल्ल्योर्ब्रह्मप्रकरणत्वस्यादृश्यत्वाद्यधिकरणेषु साधितत्वात् तद्वाक्यस्य ब्रह्मपरत्वेन तद्विरुद्ध दहरवाक्य न ब्रह्मपरमितिशङ्कानिरासायाशङ्क्येत्यर्थः, यत्तच्छब्दानामित्यादिना संशयबीजमाहुर्विषय आदावेवोक्त, कठवल्ल्यां 'य एष सुप्तेषु जागर्ति'इतियच्छब्दः मन्त्रान्तरे 'तस्मिन् लोकाः श्रिताः सर्वे'इतितच्छब्द, अस्मिन्मन्त्रे 'तमेव भान्त'मितिमन्त्रे तच्छब्दः, मुण्डके 'यत्र देवः क्रतुभिर्विभाति भावन' इति यच्छब्दः मन्त्रान्तरे 'न तत्र सूर्यो भाती'ति तच्छब्द, यत्तच्छब्दानामेकार्थत्वं प्रकरणात् ब्रह्मपरत्वं चावगतं, तथाप्यर्थत सन्देहः इति अत्र यत्तच्छब्दाभ्यामुपात्तं ब्रह्मोत सत्यलोकस्थितः कश्चित्तेजोविशेषो वा इति सन्देह इत्यर्थः, सन्देहमेवोपपादयन्ति यस्मिन्नित्यादिना, ब्रह्माधारत्वं ब्रह्मवृत्तित्वं, नच 'तमेवभांत'मित्यादिना तदपेक्षयाधिकभान एव निषेधपर्यवसाने सिद्धे न तद्वृत्तित्वबाधनमिति वाच्यं, तथापि अकर्मकभाधातोः सकर्मकत्वनिर्देशेन श्रुतिबाधनं दोषः, तथाहि 'तमेव भांतमनुभाति सर्वं'मित्यत्र तत्कर्मकं यद्भानं तादृशभानकर्मक यदनुभानं तत् सर्वपदार्थे भासते इति भातेः सकर्मकत्वघटिता श्रुतिः सा बाधेतेत्यर्थः, पूर्वपक्षमाहुः यत्रेतिवचनमारभ्य, तेजोविशेषइति सूर्यादितेजसा पराभवसम्पादकस्तेजोविशेष इत्यर्थः, तथाच यथाश्रुत एवोक्तश्रुत्यर्थः, कर्मत्वांशे श्रुतिबाधोपि नास्ति अनोः कर्मप्रवचनीयत्वेन अनुयोगे द्वितीयाया उपपदविभक्तित्वे क्रियाजन्यफलार्थत्वाभावात् पूर्वोक्तश्रुत्यर्थ एव साधीयानितिफलितोर्थः, समाधि व्याकुर्वते भगवदित्यादि, सत्यलोकान्यभाने यद् वाक्यपूर्वार्धतात्पर्यमुक्त तत्र, उत्तरार्धे सर्वस्यानुकारित्वकथनात् सर्वस्य तद्भासा भानकथनाच्च, तथाच सर्वस्य भगवदनुकारार्थमेवैतद्वचनं, एतद्विवरण स्वत इत्यादि, ननु पूर्वोक्ततेजोविशेषानुकारार्थमेवोक्तवाक्यप्रवृत्तिरस्त्वितिचेत्तत्राहुः तस्मादित्यादि, उपनिषद्द्वयेपि वाक्यस्य प्रकरणसंदष्टत्वात्प्रकरणिभूतभगवदनुकारित्ववचनमनुसन्धाय अन्यार्थभूततेजोविशेषकल्पन न युक्तमित्यर्थः, स्वतोऽभावे स्वतःप्रकाशकर्तृत्वाभावे, लक्षणया अनुभातीत्यस्य प्रकाशकर्त्रनुकारिलक्षणया तमेवभान्तमनुभातीत्यत्र च भानानुभानकर्मत्वं तत्पदार्थे प्रकाशविशिष्टे च भासमानक्रियाजन्यफलरूपं मुख्यं न सम्भवतीत्यतो भानानुरूपकर्मत्वरूपे गौणकर्मत्वे लक्षणया वा चार्थः, तथा चोक्तरीत्या सकलश्रुत्यर्थोपपत्तौ अन्यार्थकल्पनमयुक्तमित्यर्थ ॥ २२ ॥

अपि स्मर्यते ॥ २३ ॥ भाष्यमत्र प्रकटार्थं, दहरवाक्यानुगुण्यार्थमिदमुक्तमवसेयम् ॥ २३ ॥

इति प्रथमतृतीये षष्ठाधिकरणम् ॥

---

१ न नानार्थकल्पनमितिपाठः प्रकाशे । २ स्वतोऽभाने इति प्रकाशविवरणपाठ । ३ सूत्रे 'च'सहितः पाठो विवरणे । ४ भूतिभावन इति प्रकाशपाठः ।

प्रसङ्गात् पुनर्बाधकान्तरमाशङ्क्य परिहरति, 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य न ततो विजुगुप्सति[1]' तथा 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक' इति, तत्रैव श्रूयते 'यावान्वा अयमाकाश' इति व्यापकत्वमन्तःस्थितस्य प्रतीतं, अङ्गुष्ठमात्रता चात्र प्रतीयते, अतो विरोधाज्जीवस्यैव लोकान्तरगन्तृदेहवत[2] उपासनार्थमीशानत्वादिधर्माः, 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि'ति तन्निवृत्त्यर्थं, तस्मादङ्गुष्ठमात्रो न भगवानेवं प्राप्तमत उत्तरमाह,

## शब्दादेव च[3] प्रमितः ॥ २४ ॥ (१. ३. ७.)

अत्र सन्देह एव न कर्तव्यः, शब्दादेव प्रकर्षेण विमानात्, यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं तथाङ्गुष्ठमात्रस्यैवेशानत्वं, यदि भगवान् तादृशो न स्यादन्यस्य तादृशत्वं नोपपद्येत, तस्माद्भगवतः सर्वतःपाणिपादान्तत्वाद् यत्र यावानपेक्ष्यते तत्र तावन्तं श्रुतिर्निरूपयतीत्यङ्गुष्ठमात्रः परमात्मेति सिद्धम् ॥ २४ ॥

नन्वनेकरूपत्वं विरुद्धधर्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूपयति, प्रादेशमात्रत्वञ्च ध्यानार्थं, अङ्गुष्ठमात्रत्वस्य कोपयोग इति चेत् तत्राह,

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

तुशब्देन निःप्रयोजनत्वं निराक्रियते, अस्ति प्रयोजनं, तदाह हृद्यङ्गुष्ठमात्रं निरूप्यते केन हेतुना? अपेक्षया ईश्वरकार्यापेक्षया, 'ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठती'तिस्मृतेः, रक्षार्थमङ्गुष्ठमात्र इत्यर्थः,ननु प्रमाणान्तरत्वे किमेतन्न सम्भवति? तत्राह **मनुष्याधिकारत्वात्**, मनुष्यानधिकृत्येदं मृत्यूपाख्यानं प्रवृत्तमतो मनुष्याणां हृदयस्यांगुष्ठमात्रत्वात्, यद्यपि हृदयं स्थूलं तथापि धर्मरूपं तावदेव, तावन्मात्रस्यैवावदानश्रवणात्, तस्मादङ्गुष्ठमात्रस्यैव सर्वधर्मरक्षकत्वादङ्गुष्ठमात्रोत्र भगवानेवेति सिद्धम् ॥ २५ ॥

**॥ प्रथमाध्याये तृतीयपादे सप्तमं प्रमिताधिकरणम् ॥**

---

**शब्दादेव च प्रमितः ॥ २४ ॥** बाधकान्तरं परिमाणविरोधलक्षणं बाधकान्तरं, **लोकान्तरगन्तृदेहवतः** अगुष्ठपरिमाणाद्देहवतो मुक्तजीवस्येत्यर्थ., 'अथ सत्यवतः कायात् पाशबद्ध वशं गतं अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्,' इदं च वाक्यं सावित्र्युपाख्याने वर्तते, सत्यवान् सावित्र्या पतिः, **तन्निवृत्त्यर्थं** तादृशाधमजीवनिरासार्थं, तथाच मुक्तजीवस्यैवोपासनार्थमेते धर्मा ईशानत्वादय उपासनार्थं बद्धजीवव्यावृत्त्यर्थं च बोध्या ॥ २४ ॥

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥** ईश्वरकार्यापेक्षया ईश्वरस्य कार्यं सृष्टानां रक्षणं तदर्थं अपेक्षितत्वादित्यर्थः, **प्रमाणान्तरत्वे** अङ्गुष्ठमात्रातिरिक्तप्रमाणाङ्गीकारे, **एतत्** रक्षणम् ॥ २५ ॥

**॥ इति प्रथमतृतीये सप्तमाधिकरणम् ॥**

---

१ 'विजुगुप्सते' इत्यपि पाठ २ लोकान्तरगं तृदेहवदितिपाठस्त्वशुद्ध एव, तत्र गन्तृस्थाने लिपिकारप्रमादाद् गंतृ। ३ 'च'रहितपाठः प्रकाशविवरणयो ।

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद् भ्रमो भवेत् सर्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति, तन्निराकरणार्थं देवादीनामधिकारमाह,

## तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥ ( १. ३. ८. )

तदुपर्यपि मनुष्यापेक्षयार्वाक्तनानामधिकारो नास्ति, तत्रापि वैदिकधर्महेतोस्त्रैवर्णिकानां धर्मयुक्तानामागतं ततोपि ये साध्यादयो धर्मयुक्तास्तेषामप्यधिकारः, तत्र जैमिनिप्रभृतीनां न सम्मतिरिति स्वनामग्रहणं, विशिष्टत्रैवर्णिकानारभ्य प्रजापतिपर्यन्तं शतानन्दिनामधिकारं मन्यते बादरायणः, कुतः? सम्भवात्, सम्भवति तेषां ज्ञानाधिकारः, धर्मज्ञानाभ्यां सातिशयाभ्यां हि[1] तादृशजन्मसम्भवात्, न हि तेषां पूर्वसंस्कारो लुप्यते, अक्षरपर्यन्तं शतोत्कर्षश्रवणादुपर्यपेक्षा, अतोक्षरप्राप्तेः शुद्धब्रह्मविद्याहेतुकत्वादुत्तरोत्तरमुपदेष्टॄणां विद्यमानत्वात् प्रजापतिपर्यन्तं सर्वेषामधिकारः सम्भवति, सम्भववचनाद् दुर्लभाधिकारस्तत्रेति सूचितं, 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणा'मिति, तदुपर्यप्यधिकारः सिद्धः ॥ २६ ॥

## विरोधः कर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

नन्वेवमुपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्वभाविष्वप्यधिकारो वक्तव्यः कर्मणि वेदाध्ययने उपनयनादिषु च, ततश्च तेषां ब्राह्मण्याद्यभावाद्देशद्रव्याद्यभावाच्च पौराणिकेन मतेन देवान्तराभावाच्च तदभावेपि क्रियमाणे कर्मणि श्रुतिविरोध इति चेत्, न, अनेकप्रतिपत्तेर्दर्शनात्, बहूनां प्रतिपत्तिर्दृश्यते, बहवोत्र कर्मणि प्रवर्तमाना दृश्यन्ते, 'साध्या वै देवा सुवर्गकामा एतत् षड्रात्रमपश्यन् तमाहरन्तेनायजन्त सोग्निष्टोमेन वसूनयाजयत्, स उक्थ्येन[2] रुद्रानयाजयत्, सोतिरात्रेणादित्यानयाजय'दित्यादि, य'थैकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवासे'ति, भूमावागत्य ऋषीन् वृत्वा यज्ञकरणञ्च श्रूयते, 'देवा वै सत्रमासते'त्यादौ दर्शनवचनात् स्वस्यापि ऋत्विक्त्वं कर्मकरणञ्च द्योतयति ।

---

तदुपर्यपि बादरायणः सम्भवात् ॥२६॥ अर्वाक्तनानां पश्वादीनामित्यर्थ, तत्रापि मनुष्येष्वपि, हेतोः विद्याध्ययनयज्ञोपवीतादेरित्यर्थं, आगतमधिकारित्वमागतमित्यर्थः, न सम्मतिः देवताविग्रहानङ्गीकारादित्यर्थः, सम्भवं विवृण्वन्ति धर्मेत्यादि, 'तं विद्याकर्मणी समन्वारभेते' इतिश्रुत्या विद्याकर्मणी द्वे अपि प्रत्येकं तं देहं समन्वारभेते कुर्यातामित्युक्तेः, धर्मज्ञानाभ्यां सातिशयाभ्यां साङ्गाभ्यां, तत्र देवलोकादौ, तत्तल्लोकीयभोगानां तत्रतत्रावश्यकत्वाद्ब्रह्मविद्याधिकारो दुर्लभ इत्यर्थ. ॥ २६ ॥

विरोध. कर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ तत्पूर्वभाविषु ज्ञानपूर्वभाविषु कर्मस्वित्यर्थः, तेषां देवाना, देशद्रव्याद्यभावात् प्राचीनप्रवणभूम्यादिरूपस्य देशस्य व्रीह्यादिरूपस्य द्रव्यस्य चाभावादित्यर्थः, देवान्तराभावात् इन्द्रादिकर्तृकयागादौ इन्द्रान्तरादियजनीयदेवानामभावात् स्वयं स्वस्य यजने च फलानुपपत्तेरितिभाव., अनोऽभावः अनोबाधः मार्गाभावादित्यर्थ., एव कृष्णलेष्ववघातबाध' तुषाभावात्, तथाप्यसम्भवतो बाधस्थले यज्ञादिदर्शनादन्यत्रापि तत्सम्भवो द्रष्टव्यः, पुरुषावयवैरिति तथाच पुरुषावयवैः सर्वपदार्थाधिदैविकरूपैः सकलयज्ञार्थसम्भाराणां सम्भवान्न कस्याप्यनुपपत्तिरितिभावः ॥ २७ ॥

---

१ नास्ति 'हि' विवरणे २ 'तु' सहितोपि पाठ ।

अथवा, सर्वपदार्थानामनेका प्रतिपत्तिर्बहुधोपयोगो वेदे दृश्यते, यथा चतुर्धाकरणादि परिधिप्रहरणादि तुषोपवापादि तद्विद्यमाने क्रियते नाविद्यमाने, तथा यत्र ये पदार्था न सन्ति तत्र कर्म तदभावेपि भवति, तथाहि दृश्यते, पर्वते सोमवाहकानोऽभावेवत्[1], 'यज्ञेन यज्ञमयजन्त देवाः' 'इति सम्भृतसम्भारः पुरुषावयवैरहं तमेव पुरुषं यज्ञं तेनैवायजमीश्वर'मित्यादिवाक्यैः सर्वसम्भृत्युपपत्तिश्च, आधुनिकान् प्रति वेदविभागात् जैमिनेस्तथानिर्णयः, तस्मात् कर्माधिकारः कर्मकरणश्चोपर्यपि सिद्धम् ॥ २७ ॥

## शब्द इतिचेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

ननु मास्तु कर्मकरणे विरोधः, शब्दे तु भविष्यति, अर्थज्ञानानन्तरं हि कर्मकरणं, वेदाच्चार्थज्ञान, तत्र साध्यादीनां वेद एव कर्मकरणं श्रूयते, तत्र ज्ञाने कर्मकर्तृविरोधः, अन्यकल्पनायां त्वनवस्था [2]व्यवस्थापकाभावात्, तस्माद्वेदो वसूनां वृत्तान्तं वदन् वसूनामधिकारं वदेत्, वदन् वा कथमनित्यो न भवेदिति चेत्, न, **अतःप्रभवात्** अतः शब्दात् प्रभवः शब्दोक्तपदार्थानां, वेदोक्ताः सर्व एव पदार्था आधिदैविका एव पुरुषावयवभूताः, सर्वानुकारित्वाद् भगवतः, अतो नामप्रपञ्चो वेदात्मको भिन्न एवाङ्गीकर्तव्यः, स केवलं शब्दैकसमधिगम्यः, 'वेदैश्च सर्वैरहमेव वेद्य'इति, अतस्तस्य प्रपञ्चस्य भिन्नत्वान्न विरोधः शब्दे, कथमेवमत आह, **प्रत्यक्षानुमानाभ्याम्**, प्रत्यक्षं तावदिदानीमपि यजमानः यजमानकृत्यं ऋत्विजश्च स्वकृत्यं वेदादेवावगच्छन्ति, नचाकृतिमात्रवाचकत्वेना-

---

**शब्द इतिचेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम्** ॥२८॥ मास्त्वित्यादि पूर्वोक्तरीत्या विरोधस्य परिहृतत्वान्मास्त्वित्यर्थः, **वेदाच्चार्थज्ञान**मित्यादि, अर्थज्ञाने सति तस्मिन् शब्दशक्तिग्रह. शक्तिग्रहे व सति वेदाच्छाब्दबोध इत्यर्थज्ञानस्य प्राथम्यमपेक्षितमित्यर्थ', तत्रेति वेदविशेषण, ज्ञाने **कर्मकर्तृविरोध** इति 'साध्या वै देवा. सुवर्गकामा' इत्यादिना 'अयजन्त' इत्यनन वेदे यज्ञानां तत्कर्तॄणां च भूतत्वेनोपदेशः वेदप्रवृत्त्यनन्तरं च यज्ञाना तत्कर्तॄणां चान्या प्रवृत्तिस्तत्र भूतानामनन्तरप्रवृत्तानां चैक्ये भूतत्वानन्तरप्रवृत्तत्वयोर्ज्ञानमेव न सम्भवति तयोर्विरोधात्, **अनवस्था** प्रतिकल्पमन्येषामन्येषां कल्पनादनवस्थेत्यर्थः, **कथमनित्यो न भवे**दिति तथाच वस्तुतस्तु तद्वृत्तान्तप्रवृत्त्यनन्तरं तज्ज्ञाने सति तेषु शक्तिज्ञानानन्तर प्रवृत्तानां वेदानामनित्यता कथं न भवेदित्यर्थः तादृशवेदस्यानादित्वाभावादितिभावः, सादिभावस्य नाशावश्यम्भावात, **अत.शब्दा**दिति, अत एतस्य व्याख्या **शब्दा**दिति,तथाच शब्दानां नित्यत्वत एव शब्दोक्तार्थानामपि प्रभव. प्रकृष्टो भव' स्थिति' नित्यतया विद्यमानत्वमितियावत्, तदेवोपपादयन्ति **वेदोक्त**इत्यादिना, भिन्न एव लौकिकशब्देभ्यो भिन्न एव, **सः** स्फोटपदवाच्यः ब्रह्मात्मकः, **केवलं** लौकिकप्रत्यक्षाविषयतया **शब्दैकसमधिगम्यः** प्रणवात्मकशब्दाभ्यासेन समधिगम्य इत्यर्थ., रूपप्रपञ्चस्याधिदैविकस्यापि वेदैकसमधिगम्यत्वमाहु. **वेदैश्चे**त्यादि, **तस्य** यस्य प्रपञ्चस्यानुकारिप्रतिकृतिरूप. सर्वोपि भौतिक. प्रपञ्चस्तस्येत्यर्थ., **भिन्नत्वा**दिति भौतिकापेक्षया भिन्नत्वादित्यर्थः, यदि तस्मिन् भेदो न स्यात् तदाधिदैविकादित्रिविधो व्यवहारो वैदिको निर्मूल. स्यादित्यर्थः, **न विरोधः शब्द** इति तथाच वेदोक्ता यज्ञास्तेषां कर्तारः अन्ये च वेदोक्ताः पदार्थास्तद्गतभूतत्वभविष्यत्त्ववर्तमानत्वादि च सर्वं नित्यमाधिदैविक तेषा प्रतिपादको वेदोपि तादृश एवेति न शब्दे वेदरूपेऽनित्यतापत्तिरूपो विरोध इत्यर्थ., **वेदात्** वेदं विचार्य सर्वं कृत्यं वृद्धव्यवहारपरम्परया प्राप्तं स्वयं साक्षादवगत्य कुर्वन्तीत्यर्थः, आकृतीत्यादि तथाचाधिदैविकादिषु त्रिष्वपि पदार्थेषु तेषु तेषु एकजातीयेषु आकृतिर्नित्या **एकैका** सैव वैदिकशब्दवाच्यातो न वैदिकशब्दानामनित्यतापत्तिरूपो विरोध इत्येवं विरोधपरिहारः कार्य इति च **मेत्यर्थः**,

---

१. 'नोऽभावयन्' इति पाठस्त्वशुद्ध एव तत्र वत्स्थाने लिपिकारप्रमादाद् सन्. । २ व्यवस्थापकपदाभावादित्यपि पाठ ।

विरोधः, सर्वत्र लक्षणाप्रसङ्गात्, 'यः सिक्तरेताः स्या'दित्यादिषु विरोधश्च, न च प्रवृत्तिनिमित्तस्यैव वाच्यत्वं, प्रवृत्तिवैयर्थ्यापत्तेः, सङ्केतग्रहविरोधाच्च, सर्वस्यापि पदार्थस्य भगवत्त्वाज्ञानुपस्थितिदोषः सङ्केतग्रहेपि, जमदग्नीनां पञ्चावृत्तमित्यनुमानं, न हि स्वयं जामदग्न्य इति प्रत्यक्षोनुभवोस्ति, परोक्षव्यवहारस्यैवानुभवत्वमिति ब्रह्मवादः, तस्मात् प्रत्यक्षानुमानाभ्यामिदानीन्तनभौतिकयज्ञपदार्थेषु भगवदवयवावेशस्तथामुत्रापि देवादिलोके, तस्मात् वैदिकः पदार्थः सर्वोप्याधिदैविको भिन्न इति सिद्धम् ॥ २८ ॥

साधिकां विशेषोपपत्तिमाह,

## अतएव च नित्यत्वम् ॥ २९ ॥

अतएवास्मादेव हेतोर्वेदस्य नित्यत्वं सर्वप्रपञ्चवैलक्षण्येन, चकाराद् ब्रह्मतुल्यत्वं, शब्दब्रह्मवेदपुरुषइत्यादिवाच्यत्वं, अस्यास्तु सृष्टेर्ब्रह्मोपादानस्य सर्वज्ञतया कथनं तन्माहात्म्यनिरूपणार्थं, बन्धिका ह्येषा, मोचिका तु सा, अत एव ऋषीणामप्यत्र मोहः, निःश्वसितवचनाच्च, तस्याप्ययं प्राणभूतो नित्य इति, अर्थप्राधान्यात् ब्रह्मविद्या परा विद्या, प्रपञ्चभेदादेव लौकिकवैदिकशब्दव्यवहारभेदौ, तस्मादाधिदैविकप्रतिपादकत्वाद्वेदस्य नित्यत्वम् ॥ २९ ॥

---

**सर्वत्र** व्यक्त्याद्यन्ते, आकृतौ शक्तिज्ञानस्य कारणताया व्यभिचारं प्रदर्शयन्ति **य. सिक्तेत्यादि**, तथाहि 'यः सिक्तरेता स्यात् प्रथमायां तस्य चित्यामुपदध्या'दितिसिक्तरेत.पदं नाकृतिवाचक सम्भवति यथा गोप्रभृतीनामाकृतयोनुभवसिद्धास्तथा सिक्तरेतसां नाकृतिरेकानुभवसिद्धा येन तत्र शक्त्या सिक्तरेत पदं शाब्दबोधं जनयेत् किन्तु तत्रावयवशक्त्यैव शाब्दबोध इति व्यभिचारान्नाकृतिशक्तिज्ञान शाब्दबोधे कारण, एतेन जातिशक्तिग्रहोपि व्याख्यात, **प्रवृत्तिवैयर्थ्यापत्तेरिति**, तथाच व्यक्तेरवाच्यतया न तद्गोचरा प्रवृत्ति स्यात प्रवृत्तिनिमित्तस्य च गोत्वादेरानयनाद्यसम्भवात शब्दात् प्रवृत्तिर्नि.फला स्यादित्यर्थः, ननु वैदिकसृष्टेरतिरिक्तत्वाङ्गीकारेण तस्या अप्रत्यक्षत्वेन तत्र संकेतग्रहाभावात् तत्रत्यपदार्थानां बोधो दुर्निरूप इत्यत आहु. **सर्वस्यापीत्यादि**, तथाच पूर्वेषां ब्रह्मादीनां भगवद्दर्शनेनोपस्थिते सुकरत्वात् परम्परया तन्मूलकशक्तिग्रहस्य सर्वेषां सम्भवान्नदोष सङ्केतग्रहेपीत्यर्थ, अनुमानग्राह्यमाहुः **जमदग्नीनामित्यादि**, जमदग्नीनां पञ्चावृत्तं जामदग्न्य इति अत्र स्वयं भवति जामदग्न्यस्तथापि स्वगत जामदग्न्यं न प्रत्यक्षं स्वस्य किन्त्वनुमानगम्यं, तथाहि अहं जामदग्न्यः जामदग्न्यत्वेन लोकव्यवहारविषयत्वात् यो न जामदग्न्य. स न तथाव्यवहारविषय इतिकेवलव्यतिरेक्यनुमानेन जामदग्न्यग्रह., ननु आप्तशब्दादपि जामदग्न्यग्रहसम्भवात् कथमनुमानमेवोक्तमित्यतआहुः **परोक्षेत्यादि**, तथाच तादृशबोधकशब्दोप्यनुमानमूलक इति तथोक्तमित्यर्थः, **देवादिलोके इति**, **आवेशेति**, **भिन्नः** भौतिकादितो भिन्नः ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥ अस्मादित्यस्यैव व्याख्यानं **सर्वप्रपञ्चेत्यादि**, ब्रह्मतुल्यत्वं वेदस्येत्यर्थ., **वाच्यत्वं** ब्रह्मवाचकशब्दवाच्यत्वं, ननु यदि वैदिकी सृष्टिरन्यैव तदा श्रुतौ 'यतो वा इमानी'त्यादिषु ब्रह्मण एतत्सृष्ट्युपादानत्वकथनं नि प्रयोजकं स्यादित्यत आहु. **अस्या इत्यादि**, **ब्रह्मोपादानस्येति** ब्रह्मरूपोपादानस्य, **तन्माहात्म्यनिरूपणार्थं** वैदिकसृष्टे. प्रकटसच्चिदानन्दरूपत्वब्रह्मधर्मसत्त्वात् माहात्म्यप्रदर्शनार्थं तथोक्तमित्यर्थ, **अत एव** लौकिकसृष्टेर्मोहकत्वादेव, **मोह** इति नानामतप्रदर्शनात् स्पष्टो मोह इत्यर्थ., **तस्य** भगवतः, **अयं** वेदः, **प्राधान्यात्** सर्वस्य वेदस्य प्रामाण्ये तुल्येपि ऋग्वेदादिविद्याया कर्मप्राधान्येन निरूपणात् न प्राधान्य ब्रह्मविद्यायास्त्वर्थप्राधान्यमिति प्राधान्यं इतिपरापरविभागोपि नानुपपन्न इत्यर्थ, **व्यवहारभेदाविति** लोकवेदाधिकरणे ऐक्यव्यवस्थापनेपि जैमिनिनाऽलिखनान्न तत् प्रमाणमितिभाव ॥ २९ ॥

---

१ निश्वसितेत्यादिपाठोपि । २ इत्यर्थं इत्यपि पाठ ।

एवं शब्दबलविचारेण वेदप्रामाण्यस्य सिद्धये भिन्न एव प्रपञ्चो ह्याधिदैविकः सर्वत्र सिद्धः, इदानीमर्थबलविचारेणोत्तरकाण्डे किञ्चिदाशङ्क्य परिह्रियते दार्ढ्यार्थं, नन्वस्य प्रपञ्चस्यानुकारित्वेन वाच्यत्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति, तत्राह,

## समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

**समाननामरूपत्वादावृत्तावप्यविरोधः**, वस्तुतस्तु भगवद्रूपत्वादाविर्भावतिरोभावेच्छयैव तथात्वान्नावृत्तिशङ्कापि, तथापि लोकबुद्ध्यनुसारेणावृत्तावपि समाननामरूपत्वात् समुद्रे जलप्रक्षेपवत् पुनरुपादाने तदेवेति निश्चयाभावेपि नामरूपयोस्तुल्यत्वादन्यस्य भेदकस्याभावात् नानित्यसंयोगविरोधः, कुतः ? **दर्शनात्**, दृश्यते हि पितृमातृस्त्रीभर्तृशरीरगङ्गादिषु तदेवेदमिति व्यवहारस्य सिद्धत्वात्, 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवे'रितिस्मृतेश्च, 'सर्ववेदमयेनेदमात्मनात्मात्मयोनिना प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते' इत्यादिस्मृतेः सर्वस्मृतेश्च, 'ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते' इति, अतोर्थबलविचारेपि पदार्थानां नित्यत्वान्न वेदस्यानित्यसम्बन्धः ॥ ३० ॥

अर्थबलविचार एवैकदेशेन पूर्वपक्षमाह,

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

ननु मध्वादिविद्यासु देवानामनधिकारात् सर्वत्रैवानधिकारः, तथाहि, 'असौ वा आदित्यो देवमधु तस्य द्यौरेवे'त्यादिना सूर्यस्य देवमधुत्वं प्रतिपादितं, रश्मीनां वेदत्वञ्च, तत्र वसुरुद्रादित्यमरुत्साध्याः पञ्चदेवगणाः स्वमुख्येन मुखेनामृतं दृष्ट्वैव तृप्यन्ति, पञ्चविधा एव च देवाः, स्वतःसिद्धं च तेषां तन्मधु, अनुपासकत्वान्न देवान्तरकल्पना, कृतार्थत्वाच्च, ब्रह्मणोपि देवत्वं, आदिशब्देन सर्वा एव देवोपासनविद्या गृहीताः, अतस्तेषामुपास्यत्वात्

---

**समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥** सर्वत्र वेदे, तेन 'आदित्या वा अस्माल्लोकात' 'अथ यदिदमस्मिन् ब्रह्मपुरे' 'धन्वन्निव प्रपा असि' इत्यादौ विधेयवस्तुस्वरूपपरिचायनार्थं दृष्टान्तार्थं वा लौकिकसृष्टिकीर्तनं तत्रापि 'सदेव सौम्ये'ति'हन्ताहं मदेव सन्मात्रं द्वितीय'मिति 'विश्वं वै ब्रह्म तन्मात्र'मित्यादिभिर्नित्यतासिद्धेर्वेदप्रामाण्यसिद्धिः, **दार्ढ्यार्थं** लौकिकप्रपञ्चे नित्यतादार्ढ्यार्थं, **अस्य** भौतिकप्रपञ्चस्य, **अनुकारित्वेन** अलौकिकाधिदैविकप्रपञ्चानुकारित्वेन, **वाच्यत्वेन** प्रपञ्चपदवाच्यत्वेन, **अनित्यसंयोगः** अनित्यतासम्बन्धः, समाधिं व्याकुर्वन्ति **वस्तुतस्त्वि**त्यादिना, **तथात्वात्** नित्यत्वेन प्रतीयमानत्वात्, यथोक्तं विष्णुपुराणे प्रथमेंशे 'तदेतदक्षयं नित्य जगन्मुनिवराखिलं आविर्भावतिरोभावजन्मनाशविकल्पवदि'ति, **दर्शनादि**तिसूत्रं व्याकुर्वन्ति **दृश्यते ही**ति **वेदे**त्यनेन, **सिद्धत्वात्** स्वर्गादिलोकेषु गतानां तेषां सर्वेषां त एव एते इतिव्यवहारसिद्धत्वात् ॥ ३० ॥

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥ तदेकदेशेन** उपासनाविशेषरूपेण तदेकदेशेन, **अनधिकारं** व्युत्पादयितुं विषयवाक्यस्थं प्रमेयं पूर्वमाहुः. **तथाही**त्यादिना तन्मध्वित्यन्तं, **स्वमुख्येन मुखेने**ति अग्नीन्द्रवरुणसोमब्रह्मरूपेण मुखेन, **पञ्चविधा एवे**ति तावतामेव तत्रोक्तत्वात्तथा, अनधिकारं स्फुटीकुर्वन्ति **अनुपा-**

---

१ 'वेदप्रामाण्यसिद्धये' 'वेदप्रमाणस्य सिद्धये' इत्यपि पाठ । २ विवरणे नास्ति 'तथापि'। ३ स्वरित्यपि पाठ । ४ नित्यत्वाच्च नेति पाठः क्वचित् । ५ देवान्तरकृता कल्पनेति पाठ क्वचित् ।

कृतार्थत्वाच्च नाधिकारः, न हि प्रयोजनव्यतिरेकेण कस्यचित् प्रवृत्तिः सम्भवति, मोक्षस्याप्यधिकारनिवृत्तावुत्तरमार्गवृत्तित्वात्[1] स्वत एव सिद्धेः[2], 'यावदधिकारमि'तिन्यायात्, 'वसूनयाजयदि'त्यत्रापि भाविन्येव संज्ञा, तस्मान्मनुष्याधिकारकमेव ज्ञानं कर्म चेति न देवानामधिकार इति जैमिनिराचार्यो मन्यते, मनुष्याणामेव ज्ञानकर्मणोस्तरतमभाववतां तत्तद्रूपभोगानन्तरं मोक्षप्राप्तेरिति ॥ ३१ ॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

किञ्च, तेषां सर्वेषामनधिकारः प्रत्यक्षत एव दृश्यते, सर्वे हि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते, 'अग्निः पुच्छस्य प्रथमं काण्ड'मित्यादिश्रुतेश्च[3], न हि तादृशां प्राप्तैश्वर्यवतां सर्वोपास्यानां मोक्षदातॄणां ज्ञानकर्मणोः कश्चनोपयोगोस्ति तस्मादनधिकार एव देवानामित्येवं प्राप्ते ॥ ३२ ॥

उच्यते,

## भावन्तु बादरायणोस्ति हि ॥ ३३ ॥

तुशब्दः पक्षं व्यावर्तयति, भावं देवानामधिकारस्य सद्भावं, बादरायण आचार्यः, गौणसिद्धान्ताभावाय स्वनामग्रहणं, किमार्षेण ज्ञानेन? तथा सति तुल्यत्वमत आह अस्ति हि[4], अस्ति वेदे 'प्रजापतिरकामयत प्रजायेये'ति 'स एतदग्निहोत्रमिथुनमपश्यत्' 'तदुदिते सूर्येजुहो'दिति 'देवा वै सत्रमासते'त्यादिभिः कर्माधिकारो निश्चितः, 'तद्यो यो देवानां प्रत्यबुध्यत[5] स एव तदभव'दित्यादि, तथेन्द्रप्रजापतिसंवादे 'ब्रह्मा देवानामिति' च एवमेवम्विधैर्वाक्यैर्देवानामप्यधिकारोस्ति, यत्र च पुनर्देवानां फलभोग एव प्रतीयते न करणं, तत्रापि तेषामधिकारोङ्गीकर्तव्यः, हि युक्तोयमर्थः, एते हि वसव आधिदैविकभगवदवयवभूताः, अनशनात्, अन्यथा वसुत्वादिविरोधः, 'यद्वसूनां प्रातःसवन'मित्यादिवत्, न हि जीवविशेषा दृष्ट्वा तृप्यन्ति, तस्मादिदं ब्रह्मप्रकरणमेव, योपि देवोपासनवत्[6] प्रतीयते स भगवदंश एवाधिदैविकः, न वा पूर्वकल्पेन निर्णयः, तथा सति तेषामभावादनुपास्यत्वं

सकेत्यादि, अयमर्थः, ब्रह्मविद्याधिकाराभ्युपगमे विद्यात्वाविशेषान्मधुविद्यायामपि देवानामधिकारो वक्तव्यः तत्र'ासौ आदित्यो देवमधि'तिमधुत्वेन वर्ण्यमानस्यादित्यस्य विद्याविषयत्वादादित्यः कमन्यमादित्यमुपासीतेत्यर्थः, कृतार्थत्वाच्चेति तथाचाकृतार्थाः कश्चिदुपासत इत्यर्थः, नाधिकारः अन्योपासने नाधिकारः, उत्तरेत्यादि मोक्षमार्गवृत्तित्वात्तेषामित्यर्थः, भाविन्येवेति तथा च मनुष्यदशायां यजनं फलदशाया वसुत्वमिति न वसुत्वदशायां यागाधिकार इत्यर्थः ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥ अर्थः स्फुटः ॥ ३२ ॥

भावं तु बादरायणोस्ति हि ॥ ३३ ॥ आर्षेण ज्ञानेन प्रसिद्धप्रमाणव्यतिरेकेण केवलकपोलकल्पितज्ञानेन, तुल्यत्वं जैमिनिकल्पितप्रकारेपि तथात्वसत्त्वात्तौल्यं भवतामित्यर्थः, प्रजापतिरित्यादि, नचेयं भाविनी संज्ञा, 'यो ब्रह्माणं विदधाति पूर्व'मितिश्रुतेः सकलकल्पेषु पूर्वं निर्माणात् कल्पान्तरीयस्यापि कल्पयितुमशक्यत्वात्, अनशनं, हि दर्शनमात्रेण तृप्तत्वं नत्वशनमपीत्यर्थः, अन्यथा अतिरिक्ताधिदैविकवस्वनङ्गीकारेण यथा यागादिस्थले यजमानाय वस्वादयोधिकारिणो वासवादिसामगानेन प्रातरादिसवनानि प्रयच्छन्ति तथात्रापि वस्वादिदेवोपासकेभ्यो

---

१ वर्तित्वादित्यपि पाठ । २ सिद्धिरित्यपि पाठ । ३ श्रुतिश्चेत्यपि पाठ । ४ हीतीतिपाठोपि । ५ प्रत्यबुध्यादिति पाठोपि । ६ देवोपासने उपास्यवदिति पाठः प्रतिभाति सप्तम्यर्थे वा वतिरिति श्रीपुरुषोत्तमाः, देवोपासकवदित्यपि पठति कश्चित् ।

अनित्यता च वेदस्य स्यात्, तस्माद्देवानामप्यधिकार इति शब्दबलविचार एव युक्त इति सिद्धम् ॥ ३३ ॥ ८ ॥

॥ इति प्रथमाध्याये तृतीयपादेऽष्टमं तदुपर्यपीत्यधिकरणम् ॥

इदानीं शूद्रस्याधिकारो निराक्रियते, यथा कर्मणि 'एतया निषादस्थपतिं[1] याजयेत् सा हि तस्येष्टि'रितिश्रुते'र्हविष्कृदाधावेति[2] शूद्रस्ये'ति लिङ्गाद् दोहादौ च शूद्रस्याधिकारः, एवमिहापि संवर्गविद्यायां शूद्रस्याधिकार इति, तन्निराकरणार्थमिदमधिकरणमारभ्यते ।

एवं हि[3] श्रूयते 'जानश्रुतिर्ह पौत्रायण' इत्यत्र हंसवाक्यश्रवणानन्तरं संयुग्वतो[4] रयिक्कस्य समीपं गतः जानश्रुतिः पौत्रायण 'रयिक्केमानि षट् शतानि गवा'मित्यादिना देवतां पृष्टः प्रत्युवाच 'अह हारे त्वा शूद्र तवैव सह गोभिर'स्त्वित्यादिना जानश्रुतिं शूद्रशब्देन सम्बोध्य पुनश्च 'शूद्रानेन मुखेने'त्युक्त्वा संवर्गविद्यामुपदिष्टवान्, अतोत्र विद्यायां जातिशूद्रस्याप्यधिकार इत्याशङ्क्य परिहरति,

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥ (१. ३. ९.)

नात्र शूद्रशब्दो जातिशूद्रवाची, किन्तु मत्सरयुक्तस्त्वमत्र नाधिकारीति तथा सम्बोधनं, तदाह[5], शुक् शोकः, अस्य जानश्रुतेः समजनि, तत्र हेतुः, **तदनादरश्रवणात्**, तस्माद्धंसादनादरस्य श्रवणात्, 'कं वर एनमेतत्[6] सन्तं स[7] युग्वानमिव रयिक्कमात्थे'ति स्वापकर्षश्रवणात्, किमतो यद्येवमत आह, **तदाद्रवणात्** तदनन्तरं[8] आद्रवणात्, शुचमनु आद्रवतीति शूद्रः, परोक्षवादार्थं दीर्घः, सर्वज्ञत्वख्यापनाय, रूढिर्योगमपहरतीतिन्यायात्, कथमेवमत आह **सूच्यते हि**, स्वस्य सर्वज्ञत्वं सूच्यते, हंसवाक्यात् शोके जाते त्वमागत इति, अन्यथा प्रपन्नस्य धिक्कारवचनमनर्थकं स्यात्, युक्तश्चायमर्थो ब्रह्मविदः सर्वज्ञतेति, तस्य मात्सर्यनिराकरणं वा सम्बोधनफलं, तस्मात् शुचं प्रत्याद्रवणादेव शूद्रपदप्रयोगो न जातिशूद्रवाची ॥३४॥

कुत एवमत आह,

---

वस्वादयोमृत प्रयच्छन्तीत्येवोक्तं स्यान्नतु तेषां सायुज्यं तस्माद्धेतो. वस्वादिभावप्राप्तेरुक्तत्वादवयवरूपा एव ते वाच्याः ॥ ३३ ॥ ८ ॥

॥ इति-प्रथमतृतीयेष्टमाधिकरणम् ॥

**शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥** हविष्कृत् दोहनेन दुग्धसम्पादकः शूद्र इत्यर्थः, **हंसवाक्यश्रवणानन्तरमित्यादि** छान्दोग्ये जानश्रुतेरनुग्रहार्थं ऋषयो हंसस्वरूपेण जानश्रुते राज्ञो गृहोपरि भूत्वा गतवन्तस्तेषां मध्ये एकेन हंसेन होहोयीतिप्रथमवाक्यमुक्त तच्छ्रुत्वा द्वितीयेनोक्त किमस्य तेन किमयं रयिक्कसमो ब्रह्मवेत्तास्ति वेति तद्वाक्यं राज्ञा श्रुतं तदनन्तरं पुत्रनाम्नो राज्ञः अपत्यं पौत्रनामा राजा जानश्रुति. रोगिणः शकटेन गमनादिव्यवहारं कुर्वत ब्रह्मविदो रयिक्कस्यान्वेषणे समीपं गवां षट्र शतानि गृहीत्वा गतः प्रपन्न. तदनन्तर तदधिकारं दृष्ट्वा रयिक्केनानादृतः अहा हारेत्वेत्यादिना पुनश्च गोरथनिष्ककन्यादीनि गृहीत्वा तस्मै उपदिष्टवानित्यध्यवसेयं, **संयुग्वतः** शकटवतः, **पौत्रायण** पुत्रनाम्नो राज्ञ. पुत्र, **तदा** पौत्रानधिकारदर्शनकाले, **अनादरस्य श्रवणात्** 'मत्सरी नोपदेष्टव्य' इत्यनादरस्य श्रवणात्, **कं वर एनमेतदित्यादि**, कं वरे कं उ अरे, एनं राजान एतावत्कर्मकर्तार **सन्तं**, **सः** हंसः, **युग्वानमिव** शकटवाहकमिव, **सर्वज्ञत्वख्यापनाय** एव शूद्रेतिसम्बोधनेनास्य मत्सरो गमिष्यतीति परोक्षार्थबोधकसम्बोधनोक्त्या स्वस्य सर्वज्ञत्वज्ञापनायेत्यर्थः, **रूढि** जातिशूद्रे रूढि, **योगं** शुच शोच्यं मत्सरादिकं अनु आद्रवतीतियोगं, **शोके** परलोकविरोधिपदार्थमात्रविषयकशोके, पूर्वं धिक्कारव्यञ्जक सम्बोधनमुक्तं, इदानीं मात्सर्यं निराकर्तुमाहु' **तस्येत्यादि** ॥ ३४ ॥

---

१ निषादस्य पतिमित्यपि पाठ । २ आधावेत्यपपाठ निन्दन्त श्रीगिरिधरा आदाविति पठन्ति । ३ हिरहित पाठोपि । ४ सयुग्वनो रयिक्वस्येति पाठो विवरणकृताम् । ५ तदा शुगित्यपि पाठ । ६ एतमेतदित्यपि पाठ. । ७ सयुग्वानमित्यपि पाठः । ८ तत् तदनन्तरमित्यपि पाठ. ।

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वमवगम्यते गोनिष्करथकन्यादानात्, न हि [1]क्षत्रियप्रभृतयो ह्येते क्षत्रियादन्यस्य सम्भवन्ति राजधर्मत्वात्, नह्यन्यो ब्राह्मणाय भार्यात्वेन कन्यां दातुं शक्नोति, न वा प्रथमहंसवाक्यं शूद्रे सङ्गच्छते, उपदेशाच्चेति चकारार्थः, तथापि संवर्गविद्यायां शूद्रस्यैवाधिकारं मन्वानस्य निराकरणार्थं हेतुमाह उत्तरत्र चैत्ररथेन लिङ्गात्, 'अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिमि'त्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ, कक्षा सेना यस्येति, कक्षसेनस्यापत्यङ्काक्षसेनिरिति, अस्य व्याख्यानं चैत्ररथ इति, चित्रा रथा यस्य तस्यापत्यं तेन चैत्ररथेन, कक्षारूपा रथा इति व्याख्यानं, एतेन वै 'चित्ररथं कापेया अयाजयन्नि'ति, शौनकश्च कापेयो याजकश्च याज्यश्चित्ररथस्य पुत्रः काक्षसेनिरिति, ब्रह्मचारी ब्रह्मवित्, इमौ तु संवर्गविद्योपासकौ, प्राणाय हि भिक्षा, तस्मान्न ददतुः, उभावपि श्लोकौ भगवतः, तेन प्रकृतेप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते, तस्मान्न जातिशूद्रः संवर्गविद्यायामधिकारी ॥ ३५ ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

इदानीं शूद्रस्य क्वचिदपि ब्रह्मविद्यायामधिकारश्चेदत्रापि कल्प्येत, तत्तु नास्ति, सर्वत्र संस्कारपरामर्शात् उपनयनसंस्कारः सर्वत्र परामृश्यते 'तं होपनिन्ये' 'अधीहि भगव इति होपससाद' '[2]तान् हानुपनीये'त्यादिप्रदेशेषु उपनयनपूर्वकमेव विद्यादानं प्रतीयते, शूद्रस्य तु तदभावाभिलापात्, 'चतुर्थ एकजातिस्तु शूद्र' इति 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हती'ति शूद्रस्य संस्कारनिषेधात्, चकारात् 'न शूद्राय मतिं दद्या'दिति निषेधः ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च शूद्रस्य [3]न सर्वथाधिकारः, तदभावनिर्धारणे शूद्रत्वाभावनिर्धारण एव गुरुशिष्यभावप्रवृत्तेः, 'सत्यकामो ह जाबाल' इत्यत्र 'गौतमः सत्यकाममुपनिन्ये' 'नैतदब्राह्मणो विवक्तुमर्हती'ति सत्यवचनेन शूद्राभावं ज्ञात्वैव, चकार एवार्थे, चकारेण निर्धारणमुभयज्ञा[4]नार्थं, [5]वर्णित्वं शूद्राभावञ्च, तस्मान्न शूद्रस्याधिकारः ॥ ३७ ॥

---

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ निष्केति 'निष्कं सुवर्णाश्चत्वार' पञ्च वा, क्षत्रियप्रभृतय इति क्षत्रियेभ्य प्रभृतिर्येषां एतादृशा एते धर्माः पूर्वोक्ताः समुदिताः, शक्नोतीति पुराणादौ तादृशदानस्य क्षत्रियकृतत्वेन श्रवणात् तथेत्यर्थ., शूद्रादारोपसङ्ग्रहस्य मन्वादिभिरुक्तत्वात्, युक्त्यन्तरमाहुः न चेत्यादि, प्रथमहंसवाक्यं 'होहोयि भल्लाक्ष भल्लाक्ष जानश्रुते पौत्रायणस्य समं दिवा ज्योतिराततं तन् मा प्रसाक्षीत् तत् त्वा मा प्रधाक्षी'रितिवाक्यं, होहोयीति[6] भयसूचकं सम्बोधन, दिवेति द्युलोकेन दिनेन वा, मा प्रधाक्षीरिति मा दहत्वित्यर्थः, तथाचैतादृशमाहात्म्यस्य शूद्रेऽश्रुतत्वादमृतप्राप्तेश्च न शूद्रे सम्भव इत्यर्थः, अभिप्रतारिणं गान्धर्वविद्याकुशल, संवर्गविद्या आधिदैविकविद्या, प्राणाय आध्यात्मिकवायवे, प्राणो हि सर्वभक्षको नतु ब्रह्मचारीतीममर्थमयं जानाति न वेतिपरीक्षार्थं न ददतुरित्यर्थः, उभावपि श्लोकौ ब्रह्मचारिकापेयाभ्यामुक्तौ श्रुतिरूपौ श्लोकौ, 'ततो महात्मनश्चे'तिब्रह्मचार्युक्तः श्लोक 'आत्मा देवाना'मि तिकापेयोक्तः ॥ ३५ ॥

संस्कारपरा[7]मर्षात् तदभावाभिलापाच्च ॥ ३६ ॥ स्पष्टार्थम् ॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः॥ ३७॥ उभयज्ञानार्थमित्यस्यैव विवरणं वर्णित्वं शूद्राभावं चेति, स्फुटमन्यत् ३७

---

१ क्षत्तृप्रभृतय इत्यपि पाठः। २ तानून्विति तान्विति चापि पाठौ । ३ न शूद्रस्येति व्यत्ययेनापि पाठ । ४ उभयज्ञापनार्थमित्यपि पाठ. । ५ वर्णत्वमित्यपि पाठ । ६ छान्दोग्ये। ७ प्रायेण परामर्शस्थाने परामर्ष इति प्रदीपकारस्य पाठ ।

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

दूरे ह्यधिकारचिन्ता, वेदस्य श्रवणमध्ययनमर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धं, तत्सन्निधावन्यस्य च, 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण'मिति 'यद्युवा एतच्छ्मशानं यच्छूद्रः' 'तस्माच्छूद्रसामीप्ये नाध्येतव्य'मिति 'उदाहरणे जिह्वाच्छेदो' 'धारणे शरीरभेद' इति, दोहादौ शूद्रसम्बन्धे मन्त्राणामभाव एव, स्मृतिप्रयुक्त्यापि वेदार्थे न शूद्राधिकार इत्याह स्मृतेश्च 'वेदाक्षरविचारेण शूद्रः पतति तत्क्षणा'दिति, चकारस्त्वधिकरणसम्पूर्णत्वद्योतकः, स्मार्तपौराणिकज्ञानादौ तु कारणविशेषेण शूद्रयोनिगतानां महतामधिकारः, तत्रापि न कर्मजातिशूद्राणां, तस्मान्नास्ति वैदिके क्वचिदपि शूद्राधिकार इति स्थितम् ॥ ३८ ॥ ९ ॥

॥ इति प्रथमाध्याये तृतीयपादे नवमं शुगस्येत्यधिकरणम् ॥

कठवल्लीविचारेण निश्चिता ह्यधिकारिणः।
वाक्यान्तरञ्च तत्रत्यश्चिन्त्यते प्रलयावधि ॥

'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती'ति,

अत्र प्राणवज्रोद्यमनशब्दाभ्यां सन्देहः, किं प्राणोपासना इन्द्रोपासना वा ब्रह्मवाक्यं वेति? बाधकशब्दस्य श्रुतित्वान्न प्रकरणेन निर्णयः,

'अमृतं वै प्राणा' इतिश्रुतेः, प्राणोपासकस्याप्यमृत[3]प्राप्तिर्युज्यते, इन्द्रस्याप्यमरत्वात् 'वज्रमुद्यत'मिति, प्राणपक्षे वियोजने मरणजनकत्वाद्भयरूपत्वं, इन्द्रपक्षे बलाधिष्ठातृत्वात् प्राणत्वं, तस्मात् प्राण इन्द्रो वा वाक्यार्थ इत्येवं प्राप्ते,

उच्यते,

## कम्पनात् ॥ ३९ ॥ (१. ३. १०.)

कम्पनमत्र प्रथमवाक्यार्थः, स च भयहेतुकः, अविशेषेण सर्वजगत्कम्पनं भगवद्धेतुकमेव भवति, नचैकान्ततो वज्र इन्द्रस्यैवायुधं भवति, अग्निहृदयत्वात्, 'तस्य तातस्य हृदयमाच्छिन्दत्[4]

---

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ ज्ञानादौ इति आदिपदेन 'यज्ञस्तपस्तीर्थयात्राप्रव्रज्यामन्त्रसाधनं देवताराधनं चैव स्त्रीशूद्रपतनानि षडि'त्येषा सङ्ग्रहः, कारणविशेषेत्यादि विदुरसदृशानां न निषेध इति तदतिरिक्तपरो निषेधो बोध्य इत्यर्थः ॥ ३८ ॥ ९ ॥

इति प्रथमतृतीये नवमाधिकरणम् ॥

कम्पनात्॥३९॥ निश्चिता इत्यादि तथा च शब्दादेव प्रमित इत्यधिकरणे प्रस्तुतेन कठवल्लीस्थाङ्गुष्ठमात्रविचारेण प्रसङ्गात् स्मृता अधिकारिणोपि मृत्यूपाख्यानं मनुष्यानधिकृत्य प्रवृत्तमिति निश्चिता इत्यर्थः, तत्रत्यं कठवल्लीस्थं, प्रलयावधीति तद्वाक्यविचारे कृते तदर्थे लयो भवतीति प्रलयावधीत्युक्तमित्यर्थः, विषयवाक्यं सन्देहबीजं सन्देहाकारञ्चाहुः यदिदमित्यादि वेतीत्यन्त, बाधकशब्दस्य प्राणेन्द्रबोधकवाक्यस्य, श्रुतित्वात् प्रथमप्रमाणत्वात्, न प्रकरणेन निर्णयः न ब्रह्मप्रकरणेन ब्रह्मवाक्यत्वनिर्णय., इन्द्रस्येत्यस्य पूर्वतनेन प्राप्तिरित्यनेनान्वयः, इन्द्रप्राप्तौ प्रमाणं लिङ्ग वज्रमुद्यन्तमिति, प्राणपक्षे वाक्येन प्राणोपासनाबोधनपक्षे, भयरूपत्वमिति, तथाच भयनिवृत्त्यर्थं प्राणोपासना, इन्द्रपक्षे वाक्येनेन्द्रोपासनाबोधनपक्षे, प्राणत्वं इन्द्रस्य प्राणत्वं, इत्थं च प्राणोपासनाबोधने 'महद्भयं वज्रमुद्यत'-

---

१ यद्युहवेति कस्यचित् पाठः। २ कारणवशेनेति कश्चित्। ३ अमृतत्वप्राप्तिरित्यपि पाठ.। ४ आच्छिददित्यपि पाठः। ५ जप इतिपाठोपि क्वचित्।

साशनिरभव'दितिश्रुतेः, तस्मान्मारकरूपमेवेदं भगवतः, प्राणशब्दवाच्यत्वं तु पूर्वमेव सिद्धं, तस्मात् सर्वजगत्कम्पनं भगवत्कृतमिति भगवानेव वाक्यार्थः ॥ ३९ ॥ १० ॥

॥ इति प्रथमाध्याये तृतीयपादे दशमं कम्पनाधिकरणम् ॥

'य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति,

तत्र संशयः, परं ज्योतिर्महाभूतरूपं ब्रह्म वेति,

ब्रह्मधर्माश्च ये केचित् सिद्धा युक्त्या[१] च साधिताः ।
निर्णायकास्ततोऽप्यन्ये चत्वारोऽत्र निरूपिताः ॥ १ ॥

तत्र रूढ्योपपत्त्या च महाभूतमेव ज्योतिरित्येवं प्राप्ते,

उच्यते,

## ज्योतिर्दर्शनात् ॥ ४० ॥ (१. ३. ११.)

ज्योतिर्ब्रह्मैव, कुतः? दर्शनात्, सर्वत्र[२] दर्शनं न्याय इतियावत्, सुषुप्तौ सर्वत्र, 'सता सौम्य तदा सम्पन्नो भवति' 'सति सम्पद्य न विदुः' 'सति सम्पद्यामह' इति 'अहरहर्ब्रह्मलोकं गच्छन्ती'त्यादिप्रदेशेषु ब्रह्मसम्पत्तिरेवोक्ता, अत्रापि सम्प्रसादवचनात् परं ज्योतिर्ब्रह्मैव, तस्माद्यः कश्चन शब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति ॥ ४० ॥ ११ ॥

॥ इति प्रथमाध्याये तृतीयपादे एकादशं ज्योतिर्दर्शनाधिकरणम् ॥ ११ ॥

'आकाशो[३] वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्मे[४]'ति श्रूयते,

तत्राकाशशब्दे सन्देहो भूताकाशः परमात्मा वेति?

---

मितिवियोजनेन भयजनकत्वं प्राणानामेव बोधितं, उच्यत इत्यादि, अत्र हि 'यदिदं किञ्चे'ति पादत्रयमेकं वाक्यं 'य एतदि'तितुरीयपादो भिन्नं वाक्यं, तत्र यदिदं किञ्च परिदृश्यमानमपरिदृश्यमानं च सर्वं जगत् प्राणे विद्यमाने निःसृतं बहिरागतं सदेजति कम्पते, तत्र हेतुः महतां भयं यस्मात्तादृशं वज्रमायुधमुद्यतं जगन्नियमनायोल्लासितमितिपदसम्बन्धात् कम्पनमत्र प्रथमवाक्यार्थः, स च भयहेतुकः, तेन स्वतःकम्पनं वार्यते तथा 'यदिदं किञ्चे'त्यनेन सर्वपदे सङ्कोचो वार्यते इत्थं चेदृशं कम्पनं भगवद्धेतुकमेवेति फलित, ननु तर्हि श्रुतेः साधारणत्वान्मास्तु प्राणः किन्त्विन्द्र एवास्तु वाक्यापेक्षया लिङ्गस्य प्राबल्यादित्यत आहुः नचेति, प्राणशब्दवाच्यत्वं भगवतः, पूर्वमेव 'प्राणस्तथे' तिसूत्र एव ॥ ३९ ॥ १० ॥

इति प्रथमतृतीये दशमाधिकरणम् ॥

ज्योतिर्दर्शनात् ॥ ४० ॥ 'य एष' इति छान्दोग्ये दशमप्रपाठके दहरविद्यायामिन्द्रप्रजापतिसंवादे च पठ्यते एतावान् परं विशेषः पूर्वत्र 'निःपद्यत' इत्यनन्तरं 'स आत्मे'तिवाक्यशेष· द्वितीये तु 'स उत्तमःपुरुष' इति वाक्यशेषः, अत्रोत्तरवाक्यमसन्दिग्धं गीताया 'मुत्तमः पुरुषस्त्वन्य ' इतिवाक्येन जीवत्वासम्भवादतो दहरविद्यास्थमेवात्र विषयवाक्य, महाभूतमादित्यरूप, चत्वार इति उपसम्पद्यत्वमुपसम्पन्नत्वं स्वरूपाभिनिःपादकत्वं पूर्ववाक्यबोधितं हृदयत्वं सत्यपदोक्तं मर्त्यामृतनियामकत्वं चोत्तरवाक्यबोधितमितिचत्वार इत्यर्थः, उच्यत इत्यादि, सर्वत्र दर्शनमिति ब्रह्मप्रकरणे एतादृशे स्थाने सर्वत्र ब्रह्मवाचकं पदं दृश्यते अतोऽत्रापि परं ज्योतिरिति ब्रह्मवाचकं प्रयुक्तमित्यर्थः, अत्रापि ब्रह्मबोधकविषयवाक्येपि, सम्प्रसादवचनात् अभिसम्पद्यत इत्यनेन सम्प्रसादवचनात् ॥ ४० ॥ ११ ॥

इति प्रथमतृतीये एकादशाधिकरणम् ॥

---

१ युक्त्यापीति पाठोपि । २ दर्शनं सर्वत्र दर्शनमित्यपि पाठ. । ३ आकाशो ह वै इत्यपि पाठ. । ४ ब्रह्मैवेतीत्यपि पाठः ।

नामरूपनिर्वाहमात्रत्वमवकाशदानाद् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वमन्यस्य च नियामकस्याभावादित्येवं प्राप्ते,

उच्यते,

## आकाशोर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ ( १. ३. १२. )

आकाशः परमात्मा, अर्थान्तरत्वादिव्यपदेशात् यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं तस्मादन्यस्य व्यपदेशः कार्यान्तरादिव्यपदेशश्च, यत्रैव हि सिद्धवत्कारेणोत्कृष्टधर्मा अतदीयास्तदेव ब्रह्मेति, नापि नामरूपनिर्वाह आकाशस्य माहात्म्यहेतुर्भवति, वै निश्चयेनेति सिद्धवत्काराचोपासनापरत्वं, निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धमिति विचारः, [1]अर्थापत्तिसूचकस्त्वयमेव न्याय इति, तस्माद् यत्रैवातद्धर्मकथनमन्यवाच्यस्य तत्रैव ब्रह्मपरत्वमिति सिद्धम् ॥ ४१ ॥ १२ ॥

॥ इति प्रथमाध्याये तृतीयपादे द्वादशमर्थान्तरव्यपदेशाधिकरणम् ॥ १२ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ ( १. ३. १३.)

बृहदारण्यके ज्योतिर्ब्राह्मणे 'याज्ञवल्क्य किंज्योतिरयं पुरुष' इत्यारभ्य 'अभयं ह वै भवति, य एवं वेदे'त्यन्ते सन्देहः, किं ब्रह्मवाक्यमेतदुत जीवस्येति, जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वं, स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्मत्वे ब्रह्मवाक्यत्वमिति, यद्यप्यर्थज्ञाने न सन्देहस्तथापि नियामकं हेतुमाह भेदेनेति, तस्यायमर्थः, 'किंज्योतिरयं जीव' इतिप्रश्ने सूर्यचन्द्राग्निवाङ्निराकरणानन्तरं 'आत्मज्योतिः' आत्मा भगवानेवास्य ज्योतिरित्युत्तरानन्तरं 'कतम आत्मे'ति प्रश्ने 'योयं विज्ञानमयो ज्ञानरूप इन्द्रियेषु हृदि च प्रकाशमान' इत्युत्तरे जीवोप्येतादृश इति तन्निराकरणार्थं 'स समानः सन्' जीवतुल्यः सन् 'क्रीडती'त्याह, तस्योभयधर्मा अप्युच्यन्ते क्रियामात्रस्य तन्मूलत्वाय, तत्र हि चत्वारि स्थानानि अयं लोकः परो लोकः स्वप्न इति त्रयं जीवस्य [2]समानतया अनुभवति, तत्र स्वप्नस्य मिथ्यात्वाद्

---

आकाशोर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ श्रूयते छान्दोग्यसमाप्तौ श्रूयते, सन्देह इति उभयत्र प्रयोगदर्शनात् सन्देह इत्यर्थ, अन्यस्येत्यादि उक्तधर्माणा ब्रह्मधर्मताबोधकस्येत्यर्थः, श्रुतिसिद्धं वायुजननरूपं, तस्मादन्यस्य 'ते यदन्तरे'त्यनेनोक्तरूपस्यासमन्तात्तदन्तःस्थापनरूपस्य ब्रह्मत्वादेश्च, व्यपदेशः 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे'तिश्रुतौ ते नामरूपे इति बोध्य, यत्र भूताकाशवाचकत्वेन लोकप्रसिद्धाकाशादिशब्दानामर्थे, सिद्धवत्कारेण वास्तविकतया, उत्कृष्टधर्माः नामरूपनिर्वाहकत्वतदन्तरादिनियामकत्वरूपाः धर्माः, अतदीयाः लोकप्रतीतौ य आकाशपदेन भूताकाशः तदीया न सम्भवन्ति, तदेव ब्रह्म तत्पदवाच्यं ब्रह्मैवेत्यर्थ., तथा च प्रकृते तथात्वादाकाशपदवाच्य ब्रह्मैव नतु भूताकाश इत्यर्थः, सिद्धवत्कारात् वैइतिपदेन सिद्धवत्कारताया धर्मेषु प्रदर्शनात्, अन्यवाच्यस्य भूताकाशादिरूपवाच्यस्य ॥ ४१ ॥ १२ ॥

॥ इति प्रथमतृतीये द्वादशाधिकरणम् ॥

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥ ज्योति. शारीरमुभयत्र विषयवाक्यं बोध्यं, तत्र सन्देह उच्यते किमित्यादिना, यद्यप्यर्थज्ञाने तात्पर्यविषयीभूतवाक्यार्थनिर्णये सतीत्यर्थः, नियामकं विवक्षितार्थनियामकं, भेदेनेतीत्यत्र पूर्वसूत्रस्थं व्यपदेशादित्यनुवर्तनीयं, तथाच भेदेन व्यपदेशादितिहेतुः सिद्धः, अयमर्थः भगवानेवेति याज्ञवल्क्यस्याशय. तत्र युक्तिस्तु यदि जीव. स्वज्योतिः स्यादित्यादि, प्रश्ने राज्ञः प्रश्ने, आह याज्ञवल्क्य आह, एतादृश इति प्रकाशमानत्वं जीवेभिमानितया भगवतस्त्वन्तर्यामितया, तस्य भगवतः, तत्र उभयधर्मस्थले, क्रीडा तु 'उभौ लोकौ सञ्चरति'

---

१ क्वचनार्थापत्त्येत्यादि सिद्धमित्यन्त तिरोहितम् । २ जीवसमानतयेतिसमासः क्वचन ।

द्वयमेव, सुषुप्तञ्च चतुर्थं, जीवस्य तु मोक्षोपि, तत्रास्मिंल्लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धं, मोक्षे त्वैक्यं, स्वप्नस्तु माया, अतःपरं द्वयमवशिष्यते, तत्र श्रुत्यैव भेदः प्रतिपादितः, तत्र भगवतो जीवसाम्येन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्रानुकरणमाह 'ध्यायतीव लेलायतीवे'ति, बुद्धिसहितः स्वयमेव स्वप्नो भूत्वा जागरणानुसन्धानं न करोति, एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयं, जीवस्य स्थानत्रयमाह 'स वा अय'मिति कण्डिकाद्वयेन, 'स' इति पूर्वप्रक्रान्तो जीवः, जीवस्य शरीरेन्द्रियाणां दुःखदातृत्वमेव, 'अथे'ति भगवच्चरित्रं, स तु स्वस्यानन्दं जीवस्य दुःखं च पश्यति, भेदो'थ'शब्दात्, जीवस्यानीशित्वात् येन प्रकारेणायं जीवः परलोके गच्छति तमुपायं भगवानेव करोति, 'अथो खल्वि'ति भगवतो न जागरितस्वप्नभेदोस्तीति पक्षः, 'परं स्वयञ्ज्योति'ष्ट्वं तत्र स्पष्टं, एतावद्दूरे भगवच्चरित्रमङ्गीकृत्य जीवविमोक्षार्थं प्रश्नः, 'स वा एष' इति जीववाक्यं, तस्य सहजः सङ्गो नास्तीति स्वप्नसङ्गाभावं प्रत्यक्षतः प्रदर्शयन्नसङ्गत्वमाह, तावतापि जागरणावस्थायामसङ्गत्वज्ञानाय पुनः प्रश्नः, तत्र मत्स्यदृष्टान्तोवस्थाभेदज्ञानाय क्रियाज्ञानप्रधानः[1], श्येनसुपर्णदृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूपप्राप्तयेवस्थान्तः, 'यत्रे'ति च भगवान्, पञ्चवर्णनाडीकृत एवास्य क्लेशो भगवत्कृत एवानन्द इति स्वप्नानन्दो भगवद्रूपः परमो लोकः, सुषुप्तिस्त्वकामरूपो भगवान्, अत्र ज्ञानाभावादुभयोः स्पष्टतया भेदनिर्देशः 'शारीरः प्राज्ञ' इति, नाड्याच्छादनाभावो'तिच्छन्दः,' तत्र भगवत्स्वरूपं गतस्य बाह्येन्द्रियधर्माभावमाह 'विजानीयादि'त्यन्तेन, बाह्येन्द्रियाणां 'सलिल'त्वमिति पूर्वोपपत्तिः, 'एष ब्रह्मलोक' इत्यारभ्या'नुशशासैतदमृत'मित्यन्तेनानन्दरूपो भगवान् प्रतिपादितः फलत्वाय, एतावतोभयासङ्गः प्रतिपादितः, तस्यानुभवारूढत्वाय पुनः प्रश्नः, दर्शनादर्शनावापोद्वापाभ्यां सिद्ध'मसङ्गो ह्ययं पुरुष' इति, एवं जीवं सुषुप्तौ भगवन्तं च ज्ञात्वा मोक्षोपायं पृच्छति, तत्र याज्ञवल्क्यस्य भयं जातं सुबुद्धिरयं निर्बन्धेनापि सर्वं ज्ञास्यतीति

---

'ध्यायतीव लेलायतीवे'त्याद्युक्त्वा, लेलायतीत्यस्य लोलायतीत्यर्थ., एकारस्थाने ओकार., परलोकक्रीडा वास्तवी इहलोकक्रीडा चानुकरणरूपेत्युक्त्वा स्वप्नक्रीडामाहु बुद्धीति, अयं च 'सधी स्वप्नो भूत्वे'त्यादेरर्थ , तथाच तत्र मायारूपेण जागरणाननुसन्धानरूपा जीवक्रीडेत्यर्थ , एवं क्रीडाद्वयमुक्त्वा 'स वा अयं पुरुष' इति 'तस्य वा एतस्य पुरुषस्ये'ति कण्डिकाद्वयस्यार्थमाहुः जीवस्येत्यादि, पूर्वप्रक्रान्त'"किञ्ज्योतिरयं पुरुष'इतिप्रश्ने प्रक्रान्तो नतु 'समान'इत्यत्रोक्तः, कण्डिकाद्वये फलितमाहु जीवस्येत्यादि, दु खदातृत्व च पाप्मपदान् ज्ञेयं, एतेनानीशत्व जीवस्य बोधितं, 'अथ यथाक्रम' इत्यादेरर्थमाहु अथेतीत्यादि, चरित्रस्य स्वरूपमाहु. स त्वित्यादि, तदुक्तं 'अथ यथाक्रमोयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति' इत्यन्तेन, अर्थस्तु अयं जीव· यथाक्रमः कृतकर्मानुसारिफलभाक् तमाक्रमं अन्यजन्मनि कृतं धर्माधर्मरूपं आक्रम्य अवलम्ब्य पाप्मनः फल दु खरूप, भेदः जीवप्रकरणाद्ब्रह्मप्रकरणभेदः अथशब्दात् अथशब्देन बोधनात्, सहजः भगवन्मायया सम्पादित., नाड्या पञ्चवर्णनाड्या, आच्छादनाभावोतिच्छन्दः ऐच्छिकः छन्दांसि नाडी. अतिक्रात इति वा, सलिलत्वं द्रवीभावेन लयः, भगवति जीवलये सति जले जलस्येव नान्यत्वविभक्तत्वयोर्भानमित्यर्थ., उभयासङ्गः अन्यत्वविभक्तत्वयोरसङ्ग इत्यर्थः, तस्य मोक्षार्थमुपदिष्टस्य, दर्शनस्यावाप. अदर्शनस्योद्वापो जनकस्य जात इत्याहु· दर्शनेत्यादिना, तावदुक्त्यैवास्य मोक्षे स्वरूपयोग्यता सम्पन्नेत्याहुः एवमित्यादिना, मोक्षयोग्यं जीवं भगवन्तं च मोक्षदातारं ज्ञात्वा पृच्छतीत्यर्थः, उत्तरतात्पर्यविषयमाहुः तत्रेत्यादि, सर्वं ज्ञास्यतीति, कामप्रश्नव्याजेन मदीय ब्रह्मज्ञानं सर्वं ग्रहीष्यतीत्यर्थ , आहेति सकामप्रश्नेनिष्टं निष्कामप्रश्ने मोक्षप्राप्ति चोक्त्वा सुषुप्त्यवस्थया एकीकृत्याहेत्यर्थ , प्रश्नानामुत्तरेण निर्णयोक्त्यवसाने मुहुरवरोध कृतवानतो

---

१ क्रियाज्ञानं प्रधानमित्यपि पाठ ।

जीवब्रह्मधर्मानेकीकृत्य जीवोपक्रमेण ब्रह्मोपसंहारेणाह, तत्र[1] 'स[2] यत्रे'ति जीवस्य मूर्च्छोपतापावस्था, 'तद्यथा अन' इति मरणावस्था, तत्र भगवानेवैनं लोकान्तरे नयति 'तद्यथा राजान'मिति भगवतः सन्माननं[3], 'एवंविद'मिति वचनात्, जीवस्तु नैवंवित्, सिद्धवद्वचनात् न ज्ञानविधिः वाक्यभेदप्रसङ्गाच्च, 'स यत्रे'ति जीवे मोहोधिकः, 'अथैनमेते प्राणा' इति भगवच्चरित्रं 'सम्पद्यत' इत्यन्तेन, श्लोके[4] 'तद्' ब्रह्म 'अस्य' जीवस्य 'अकामयमानस्य' भगवतः स्वरूपं पूर्वमेवोक्तमनुवदति, भगवन्निर्गमने प्राणानां निर्गमनात्, तस्य चेच्छाधीनत्वात्, तदभावे इन्द्रियाणि सुषुप्तौ तत्रैव 'समवलीयन्ते,' 'ब्रह्मैव सन्' कूटस्थः सन्, 'अपिः' समुच्चये, सह स्थिते जीवे ब्रह्माविर्भवतीत्यर्थः, जीवे ब्रह्माविर्भावो न सङ्गत इति तत्प्रतिपादनार्थं श्लोकः, जीवोपदेशप्रकरणाभावेन सिद्धवद्वचनान्न जीवन्मुक्तावस्था, नाप्यसम्प्रज्ञातसमाधिः, मतान्तरत्वात्,

भय जातमितिभाव, उत्तरं विवृण्वन्ति 'स यत्रे'त्यादि प्रश्नश्रुत्यर्थस्तु अणिमानं स्थूलशरीरकार्श्यं, उपतपतेति उपतापजनकेन ज्वरादिना, न्येति प्राप्नोति, ततोणिमान ज्ञानकार्श्यरूपां मूर्छां नितरां गच्छति, बन्धनात् वृन्तात्, 'सम्प्रमुच्ये'ति ममतात्यागेन स्वगुण चैतन्यमाकृष्य, 'प्रतियोनी'ति स्थूलशरीरं लक्ष्यीकृत्य, प्राणायेति पुनर्जीवनाय, सा स्थूलदेहप्राप्तिरस्य येन हेतुना प्रकारेण च भवति तं हेतुं प्रकारं च वक्तु मरणावस्थोच्यत इत्याहु. तद्यथा अन इति, मरणावस्थेति, हेतुर्भगवान् दार्ष्टान्तिके स्पष्ट, श्रुतौ 'सुसमाहित'मिति भाराक्रान्तं, 'उत्सर्जदि'ति शब्दं कुर्वन्, शारीर आत्मेति लिङ्गशरीरविशिष्टो जीव, अन्वारूढ इति शाकटिकेनेवाधिष्ठितः, उत्सर्जदिति वेदनया हिक्कादिशब्दान् कुर्वन्, अग्रिमकण्डिकयोरर्थमाहु तद्यथा राजानमित्यादिना, श्रुतौ प्रत्येनसः पापिनां शासनार्थं नियुक्ता, ग्रामण्यो ग्रामनायका, 'प्रतिकल्पन्ते,' उद्युज्य स्वोपभोगाय प्रतिकल्पन्ते, भूतानि शरीरान्तरारम्भणायेश्वरेण नियुक्तानि, ननु जीवब्रह्मणोरुभयोरपि तत्र गमने कथ ब्रह्मण एव सन्माननमित्यत आहु 'एवंविद'मित्यादि, 'नैवंविदि'त्यादि संसारिण उपक्रान्तत्वादेवंवित्पदेन परामृष्यमाणो जीवत्वेन न वक्तु शक्य इत्यर्थं, ननु प्राज्ञान्वारोहान्तज्ज्ञानवन्तमनूद्य तस्मिन् ब्रह्मायातीतिज्ञानकथनात् पूर्वोक्तकर्मफलविद· संसारिणो जीवस्यैवेदं सन्माननं न ब्रह्मण इतिचेत्तत्राहुः सिद्धवद्वचनादित्यादि, वाक्यभेदप्रसङ्गादिति, तथाचैवंविदित्यत्र एकत्र एकतत्त्वविशिष्टं जीवमनूद्य एवंविद्भवेदितिज्ञानं विधीयते उत ज्ञानवान् जीवोनूद्यते? तत्राद्ये ज्ञानवन्तमनूद्येतिपक्षे सिद्धवद्वचनानुवादात् विधिरसम्भवदुक्तिकः एवंविद्भवेदितिविधिकल्पने च वाक्यभेद इत्यर्थं, अत·परं शारीरब्राह्मणस्यार्थमाहुः 'स यत्रे'त्यादि, 'स यत्रायं शारीर आत्मा' लिङ्गविशिष्टो जीव, अबल्यं नीत्य पूर्वोक्तोपतापादिना नैर्बल्यं नितरां प्राप्य, सम्मोहमिव न्येति मरणावस्थायामधिकं मोहं प्राप्नोति, तदोत्क्रमणस्य कर्तुमशक्यत्वात् तदुपायं भगवानेव करोति 'यथाक्रमोयं परलोकस्थान' इत्यादिना पूर्वं तस्योक्तत्वात्, तदिदानीं सविस्तरं वदामीतिज्ञापनायाथैनमेते प्राणा इत्यथशब्दः, नच प्राणाः स्वत एवायान्तीति शङ्क्यं, जडत्वात्, अतो जीवे सम्मुग्धे भगवत्प्रेरिता एवायान्तीत्याशयेनाहुः अथैनमित्यादि, श्रुतौ अथेति भगवत्प्रेरणोत्तर, एवं जीवस्य लोकान्तरप्रापकं भगवच्चरित्रं श्रुतौ विस्तरेणोक्तं तस्य चरित्रस्य भगवदीयत्वे गमकमाहुः श्लोक इत्यादि, श्लोकस्तु सार्ध., तथाहि 'तदेव तत्सह कर्मणेति लिङ्गं मनो यत्र निषक्तमस्य प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्मात् लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति, अर्थस्तु सः जीवः, तत्सह तेन ब्रह्मणा प्राज्ञेन सह, तदेव एति प्राप्नोति, तत्किमत आहु. अस्य जीवस्य, लिङ्गं लिङ्गशरीरे प्रधानभूत मनः, कर्मणा पूर्वकृतेन, यत्र यस्मिन्नर्थे, निषक्तं नितरामासक्तमिति, शेषं स्फुट, तथाच पूर्वत्र भगवच्चरित्र यदि प्रतिपादितं न स्यात्तदा श्लोके तत्सहेति न वदेत् भगवदन्वारूढोक्तिश्च पूर्वोक्ता मुधा स्यादतस्तथेत्यर्थः, तत्र मोक्षावस्थायाः प्रकरणेन प्रतीयमानत्वात् सुषुप्त्यवस्थां व्याकुर्वन्ति अकामयमानस्येत्यादि, पूर्वमेवोक्तमिति अकामयमानस्य जीवस्य सम्बन्धि यत् स्वरूपं 'तद्वा अस्यैतदात्मकाममाप्तकाममकाम[^]स्वरूप'मिति सुषुप्तिस्थले पूर्वमुक्त तत्प्राणस्थित्यर्थमनुवदति, तत्र हेतुर्भगवन्निर्गम इत्यादि भगवतः सकाशान्निर्गमने, तस्येति निर्गमनस्य, तदभावे निर्गमनाभावे, तत्रैव सुषुप्तावेव, समवनीयन्ते इतिश्रौतपदस्यार्थः समवलीयन्ते इति, अस्मिन् पक्षे 'ब्रह्मैव सन् ब्रह्माप्येती'त्यस्यार्थमाहुः ब्रह्मेत्यादि, 'ब्रह्माप्ये'त्यत्र ब्रह्मपदं एतीत्यस्य कर्तृ, एति प्रादुर्भवतीत्यर्थं, 'यदा सर्वे प्रमुच्यन्ते' इति श्लोकप्रयोजनमाहुः समुच्चयेत्यादि, समुच्चये सर्वमुक्तिकाले, नन्वत्रोत्क्रमणस्यैवोपक्रान्तत्वाज्जीवन्मुक्ताद्यवस्थैवाकामयमानस्य वाच्या नतु सुषुप्त्यवस्थेतिशङ्कायां सुषुप्त्यवस्थाज्ञापनाय तां दूषयन्ति जीव इत्यादि, यथा हि काठके 'अन्यच्छ्रेय' इत्यादिकं जीवोपदेश. न तथात्र जीवस्वरूपोपदेशः येन तदनुरोधात् जीवन्मुक्तिरत्रोच्येत किन्तु सिद्धवदुच्यतेतो न सा, मतान्तरत्वात्

१ तत्रेति नास्ति क्वचित्  २ स इतिपद नास्ति क्वचित् । ३ भगवतः सम्माननमिति भगवत सन्मानमिति भगवत्सन्मानमित्यपि पाठा । ४ श्लोकेनेत्यधिकं यत्र तत्र श्लोके इतिपदं नास्ति ।

ब्रह्मप्रकरणत्वान्न जीवस्य सद्योमुक्तिः फलं, उत्क्रमण एव ब्राह्मणस्याप्युक्तत्वात्, 'तद्यथे'ति सुषुप्तशरीरं, 'अनस्थिक' इत्यादि 'सम्राडि'त्यन्तमुपसंहारः, श्लोकास्[1]त्रयोदश सर्वनिर्धारकाः, आद्यो ब्रह्मविद्गतेः, 'एष' इति सुषुप्तौ[2] नाडीत्वात् पञ्चवर्णाः, 'अन्धन्तम' इति द्वाभ्यामनेवंविदो निन्दा, 'तदेव सन्त' इति बुद्धिमतां वचनं, 'आत्मान'मिति वैराग्यं, 'यस्यानुवित्ति'रिति नवभिर्भगवत्स्तुति[3]स्तद्विज्ञानञ्च, पुनरेतदेव स्पष्टतयोपदिशति 'स वा अयमात्मे'त्यादि 'अभयं वै जनक प्राप्तोसी'त्यन्तं, काण्वानां क्वचित् पाठभेदेप्ययमेवार्थः, अत्र प्रकरणे जीवो वाच्य इति प्राप्ते अभिधीयते,

ब्रह्मैव प्रकरणार्थः, सुषुप्तौ उत्क्रमणे च जीवब्रह्मणोर्भेदेन व्यपदेशात्, आकाशवद् ब्रह्मनिर्धार एव युक्तः ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

किञ्च, 'सर्वस्य वशी'त्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणमिति ॥ ४३ ॥ १३ ॥

॥ इति प्रथमाध्याये तृतीयपादे त्रयोदशं सुषुप्त्युत्क्रान्त्योरित्यधिकरणम् ॥ १३ ॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥

---

तादृशसमाधिपक्षस्य मतान्तरीयत्वात्, उत्क्रमण इत्यादि, 'ऊर्ध्वोच्छ्वासी भवती'त्युत्क्रमण एवोपक्रान्ते शारीर-ब्राह्मणस्योक्तत्वात् तथा च तदनादृत्य अकामत्वमात्रेण रूपेणोत्क्रान्तिशून्या सद्योमुक्तिरपि न वक्तुं शक्येत्यर्थः,

आकाशवदिति तथा च यथा पूर्वाधिकरणेन्यथानुपपत्तिबलादाकाशवाक्यस्य ब्रह्मपरत्वनिर्धारस्तथात्र भेदव्यप-देशान्यथानुपपत्तिबलात् प्रकरणस्य ब्रह्मपरत्वनिर्धार इत्यर्थ. ॥ ४२ ॥

पत्यादिशब्देभ्यः ॥ ४३ ॥ १३ ॥

## इति श्रीवल्लभजीसुतगोस्वामिश्रीगोपालकृतेणुभाष्यपदप्रदीपे प्रथमाध्यायस्य तृतीयः पादः ॥

---

१ श्लोका अत्रेत्यपि पाठः । २ सुषुम्णानाडीत्वादिति सुषुम्नानाडीत्वादित्यपि च पाठौ । ३ ब्रह्मस्तुतिरित्यपि पाठ ।

# ॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥



## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

एवं सर्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते केचिद्वेदार्थाज्ञानात् कचिद्वेदभागे कापिलमतानुसारिपदार्थदर्शनेन तस्यापि वेदमूलकत्वं वदन्ति तन्निराकरणाय चतुर्थः पाद आरभ्यते, तत्र 'ईक्षतेर्नाशब्द' मिति साङ्ख्यमतमशब्दत्वादिति निवारितं, वेदेन प्रतिपादितमिति तत्राशङ्कते आनुमानिकमप्येकेषां, एकेषां शाखिनां शाखासु साङ्ख्यपरिकल्पितप्रकृत्यादिः श्रूयते, "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः महतः परमव्यक्तमव्यक्तात् पुरुषः परः पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति-" रिति काठके श्रूयते, तत्र बुद्धेरात्माहङ्कारः, ततो महान् महत्तत्त्वं, ततः अव्यक्तं प्रकृतिः, ततः पुरुष इति, नह्यहङ्कारादयः पदार्था ब्रह्मवादे सम्भवन्ति, तस्मादेवञ्जातीयकेषु तन्मतपदार्थानां श्रवणान्मायाप्रकृत्यविद्यावादा अपि श्रौता इति चेत्,

न, शब्दसाम्यमात्रेण न तन्मतं सिध्यति, "सन्दिग्धानां पदार्थानां पौर्वापर्येण निर्णयः, नतु सन्दिग्धवाक्येन सर्वव्याकुलतोचिता," अत्र हि पूर्वं "आत्मानं रथिनं विद्धि शरीरं रथमेव तु बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः," तदनु चत्वारि वाक्यानि "यस्त्वविज्ञानवा-" नित्यादि, तद"न्विन्द्रियेभ्यः परा" इति, तत्र पूर्वसम्बद्ध एवार्थ उचितः, तमाह शरीररूपकविन्यस्तगृहीतेः, शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयस्ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेवात्र गृहीतिर्ग्रहणं, अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः, "जीवप्रकरणं ह्येतन्मुक्त्युपायोऽस्य रूप्यते योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम्," तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरं, स रथः सर्वसामग्रीसहितापराधीनयानत्वात्, रथस्तु हयाधीनः, हयाश्च स्वबुद्ध्यधीनाः, सा च प्रग्रहाधीना, स च सारथ्यधीनः, स च स्वबुद्ध्यधीनः, सा च मार्गाधीना, स च प्राप्याधीन इति, एवं ज्ञात्वा युक्तसामग्रीकस्तद्देशं प्राप्नोति, तत्रेन्द्रियाणामात्मा विषयाः, ते च मनसा सम्यक्त्वेन भावितास्तथा भवन्ति, विरक्तेन्द्रियाणामतथात्वात्,

आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ आनुमानिकमिति अनुमानगम्य तथा हि साङ्ख्यशास्त्र वेदमूलक शास्त्रविशेषप्रतिपादिताखिलपदार्थप्रतिपादकत्वाद्वेदान्तशास्त्रवत्, अत्र गृहीतिर्ग्रहणमिति, तथा चात्र 'योग्यं शरीरमारुह्य गच्छेदिति हरे. पद'मिति विज्ञानसारथिमन्त्रेण निरूप्यते, तत्र च विज्ञानसारथ्यादीनां साधनत्वं मोक्षस्य च फलत्वमुक्तं, अन्यथेत्यादि प्रकृतहानं मुक्तिमार्गीयसाधनफलयोर्हानं, अप्रकृतपरिग्रहापत्तिः साङ्ख्योक्तविवेकस्य साधनत्व स्वरूपावस्थानप्राप्तिः फलमित्येतत्पक्षस्यापत्तिरित्यर्थः, अपराधीनयानत्वात् स्वाधीनत्वादित्यर्थः, अत्रेन्द्रियविषया न लोकरीत्या ग्राह्या किन्तु मुक्तिमार्गीया इत्याहुः ते चेत्यादि, तथा च मोक्षप्रकरणे यदिन्द्रियेभ्यः

१ पददर्शनेनेत्यपि पाठ । २ प्रकृत्यादीत्यपि पाठ. । ३ नत्विद्यपि पाठ. । ४ कारिकेयं श्रीमदाचार्याणामेव । ५ पूर्वसम्बन्ध इत्यपि पाठः । ६ कारिकेयं श्रीमदाचार्याणामेव । ७ बुद्ध्यधीना इत्यपि पाठः ।

बुद्धेरात्मा विज्ञानं, तद् ब्रह्मविषयकं महद्भवति, ततः परमव्यक्तं न प्रकटं भगवत्कृपैव, सा तु भगवदधीना न साधनान्तराधीना, स च भगवान् स्वाधीन इति, एवमेवार्थस्तस्योचितः, किञ्च, दर्शयति स्वयमेवेममर्थं "एषु सर्वेषु भूतेषु गूढोत्मा[1] न प्रकाशते दृश्यते त्वग्र्यया[2] बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"रिति, सूक्ष्मयोपनिषदनुसारिण्या बुद्ध्या भगवज्ज्ञाने हि तत्प्राप्तिरिति, चकारात् "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति स्मृतिर्गृहीता, तस्मात् साधनोपदेशान्न साङ्ख्यमतमिह विवक्षितमिति ॥ १ ॥

## सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥

नन्वव्यक्तशब्देन न भगवत्कृपा वक्तुं शक्या धर्मिप्रवाहादित्याशङ्क्य परिहरति तुशब्दः, सूक्ष्मं तद् ब्रह्मैव, धर्मधर्मिणोरभेदात्, अव्यक्तशब्देन हि सूक्ष्ममुच्यते, तदेव हि सर्वप्रकारेण न[3] व्यज्यते, अर्हत्वात् तदेवार्हं योग्यं, उभयत्राप्ययं हेतुः, तस्माद्धर्मधार्मिणोरभेदाद्भगवानेव सूक्ष्ममिति तत्कृपैवाव्यक्तवाच्या[4] ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ ३ ॥

ननु धर्मित्वे परत्वमनुपपन्नमन्यथा पूर्वोक्तो दोष इत्यत आह, अभेदेपि कृपायास्तदधीनत्वात् परत्वं, तत्र दृष्टान्तः, अर्थवत्, अर्थः पुरुषार्थः फलं तद्वत्, "ब्रह्मविदाप्नोति पर"मित्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वमिति, तथैवाक्षरपुरुषोत्तमविभागोपि, स्वधर्मा अपि स्वाधीनाः स्वयमपि स्वाधीन इति, तथा कृपाविष्टः साधनं आनन्दरूपः फलमिति,

अथवाव्यक्तं सच्चिद्रूपमक्षरमेवास्तु तस्मिन् सति विज्ञानस्य विषयाधीनत्वमर्थः,

एतेनान्येपि सर्वसंप्लववादिनो[5] निराकृता वेदितव्याः, असम्बद्धाभिलापाच्च,

परत्व विषयाणामुच्यते तद् भगवदीयतया मनसा सम्यक्त्वेन भावितानामेव यथा नवमस्कन्धेम्बरीषचरिते 'स वै मन कृष्णपदारविन्दयो'रित्यादिश्लोकत्रयोक्ता, तथा भवन्ति तादृशानामिन्द्रियगोचरा भवन्ति रसरूपा एवेति विषया इत्यर्थ, विरक्तेन्द्रियाणां शुष्कज्ञानीन्द्रियाणां, अतथात्वात् रसरूपविषयाग्राहकत्वात्, 'बुद्धेरात्मे'त्यादि विज्ञानं विशिष्ट ज्ञान बुद्धिकार्यरूप ब्रह्मविषयक, एवं हेतु व्याख्याय दर्शनपदं व्याकुर्वन्ति किञ्चेत्यादि, इममिति पूर्वोक्त रथ, सूक्ष्मयेत्यादि तथाच सूक्ष्मपदेन बुद्धेरुपनिषदनुसारित्वबोधनात् स्मृतावपि 'विशत'इतिपदेन तस्यैवार्थस्योपबृंहणादत्र प्राप्तिरूपोर्थोभिप्रेतो दृश्यते नतु सूक्ष्मदर्शनरूपोतो न साङ्ख्यमतप्रत्यभिज्ञानमितिभाव ॥१॥

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ उभयत्र अव्यक्तपदस्य ब्रह्मपरत्वे कृपापरत्वे चेत्यर्थ ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥ उक्त समाधिमाक्षिपन्ति नन्वित्यादि, यदि पूर्वोक्तयुक्त्या कृपाया ब्रह्मत्वं तदा धर्मिणः स्वतन्त्रत्वमुक्त परत्व निर्युक्तिक कृपाया परत्वेन तदभेदमादाय धर्मिण परत्वनिरूपणात् स्वतन्त्रधर्मिपरत्वमनुपपन्नमित्यर्थ, यदि कृपाया धर्मत्व तदा धर्मिग्रायपाठविरोधरूपो दोष पूर्वोक्त प्रसज्यत इत्यतस्तत्रापि समाधि व्याचक्षते अभेदेपीत्यादि तथाचाभेदे यथैकरूपेण ग्रहणे युक्तिस्तथा भेदे नियम्यनियामकभावे युक्तिरित्युभयमुपपन्नमित्यर्थः, अभेदे नियम्यनियामकभाव एव कथमित्यत आहुः तत्रेत्यादि, तथाच गणितानन्दत्वागणितानन्दत्वाभ्या यथा तत्र विभागस्तथात्रापि रूपान्तराभ्या विभाग इतिभाव., तथेत्यादि तथाचोभयथाप्यय पुरुषोत्तम एवोक्त, पुरुषोत्तमपक्षेव्यक्तशब्द स्वारस्य न लभत इत्यत. पक्षान्तरमाहु अथवेति, अक्षरमेव 'अव्यक्तोक्षर इत्युक्त' इतिगीतावाक्यादक्षरमेवेत्यर्थ., नच नपुसकलिङ्गविरोध., 'अक्षर ब्रह्म परम'मितिब्रह्मत्वविवक्षायां तत्रापि नपुंसकलिङ्गनिर्देशसम्भवात्, तस्य भगवता समं भेदाभेदौ गीतायां 'एव सततयुक्ता ये' इतिप्रश्नोत्तरसन्दर्भे स्फुटौ, धामत्वाद्भगवदधीनत्वमपि स्फुटं, अस्मिन्पक्षे यो दृष्टान्तस्तमाहु तस्मिन्नित्यादि, तस्मिन्नक्षरे स्फुरिते सति, विज्ञानस्य बुद्धेर्यदक्षरात्मकविषयाधीनत्वं सोत्र

१ गूढात्मा इत्यादिरपि पाठ । २ त्वग्र्रयेत्यपि पाठ । ३ नरहितोपि पाठ. क्वचन, स त्वशुद्ध । ४ अव्यक्तशब्दवाच्येत्यपि पाठः । ५ सर्वविप्लववादिन इत्यपि पाठ ।

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम् ।
शाक्तास्तां[1] चेत्तथा ब्रूयुस्ते सन्मार्गाद्बहिःकृताः[2] ॥
तस्मादिन्द्रियेभ्यःपरवाक्ये नानुमानिकं किञ्चिदस्ति ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

पूर्वापरसम्बन्धेनार्थः प्रतिपादितः, केवलैतद्वाक्यविचारेपि न तदभीष्टं प्रकृतिरूपमव्यक्तं सिध्यतीत्याह, अत्र हि वाक्येऽव्यक्तं ज्ञेयत्वेन नोक्तं, तेषान्तु प्रकृतिपुरुषान्तरं ज्ञातव्यं, न हि सिद्धवन्मात्रनिर्देशे तेषां मते पुरुषार्थः सिध्यति, अपुरुषार्थसाधनत्वे वा[3]सम्बद्धार्थवाक्यत्वमेव स्यात्, परत्ववचनञ्चासङ्गतं श्लिष्टत्वादुभयोरिति चकारार्थः, अयं हेतुः पूर्वमुक्तोप्यवसरे स्मारितः, तस्मादव्यक्तं न प्रकृतिः ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ननु ज्ञेयत्वावचनमसिद्धं, पूर्वं निर्देशमात्रमुक्त्वाग्रे ज्ञेयत्ववचनात् "अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत" इति उत्तरवाक्ये वदतीति चेत्, न, प्रकरणस्य नियामकत्वेनैकवाक्यत्वे द्वयोः सर्वैकवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः, न तु द्वयोरेवैकवाक्यत्वं वक्तुं शक्यं, तस्मात् प्रकरणस्य नियामकत्वेशब्दवाक्यमपि भगवत्परमेव ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

ननु न वयं सर्वमेकं प्रकरणमिति वदामः किं"न्त्विन्द्रियेभ्यः परा" इत्यारभ्य "नाचिकेतमुपाख्यान"मित्यन्तं भिन्नं प्रकरणं, तत्र प्रथमं पदार्थनिर्देशः, तदनु "एषं[4] सर्वेषु भूते"ष्विति पुरुषज्ञानं, अत्राशब्दमिति तु प्रकृतिज्ञानं, तस्मादेतावत्प्रकरणे साङ्ख्यमतनिरूपणाद-

---

दृष्टान्तभूतोर्थो ग्राह्यः, तथा च तद्विज्ञान यथाक्षरसारूप्येप्यक्षराद्भिन्नमक्षराधीनं च तथाक्षरमपि ब्रह्मरूप ब्रह्मणः परस्माद्भिन्न तदधीन चेत्यैक्येपि न परत्वानुपपत्तिप्रवाहविरोधावित्यर्थः, एतेन पूर्वोक्तरीत्या त्रिसूत्रीव्याख्यानेन, अन्येपि अव्यक्तपदस्याविद्यार्थत्ववादिनोपि, निराकृता इति निराकरणप्रकारो भाष्यप्रकाशे स्फुट इति नात्र प्रपञ्च्यते, सर्वं तन्मतनिराकरणं मनसिकृत्याहुः अनेकेत्यादि, तां प्रकृति, तथा जगद्बीजरूपाम् ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥ पूर्वापरेति पूर्वापरोपनिषदर्थैकवाक्यतयार्थो निरूपित इत्यर्थ., केवलैतद्वाक्येति 'इन्द्रियेभ्यः परा ह्यर्था' इतिवाक्य इत्यर्थः, ज्ञातव्यमिति 'गुणपुरुषान्तरज्ञानात् कैवल्य'मितितदीयप्रवचनसूत्राद्विभूतिविशेषास्तये प्रधानस्यापि ज्ञेयत्वस्मरणाच्च तथेत्यर्थः, परत्वेत्यादि परापरभावो हि विश्लेषेवगन्तुं शक्यते नतु संश्लेषे इदानीमज्ञानदशायां तु श्लेष एवेत्युदासीनतयोक्तौ पुरुषस्य परत्ववचनमप्यसङ्गतं स्यादित्यर्थः, अयं हेतुः चकारसूचितो हेतु', पूर्वं अदृश्यत्वाधिकरणे ॥ ४ ॥

वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ प्रकरणस्येत्यादि, अव्यक्तश्रुते' परत्वलिङ्गस्य तद्घटितवाक्यस्य च परमतसाधारणत्वात् प्रकरणस्य निर्णायकत्व वाच्यमतस्तस्य नियामकत्वेनैकवाक्यत्वे वाच्ये 'महतः परमव्यक्त' मि'त्यशब्दमस्पर्श'मितिद्वयोरेवैकवाक्यत्वं नान्येषामित्यत्र नियामकाभावात् सर्वेषामेवैकवाक्यत्व वक्तव्यं, प्रकरणं च'ऋतं पिबन्तौ'वित्यारभ्य 'नाचिकेतमुपाख्यान' मित्यन्तमेक, तत्र चात्मानावेव परामृश्य जीवात्मनो रथित्वं तदुपकरणं तत्फलं चोक्त्वा 'एष सर्वेषु भूते'ष्वित्यारभ्य वल्लीसमाप्तिपर्यन्तं परमात्मैव ज्ञेयत्वेन परामृष्टो मृत्युमुखच्युतिरूपफलदर्शनात् प्रधानज्ञानेन साङ्ख्यैस्तत्फलानङ्गीकाराच्चेतनात्मज्ञानादेव तत्फलस्वीकारादतः प्रकरणस्य नियामकत्वेशब्दवाक्यस्यापि भगवत्परत्वात् ज्ञेयत्वावचनं नासिद्धमित्यर्थः ॥ ५ ॥

---

१ शक्तितश्चेदित्यपि पाठः । २ बहिष्कृता इत्यपि पाठः । ३ वेति नास्ति क्वचित् । ४ एष्वित्यपि पाठ. ।

**शब्दत्वमसिद्धमित्याशङ्क्य परिहरति त्रयाणामेवमुपन्यासः प्रश्नश्च,** असदुक्तव्याख्याने त्रिप्रकरणत्वं, अन्यथा चतुःप्रकरणत्वं स्यात्, तृतीया चैषा वल्ली, "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्य"मिति प्रश्नः प्रथमः, "प्रतिब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नाचिकेत प्रजानन्" इत्याद्युत्तरं, "येयं प्रेते विचिकित्सा मनुष्येस्तीत्येके नायमस्तीति चैके" इति द्वितीयः प्रश्नः, "देवैरत्रापी"त्यग्रे उत्तरं, "अन्यत्र धर्मादन्यत्राधर्मा"दिति तृतीयः प्रश्नः, "सर्वे वेदा यत्पदमामनन्ती"त्यादिना उत्तरं, एवमग्निजीवब्रह्मणां प्रश्नोत्तराणि, तत्र यदि साङ्ख्यमतनिरूपणीय"मिन्द्रियेभ्य" इत्यादि स्यात्तदा चतुर्थस्याप्युपन्यासः स्यात्, उपन्यासे हेतुः प्रश्नः, अत एव पश्चाद्वचनं, तस्य प्रकृतेर्भावादसदुक्तरीत्या त्रीण्येव प्रकरणानीति सिद्धं, उत्तरप्रश्नभावार्थश्चकारः ॥ ६ ॥

## महद्वच्च ॥ ७ ॥

ननु तथापि मतान्तरेन्यत्र सङ्केतिताः कथं ब्रह्मवादे ब्रह्मपरतया योज्यन्त इत्याशङ्क्य परिहरति, **महद्वत्,** यथा महच्छब्दो "महान्तं विभुमात्मानं" "वेदाहमेतं पुरुषं महान्त"मित्यादौ महच्छब्दो ब्रह्मपरो योगेनैवमव्यक्तशब्दोप्यक्षरवाचक इति, न हि साङ्ख्यमत इव वेदान्तेपि महच्छब्दः प्रथमकार्ये वक्तुं शक्यते, तस्मादिन्द्रियादिवाक्ये साङ्ख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धं, चकारोधिकरणसम्पूर्णत्वद्योतकः ॥ ७ ॥ १ ॥

**॥ इति प्रथमाध्याये चतुर्थपादे प्रथममानुमानिकाधिकरणम् ॥ १ ॥**

पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्तुमधिकरणान्तरमारभते,

ननु प्रकरणवशात् पूर्वमसदुक्तोर्थोन्यथा वर्णितः, यत्र प्रकरणापेक्षैव नास्ति मन्त्रे तदस्माकं मूल "मजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्य" इति, यद्यपीदं श्वेताश्वतरोपनिषदि चतुर्थाध्याये विद्यमानत्वात् पूर्वापरसम्बद्धमेव वक्तव्यं, तत्र "ब्रह्मवादिनो वदन्ति" "किङ्कारणं ब्रह्मे"त्युपक्रम्य ब्रह्मविद्यैव निरूपिता, तथापि पूर्वकाण्डे प्रणवादिमन्त्राणां नायं नियम इति प्रकृतेपि मतान्तरवाचकस्यैव प्रकृतोपयोग इतिशङ्का, "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढां"मिति च, तथा "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता" अग्रे च "यो

---

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥** अशब्दत्वमसिद्धमितीश्वरेशब्दत्वनिर्वचन भवत्कृतमसङ्गतमित्यर्थः, **त्रयाणां** प्रकृते चाग्निजीवब्रह्मणां, **प्रश्नश्चे**ति वल्लीत्रय एव प्रश्न इत्यर्थः, **त्रिप्रकरणत्वं** श्रुतिस्थं त्रिप्रकरणत्वं सङ्गतं भवतीत्यर्थः, **अन्यथा** साङ्ख्यमतोपन्यासे, **चतुरि**त्यादि तथा च चतुर्थस्य प्रश्नोत्तरस्य वल्ल्याधिक्यस्य चासत्त्वात् तन्मतोपन्यासोसङ्गत एवेत्यर्थः, **अत एव** साङ्ख्यमतासम्भवत एव, **पश्चाद्वचनं** वल्लीत्रयान्ते निरूपणं अन्यथा वल्ल्यन्तरसम्भवे तन्मतोपन्यासशङ्कापि स्यादिति भावः, **तस्य** चतुर्थप्रकरणस्य, **उत्तरप्रश्नभावार्थं** उत्तरप्रश्नानां त्रित्वबोधनार्थम् ॥ ६ ॥

**महद्वच्च ॥ ७ ॥ अन्यत्र सङ्केतिताः** अव्यक्तादिशब्दाः प्रकृत्यादौ सङ्केतिताः, **प्रथमकार्ये** प्रकृतिकार्ये महत्तत्वरूपे ॥ ७ ॥ १ ॥

**॥ इति प्रथमचतुर्थे प्रथमाधिकरणम् ॥**

---

१ 'स्वर्गमध्येपि' 'स्वर्गमध्येसि' 'स्वर्गमध्येषी'ति पाठा । २ स्वर्गमित्यपि पाठ । ३ नदा तस्येत्यपि पाठः । ४ प्रकृते· भावादिति तु प्रमाद एव । ५ उत्तरप्रश्नाभावार्थमित्यपि पाठः । ६ आरभ्यत इत्यपि पाठः । ७ रोहितामित्यपि पाठ । ८ सम्बन्धमित्यपि पाठ. । ९ किङ्कारणं ब्रह्मेति क्वचन नास्ति । १० निरूढामित्यपि पाठ ।

योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः" "ऋषिप्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येदि"त्यादि च वाक्यानि कपिलतन्मतवाचकानि वर्तन्त इति साङ्ख्यमतमपि वैदिकमेवेत्येवं प्राप्ते,

उच्यते,

## चमसवदविशेषात् ॥ ८ ॥

"अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाने"तिमन्त्रे यथा न विशेषो विधातुं शक्यते, न हि कर्मविशेषं कल्पयित्वा तत्रार्वाग्बिलचमसं कल्पयित्वा तत्र यशोरूपं सोमं सप्त[१] होतारो मन्त्रेण[२] भक्षयेयुरिति कल्पयितुं शक्यते तथा प्रकृते रोहितशुक्लकृष्णशब्देन रजःसत्त्वतमांसि कल्पयित्वा न तद्वशेन सर्वमेव मतं शक्यते कल्पयितुं, कपिलऋषिवाक्यमप्यनित्यसंयोगभयान्नित्यऋषेरेवानुवादकं, तस्मान्न मन्त्रमात्रेण प्रकरणश्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः ॥ ८ ॥

## ज्योतिरुपक्रमात्तु[३] तथा ह्यधीयत एके ॥ ९ ॥

ननु चमसमन्त्रेऽर्वाग्बिलइतिमन्त्रव्याख्यानमस्ति "शिरश्चमसः प्राणा वै यशः प्राणा वा ऋषय" इति नात्र तथा व्याख्यानमस्तीतीमामाशङ्कां[४] परिहरति तुशब्दः, अजाशब्देन ज्योतिरेवोच्यते, यथा ह्यजा अल्पदोग्ध्री तथेयं नश्वरसुखदात्री, अग्निसूर्यसोमविद्युद्रूपा[५] ब्रह्मणो

---

चमसवदविशेषात् ॥ ८ ॥ अधिकरणप्रयोजनमाहु श्रुत्यन्तरेत्यादि, अत्रापि साध्यमानुमानिक श्रौतत्वाभावरूपमेव, अजामन्त्रस्थोजाशब्दोत्र पूर्वपक्षे मूलमिति संशयतद्बीजमनुक्त्वा पूर्वपक्षमेवाहुः नन्वित्यादि, नन्वस्य मन्त्रस्य श्वेताश्वतरोपनिषच्चतुर्थाध्याये 'य एको वर्णो बहुधाशक्तियोगाद्वर्णाननेकान्निहितार्थो विदधाती'त्यादिमन्त्रे ब्रह्म प्रकृत्यैव पठितत्वादुपनिषदारम्भेपि 'किङ्कारण ब्रह्मे'ति ब्रह्मण एव प्रकृतत्वात् कथमस्य प्रकरणानपेक्षत्वमित्याकाङ्क्षाया तदनपेक्षतामुपपादयन्ति यद्यपीत्यादि, तदेवाह तथापीत्यादिना, तथाच प्रणवादिमन्त्राणामर्थान्तरवाचकानामपि यथात्रोपनिबन्ध एव 'इम मे वरुणे'त्यादीना सूर्योपस्थानाद्यर्थानामपि यथात्रोपनिबन्धस्तथा कपिलमतसिद्धार्थस्यास्यापि मन्त्रस्यात्रोपनिबन्ध इत्यय मन्त्र प्रकरणनिरपेक्ष एव कापिलोक्तार्थप्रतिपादनसमर्थ इति शङ्कावकाश इत्यर्थ , बहूनामनुग्रहो न्याय्य इति दर्शयितु तन्मतवाक्यबाहुल्य प्रतिपाद्यते 'ते ध्याने'त्यादिना, तथा चात्र स्वगुणैर्निगूढत्व, अग्रे मुक्तामुक्तसङ्गौ भोक्तृभिर्भोग्यार्थैर्मात्रादिकार्यैर्युक्तानादि. प्रकृतिस्तदग्रे चाधिष्ठातृत्व तदग्रे च कपिलस्य नाम तद्धर्माश्च प्रतिपाद्यन्ते, एतावान् पर विशेषो यत्कापिले प्रकृति स्वतन्त्रोच्यते अत्र तु ब्रह्मशक्तित्वेनेति न तावता तस्या अजात्वहानि शक्तेर्नित्यत्वात्, वैदिकमेवेत्येवकारेण आनुमानिकत्वव्यवच्छेद', सूत्रेण सिद्धान्त व्याकुर्वन्ति उच्यत इत्यादिना, एकपदमिद सूत्र, चमसवत् तुल्य चमसवत् तादृशश्चासावविशेषश्च चमसवदविशेषस्तस्मादिति, स्यात् कपिलमतमत्र यदि तस्या सृष्टिप्रकरणे स्वातन्त्र्योपपादको रज सत्त्वतम.साम्यावस्थात्मक. स्वरूपस्य विशेषो विधातु शक्येत, स च न शक्यते शक्तिमदधीनोदयतया तत्सापेक्षतयैव सिद्धत्वात्, नच 'योनि योनि'मिति तद्गमक, वीप्साया बाहुल्यस्य च बाधकत्वात, नच स्वगुणैर्निगूढत्व तद्गमक तत्र स्वपदेन ब्रह्मण एव ग्रहणयोग्यत्वात् तद्गुणानामेव च ग्रहणात, उत्तरार्धे 'य. कारणानि निखिलानि कालात्मयुक्तान्यधितिष्ठत्येक'इत्यनेनापि तस्यैव परामृष्टत्वाच्च, नापि भोक्तृभोग्यार्थयोगस्तथा, जन्यशक्तावपि तथात्वस्य पुराणसिद्धत्वात्, नित्यऋषेः भगवदवयवरूपाधिदैविकऋषे. ॥ ८ ॥

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥ इमामित्यादि इति हेतौ, तथाचाध्यात्मप्रकरणबलाद्रूढ्यर्थमपहाय योगादरात्माङ्गयसिद्धा प्रकृतिरेवाजाशब्दवाच्या ग्राह्येतिभावः, नन्वजाशब्दार्थानिर्धारे कथ तुशब्दस्तन्मत दूषयेदत आहु अजेत्यादि, तथा च निगीर्याध्यवसानेनाजाशब्दस्य ज्योतिरर्थ इत्यर्थ. ननु किं तज्ज्योतिरित्यत आहु·

---

१ सप्तेति लुप्त क्वचन । २ मन्त्रेणेत्यपि पाठ । ३ ज्योतिरुपक्रमेति पाठ शङ्करभास्करादीनाम् । ४ शङ्कामित्यपि पाठ. । ५ अग्निसूर्यसोमविद्युद्रूपाद्ब्रह्मण इत्यपि पाठ ।

हंसोक्तचरणरूपा भगवत्कार्याशरूपत्वात् "तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणी"तिश्रुतेश्च प्रथमोत्पन्ना देवता अजाशब्देनोच्यते, तत्र हेतुः, उपक्रमात्, अत्रैवोपक्रमे "तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमा" इति, "द्वा सुपर्णे"ति चाग्रे, मध्ये चायं मन्त्रः पूर्वोत्तरसम्बद्धमेव वदति, सा मुख्या सृष्टिः, अजद्वयं जीवब्रह्मरूपमिति, अत्र प्रकरणे न स्पष्टेति निरूपयति, तथाहि श्रुत्यन्तरे स्पष्टमेव अधीयत एके "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये"ति, एवमग्रेपि कलात्रये "अनेन जीवेनात्मने"ति जीवब्रह्मणोश्चानुप्रवेशः, बीजेपि त्रैविध्यमिति सरूपत्वं, भगवत अभोगे हेतुः जीवेन भुक्तभोगामिति, तस्मात् प्रकृतेपि चमसवच्छुतावेवार्थकथनान्न साङ्ख्यमतप्रतिपादकत्वम् ॥ ९ ॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

ननु द्विविधा शब्दप्रवृत्तिः, योगो रूढिर्वा, तत्राजाशब्दश्छागायां रूढः, न जायत इति योगः, अनुभयरूपत्वात् कथं सृष्टिवाचकत्वमित्याशङ्क्य परिहरति कल्पनोपदेशाच्च, कल्पनात्रोपदिश्यते, आद्या सृष्टिः कल्पनया अजाशब्देनोच्यते, यथा ह्यजा बर्करसहिता सवत्सा स्वामिहिता तथेयमिति, उपदेशपदात् तथोपासनमभिप्रेतं, चकारात् परोक्षवादोपि देवस्य हिताय, "यथा आदित्यो वै देवमधु" "वाचं धेनुमुपासीत" द्युलोकादीनाञ्चाग्नित्वं पञ्चाग्निविद्यायां तथा प्रकृतेप्यविरोधः, योगरूढिव्यतिरेकेणाप्येषा वेदशब्दप्रवृत्तिरिति, तस्मादजाशब्देन न साङ्ख्यमतसिद्धिः ॥ १० ॥ २ ॥

॥ इति प्रथमाध्याये चतुर्थपादे द्वितीयं चमसवदित्यधिकरणम् ॥ २ ॥

---

अग्नीत्यादि, हंसोक्तेत्यादि छान्दोग्ये षष्ठप्रपाठके सत्यकामाय हंसेन 'अग्नि. कला सूर्य. कला चन्द्रः कला विद्युत् कलैष वै सौम्य चतुःकलः पादो ब्रह्मणो ज्योतिष्मान्नामे'त्युक्तश्चरण , 'तत्तेजोसृजते'तिश्रुत्युक्तभगवत्कार्यांशत्वात्तस्य त्रिरूपत्व, कार्यत्वस्त्रीरूपत्वे च 'तासा त्रिवृत'मितिश्रुते., तथा च प्रथमोत्पन्ना या देवता सात्राजाशब्देनोच्यते इत्यर्थः, उपक्रमात् प्रथमसृष्टत्वात्, सृष्टौ चेतनाधिष्ठितत्वमाहु. 'द्वा सुपर्णे'त्यनेन, सेत्यादि त्रिवृत्कृतदेवतारूपसृष्ट्यन्तरोपयोगिनी मुख्या सृष्टिरित्यर्थः, न स्पष्टेति छान्दोग्ये तेजस स्त्रीरूपत्व च न स्पष्टमित्यर्थ., निरूपयति तदर्थबोधकश्रुत्यन्तर निरूपयतीत्यर्थ', जीवब्रह्मणो' प्रवेशमाहु' अन्येनेत्यादि, सहार्थे तृतीया, आत्मनेति करणतृतीया, स्वरूपत्वकथनप्रयोजनमाहु' बीजेत्यादि, 'बीजं मां सर्वभूतानां विद्धि पार्थ सनातन'मितिवाक्याद्बीज भगवान् स च सच्चिदानन्दरूपत्वात्त्रिविध इति कार्यमपि तथोक्तं, वस्तुत. सर्वस्य ब्रह्मत्वात् सच्चिदानन्दरूपत्वमपि सारूप्येण निरूपितमितिसूचना, अभोगे भगवता अभोगे ॥ ९ ॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ सृष्टिवाचकत्वं अजाशब्दस्याद्यसृष्टिवाचकत्वं, बर्करोजस्तेन सहिता, सवत्सा सापत्या, स्वामिहिता स्वामी तस्या सेवक, तथेयमिति प्रकृतिरपि तथा, सा सपुरुषा सकार्या उपासकानां हितेतिसदृशार्थलक्षणयाजापद प्रथमोत्पन्नदेवताप्रकृतिबोधकमित्यर्थ , चकारात् अप्यर्थकचकारात्, परोक्षवाद इति तथा च 'तत्तेषा न प्रिय यन्मनुष्या विद्यु'रितिश्रुते. अजापदेन चतुर्मुखाजन्यायेन भगवत्प्रियत्व वार्थः, दृष्टान्तमाहुः यथेत्यादि, तथा च साङ्ख्यसमाससूत्राणां पञ्चशिखवृत्तौ सूर्यस्य चक्षुरधिदैवतत्वेनोक्तत्वान्मधुविद्योक्तस्य मधुत्वस्य सूर्ये वक्तुमशक्यत्वात् साङ्ख्यैरपि तत्र कल्पनयैव लक्षणया मधुत्वं वाच्यं तथेहाजात्वमपीत्यर्थ , अन्यथा तेषामपि श्रुतिविरोधो दु.परिहरः ॥ १० ॥ २ ॥

॥ इति प्रथमचतुर्थे द्वितीयाधिकरणम् ॥

---

१ भगवत्कार्यरूपाशत्वादित्यपि पाठ । २ न स्पष्ट इतीत्यपि पाठ । ३ सवत्सेत्यपि पाठः । ४ उपदेशादित्यपि पाठ' । ५ वेदस्येत्यपि पाठ । ६ वेदे शब्दप्रवृत्तिरित्यपि पाठः । ७ मन्त्रेणेत्यपि पाठ ।

## न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

मन्त्रान्तरेण पुनराशङ्क्य परिहरति,

बृहदारण्यकषष्ठे श्रूयते "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोमृत"मिति, [1]यद्यत्र पञ्चजनाः पञ्चोच्यन्ते न पञ्चानां पञ्चगुणत्वं समासानुपपत्तेः, तथाहि, आद्यः पञ्चशब्दः सङ्ख्यावाची सङ्ख्येयवाची वा? आद्ये पञ्चसङ्ख्याया एकत्वान्न षष्ठीसमासः सङ्ख्यायां सङ्ख्याभावाच्च, सङ्ख्येयपरत्वे द्वितीयस्य सङ्ख्यात्वे पञ्चत्वमेव, पूर्ववच्चेदनन्वयः, विधायकाभावाच्च, अतो वीप्सा, पञ्चजनसंज्ञाविशिष्टानां वा पञ्चत्वमिति यथासम्भवमर्थः, तथापि [2]मूढग्राहेण सङ्ख्योपस[3]ङ्ग्रहादपि लक्षणार्थं केनचिद्धर्मेण पञ्चसङ्ग्राहकेण भाव्यं, स च तेषां मते न सम्भवति, तथा सति पञ्चैव तत्त्वानि स्युः, अतस्ते नानाभावा[4] एव स्वीकर्तव्याः, यद्यपि भूततन्मात्राकृतिचित्त्यन्तःस्थितत्वधर्मा वक्तुं शक्यन्ते तथापि न ते तथोक्तवन्तः, "मूलप्रकृतिर[5]विकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष" इत्यन्यथोपगमात्, पुरुषे वैलक्षण्याभावप्रसङ्गश्च, किञ्च, नायं श्रुत्यर्थ इति श्रुतावेव प्रतीयते, अतिरेकात् आकाशश्चेति, चकारादात्मा 'यस्मिन्नि'त्यधिकरणत्वेनोक्तः, तस्मान्नानेनापि मन्त्रेण तन्मतसिद्धिः ॥ ११ ॥

नन्ववश्यं मन्त्रस्यार्थो वक्तव्यस्तदनुरोधेन लक्षणयापि ज्योतिःशास्त्रवत् पञ्चपञ्चशब्दः पञ्चविंशतिवाचकतया परिकल्प्यः, स्पष्टमाहात्म्यार्थमात्माकाशयोराधाराधेयभावः प्रदर्शितस्तत्रत्ययोरेव, अतो मन्त्रे तन्मतसिद्धिरित्याशङ्क्य परिहरति,

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

प्राणादयः पञ्चजनाः, वाक्यशेषस्य मन्त्रार्थनियामकत्वात्, "प्राणस्य प्राणमुत चक्षुष-

---

न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ आशङ्क्य साङ्ख्यमतस्य श्रौतत्वमाशङ्क्य, विषयमाहु. बृहदित्यादि, षष्ठ इति काण्वपाठाभिप्रायेण, माध्यन्दिनानां चतुर्थे दर्शनात्, मन्त्रार्थस्तु यस्मिन् पञ्चादय आकाशान्ताः प्रतिष्ठिता तमात्मानमेव ब्रह्मामृत विद्वानन्यो जीव. अमृतो मुक्तो भवतीतिशेषः, न षष्ठी न भेदसमासः, सप्तमी सोपि नेत्याहु. सङ्ख्यायामित्यादि, सङ्ख्येयपरत्वे पञ्चत्वविशिष्टबोधकत्वे, द्वितीयस्य सङ्ख्यात्वे पञ्चत्वबोधकत्वे, [6]सङ्ख्यात्वमेव पौनरुक्त्येनाकाङ्क्षाभावादबोधकत्वमेव, पूर्ववच्चेत् द्वितीयपञ्चशब्दस्यापि सङ्ख्यावाचकत्व चेत्, अनन्वय पौनरुक्त्येनानन्वय इत्यर्थ., विधायकाभावाच्च उद्देश्यतावच्छेदकविधेययोरैक्ये उद्देश्यविधेयभावासम्भवाच्चेत्यर्थः, वीप्सा उभाभ्यामेकार्थप्रतिपादिका, लक्षणार्थं लक्षणाकरणार्थं, केनचिदित्यादि लक्ष्यतावच्छेदकेन भाव्यमित्यर्थ., ते पञ्चपञ्चजनशब्दबोध्या., नानाभावाः प्रकृतिधर्मातिरिक्ता एव पदार्था इत्यर्थ , नानाधर्मा एवोच्यन्ते यद्यपीत्यादिना, आकृतिपदं कर्मेन्द्रियवाचकं, चित्तिपदं ज्ञानेन्द्रियवाचकं, अन्तःस्थितपदं महदहङ्कारप्रकृतिपुरुषमनसां बोधक, न तथोक्तवन्त इति न तथा पञ्चविंशतिसमुदायं तेङ्गीकुर्वन्तीत्यर्थ., तेषां मते विभाजकधर्मचतुष्टय प्रदर्श्यते मूलेत्यादिना, तथा च प्रकृतित्वपुरुषत्वसप्तत्वषोडशत्वेतिचतुर्भिर्धर्मैः पञ्चविंशतीनां विभागस्तन्मते ननु पञ्चभिरिति स्पष्ट. श्रुतिविरोधः, पुरुषेत्यादि तथा च जनपदस्योत्पन्नार्थबोधकतया तेन पदेन पुरुषबोधने अवैलक्षण्यं पुरुषे स्यादित्यर्थ., अतिरेकात् तन्मतापेक्षयाधिकसङ्ख्याबोधनात्, आधिक्यमेवाहु. आकाशेत्यादिना, तथाचाकाशात्माधिकरणानामाधिक्यान्न तन्मतसिद्धिरित्यर्थ. ॥ ११ ॥

प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिःशास्त्रवदिति तथाच पञ्च पञ्च विद्यन्ते येषु ते च ते

---

१ यद्यप्यत्रेतिपाठोपि । २ मूढग्रहेणेत्यपि पाठः । ३ सप्तम्यन्तपाठोपि । ४ नानाभावादेवेत्यपि पाठः । ५ न विकृतिरित्यपि पाठ । ६ पञ्चत्वमेवेतिपाठस्थले सङ्ख्यात्वमेवेतिपाठपरिग्रह प्रतिभाति प्रदीपे ।

श्रुतेर्विप्रतिषेधात् स्मृतिरेव ग्राह्येतिमतं दूरीकर्तुं श्रुतिविप्रतिषेधो नास्तीत्यधिकरणमारभते, तत्र श्रुतौ सृष्टिभेदा बहवः, क्वचिदाकाशादिकाः 'आत्मन आकाशः सम्भूत' इति, क्वचित्तेजःप्रभृतिकाः 'तत्तेजोऽसृजतेति', क्वचिदन्यथैव 'एतस्माज्जायते प्राण' इति 'इदं सर्वमसृजते'ति च, एवं क्रमव्युत्क्रमानेकविधसृष्टिप्रतिपादकत्वाद् वस्तुनो द्वैरूप्यासम्भवाद् 'प्रहा त्वा अनु प्रजा पशवः प्रजायन्त' इतिवत् सृष्टिवाक्यानामर्थवादत्वेन ब्रह्मस्वरूपज्ञानार्थत्वादध्यारोपापवादन्यायेन न वेदान्तैर्ब्रह्मणः कारणत्वं सिध्यति, अतः परिदृश्यमानजगतः कारणान्वेषणे क्रियमाणे बाह्याबाह्यमतभेदेषु सत्सु कपिलस्य भगवज्ज्ञानांशावतारत्वात् तन्मतप्रकारेणैव जगद्व्यवस्थोचितेत्येवं प्राप्ते,

उच्यते,

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ ( १. ४. ४. )

न सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिः, सर्वप्रकारेषु तस्यैव कारणत्वोक्तेः, आकाशादिषु कारणत्वेन ब्रह्म यथाव्यपदिष्टमेवैकत्र अन्यत्रापि तदेव कारणत्वेनोक्तं, 'न तस्य कार्यं करणञ्च विद्यत' इत्यादिनिराकरणन्तु लौकिककर्तृत्वनिषेधपरं, तस्यैव प्रतीतेः, सर्ववैलक्षण्यार्थं वैदिकानामबाधितार्थकवाक्यत्वस्याभिप्रेतत्वादिति चकारार्थः, कार्यभेदप्रकारस्तु माहात्म्यज्ञापको न तु बाधकः, बहुधाकृतिसामर्थ्यं लोकेपि माहात्म्यसूचकमिति, तस्मान्न श्रुतिविप्रतिषेधात् स्मृतिपरिग्रह इति सिद्धम् ॥ १४ ॥ ४ ॥

॥ इति प्रथमाध्याये चतुर्थपादे चतुर्थं यथाव्यपदिष्टाधिकरणम् ॥

पुनरन्यथाशङ्क्य परिहरति, ननु क्वचि"दसद्वा इदमग्र आसीदि"ति क्वचित् "सदेव सौम्येदमग्र आसीत्" "तद्धैक आहुरसदेवेदमग्र आसीत्" "अव्याकृतमासीत्" "नासदासीन्नो सदासीत्" "तम आसीदि"त्यादिवाक्येषु ब्रह्मणोपि विगानं श्रूयते, 'तद्धैक आहु'रिति कर्मवत् पक्षान्तरं सम्भवति, नह्यसत्तमः शब्दैर्ब्रह्म प्रतिपादयितुं शक्यते, 'असन्नेव स भवती'तिबाधात्, "आदित्यवर्णं तमसः परस्तादि"ति च, तस्मात् कारणत्वेनापि श्रुतिविप्रतिषेधात् ब्रह्म कारणं नेत्येवं प्राप्ते,

---

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ **श्रुतेर्विप्रतिषेधात्** परस्परविरोधात्, **स्मृतिरेव** साङ्ख्यस्मृतिरेव, **मतं** साङ्ख्यमत, **विप्रतिषेधो** विरोधः, संशयस्तु सर्वस्मृतिमूलभूता श्रुतिरत्र निर्णायिकोत श्रुत्युपजीविका स्मृतिर्वेत्याकारकः, **अन्यथैवेति** युगपत् साक्षात्, पूर्वपक्षमाहुः **एवमित्यादिना** पूर्वग्रन्थेन, **क्रमव्युत्क्रमेत्यादि** नानाविधक्रमैर्नानाविधव्युत्क्रमैश्चेत्यर्थः, **तस्यैव प्रतीतेः** निषेधवाक्योत्तरार्धे 'स्वाभाविकी ज्ञानबलक्रिया चे'तिस्वाभाविकज्ञानक्रियाशक्तिप्रतिपादनात् द्वितीयपादे समाभ्यधिकनिषेधाच्च लौकिककर्तृत्वनिषेध एव प्रतीयत इत्यर्थः, **कार्यभेदप्रकारस्तु** नानाविधप्रकारैर्नानाविधसृष्टिकरण त्वित्यर्थ ॥ १४ ॥ ४ ॥

॥ इति प्रथमचतुर्थे चतुर्थाधिकरणम् ॥

**समाकर्षात्** ॥ १५ ॥ सूत्रमवतारयन्ति **पुनरित्यादि**, प्रकारान्तरेण श्रुतिविरोधमाशङ्क्य परिहरतीत्यर्थः, ब्रह्म श्रुतिमूलकमुत तदुपजीवकस्मृतिमूलकमितिसंशयः, पूर्वपक्षमाहुः **ननुक्वचिदित्यादिना**, **विगानं** विरुद्धार्थप्रतिपादकाः शब्दा इत्यर्थः, **कर्मवदिति** यथा 'मलवद्वाससोन्न नाद्यादि'ति निषिध्य 'अथो खल्वाहुरभ्यञ्जन वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्य'दितिपक्षान्तरेन्यपदेन मलवद्वाससोप्यन्नस्य ग्राह्यता प्राप्यते तथेत्यर्थः, **बाधादिति** 'असन्नेवे'त्यत्र यथा वेत्तृनिन्दया बाध एवमत्र तमःपरत्वकथनेन तमोरूपत्वस्यापि बाध इत्यर्थः, **ब्रह्म कारणं नेति**

---

१ श्रुतिप्रतिषेधादित्यपि पाठः । २ वाक्यानीत्यपि पाठ क्वचित् । ३ वेदादित्यपि पाठः । ४ ब्रह्मकारणत्वमित्यपि पाठः । ५ कार्यप्रकारे भेदस्त्वित्यपि पाठ । ६ कर्मपदं क्वचिल्लुप्तं प्रमादात् ।

उच्यते,

## समाकर्षात् ॥ १५ ॥ ( १. ४. ५. )

आकृष्यते स्वस्थानात् च्याव्यत इत्याकर्षः, सर्वेष्वेतेषु वाक्येषु असदादिपदानां न निरात्मकत्वाद्यर्था उच्यन्ते किन्तु वैलक्षण्येन, सर्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः, यथा 'को अद्धा वेद क इह प्रावोचत्' 'सर्वे वेदा यत्पदमामनन्ति' 'यतो वाचो निवर्तन्ते' 'मनसैवानुद्रष्टव्य' इत्यादि सर्वे विरुद्धधर्मा भगवत्युच्यन्ते, एवमनेकविरुद्धशब्दवाच्यत्वं लोकप्रसिद्धतादृशशब्दार्थत्वात् समाकर्षादवगम्यते, 'तं यथा यथोपासते तथा भवती'ति फलज्ञापनार्थं "असन्नेव स भवती"ति, यथा कंसादीनां मारकः, 'तद्धैक आहु'रित्यत्र सर्वप्रपञ्चवैलक्षण्यं, प्रपञ्चरूपोपि स इति प्रथमः पक्षः, 'अव्याकृत'मसत्पक्षेण तुल्यं, 'नासदासी'दिति मनस्तदपि ब्रह्म, 'तम आसी'दित्यनभिव्यक्तम्, कर्मणोपि भगवत्त्वात् पूर्वकाण्डेपि तस्मादेव सृष्टिः, न हि तमस्तः स्वेन गूढत्वं लोके सम्भवति, अतः क्वचिद्विलक्षणात् क्वचिदविलक्षणाद् ब्रह्मणो जगत्, भगवत्त्वादेव स्वयङ्कर्तृकता च, सम्भवति चैकवाक्यत्वे अज्ञानान्निराकरणश्चायुक्तं, तस्मात् शब्दवैलक्षण्येन श्रुतिप्रतिषेधो वक्तुं न शक्य इति सिद्धम् ॥ १५ ॥ ५ ॥

॥ इति प्रथमाध्याये चतुर्थपादे पञ्चमं समाकर्षाधिकरणम् ॥

एवं शब्दविप्रतिषेधं परिहृत्यार्थविप्रतिषेधं परिहरति, कौपीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिरजातशत्रवे ब्रह्मोपदेष्टुमागतः, आदित्यादिदक्षिणेक्षिपुरुषपर्यन्तं परिच्छिन्नब्रह्मोपासनान्युक्त्वा तथा निराकृते तमेव ज्ञानार्थमुपससाद, ततः सुप्तपुरुषसमीपमुभावागत्य ब्रह्मवाद्यं चक्रतुः, तत्र "क्वैष एतद्बालाके पुरुषोशयिष्टे"त्यादौ जीवः प्रक्रान्तः, तस्मादेव सर्वोत्पत्तिरुक्ता, ब्रह्मणोप्यनुप्रवेशश्च, तत्र सन्देहः, जीव एव ब्रह्मसहितः कर्ता ब्रह्मैव वेति, तत्र जीव एव कर्ता सर्वस्य जगतः, ब्रह्मत्वादयः तस्य धर्मा राजत्ववद्यजमानत्ववद्वा, अस्मिन्

---

तथाचाव्याकृतपदेनैव प्रधानस्य कारणत्वेन ग्रहीतुं शक्यत्वात् ब्रह्म कारणं नेत्यर्थः, **वैलक्षण्येने**त्यादि तथाचासद्वैलक्षण्येनासच्छब्दस्य समाकर्षः सूत्रेण बोध्यते, एवं एतादृशस्यान्यस्यापि शब्दस्य समाकर्षो बोध्यः, तेषां पदानां लक्षणापि न कार्येत्याहु **सर्वशब्दवाच्यत्वमिति**, नच सर्वत्र ब्रह्मणः कारणत्वे वाच्ये विरुद्धशब्दोक्तिः किम्प्रयोजनेति शङ्क्य प्रयोजनस्य सत्त्वात्, तदेवाहु: **'को अद्धे'**त्यादि, तथाच विरुद्धधर्मवत्त्वप्रदर्शनमेव तत्प्रयोजनमितिभाव, तेन तेन रूपेण ब्रह्मज्ञाने तादृशफलदानं प्रयोजनं बोध्य, **एवमनेके**त्यादि **तादृशशब्दार्थत्वात्** विरुद्धशब्दवाच्यत्वस्य तादृशार्थत्वादित्यर्थः, **समाकर्षात्** विरुद्धशब्दवाच्यत्वस्य लौकिकार्थात् समाकर्षादित्यर्थ, **अनभिव्यक्तं** अनभिव्यक्तकर्मेत्यर्थ., **तस्मादेव** कर्मणो जगन्मोक्षार्थं भगवद्रूपत्वादेवेत्यर्थ., तथाच तादृशकर्मप्रकटनार्थं सृष्टिकरणमित्यर्थ, अनभिव्यक्तकर्मणो भगवद्रूपत्वे युक्तिमाहु **नहीत्यादि**, **तमस्तः** तमस, **स्वेन** स्वस्वरूपेण, **गूढत्वं** लोकप्रत्यक्षाविषयत्वमित्यर्थ. ॥ १५ ॥ ५ ॥

॥ इति प्रथमचतुर्थे पञ्चमाधिकरणम् ॥

**जगद्वाचित्वात्** ॥१६॥ अधिकरणप्रयोजनमाहु **एवमित्यादि**, शब्दविरोधकृतो यो ब्रह्मणि कारणत्वप्रतिषेधस्तं परिहृत्यार्थविरोधकृत कारणत्वप्रतिषेधमनेनाधिकरणेन परिहरतीत्यर्थ, विषयमाहु **कौषीतकीत्यादि**, गार्ग्यनामा **बालाकिर्बलाकपुत्रोजातशत्रवे** काशिराजाय **ब्रह्मोपदेष्टुं** स्वकीर्त्याद्यर्थं स्वत एवागतः आदित्यचन्द्रविद्युत्स्तनयित्नुवाय्वाकाशाग्न्यबादर्शच्छायाशब्दस्वप्नशरीरदक्षिणसव्याक्षिषु यः पुरुषस्तत्पर्यन्तं **परिच्छिन्नब्रह्मोपासनान्युक्तवान्**,

---

१ प्रवोचदित्यपि पाठ । २ तादृशार्थादिति तादृशार्थत्वादित्यपि न क्वचित् । ३ यथेतिपाठस्त्वशुद्ध । ४ तमस इत्यपि पाठ. । ५ क्वचिदविलक्षणादिति छुप्तं प्रमादात् ।

प्रकरणे ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेः सर्वत्रैव ब्रह्मत्वेनोक्तो जीव एव कर्ता, तथा सति लोकेपि जीवकर्तृत्वं सहजं भवेत्, बन्धमोक्षव्यवस्था च, एवं सत्यर्थात् प्रकृतेरेव फलिष्यतीत्येवं प्राप्ते,

उच्यते,

## जगद्वाचित्वात् ॥ १६ ॥ ( १. ४. ६. )

"एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्मे"त्युपक्रमे एतच्छब्देन जगदुच्यते पुरुषशब्देन च जीवः, तज्जडजीवात्मकं जगत् ब्रह्मकर्तृकमिति[1] पूर्वसिद्धं, तदनुरोधेनापि ब्रह्मपरत्वमेवोचितं, नतु सर्वविप्लवोश्रुतकल्पना च, अतः सुषुप्तावपि ब्रह्मण्येव लयस्तस्मादेव सर्वमिति ज्ञातव्यं, प्राणात्मशब्दवाच्यत्वं तु पूर्वमेव सिद्धं, तस्मान्न जीवाधिष्ठिता प्रकृतिः कारणम् ॥ १६ ॥

किञ्चिदाशङ्क्य परिहरति,

## जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॥ १७ ॥

नन्वत्र जीव एव प्रक्रान्तः, "क्वैष एतद्बालाके पुरुषोशयिष्टे"ति, ब्रह्म त्वद्यापि न सिद्धमेतादृशन्नैतादृशमिति, अतः शयनोत्थानलक्षणजीवधर्मदर्शनात् तस्यैव ब्रह्मत्वं जगत्कर्तृत्वञ्च, तत् स्वतोनुपपन्नं प्रकृतौ फलिष्यति, अथवा, मुख्यप्राणलिङ्गमप्यत्रास्ति "प्राण एवैकधा भवती"ति, सुषुप्तौ तस्यैव वृत्तिरुपलभ्यते, विद्यमानादेव सर्वोत्पत्तिप्रलयौ, स च प्रकृत्यंशः, अतो जडादेव प्रधानात् सृष्टावपि सर्वोत्पत्तिः, अतोस्मात् प्रकरणात् जीवद्वारा साक्षाद्वा प्रकृतेः कारणत्वमित्येवं प्राप्ते उच्यते, तद्व्याख्यातं, एतयोरुभयलिङ्गत्वमेव नास्तीति "आश्रितत्वादिह[3] तद्योगादि"त्यत्र, सर्वमेव कार्यं भगवत एव नान्यस्मादिति, अतोस्मात् ब्रह्मवाद एव सिध्यति न प्रकृतिवादः ॥ १७ ॥

स्वमतेन परिहारमुक्त्वा नियतधर्मवादेनापि परिहारमाह, स्वापप्रतिबोधौ जीवधर्मावेव चक्षुरादिलयाधारत्वं प्राणस्येति,

## अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

तस्मिन्नपि पक्षे अन्यार्थमेवं[4] तद्धर्मकीर्तनं, भेदे हि तन्निराकरणमवश्यं कर्तव्यमिति तुशब्दः,

---

तथा निराकृते राज्ञा बालाकिनिराकरणे कृते, तं राजान, उपससाद बालाकि , ब्रह्मवाद्यं ब्रह्मप्रश्नोत्तररूपं, तस्य धर्माः ब्रह्मण· प्रविष्टत्वाज्जीवस्य धर्मा , सहजमिति तथाच प्रजापतिप्रभृतीनां कर्तृत्व ब्रह्मण एव कर्तृत्वमित्याद्यपि न कल्पनीयमित्यर्थ., बन्धेत्यादि यथाकृत्यनुसारतो बन्धमोक्षव्यवस्थेत्यर्थ., प्रकृतेरेव जीवसम्बद्धप्रकृतेरेव, ननु कर्मणि प्राणात्मपदानां श्रवणात् जीवप्राणयोरेव कर्तृत्वमास्तामत आहुः प्राणात्मेत्यादि, पूर्वमेव प्रथमचरण एव ॥ १६ ॥

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥ एतादृशं शयनोत्थानादिकर्तृ, नैतादृशं न ब्रह्मपदवाच्यं, स च प्राणश्च, एतयोः जीवप्राणयोः, उभयलिङ्गत्वं सर्वोत्पत्तिप्रलयकर्तृत्वबोधनं श्रुतौ क्वापि नास्तीत्यर्थः, ननु श्रुतौ तयोस्तदुभयकरणप्रतीतेः का गतिरित्यत आहु आश्रितत्वादित्यादि, तथाच घटरूपे एकत्वपृथक्त्वप्रतीतिवत्प्रतीतेरत्रोपपादन कर्तव्यमिति 'आश्रितत्वा'दितिसूत्रे व्याख्यातमिति नानुपपत्तिः काचित् ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ स्वमतेन व्यासमतेन, परिहारं साङ्ख्यमतपरिहारं, नियतधर्मेत्यादि स्वापप्रबोधरूपनियतधर्मसम्बन्धवर्णनेनापि, तस्मिन्नित्यादि, तथाच स्वापप्रबो-

---

१ ह्रीत्यधिक पदमपि क्वचित् । २ तदनुरोधेनात्रापीत्यपि पाठः । ३ केचन तु आश्रयत्वादित्येव पठन्ति । ४ एवपदमन्तर्हितं क्वचित् ।

ब्रह्मप्रतिपत्त्यर्थमेव जीवलयोद्गमौ, मृतिवैलक्षण्येन प्राणकीर्तनमाश्रयब्रह्मबोधाय, कुत एतदवगम्यते ? तत्राह, उपक्रमोपसंहाराभ्यामेवावगम्यते, 'यो वै बालाक एतेषां पुरुषाणा'मित्युपक्रमे मुख्यं ब्रह्मैव निर्दिष्टं, तज्ज्ञानेनासुरजयः सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यश्चेति फलं, न ह्येतद्द्वयममुख्ये सम्भवति, अपि च प्रश्नव्याख्यानाभ्याम्, 'क्वैष एतद्बालाके पुरुषोऽशयिष्टे'ति प्रश्नः, तत्र जीवस्य ज्ञातत्वादधिकरणमेव न ज्ञातं, "यत्रैष एतद्बालाके पुरुषोऽशयिष्टे"तिव्याख्यानं न हि नाडीर्ज्ञापयितुं व्याख्याति, किन्तु प्रतिज्ञातं ब्रह्म, कथमेतदवगम्यते नाडीव्यतिरिक्त आत्मा ज्ञाप्यत इति? तत्राह एवमेके, एके शाखिनो वाजसनेयिनः, तत्रापि दृप्तबालाकिब्राह्मणे 'स होवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिन् शेते' इत्यत्राकाशशब्देन[1] ब्रह्म, "सता सौम्य तदा सम्पन्नो भवती"ति च "स्वं ह्यपीतो भवती"ति च, तस्मादाधारभूतब्रह्मज्ञापनार्थत्वाज्जीवमुख्यप्राणलिङ्गात् प्रकृतिवाद इत्यसङ्गतम् ॥ १८ ॥ ६ ॥

॥ इति प्रथमाध्याये चतुर्थपादे षष्ठं जगद्वाचित्वाधिकरणम् ॥

पुनर्जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य परिहरति[2], बृहदारण्यके चतुर्थे षष्ठे च याज्ञवल्क्यमैत्रेयीसंवादे 'येनाहं नामृता स्यां किमहं तेन कुर्या''मिति विरक्तिमुक्त्वा "यदेव भगवान् वेद तदेव मे ब्रूही"ति पृष्टे तामभिमुखीकृत्य "न वारे पत्युः कामाये"त्यादिना अमृतत्वाय ज्ञानमुपदिशति, षष्ठे पुनरुपसंहारे "एतावदरे खल्वमृतत्व"मिति होक्त्वा "याज्ञवल्क्यः प्रवव्राजे"ति,

तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशयः,

तत्रात्मनः प्रियत्वं स्वप्रतीत्या[3] पुत्राद्यपेक्षया बोधयन् जीवमेवोपक्रमे आत्मत्वेन वदति, तदनु तत्र दर्शनादि विधत्ते, तेन सर्वं विदितमितिफलमाह, तत्र कथमात्मज्ञानेन सर्वज्ञानमित्याकाङ्क्षायां "ब्रह्म तं परादा"दित्यादिना "इदं सर्वं यदयमात्मे"त्यन्तेन तस्यैव सर्वत्वमाह, तदनु कथमस्मिन् सङ्घाते आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह परम्परया बाह्याभ्यन्तर्भेदेन, यथा महाकोलाहले दुन्दुभेर्हन्यमानस्य शब्दो गृहीतो भवति तत्र करणं

---

धचक्षुरादिलयनिरूपणपक्षेपि, अन्यार्थमेव ब्रह्मस्वरूपपरिचायनार्थमेव तच्छेषत्वेनैव तन्निरूपणं नतु तेन साङ्ख्यमतसिद्धिरितिभाव., भेदे हीति ब्रह्मसिद्धान्तमतात् साङ्ख्यमतस्य भेदनिश्चये इत्यर्थ, तुशब्द इति, तथाच साङ्ख्यमतनिरासार्थमेव तुशब्दो नतु पूर्वस्मादस्मिन्नुत्कर्पबोधनायेतिभावः, तज्ज्ञानेन ब्रह्मज्ञानेन, भूतानां प्राणिनां, एतद्द्वयं उपक्रमोपसंहारोक्तं द्वयं, अमुख्ये जीवप्रकृतिस्वरूपेऽमुख्ये इत्यर्थः, जीवस्य ज्ञातत्वात् 'क्वैप' इत्यत्र 'स एप' इतिशब्देन जीवस्य ज्ञातत्वादित्यर्थः, प्रकटार्थमन्यत् ॥ १८ ॥ ६ ॥

॥ इति प्रथमचतुर्थे पष्ठाधिकरणम् ॥

**वाक्यान्वयात्** ॥ १९ ॥ अत्राधिकरणप्रयोजनमाहु. **पुनर्जीवे**त्यादिना, संशयबीजं तु पूर्वब्राह्मणे ब्रह्मणः प्रकृतत्वमात्रामृतरूपफलोत्कीर्तनं ब्रह्मणः प्रकरणित्वोपस्थानात् ब्रह्मकोटित्वोपस्थापक अत्र जीवस्य लिङ्गभूयस्त्वं च जीवस्य कोटित्वोपस्थापकं, **तदनु** एवं प्रतिज्ञोपपादनमुखेन तन्माहात्म्यश्रावणानन्तर, **दर्शनादि** ब्रह्मस्वरूपदर्शनादि, **तेन** ब्रह्मविज्ञानेन, **विदितं** विपयीकृतमित्यर्थः, **तं** स्वात्मानं ब्रह्मत्वेनाजानन्तं, **परादात्** अवहेलयेदित्यर्थः, अवहेलनमुपेक्षा, **तदनु** ब्रह्मणः सर्वरूपत्वनिरूपणानन्तरं, **सङ्घाते** देहघटकपदार्थसमुदाये, **परम्परये**त्यादि परम्परया बहिः अभ्यन्तरं चात्मज्ञानाय दृष्टान्तत्रयमित्यर्थः, **शब्दो गृहीतो भवति** दुन्दुभिकार्यत्वेन शब्दो गृहीतो भवतीत्यर्थः,

---

१ शब्दमित्यपि पाठ. । २ निराकरोतीति क्वचित् । ३ त्वप्रतीत्येत्यपि क्वचित् ।

दुन्दुभिदर्शनं दुन्दुभ्याघातदर्शनं वा, अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवतीति, तथा आत्मनो बोधकंकार्यानुमाने[1] तत्साक्षात्कारो भवतीति, तत्र कथं सर्वत्वमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं नामरूपात्मकं तस्मिन्नेव लीयत इति "स यथे"तिद्वयेनाह, मध्येपि स एव नातिरिक्तं विशतीति "स यथा सैन्धवघन" इत्यनेनाह, आधेयत्वेन तावन्मात्रतो[2]निराकरणायाह "न प्रेत्य संज्ञास्ती"ति, कार्यातिरिक्तरूपं कथयितुं न शक्यत इति, तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह "स होवाचे"ति, "अविनाशी"त्यनेन कार्यवैलक्षण्यं सिद्धवत्कारेणोक्त्वा विषयसम्बन्धेन संसारमाह "मात्रासंसर्गस्त्वस्य भवती"ति, विशेषतस्त्वकथने हेतुमाह "यद्वैत"मित्यादिना यावत्समाप्ति, चक्षू रूपमेव पश्यति नात्मानं, ननु रूपमप्यात्मेति चेत् "तत्रापश्यन् वै तत् द्रष्टव्यत्वेन न पश्यति," न हि द्रष्टृस्वरूपं दृश्यज्ञानेन ज्ञातं भवति, अतद्रूपत्वात्, एवं द्रष्टृदृश्यव्यवहारे अज्ञानावस्थायां विशेषतस्तज्ज्ञानमशक्यमुक्त्वा ज्ञानोत्तरं कर्मकर्तृभाव एव नास्तीत्याह "यत्र वा अन्यदिव स्यादि"त्यादिना, इदमेव हि ज्ञान"ममृतत्व"मिति,

तत्रादिमध्यावसानेषु जीवप्रकरणमित्येव प्रतिभाति, तस्य ब्रह्मता जगत्कर्तृत्वमित्येवोत्कर्षः[3], नतु तस्मादन्यत् ब्रह्मत्वेन वक्तुं युक्तमर्थविरोधाच्च, तस्माद्वेदे सृष्टिवाक्यानामेतन्न्यायेनान्यार्थत्वान्न ब्रह्म जगत्कारणमिति प्रकृतिवाद एव युक्त इत्येवं प्राप्ते,

उच्यते,

## वाक्यान्वयात् ॥ १९ ॥ ( १. ४. ७. )

इदं वाक्यं भगवत्येवान्वेति, नात्र जीवप्राधान्यगन्धोपि, सर्वत्र भगवदन्वयेनैव जीवस्यापि प्रियत्वं, तस्यैव सुखरूपत्वात्, सर्वोपनिषदनुरोधेनवास्याप्यर्थस्य वक्तुमुचितत्वात्, "तमेव विदित्वातिमृत्युमेति" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "सर्व एवात्मानो व्युच्चरन्ति" "एष ह्येवानन्दयाती"त्यादिश्रुतिसहस्रैर्निःसन्दिग्धैर्ब्रह्मणः स्वरूपं कार्यमंशाश्च प्रतिपादिता इतीदमपि वाक्यं तत्परमेवोचितं, सर्वव्यवहारस्य तन्मूलकत्वेन पूर्वमुक्तत्वात्,

---

**तत्रे**त्यादि दुन्दुभिशब्दनिष्ठकार्यत्वज्ञाने, **दुन्दुभिदर्शनं** कारणदर्शनमित्यर्थ , **आघातः** शब्दजनकदण्डसंयोगः, **अनुमानद्वारा** शब्दानुमानद्वारा, **तत्र** शब्दे, **साक्षात्कारः** शब्दमानस्य साक्षात्कारः, **तथा** अनुमानप्रकारेण, **कार्यानुमाने** जगद्रूपकार्येणेश्वरानुमाने, **तत्र** ब्रह्मणि, **अस्य** जीवरूपब्रह्मण', '**यद्वैत**'मिति 'यद्वैतन्न पश्यति पश्यन् वै तद द्रष्टव्यं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेविनाशित्वान्नतु द्वितीयमस्ति ततोन्यद्विभक्त यत् पश्येदि'ति, **द्रष्टव्यत्वेन** द्रष्टव्यत्वेन रूपेणेत्यर्थ , **अतद्रूपत्वात्** दृश्यस्य अंशत्वेन द्रष्टृरूपत्वाभावात् दृश्ये द्रष्टृतद्धर्माभावादिति फलितं, '**यत्र वे**'त्यादि 'यत्र वा अन्यदिव स्यात्तत्रान्योन्यत् पश्येदि'त्यादि, **तस्य** जीवस्य, **ब्रह्मता** ब्रह्मत्वोक्तिः, **जगत्कर्तृत्वमिति** जगत्कर्तृत्वहेनोरित्यर्थ., **अर्थविरोधात्** जीवप्रतिपादकश्रुत्यर्थविरोधादित्यर्थः, **अन्यार्थत्वात्** प्रकृतिप्रतिपादकत्वात्, **भगवत्येव** कारणत्वेनाभिमते भगवत्येवेत्यर्थ., **भगवदन्वयेनैव** भगवत्तादात्म्येनैव, **ननु** "मात्रासंसर्गस्त्वस्य भवती"ति विषयसंसर्गरूपेण लिङ्गेनात्र जीव एव वक्तव्योन्यथा श्रुतिविरोधापत्तिरत आहुः **सर्वे**त्यादि. **पूर्वमिति** जीवमुख्यप्राणलिङ्गसूत्रे, तथाच जीवस्य ब्रह्माश्रितत्वात् जीवधर्मा ब्रह्मणि उच्यन्ते एव विषयस्पर्शोप्युपपद्यते, नत्वेतावता जीववाक्यत्वं वक्तुं शक्यं, विज्ञातृत्वं तु ब्रह्मधर्म एव, 'नान्योतोस्ति द्रष्टे'तिश्रुतेः, तदंश-

---

१ बोधककार्यानुमन्धान इत्यपि पाठ । २ तावन्मात्रनिराकरणायेत्यपि पाठ । ३ इत्युत्कर्ष इत्यपि पाठः ।

विषयस्पर्शो विज्ञातृत्वमपि तस्यैव, एवं सति सर्वमेव सङ्गतं भवेत्, अतो वाक्यान्वयान्न जीवपरत्वं येन प्रकृतिवादः स्यादिति ॥ १९ ॥

नियतधर्मवादिनामपि मतेन प्रकृते सिद्धान्तं वक्तुं पक्षान्तराण्याह, तत्र ब्रह्मवादैकदेशिवादाः सन्ति, तत्र जीवो नाम स्वस्य भोगनिष्पत्त्यर्थं स्वांशो भगवता कृतो विस्फुलिङ्गवदित्याश्मरथ्यो मन्यते, अनादिसिद्ध एव जीवश्चैतन्यमात्रं शरीरादिसङ्घाते प्रविष्ट इति चिति तन्मात्रेण प्रवेशे च मोक्ष इति च औडुलोमिराचार्यः, काशकृत्स्नस्तु आसक्त्या विषयभोक्तृरूपं भगवत एव जीव इति, तेपि स्वमतानुसारेणात्र परिहरन्ति,

तत्र पुत्रादिप्रियसहवचनात् जीवप्रकरणमेवैतदित्याशङ्क्य जीवोपक्रमस्यान्यत् प्रयोजनमित्याह,

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

प्रतिज्ञासिद्धेरिति षष्ठी, तस्या लिङ्गं, अंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति, एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा, तस्यैवाग्रे व्युत्पाद्यमानत्वात्, तस्या एतत् साधकं, यथा जीवो भगवानेवं जड इति आश्मरथ्यो मन्यते, श्रोतव्यादिविषयस्तु भगवानेव, तस्मान्नियतधर्मजीववादेपि न जीवोपक्रमो दोषः ॥ २० ॥

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

लिङ्गमित्यनुवर्तते, यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तत् संसारभावादुत्क्रमिष्यतो जीवस्य लिङ्गं, मुक्तौ जीवो भगवानेव भविष्यतीति ज्ञापकं, अन्यथा सैव कथममृता भवेदिति, इतिशब्दो हेतौ, स्त्रिया विश्वासार्थं गौणप्रियवैराग्यार्थश्च जीवोपक्रमः कर्तव्य एवेति औडुलोमिराचार्यो मन्यते, तस्मात् भिन्नजीवपक्षेपि नात्र दूषणम् ॥ २१ ॥

---

त्वाज्जीवेपि स धर्मो भासता न तावता जीववाक्यत्वमायाति, एवं सति सर्वव्यवहारस्य ब्रह्ममूलकत्वे सिद्धे सति, वाक्यान्वयात् ब्रह्मण्येव वाक्यान्वयात् ॥ १९ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ सूत्राण्यवतारयन्ति नियतेत्यादि अत्रोक्त, प्रियत्वं जीवधर्म एवेतिवादिनां मतेन मैत्रेयीब्राह्मणे प्रकृतिवादनिरासरूप सिद्धान्तं वक्तुं सम्मत्यर्थ पक्षान्तराण्याहेत्यर्थः, स्वस्य भगवतः, चिति तन्मात्रेण सङ्घातादिसम्बन्धराहित्येन, परिहरन्ति साङ्ख्यमतं परिहरन्ति, पुत्रादीत्यादि पुत्रादिरूपाः ये प्रिया. लौकिकास्तत्सहवचनादात्मनोपि लौकिकमेव प्रियत्व प्रतीयत इति जीव एवात्मपदेन परामृश्यतेतो जीवप्रकरणमेवेदमित्याशङ्क्येत्यर्थ., षष्ठी प्रतिज्ञाया सिद्धेरितिषष्ठीत्यर्थः, तस्याः प्रतिज्ञासिद्धेः, तदभेदेन ब्रह्माभेदेन, एकविज्ञानेनेत्यादि 'मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते इदं सर्व विदित'मितिवाक्योक्त तत्, प्रतिज्ञासिद्धेः कथं लिङ्गमित्यत आहु तस्यैवेत्यादि, तस्यैव सर्वत्वस्यैव, तस्या एतत् साधकमिति उपक्रमे ब्रह्मणो जीवात्मत्व कथनं एकविज्ञानेन सर्वविज्ञानसंसाधकमित्यर्थ., तथाच प्रतिज्ञैवैतन्मते ब्रह्मप्रकरणत्वनियामिकेति ज्ञेयम् ॥ २० ॥

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ १२ ॥ लिङ्गमित्यनुवर्तते, एव कथमस्य मुक्तिप्राप्तौ लिङ्गत्वे किं गमकमित्यत आहुः अन्यथेत्यादि, चिद्रूपे ब्रह्मणि प्रवेशो हि तन्मते मुक्ति , ब्रह्म तु चिद्रूपं व्यापकमिति इदानीमपि जीवस्तत्प्रविष्ट एवास्ति तथापि यथा कुसूलस्थ धान्य ततो बहिः क्षिप्तमेव गृहस्थं भवति तथा सङ्घातान्तःस्थो जीवोपि ततो बहिर्भूत एव ब्रह्मप्रविष्टो भवति मुक्त., एतदर्थबोधनार्थमेव जीवोपक्रम इतिभाव', जीवस्वरूपाज्ञाने सैव मुक्ता न स्यात्, तथाच 'येनाह नामृता स्या'मित्यादिक तद्वाक्यमेव मुक्तौ जीवोपक्रमस्य लिङ्गत्वे गमकमित्यर्थः, गौणप्रियवैराग्यार्थं एतस्य गौणप्रियत्वस्य गौणवैराग्यस्य च प्रदर्शनार्थमित्यर्थः, दूषणं साङ्ख्यमतप्रसक्तिरूपम् ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

**लिङ्गमित्येव**, भगवत एवावस्था जीव इति, अतः संसारदशायामपि जीवो ब्रह्मेति नात्रोत्क्रमणमुपचारो वा, अन्यथा कथ "मात्मनस्तु कामाय सर्वं प्रियं भवती"ति? न ह्यन्यस्य सर्वं प्रियं भवति, मोक्षस्तु ज्ञानमेव, उत्तरत्र कर्तव्याभावात्, अवस्थया व्यवसायात् सिद्धान्ताद्विशेषः, इतिशब्देन "तावदरे खल्वमृतत्व"मित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो मन्यते, तस्माज्जीवोपक्रमो भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गं, तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिरिति सिद्धम् ॥ २२ ॥ ७ ॥

॥ इति प्रथमाध्याये चतुर्थपादे सप्तमं वाक्यान्वयाधिकरणम् ॥

एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मण एव कारणत्वे सिद्धेऽप्यर्धजरतीयतयोभयस्थापनपक्षं परिहर्तुमधिकरणमारभते, ननु ब्रह्मकारणतां न निराकुर्मः, श्रुतिसिद्धत्वात्, किन्तु समवायिकारणं प्रकृतिरेव, कार्यकारणयोरवैलक्षण्यात्, समवायिकारणानुरोधि हि कार्यं, अन्यत् सर्वं भगवानस्तु, अपेक्ष्यते च समवायिनिमित्तयोर्भेदः, कर्मण्यपि श्रुतिस्मृतिसमवायो धर्मे, एवं ब्रह्मवादेपि स्मृत्युक्ता प्रकृतिः समवायिकारणं ब्रह्म निमित्तकारणमित्येवं प्राप्ते, उच्यते,

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ (१. ४. ८.)

**प्रकृतिश्च** निमित्तकारणं समवायिकारणञ्च ब्रह्मैव प्रकृतिपदप्रयोगात् स्मृतिसिद्धतृतीयधर्मोपदेशः, चकारात् "यत्रे"त्यादि[२]सर्वसङ्ग्रहः, कुत एतत्? **प्रतिज्ञादृष्टान्तानुपरोधात्**, **प्रतिज्ञा** "अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवती"ति, **दृष्टान्तः** "यथैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या"दित्यादि, **प्रतिज्ञादृष्टा-**

---

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ जीवस्य ब्रह्मावस्थाविशेषत्वबोधनार्थं जीवोपक्रम इत्यत्र किं गमकं इत्यपेक्षायामाहुः **अन्यथे**त्यादि, यदि जीवस्य ब्रह्मावस्थाविशेषत्वमत्र बोधनीयं न स्यात्तदा'त्मनस्तु कामाय सर्वं प्रियं भवती'ति सर्वभोक्तृत्वमात्मनो न वदेत्, ब्रह्मातिरिक्तस्य सर्वभोक्तृत्वाभावेन सर्वस्मिन् प्रियत्वासम्भवात्, अतः सर्वभोक्तर्यात्मनि वक्तव्ये प्रतिनियततत्तद्विषयभोक्तारं तदवस्थाविशेषं उपक्रमे वदति, तथा च सर्वप्रियत्ववाक्यमेव तद्गमकमित्यर्थ., **नात्रे**त्यादि नात्राब्रह्मत्वसाधकेत्यादीत्यर्थ., **उत्क्रमण**मित्यादि, उत्क्रमणदशायां जीवस्य ब्रह्मत्वोक्तौ संसारदशायामब्रह्मत्वमायाति ब्रह्मभेदेनोपचारेण प्रकरणे जीवोपक्रमेपि जीवस्याब्रह्मत्वमायाति तदेतन्मते नेत्यर्थः फलित., **अवस्थये**त्यादि, तथाचैतन्मते जीवस्य ब्रह्मावस्थात्वव्यवसाय. सिद्धान्ते तु अंशत्वव्यवसाय इति विशेष इत्यर्थः ॥ २२ ॥ ७ ॥

॥ इति प्रथमचतुर्थे सप्तमाधिकरणम् ॥

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥२३॥ **समवाय** इति तथाच श्रौतस्मार्तपदार्थानां कर्मणि समवायिकारणत्वमसदादिकृत्यादीनां निमित्तकारणत्वमर्थः, सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति **प्रकृतिश्चे**त्यादिना, ईक्षत्यादिना ब्रह्मणः कर्तृत्वसिद्धिरसन्दिग्धैव, अत· पर लोकन्यायेन कर्तुरुपादानाद्युपकरणसापेक्षत्वात् पूर्वपक्षिणा प्रकृतिरुपस्थाप्यते, सा निमित्तकारणभूता समवायिकारणभूता च प्रकृतिर्ब्रह्मैव नतु ततोतिरिक्ता, प्रकृतिशब्दश्च स्वरूपे रूढ. यथामृत्प्रकृतिर्घटः कार्पासप्रकृति. पट इत्यादिप्रयोगदर्शनात् समवायिकारणवाचकः, प्रकृष्टा कृतिर्येनेति व्युत्पत्त्या च निमित्तकारणत्वमपि, **तृतीयधर्मोपदेशः** नैयायिकस्मृतिसिद्धं यत् समवायिनिमित्तभिन्नं तृतीयमसमवायिकारणमित्यस्योपदेश इत्यर्थः, **यत्रेत्या**दीति 'यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः' इत्याधारादीनां **सर्वेषां सङ्ग्रहः**,

---

१ पक्षस्येति नास्ति क्वचन । २ तृतीयसर्वधर्मोपदेश इति प्रकाशकाराणा पाठः ।

न्तयोरनुपरोधः अबाधनं तस्मात्, समवायिकारणज्ञानेन हि कार्यज्ञानं, उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थं, उपक्रमोपसंहारवत्, प्रतिज्ञामात्रत्वे अदृष्टद्वारापि भवेत्, दृष्टान्तमात्रत्वे त्वनुमानविधया स्यात्, तथा सति सर्वसमानधर्मवत् ब्रह्म स्यात् न समवायिकारणं, उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः[1], कार्यकारणयोर्भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणं, तथा सति यत्र क्वचिद्भावान् ज्ञातः सर्वत्र ज्ञातो भवति सर्वश्च ज्ञातं भवतीति, सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च "वाचारम्भणं विकारो नामधेय"मिति, अलीकत्वनिराकरणाय च "मृत्तिकेत्येव सत्य"मिति, ब्रह्मत्वेनैव जगतः सत्यत्वं नान्यथेति, सामान्यलक्षणप्रत्यासत्तिनिराकरणश्च स्पष्टमेवाग्रे "त्रीणि रूपाणी"त्यत्र करिष्यति,

---

**अबाधनं** प्रतिज्ञादृष्टान्तयोर्यथा बाधनं न स्यात्तथेत्यर्थः, ननु प्रतिज्ञादृष्टान्तयोरेकोपादानेनापि प्रयोजनसिद्धेरुभयोपादानवैयर्थ्यमित्यत आहुः **उभयोरिति**, **उपचारव्यावृत्त्यर्थमिति** उभयोरन्यतरस्यापि गौणत्वव्यावृत्त्यर्थमित्यर्थः, अत्र दृष्टान्तः **उपक्रमेत्यादि**, तथा च तयोर्यथा नैकतरवैयर्थ्यं तथा प्रकृतेपीत्यर्थः, तदेव व्युत्पादयन्ति **प्रतिज्ञामात्रत्वे** इत्यादि हेतोरिति शेषः, एतयोरुभयोरनुपादाने इति फलितं, तथाचादृष्टालौकिकप्रत्यक्षजनिका या योगजधर्मरूपा प्रत्यासत्तिस्तयापि एकविज्ञानेन सर्वविज्ञानं स्यात् यथा 'विश्वं पश्यति दूरतः' 'अनागतमतीतं च वर्तमानमतीन्द्रियं विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिन' इतिवाक्योक्तं, एवं तत्तद्व्यक्तित्वेन सकलपदार्थज्ञानेपि न ब्रह्मणि समवायिकारणत्वविशिष्टज्ञानं, योगिनां तत्सत्त्वे प्रमाणाभावात्, दृष्टान्तोक्तौ तु तत्र लौकिकविशिष्टज्ञानस्यैव दर्शनात् दार्ष्टान्तिके तत्सम्भवादिष्टसिद्धिः, यदि च ब्रह्मणः समवायिकारणतां प्रति दृष्टान्तमात्रं हेतुरुच्येत तदाहुः **दृष्टान्तेत्यादि**, **अनुमानेति**, तथाहि ब्रह्म जगत्समवायिकारणं ब्रह्मत्वेन जगज्ज्ञाने कारणीभूतं यज्ज्ञानं तद्विशेष्यत्वात् मृद्वत् यथा मृज्ज्ञानेन सर्वं मृत्समवायिकार्यं मृत्त्वेन ज्ञायते एवमनुमानविधया समवायिकारणत्वनिर्णयः स्यादित्यर्थः, **तथा सति** अनुमानेन समवायिकारणत्वज्ञाने सति, **सर्वसमानेत्यादि** अनुमितिविषयीभूतसकलपदार्था इव ब्रह्मापि परोक्षज्ञानविषयो भवेन्नतु लौकिकप्रत्यक्षेण निर्णीतसमवायिकारणताकमित्यर्थः, ननु **न समवायिकारणमे**तस्य न लौकिकप्रत्यक्षेण निर्णीतकारणताकमित्यर्थकरणे को हेतुरितिचेदग्रे **दृष्टमेवेति**वाक्यमेवावसेयं, तादृशार्थकरणे नियामकं दृष्टमेव द्वारं मनसा सर्वविज्ञानब्रह्मत्वविशिष्टतया सकलपदार्थानां ज्ञानरूपे विज्ञाने ब्रह्मत्वविशिष्टलौकिकप्रत्यक्षरूपं विज्ञानमेव दृष्टं ज्ञानलक्षणाद्यजन्यं द्वार विशेषणज्ञानतया कारणमित्यर्थः, दृष्टान्ते पिण्डादिग्रहणस्य प्रयोजनं विचारयन्ति **कार्यकारणयोरित्यादिना**, सर्वथा अभेदे सर्वव्यवहारसङ्करापत्तिः सर्वथा भेदे चैकविज्ञानेन सर्वविज्ञानानुपपत्तिरतो भेदाभेदावेव स्वीकार्यौ इतिमतं तस्य निराकरणायेत्यर्थः, **पिण्डेत्यादि** तथाचावस्थाविशेषविशिष्टं पिण्डादाविर्भूतं पिण्डस्वरूपमेव घटशरावकुसूलादि एवं चिन्तामणेः सकाशादुत्पन्नपदार्था अपि ज्ञेयाः एवं निकृत्यमानाः नखादिखण्डा अपीति बोद्धव्यं, **सामान्यलक्षणेत्यादि**, तथा चानेकपदार्थवृत्तिधर्मस्तज्ज्ञानं वा सामान्यलक्षणा, सा च न सम्भवति, ब्रह्मातिरिक्तपदार्थस्यैवाभावात्, ननु प्रतीयमाना नाना पदार्थाः कथमपलप्यन्त इत्यत आहुः **वाचारम्भणमित्यादि**, तथा च विकारः ब्रह्माकारातिरिक्ताकारतया प्रतीयमानः घटादौ पृथुबुध्नोदरादिरेवं मनुष्यादिषु च प्रतीयमानः स सर्वोपि ब्रह्मणोवस्थाविशेषो ब्रह्मात्मक एव, नतु ततोतिरिक्तः, परं वाचारम्भणं भवति, तथातथा ज्ञातः सन् तादृशतादृशशब्दप्रयोगे कारणं भवति, अतो नामधेयं शब्दप्रयोगे निमित्तमात्रं, नतु तत्र विकारतास्तीतिभावः, यथा सुप्तोत्थितेपि पुरुषे सासावस्था तादृशतादृशव्यावहारिकशब्दप्रयोग एव निमित्तं न तु स्वयं पुरुषाद्भिद्यते पुरुषं वा भेदयन्ति तद्वदित्यर्थः, तथा सति सामान्यलक्षणापार्थैवेत्यर्थः, **ब्रह्मत्वेनैवेत्यादि**, तथा च जगतःब्रह्मत्वेनैव ब्रह्मरूपेत्वेनैव सत्यता, न त्वन्यथा नतु ब्रह्मानात्मकतया मिथ्यात्वं, अन्यथा एतच्छ्रुतिविरोधः स्यादितिभावः, ननु ब्रह्मत्वमेव सामान्यलक्षणास्तु इत्यत आहु **सामान्येत्यादि**, **स्पष्टमेव** अग्न्यादिविद्युदन्तेषु तेज इत्येव सत्यमित्यकथनात् त्रिवृत्करणस्य च बोधनात् त्रीणि रूपाणि इत्येव सत्यमिति सावधारणं कथनात् सर्वं तद्रूपमेकमेव ब्रह्मेति व्यक्तिभेदाभावात् ब्रह्मत्वमपि न सामान्यलक्षणेत्यर्थः, ननु सर्वपदार्थानां तदवस्थानां च सर्वेषां ब्रह्मस्वरूपानतिरे-

---

१ समवायत्वसिद्धिरित्यपि पाठः ।

प्रभवः प्रलयस्तथे"ति च, न ह्येतस्मिन्निमित्तत्वे सम्भवति, सुवर्णादिषु तथोपलब्धेः, लोकवेदन्यायेन साक्षात्त्वं, तस्मात् भगवानेव समवायिकारणम् ॥ २५ ॥

ननु "स एव सर्वं सृजति स एवावति हन्ति चे"तिकर्तृत्वप्रतीतेराकाशादिवाक्यमप्यौपचारिकं भविष्यतीति तन्निराकरणायाह,

## आत्मकृतेः परिणामात् ॥ २६ ॥

आत्मकृतेः "तदात्मानꣳ स्वयमकुरुते"ति स्वस्यैव कर्मकर्तृभावात् सुकृतत्व[१]वचनाच्चालौकिकत्वं, तथापि ज्ञानार्थमुपपत्तिमाह परिणामात्, परिणमते कार्याकारेणेति, अविकृतमेव परिणमते सुवर्णं सर्वाणि च तैजसानि, वृद्धेश्चालौकिकत्वात् ब्रह्मकारणत्व एव घटते, पूर्वावस्थान्यथाभावस्तु कार्यश्रुत्यनुरोधादङ्गीकर्तव्यः, वक्ष्यति च "श्रुतेस्तु शब्दमूलत्वादि"ति, अन्यानि च युक्तिदूषणानि परिहरिष्यति, तस्मात् ब्रह्मपरिणामलक्षणं कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एवेति सिद्धम् ॥ २६ ॥

चेतनेषु किञ्चिदाशङ्क्य परिहरति, नन्वस्तु जडानां ब्रह्मैककारणत्वं चेतनेषु तु योनिबीजयोः समवायित्वदर्शनात् पुरुषत्वात् भगवतो योनिरूपा प्रकृतिः समवायिकारणं भवतु शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति,

## योनिश्च हि[२] गीयते ॥ २७ ॥

योनिश्च ब्रह्मैव, शाक्त[३]वादनिराकरणाय चकारः, तत्र युक्तिश्रुती प्रमाणयति हि गीयत इति, युक्तिस्तावत् "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय"मिति पूर्वमेकमेव प्रतिज्ञातं "आकाशादेव" "आनन्दाद्ध्येवे"त्याद्येवकारैश्चानन्यकारणत्वं जगतोवगम्यते, इतरापेक्षायां द्वैतापत्तेः, गीयते च "कर्तारमीशं पुरुषं ब्रह्मयोनिं", "यद्भूतयोनिं परिपश्यन्ति धीरा" इति च, "मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यह"मिति "तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते"ति च, अक्षरपुरुषोत्तमभावेन तथात्वं, तस्मात् योनिरपि भगवान्, पुरुषोपि, सर्वं वीर्यं जीवश्च भगवानिति, "इदं सर्वं यदयमात्मे"ति सिद्धं, तस्मात् केनाप्यंशेन प्रकृतिप्रवेशो नास्तीत्यशब्दत्वं साङ्ख्यमतस्य सिद्धम् ॥ २७ ॥ ८ ॥

॥ इति प्रथमाध्याये चतुर्थपादेऽष्टमं प्रकृतिश्चेत्यधिकरणम् ॥

---

साक्षाच्चोभयाम्नानात् ॥ २५ ॥ श्रुतिस्मृत्युक्तं ब्रह्मण. समवायिकारणत्वमाहुः लिङ्गमित्यादिना ॥ २५ ॥

आत्मकृतेः परिणामात् ॥ २६ ॥ औपचारिकमिति तथा चाकाशादेर्लाक्षणिककर्तृत्वमादाय 'समुत्पद्यन्त' इत्यस्य पर्यवसान भविष्यति नतु उपादानत्वे इत्यर्थः, स्वस्यैवेत्यादि तथा चाकाशादिकमपि स्वयमेवेति न तेषां समवायिकारणत्वे विरोध इत्यर्थः, वृद्धेः 'एकोह बहु स्या' मितिबहुभवनरूपवृद्धे, अन्यथाभाव तत्तत्कार्याय तत्तदवस्थारूपेणाविर्भवनं, वक्ष्यति व्यास एव वक्ष्यतीत्यर्थ., शब्दमूलत्वात् शब्दशक्त्यनुसारेण शाब्दबोधजनकत्वादित्यर्थः, युक्तिदूषणानि युक्तिरूपाणि दूषणानीत्यर्थः, परिहरिष्यति द्वितीयाध्याये व्यासः परिहरिष्यतीत्यर्थः ॥२६॥

योनिश्च गीयने ॥ २७ ॥ कारणत्वं कारणकत्वं, महद्ब्रह्म अक्षरं ब्रह्मेत्यर्थः ॥ २७ ॥ ८ ॥

॥ इति प्रथमचतुर्थेऽष्टमाधिकरणम् ॥

---

१ अविकृतत्ववचनादित्यपि पाठ । २ हिरहितोपि पाठः प्रामादिक एव । ३ शक्तिवादेत्यादिरपि पाठः ।

ब्रह्मवादव्यतिरिक्ताः सर्वे वादाः अवैदिकाः वेदविरुद्धाश्चेत्याह,

**एतेन सर्वे व्याख्याताः व्याख्याताः ॥ २८ ॥ ( १. ४. ९. )**

एतेन ब्रह्मवादस्थापनपूर्वक[1]साङ्ख्यमतनिराकरणेन सर्वे पातञ्जलादिवादा व्याख्याताः अवैदिका अनुपयुक्ताश्च, वैदिकानां हि वेदः प्रमाणं, तस्मिन्नव्याकुले भ्रान्तिप्रतिपन्ना एव सर्वे वादा इति, एतत् सौकर्यार्थं विस्तरेणाग्रे वक्ष्यते, आवृत्तिरध्यायसमाप्तिबोधिका ॥ २८ ॥ ९ ॥

॥ इति प्रथमाध्याये चतुर्थपादे नवमं[2] सर्वव्याख्यानाधिकरणम् ॥

**इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥**

---

एतेन सर्वे व्याख्याताः व्याख्याताः ॥ २८ ॥ ९ ॥

॥ इति प्रथमचतुर्थे नवमाधिकरणम् ॥

**॥ इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते श्रीमद्ब्रह्मसूत्राणु-भाष्यपदप्रदीपे प्रथमाध्यायस्य चतुर्थः पादः ॥**




---

१ पूर्वकमितिपर्यन्तं भिन्नं पदं क्वचित् । २ अधिकरणमालायां न संज्ञितमधिकरणसङ्ग्रहे तु नैव पृथगभिहितमिदमधिकरणम् ।

# ॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ ( २.१.१. )

प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः, अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते,

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ॥ १ ॥

श्रुतिविप्रतिषेधस्तु अवश्यं प्रतिविधेयः, प्रथमचतुर्थपादे सर्वथानुपयोगे प्रतिपादिते स्मृतिप्रतिपादिते स्मृतित्ववचनेन प्रामाण्ये च यावत्तदप्रामाण्यं न प्रतिपाद्यते तावत्तद्विरोधः परिहर्तुमशक्य इति तन्निराकरणार्थं प्रथमतः सूत्रत्रयमाह, तुल्यबलानां परस्परविरोधे न प्रकारान्तरस्थितिरिति, ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः, ततो द्वितीये पादे वेद[1]बाधकत्वाभावेपि तैरपि स्वातन्त्र्येण कश्चन पुरुषार्थः सेत्स्यतीत्याशङ्क्य बाह्याबाह्यमतान्येकीकृत्य निराकरोति, भ्रान्तेस्तुल्यत्वात्, ततः सम्यग्वेदार्थविचारायैव वैदिकपदार्थानां क्रमस्वरूपविचारः पादद्वयेन, अतः सम्पूर्णेनाप्यध्यायेनाविरोधः प्रतिपाद्यते ॥

कपिलादिमहर्षिकृतस्मृतेर्न मन्वादिवदन्यत्रोपयोगः, मोक्षैकोपयोगित्वात्, तत्राप्यनवकाशे वैयर्थ्यापत्तेरितिचेन्न, कपिलव्यतिरिक्तशुद्धब्रह्मकारणवाचकस्मृत्यनवकाशदोषप्रसङ्गः, "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे"ति ॥ १ ॥

## इतरेषाञ्चानुपलब्धेः ॥ २ ॥

प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलब्धेः ॥ २ ॥ १ ॥

इति द्वितीयाध्याये प्रथमपादे प्रथमं स्मृत्यधिकरणम् ॥

---

स्मृत्यनवकाशदोषप्रसङ्ग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥ श्रुतिस्मृत्यविरोधः श्रुत्योः श्रुतिस्मृत्योश्चेत्यर्थः, सर्वसमयानां श्रुतिविरुद्धार्थप्रतिपादकसर्वसङ्केतानां, शङ्क्यतां सन्दिग्धतां, श्रुतिविप्रतिषेधस्त्विति विरुद्धार्थप्रतिपादकस्मृतिलौकिकयुक्तिभिः श्रुत्यप्रामाण्यं दूरीकर्तव्यमित्यर्थ., अनुपयोगे साङ्ख्यादिस्मृत्यनुपयोगे, स्मृतित्ववचनेन 'स्मृतेश्चे'त्यादिवचनेषु स्मृतिप्रामाण्यनिरूपणेन, तदप्रामाण्यं श्रुतिविरुद्धार्थप्रतिपादकानां सर्वेषामप्रामाण्यं, तन्निराकरणार्थं विरुद्धार्थानां प्रामाण्यनिराकरणार्थं, श्रुतिविरुद्धार्थप्रतिपादकस्मृतीनां युक्तीनां च प्रामाण्यप्रकारमाहुः तुल्येत्यादि, न प्रकारान्तरस्थितिः उभयोरप्रामाण्यनिर्णयादप्रामाण्यमेवेत्यर्थः, ततः श्रुतिविरुद्धवाक्यानां सूत्रत्रयेण निराकरणानन्तर, युक्त्या करणीभूतया, परिहारः सूत्रत्रयातिरिक्तसूत्रकृतः, एवं प्रथमपादार्थ उक्तः, ततः प्रथमचरणेनोक्तविरोधपरिहारानन्तरं, वेदबाधकत्वाभावेपि बाह्याबाह्यमतप्रतिपन्नार्थे वेदबाधकत्वाभावेपीत्यर्थः, ततः द्वितीयचरणनिरूपणानन्तरं, पादद्वयेन तृतीयचतुर्थपादद्वयेन ॥ १ ॥

इतरेषाञ्चानुपलब्धेः ॥ २ ॥ लोके गीतापुराणादिस्मृतौ प्रश्नोपनिषच्छ्रुतौ चोपलभ्यमानत्वेपि कपिलोक्त-

---

१. वेदबोधकत्वेत्यादिपाठः प्रकाशकृताम् ।

## एतेन योगः प्रत्युक्तः ॥ ३ ॥ (२. १. २.)

साङ्ख्यस्मृतिनिराकरणेन योगस्मृतिरपि[1] निराकृता द्रष्टव्या।

योगस्य वैदिकत्वशङ्कया भेदेन निराकरणम् ॥ ३ ॥ २ ॥

इति द्वितीयाध्याये प्रथमपादे द्वितीयं योगप्रत्युक्त्यधिकरणम् ॥

## न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ३ ॥ (२. १. ३.)

बाधकोयं तर्कः, अस्य जगतो विलक्षणत्वात् अचेतनत्वाच्चेतनं न कारणं, विलक्षणत्वञ्च शब्दात् "विज्ञातञ्चाविज्ञातञ्चे"[2]ति, प्रत्यक्षस्य भ्रान्तित्वं मन्यमानस्येदं वचनम् ॥ ४ ॥

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

"मृदब्रवीत्" "आपोब्रुवन्" "तत्तेज ऐक्षत"[3] "ते ह वाचमूचुस्त्वं न उद्गाये"त्येवमादिश्रुतिभिर्भूतेन्द्रियाणां चेतनत्वं प्रतिपाद्यत इत्याशङ्क्य तुशब्देन निराकरोति, तत्तदभिमानिन्य एव देवतास्तथा वदन्ति, कुतः ? वेद एव "विज्ञातञ्चाविज्ञातञ्चे"तिचेतनाचेतनविशेषोक्तेः[4], अनुगतत्वाच्च, "अग्निर्वाग् भूत्वा मुखं प्राविश"दित्येवमादिविशेषानुगतिभ्यामभिमानित्वमित्यर्थः, देवतापदञ्च श्रुत्यन्तरे ॥ ५ ॥

---

प्रकारेणानुपलब्धेरित्यर्थः, कपिलीयप्रवचनसूत्रेषु तावत् पृथिव्यादिपञ्चमहाभूतरूपस्थूलात् पञ्चतन्मात्रस्य बाह्याभ्यन्तराभ्यां तैरहङ्कारस्य तेनान्तःकरणस्य महत्तत्त्वरूपस्य ततः प्रकृतेरिति सूत्रयता पञ्चभूतव्यतिरिक्तानां भूतकारणमात्राणां मात्राकारणाहङ्कारस्य अहङ्कारकारणमहत्तत्त्वस्य महत्तत्त्वकारणप्रकृतेरित्येवरीत्या स्थूलपञ्चभूतरूपकार्येण मात्राणां तत्कारणानां एवं मात्राभिः सकारणानुमानमित्येवंप्रयोग प्रत्युक्तः, पञ्चभूतानां मध्ये आकाशस्य नित्यत्वात् इतरभूतकारणतापि परमाणुगतैवायास्यति नतु मात्रासु इतिहेतोरित्यर्थः, इत्थं च लोकवेदयोः साङ्ख्यमूलासङ्गतिर्व्याख्याता ॥ २ ॥ १ ॥

इति द्वितीयप्रथमे प्रथमाधिकरणम् ॥ १ ॥

**एतेन योगः प्रत्युक्तः ॥ ३ ॥** योगस्मृतिः पातञ्जलदर्शनं हिरण्यगर्भस्मृतिश्च सापि प्रकृतिस्वातन्त्र्यांशे सोपाधिकेश्वरस्वरूपांशे च निराकृतेत्यर्थः, अत्र संशयः योगस्मृत्या उपनिषच्छ्रुतीनां सङ्कोचो भवति नवेत्याकारकः, श्वेताश्वतरोपनिषदि 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदिन्द्रियाणि मनसा निवेश्ये'ति'पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीर'मित्यादिमन्त्रार्थवादात् वैदिकत्वात् सङ्कोच कार्य इति पूर्वः पक्षः, सिद्धान्तस्तु अब्रह्मात्मके प्रधाने उपादानताङ्गीकारात् सोपाधिकब्रह्मप्रतिपादनाच्च न तत्स्मृत्या श्रुतिसङ्कोच इतिभावः ॥ ३ ॥ २ ॥

॥ इति द्वितीयप्रथमे द्वितीयाधिकरणम् ॥

**न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥** मास्तु साङ्ख्यस्मृत्या श्रुतिसमन्वयबाधस्तथापि तदीयेन तर्केण बाधो भविष्यतीत्याह सूत्रद्वयेन नेत्यादि, बाधक इत्यादि, विलक्षणत्वात् ब्रह्मगुणैर्विलक्षणत्वात्, चेतनमप्रधानं, न कारणं न समवायिकारणमितिसाध्योपदेशः, कारणमित्यंशित्वस्याप्युपलक्षणं दुःखजडत्वाज्ञत्वादीनां जीवजडानां विलक्षणत्वात्, वैलक्षण्यप्रत्यक्षस्य भ्रान्तित्वसम्भवाद्वैलक्षण्ये साधकान्तरं शब्दप्रमाणमाह शब्दादिति, विज्ञातं जगत् अविज्ञातं ब्रह्मेतिशाब्दं वैलक्षण्यं, इदं वचनं शब्दप्रमाणप्रदर्शनम् ॥ ४ ॥

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥** निराकरोति वादी निराकरोति, वेद इत्यादि विशेषोक्तेः विभागोक्तेः, अनुगतत्वात् अनुप्रविष्टत्वादित्यर्थः, तथा च यदि जगत्यविशेषत्वं ब्रह्मणोभिप्रेयात् विभेदमनुप्रवेशं च वेदो न ब्रूयादित्यर्थः, देवतापदं अभिमानिनां देवतात्वबोधकं पदमित्यर्थः ॥ ५ ॥

---

१. क्वचनापिरहितः पाठः । २. विज्ञानञ्चाविज्ञानञ्चेत्यपि पाठः । ३. तत्तेज ऐक्षदित्यपि पाठः । ४. चेतनविशेषोक्तेरित्येव पाठः क्वत्यः प्रामादिकः ।

परिहरति,

## दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति, दृश्यते हि कार्यकारणयोर्वैरूप्यं[1] केशगोमयवृश्चिकादौ, चेतनादचेतनोत्पत्तिनिषेधे तदंशस्यैव निषेधः, तुल्यांशसम्पत्तिश्चेत् प्रकृतेपि सदंशः ॥ ६ ॥ ३ ॥

इति द्वितीयाध्याये प्रथमपादे तृतीयं विलक्षणत्वाधिकरणम् ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ ( २. १. ४. )

श्रुतौ कारणत्वेनासदुक्तमिति चेन्न प्रतिषेधार्थमेव वचनं, "कथमसतः सज्जायेते"ति, कार्यस्य वा पूर्वं[2] प्रतिषेधो ब्रह्मकारणत्वाय ॥ ७ ॥

पूर्वपक्षमाह,

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अपीतिर्लयः, कार्यस्य कारणलये तद्वत्प्रसङ्गः, स्थौल्यसावयवत्वपरिच्छिन्नत्वाशुद्धत्वादिधर्मसम्बन्धा[3]वश्यकत्वादसमञ्जसं ब्रह्मकारणवचनम् ॥ ८ ॥

## न तु दृष्टान्ता[4]भावात् ॥ ९ ॥

नैवास्मदीये दर्शने किञ्चिदसामञ्जस्यमस्तीति तुशब्देन परिहरति, स्वपक्षस्थापनपरपक्षनिराकरणयोर्विद्यमानत्वान्नतुवचनं, तत उत्पन्नस्य तत्र लये न कार्यावस्थाधर्मसम्बन्धः शरावरुचकादिषु प्रसिद्धः, भवतां परं न दृष्टान्तोस्ति ॥ ९ ॥

---

**दृश्यते तु ॥ ६ ॥ तदंशस्यैव** चैतन्याज्जडांशस्यैव, ननु केशगोमययोः जडांशस्यैव कारणत्वं न चैतन्यांशस्य वृश्चिकेपि जडस्य गोमयस्य जडांशे एव कारणत्व न चैतन्यांशे इति कार्यकारणयोर्न साजात्यव्यभिचार इत्यत आहुः **तुल्यांशेत्यादि**, तथा च प्रकृतेपि जडं प्रति सदंशः जीवं प्रति चिदंशः अन्तर्यामिणं प्रति आनन्दांश इति सजातीयानामेव कार्यकारणभावावगमात् न व्यभिचारगन्धोपीत्यवसेयम् ॥ ६ ॥ ३ ॥

॥ इति द्वितीयप्रथमे तृतीयाधिकरणम् ॥

**असदितिचेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ प्रतिषेधेत्यादि** तथा'चासदेवेदमग्र आसीदि'ति यच्छ्रुतावुक्तं तत् केषाञ्चिन्मतेसत् कारणत्वेनोच्यमानं यत् तन्निषेधायैव, निषेधमेवाग्र आह **कथमित्यादिना, पूर्वं प्रतिषेध इति पूर्वं** कार्याविर्भावात् पूर्वं, **प्रतिषेधः** अनाविर्भूतलक्षणः कारणावस्थया स्थितिरूपः, **ब्रह्मकारणत्वाय** ब्रह्मणः सकाशात् कार्यावस्थया कार्याणामाविर्भावायेत्यर्थः ॥ ७ ॥

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥ तद्वत्प्रसङ्गः** कारणस्य कार्यसमानताप्रसङ्गः, समानतामेवाह **स्थौल्येत्यादिना, ब्रह्मकारणवचनं** ब्रह्मणि कारणे कार्यस्य लयवचनमित्यर्थः ॥ ८ ॥

**न तु दृष्टान्ताभावात् ॥ ९ ॥ नतु वचनं** सूत्रे नतुइतिपदद्वयवचन, **प्रसिद्ध इति** शरावरुचकानां मृदि लये तेषां धर्मा मृदि प्रसिद्धा इति नेत्यर्थः, इत्थं च कार्याणां ब्रह्मणि लयेयमेकदृष्टान्तोस्माकं, **भवतामित्यादि** लये यावत्कार्यधर्माणां कारणे दर्शने दृष्टान्तो नास्तीत्यर्थ. ॥ ९ ॥

---

१. द्वैरूप्यमित्यपि पाठः । २. पूर्वप्रतिषेध. पूर्वविप्रतिषेध इत्यपि पाठौ । ३. सम्बन्धस्यावश्यकत्वादित्यपि पाठः ४. न तु दृष्टान्तभावादित्यपि पाठः ।

## स्वपक्षदोषाच्च ॥ १० ॥

**स्वपक्षे** चैते प्रतिवादिनः साधारणा दोषाः, निर्विशेषात् प्रधानात् सविशेषस्य कार्यता, तस्योत्पत्तिः, लये तद्धर्मसम्बन्धः, असत्कार्यवादप्रसङ्गः, तथैव कार्योत्पत्तौ कारणाभावेन नियमाभावः, भावे वा मुक्तानामपि पुनर्बन्धप्रसङ्गः ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

वेदोक्तेर्थे शुष्कतर्केण प्रत्यवस्थानम[1]युक्तं, तर्कस्याप्रतिष्ठानात्, तर्को नाम स्वोत्प्रेक्षिता युक्तिः, सा एकोक्ता नान्यैरङ्गीक्रियते, स्वतन्त्राणामृषीणां मतिभेदात् वस्तुनो द्वैरूप्यासम्भवात् नियामकाभावाच्च, अतो न तर्कस्य प्रतिष्ठा ।

पूर्वपक्षिणः परिहारः[2] **अप्यन्यथानुमेयमिति चेत्**, एवमप्यन्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यति, न हि कोपि तर्कः प्रतिष्ठितो नास्तीति वक्तुं शक्यते, व्यवहारोच्छेदप्रसङ्गात्, "आर्षं धर्मोपदेशञ्च वेद[3]शास्त्राविरोधिना यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इतिस्मृतिः, सावद्यतर्कपरिहारेण निरवद्यस्तर्कः प्रतिपत्तव्यो भवतीति चेत्,

**एवमप्यविमोक्षप्रसङ्गः**, ब्रह्मवादिनो निर्दुष्टतर्कसद्भावेपि प्रकृतिवादिनस्तर्कस्य दोषाविमोक्षप्रसङ्गः, मूलनियमाभावात् वैमत्यस्य विद्यमानत्वात् ॥ ११ ॥ ४ ॥

॥ इति द्वितीयाध्याये प्रथमपादे चतुर्थमसत्प्रतिषेधाधिकरणम् ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ ( २. १. ५. )

साङ्ख्यमतस्य वैदिकप्रत्यासन्नत्वात् केषाञ्चित् शिष्टानां परिग्रहोप्यस्ति, अणुमायाकारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्त इति तेषां तर्काः पूर्वोक्तन्यायेन सुतरामेव निरस्ता वेदितव्याः ॥ १२ ॥ ५ ॥

॥ इति द्वितीयाध्याये प्रथमपादे पञ्चमं शिष्टापरिग्रहाधिकरणम् ॥

---

**स्वपक्षदोषाच्च ॥ १० ॥** अथ शास्त्रीयकारणदृष्टान्त उच्यते तदा स्वगृहं दृष्ट्वा पश्चाद्वाच्यं, तवापि निर्विशेषात् प्रधानात् सविशेषस्य शब्दादिमत उत्पत्तिरतः कार्यकारणयोर्वैजात्य कार्यस्योत्पत्तिर्न कारणस्येत्यपि वैलक्षण्य, एवं विलक्षणकार्योत्पत्ते पूर्वं वैलक्षण्याभावादसत्कार्यवादापत्तिः, वैलक्षण्यस्य पूर्वं सत्त्वाङ्गीकारे एतदनन्तरमेतदुत्पद्यत इत्यत्र नियामकाभावः, विनैव नियामकं क्रमाङ्गीकारे आकस्मिकत्वापत्तिः, अथ क्रमेण कार्ये मिथ्याज्ञानजनिताविवेकादृष्टादिरूप कारणमूरीक्रियते इति चेत् बन्धकारणानां पूर्वतनानां शरीरान्तरावच्छेदेन सत्त्वात् मुक्तानां पुनर्बन्धापत्तिः ॥ १० ॥

**तर्काप्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यविमोक्षप्रसङ्ग** ॥ ११ ॥ परिहारः तर्केण न वादिपरिहार इत्यर्थः ॥ ११ ॥ ४ ॥

॥ इति द्वितीयप्रथमे चतुर्थाधिकरणम् ॥

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥** तर्काप्रतिष्ठानदोषमन्येष्वपि बोधयन् तत्रापि परिहारमतिदिशति एतेनेत्यादि, इदं च केवलं सूत्रमेव नाधिकरणं, अधिकरणाङ्गानामलाभात् ॥ १२ ॥ ५ ॥

इति द्वितीयप्रथमे पञ्चमाधिकरणम् ॥

---

१ प्रत्यवस्थातुमित्यपि पाठः । २ प्रदीपकारमतेन तु 'न तर्कस्य प्रतिष्ठे'तिभाष्येण फलितं 'न पूर्वपक्षिणः परिहार' इति, 'अप्यन्यथानुमेयमि'त्युपक्रान्तः पूर्वपक्षिणस्तर्काप्रतिष्ठानदोषपरिहार इति मम मतिरतो विभाग., अथवा काक्कादिः परिहारोप्यपरिहार एवेति । ३ धर्मेत्यादिरपि पाठः । ४. अनिर्दोषेत्यादिर्निरवद्येत्यादिरपि च पाठौ ।

कारणदोषं परिहृत्य कार्यदोषपरिहारार्थमारम्भः ।

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥ ( २. १. ६. )

भोग्यस्य भोक्त्रापत्तिः, ब्रह्मणो निर्विशेषस्य कारणत्वात् भोक्तुर्भोग्यत्वं भोग्यस्य च भोक्तृत्वमापद्येत[1], अतो न विभाग इति चेत्, स्याल्लोकवत्, यथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वेपि न कटकस्य कुण्डलत्वमेवमेव न भोग्यस्य भोक्तृत्वम् ॥ १३ ॥ ६ ॥

॥ इति द्वितीयाध्याये प्रथमपादे षष्ठं भोक्त्रापत्तेरित्यधिकरणम् ॥

श्रुतिविरोधं परिहरति, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति, तत्र विकारो वाङ्मात्रेणैवारभ्यते न वस्तुत इत्यर्थः प्रतिभाति, तथा च सति कस्य ब्रह्म कारणं भवेत्? अतः श्रुतिवाक्यसार्थमाह ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ ( २. १. ७. )

आरम्भणशब्दादिभ्यस्तदनन्यत्वं प्रतीयते, कार्यस्य कारणानन्यत्वं न मिथ्यात्वं, ये पुनर्मिथ्यात्वं तामसबुद्धयः प्रतिपादयन्ति तैर्ब्रह्मवादाः सूत्रश्रुतिनाशनेन तिलापः कृता वेदितव्याः, अन्तःप्रविष्टचोरवधार्थमेवैष आरम्भः, अलौकिकप्रमेये सूत्रानुसारेणैव निर्णय उचितः, न स्वतन्त्रतया किञ्चित् परिकल्पनं "तर्काप्रतिष्ठाना"दिति निराकृतमेव, न चास्ति

---

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥ कारणेत्यादि 'दृश्यते त्वि'त्यनेन वैलक्षण्यं 'प्रतिषेधमात्रत्वा'दित्यनेनासत्कारणवादापत्ति दृष्टान्तसद्भावादसामञ्जस्यं तर्काप्रतिष्ठानादन्यानप्युत्प्रेक्षिष्यमाणान् कारणदोषान् परिहृत्य उत्प्रेक्ष्यमाणस्य कार्यदोषस्य परिहारार्थं सूत्रारम्भ इत्यर्थः, कार्ये ब्रह्मरूपत्वोक्तिदोषस्येत्यर्थः, सूत्रं व्याकुर्वन्ति भोग्यस्येत्यादि, भोक्त्रापत्तिरिति भावप्रधानो निर्देशः भोक्तृत्वापत्तिरित्यर्थः, अत्रैव बोध्यं 'सोकामयते'तितैत्तिरीये चेतनं ब्रह्म प्रकृत्य ततः सृष्टिमुक्त्वा तन्तुन्यायेन तदनुप्रवेशा'द्विज्ञान चाविज्ञानं चे'तिकार्यविभागो दर्शितः, स युज्यते न वेतिसन्देहः, स न युज्यते यतः 'अशब्दमस्पर्श'मिति 'अस्थूलमनण्वि'त्यादिश्रुतिभ्यो लौकिकविशेषरहितस्य ब्रह्मणः कारणत्वात् कार्यस्य लयदशायां भोक्तृभोग्यत्वकृतपरस्परविभागनिवृत्तिपूर्वकं कारणात्मतासम्पत्तौ सर्वथा कारणरूपत्वे जाते तत पुनरुत्पत्तौ ब्रह्मात्मककार्यस्य स्थितिदशायां भोक्तुश्चेतनस्य जीवस्य भोग्यत्वं स्रक्चन्दनवनितादिरूपत्व स्यात् भोग्यस्य स्रक्चन्दनवनितादेश्च भोक्तृत्वं जीवरूपो यो भोक्ता तत्त्वं स्यादित्यर्थः, यथा लोके कटककुण्डलादेरुपमर्देन सुवर्णरूपतासम्पत्तौ सत्यां पुनः कारणदशायां कटकभागस्य कुण्डलत्वं कुण्डलभागस्य च कटकत्वं प्रसिद्धं तद्वत् स्यात्, अतोविभागः विज्ञानाविज्ञानविभागाभावः, लोकवदिति तथाचानेन दृष्टान्तेनेदं बुध्यते वादिमतमभ्युपगम्य तद्रीत्येदं समाधानमुच्यते, अस्मत्सिद्धान्ते तु 'बहु स्यां प्रजायेये'तीच्छया बहुभवनसामर्थ्यस्य नरवात् चेतनाचेतनविभागस्यापि स्वरूपनिविष्टस्य स्वत एव सत्त्वादाविर्भावमात्र परं स्वकृतिविषय इति न दूषणसमाधानयोरवकाशलेश इतिभावः ॥ १३ ॥ ६ ॥

॥ इति द्वितीयप्रथमे षष्ठाधिकरणम् ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ सूत्रमवतारयन्ति श्रुतीत्यादि, प्रतिभातीति वाचारम्भणमनूद्य तस्य विकारस्य विधानात् अतस्तस्यैव नामधेयत्वमिति प्रतिभातीत्यर्थः, तथा सति कार्यमात्रस्य विकारत्वे वाच्ये विकारस्य च खपुष्पवद्वाङ्मात्रत्वेनावस्तुत्वे सतीत्यर्थः, प्रतीयते इत्यादि 'अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवती'त्यादि 'यथा सौम्यैकेन मृत्पिण्डेने'त्यादिप्रतिज्ञादृष्टान्तश्रुतिबलेन प्रपञ्चसमवायित्वं ब्रह्मणः प्रति-

---

१ आपद्यत इत्यपि पाठ । २ नवेत्यादि पाठ. प्रकाशकृताम ।

अपि सूत्रे मिथ्यात्वार्थः सम्भवति, एकविज्ञानेन सर्वविज्ञानोपक्रमबाधात्, प्रकरणविरोधश्च, त्रयाविरोधभयपरित्यागेनैकमिदं सूत्रमन्यथा योजयन्नतिधृष्ट इत्यलं विस्तरेण ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

भाव एव विद्यमान एव घटे घटोपलब्धिः, नाभावे, चकारात् "मृत्तिकेत्येव" श्रुतिः परिगृहीता, वाङ्मात्रेण चोपलम्भे मिथ्यैवात्र घटोऽप्यस्तीत्युक्ते उपलभ्येत,

इदं सूत्रं मिथ्यावादिना न ज्ञातमेव, अत एव पाठान्तरकल्पनम् ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

अवरस्य प्रपञ्चस्य सत्त्वात् त्रैकालिकत्वात् ब्रह्मत्वं, "सदेव सौम्येदमग्र आसीत्" "यदिदं किञ्च तत् सत्यमित्याचक्षत" इतिश्रुतेः ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

"असद्वा इदमग्र आसीदि"तिश्रुत्या प्रागुत्पत्तेः कार्यस्यासत्त्वं बोध्यत इति चेत्, न, अव्याकृतत्वेन धर्मान्तरेण तथाव्यपदेशः, कुतः? वाक्यशेषात्, "तदात्मानꣳ स्वयमकुरुते"ति स्वस्यैव क्रियमाणत्वात्, "इदमासी"त्पदप्रयोगाच्च ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तिस्तावत् समवेतमेव कार्यं सदुत्पाद्यत इति सम्बन्धस्य द्विनिष्ठत्वात् नित्यत्वाच्च कारणान्तरेणापि परम्परया सम्बन्धः, असम्बद्धोत्पत्तौ तु मिथ्यात्वमेव, प्रवृत्तिस्त्वभिव्यक्त्यर्थमिति, शब्दान्तरं सच्छब्दादात्मशब्दः "आत्मानꣳ स्वयमकुरुते"ति ॥ १८ ॥

---

पादित दृष्टान्तवाक्यशेषे च वाचारम्भणवाक्यं श्रूयते तस्य च मिथ्यार्थप्रतिपादकतायां यद्वाक्येन जगदुपादानत्वं ब्रह्मणि प्रतिपाद्यते तच्छेषेणैव तत्प्रतिषेधः क्रियते इत्यर्थ प्रतीतः स्यात्, तथा च जगदुपादानत्वप्रतिषेधो विषयः, अस्ति नवेतिसंशयः, पूर्वपक्षसिद्धान्तौ तु स्फुटौ, सप्तसूत्रमिदमधिकरण, वादिनां मते तु सूत्रमात्रमिद नाधिकरणं, आरम्भणशब्दादिभ्य इति, आदिशब्देन इतिशब्दो नामधेयपद 'सदेव सौम्ये'त्यादिवाक्यानि च बोध्यानि, आरम्भः सूत्रारम्भः, त्रयं श्रुतिसूत्रप्रकरणरूपं त्रयमित्यर्थः ॥ १४ ॥

भावे चोपलब्धेः ॥ १५ ॥ एवमेकेन श्रुतिप्रतिषेधं परिहृत्य कार्यस्य कारणादनन्यत्वे सत्त्वे च युक्तिमाह भावे चेतिसूत्रेण, तद् व्याकुर्वन्ति भाव एवेत्यादि, तथा च श्रुत्यनुगृहीतस्य प्रत्यक्षस्य प्रमाणत्वात्ततोपि मिथ्यात्वबाधसिद्धिरितिभाव', मृत्तिकेत्यनेन कारणरूपत्वोक्तिः स्फुटैव, उपलभ्येतेति खपुष्पवत् मिथ्यात्वमुपलभ्येत नतु घटोप्युपलभ्येतेत्यर्थः, न ज्ञातमेव एवमर्थकं न ज्ञातमेवेत्यर्थः, अत एव एतादृशार्थस्याज्ञातत्वादेव, पाठान्तरकल्पनमिति 'भावाच्चोपलब्धे'रितिपाठकल्पनम् ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥ त्रैकालिकत्वे प्रत्यक्षविरोधात् प्रमाणमाहु' सदेवेत्यादिना, श्रुताविदं पदं प्रपञ्चबोधकं, सूत्रे चकारः 'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया यथेदानीं तथा चाग्रे पश्चादप्येतदीदृश'मिति 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलं आविर्भावतिरोभावजन्मनाशविकल्पवत्' इतिश्रीभागवतविष्णुपुराणवाक्यसङ्ग्राहकः ॥ १६ ॥

असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ अव्याकृतत्वेनेत्यादि, तथा चाव्याकृतत्वमेवासत्त्वं नतु वस्तुनोऽविद्यमानत्वं, इदमित्यादि, तथा चातीतकालवृत्तिमत्ताश्रयमव्याकृतं प्रत्यक्षविषय इतिशाब्दबोधात् सत्त्वमेवायाति प्रपञ्चस्य नत्वसत्त्वमित्यर्थः, प्रत्यक्षं च भगवतो प्राज्ञं तदानीमन्यस्याभावात् ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥ कारणान्तरेणापि दण्डकुण्डलादिनापि, परम्परासम्बन्धः दण्डकुण्ड-

---

१ इतिपदमधिकं क्वचन ।

## पटवच्च ॥ १९ ॥

यथा संवेष्टितः पटो न व्यक्तं गृह्यते विस्तृतस्तु गृह्यते तथा आविर्भावानाविर्भावेन जगतोपि ॥ १९ ॥

## यथा च प्राणादिः ॥ २० ॥

यथा प्राणापानानां नियमने जीवनमात्रमनियमने आकुञ्चनादि, नैतावता प्राणभेदः पूर्वमसत्त्वं वा, तथा जगतोपि,

ज्ञानक्रियाभेदात् सूत्रद्वयम् ॥ २० ॥ ७ ॥

॥ इति द्वितीयाध्याये प्रथमपादे सप्तमं तदनन्यत्वाधिकरणम् ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ ( २. १. ८. )

ब्रह्मणो जगत्कारणत्वे इतरस्य जीवस्यापि ब्रह्मत्वात् तद्धितं कर्तव्यं तन्न करोतीति तदकरणादिदोषप्रसक्तिः, "तत् सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति तस्यैव जीवव्यपदेशात् ॥ २१ ॥

## अधिकन्तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति, यदि ब्रह्म तावन्मात्रं भवेत् तदायं दोषः, तत् पुनर्जीवाज्जगतश्चाधिकं, कुतः? भेदनिर्देशात्, द्रष्टव्यादिवाक्येषु कर्मकर्तृव्यपदेशात् विज्ञानानन्दव्यपदेशाद्वा, नहि सम्पूर्णोंशस्य हितं नियमेन करोति, सर्वेन्द्रियव्यापाराभावप्रसङ्गात्, स्वलीलयैकं तु करोत्येव ॥ २२ ॥

---

त्वादिप्रभृतीनां स्वाभिन्नकारणघटितसामानाधिकरण्यरूप सम्बन्ध· कार्येण सहास्तीतिभाव. कार्यसामानाधिकरण्याभावे जनकत्वासम्भवादित्यर्थ , शब्दान्तरं शब्दान्तराच्चेत्यनेन सूत्रांशेनोक्त शब्दान्तरवाक्यं चेत्यर्थ , सच्छब्दादित्यादि 'सदेव सौम्ये'त्यादिनोक्तसच्छब्देन परमात्मैवोच्यते तदभेदश्चेदम्पदार्थे बुध्यते इत्यर्थ. ॥ १८ ॥

पटवच्च ॥ १९ ॥ संवेष्टितः तन्तूनां पिण्डवद्गोलकीकृत· ॥ १९ ॥

यथा च प्राणादिः ॥ २० ॥ आकुञ्चनादि मरणपदवाच्यतेत्यर्थ , नैतावतेत्यादि, तथा च प्राणानां निर्गमनक्रियया पूर्वस्थितप्राणापेक्षया न भेदस्तथा निर्गतप्रपञ्चस्यापि न पूर्वप्रपञ्चभेदस्तिरोधानदशायामित्यर्थ., सूत्रद्वयं पटवच्चेतिसूत्रमिद चेत्यर्थ., तथा च पूर्वसूत्रे ज्ञानतदभावयोरभेदकत्वमुक्तमत्र तु क्रियातदभावयोरित्यर्थ. ॥ २० ॥७॥

॥ इति द्वितीयप्रथमे सप्तमाधिकरणम् ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ तस्यैवेत्यादि तथा च जीवइतिपदस्य ब्रह्मनामत्वादित्यर्थ., तथा च तद्धिताकरणं सांसारिकदु.खादिरूप तत्तस्य ब्रह्मरूपत्वे न स्यादेव दूरीकुर्याद्वा तत्तु न दृश्यतेतो जीवो भिन्न एवाङ्गीकार्य इतिभाव. ॥ २१ ॥

अधिकन्तु भेदनिर्देशात् ॥ २२ ॥ पक्षं पूर्वसूत्रोक्तं पूर्वपक्ष, 'स्वयमेवात्मनात्मान वेत्सी'त्यादावभेदे कर्तृकर्मभावदर्शनादिद भेदसाधकमत आहु विज्ञानेत्यादि, ज्ञत्वमानन्दरूपत्व च जडजीवभेदसाधने व्यभिचारी हेतुः नहीत्यादि, तथाच पूर्णो यदि नियमेनांशस्य हित कुर्यात् तदा नखकशनिकृन्तनादि न कुर्यादेवेत्यर्थ , सर्वेन्द्रियेत्यादि, यदि सर्वमेवांशिरूपं स्यात्तदांशिन स्वात्मातिरिक्तसुखस्याभावात दु खस्य च सुतरामभावात हिताहितप्राप्तिपरिहारायेन्द्रियव्यापारा. लोकप्रसिद्धा न स्यु , करोत्येव इन्द्रियव्यापारान् करोत्येवेत्यर्थ., तथा चासङ्गतेयमाशङ्केत्यर्थः ॥ २२ ॥

---

१ नैव तावतेत्यपि पाठ. । २ जीवस्येतिपदं पृथक् क्वचन । ३ भेदव्यपदेशादित्यपि पाठः ।

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

पार्थिवत्वाविशेषेपि हीरमाणिक्यपाषाणानां पलाशचम्पकचन्दनानामुच्चनीचत्वमेवं जीवस्यांशत्वाविशेषेपि ब्रह्मादिस्थावरान्तानामुच्चनीचत्वं, कार्यवैलक्षण्यं तदनुरोधश्च दर्शितः ॥ २३ ॥ ८ ॥

॥ इति द्वितीयाध्याये प्रथमपादेष्टममितरव्यपदेशाधिकरणम् ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ ( २. १. ९. )

ब्रह्मैकमेव जगत्कारणमित्युक्तं, तन्नोपपद्यते, कुलालादेश्चक्रादिसाधनान्तरस्योपसंहारदर्शनात् सम्पादनदर्शनादिति चेत्, न, क्षीरवद्धि, यथा क्षीरं कर्तारमनपेक्ष्य दधिभवनसमये दधि भवति एवमेव ब्रह्मापि कार्यसमये स्वयमेव सर्वं भवति ॥ २४ ॥

स्वतो भिन्नकरणे दृष्टान्तः ।

## देवादिवदपि लोके ॥ २५ ॥

यथा देवर्षिपितरो बाह्यनिरपेक्षा एव स्वयोगबलेन सर्वं कुर्वन्ति, एवं ब्रह्माप्यनपेक्ष्य तत्समवायं स्वत एव सर्वं करोति ॥ २५ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

यद्येकमेव ब्रह्म स्वात्मानमेव जगत् कुर्यात् तदा कृत्स्नं ब्रह्मैकमेव कार्यं भवेत्, अथांशभेदेन व्यवस्था तथा सति निरवयवत्वश्रुतिविरोधः, "निष्कलं निष्क्रियं शान्त"मिति ॥ २६ ॥

---

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ तदनुरोधः भगवदधीनत्वरूप. ॥ २३ ॥ ८ ॥

॥ इति द्वितीयप्रथमेष्टमाधिकरणम् ॥

उपसंहारदर्शनान्नेतिचेन्न क्षीरवद्धि ॥ २४ ॥ एवमधिकरणद्वयेन कार्यस्यांशस्य च कारणानन्यत्वांशयनन्यत्वे ये दोषास्ते परिहृता , अत पर ब्रह्मण एकस्यैवान्यनिरपेक्षस्य कारणत्वे पुनरन्यदाशङ्क्य समाधत्ते ब्रह्मेत्यादि, न क्षीरवद्धीति, इयं आशङ्का न कर्तव्या, हि यतो हेतो. ब्रह्म न मृत्सूत्रादिवत् परिणमते येनोक्तरीत्या सामग्र्यपेक्षा स्यात किन्तु क्षीरवत्, तदेतदुक्त यथा क्षीरमित्यादिना, तथा च लोकेपीतरनैरपेक्ष्येणोपादानस्य कार्यजननदर्शनात् नोक्तो बाधितोपदेश इत्यर्थ. ॥ २४ ॥

देवादिवदपि लोके ॥ २५ ॥ ननु भवत्वेवं परिणामे कर्तुरनपेक्षा तथापि क्षीरस्य दधिभावे अधिश्रयणातञ्चनाद्यपेक्षा तु दृश्यते इति इतरानपेक्षं कथ कारणत्व एव दुग्धे दधिसमवायिकारणतापि विवादग्रस्तेतिविषमो दृष्टान्त इतिद्वय समाधातुमाह देवादीत्यादि, ननु किमनेन दृष्टान्तेनेत्यत आहु स्वत इत्यादि, तथा च यथा कर्दमो 'विमानं कामग क्षत्तस्तर्ह्येवाविरचीकर'दिति समवायि निमित्तानि वानपेक्ष्य विमान कृतवान्, एव ब्रह्मापि सर्वानपेक्ष जगत् सर्व स्वसामर्थ्येनैव कृतवान्, अतो ब्रह्मणो जगत्कारणत्वेपि न विरोधो लोकस्य, उक्त च सूत्रद्वय साङ्ख्यान् प्रत्यौलूकान् प्रति चोत्तर बोध्यम् ॥ २५ ॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ एव लोकविरोधे परिहृते अत्रैव श्रुतिविरोधं आशङ्कते कृत्स्नेत्यादि ॥ २६ ॥

---

१ तदुपपत्तिरित्यपि पाठ । २ तदनुरोधश्चेति पाठ प्रकाशकाराणाम् । ३ नरहितोपि पाठः । ४ तदापद लुप्तं क्वचन ।

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पक्षं व्यावर्तयति, श्रुतेः[1] श्रूयत एव द्वयमपि, नच श्रुतं युक्त्या बाधनीयं, शब्दमूलत्वात् शब्दैकसमधिगम्यत्वात्, "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" "अर्वाचीनविकल्पविचारकुतर्कप्रमाणाभासशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां विवादानवसरे"[2] सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च ।

एवं परिहृतेपि दोषे स्वमत्यानुपपत्तिमुद्भाव्य सर्वसम्प्लवं वदन् मन्दमतिः सद्भिरुपेक्ष्यः ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

सृष्टौ देशकालापेक्षापि नास्ति, आत्मन्येव सृष्टत्वात्, देशकालसृष्टावपि आत्मन्येव साधिकरणस्य सृष्टत्वाच्च[3] ।

बहिरन्तश्च जगत्सृष्टिं वा आह विशेषाभावेन, "अनन्तरो बाह्य" इति, विरोधाभावो विचित्रशक्तियुक्तत्वात् सर्वभवनसमर्थत्वाच्च ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

प्रधानवादिनोपि सर्वपरिणामसावयवत्वानित्यत्वादिदोषो दुःपरिहरः, युक्तिमूलत्वाच्च तस्य, अचिन्त्यकल्पनायां प्रमाणाभावाच्च ॥ २९ ॥ ९ ॥

॥ इति द्वितीयाध्याये प्रथमपादे नवममुपसंहारदर्शनाधिकरणम् ॥

---

**श्रुतेस्तु शब्दमूलत्वात्** ॥ २७ ॥ परिहरन्ति श्रुतेस्त्वित्यादिना, **अलौकिकाः** 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' 'प्रकृतिभ्य. पर यच्च तदचिन्त्यस्य लक्षण'मितिमत्स्यपुराणवाक्यं, क्वचि'त्तांस्तर्केण प्रसाधदये'-दितिपाठ, तथा सति मात्स्ये तर्काभ्यनुज्ञादर्शनात् भ्रमः स्यादिति तन्निवारणाय श्रीभागवतवाक्योपन्यासः, तथा च मात्स्ये 'प्रकृतिभ्य' इतिदर्शनात् पुरुषपर्यन्त एव तेषा विषयो नत्वग्र इति न दोष·, **अर्वाचीनेत्यादि** तथा च शङ्कराचार्यैरुच्यते निरवयवस्य ब्रह्मणो जगत्परिणामित्वे कृत्स्नप्रसक्ति. सावयवस्यैकदेशेन जगत्परिणामित्वे निरवयवत्वशब्दकोप इति जगदविद्याकृतमेवेति तद्दूषयन्ति **सर्वभवनेत्यादि** ॥ २७ ॥

**आत्मनि चैवं विचित्राश्च हि** ॥ २८ ॥ सूत्रे प्रथमच्चकारोवधारणार्थः, द्वितीयोप्यर्थ·, आत्मनि स्रष्टृत्वं च द्वितीयस्कन्धे'स एष आद्यः पुरुष. कल्पे कल्पे सृजत्यजः आत्मन्येवात्मनात्मान संयच्छति च पाति चे'तिब्रह्मवाक्ये ब्रह्मणो जगत्सृष्टौ न स्वेतरापेक्षा इत्यपिशब्दादवगतं, प्रथमच्चकारमप्यर्थमङ्गीकृत्य पक्षान्तरमाहु· **बहिरित्यादि, विशेषाभावेनेति** तौल्येनेत्यर्थः, तथा च यथात्मनि सृष्टौ 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' इत्यत्र न देशकालाद्यपेक्षा एव बहिःसृष्टावपि 'अनन्तरोबाह्य' इतिश्रुत्या सर्वत्र ब्रह्मण एकरूपताबोधनेन अन्तर्बहिस्तुल्यत्वात्, अतो बहिरपि सृजन्नात्मन्येव सृजति इत्यर्थ , ननु सा सृष्टिर्मायिकी तत्र तथा युक्त इयं तु सत्येति कथमस्यां देशकालाद्यनपेक्षेत्यत आह **विचित्राश्च** हीति, हि यतो हेतो. 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'तिश्रुतेस्तस्य शक्तयो विचित्रा एवेति, अत एवाहुः **विरोधाभाव** इति ॥ २८ ॥

**स्वपक्षदोषाच्च** ॥ २९ ॥ स्फुट भाष्यम् ॥ २९ ॥ ९ ॥

**॥ इति द्वितीयप्रथमे नवमाधिकरणम् ॥ ९ ॥**

---

१ श्रुतेरिति नास्ति क्वचन । २ वादानवसर इत्यपि पाठः । ३ चरहितोपि पाठः ।

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ ( २. १. १०. )

**सर्वशक्तिभिरुपेता** उपगतः, चकारात् सत्यादिगुणयुक्तश्च, कुतः? **तद्दर्शनात्**, तथा वेदे दृश्यते, "यः सर्वज्ञः सर्वशक्तिः" "सर्वकर्ता सर्वकाम" इत्यादि ॥ ३० ॥

## विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

कर्ता इन्द्रियवान् लोके, ब्रह्मणो निरिन्द्रियत्वात् कथं कर्तृत्वमिति? अस्य परिहारः पूर्वमेवोक्तः "श्रुतेस्तु शब्दमूलत्वादि"त्यत्र, अनवगाह्यमाहात्म्ये श्रुतिरेव शरणं नान्या वाचोयुक्तिरिति ॥ ३१ ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

**न ब्रह्म** जगत्कारणं, कुतः? प्रयोजनवत्त्वात्, कार्यं हि प्रयोजनवत् दृष्टं लोके, ब्रह्मणि पुनः प्रयोजनवत्त्वं सम्भावयितुमपि न शक्यते, आप्तकामश्रुतिविरोधात्, व्यधिकरणो हेतुः, नसमासो वा ॥ ३२ ॥

## लोकवत् तु लीला कैवल्यम् ॥ ३३ ॥

तुशब्दः पक्षं व्यावर्तयति, लोकवत् लीला, नहि लीलायां किञ्चित् प्रयोजनमस्ति, लीलाया एव प्रयोजनत्वात्, ईश्वरत्वादेव न लीला पर्यनुयोक्तुं शक्या, सा लीला कैवल्यं मोक्षः, तस्य लीलात्वेऽप्यन्यस्य तत्कीर्तने मोक्ष इत्यर्थः, लीलैव केवलेति वा ॥ ३३ ॥

---

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ एवमुपादानत्वे दोषशङ्कामुद्धृत्य कर्तृत्वे तामुद्धरन् उपादानतानिर्वाहकं **सर्वशक्तिसाहित्य** प्रदर्शयति **सर्वशक्तिभिरित्यादिना**, उपेता इति तृजन्तशब्दस्तेनोपगत इत्यर्थः, **सत्यादीत्यादि** ते च गुणाः प्रथमस्कन्धे धरित्र्या धर्मं प्रत्युक्ताः,

'सत्य शौच दया क्षान्तिस्त्याग सन्तोष आर्जवम् ।
शमो दमस्तप साम्य तितिक्षोपरति श्रुतम् ॥
ज्ञान विरक्तिरैश्वर्यं शौर्य तेजो बल स्मृति ।
स्वातन्त्र्य कौशल कान्तिर्धैर्यं मार्दवमेव च ॥
प्रागल्भ्य प्रश्रय शील सह ओजो बल भग ।
गाम्भीर्य स्थैर्यमास्तिक्य कीर्तिर्मानोनहङ्कृति ॥
एते चान्ये च भगवन् नित्या यत्र महागुणा ' ॥ ३० ॥

**विकरणत्वान्नेतिचेत्तदुक्तम्** ॥ ३१ ॥ **विकरणत्वात्** करणशून्यत्वात् कर्तृत्व न सम्भवति **ब्रह्मणः इति चेत्** इति शङ्केत चेत्, तदुक्तं सर्वत.पाणिपादान्तत्ववचनेन सहस्रशीर्षेत्यादिना च तदुक्तमित्यर्थ सूत्रस्य ॥ ३१ ॥

**न प्रयोजनवत्त्वात्** ॥ ३२ ॥ **व्यधिकरणो हेतुः** कारणत्वाभावे साध्ये ब्रह्मणि प्रयोजनवत्त्वादिति हेतुर्व्यधिकरण इत्यर्थ , **नसमासः** न विद्यते प्रयोजनमस्येति नप्रयोजनवत्तस्यभावस्तत्त्वं तस्मादितिरीत्या समासकरणे सामानाधिकरण्यमपीत्यर्थ , नैकधेतिवत नशब्देन सह सुप्सुपेतिसमासः ॥ ३२ ॥

**लोकवत्तु लीलाकैवल्यम्** ॥ ३३ ॥ **लीलैव केवलेति** वेति, तथा च लीलायाः स्वाभाविकमोक्षरूपत्वप्रदर्शनाय केवलपदप्रयोगो वास्तविको नतु व्यावर्तक इत्यर्थ. ॥ ३३ ॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३४ ॥

कांश्चित् सुखिनः कांश्चित् दुःखिनश्च प्रलयञ्च कुर्वन् विषमो निर्घृणश्चेति चेन्न, सापेक्षत्वात् जीवानां कर्मानुरोधेन सुखदुःखे प्रयच्छतीति वादिबोधनायैतदुक्तं, वस्तुतस्त्वात्मसृष्टेर्वैषम्यनैर्घृण्यसम्भावनैव नास्ति, वृष्टिवत् भगवान्, बीजवत् कर्म, श्रुतिरेव तथा दर्शयति "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष उ एवासाधु कर्म कारयति तं यमधो निनीषति"[1] "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणे"ति च, सापेक्षमपि कुर्वन्नीश्वर इति माहात्म्यम् ॥ ३४ ॥

## न कर्म[2] विभागादिति चेत् नानादित्वात् ॥ ३५ ॥

न कर्म विभागात् कार्योद्गमात् पूर्वं सम्भवति, पश्चात्त्वन्योन्याश्रय इति चेत्, न, अनादित्वात्, बीजाङ्कुरवत् प्रवाहस्यानादित्वात् ॥ ३५ ॥

कथमनादित्वमिति चेत्,

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

उपपद्यते, अन्यथा कस्य संसारः? कृतहान्यकृताभ्यागमप्रसङ्गश्च, उपलभ्यते च श्रुतिस्मृत्योः, "अनेन जीवेनात्मने"ति सर्गादौ जीवप्रयोगादनादित्वं, "तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवानिति" च ॥ ३६ ॥

उपसंहरति,

---

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥** ननूत्तमाधमकर्मकारयितृत्वात्तथाफलदाने-'प्रक्षालनाद्धी'तिन्यायस्तथाच कर्मणैव सर्वनिर्वाहे कृतमीश्वराङ्गीकारेणेति चेत् परिहरति सापेक्षमित्यादिना, तथा चैवविधमाहात्म्यज्ञापनेन लोकोद्धारार्थमेवैवङ्करणमित्यैश्वर्यसाधकमेवेद नतूक्तन्याय, तथाहि दर्शयति 'एष ह्येव साधु कर्म कारयती'तिश्रुतिरेव तथा दर्शयतीतिभावः ॥ ३४ ॥

**न कर्म विभागादितिचेन्नानादित्वात् ॥ ३५ ॥** यदुक्तमीश्वरो जीवकर्मसापेक्ष इति न वैषम्यादिदोषसम्बन्धस्तत्रेति तदयुक्त सृष्ट्यादौ'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मितिब्रह्मेतरनिषेधस्य सत्त्वान्न सृष्टेः पूर्वं ब्रह्मेतरस्य कस्यापि सत्त्वं, अग्निविस्फुलिङ्गन्यायेन जीवोद्गमानन्तरमेव सर्वेषामुद्भव, इत्थ च पूर्वं जीवानामेवासत्त्वेन तच्छरीरकर्मणामप्यभावात् कर्मसापेक्षतया वैषम्यनैर्घृण्यदोषोद्धारो दुर्घट एव, अथ विभागोत्तरकर्मणा समाधानं तदप्ययुक्तं, कर्मण. शरीरसाधकत्वेन शरीरसम्बन्धस्य च कर्मसाध्यत्वेनान्योन्याश्रयात्, इत्येव सूत्रांशेनाशङ्क्य समाधत्ते इतिचेन्न अनादित्वादित्यनेन, तथा च जीवानामिव सर्वेषां कार्याणां कारणे लयादुद्गमकाले पुनर्नियम्यनियामकभावसम्भवान्न समाधानहानिरितिभाव. ॥ ३५ ॥

**उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥** कथमनादित्वमित्याकाङ्क्षायामाहुः उपपद्यत इत्यादि, अन्यथेत्यादि जीवाद्यनादित्वाभावे, प्रथमश्चोवधारणार्थ., द्वितीय उक्तस्य समुच्चयार्थ., तथा च सदसत्कर्मणां प्रलयपूर्वतनानां जीवस्य कारणलयेन भोगाभावात् कृतहानिः पुनः सृष्ट्युत्तरं आरम्भककर्मणामभावात् सकलदुःखनिवहसाधनीभूतशरीरप्राप्तिकश्चोपनीयसकलपदार्थलाभः अकृताभ्यागमरूपः स्यात् यद्यनादित्वं नोरीक्रियेत, 'नामरूपे व्याकरवाणी'तिश्रुतावपि सिद्धानामेव व्याकरणसम्भव उक्तः, जीवत्वमनाद्येवोक्तं, स्मृतावपि यथापूर्वंस्थितस्यैव सृष्टिरुक्ता ॥ ३६ ॥

---

१ उभयत्रापि निनीपत इत्यपि पाठः । २ न कर्माविभागादिति पाठः प्रकाशकाराणाम् ।

**सर्वधर्मोपपत्तेश्च ॥ ३७ ॥**

वेदोक्ता धर्माः सर्वे ब्रह्मणि उपपद्यन्ते, सर्वसमर्थत्वादिति ॥ ३७ ॥ १० ॥

॥ इति द्वितीयाध्याये प्रथमपादे दशमं सर्वोपेतेत्यधिकरणम् ॥

**इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यायस्य प्रथमः पादः ॥**

---

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ उपसंहरतीत्यादि, तथा च नारदपरीक्षायां 'चित्रं बतैतदेकेन वपुषा युगपत् पृथक् गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्'इत्युपक्रमे कथनात् 'तमेव सर्वगेहेषु सन्तमेकं ददर्श ह'-इत्युपसंहारे कथनात् नानागृहेषु नानाकार्याणि कुर्वतोऽपि यथा न स्वरूपभेदस्तथात्रापीति बोध्यम् ॥ ३७ ॥ १० ॥

॥ इति द्वितीयप्रथमे दशमाधिकरणम् ॥

**॥ इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते श्रीमद्ब्रह्मसूत्राणुभाष्यपदप्रदीपे द्वितीयाध्यायस्य प्रथमः पादः ॥**

# ॥ अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

स्वतन्त्रतया सर्वे वादा निराक्रियन्तेस्मिन् पादे,

**रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ ( २. २. १. )**

लोकानाम्भूर्भुवादीनामचेतनेन केवलेन प्रधानेन रचना नोपपद्यते, रचितत्वादेव न परिणामः, सर्वस्य संश्लेषप्रसङ्गात्, अतश्चेतनकर्तृका रचना नाचेतनेन प्रधानेन कर्तुं शक्या, तस्मात् कारणत्वेन प्रधानं नानुमातव्यं, अन्यथोपपत्त्या बाधितमेवानुमानमिति चकारार्थः ॥ १ ॥

भुवनानि विचार्य जनान् विचारयति,

**प्रवृत्तेश्च ॥ २ ॥**

सर्वस्य तत्परिणामे प्रवृत्तिर्नोपपद्येत, प्रधानस्य वा प्रथमप्रवृत्तिः, यद्यपि प्रधानकारणवादे फलपर्यन्तमङ्गीक्रियमाणे न किञ्चिद्दूषणं, कृतिमात्रस्य प्रधानविषयत्वात्, तथापि वादिनं प्रति लोकन्यायेन वक्तव्यं, तत्र लोके चेतनाचेतनव्यवहारोस्ति, चेतनाश्चतुर्विधा जीवाः सशरीरा अलौकिकाश्च, अन्येचेतनाः, तन्न्यायेन विचारोत्रेति न किञ्चिद् विचारणीयम् ॥ २ ॥

---

**रचनानुपपत्तेश्च नानुमानम्** ॥ १ ॥ **स्वतन्त्रतया** वेदार्थे पूर्वोक्तरीत्या बाधकत्वाभावेपि पुरुषार्थसाधकताबुद्धिनिराकरणतया, **सर्वे वादाः** ब्रह्मवादविरुद्धा. सर्वे वादा इत्यर्थः, **रचितत्वादेव** कर्तृजन्यत्वादेव, तथा च यथा घटादयः कुलालादिकर्तृजन्याः न कुलालादे. परिणामास्तथा जगदपि कर्तृजन्यत्वान्न प्रकृतेः परिणामः इत्यर्थः, **सर्वस्येत्यादि**, तथाच भूरादिसर्वलोकानां परिणामत्वस्वीकारे सर्वेषा परिणामिसंश्लेषो दधिदुग्धस्थलसमानतयानुभूतो भवेत् तथा तु नानुभूयत इति न परिणामत्व, **नानुमातव्यमिति** जगत् सकारणकं कार्यत्वात् घटवदित्यनुमानेन प्रकृतिः प्रधान नानुमेया किन्त्वीश्वर एवानुमेय इतिभाव., **अन्यथोपपत्त्येत्यादि**, तथा च जडजीवान्तर्यामिणां मध्ये प्रत्येक पक्षीकृत्य विजातीयोपादानकत्वाभावः सजातीयोपादानकत्वं वा साध्यं घटं दृष्टान्तीकृत्य, एवं च सति त्रिविधकार्य प्रति प्रकृतेरुपादानत्वे परिणामित्वे वा प्रत्यक्षविरोधः सत्प्रतिपक्षकृतश्च बाध इति तदनुमानमप्रयोजकमितिभावः ॥ १ ॥

**प्रवृत्तेश्च** ॥ २ ॥ **सर्वस्य** चैतन्यावच्छेदकदेहमात्रस्य, **तत्परिणामे** प्रकृतिपरिणामत्वे प्रकृतिजन्यत्वे निश्चिते, **प्रवृत्तिः** मातृपित्रादीनां प्रवृत्तिः, ननु मातृपितृशुक्रशोणितसंयोगादीनामपि प्रकृतिपरिणामे सहकारिकारणतयान्वयव्यतिरेकसिद्धत्वान्न प्रवृत्त्यनुपपत्तिरत आहु **प्रधानस्येत्यादि**, तथा च प्रकृते प्रधानरूपाया. कार्यगोचरायाः पूर्वमन्वयव्यतिरेकसिद्धसहकारिकारणानामभावात् प्रथमप्रवृत्ति. फलोपाधायिका नोपपद्येतेत्यर्थः, ननु कामिन्यादीनां प्रवृत्तयो यथा स्वभावसिद्धा एव जायन्ते फलान्तास्तथा प्रकृतिप्रवृत्तयोपि स्वभावसिद्धा एव सकलकार्यानुकूलाः प्रधानविषयाः प्रकृत्युपादानिका. भविष्यन्तीति न काप्यनुपपत्तिरित्याहुः **यद्यपीत्यादिना**, **लोकन्यायेन वक्तव्यं** लोकसिद्धयुक्त्युपन्यासेन समाधान वक्तव्यं नत्वतीन्द्रियस्वभावोपन्यासेनेतिभाव , **चतुर्विधाः** जरायुजादिभेदभिन्नाश्चतुर्विधा , **अलौकिकाः** मुक्ता·, **अन्ये** घटकाष्ठादय·, **तन्न्यायेन** तत्रसिद्धयुक्तिन्यायेनेत्यर्थ., **न किञ्चिदित्यादि**, तथा च निर्युक्तिकवादेवैदिकयुक्तिवादे वा नोत्तर देयमित्यर्थ. ॥ २ ॥

---

१ सर्ववादा इत्यपि पाठः । २ करणत्वेनेत्यपि पाठः ।

## पयोम्बुवच्चेत् तत्रापि ॥ ३ ॥

यथा पयो विचित्रफेनरचनां करोति यथा वा नद्यादिजलं स्वत एव स्पन्दते[1] इति चेत् न, तत्रापि दोहनाधिश्रयणे मेघानां चेतनानामेव सत्त्वात् ।

व्याख्यानान्तरे तु 'अन्नाम्बुवदि'त्युच्येत, द्वितीयस्य[2] समाधानन्नोभयवादिसम्मतम् ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

प्रधानस्यान्यापेक्षाभावात् सर्वदा कार्यकरणमेव[3], न व्यतिरेकेण तूष्णीमवस्थानमुचितं, पुरुषाधिष्ठानस्य तु[4] तुल्यत्वात्, सेश्वरसाङ्ख्यमतेप्यैश्वर्यन्तदधीनमिति यथास्थितमेव दूषणम् ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

तृणपल्लवजलानि स्वभावादेव परिणमन्ते एवमेव प्रधानमिति न मन्तव्यं, अन्यत्र शृङ्गादौ दुग्धस्याभावात्, चकाराच्चेतनक्रियाप्यस्ति, ततश्च लोकदृष्टान्ताभावादचेतनं प्रधानं न कारणम् ॥ ५ ॥

---

**पयोम्बुवच्चेत् तत्रापि** ॥ ३ ॥ ननु धेनुनर्तकीदृष्टान्तेन प्रवृत्तेः मास्त्वचेतनकार्यकारित्वं तथापि पयोजलदृष्टान्तेन तथाकार्यकारयितृता साधयिष्याम इत्याशङ्कायां समाधत्ते **पय** इत्यादि, व्याकुर्वन्ति **यथा पय** इति, तथा च यथा पयोचेतन फेनरचनां चेतनकार्यरूपा करोति यथा वा जल स्पन्दनादि करोति तद्वत् प्रकृतिरपि जडा सर्व चेतनकार्य करोतीत्यर्थ , **दोहनाधिश्रयणे** पुरुषस्य प्रयोजकत्वात् नदीकार्येपि **मेघानां** प्रयोजकत्वाद्विषमो दृष्टान्त इत्यर्थ., **व्याख्यानान्तर** इत्यादि, अत्र कैश्चिदेव पूर्वपक्ष्य समाहितं, तथाहि पयो यथा स्वत एव हि वत्सविवृद्धे कारण भवति यथा वा नदीजल लोकोपकाराय स्पन्दते तथा प्रधानमपि सर्व करिष्यतीति पूर्वपक्ष्य समाधीयते नेद साधीयः चेतनकर्तृत्वस्यैव श्रवणात् 'योप्सु तिष्ठन् योपोन्तरो यमयति' 'एतस्यैवाक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्पन्दन्त'इतिचेतनकर्तृत्वश्रवणादिति, तत्समाधानमनादृत्य किमिति समाधानान्तर क्रियते तत्राहुः **अन्ने**त्यादि, तथाचान्योपकारदृष्टान्तेन यदि प्रकृतिकारणसाधनतामभिप्रेयात् तदान्नाम्बुवच्चेत्येव सूत्रे दृष्टान्त वदेत् तयो· सर्वजनप्रसिद्धोपकारित्वान्नतु पयोम्बुवदिति वदेत्, **द्वितीयस्ये**त्यादि जलक्रियाया परोपकाराय स्वत उत्पत्तिनिर्वचनं, **नोभयवादिसम्मतं** निम्नभूमिसापेक्षत्वादुभयोरपि क्रियास्वतस्त्व नाभिप्रेतमित्यर्थ ॥ ३ ॥

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** ॥ ४ ॥ प्रकृते. कर्तृत्व दूषयित्वा तस्याः स्वत.परिणामसामर्थ्यं दूषयति **व्यतिरेके**त्यादिना, तद् व्याकुर्वन्ति **प्रधाने**त्यादिना, **व्यतिरेकेणानवस्थितिः** गुणत्रयसाम्यात्मकस्य प्रधानस्य परिणामार्थ गुणक्षोभायान्यापेक्षाभावात् **सर्वदा कार्यकरणमे**वोचित नतु कार्यकरणव्यतिरेकेण **तूष्णीमवस्थानमुचितं** तथाच लयानुपपत्ति , चकारेण त्रयाणां गुणाना क्षोभायाप्यन्यानपेक्षणात् एकव्यतिरेकेणान्यावस्थितेरसम्भवाद्गुणत्रयकार्ययौगपद्यापत्ति क्रमानुपपत्तिश्च, न च प्रकृतेस्तद्गुणानां पुरुषाधिष्ठितत्वक्रमिकगुणाधिष्ठितत्वतदभावाभ्यां सकलोक्तदोषोद्धार इति वाच्य, पुरुषाणा नित्यविभुत्वेन सर्वेषु तदधिष्ठानताया सार्वदिकत्वात्, ननु सेश्वरसाङ्ख्यवादे ईश्वरे तत्तदैश्वर्याधिष्ठानत्वतत्क्रमाभ्या सर्वोपपत्तिरित्यत आहुः **सेश्वरे**त्यादि, **तदधीनमिति** प्रकृतितद्गुणसत्ताधीनमित्यर्थ.,तथा च प्रकृतेस्तद्गुणाना च सत्त्वात् तुल्यो दोष इतिभावः ॥ ४ ॥

**अन्यत्राभावाच्च न तृणादिवत्** ॥ ५ ॥ **स्वभावादेव परिणमन्त** इति अन्यानपेक्षाणि गवादिभिर्भक्षितानि सन्त्येव तृणादीनि दुग्धरूपेण परिणमन्त इत्यर्थ·, **एवमेवे**त्यादि तथाचैतद्दृष्टान्तेनेतरानपेक्षपरिणामकत्व प्रधानस्याचेतनत्वेन हेतुना साधनीयमितिभाव , तद् दूषयन्ति **ने**त्यादिना, **अन्यत्रे**त्यादि, तथा च दुग्धात्मकपरिणामे औधसैकप्रदेशस्य भक्षणादिरूपचेतनक्रियायाश्चापेक्षणात् इतरानपेक्षपरिणामकत्वसाध्यबाधाद्बाधितमनुमान त्वदीयमितिभावः ॥५॥

---

१ स्पन्दत इत्यपि पाठ. । २. द्वितीयसमाधानमित्यपि पाठ । ३ कार्यकारणमित्यपि पाठ क्वचित् । ४ तुरहितः पाठस्तु क्वचिदेव ।

## अभ्युपगमेप्यर्थाभावात् ॥ ६ ॥

प्रधानकारणवादाङ्गीकारेपि[1] प्रेक्षाकारित्वाभावान्न[2] पुरुषार्थः सिध्यति ॥ ६ ॥ १ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे प्रथमं रचनानुपपत्तेरित्यधिकरणम् ॥

प्रधानस्य केवलस्य कारणवादो निराकृतः, पुरुषप्रेरितस्य कारणत्वमाशङ्क्य परिहरति,

## पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥ ( २. २. २. )

पुरुषः पङ्गुरन्धमारुह्यान्योन्योपकाराय गच्छति यथा वायःकान्तं सन्निधिमात्रेण लोहे क्रियामुत्पादयति, एवमेव पुरुषाधिष्ठितं पुरुषसन्निहितं वा प्रधानं प्रवर्तिष्यत इति चेत् तथापि दोषस्तदवस्थः, प्रधानप्रेरकत्वं पुरुषस्य स्वाभाविकं प्रधानकृतं वा ? आद्ये प्रधानस्याप्रयोजकत्वं, द्वितीये प्रधानदोषस्तदवस्थः, नित्यसम्बन्धस्य विशिष्टकारणत्वेनिर्मोक्षः, अशक्तस्य तु मोक्षाङ्गीकारः सर्वथानुपपन्नः ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

प्रकृतिपुरुषयोरङ्गाङ्गित्वे भवेदप्येवं, तच्च नोपपद्यते, पुरुषस्याङ्गित्वे ब्रह्मवादप्रवेशो मतहानिश्च, प्रकृतेरङ्गित्वे त्वनिर्मोक्षः,[3] अनेन परिहृतोपि मायावादो निर्लज्जानां हृदये भासते ॥ ८ ॥

---

**अभ्युपगमेप्यर्थाभावात्** ॥ ६ ॥ अन्यानपेक्षस्य प्रधानस्य स्वभावत एव महदादिरूप. परिणामो न युक्तिसह इत्युक्त, इदानीं तदुपगम्यापि यथा धेनुः वत्सार्थं स्वभावत एव वृषमुपगच्छति तथा प्रधानमपि स्वत एव पुरुषभोगार्थं प्रवर्तेत इति तन्मतं सूत्रकारो दूषयतीत्याहु प्रधानकारणेत्यादि, प्रेक्षेत्यादि, प्रेक्षा इष्टसाधनताधीः, तथा च सफलप्रवृत्तिमात्रे इष्टसाधनताज्ञानस्य कारणत्वात्तस्य चाचेतनेसम्भवात् काकतालीयन्यायेन क्वचित् तथादर्शनेपि न सर्वत्र तादृशप्रवृत्तेः सफलत्वनियम इतिभाव., इत्थञ्च प्रकृतेः सा प्रवृत्तिः पुरुषभोगार्थैवेति-नियमो भग्न इत्यर्थः ॥ ६ ॥ १ ॥

॥ इति द्वितीयद्वितीये प्रथमाधिकरणम् ॥ १ ॥

**पुरुषाश्मवदितिचेत्तथापि** ॥ ७ ॥ पुरुषस्य प्रेरणप्रकारमाहु पुरुष इत्यादिना, अश्मप्रेरणप्रकारमाहुः अयः-कान्त इत्यादिना, दोषमाहु. प्रधानेत्यादिना, आद्ये प्रधानप्रेरणार्थं पुरुषस्य स्वत प्रवृत्तौ, अप्रयोजकत्वं पुरुषस्य स्वत.प्रवृत्तौ स्वत एव सर्वं करिष्यतीति प्रधानस्याप्रयोजकत्वमित्यर्थः, प्रधानदोषः प्रधानसम्बन्धकृतो दोषः, दोषमेवोपपादयन्ति नित्येत्यादिना, विशिष्टकारणत्वे प्रकृतिविशिष्टस्य पुरुषस्य देहादिजडविशिष्टजीवसृष्टिं प्रति कारणत्वे, ननु नानापुरुषवादाङ्गीकारे शक्तस्य प्रकृतिसम्बन्धेनाहमित्यभिमानिनोविमोक्षः तादृशाभिमानशून्यस्याशक्तस्य मोक्षश्चोपपन्न इत्यत आहुः अशक्तस्येत्यादि, अनुपपन्न इति सकलबन्धनस्वभावायाः प्रकृतेस्तदबन्धने प्रामाण्याभावादितिभावः ॥ ७ ॥

**अङ्गित्वानुपपत्तेश्च** ॥ ८ ॥ **पुरुषस्याङ्गित्वे** पुरुषस्यांशित्वमन्यस्य सर्वस्यांशत्वेन पुरुषनियम्यत्वमंशिनश्च सर्वनियामकत्वमितिसिद्धान्ताङ्गीकारे, **प्रकृतेरंशित्वे** प्रकृतेः सर्वनियामकत्वे तदन्यस्य सर्वस्यांशत्वेन प्रकृतिनियम्यत्वाङ्गीकारे ॥ ८ ॥

---

१ प्रधानवादाङ्गीकारेपीत्यपिपाठः । २ प्रेक्ष्यकारित्वाभावादितिपाठबाहुल्यम् । ३ प्रकृतेरङ्गित्वे निर्मोक्ष इत्यपि पाठः ।

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अन्यथा वयं सर्वमनुमिमीमहे यथा सर्वे दोषाः परिहृता भवेयुरिति चेत् तथापि पूर्वं ज्ञानशक्तिर्नास्तीति मन्तव्यं, तथा सति बीजस्यैवाभावात् नित्यत्वाच्चानिर्मोक्ष[1] इति ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

परस्परविरुद्धत्वान्मतवर्तिनां पञ्चविंशादिपक्षाङ्गीकारात्, वस्तुतस्त्वलौकिकार्थे वेद एव प्रमाणं नान्यदिति ॥ १० ॥ २ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे द्वितीयम्पुरुषाश्मवदित्यधिकरणम् ॥

इदानीं परमाणुकारणवादो निराक्रियते,

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ ( २. २. ३. )

तत्र स्थूलकार्यार्थं प्रथमं परमाणुद्वयेन द्व्यणुकमारभ्यते, परमाणुद्वयसंयोगे द्व्यणुकं भवतीत्यर्थः, तत्रोपर्यधोभावमिलने द्व्यणुकं महत् स्यात्, द्विगुणपरिमाणवत्त्वात्, प्राक्पश्चा-

---

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ 'प्रीत्यप्रीतिविषादात्मका प्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवाश्रयजननमिथुनप्रवृत्तयश्च गुणा' इतिसाङ्ख्यानामपरा प्रतिज्ञा, एतदर्थस्तु प्रीतिः सुखं अप्रीतिः दुःखं विषादो मोह. सत्त्वरजस्तमांसि गुणाः क्रमेणैते त्रयात्मकाः एतत्त्रयस्वरूपा भवन्ति प्रकाशः सत्त्वकार्यं विवेके हेतुः प्रवृत्तिः रजसः कार्यं नियमःनिग्रह. प्रलय. तमःकार्यं, एतैः कार्यैस्ते कारणगुणा अनुमीयन्ते, रजोगुणकार्यप्रवृत्तिरेव क्रियारूपा अन्योन्याभिभवान्योन्यसम्बन्धान्योन्यजननान्योन्यमिथुनीभावसम्पादिका भवति, गुणाश्च स्वभावतश्चलस्वभावा., इत्थं च तमसा रजस उपमर्दे कृते प्रवृत्तौ निवृत्तायां लये जाते तदुत्तर सत्त्वोत्पत्त्या प्रकाशादात्मविवेके सति मोक्ष इति, एवमाशङ्क्य परिहरति सूत्रकारस्तद् व्याकुर्वन्ति अन्यथेत्यादिना, गुणाः स्वस्वकार्यजनकाः चलस्वभावत्वात् चलदलदलवदित्यन्यथानुमानेन सर्वं समाधास्याम इत्यर्थः, अत्र दूषणमाह ज्ञशक्तिवियोगादिति, सौत्रश्चोप्यर्थे, एवमनुमानेपि कार्यक्रमनिर्वाहाय तत्तत्कार्यं वाच्यं तच्च तदा सम्भवेत् यदि गुणानां तत्तत्कालज्ञानं भवेत् तच्च न भवत्सिद्धान्ते पुम्प्रकृतियोगात्पूर्वं गुणानां सम्भवति अन्यथा स्वसिद्धान्तभङ्गापत्तिः, इत्थञ्च ज्ञानाभावात् गुणानां प्रवृत्त्या समाधान दुर्वचमितिभाव., बीजस्य गुणेषु ज्ञानसम्बन्धस्य, अथ 'दिक्कालाकाशादिभ्य'इतिसूत्रात् सृष्टेः पूर्वं पुम्प्रकृतियोगादुत्तर कालोत्पत्तेस्तदानीञ्च गुणाना ज्ञशक्तिसम्बन्धसम्भवात् नोक्तानुपपत्तिरत आहुः नित्येत्यादि, तथा च तेषां सिद्धान्ते पुंप्रकृतियोगस्यानादित्वात् प्रलयदशायां कालस्यापि नाशेन वियोजककारणान्तरस्याप्यभावान्नित्यत्वापातादमुक्तत्वापत्तिर्दोष. ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ उपनिषत्सिद्धान्तापेक्षया सर्वमतानामर्वाचीनत्वात् न सिद्धान्तत्वमित्याह विप्रतिषेधादित्यादि, तदेवोपपादयन्ति परस्परेत्यादि, तथाहि श्रीकृष्णोद्धवसंवादे एकादशस्कन्धे 'केचित् षड्विंशति प्राहुरितरे पञ्चविंशतिं सप्तके नव षट् केचित् चत्वार्येकादशापरे केचित्सप्तदश प्राहुः षोडशैके त्रयोदशे'ति तेषां स्वरूपं भगवता तत्रैवोक्तं 'युक्तयः सन्ति सर्वत्र भाषन्ति ब्राह्मणा यथा मायां मदीयामुद्गृह्य वदतां किन्नु दुर्घट नैतदेवं यथान्यत् त्वं यदहं वच्मि तत्तथे'त्यादिना, तर्हि 'तमो वा इदमेकमेवाग्र आसीदि'त्यादिश्रुत्युक्तस्य का गतिरित्यत आहुः वस्तुत इत्यादि, तथा च भगवदुक्तार्थे सर्वत्र भगवद्रूपतैवावसेयेति तमसोपि तत्त्वान्न दोषलेश., एवं दशसूत्रैः साङ्ख्यसिद्धान्ते वैदिकत्वमपि निवारितम् ॥ १० ॥ २ ॥

॥ इति द्वितीयद्वितीये द्वितीयाधिकरणम् ॥ २ ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ इदानीं सप्तसूत्र्या नैयायिकादिसिद्धान्तो निराक्रियते, इदानीमित्यादि, द्विगुणेत्यादि, तथा च परमाणुद्वयस्य मिलने सति द्व्यणुके महत्त्व दीर्घत्व वा स्यान्नतु नैयायिकाभिमतं

---

[1] नित्यत्वाच्च निर्मोक्ष इत्यपि पाठः ।

न्मिलने दीर्घवद्वा स्यात्, परमाणुपरिमाणं ह्रस्वं परितोमण्डलञ्च, उपहासार्थं तस्य मतस्यानुवादः ॥ ११ ॥

किमतो यद्येवमत आह ।

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

उभयथापि न, कुतः ? न कर्म, नकारो देहली[1]प्रदीपन्यायेनोभयत्र सम्बध्यते, अतो द्व्यणुकाभावः, उभयथापि न परमाणुमङ्घट्टनं, प्रदेशाभावात्, कल्पना मनोरथमात्रं, असंयुक्तांशाभावात् तदेव तत् स्यात्, संयोगजनकं कर्मापि न सम्भवति, कारणान्तराभावात्, प्रयत्नवदात्मसंयोगे अदृष्टवदात्मसंयोगे चाभ्युपगम्यमाने निरवयवत्वात् तदेव तत् स्यात्, विशेषाभावाद् विभागस्याशक्यत्वाच्च, अतो द्व्यणुकस्याभावः ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

परमाणुद्व्यणुकयोः समवायो[2]ऽङ्गीक्रियते, स[3] सम्बन्धिनोरवस्थानमपेक्षते[4], सम्बन्धस्योभयनिष्ठत्वात्, स च नित्यः सदा सम्बन्धिसत्त्वमपेक्षते, अतोपि न द्व्यणुक उत्पद्यते, किञ्च समवायो नाङ्गीकर्तु शक्यः, संयोगेन तुल्यत्वात्, सम्बन्धत्वात् तस्य यथा सम्बन्धिनि सम्बन्धान्तरापेक्षा एवं समवायस्यापि, तथा सत्यनवस्थितिः ॥ १३ ॥

---

उत्कृष्टाणुपरिमाणमपीति द्व्यणुकपरिमाणं दूषित, उपहासेत्यादि लौकिकयुक्तितत्त्वमपि ये न जानन्ति ते कथं ब्रह्मतत्त्वं ज्ञास्यन्तीति व्यासेनोपहास इत्यर्थः ॥ ११ ॥

**उभयथापि न कर्मातस्तदभावः** ॥ १२ ॥ उभयथापि नेति परमाणुषु संयोगावच्छेदकदेशानङ्गीकारेवच्छेदकदेशकल्पने वा उभयथापि न परमाणुद्वयसंयोग., कुत ? यतो न कर्मात इत्यर्थ , उभयत्र सावच्छिन्ननिरवच्छिन्नसंयोगे कर्मणि चेत्यर्थः, प्रदेशाभावात् अवच्छेदकदेशाभावात् तैर्निरवच्छिन्नसंयोगानङ्गीकारादितिभावः, कल्पना मनोरथमात्रमिति पूर्वापर्यधोदेशरूपावच्छेदकमपि सर्वतोमुखे निरवयवे कस्याप्यनुभवाभावात् कल्पयितुं न शक्यते एवमप्यप्रामाणिककल्पने मनोरथमात्रं न वस्तुसिद्धिरितिभाव , संयोगजमित्यादि तथा च सयोगजं द्व्यणुक नोक्तकारणाभावात् कर्मापि न कारणान्तराभावात् समवायिकारणत्वाभिमतपरमाणुसत्त्वेऽप्यन्यकारणाभावान्न कर्मेत्यर्थ·, तदेवोपपादयन्ति प्रयत्नेत्यादि, अभ्युपेत्यादि तथा च तयो. कारणयो प्रलयेपि सत्त्वात् पूर्वमपि द्व्यणुकादिसृष्ट्यापत्त्या प्रलयानुपपत्ति , तत्कालविशेषस्यापि सहकारित्वाङ्गीकारेणाहुर्निरवयवेत्यादि, तदेवेत्यादि, संयुक्तमपि परमाणुद्वय परमाणुद्वयमेव पूर्ववत्तिष्ठेदित्यर्थः, ननु परमाणुनिष्ठदेशविभाग एव विशेष आरम्भकतावच्छेदको भविष्यतीत्यत आहुः विभागेत्यादि, तथाचाभ्युपगमे विभागस्यारम्भकावच्छेदकताया प्रमाणाभाव इतिभावार्थ , ननु भवत्वेव तथापि'अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रय. स्मृत'इति श्रीभागवते संज्ञाभेदात् द्व्यणुकस्याङ्गीकृतत्वात कथ तेनाविरोध इतिचेदुच्यते, श्रीभागवते हि 'चरमः सन् विशेषाणामनेकोसंयुत. सदा परमाणु. स विज्ञेयो नृणामैक्यभ्रमो यत' इति परमाणुलक्षणे 'असंयुतः सदा' इत्यनेन परमाणुसयोगविनाकृतमेव द्व्यणुक स्थूलात् सम्पन्न महतः सकाशादेव सृष्टेर्वेदपुराणप्रसिद्धत्वान्नतु नैयायिकरीत्यापि, परमाणुषु सार्वदिकसयोगनिषेधात् ॥ १२ ॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः** ॥ १३ ॥ सः समवाय·, सम्बन्धिनोः परमाणुद्व्यणुकयोः, अवस्थानं सत्त्व, अपेक्षते अङ्गीकर्तु शक्यते इत्यन्वयः, उभयेत्यादि उभयनियतत्वादित्यर्थ , स च समवायश्च, तस्य संयोगस्य, सम्बन्धान्तरं समवायरूप, तथा सति समवायस्यापि सम्बधिनि स्वरूपसम्बन्धाङ्गीकारे स्वरूपस्यापि सम्बन्धत्वेन वस्तुतः प्रतियोग्यनुयोगिसापेक्षत्वेनानवस्थेतिभाव. ॥ १३ ॥

---

१ देहलीयन्यायेनेत्यपि पाठः । २ समवायइतिपदं लुप्तं क्वचन । ३ अत्र सरहितः पाठस्तु प्रामादिकः । ४ अपेक्ष्येत्यपि पाठः साधु ।

## नित्यमेव च भावात् ॥ १४ ॥

परमाणोः कारणान्तरस्य च नित्यमेव भावात् सदा कार्यं स्यात् ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययोदर्शनात् ॥ १५ ॥

यद्रूपादिमत् तदनित्यं, परमाणोरपि रूपादिमत्त्वाद् विपर्ययः, अनित्यत्वमपरमाणुत्वञ्च, न च प्रमाणबलेन तदतिरिक्ते व्याप्तिरिति वाच्यं, अदर्शनात्, कार्यानुपपत्तिः श्रुत्यैव परिहृता ॥ १५ ॥

## उभयथापि च दोषात् ॥ १६ ॥

परमाणूनां रूपादिमत्त्वे तदभावे च दोषः, एकत्रानित्यत्वमन्यत्र कार्यरूपस्य निर्मूलत्वाच्च, हरिद्राचूर्णसम्बन्धे रूपान्तरस्य जननाद्विरोधोपि चकारार्थः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

सर्ववैदिकानामपरिग्रहाचात्यन्तं सर्वथा नापेक्ष्यते[1] ॥ १७ ॥ ३ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे तृतीयम्महद्दीर्घवद्वेत्यधिकरणम् ॥

---

नित्यमेव च भावात् ॥ १४ ॥ कारणान्तरस्येत्यादि, तथाच समवायिकारणत्वाभिमतपरमाणूनां तैः सहादृष्टवदात्मसंयोगस्य प्रयत्नवदात्मसंयोगस्य चिकीर्षासमानाधिकरणापरोक्षोपादानप्रत्यक्षरूपद्व्यणुककारणान्तरस्य सत्त्वादित्यर्थः, सर्वदा प्रलयकालेपि, कार्यं स्यात् द्व्यणुकादि ब्रह्माण्डान्तं सकलमेव कार्यं स्यात्, तथा च खण्डप्रलयानुपपत्तिः ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्ययोदर्शनात् ॥ १५ ॥ विपर्ययः परमाणुत्वेन भवदभिमताः अनित्याः रूपादिमत्त्वात् घटादिवदित्यनुमानेनानित्यत्वप्रसङ्गः, अपरमाणुत्वञ्चेति अनित्यत्वे सिद्धे नित्यस्य परमाणो. कैरप्यनङ्गीकारादपरमाणुत्वं स्यादित्यर्थ., प्रमाणबलेनेत्यादि, तथा च द्व्यणुकावयवाः सावयवाः अनित्या महदवयवत्वात् कपालिकावदित्यनुमानेन सावयवत्वानित्यत्वसाधनेनवस्थादिदोषेणानुकूलतर्काभावेन च हेतोरप्रयोजकत्वात् परमाणूनां नित्यत्व निरवयवत्वं च परमाणुपरिमाणेन केवलव्यतिरेकिहेतुना साधनीयमित्यर्थः, अतिरिक्तेति परमाण्ववृत्तित्वेनेति रूपात्मको हेतुर्विशेषणीय इत्यर्थः, अदर्शनात् द्व्यणुकजनकसंयोगाश्रयपरमाणूनां श्रुतिस्मृत्यादिषु क्वाप्यसिद्धत्वादित्यर्थ', कार्यानुपपत्तिः कारणत्वेनाभिमतसमवायिना परमाणूनां खण्डने ब्रह्माण्डान्तकार्यानुपपत्तिः ब्रह्मोपादानकसकलसत्कार्यस्य 'तस्माद्वा एतस्मात्' 'यतो वा इमानि' 'आनन्दाद्ध्येव खल्वि'त्यादिश्रुतिभिरुक्तत्वात् परिहृता वेदितव्या इत्यर्थः ॥ १५ ॥

उभयथापि च दोषात् ॥ १६ ॥ एकत्र परमाणूनां रूपाङ्गीकारे, अनित्यत्वं परमाणुरनित्यो रूपित्वात् घटवदित्यनुमानेनानित्यत्वं, अन्यत्र रूपानङ्गीकारपक्षे, कार्यरूपस्य तेजोजलद्व्यणुकादिरूपस्य, निर्मूलत्वं तद्रूपाणां कारणगुणपूर्वकत्वनियमेन कारणे रूपानङ्गीकारे सति स्फुटमेव निर्मूलत्वमित्यर्थः, रूपस्य कार्ये सजातीयरूपारम्भकतायां व्यभिचारमाहु हरि द्रेत्यादि ॥ १६ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ वैदिकानामित्यादि, तथा च नैयायिकसिद्धान्तस्य वेदे क्वाप्यनुपलम्भात् सर्वांशे न तच्छास्त्रस्य प्रामाण्यमतो नापेक्ष्यते व्यासैरुपेक्ष्यत इति फलितोर्थः ॥ १७ ॥

॥ इति द्वितीयद्वितीये तृतीयाधिकरणम् ॥ ३ ॥

---

१ नापेक्षत इत्यपि पाठ. क्वचन ।

अतःपरं बाह्यमतनिराकरणं, ते समुदायद्वयं जीवभोगार्थं संहन्यत इति मन्यन्ते, परमाणुसमूहः पृथिव्यादिभूतसमुदाय एकः, रूपादिस्कन्धसमुदायश्चापरः, रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः, तदुभयसम्बन्धे जीवस्य संसारस्तदपगमे मोक्ष इति,

## समुदाय उभयहेतुकेपि तदप्राप्तिः ॥ १८ ॥ ( २. २. ४. )

तत्र उभयहेतुकेपि समुदाये जीवस्य तदप्राप्तिः, क्षणिकत्वात्, सर्वक्षणिकत्वे जीव मात्रक्षणिकत्वे वा तदप्राप्तिः ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

क्षणिकत्वेपि पूर्वपूर्वस्योत्तरोत्तरप्रत्ययविषयत्वात् कारणत्वात् सन्ततेरेव जीवत्वाज्जडत्वाच्च न काप्यनुपपत्तिरिति चेन्न, उत्पत्तिमात्रनिमित्तत्वात्, अनुसन्धानाभ्युपगमे स्थिरत्वापत्तिः, सम्बन्धवियोगार्थं को वा यतेत ? स्थैर्याभावात् समुदायानुपपत्तिश्च ॥ १९ ॥

---

समुदायहेतुकेपि तदप्राप्तिः ॥ १८ ॥ बाह्यमतमिति केषाञ्चिदनित्यपदार्थानां तन्नाशानां चाङ्गीकारादर्धवैनाशिकनैयायिकनिराकरणस्मृत्या सर्वनाशवादिबाह्यमतस्मरणात्तन्मत निराक्रियत इत्यर्थः, ते बुद्धशिष्याश्चत्वारः वैनाशिकः सौत्रान्तिको विज्ञानवादी माध्यमिकश्चेति तेषु ये बाह्यार्थास्तित्ववादिनस्ते, समुदायद्वयं जीवानां भोगार्थं संहन्यत इत्यादि मिलित भवतीति मन्यन्ते, पृथिव्यादीति रूपरसगन्धस्पर्शाश्चतुर्विधा कठिनस्वभावाः संहताः सन्तः पृथिवीपदवाच्या भवन्ति रूपरसस्पर्शा. स्नेहनस्वभावा जलपरमाणवः संहता जलव्यवहारसम्पादका भवन्ति तथा रूपस्पर्शपरमाणव उष्णस्वभावाः संहतास्तेजोव्यवहारं सम्पादयन्ति तथा स्पर्शपरमाणवश्चलस्वभावाः संहता वायुव्यवहारभाज इति बाह्य एकः समुदायः, एतदतिरिक्तं तु कालाकाशात्मादि न वस्तु, आन्तर पञ्चस्कन्धसमुदाय द्वितीयमाहुः रूपेत्यादि, तत्रत्यपञ्चभेदानाहुः रूपविज्ञानेत्यदिना, रूप्यते ज्ञायतेनेनेति रूपं ज्ञानेन्द्रियाणि, अहमित्याकारमिन्द्रियजन्य विषयविषयकं ज्ञान विज्ञान अहङ्कार एव क्षणिकविज्ञानसन्तानः कर्ताभोक्ताहमित्यभिमानादात्मेत्युच्यते नत्वेतदतिरिक्तो नित्यः कश्चिदात्मास्ति, प्रियाप्रियविषयानुभवजनितसुखदुःखादिविषयकचित्तावस्थाविशेषो वेदनापदवाच्य., सविकल्पकज्ञान संज्ञापदवाच्यं, रागादयः क्लेशा. मदमानमात्सर्यादयः उपक्लेशाः धर्माधर्मौ चेति संस्कारस्कन्धः, स्कन्धशब्दः समूहवाची, तदुभयसम्बन्धे बाह्याभ्यन्तरोभयसमुदायसम्बन्धे, तदप्राप्तिः संसाराप्राप्ति, जीवस्य समुदायद्वयस्य चोत्पत्त्यनन्तरं द्वितीयक्षणे सम्बन्धस्तृतीयक्षणे च संसारः स न सम्भवति सर्वेषामेव क्षणिकत्वादित्याहुः क्षणिकेत्यादि, जीवमात्रेत्यादि, तथा च जीवक्षणिकत्वपक्षे जीवस्यैव द्वितीयक्षणेसत्त्वात् संसारासम्भव. ॥ १८ ॥

इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ पूर्वपूर्वस्य विज्ञानस्येत्यर्थः, उत्तरोत्तरप्रत्ययविषयत्वात् उत्तरोत्तरविज्ञानविषयत्वात्, कारणत्वात् पूर्वविज्ञानानां अनन्यथासिद्धनियतपूर्ववृत्तित्वात्, जीवत्वात् विज्ञानसन्ततेः जीवत्वात्, जडत्वात् जडसन्ततेर्जडत्वात्, नानुपपत्तिः आन्तरसन्ततेरविद्याया बाह्यसन्ततिसम्बद्धाया एवोत्पत्ते. बन्धस्य दीपसन्ततिवत्तत्सन्ततिनाशे च मोक्षस्य नानुपपत्तिरित्यर्थः, उत्पत्तिमात्रनिमित्तत्वात् उत्तरोत्पत्तिमात्रनिमित्तत्वात्, मात्रपदेन पूर्वजातसुखदु.खादिसंस्पर्शाविषयतया संसारित्वं व्यवच्छिद्यते, अनुसन्धानाभ्युपगमे सुखदु.खादिसंस्पर्शानुसन्धानाभ्युपगमे, स्थिरत्वापत्तिः सन्तानिनः स्थिरत्वापत्ति., तामेवोपपादयन्ति सम्बन्धेत्यादि, जीवस्य क्षणिकत्वाङ्गीकारे संसारसम्बन्धवियोगार्थं को वा यतेत ? विना यत्नं तद्वियोगे च सर्वेषां मोक्षापत्तिरितिभावः, समुदायेत्यादि क्रमिकोत्पत्तिमतां क्षणभङ्गुराणां समुदायोपि न सम्भवतीत्यर्थः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उत्तरोत्पत्तिरपि न सम्भवति, उत्पन्नस्य खलूत्पादकत्वं, अत उत्तरोत्पत्तिसमये पूर्वस्य नष्टत्वादुत्पत्तिक्षण एव स्थितिप्रलयकार्यकरणसर्वाङ्गीकारे विरोधादेकमपि न स्यात् ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

एका क्षणिकत्वप्रतिज्ञा, अपरा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति, वस्तुनः[2] क्षणान्तरसम्बन्धे प्रथमप्रतिज्ञा नश्यति, असति द्वितीया, द्वितीया चेन्नाङ्गीक्रियते तदा प्रतिबन्धाभावात् सर्वं सर्वत एकदैवोत्पद्येत ॥ २१ ॥

अपि च वैनाशिकाः कल्पयन्ति बुद्धिबोध्य[3]त्रयादन्यत् संस्कृतं क्षणिकञ्चेति, त्रयं पुनर्निरोधद्वयमाकाशञ्च, तत्रेदानीं निरोधद्वयाङ्गीकारं दूषयति,

## प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

प्रतिसङ्ख्यानिरोधो नाम भावानां बुद्धिपूर्वको विनाशः, विपरीतोऽप्रतिसङ्ख्यानिरोधः,

---

**उत्तरोत्पादे च पूर्वनिरोधात्** ॥ २० ॥ सौत्रपूर्वनिरोधादितिपदस्य पूर्वस्य नाशादित्यर्थः, कार्यकालवृत्तितया कारणत्वमभिप्रेत्याहु उत्पत्तिक्षणेत्यादि, विरोधादित्यादि, तथा चैकस्यैव पदार्थस्यैकस्मिन्नेव क्षणे उत्पादकस्थापकनाशकसामग्रीत्रयसम्मिलनस्य ते कार्यमात्रस्थले स्वीकारादेकस्या अपि कार्यं न स्यात्तिसृणामपि वा कार्यं स्यात्, तिसृणामिति चरमपक्षाङ्गीकारे तु स्थितिरव्याहतैवेति नाशोनुपपन्न , स्थितिसामग्र्यपेक्षया नाशसामग्र्या. प्राबल्यकल्पने तु क्षणिकपदार्थवादिनां क्षणमात्रमपि पदार्थस्थितिर्न स्यात् तस्मात्सूक्तमेकमपि न स्यादिति ॥ २० ॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॥ २१ ॥ पूर्वसूत्रे क्षणभङ्गवाद्यभिमतपुञ्जस्य कारणता निरस्ता अतः परं असत्येव हेतौ कार्योत्पत्तिरिति तदभ्युपगतमाकस्मिकमत दूषयति असतीत्यादि, क्षणिकत्वप्रतिज्ञा सर्वं क्षणिकमित्यभ्युपगम एव प्रतिज्ञा तेषां प्रथमा, अपरामाहुश्चतुर्विधेत्यादिना, चतुर्विधास्त्वेवं, आलम्बनप्रत्ययः समनन्तरप्रत्ययः अधिपतिप्रत्यय. सहकारिप्रत्ययश्चेति, इमान् चतुर्विधान् हेतून् प्राप्य विज्ञानस्कन्धात्मक चित्त वेदनास्कन्धात्मकान् चित्तचैत्तानुत्पादयति, तत्रालम्बनप्रत्ययो नाम विषय , तेन चित्तस्य नीलादिविषयाकारता सिध्यति, समनन्तरप्रत्ययो नाम पूर्वविज्ञानं, तेन बोधरूपता चित्तस्य जायते, अधिपतिप्रत्ययो नाम इन्द्रियाणि, तैः रूपादि नियतं गृह्यते, सहकारिप्रत्यय आलोकादि, तेन विषयस्पष्टता, एवं चतुर्भिर्हेतुभिर्विषयात्मक चित्तमुत्पद्यते, एवं चित्ताभिन्नहेतुजाना चैत्ताना सुखादीनां एत एव चत्वारो हेतव इति द्वितीया प्रतिज्ञा, क्षणान्तरसम्बन्ध इति, तथा च द्वितीयप्रतिज्ञाङ्गीकारे क्षणान्तरसम्बन्धाङ्गीकारे तु प्रथमक्षणे इन्द्रियनाशे सति विषयेन्द्रियसंयोग एव न स्यात्, तस्य द्विनिष्ठत्वात्, केन वा सह संयोग. स्यात ? इन्द्रियतत्संयोगविषयाणां त्रयाणामप्येकक्षणोत्पत्त्यङ्गीकारे कार्यकारणभाव एव न स्यात् कार्यं वा कारणं कुतो न स्यादित्यादि दूषण बोध्य, असतीत्यादि, तथा च कारणत्वाभिमत च न स्यात् कारणं वा कार्यं स्यादिति द्वितीयक्षणवृत्तित्वानङ्गीकारे 'चतुर्विधान् हेतून् प्रतीत्ये'त्यादिद्वितीयप्रतिज्ञाभङ्ग इत्यर्थः. द्वितीयेत्यादि, तथाचाभावमात्रादेव सकलकार्याङ्गीकारे कार्यकारणभाववैपरीत्यं यौगपद्य वा दोष स्यादित्यर्थः ॥२१॥

**प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्** ॥२२॥ एव चतु सूत्र्या तदुक्तमुत्पत्तिप्रकारं दूषयित्वा तदुक्त नाशप्रकार दूषयति प्रतीत्यादि, त व्याकर्तु पूर्वं तेषां मतमनुवदन्ति अपि चेत्यादिना, वैनाशिकाः सौगताः सर्वानित्यत्ववादिन. कल्पयन्ति, बुद्धिबोध्यत्रयादन्यत् भिन्नं यत तत् संस्कृतं पूर्वविज्ञानजं. संस्कारैरालयत्वेन व्यवहारयोग्य क्षणिकं तदपि, निरोधद्वयमाकाशञ्चेतित्रयं, एव पञ्च पदार्था इति, तत्र निरोधद्वयस्वरूपन्त्वत्रैव सूत्रे स्फुटं- आकाशस्वरूप तद्दूषणसूत्रे वाच्यं, तत्र क्षणिक संस्कृतं च पूर्वसूत्रे दूषित, आकाशं चाग्रे दूषणीय, इदानीं निरोधद्वयाङ्गीकारं दूषयन्ति, तयो स्वरूपमाहु प्रतिसङ्ख्यानिरोध इत्यादि, प्रतिकूला सङ्ख्या प्रतिसङ्ख्या, सन्तमिममसन्त करोमीत्याकारकतया भावप्रतीपा या बुद्धि सा प्रतिसङ्ख्या तत्पूर्वको विनाशः प्रतिसङ्ख्यानिरोध.,

---

१ कारणेत्यादिरपि पाठ । २ वस्तुत इतिपाठोपि साधु । ३ बुद्धिबोध्यमित्यपि पाठ. ।

त्रयमपि निरुपाख्यं, निरोधद्वयमपि न प्राप्नोति सन्ततेरविच्छेदात्, पदार्थानाञ्च नाशकसम्बन्धाभावात् प्रतिबन्धसम्बन्धाभावः, आद्यो निरोधः पदार्थविषयको व्यर्थः, द्वितीयः क्षणिकाङ्गीकारेणैव सिद्धत्वान्नाङ्गीकर्तव्यः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

प्रतिसङ्ख्यानिरोधान्तर्गताविद्याविनाशे मोक्ष इति क्षणिकवादिनो मिथ्यावादिनश्च मन्यन्ते, अविद्यायाः सपरिकराया निर्हेतुकविनाशे शास्त्रवैफल्यं, अविद्यातत्कार्यातिरिक्तस्याभावान्न सहेतुकोपि, न हि वन्ध्यापुत्रेण रज्जुसर्पो नाश्यते, अत उभयथापि दोषः ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्चोक्तमाकाशमप्यावरणाभावो निरुपाख्यमिति, तन्न, आकाशेपि सर्वपदार्थवद्वस्तुत्वव्यवहारस्याविशेषात् ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

सर्वोपि क्षणिकवादो बाधितः, स एवायम्पदार्थ इत्यनुस्मरणात्, अनुभवस्मरणयोरेकाश्रयत्वमेकविषयत्वञ्च ॥ २५ ॥

---

**विपरीतः** तादृशबुद्धिं विनापि जायमान अप्रतिसङ्ख्यानिरोध, **त्रयं** निरोधद्वयमाकाशञ्चेतित्रयमित्यर्थ, **निरुपाख्यमिति** अनिर्वाच्यमवस्त्वितियावत्, **निरोधद्वयं** प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधद्वयमित्यर्थ., **न प्राप्नोति** न सम्भवतीत्यर्थ, **सन्ततेरविच्छेदात्** समुदायद्वयं विभागे सति स्यादविच्छेदे च विभाजकासत्त्वाद द्वित्वमनुपपन्नमेवेतिभाव, कथ सन्तत्यविच्छेद इत्याकाङ्क्षायामाहु **पदार्थानामित्यादि**, तन्मते सर्वे पदार्था क्षणिकाः सजातीयसन्तानजननस्वभावा क्षणिकाना च नाशकसम्बन्धो न पूर्व दृष्ट इत्यन्त्यानामपि पदार्थानां नाशकसम्बन्धाभावात् पूर्ववदेव सन्ततिरनुवर्तिष्यत इतिहेतो **प्रतिबन्धसम्बन्धाभावः** प्रतिबन्धकस्य सन्ततावभाव इतिभावः, **व्यर्थः** भिन्नत्वेनोपपाद्यमानो व्यर्थ इत्यर्थ, **द्वितीय**. द्वितीयनिरोध, क्षणिकत्वादि तथा च सन्ततेरैक्यादैक्यसिद्धौ द्वितीयत्वेन निर्देशो व्यर्थ इत्यर्थ., तस्मादसङ्गतं सौगतमतमित्यर्थ ॥ २२ ॥

**उभयथापि च दोषात्** ॥ २३ ॥ एवम्पूर्वसूत्रे कार्यविचारेण निरोधद्वयं दूषयित्वात्र स्वरूपविचारेण दूषयतीत्याशयेन सूत्रमुपन्यस्य व्याकुर्वन्ति **प्रतिसङ्ख्येत्यादि**, उक्तनिरोधैकदेशभूतेविद्याविनाशे **मोक्षस्तद्दर्शनोक्तरीतिको** मोक्षो भवतीत्यर्थः, तदसङ्गत यतोविद्यायाः सहेतुकाया. सकार्याया **निर्हेतुके विनाशेङ्गीक्रियमाणेर्च्चसत्यचतुष्टयाभ्यासादिसाधनविशेषविधायकशास्त्रवैफल्यं**, तेन सहेतुकत्वोपगमे निर्हेतुकत्वप्रतिज्ञाहानिरपि, **मिथ्यावादिनोपि** निर्हेतुकत्वाङ्गीकारे शास्त्रवैफल्य तुल्य, **सहेतुकत्वपक्षेप्यविद्यातत्कार्यातिरिक्तस्य** नाश्यस्याभावान्नाशकस्यापि मिथ्यात्वात तत्र दूषणमविद्येत्यादिनोक्त्वा व्युत्पादयन्ति **न हीत्यादिना**, **उभयथापि** अविद्यानाशस्य निर्हेतुकत्वसहेतुकत्वपक्षद्वयेपीत्यर्थ· ॥ २३ ॥

**आकाशे चाविशेषात्** ॥ २४ ॥ अत.पर तन्मतसिद्धमाकाशं दूषयन्तीत्याहु **यच्चेत्यादि**, **आवरणाभावमात्रमाकाश** इति यदुच्यते तदसङ्गत, आकाशेपि भूतान्तरवद्वस्तुत्वव्यवहारस्य समानत्वात्, यथा हि भूतले घटो जले नौकेत्यादिव्यवहारस्तथाकाशेप्यत्र श्येनोत्र गृध्र इत्यादिव्यवहारस्य सत्त्वात ॥ २४ ॥

**अनुस्मृतेश्च** ॥ २५ ॥ एव क्षणिकवाद विशेषतो निराकृत्येदानीं सङ्क्षेपेण निराकरोतीत्याशयेनाहुः **सर्व इत्यादि**, अयमर्थ., क्षणिकवादी हि सर्वस्य क्षणिकत्वम्मन्यमानोनुभवितुरनुभवविषयस्य च सदृशसन्तानेन प्रत्यभिज्ञानमुपपादयति तदसङ्गतं, प्रत्यभिज्ञाने हि य. पूर्वं दृष्ट स एवायं पदार्थ इति योह पूर्वमद्राक्ष स एवाहमिदानीं पश्यामीत्याकार. प्रत्यभिज्ञायामत्र च पूर्वैतत्कालीनपदार्थानामैक्यम्प्रतीयते, सजातीयत्वस्य चानुभवाभावेन संस्कारस्मारणाद्यभावेन सजातीयप्रत्यभिज्ञानस्य वक्तुमशक्यत्वात् ॥ २५ ॥

---

१ प्रतिबन्धकेत्यादिरपि पाठः । २ आद्य इतिसमस्तमपि पदम् । ३ असिद्धत्वादित्यपि पाठ. । ४ उभयथापि चेत्यपि पाठः । ५ एव विषयत्वञ्चेत्यपि पाठ ।

## नासतोऽदृष्टत्वात् ॥ २६ ॥

अपि च, नानुपमर्द्य प्रादुर्भावं वैनाशिका मन्यन्ते, ततश्चासतः अलीकात् कार्यं स्यात्, तन्न, अदृष्टत्वात्, न हि शशशृङ्गादिभिः किञ्चित्कार्यं दृश्यते,

एवं सतः कारणत्वं पूर्वपादे उपपाद्य असतः कारणत्वं निराकृत्य व्यासचरणैर्वेदानामव्याकुलत्वे सम्पादितेपि पुनर्दैत्यव्यामोहनार्थं प्रवृत्तस्य भगवतो बुद्धस्याज्ञया "त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय अतथ्यानि वितथ्यानि दर्शयस्व महाभुज" "स्वागमैः कल्पितैस्त्वञ्च जनान् मद्विमुखान् कुरु" इत्येवंरूपया महादेवादयः स्वांशेनावतीर्य वैदिकेषु प्रविश्य विश्वासार्थं वेदभागान् यथार्थानपि व्याख्याय सदसद्विलक्षणामसदपरपर्यायामविद्यां सर्वकारणत्वेन स्वीकृत्य तन्निवृत्त्यर्थं जातिभ्रंशरूपं सन्यासपाषण्डं प्रसार्य सर्वमेव लोकं व्यामोहितवन्तः, व्यासोपि कलहं कृत्वा शङ्करं शप्त्वा तूष्णीमास, अतोऽग्निना मया सर्वतः सदुद्धारार्थं यथाश्रुतानि श्रुतिसूत्राणि योजयता सर्वो मोहो निराकृतो वेदितव्यः, प्रथमाध्याय एव तन्मतमनूद्य विस्तरेण निराकृतमिति नात्रोच्यते ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यद्यभावाद्भावोत्पत्तिरङ्गीक्रियते तथा सत्युदासीनानामपि साधनरहितानां सर्वोपि धान्यादिः सिध्येत, अभावस्य सुलभत्वात् ॥ २७ ॥ ४ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे चतुर्थं समुदाय उभयहेतुकेपीत्यधिकरणम् ॥

---

नासतोऽदृष्टत्वात् ॥ २६ ॥ एवमष्टभि सूत्रै वैनाशिकाभिमतक्षणिकवाद निराकृत्य तदभिमतामभावाद्भावोत्पत्ति निराकरोतीत्याशयेन सूत्रमुपन्यस्य व्याकुर्वन्ति अपि चेत्यादिना, नानुपमर्द्येत्यादि, बीजकपालादिकमनुपमर्द्याङ्कुरघटादिकञ्च नोत्पद्यतेतो नाशरूपाभावादेव कार्यजातमुत्पद्यत इति ते मन्यन्त इत्यर्थः, ततश्च अभावात् कार्योत्पत्तिस्वीकारे च, अलीकात् तेषां मते भावस्यावस्तुत्वेनालीकत्वाङ्गीकारादितिभाव, अदृष्टत्वात् अलीकात् कार्योत्पत्तेरदृष्टत्वादित्यर्थः, एवं सत इत्यादि, अत्र बुद्धाज्ञायां प्रमाण वक्तुं 'त्वञ्च रुद्रे'त्यादिवाक्योपन्यासः, इदं वाक्य वाराहपुराणे रुद्रगीतासु रुद्रेणागस्त्यम्प्रति सर्वदेवादीनुद्दिश्य भगवदाज्ञारूपमनूदितं, द्वितीयं 'स्वागमै'रिति तु पद्मपुराणोत्तरखण्डे सहस्रनामारम्भे महादेवेन पार्वतीम्प्रत्युक्तं, उभयमप्येवमवसेयं, 'शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमं येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि प्रथमं हि मया प्रोक्त शैवं पाशुपतादिक मच्छक्त्यावेशितैर्विप्रै सम्प्रोक्तानि ततः पर कणादेन तु सम्प्रोक्त शास्त्र वैशेषिकम्महत् गौतमेन तथा न्याय साङ्ख्यन्तु कपिलेन वै धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितं दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा बौद्धशास्त्रमसत् प्रोक्तन्नग्ननीलपटादिकं मायावादमसच्छास्त्रम्प्रच्छन्नम्बौद्धमुच्यते मयैव कथितं देवि कलौ ब्राह्मणरूपिणा अपार्थं श्रुतिवाक्यानान्दर्शयल्लोकगर्हितं कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते सर्वकर्मपरिभ्रष्टं वैकर्मत्वं तदुच्यते परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ब्रह्मणश्च पर रूप निर्गुण ते मयात्र हि सर्वस्य जगतोप्यत्र मोहनार्थं कलौ युगे वेदार्थवन्महाशास्त्रम्मायावादमवैदिक मयैव वक्ष्यते देवि जगतान्नाशकारणा'दिति, व्यासकलहादि तु 'व्यासो नारायणः साक्षात् शङ्करः शङ्करः स्वयं तयोर्विवादे सम्प्राप्ते किंकरः किं करोम्यह'मितितत्सम्प्रदाये प्रसिद्धाद्गणेशवाक्यादवसेय, ब्रह्मणः साकारता च 'वासना यदि भवेत् फलदात्री किं करिष्यति तदा मम काशी व्यापको यदि भवेत् परमात्मा तारकं किमिति नोपदिशेन्मा'मिति कीकटे मरणावस्थोक्तशङ्कराचार्यश्लोकादवसेया, निराकारस्योपदेशकत्वासम्भवात्, एवं पञ्चमस्कन्धीयजडभरतवाक्येषु 'अयञ्जनो नाम चलन् पृथिव्या'मित्यनेनावयवित्वमभिमानमात्रादेवेत्युक्त्वा 'एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात् परमाणवो ये अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेष' इत्यनेन परमाणुपुञ्जाद्विशेषाख्यदेहोत्पत्तिः, परमाणूनामविद्याकल्पितात्वञ्च यदुक्तं तदपि रहूगणस्य बाहिर्मुख्यं दूरीकर्तुं बहिर्मुखकल्पिताविद्याकल्पितप्रपञ्चस्यावस्तुत्वज्ञानेन तस्य वैराग्योत्पत्तौ प्रपञ्चासक्तौ निवृत्तायां हरावा-

---

१ तत्सर्वमित्यपि पाठः ।

एवं कारणासत्त्वं निराकृत्य विज्ञानवाद्यभिमतं प्रपञ्चासत्यत्व निराकरोति, स च ज्ञानातिरिक्तः प्रपञ्चो नास्तीत्याह तन्न,

## नाभाव उपलब्धेः ॥ २८ ॥ ( २. २. ५. )

अस्य प्रपञ्चस्य नाभावः, उपलब्धेः उपलभ्यते हि प्रपञ्चः, यस्तूपलभन्नेव नाहमुपलभ इति वदति स कथमुपादेयवचनः स्यात् ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

ननूपलब्धिमात्रेण न वस्तुसत्त्वं स्वप्नमायाभ्रमेष्वन्यथा दृष्टत्वात् इति चेन्न, वैधर्म्यात्, स्वप्नादिषु तदानीमेव स्वप्नान्ते वा वस्तुनोन्यथाभावोपलम्भात्, न तथा जागरिते, वर्षानन्तरमपि दृश्यमानः स्तम्भः स्तम्भ एव, स्वस्य मोक्षे प्रवृत्तिव्याघातश्चकारार्थः ॥ २९ ॥

## न भावोनुपलब्धेः ॥ ३० ॥

यदप्युच्यते बाह्यार्थव्यतिरेकेणापि वासनया ज्ञानवैचित्र्यं भविष्यतीति तन्न, वासनानां न भाव उपपद्यते, त्वन्मते बाह्यार्थस्यानुपलब्धेः, उपलब्धस्य हि वासनाजनकत्वं, अनादित्वेप्यन्धपरम्परान्यायेनाप्रतिष्ठैव, अर्थव्यतिरेकेण वासनाया अभावाद्वासनाव्यतिरेकेणाप्यर्थोपलब्धेरन्वयव्यतिरेकाभ्यामर्थसिद्धिः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

वासनाया आधारोपि नास्ति, आलयविज्ञानस्य क्षणिकत्वाद्वृत्तिविज्ञानवत् ।

एवं सौत्रान्तिको विज्ञानवादी च प्रत्युक्तः, माध्यमिकस्तु मायावादिवदत्यसम्बद्धभाषित्वादुपेक्ष्य इति न निराक्रियत आचार्येण ॥ ३१ ॥

---

सक्तिर्भविष्यतीत्येतदर्थं तथोक्त न तु तद्वास्तवतयोक्तं कार्यकारणभावनिरूपणार्थं तस्याप्रवृत्तत्वादग्रे च मोहनिवृत्तौ हरिभक्तिमेवोपदिष्टवानिति न काप्यनुपपत्ति ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः ॥२७॥ साधनरहितानां हलकर्षणादिव्यापारशून्यानामित्यर्थः ॥२७॥४॥

॥ इति द्वितीयद्वितीये चतुर्थाधिकरणम् ॥ ४ ॥

नाभाव उपलब्धेः ॥ २८ ॥ दशभिः सूत्रैर्वैशेषिकसौत्रान्तिकयोर्मते निराकृते विज्ञानवाद्यपि निराकृत एव तथापि कार्यांशे तन्मतं विलक्षणमिति तन्मत निराकरोतीत्याशयेनाहु एवं कारणेत्यादि ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९. ॥ पूर्वसूत्रोक्तस्य हेतोरनैकान्तिकत्व वारयितु दृष्टान्तासङ्गतिञ्च बोधयितुं सूत्रमुपन्यस्य व्याकर्तुमवतारयन्ति नन्वित्यादि, स्वस्येत्यादि, तन्मते सर्वस्यावस्तुत्वेनालीकत्वात्तद्गोचरप्रवृत्तेरपि तथात्वान्मोक्षस्याप्यलीकत्वापत्तिरित्यर्थ. ॥ २९ ॥

न भावोनुपलब्धेः ॥ ३० ॥ क्षणिकवाद्युक्तं ज्ञानवैचित्र्यहेतुं दूषयतीत्याशयं स्फुटीकुर्वन्ति यद्यपीत्यादिना ॥ ३० ॥

क्षणिकत्वाच्च ॥ ३१ ॥ प्रकारान्तरेणापि वासनां निराकरोतीत्याशयेनाहु वासनाया इति, वृत्तिज्ञानवत् इन्द्रियजन्यं ज्ञान वृत्तिज्ञानं तद्यथा क्षणिक तथा वासनाधारत्वेनाभिमतमालयविज्ञानमपि क्षणिकं, एवञ्च वासना कोत्पद्येत ? यदि च वृत्तिधाराधिकरणालयविज्ञानधाराया एव वासनाधाराधिकरणत्वं वदेत्तदापि तेषान्धारैव सर्वदा स्यान्न कदाप्युच्छेद इति मोक्षोच्छेद ॥ ३१ ॥

---

१ उपलभमान इत्यपि पाठ. । २ अपिस्थाने तु क्वचन ।

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

किं बहुना बाह्यवादो यथा यथा विचार्यते तथा तथा असम्बद्ध एवेत्यलं विस्तरेण, चकाराद्वेदविरोधो मुख्यः ॥ ३२ ॥ ५ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे पञ्चमन्नाभाव उपलब्धेरित्यधिकरणम् ॥

विवसनसमयो निराक्रियते,

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥ ( २. २. ६. )

ते ह्यन्तर्निष्ठाः प्रपञ्च उदासीनाः सप्त विभक्तीः परेच्छया वदन्ति, स्याच्छब्दोभीष्टवचनः, अस्तिनास्त्यवक्तव्यानां प्रत्येकसमुदायाभ्यां स्यात्पूर्वकः सप्तप्रकारो भवति, तदेकस्मिन् योजयन्ति, तद् विरोधेनासम्भवादयुक्तम् ॥ ३३ ॥

---

**सर्वथानुपपत्तेश्च** ॥ ३२ ॥ अनुपपत्तिश्चैव, विज्ञानधारया बाह्यव्यवहारपदार्थस्थिरताया उपपादने नानासुवर्णरौप्यादिसाध्यव्यवहारस्थिरतादिस्थले तयोरेकैकव्यक्त्यैव विज्ञानधारया सर्वोपपत्तावनेकव्यक्तिसम्पादनप्रयासानुपपत्ति, एव सकलपदार्थेष्वनुपपत्तिरवसेया ॥ ३२ ॥ ५ ॥

॥ इति द्वितीयद्वितीये पञ्चमाधिकरणम् ॥ ५ ॥

**नैकस्मिन्नसम्भवात्** ॥ ३३ ॥ अधिकरणमवतारयन्ति **विवसने**त्यादि, एत एव क्षपणका आर्हता जैनाश्चोच्यन्ते, मुक्तकच्छा पूर्वं दूषिता , इदानीं विवसना दूष्यन्ते, सौगतवज्जैना अपि जगति परमाणुकारणतां वदन्तीति तदनन्तर तन्निरूपणं, दूष्यांशमनुवदन्ति ते हीत्यादि, **सप्त विभक्ती** सप्तभङ्गीनयं नाम न्यायं, **परेच्छया वदन्ति** स्वेषामन्तर्निष्ठत्वात् परेषां विवक्षानुसारेण यथोचित वदन्तीत्यर्थ , तेषा मतप्रकार उच्यते, तत्र **स्याच्छब्दो**-व्ययो**भीष्टवचनः**, अतोस्त्यादिभेदैस्तेषां समय सप्तविधो भवति स्याच्छब्दयोगात् सोग्रे वक्तव्य., ते ह्येव मन्यन्ते, जीवजडात्मक बोधाबोधात्मक जगदेतन्निरीश्वर तेन समासत पदार्थद्वयमेव, विस्तरतस्तु जगत् षड्द्रव्यात्मक तेषां मते, तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशाख्यानि, तत्र जीवास्त्रिविधा बद्धा योगसिद्धा मुक्ताश्च, धर्मो नाम गतिमता गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी, अधर्मश्च स्थितिहेतुभूतो व्यापक', पुद्गलो नाम वर्णगन्धरसस्पर्शवद्द्रव्य, तच्च द्विविध परमाणुरूपं तत्सङ्घातात्मकपवनज्वलनसलिलधरणीतनुभवनादिकञ्च, कालस्तु अभूदस्तिभविष्यतीतिव्यवहारहेतुरणुरूपो द्रव्यविशेष , आकाशोप्येकोनन्तप्रदेशश्च, षड्द्रव्येषु परमाणुव्यतिरिक्ता. पञ्चास्तिकाया इति व्यवह्रियन्ते, तथा हि जीवास्तिकायो धर्मास्तिकायोधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकायश्चेति, अस्तिकायशब्दोनेकदेशवृत्तिद्रव्ये रूढ , तत्र जीवास्तिकायस्त्रिविधजीवात्मको व्याख्यात., धर्मास्तिकाय. प्रवृत्त्यनुमेय , अधर्मास्तिकाय स्थित्यनुमेय., पुद्गलास्तिकायस्तु परमाणुव्यतिरिक्तानि चत्वारि भूतानि स्थावरजङ्गमरूपाणि, परमाणवस्तु नास्तिकायपदवाच्याः, परमाणवोपि तेषां मत एकविधा न चतुर्विधा , पृथिव्यादिभेदस्तु परमाणुपरिणामकृतः, आकाशास्तिकायो द्विविधो लोकाकाशोलोकाकाशश्चेति, तत्रोपर्युपरिस्थितानां लोकानामन्तर्वर्ती लोकाकाश , तेषामुपरि मोक्षस्थानमलोकाकाशस्तत्र हि न लोका सन्तीति, एवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ, जीवानां मोक्षोपयोगिनमपरमपि सङ्ग्रहं वदन्ति जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा इति, जीवाजीवौ प्रपञ्चितौ, तत्र जीवस्तु ज्ञानवीर्यसुखगुण. सावयवो देहपरिमाणः, अजीवस्तु जीवभोग्य वस्तुजातं, आस्रवसंवरनिर्जराख्यः पदार्था प्रवृत्तिरूपाः प्रपञ्च्यन्ते, द्वेधा प्रवृत्तिः सम्यङ्मिथ्या च, तत्र मिथ्याप्रवृत्तिरास्रव , आस्रावयति पुरुष विषयेष्वितीन्द्रियप्रवृत्तिरास्रव , इन्द्रियद्वारादिना पौरुषं ज्योतिर्विषयान् स्पृशद्रूपादिरूपेण परिणमत इति, अन्ये त्वार्हता कर्माण्यास्रवमाहुः, तानि हि कर्तारमभिव्याप्यास्रवन्ति कर्तारमनुगच्छन्तीत्यास्रव , सेय मिथ्याप्रवृत्तिरनर्थहेतुत्वात्, संवरनिर्जरौ तु सम्यक्प्रवृत्ती, तत्र शमदमादिरूपा प्रवृत्तिः संवर , सा हि आस्रवत् स्रोतसो द्वार संवृणोतीति संवर इत्युच्यते, निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणाद्यानमौनवीरासनतिष्ठतिभोजनकेशोल्लुञ्चनादिलक्षणमर्हदुपदेशान्तर्गतं तप., तद्धि सुखदु खोपभोगेन पुण्यापुण्य नि शेषं जरयतीति निर्जर उच्यते, बन्धस्त्वष्टविध कर्म, तत्र ज्ञानावरणीयं दर्शनावरणीय मोहनीयमन्तरायमिति चतुर्विधं घाति कर्म, तत्र सम्यग्ज्ञान न मोक्षसाधन महि

नन्वु कथं बहिरुदासीनस्य तद्दूषणमत आह,

## एवञ्चात्माकार्त्स्न्यम् ॥ ३४ ॥

एवमपि सत्यात्मनो वस्तुपरिच्छेदादकार्त्स्न्यं न सर्वत्वम् ।

अथवा शरीरपरिमाण आत्मा चेत्तदा सर्वशरीराणामतुल्यत्वादात्मनो न कार्त्स्न्यं न कृत्स्नशरीरतुल्यत्वम् ॥ ३४ ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

शरीराणामवयवोपचयापचयानुसारेणात्मनोपि देवतिर्यङ्मनुष्येष्ववयवोपचयापचयाभ्यां तत्तुल्यता स्यात् तथा सति पर्यायेणाविरोध इति न वक्तव्यं, तथा सति विकारापत्तेः[1] सङ्कोचविकासेपि विकारस्य दुःपरिहरत्वात् ॥ ३५ ॥

---

ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादितिविपर्ययो ज्ञानावरणीयं कर्मोच्यते, आर्हतदर्शनान्न मोक्ष इतिज्ञान दर्शनावरणीय कर्म, बहुषु विप्रतिषिद्धेषु मोक्षमार्गेषु तीर्थंकरैरुपदिष्टेषु विशेषानवधारण मोहनीयं कर्म, सन्मोक्षमार्गप्रवृत्तानां तद्विघ्नकर विज्ञानमन्तराय कर्म, तद्धि जीवगुणानां ज्ञानदर्शनवीर्यसुखानां घातकरमितिघाति कर्मेत्युच्यते, वेदनीय नामक गोत्रिकमायुषमितिचतुर्विधमघाति कर्म, तद्धि शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूत, तत्र वेदनीयं नाम शुक्लपुद्गलविपाकहेतुः, तद्विबन्धोपि न मोक्षपरिपन्थी तत्त्वज्ञानाविघातकत्वात्, शुक्लपुद्गलारम्भकं वेदनीयकर्मानुगुण नामिक कर्म, तद्धि शुक्लपुद्गलस्याद्यावस्थां कलिलबुद्बुदादिरूपामारभते, गोत्रिकं त्वव्याकृतं ततोप्याद्य शक्तिरूपेणावस्थितं, आयुष्क तूत्पादद्वारेणायुष्कायति कथयन्तीति, तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि, तदेतत् कर्माष्टक पुरुषबन्धकत्वाद्बन्ध इत्युच्यते, मोक्षस्तु विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्य स्वस्वरूपाविर्भावस्तादृशस्योपरिदेशावस्थानं वा, स च सम्बन्धनिवृत्तौ नित्यसिद्धार्हदनुग्रहाद्भवतीति, एव जीवादय पदार्था व्याख्याता, एतत् सर्वं वस्तुजात सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्त सप्तभङ्गीनयं नाम न्यायमवतारयन्ति स्यादस्ति स्यान्नास्ति स्यादस्तिचनास्तिच स्यादवक्तव्य स्यादस्तिचावक्तव्य स्यान्नास्तिचावक्तव्य स्यादस्तिचस्यान्नास्तिचावक्तव्यश्चेति, स्याच्छब्दो निपातः, यथाहुः "वाक्येष्वनेकान्तद्योती गम्यम्प्रति विशेषण स्यान्निपातोर्थयोगित्वात् तिङन्तप्रतिरूपक" इति, तन्मतमिद दूषयन्ति तद्विरोधेनासम्भवादयुक्तमिति, अयमर्थ, तन्मतसिद्धनिखिलपदार्थानां मध्य एकैकं पदार्थं धृत्वा तस्मिन् तस्मिन् सप्तभङ्गीनयावतार कर्तव्य., यथा हि जीवमुपादाय जीवः स्यादस्ति जीवः स्यान्नास्ति जीवः स्यादस्तिचनास्तिच जीव स्यादवक्तव्य जीवः स्यादस्तिचावक्तव्य. जीव. स्यान्नास्तिचावक्तव्यः जीव. स्यादस्तिचस्यान्नास्तिचावक्तव्यश्चेति, इतिरीत्या सर्वत्र पदार्थेषु सप्तभङ्गान्वये क्रियमाणे एकस्यापि पदार्थस्य व्यवस्था न स्यादिति तन्मतरीत्यैव तन्मतोच्छेद सुकर इति भावार्थ ॥ ३३ ॥

**एवञ्चात्माकार्त्स्न्यम्** ॥ ३४ ॥ सूत्रमवतारयन्ति **नन्वित्यादि**, व्याकुर्वन्ति **एवमित्यादि, एवं** आत्मनिष्ठतया बहिर्दूषणानङ्गीकारे सत्यपि परमाणुभ्य एव सृष्ट्यङ्गीकारेणात्मनो वस्तुपरिच्छेदाङ्गीकारादकार्त्स्न्यं **न सर्वत्वं** स्यात्, तथा च मोक्षदशायामलोकाकाशवृत्तित्वेन तदाकाशावरणसम्भवान्मोक्षदशायां निरावरणत्वभङ्गप्रसङ्गः, नन्वाकाशावरणं नावरण दिगम्बरादौ तथाप्रसिद्धेरत आहु. **अथवेत्यादि**, तथा च मनुष्यशरीरपरिमाणस्य मनुष्यात्मनः कर्मविशेषेण गजशरीरप्रवेश एकदेश एव जीवस्तिष्ठेद्देशान्तरञ्च नैरात्म्यं स्यात्, **न कार्त्स्न्यं न** जीवस्य गजशरीरपरिमाणत्वम् ॥ ३४ ॥

**न च पर्यायादप्यविरोधो विकारादिभ्यः** ॥३५॥ किञ्चिदाशङ्क्य परिहरन्तीत्याशयेन व्याकुर्वन्ति **शरीराणामित्यादिना**, अयमर्थ, जीवो हि नानाविधेन पूर्वोक्तकर्माष्टकेन ज्ञानावरणीयादिना तत्तच्छरीरेषु प्रविशति ततो निर्गच्छति च, तानि च शरीराणि नानापरिमाणानि तेषामवयवोपचयापचयानान्दृष्टत्वात्, एवं देवादिशरीरप्रविष्टजीवस्यापि परिमाणनानात्वेन नानात्व वक्तव्यं, एवञ्च क्रमेङ्गीकार्ये प्रत्येकजीवस्वरूपाणां भेदादनवस्था, तत्र क्रमिकपरिमाणभेदमादाय परिमाणानाम्परस्परं विरोधो जीवानाम्भेदाङ्गीकारेण समाधेय इति सूत्रांशेनाशङ्क्य परिहरति **नचे-**

---

१ विकासापत्तेरिति त्वशुद्ध पाठ ।

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अन्त्यावस्थितिर्मुक्तिसमयावस्थितिस्तस्माद्धेतोः, पूर्वदोषपरिहाराय **चोभयनित्यत्वं** भवेदणुत्वं वा महत्त्वं वा, उभयथापि शरीरपरिमाणो न भवतीति न तवार्थसिद्धिः ॥३६॥६॥

**इति द्वितीयाध्याये द्वितीयपादे षष्ठं नैकस्मिन्नसम्भवादित्यधिकरणम् ॥**

पराभिप्रेतान् जडजीवान्निराकृत्येश्वरं निराकरोति,

वेदोक्तादणुमात्रेपि विपरीतन्तु यद् भवेत् ।
तादृशं वा स्वतन्त्रं चेदुभयं मूलतो मृषा ॥

तार्किकादिमतं निराकरोति,

## पत्युरसामञ्जस्यात् ॥ ३७ ॥ ( २. २. ७. )

**पतिश्चेदीश्वरस्तस्माद्भिन्नस्तदा** विषमकरणाद्वैषम्यनैर्घृण्ये स्याताम्, कर्मापेक्षायां त्वनीश्वरत्वं, युक्तिमूलत्वाद्दोषः, असामञ्जस्याद्धेतोर्न पतित्वेनेश्वरसिद्धिः ॥ ३७ ॥

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

जीवब्रह्मणोर्विभुत्वादजसंयोगस्यानिष्टत्वात् पतित्वानुपपत्तिः, तुल्यत्वादप्यनुपपत्तिरिति चकारार्थः ॥ ३८ ॥

त्यादिना, एव न वक्तव्य, कुत ? **विकारादिभ्यः** विकारसावयवत्वानित्यत्वाना प्राप्तेर्लोकायतमतादविशेषप्रसङ्गात्, **तथा सति** तन्मततुल्यत्वाङ्गीकारे सति, मुष्टिस्थापितपटस्य बहि प्रसारणेन यथा सङ्कोचविकासशालित्व पटे तथा जीवानामपि सूक्ष्मस्थूलशरीरसम्बन्धेन सङ्कोचविकासयोरेव तन्मतेङ्गीकारादस्तु तथैवेतिचेत्तत्राहुः **विकारस्येत्यादि**, तथाच जीवाना पटतुल्यतया सङ्कोचविकासाङ्गीकारे तत्तुल्यतया विकारानित्यत्वाद्यापत्तौ बन्धमोक्षव्यवस्थैव स्यादनुपपन्ना तत्साधनानामाचरणञ्चेतिभाव. ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ दूषणान्तर वदतीत्याशयेनाहु. **अन्त्येत्यादि**, दिगम्बरैर्मोक्षावस्थागतो यो जीवस्तत्परिमाणमवस्थितमित्युच्यते मुक्तस्य जीवस्य देहान्तराभावात्तत्परिमाणस्य नित्यत्वं, **तस्माद्धेतोः** मुक्तावस्थजीवपरिमाणनित्यताहेतो , **पूर्वदोषेत्यादि** चार्वाकमतीयविकाराङ्गीकारेण जीवानित्यत्वं, किं तज्जीवपरिमाण फलितमित्याहु **महत्त्वं** परममहत्त्वमित्यर्थ , **उभयथापि** अवस्थाद्वयेपि, **तवार्थसिद्धिः** जीवनित्यत्वसिद्धि , एतेषु षट्स्वप्यधिकरणेषु ब्रह्म जगदुपादान नवेतिसन्देह , तन्मतमेव सन्देहबीजं, नेतिपूर्व· पक्षः, वेदविरुद्धसकलसमयाना व्यासपादैरेव दूषितत्वात् ब्रह्मैवोपादानमितिराद्धान्त , षष्ठे तु ब्रह्मैव विरुद्धधर्माधार नेतरदितिनियमो युक्तो नवेतिसन्देहे स्याद्वादिभि सर्वत्रैव तथाङ्गीकारान्नेतिपूर्व पक्ष·, स्याद्वादस्यासङ्गतत्वाद्ब्रह्मैव तथेति नियमो युक्त एव श्रुत्या भक्तप्रत्यक्षेण चावगतत्वादितिसिद्धान्त , एतावदधिकं पूर्वतो ज्ञेयम् ॥ ३६ ॥ ६ ॥

**इति द्वितीयद्वितीये षष्ठाधिकरणम् ॥ ६ ॥**

**पत्युरसामञ्जस्यात्** ॥ ३८ ॥ अधिकरणमवतारयन्ति **परेत्यादि**, **पराभिप्रेतान् जडजीवान्निराकृत्येत्यादि**, तथा च चार्वाकादिमतसिद्धान्निराकृत्येत्यर्थ , नन्वीश्वरवादस्य वेदानुसारित्वात् कुतस्तन्निराकरणमित्यत आहुः **वेदोक्तेत्यादि**, पराभिप्रेतेश्वरनिराकरणेपि विशेषमाहु **तार्किकादीति**, **तार्किकाः** नैयायिकाः वैशेषिकाश्च, **आदिपदेन** हैरण्यगर्भा· पातञ्जला. कापालिका. कालामुखा. पाशुपता· शैवाश्च, एतानि मतानि प्रकाशे स्फुटानीति नेह प्रपञ्च्यन्ते, सूत्रार्थस्तु तार्किकाद्यभिमतः **पतिरीश्वरो** नोपपद्यते, कुतः ? **असामञ्जस्यात्** वैषम्यनैर्घृण्यादिदोषरूपासामञ्जस्यादित्यर्थ ॥ ३७ ॥

**सम्बन्धानुपपत्तेश्च** ॥ ३८ ॥ ननु सेव्यसेवकभाव एव सम्बन्धोस्त्वित्यत आहु. **तुल्यत्वादिति**, विभुत्वादिना तुल्यत्वाददृष्टादेव भोगोपपत्तेरीश्वरानपेक्षणादितिभावः ॥ ३८ ॥

---

१ मुक्तिसमुपस्थितिरित्यपि पाठ । २ कर्मापेक्षयेत्यपि क्वचन ।

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

स च ईश्वरो जगत्कर्तृत्वेन कल्प्यमानो लौकिकन्यायेन कल्पनीयः, स चाधिष्ठित एव किञ्चित् करोतीतीश्वरेप्यधिष्ठानमङ्गीकर्तव्यं, तस्मिन् कल्प्यमाने मतविरोधः, अनवस्था, असम्भवश्च ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

करणवदङ्गीकारेसम्बन्धदोषः परिहृतो भवति, तच्च न युक्तं, भोगादिप्रसक्तेः ॥४०॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

ईश्वरः प्रकृतिजीवनियमार्थमङ्गीकृतः, तत्तु तयोः परिच्छेदे सम्भवति, ततश्च लोकन्यायेन जीवप्रकृत्योरन्तवत्त्वं भवेत्, ततश्चानित्यतायां मोक्षशास्त्रवैफल्यं, एतद्दोषपरिहाराय विभुत्वनित्यत्वेङ्गीक्रियमाणे सम्बन्धाभावादसर्वज्ञता वा स्यात्, तस्मादसङ्गतस्तार्किकवादः ॥ ४१ ॥ ७ ॥

॥ इति द्वितीयाध्याये द्वितीयपादे सप्तमम्पत्युरसामञ्जस्यादित्यधिकरणम् ॥

भागवतमते कश्चिदंशं निराकरोति, ते चतुर्व्यूहोत्पत्तिं वदन्ति, वासुदेवात् सङ्कर्षणः, तस्मात् प्रद्युम्नः, तस्मादनिरुद्ध इति ।

## उत्पत्त्यसम्भवात् ॥ ४२ ॥ ( २. २. ८ )

तत्रैषामीश्वरत्वं सर्वेषामुत सङ्कर्षणस्य जीवत्वं अन्यान्यत्वम्? उत्पत्तिपक्षे जीवस्योत्पत्तिर्न सम्भवति, तथा सति पूर्ववत् सर्वनाशः स्यात् ॥ ४२ ॥

---

**अधिष्ठानानुपपत्तेश्च** ॥३९॥ अधिष्ठित एव शरीरवानेव, तस्मिन् शरीरे, अनवस्थेति भूतावेशन्यायेन तत्तत्कार्यैकारणार्थं जीवादृष्टवशात्तत्तच्छरीरग्रहण करोतीश्वर इत्युच्यमाने तदीश्वरशरीरकरणमप्यशरीरस्य न सम्भवतीति ततोपि पूर्वं तच्छरीरहेतुभूतं शरीरान्तरमुरीकार्यमेवं ततोपि पूर्वमित्यनवस्थेत्यर्थः, नन्वीश्वरः स्वसामर्थ्यादेव शरीरं गृह्णातीति न शरीरान्तरापेक्षेति नानवस्थेतिचेन्न, तथा सति सामर्थ्यादेव सर्वसम्भव एकस्यापि शरीरस्य ग्रहणवैयर्थ्यापत्तिः, तत्रेष्टापत्तौ स्वसिद्धान्तव्याघातः ॥ ३९ ॥

**करणवच्चेन्न भोगादिभ्यः** ॥ ४० ॥ परोक्तम्परिहारमाशङ्क्य दूषयतीत्याहु. करणवदित्यादि, द्वितीयार्थे वतिः करणमिवेत्यर्थः, तथा च शरीररहितोपि जीवो भूतावेशन्यायेन मनश्चक्षुरादि स्वस्य भोगार्थं प्रेरयति तादृशे कार्ये करणञ्च भवति तथेश्वरोपि भविष्यति जीवानां नियामकत्वलक्षणः सम्बन्धोप्युपपद्यत इत्यत आहुः तच्च नेत्यादि ॥ ४० ॥

**अन्तवत्त्वमसर्वज्ञता वा** ॥ ४१ ॥ दूषणान्तरादपि तार्किकप्रतिपन्नो य ईश्वरः स नाङ्गीकर्तुं शक्य इत्याहुः **ईश्वर** इत्यादि, प्रकृतेर्जीवानाञ्चेत्यर्थ., **तयोः** प्रकृतिजीवयोः, यद् व्यापकं तन्नान्यनियम्यमीश्वरवदित्यत.परिच्छिन्नता तयोरुरीकार्या तथा च सति घटादिदृष्टान्तेनान्यनियम्यता सुलभा, इत्थञ्च परिच्छिन्नस्यानित्यत्वनियमान्मोक्षोच्छेद इत्यर्थः, सम्बन्धाभावादिति विभुद्वयसन्निकर्षाभावादित्यर्थ·, तथा च तैरीश्वरे लौकिकप्रत्यक्षस्यैवाङ्गीकारात्तस्य च लौकिकसन्निकर्षजन्यत्वनियमत्वापत्त्याशक्यवचना सार्वज्ञापत्तिर्विरुद्धैवेत्यर्थ. ॥ ४१ ॥ ७ ॥

इति द्वितीयद्वितीये सप्तमाधिकरणम् ॥ ७ ॥

**उत्पत्त्यसम्भवात्** ॥४२॥ अधिकरणप्रयोजनमाहु भागवतेत्यादि, ननु स्मृतिरपि प्रमाणमेवेति कथं तदर्थनिराकरणमत आहुः ते चेत्यादि, ते नारदपञ्चरात्रादिभागवतागमवक्तार·, चतुर्व्यूहोत्पत्तिं चतुर्भ्यो व्यूहेभ्य उत्पत्तिमित्यर्थः, तथा चायमंशो निराकार्य इत्यर्थः, न'न्वेकोहं बहु स्या'मित्यादौ बहुधाभवनस्य श्रुतिसिद्धत्वात् को विरुद्धांश इत्यत आहुः तत्रेत्यादि, अन्यान्यत्वमिति अन्ययोः प्रद्युम्नानिरुद्धयोः अन्यत्वं जडत्वमित्यर्थ., तथा च

---

१ सति भवतीत्यपि पाठ । २ विभुनित्यत्व इत्यपि पाठ ।

# ॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

## न वियदश्रुतेः ॥ १ ॥ ( २. ३. १. )

श्रुतिवाक्येषु परस्परविरोधः परिह्रियते विप्रतिषेधपरिहाराय, मीमांसायास्तदर्थं प्रवृत्तत्वात् शक्त्यविरोधाभ्यां, तथा च ब्रह्मवादे जडजीवयोर्विरुद्धांशनिराकरणाय तृतीयपादारम्भः, द्विविधा हि वेदान्ते सृष्टिः, भूतभौतिकं सर्वं ब्रह्मण एव विस्फुलिङ्गन्यायेनैकः[1], अपरो[2] वियदादिक्रमेण, सा चानामरूपात्मनो[3] नामरूपत्वेनाभिव्यक्तिः[4], सजडस्यैव कार्यत्वात्, तस्य जीवस्य त्वंशत्वेनैव न नामरूपसम्बन्धः, "अनित्ये जननं नित्ये परिच्छिन्ने समागमः नित्यापरिच्छिन्नतनौ प्राकट्यञ्चेति सा त्रिधा," तत्र क्रमसृष्टौ सन्देहः, छान्दोग्ये हि "सदेव सौम्येदमग्र[5] आसीदेकमेवाद्वितीयमि"त्युपक्रम्य "तदैक्षत तत्तेजोसृजते"तितेजोबन्नसृष्टिरुक्ता, न वाय्वाकाशयोः, तैत्तिरीयके पुनः "ब्रह्मविदाप्नोति परमि"त्युपक्रम्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति आकाशादिसृष्टिरुक्ता, उभयमपि क्रमसृष्टिवाचकमित्येकवाक्यता युक्ता, छान्दोग्ये मुख्यतया सृष्टिस्तैत्तिरीये गौणी, मुख्या त्वग्रे वक्ष्यते "सोकामयते"-त्यादिना ।

तत्र संशयः, किमाकाशमुत्पद्यते न वेति ।

किं तावत् प्राप्तम् ?

नोत्पद्यत इति, कुतः ? अश्रुतेः, श्रुतिवादिनां श्रुत्यैव निर्णयः, श्रुतौ पुनर्मुख्ये[6] क्रमसृष्टौ न श्रूयते ॥ १ ॥

---

न वियदश्रुतेः ॥ १ ॥ तृतीयपादं व्याचिख्यासवस्तत्प्रयोजनं सङ्गतिञ्चाहुः श्रुतीत्यादि, द्वितीयपादे श्रुतिविरुद्धस्मृतिनिराकरणेन स्मृतिविरोधस्याकिञ्चित्करत्वात् तासामेव प्रमेयविरोधो न श्रुतीनामित्यविरोधः स्थापितः, तृतीये पादे श्रुतिवाक्येषु परस्परविरोधः परिह्रियते, विप्रतिषेधोप्रामाण्यं श्रुतीनां तत्परिहारायेत्यर्थः, मीमांसायाः उत्तरमीमांसायाः, शक्त्यविरोधाभ्यामिति शक्तिः भगवत्सामर्थ्यं, अविरोधः वेदवाक्यानामविरोधः, यदा हि लोकानामज्ञानकृतसन्देहाद्वेदार्थनिर्णयाभावो दृष्ट आचार्यैस्तदा वेदार्थभूतस्य ब्रह्मणः सामर्थ्यं वेदवाक्यानाम्परस्परविरोधाभावञ्च स्वयमाकलय्य ताभ्यां कृत्वा प्रमेयाविरोधार्थं मीमांसां प्रवर्तितवानित्यर्थं , ननु प्रथमपाद एव शक्त्यविरोधाभ्यां श्रुतिविरोधस्य परिहृतत्वादस्य गतार्थत्वं स्यादत आहु तथा चेत्यादि, तथा तेनैव प्रकारेण, चोवधारणे, ब्रह्मवादे सर्वं वस्तुजातं ब्रह्मेतिवादे, तथा च पूर्वोक्तलक्षणविरोधपरिहारार्थत्वादस्य न गतार्थतेतिभावः, अवसरोत्र सङ्गतिरवसेया, एकः साक्षात्सृष्टिप्रकार., अपरः क्रमिकसृष्टिप्रकार , अनामरूपात्मनः सृष्टेः पूर्वमनभिव्यक्तनामरूपात्मनोंशिनः परमात्मन इत्यर्थः, नामरूपत्वेनाभिव्यक्तिः नामरूपात्मकतया व्यवहारविषयतेत्यर्थ., ननु सर्वस्य ब्रह्मरूपत्वे सृष्टिरेव न स्यात् तस्योत्पत्तिरूपत्वाद्ब्रह्मणश्चाजत्वादत आहुः अनित्येत्यादि, अनित्ये अनित्यत्वेन व्यवहारविषये, तत्र क्रमेत्यादि प्रकृतमुच्यते, उभयं छान्दोग्योक्तन्तैत्तिरीयोक्तञ्चेत्यर्थः, छान्दोग्य इत्यादि, तथा च छान्दोग्ये तेजसः कर्मत्वेन कथना"त्तदसृजते"तिसृष्टिवाचकपदोपादानादीक्षापूर्वत्वकथनाच्च सृष्टेर्मुख्यत्वं, गौणीति तैत्तिरीयक आकाशादीनामपि कर्तृत्वकथनादीक्षापूर्वकत्वाभावात् सृष्टिवाचकपदस्याप्यभावाद्गौणी सृष्टिरुक्तेतिविरो-

---

१ एकेतिपाठोपि । २ अपरेतिपाठोपि । ३ अनामरूपात्मनेतिपाठस्त्वशुद्धः । ४ नामरूपवत्त्वेन नामरूपत्ववत्त्वेनेत्यपि पाठौ । ५ सोम्येत्यपि पाठः । ६ मुख्यक्रमसृष्टावित्यपि पाठ. ।

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षं व्यावर्तयति, तैत्तिरीयके वियदुत्पत्तिरस्ति, यद्यपि मुख्ये नास्ति तथापि विरोधाभावादन्यत्रोक्तमप्यङ्गीकर्तव्यमेकवाक्यत्वाय, एकविज्ञानेन सर्वविज्ञान[1]प्रतिज्ञानुरोधाच्च ॥ २ ॥

## गौण्यसम्भवात् ॥ ३ ॥

वियदुत्पत्तिर्गौणी भविष्यति, कुतः? असम्भवात्, न ह्याकाशस्योत्पत्तिः सम्भवति निरवयवत्वाद् व्यापकत्वाच्च, मुख्ये चाभावात्, एकविज्ञाने सर्वविज्ञानप्रतिज्ञा तु तदधिष्ठानत्वेन जीववत्तदंश[2]त्वेन वा तच्छरीरत्वेन वा एकविज्ञानकोटिनिवेशात्, लोकेप्यवकाशं कुर्वित्यादौ गौणप्रयोगदर्शनात् ॥ ३ ॥

## शब्दाच्च ॥ ४ ॥

"वायुश्चान्तरिक्षञ्च एतदमृत"मिति "आकाशवत् सर्वगतश्च नित्य" इति, न ह्यमृतस्य ब्रह्मदृष्टान्तभूतस्योत्पत्तिः सम्भवति ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

ननु कथं वियदुत्पत्तिर्गौणी भविष्यति, तत्र हि "सम्भूत" इत्येकमेव पदमुत्तरत्रावर्त्यते[3], तथा सत्युत्तरत्र मुख्या आकाशे गौणीति युगपद्वृत्तिद्वयविरोध इति चेन्न, **एकस्यापि स्यात्** क्वचित् मुख्या क्वचिद्गौणीति, **ब्रह्मशब्दो यथा** "तपसा ब्रह्म विजिज्ञासस्व" "तपो ब्रह्मे"ति, प्रथमवाक्ये मुख्या द्वितीये गौणी, न चात्र प्रयोगभेदोस्तीति वाच्यं, सम्भूतशब्दोप्यावर्त्यते[4] न तु तादृशार्थयुक्तोपि, आत्मसत्त्वेनैव तत्सत्त्वमिति सत्त्वगुणो वचनहेतुः, तत्तद्भावापन्नं ब्रह्मैव सर्वत्र कारणमिति नानेकलक्षणा, तत्तद्भावापत्ति[5]विशेषणव्यावृत्त्यर्थमपि न लक्षणा, स्व-

---

धाच्छङ्कास्पदता, मुख्या 'सोकामयते'त्यादिनाग्रे वक्ष्यत इत्यर्थः, मुख्ये क्रमसृष्टाविति छान्दोग्य ईक्षापूर्वकसृष्टौ मुख्यायामाकाशोत्पत्तेरश्रवणादित्यर्थः ॥ १ ॥

**अस्ति तु** ॥ २ ॥ पक्षं पूर्वपक्षमाकाशानुत्पत्तिलक्षण, एकेत्यादि, तथा चैतत्प्रतिज्ञानुरोधात् तैत्तिरीयवाक्यं सृष्ट्यर्थमीक्षासाकाङ्क्षं छान्दोग्यवाक्यञ्च सृष्ट्यर्थमाकाशादिसाकाङ्क्षं क्रमसृष्टिस्तूभयत्रेत्येकवाक्यतेत्यर्थ. ॥ २ ॥

**गौण्यसम्भवात्** ॥३॥ सूत्रत्रयेण पूर्वपक्ष पुनराह, तद् व्याकुर्वन्ति **वियदि**त्यादिना, यदुक्तं तैत्तिरीयके वियदुत्पत्तिः श्रूयत इति सत्यं श्रूयते पर सावरणनिरावरणरूपतया **गौणी** भविष्यति, कुतः? **असम्भवात्** लोके हि सावयवस्यैवोत्पत्तिर्दृश्यते सजातीयैः विजातीयैश्च द्रव्यैरवयवभूतैरेकं द्रव्यमुत्पाद्यते आकाशस्य तु समवाय्यसमवायिकारणयोरभावात् केवलेश्वररूपनिमित्तकारणमात्रेणोत्पत्तेरसम्भव एव, यदि च ब्रह्मैव समवायि ततो विभज्योत्पद्यत इति विभाग एवासमवायीति विभाव्यते तदप्ययुक्तं, मुख्यसृष्टिवाक्य उत्पत्तेरनुक्ते., नचैकविज्ञानेन सर्वविज्ञानानुपपत्त्याकाशोत्पत्तिः स्वीकार्या, आकाशस्य तच्छरीरत्वादिनैव प्रतीतेरुपपत्ते', अतो 'गोअश्वा एव पशवोन्येपशव' इत्यत्राजाद्यपेक्षया गवादिप्रशंसार्थमितरेषामपशुत्वोक्तिस्तथेहापि ब्रह्मप्रशंसार्थ सम्भूतपदेन ब्रह्मास्तित्वसदृशास्तित्वरूपप्रशंसागुणलाक्षणिकेन गौण्येवादर्तव्या लोकेप्यवकाशं कुर्वितिगौणप्रयोगदर्शनादितिभावः ॥ ३ ॥

**शब्दाच्च** ॥ ४ ॥ ननु लौकिकयुक्तिरप्रयोजिका वेदे चाकाशोत्पत्तिः सम्भूतपदेन प्रत्यक्षत एवोक्तात आह **शब्दाच्च**, भाष्यमत्र स्फुटं, तथा च गौण्येवोचितेतिभावः ॥ ४ ॥

**स्याच्चैकस्य ब्रह्मशब्दवत्** ॥ ५ ॥ **मुख्या** मुख्योत्पत्तिबोधिका शक्तिवृत्तिरित्यर्थः, **तादृशार्थयुक्तः** शक्यार्थयुक्त आकाशे प्रवर्तत इत्यर्थः, **आत्मसत्त्वेनैव** व्यापकत्वेनैव, **तत्सत्त्वं** आत्मतुल्यतया विद्यमानत्वरूपमाकाशनिष्ठं

---

१ प्रतिज्ञेतिशून्योपि पाठ । २ तदङ्गत्वेनेत्यपि पाठः । ३–४ अनुवर्तत अनुवर्त्यत आवर्तत इत्यपि पाठाः । ५ तद्भावापत्तिरित्यपि पाठः ।

भावतोपि ब्रह्मणः सर्वरूपत्वात्, तस्माद्गौणी आकाशसम्भूतिश्रुतिरित्येवं प्राप्ते इदमाह ॥ ५ ॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

भवेदेतदेवं यदि छान्दोग्यश्रुतिर्न विरुध्येत, कथम्? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा बाध्येत[1] अव्यतिरेकात् अनुद्गमात्, यदि सम्बद्धमेव ब्रह्मणा आकाशं तिष्ठेत्तदा ब्रह्मविज्ञानेनाकाशविषयीकरणे तन्नैकविज्ञानं[2], आकाशस्य च लौकिकत्वात्[3] तज्ज्ञानं सर्वज्ञतायामपेक्षितमेव, न च जीववत्, लौकिकत्वात्, व्यवहारमात्रविषयत्वान्नातीन्द्रियत्वादिचिन्ता, अनुद्गमेपि वस्तुसामर्थ्यात् कथं प्रतिज्ञा हीयत इत्यत आह शब्देभ्यः[4], "येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवती"तिशब्दात् प्रकृतिविकारभावेनैव व्युत्पादयति[5] ज्ञानं, शब्देभ्यो हेतुभ्यः प्रतिज्ञाहानिरितियोजना ॥ ६ ॥

## यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥

तुशब्द आकाशोत्पत्त्यसम्भावनशङ्कां वारयति, यद्यद्विकृतं तस्य सर्वस्य विभाग उत्पत्तिः, आकाशमपि विकृतं लौकिकव्यवहारविषयत्वात्, यथा लोके विकृतमात्रमुत्पद्यते, आकाशोत्पत्तौ[6] श्रुत्या सिद्धाया "माकाशवत्सर्वगतश्च नित्यः" "आकाशशरीरं ब्रह्म" "स यथानन्तोयमाकाश एवमनन्त आत्मा वेदितव्यः" "आकाश आत्मा" इत्यादिश्रुतयः "समोनेन

---

गौण्या बोधितमित्यर्थः, वचनहेतुः गौणीहेतुरित्यर्थ., तत्तद्भावापन्नमिति आकाशभावापन्नं ब्रह्म वायोः कारणं वायुभावापन्नं ब्रह्माग्ने. कारणमितिवाय्वाकाशादिशब्देषु सर्वत्र तत्तद्भावापन्नब्रह्मणि लक्षणापत्तिरित्यपि नेत्यर्थः, ब्रह्मण एव तावद्रूपत्वादिस्वाभाव्याद् घटे छिद्रेतरत्ववदित्यर्थः, तत्तद्भावापत्तीत्यादि आकाशभावापन्ने ब्रह्मणि वायुविशेषणव्यावृत्त्यर्थं वायुभावापन्ने चाकाशादिविशेषणव्यावृत्त्यर्थमित्यर्थ·, न लक्षणेत्यत्र हेतुमाहु· स्वभावत इत्यादि, तथा च सकलविशेषणानामपि ब्रह्मणि सम्भवान्नैकस्यापि व्यावृत्त्यर्थं लक्षणा कार्येत्यर्थ., इदं वक्ष्यमाणं दूषणम् ॥ ५ ॥

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः** ॥ ६ ॥ **एतत्** आकाशे उत्पत्तिशून्यत्व, **एवं** पूर्वोक्तप्रकारेण, **कथमिति** पृच्छति कथ विरोध इत्यर्थ., तत्रोत्तरमाहुः **एके**त्यादि, **अनुद्गमात्** कार्यत्वेन रूपेणाव्युच्चरणादित्यर्थ·, तदेवोपपादयन्ति **यदी**त्यादि, **तन्नैकविज्ञानं** विभुद्वयविषयकत्वेनैकस्य ज्ञान न भवतीत्यर्थः, एकस्यालौकिकस्य ब्रह्मणो ज्ञानेन लौकिकसकलपदार्थज्ञानमेव सर्वविज्ञानपदेन श्रुत्याभिप्रेत तत्राकाशस्यापि लोकव्यवहार्यत्वेन लौकिकत्वाद् ब्रह्मज्ञानजन्यज्ञानविषयत्वाभावे श्रुतिविरोध· स्यादित्याहु· **आकाशस्ये**त्यादि, **जीववत्** अंशीभूतालौकिकजीवतुल्यतया, **लौकिकत्वात्** स्वान्यव्यवहारविषयत्वात्, **ने**त्यादि आपामरव्यवहारविषयत्वान्नातीन्द्रिय इत्यर्थ·, **अनुद्गमेपि** आकाशस्यानुद्गमेपि, **वस्तुसामर्थ्यात्** वस्तुन ऐक्यात्, **येने**त्यादि तथा च वस्तुन ऐक्यादश्रुतस्य श्रवणममतस्य मननमज्ञातस्य ज्ञातत्वमित्यादि विरुध्येत श्रुतस्य श्रवण ज्ञातस्यैव ज्ञातत्वमित्यादि च भवेदित्यर्थः, **शब्दात्** 'एकेन मृत्पिण्डेने'त्यादिशब्दैश्च, **व्युत्पादयति** ज्ञेयं व्युत्पादयतीत्यर्थः, **योजना** सूत्रयोजना ॥ ६ ॥

**यावद्विकारन्तु विभागो लोकवत्** ॥ ७ ॥ अस्मिन् सूत्रे व्याप्तिदृष्टान्तयोरुपन्यासेनाकाशोत्पत्तावनुमानमेवोपन्यस्तमित्याशयेनाहु **यद्यदि**त्यादि, तथा चाकाश उत्पादविनाशशाली विकृतत्वाल्लोकवत् एवमाकाशो विकारी लौकिकव्यवहारविषयत्वात्, तस्मादाकाश उत्पद्यत इति सिद्धं, **विकृतं** 'ऐतदात्म्यमिदं सर्व'मितिश्रुत्या सर्वस्यैव ब्रह्मविकारत्वश्रवणादाकाशमपि सर्वान्त पाति विकृतमित्यर्थः, **आकाशव**दित्यादितुल्यता 'समो नागेने'त्यादिरीत्या बोध्या, सर्वगतत्वनित्यत्वे ब्रह्मगते एव बोध्येते नत्वाकाशगते अपि, **आकाशशरीरत्वं**, 'आकाशे तिष्ठन्नाकाशमन्तरो यमयती'तिश्रुत्याकाशान्तरत्वमेव शरीरत्व नतु लोकरीत्या, एवमाकाशस्यानन्तत्वमपीतरापेक्षयाधिककाल-

---

१ बाध्यत इत्यपि पाठ । २ तन्त्रैकविज्ञानमितिपाठस्त्वशुद्ध । ३ अलौकिकत्वादित्यपि पाठः । ४ शब्दा इत्यपि पाठ. । ५ व्युत्पादयन्तीत्यपि पाठ । ६ आकाशोत्पत्तौ न्वित्यपि पाठ ।

सर्वेण" "य आकाशे तिष्ठन्" "सर्वमात्मे"त्येवमादिभिरेकवाक्यतां लभन्ते, व्यवहारे त्वज्ञबोधनं वाक्यानामुपयोगः ॥ ७ ॥ १ ॥

॥ इति द्वितीयाध्याये तृतीयपादे प्रथमं न वियदित्यधिकरणम् ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ( २. ३. २. )

आकाशोत्पत्तिसमर्थनेन मातरिश्वोत्पत्तिः समर्थिता, "सैषा अनस्तमिता देवते"ति भौतिकवायुव्यावृत्त्यर्थमलौकिकपदम् ॥ ८ ॥ २ ॥

॥ इति द्वितीयाध्याये तृतीयपादे द्वितीयमेतेन मातरिश्वेत्यधिकरणम् ॥

## असम्भवस्तु सतोनुपपत्तेः ॥ ९ ॥ ( २. ३. ३. )

ननु ब्रह्मणोप्युत्पत्तिः स्यात् "आकाशवत् सर्वगतश्च नित्य" इतिश्रुतेराकाशन्यायेन सर्वगतत्वनित्यत्वयोरभावे इतीमामाशङ्कां तुशब्दः परिहरति, सतः सन्मात्रस्योत्पत्तिर्न सम्भवति, न हि कुण्डलोत्पत्तौ कनकोत्पत्तिरुच्यते, नामरूपविशेषाभावात्, उत्पत्तिश्च स्वीक्रियमाणा नोपपद्यते, स्वतो न सम्भवति, अन्यतस्त्वनवस्था, यदेव च मूलं तदेव ब्रह्मेति ॥ ९ ॥ ३ ॥

॥ इति द्वितीयाध्याये तृतीयपादे तृतीयमसम्भवाधिकरणम् ॥

---

स्थायित्वमेव न तु ब्रह्मनिष्ठसमं 'नभस्तदनुलीयत' इतिस्मृतेः, 'आकाश आत्मे'त्यपि श्रुतिः 'इदं सर्वं यदयमात्मे'-तिमैत्रेयीब्राह्मणश्रुत्या सर्वमुद्दिश्यात्मत्वविधानवदियमाकाशमुद्दिश्यात्मत्वं विदधातीति सर्वसमानतैवाकाशस्य लभ्यते न तु नित्यता, ननु तथा श्रुतिसङ्गतिरास्तां तथाप्याकाशस्य ब्रह्मसमानतावर्णने श्रुतेः किं तात्पर्यमित्यत आहुः व्यवहार इत्यादि, तथा चाज्ञानामुपासकानामुपासनार्थं ब्रह्मत्वेनाकाशबोधनं श्रुतितात्पर्यविषय इति फलितम् ॥ ७ ॥ १ ॥

इति द्वितीयतृतीये प्रथमाधिकरणम् ॥ १ ॥

**एतेन मातरिश्वा व्याख्यातः** ॥ ८ ॥ ननु तैत्तिरीये वायोरुत्पत्तेः प्रत्यक्षश्रवणात् किमस्याधिकरणस्य प्रयोजनमित्यत आहुः सैषेत्यादि, श्रुतिस्तु बृहदारण्यके सप्तान्नब्राह्मणे व्रतमीमांसास्था 'म्लोचन्ति ह्यन्या देवता न वायु'रिति, तथाचानस्तमितत्वादेवोत्पत्त्यभावः सिध्यतीतिश्रुतिविप्रतिषेधादेव सन्देहः, श्रुतिविरोधनिराकरणमेवाधिकरणप्रयोजन, ननु तथापि प्रत्यक्षश्रुतिविरोधस्य का गतिरित्यत आहुः **भौतिकेत्यादि**, **अलौकिकपदं** अनस्तमितपदं, तथा च प्रत्यक्षं भौतिकविषयं न तु भूतविषयमित्यदोषः, शब्दनिर्वचनं तु मातरीतिसप्तम्यन्तप्रतिरूपकमव्ययमन्तरिक्षवाचकं तत्र श्वयति गच्छतीति मातरिश्वा, 'टुओश्वि गतिवृद्ध्योः', तथा च भूतात्मा वायुर्नोत्पद्यते छान्दोग्ये श्रवणादिति पूर्वः पक्षः, तैत्तिरीये उत्पत्तिश्रवणादुत्पद्यत इतिसिद्धान्तः, अमृतत्वश्रुतिस्त्वापेक्षिकी, 'म्लोचन्ती'तिश्रुत्यनुसारेण निर्णयात्, तस्माद्वायुरुत्पद्यत इति सिद्धम् ॥ ८ ॥ २ ॥

॥ इति द्वितीयतृतीये द्वितीयाधिकरणम् ॥ २ ॥

**असम्भवस्तु सतोनुपपत्तेः** ॥ ९ ॥ नन्वित्याद्याशङ्कानीश्वरवादिनां बोध्या, अभावे अभावे उपपाद्यमाने सतीत्यर्थः, **सन्मात्रस्य** अविकृतस्येत्यर्थः, **स्वतो न सम्भवति** आत्माश्रयादित्यर्थः ॥ ९ ॥ ३ ॥

॥ इति द्वितीयतृतीये तृतीयाधिकरणम् ॥ ३ ॥

## तेजोतस्तथा ह्याह ॥ १० ॥ ( २. ३. ४. )

तेजोतः वायुतः, तथा ह्याह "वायोरग्नि"रितिश्रुतेः, हिशब्देनैवमाह, छान्दोग्यश्रुतिः प्रतिज्ञाहानिनिराकरणार्थं तैत्तिरीयकमपेक्षते वाय्वाकाशयोरुत्पत्त्यर्थं, तथा चोपजीव्यस्य प्राधान्यात् वायुभावापन्नमेव सत् तेजस उत्पादकमिति स्वीकरोति, ब्रह्मण एव सर्वोत्पत्तिपक्षस्त्वविरुद्धः ॥ १० ॥ ४ ॥

॥ इति द्वितीयाध्याये तृतीयपादे चतुर्थन्तेजोत इत्यधिकरणम् ॥

## आपः ॥ ११ ॥ ( २. ३. ५. )

तथा ह्याहेत्येव ।

इदमेकमनुवादसूत्रमविरोधख्यापकं, न श्रुत्योः सर्वत्र विरोध इति ॥ ११ ॥ ५ ॥

॥ इति द्वितीयाध्याये तृतीयपादे पञ्चममाप इत्यधिकरणम् ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ( २. ३. ६. )

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमही"ति "ता अन्नमसृजन्ते"ति,

तत्र अन्नशब्देन व्रीह्यादय आहोस्वित् पृथिवीति सन्देहः, ननु कथं सन्देहः ? पूर्वन्यायेनोपजीव्यश्रुतेर्बलीयस्त्वादिति चेत्, उच्यते, "अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योन्न[1]मि"त्यग्रे वर्तते, तथा सति पृथिवीमोषधीश्च सृष्ट्वा आपो अन्नं सृजन्ति आहोस्विदन्नशब्देनैव पृथिवीति, नन्वेवमस्तु पृथिव्योषधिसृष्ट्यनन्तरमन्नसृष्टिरिति चेत्, न, छा-

---

तेजोतस्तथा ह्याह ॥ १० ॥ आकाशवाय्वोरुत्पत्तिं विचार्य तेजसो विचारयति, तेजः किं साक्षाद्ब्रह्मजमुत परम्परयेति श्रुतिविरोधपरिहारार्थत्वादध्यायस्य, तत्र छान्दोग्योक्तसृष्टेर्मुख्यत्वात् साक्षात्पक्ष एव श्रेयानिति प्राप्त आह तेजोत इति, तद् व्याकुर्वन्ति तेज इत्यादि, नन्वेवं सति छान्दोग्यव्यवहारस्य कथं परिहार इत्यत आहुः हिशब्देनेत्यादि, अयमर्थः, तेजस. साक्षाद्ब्रह्मजत्वाङ्गीकारे 'तत्तेजोसृजदि'त्यादिना निरूपिततेजस एव 'सदेव सौम्येदमग्र आसीदि'त्यनेनेदम्पदवाच्यत्वं स्यान्न तु सर्वस्य, एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञास्थलेपि तेजस एवोपादान स्यात् सर्वपदेन न तु सर्वस्यात एतत्प्रतिज्ञाद्वयविरोधपरिहाराय तेजःसृष्टिवाक्यं तैत्तिरीयवाक्यमुपजीवीकृत्यैव प्रवर्तते, इत्थञ्च न कस्यापि प्रतिज्ञाया हानिरित्यर्थः, नन्वे'तस्माजायते प्राण' इत्याथर्वणश्रुतौ ब्रह्मण एव सर्वकारणत्वोक्तेः क्रमसृष्टिपक्षो विरुद्ध इत्यत आहुः ब्रह्मण इत्यादि, तथा च ब्रह्मण एव कारणतायाः पक्षद्वयेप्युपपत्तेर्न कोपि विरोध इत्यर्थः ॥ १० ॥ ४ ॥

॥ इति द्वितीयतृतीये चतुर्थाधिकरणम् ॥ ४ ॥

आपः ॥ ११ ॥ तथा ह्याहेत्येवेति 'तेजोतस्तथा ह्याहे'तिसूत्रा'त्तथा ह्याह'इत्यस्यैवात्रानुवृत्तिः कार्या, एवकारेणेतरानुवृत्तेर्व्यवच्छेदः, तथा चापस्तेजस उत्पद्यन्ते हि यतोतः श्रुतिद्वयमपि तथाह 'तदपोसृजते'ति 'अग्नेराप'इति च, अतो नात्र किमपि विचार्यमित्यर्थः, एतत्सूत्रप्रयोजनमाहुः इदमिति, अविरोधख्यापकमिति, इदमेवास्य प्रयोजनमित्यर्थः ॥ ११ ॥ ५ ॥

॥ इति द्वितीयतृतीये पञ्चमाधिकरणम् ॥ ५ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥१२॥ अधिकरणप्रयोजनं वक्तुं विषयवाक्यमाहुः "ता आप" इत्यादि, संशयमाहुः तत्रेत्यादि, अप्शब्दस्य व्रीह्यादिषु रूढत्वात्तेषां लाभः प्रायपाठाच्च पृथिवीलाभ इति सन्देह इतिभावः,

---

१ ओषधीभ्य इत्यपि पाठ ।

न्दोग्यश्रुतेरपेक्षाभावात् महाभूतमात्रस्यैवाभिलषितत्वात्, एकपदलक्षणापेक्षया तत्स्वीकारस्य गुरुत्वात् पूर्वोक्त एव संशयः।

तत्र "अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वागि"ति त्रयाणां सहचारः सर्वत्रोपलभ्यते लोकप्रसिद्धिः वर्षणभूयिष्ठलिङ्गश्च, तस्मात् पृथिव्योषध्यन्नानाम्मध्ये अभेदविवक्षया यत्किञ्चिद्वक्तव्येन्नमुक्तमित्येवम्प्राप्त उच्यते, अन्नशब्देन पृथिवी, कुतः? अधिकाररूपशब्दान्तरेभ्यः, अधिकारो भूतानामेव न भौतिकानां, नीलश्च रूपं पृथिव्या एव, भूतसहपाठात्, शब्दान्तर"मद्भ्यः पृथिवी"ति, तस्मादन्नशब्देन पृथिव्येव ॥ १२ ॥ ६ ॥

॥ इति द्वितीयाध्याये तृतीयपादे षष्ठम्पृथिव्यधिकार इत्यधिकरणम् ॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ ( २. ३. ७. )

आकाशादेव कार्याद्वाय्वादिकार्योत्पत्तिं तुशब्दो वारयति, स एव परमात्मा वाय्वादीन् सृजति, कथं तच्छब्दवाच्यतेति चेत् तदभिध्यानात्, तस्य तस्य कार्यस्योत्पादनार्थं

---

उपजीव्यश्रुतेः 'अद्भ्य पृथिवी'तिश्रुतेरित्यर्थ, तथा च व्यर्थोधिकरणारम्भ इतिभावः, छान्दोग्यश्रुतेः 'ता आप ऐक्षन्त'इतिश्रुते', अपेक्षाभावात् महाभूतबोधकताया एवापेक्षितत्वेनान्नबोधनापेक्षाभावादित्यर्थ., एकपदलक्षणापेक्षया अन्नपदस्य पृथिवीत्वावच्छिन्ने लक्षणापेक्षया, तत्स्वीकारस्य 'ता अन्नमसृजन्त'इत्यत्राप्सु स्वजन्यपृथिवीजन्यौषधिजन्यत्वसम्बन्धेनान्नं प्रति कारणतां स्वीकृत्यान्नपदे रूढिस्वी.कारस्येत्यर्थः, ननु सम्बन्धगौरव न दोषायेति चेन्न, तथा सति कम्बुग्रीवादिमत्त्वस्याप्यभावप्रतियोगितावच्छेदकत्वादौ। विदासम्भवात्, तथा हि कम्बुग्रीवादिमत्त्वे हि परम्परासम्बन्धावच्छिन्ने पृष्ठग्रीवावच्छिन्नसंयोगगते जाती एव कम्बुत्वग्रीवात्मरूपे, तयोः परम्परासम्बन्धश्च स्वाश्रयसंयोगसमवाय्यवयवसमवेतत्वं घटे इति तयोर्जातित्वेपि सम्बन्धकृतमेव गौरवं तथा प्रकृतेपि बोध्यं, एव गोसादृश्यस्यापि गवयपदवाच्यतावच्छेदकतायां बोध्यं, तत्रावच्छेदकता सम्बन्धघटकतया भासते, स च सम्बन्धो गोसादृश्यावच्छिन्नवाच्यत्वीयस्वरूपसम्बन्धो व्यवच्छेदकतावच्छेदको वाच्यः, स च गवयत्वावच्छिन्नवाच्यत्वीयस्वरूपसम्बन्धापेक्षया गुरुभूत इति गोसादृश्यं नावच्छेदकं किन्तु गवयत्वमेवेतिरीत्या गौरवमवसेयं, पूर्वोक्त इत्यादि, तथा चान्नपद एव संशयसम्भवान्नाधिकरणवैयर्थ्यमितिभावः, त्रयाणां सहचार इति वृष्ट्यन्नयोरभेदे दृष्टान्तार्थमुक्तं, उपलभ्यत इत्यग्रेन्वेति, लोकप्रसिद्धिरिति पृथिव्योषध्यन्नानां भक्षकेषु कीटपशुमनुष्येषु भक्ष्यरूपमेव कार्यमुपलभ्यते इतिलोकप्रसिद्धिः, वर्षणेत्यादि 'यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवती'तिवाक्यशेषोक्त वृष्टिभूयिष्ठलिङ्गमित्यर्थ, अभेदविवक्षया उक्तकार्यत्रयेण सह जलरूपकारणस्याभेदविवक्षयेत्यर्थ, यत्किञ्चिदित्यादि अद्यते तदन्नमितिव्युत्पत्त्यान्नपदेन पृथिव्यादित्रयस्य मध्ये यत्किञ्चिदेकस्मिन् योगेन वक्तव्य इत्यर्थ', अन्नशब्देन पृथिवीति योगेन पृथिव्यर्थो न तु लक्षणेत्यर्थः, रूढेस्तु प्रकरणमेव बाधकमिति न रूढिः प्रकरणं च भूतानां न त्वन्नस्येत्यर्थ ॥ १२ ॥ ६ ॥

॥ इति द्वितीयतृतीये षष्ठाधिकरणम् ॥ ६ ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ तुशब्दः सूत्रस्थस्तुशब्द', स एव आकाशोत्पादक एव, तच्छब्दः आकाशशब्द', वाच्यता ब्रह्मणि वाच्यता, अत्रैव संशयः, क्रमसृष्टावाकाशादय' किं स्वतन्त्राः स्वकार्यं सृजन्त्युत परमेश्वरतन्त्रा इति, तत्र तावत्प्राप्त 'आकाशाद्वायु. वायोरग्नि'रित्यादिश्रुत्या 'तत्तेज ऐक्षत''बहुस्यामि'त्यादिश्रुत्या भूतानां देवतायाश्च हेतुत्वस्य कर्तृत्वस्य च कथनात् स्वतन्त्रा एव सृजन्तीति, आकाशरूपः वायुरूप स्यामिति तद्रूपत्वाभिधानं, तच्च 'बहु स्यां प्रजायेये'तिश्रुत्यैव सङ्ग्रहेणोक्तं, न च तस्य तेज'प्रभृतिसमानत्वं शङ्क्यं, तेज'प्रभृतिष्वपि

---

१ सोम्य मन इत्यपि पाठ । २ अन्नशब्द इतिसप्तम्यन्त पाठश्चिन्त्य ।

तदभिध्यानं ततस्तदात्मकत्वं तेन तद्वाच्यत्वमिति, ननु यथाश्रुतमेव कुतो न गृह्यते इत्यत आह तल्लिङ्गात्, सर्वकर्तृत्वं लिङ्गं तस्यैव सर्वत्र वेदान्तेष्ववगतं, जडतो देवताया वा यत् किञ्चिज्जायमानं तत्सर्वं ब्रह्मण एवेति सिद्धम् ॥ १३ ॥ ७ ॥

॥ इति द्वितीयाध्याये तृतीयपादे सप्तमं तदभिध्यानादेवेत्यधिकरणम् ॥

## विपर्ययेण तु क्रमोत उपपद्यते ॥ १४ ॥ ( २. . ८. )

यथोत्पत्तिर्न तथा प्रलयः किन्तु विपर्ययेण क्रमः, अतः उत्पत्त्यनन्तरं प्रलयः, कुतः ? उपपद्यते, प्रवेशविपर्ययेण हि निर्गमनं, क्रमसृष्टावेवैतत् ॥ १४ ॥ ८ ॥

॥ इति द्वितीयाध्याये तृतीयपादेष्टमं विपर्ययेणेत्यधिकरणम् ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ ( २. ३. ९. )

तैत्तिरीयके आकाशात्[1] अन्नपर्यन्तमुत्पत्तिमुक्त्वा अन्नमयादयो निरूपिताः[2], तत्रान्नमयस्य प्राणमयस्य च सामग्री पूर्वमुत्पन्नोक्ता, आनन्दमयस्तु परमात्मा, मध्ये विज्ञानमनसी विद्यमाने क्वचिदुत्पन्ने इति वक्तव्ये, तत्र क्रमेणोत्पन्ने इति वक्तव्यं, क्रमस्तु प्रातिलोम्येन, सूत्रे

---

ब्रह्मपदप्रयोगेण प्रकरणेन च तेज.प्रभृतीनामपि ब्रह्मत्वनिश्चयात् तेषां ब्रह्मांशत्वात, यथाश्रुतमेव आकाशादीनां स्वतन्त्रकारणत्वमेव, सर्वत्र वेदान्तेष्विति 'स विश्वकृद्विश्वविदात्मयोनिः यतः प्रसूता जगत· प्रसूतिः' 'य. पृथिव्यां तिष्ठन् पृथिवीमन्तर'इत्यादिषु, फलितमाहुः जडत इत्यादि, ब्रह्मणः तत्तद्रूपेण तत्तदन्त.स्थाद्ब्रह्मण इत्यर्थ. ॥१३॥७॥

॥ इति द्वितीयतृतीये सप्तमाधिकरणम् ॥ ७ ॥

विपर्ययेण तु क्रमोत उपपद्यते ॥१४॥ ननु तैत्तिरीयछान्दोग्ययो सृष्टेः क्रमो निरूप्यते नतु प्रलयस्य, नैयायिकास्तु समवाय्यसमवाय्यन्यतरनाशात् कार्यनाशमङ्गीकुर्वन्ति, मुण्डके तु विस्फुलिङ्गन्यायेन युगपदेव सर्वस्य कार्यस्योत्पत्तिः प्रलयश्चेति श्रूयते 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा सहस्रशः प्रभवन्ते सरूपा· तथाक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापि यन्ती'ति, तथा सति क्रमिकाणां प्रलये कः प्रकारो ग्राह्य इति संशये मुण्डके ब्रह्मण्येव लयस्योक्तत्वेन श्रौतत्वात् लौकिकं मत विहाय यौगपद्यपक्षो ग्राह्य इतिपूर्वपक्षे प्राप्ते सिद्धान्तमाहुः यथोत्पत्तिरिति, सत्यमेवमेव युगपत्सृष्टौ, तथापि सुबालोपनिषदि 'किं तदासीत तस्मै स होवाच न सन्नासन्न सदसदिति सदसद्विलक्षण ब्रह्माभिसन्धायोच्यते 'तस्मात्तम. सञ्जायते तमसि भूतादिर्भूतादेराकाशं आकाशाद्वायुः वायोरग्निः अग्नेराप. अद्भ्यः पृथिवी'त्यादि, एव सृष्टिमुक्त्वा उच्यते 'सोन्ते विश्वानरो भूत्वा सन्दग्धा सर्वाणि भूतानि पृथिव्यप्सु प्रलीयते आपस्तेजसि विलीयन्ते तेजो वायौ प्रलीयते वायुराकाशे विलीयते आकाशमिन्द्रिये'ष्वित्यादि, अतो ब्रह्मण. सकाशादुत्पत्त्यनन्तरं तत्रैव प्रलय इति येनैव क्रमेणोत्पत्तिस्तेनैव क्रमेण न लयः किन्तु विपर्ययेण क्रमः प्रलयस्य, अत्र पृच्छति कुत इति, सत्यमुपपाद्यते श्रुतौ तथापि काचिद्युक्तिर्वाच्येत्यत आहु· उपपद्यत इति, तथा च नैयायिकवत् ध्वंसरूपप्रलयाङ्गीकारे युक्त्यपेक्षायामपि ब्रह्मणि प्रवेशरूपप्रलयाङ्गीकारे श्रुतिरेवोपपादिका नोपपादकान्तरापेक्षेतिभाव., एतत् क्रमप्रलय. ॥ १४ ॥ ८ ॥

॥ इति द्वितीयतृतीयेष्टमाधिकरणम् ॥ ८ ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादितिचेन्नाविशेषात् ॥ १५ ॥ क्रमविचार एव प्रसङ्गादन्यद्विचारयतीत्याहु· तैत्तिरीयक इत्यादि, अन्नमयादयः पञ्चेत्यर्थः, सामग्री पूर्वमुत्पन्नोक्ता तत्रान्नमये सामग्री ओषध्यन्नरूपा तस्यान्नरसमयत्वात्, प्राणमयस्तत आन्तर इति तस्य सामग्री वाय्वाकाशपृथिवीरूपा न तु बाह्यकर्मेन्द्रियरूपा, तच्छिरःप्रभृतिकथने प्राणव्यानापानाकाशपृथिवीनामेव कथनात् एवमेवैतद्द्वयसामग्री 'ओषधीभ्योन्न'मित्यन्तेनोक्ता पूर्वं, आनन्दमयस्तु परमात्मा स तु मूलकारणं 'तस्माद्वा एतस्मादात्मन' इत्यात्मपदेनैवोक्त , अतः पर

---

१ आकाशादीतिपाठोपि । २ निरूपिता इतिविसर्गशून्यः पाठश्चिन्त्य ।

विपर्ययानन्तरं कथनात्, अन्तरेतिवचनाच्च, तेजोबन्नानामन्नमये गतत्वात् वाय्वाकाशयोः प्राण एव गतत्वात् आकाशात् पूर्वं विज्ञानमनसी उत्पन्ने इति वक्तव्यं, तयोरग्रेवचनमेव लिङ्गमिति, अतस्तयोरुत्पत्तिर्वक्तव्येति चेत्, न अविशेषात्, नामरूपविशेषवतामेवोत्पत्तिरुच्यते न त्वनयोः, विज्ञानमयस्य जीवत्वात् मनोमयस्य च वेदत्वात्, अतो भूतभौतिकप्रवेशाभावात् न तयोरुत्पत्तिर्वक्तव्या ॥ १५ ॥

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्वव्यवहारोच्छेदः, उत्पत्तिस्तु त्रिविधा निरूपिता, "अनित्ये जननं नित्ये परिच्छिन्ने समागम" इति, तथा च जीवस्य समागमलक्षणाप्युत्पत्तिर्न स्यादितीमामाशङ्कां निराकरोति तुशब्दः, चराचरे स्थावरजङ्गमे शरीरे तयोर्विशेषेण अपाश्रय आश्रयः शरीरसम्बन्ध इति यावत्, स तु स्यात्, न तु स्वतः, ननु शरीरस्योत्पत्तौ जीवोप्युत्पद्यते अन्यथा जातकर्मादीनामभावप्रसङ्गादिति चेन्न, तद्व्यपदेशः तस्य शरीरस्य जन्ममरणधर्मवत्त्वेन जीवव्यपदेशो भाक्तः लाक्षणिकः, कुतः? तद्भावभावित्वात्, शरीरस्यान्वयव्यतिरेकाभ्यामेव जीवस्य तद्भावित्वं, देहधर्मो जीवस्य भाक्तः, तत्सम्बन्धेनैवोत्पत्तिव्यपदेश इति सिद्धम् ॥ १६ ॥ ९ ॥

**॥ इति द्वितीयाध्याये तृतीयपादे नवममन्तरा विज्ञानमनसी इत्यधिकरणम् ॥**

---

मनोमयविज्ञानमयाववशिष्येते, तदाहान्तरा विज्ञानमनसी इति, प्रातिलोम्येन संहारक्रमोक्तप्रातिलोम्येन, तथाचाकाशात् पूर्वमात्मनः सकाशाद्विज्ञानमनसी उत्पन्ने इति वाच्यमित्यर्थ., **विपर्ययानन्तरं** 'विपर्ययेण तु क्रमोत उत्पद्यत' इति सूत्रानन्तर, **अन्तरेतिवचनात्** सूत्रेन्तरेतिवचनात्, तथाचाकाशात्मनोन्तरेत्यर्थः सिद्ध, **तयोरग्रेवचन**मित्यादि, **तयोः** विज्ञानमनसो, **अग्रे** छान्दोग्ये'अनेन जीवेनात्मनानुप्रविश्ये'ति विज्ञानमयस्य जीवस्य निरूपण"षोडशानां कलानामेका कला शिष्टासीदि"ति मनोमयनिरूपणं, इदमेवोभयनिरूपकं **लिङ्ग**मिति,**नामरूपविशेषवतां** भूतभौतिकानां, **न त्वनयोः** नतु विज्ञानमनसोः, एव चास्मिन्नधिकरणे तैत्तिरीयोक्तौ विज्ञानमयमनोमयौ विषयः, क्वोत्पद्येते इतिसंशयः, उत्पत्तिसामग्र्यनुक्तिः उत्पन्नेषु पाठश्च सन्देहबीज, तयोर्जीवान्तःकरणरूपत्वात् श्रुत्यन्तरे तयोः साक्षादुत्पत्तिकथनात् आकाशात् पूर्वं कथनाच्च क्रमसृष्टावपि आकाशात् पूर्वं परमात्मनः सकाशात्तयोरुत्पत्तिरिति पूर्वः पक्षः, तावत्र न जीवान्तःकरणरूपौ किन्तु जीववेदरूपौ, तद्गमकस्य लाभात्, अतो न तयोरुत्पत्तिरत्राभिप्रेतेतिसिद्धान्तः ॥१५॥

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** ॥ १६ ॥ जीवाद्यनुत्पत्तावेव किञ्चिदाशङ्क्य परिहरतीत्याशयेन सूत्रमुपन्यस्य व्याकुर्वन्ति **नन्वि**त्यादि, **जीवस्ये**ति मनोमयस्य वेदस्याप्युपलक्षणं, **सर्वव्यवहारोच्छेदः** विज्ञानमयस्य मनोमयस्य चानुत्पत्तौ सर्वव्यवहारोच्छेदः, न हि जीवानुत्पादे कश्चित्संसारासक्तो वा मुमुक्षुर्वा प्रवृत्तिलक्षणकर्मज्ञानभक्त्यधिकारी भवेत्, तदभावे च लोकयात्रा तत्तत्पुरुषार्थबोधकानि वाक्यानि चोच्छिद्येरन्, न वा वेदस्यानुत्पत्तौ धर्माधर्मादिकमसङ्कीर्णमवगन्तुं शक्येत, तदभावे लोकमर्यादाप्युच्छिद्येतेत्यर्थ., **न स्यादि**ति उत्पत्तिसामान्यनिषेधे समागमलक्षणापि निषेधितेति भावः,**चराचरे** पर्वततदितररूपे,**तयोः** उत्पत्तिमरणयोः, **न तु स्वतः** शरीरसम्बन्धेन जीवस्य ते स्यातां नतु स्वातन्त्र्येणेत्यर्थः, "जायमान. शरीरमभिसम्पद्यमान उत्क्रामन् म्रियमाण" इतिश्रुत्या देहसम्बन्ध एव जीवस्य तयोरुक्तत्वाद्देहसम्बन्धस्तु जीवस्य भवत्येवेत्यर्थः, न च वेदस्य न देहसम्बन्ध इति वाच्यं, नादात्मना सर्वशरीरेषु तस्यैव विद्यमानत्वात्, 'स एष जीवो विवरप्रसूति'रित्यनेन भगवतोक्तत्वात्, **जीवव्यपदेशः** जीवे जन्ममरणव्यपदेशः, **लाक्षणिकः** तत्तच्छरीरसम्बन्धतदभावयोः लक्षणया बोधकः, **तद्भावभावित्वात्** शरीराभिमानेन स्वस्मिन् शरीरधर्माभिमानित्वादित्यर्थः, **जीवस्य तद्भावित्वं** शरीरान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकवत्त्वं, उत्पत्तिव्यपदेश इति द्वयस्याप्युपलक्षणम् ॥ १६ ॥ ९ ॥

**॥ इति द्वितीयतृतीये नवमाधिकरणम् ॥ ९ ॥**

---

१ विपर्ययानन्तरेत्यादिरपि समस्त. पाठः । २ अन्तरेति च वचनादित्यपि पाठः । ३ तुरहितोपि पाठः ।

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ( २. ३. १० )

ननु जीवोप्युत्पद्यतां किमिति भाक्तत्वं कल्प्यते इति चेत् न, आत्मा नोत्पद्यते, कुतः ? अश्रुतेः, न हि आत्मन उत्पत्तिः श्रूयते, देवदत्तो जातो विष्णुमित्रो जात इतिदेहोत्पत्तिरेव नतु तद्व्यतिरेकेण पृथक् जीवोत्पत्तिः श्रूयते, विस्फुलिङ्गवदुच्चरणं नोत्पत्तिः, नामरूपसम्बन्धाभावात्, एतस्य गुणाः स्वरूपं चाग्रे वक्ष्यते, किञ्च नित्यत्वाच्च, ताभ्यः श्रुतिभ्यः "अयमात्माजरोमरः न जायते म्रियते" इत्येवमादिभ्यः ॥ १७ ॥ १० ॥

॥ इति द्वितीयाध्याये तृतीयपादे दशमन्नात्माश्रुतेरित्यधिकरणम् ॥

गुणान्निरूपयन् प्रथमतश्चैतन्यगुणमाह ।

## ज्ञोत एव ॥ १८ ॥ ( २. ३. ११. )

ज्ञः चैतन्यस्वरूपः, अत एव श्रुतिभ्यः "विज्ञानमय" इत्यादिभ्यः ।

सर्वविप्लववादी ब्रह्मवाक्यान्युदाहृत्य सूत्रोक्तसिद्धान्तमन्यथाकृत्य श्रुतिसूत्रोल्लङ्घनेन प्रगल्भते, स वक्तव्यः, किं जीवस्य ब्रह्मत्वं प्रतिपाद्यते जीवत्वं वा निराक्रियत इति ? आद्ये इष्टापत्तिः, न हि विस्फुलिङ्गोग्न्यंशो भूत्वा नाग्निः, द्वितीये स्वरूपनाशः, जीवत्वं कल्पितमिति चेन्न, "अनेन जीवेनात्मने"तिश्रुतिविरोधात्, न च अनादिरयं जीवब्रह्मविभागो बुद्धिकृतः, प्रमाणाभावात्, "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय"मितिश्रुतिविरोधश्च, न च जीवातिरिक्तं ब्रह्म नास्ति, सर्वश्रुतिसूत्रनाशप्रसङ्गात्, "यः सर्वज्ञः सर्वशक्तिः" "अयमात्मापहतपाप्मा" "अधिकन्तु भेदनिर्देशा"दित्यादिबाधः[1], तस्मात् तदंशस्य[2] तद्व्यपदेशवाक्यमात्रं स्वीकृत्य शिष्टपरिग्रहार्थं माध्यमिकस्यैवायमपरावतारो नितरां सद्भिरुपेक्ष्यः ॥ १८ ॥ ११ ॥

॥ इति द्वितीयाध्याये तृतीयपादे एकादशं ज्ञोतएवेत्यधिकरणम् ॥

---

**नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥** पूर्वाधिकरणे जीवस्य नामरूपसम्बन्धाभावान्नोत्पत्तिरित्युक्तं तत्र देवदत्तादिनाम जीवस्यैव न शरीरस्य तथा सति तन्नाम्ना गयाश्राद्धाद्यनुपपत्तेरित्याहुः **ननु जीवोपी**त्यादि, समाधानमाहुः **तथे**त्यादि, तथा च जात इत्यादिस्थले जीवोपलक्षितो देह एवोपादेयः श्राद्धादिस्थले च देहोपलक्षितो जीवो ग्राह्यः, देहाद्यभिमानशून्ये तु न काचिदुपपत्तिः कार्यास्ति, जीवनित्यत्वे प्रमाणमाहुः **किञ्चे**त्यादि ॥ १७ ॥ १० ॥

॥ इति द्वितीयतृतीये दशमाधिकरणम् ॥ १० ॥

**ज्ञोत एव ॥ १८ ॥** अत्र ज्ञशब्देन चैतन्याधिकरणमुत साङ्ख्यमतरीत्या चैतन्यस्वरूप इतिसन्देहे आहुः **ज्ञ** इत्यादि, **चैतन्यरूप** इति तदधिकरणस्याप्युपलक्षकं, **विज्ञानमय** इति प्राचुर्यार्थकमपि, 'एष हि द्रष्टा श्रोता मन्ता रसयिते'त्यादिश्रुत्यनुरोधात्, तथा चोभयमपि स्वीकार्यमितिभाव., शाङ्करमतमाहु. **सर्वविप्लवे**त्यादिना, **वाक्यानि** 'विज्ञानमानन्दम्ब्रह्म''सत्य ज्ञानमनन्त ब्रह्म' 'अयमात्मानन्तरोबाह्य. कृत्स्न. प्रज्ञानघन' इत्यादिवाक्यानि, **अन्यथाकृत्य** 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यादिसूत्रेषु सिद्ध जीवब्रह्मणोर्भेदरूपं सिद्धान्त भेदस्य काल्पनिकत्ववचनेन संसारिस्वरूपमात्रपरतया व्याख्यानेन 'अयं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढ' इत्यादिश्रुतीनामुक्तसूत्राणां चार्थत्यागेन धाष्ट्र्यं करोतीत्यर्थः, तद्दूषयन्ति **स वक्तव्य** इत्यादिना, **द्वितीये** जीवत्वनिराकरणपक्षे, **स्वरूपनाशः**, तथा च मोक्षे आत्महानमपुरुषार्थः पर्यवस्यतीत्यर्थ., ननु जीवत्वस्य काल्पनिकत्वान्न तन्नाशे स्वरूपनाश इत्यत आहुः **'अनेन जीवेने'त्यादिविरोधात्**, कल्पितत्वे प्रवेशकरणत्वस्य नामरूपप्रपञ्चव्याकरणहेतुत्वस्य च श्रुतिविरु-

---

१ वाधा इति वहुवचनान्त. पाठोपि क्वचित् । २ सदंशस्येत्यपि पाठः ।

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ (२. ३. १२.)

अत एवेति च वर्तते, "स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति" "ये के चास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे," श्रुत्युक्तानामुत्क्रान्तिगत्यागतीनां श्रावणात् यथायोग्यं तस्य परिमाणमङ्गीकर्तव्यं, यद्यपि "आराग्रमात्रो ह्यपरोपि दृष्ट" इतिश्रुत्यैव परिमाणमुक्तं तथापि बहुवादिविप्रतिपन्नत्वात् युक्तिभिः साधयति, ब्रह्मवैलक्षण्यार्थमुत्क्रान्तिपूर्वकत्वमुक्तम् ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिगत्यागतीनां सम्बन्धे इन्द्रियादिभिः परिष्वङ्गोप्यस्ति, ततः सन्देहोपि भवेत्, किमुपाधित एतेषां सम्बन्धी भवेत् स्वतो वेति, उत्तरयोर्गत्यागत्योः स्वात्मना केवलस्वरूपेण, "ऊर्णनाभिर्यथा तन्तून् सृजते सञ्चरत्यपि जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" ब्रह्मोपनिषत्, "अनेन जीवेनात्मनानुप्रविश्य ब्रह्माप्येति" "कामरूप्यनुसञ्चरन्नि"ति वा।

अथवा, उत्क्रान्तिगत्यागतीनां जीवसम्बन्ध एव बोध्यते नाणुत्वं, स्वात्मना चोत्तरयोरित्यणुत्वं, "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि"ति उत्क्रमे गत्यतिरिक्ते स्वातन्त्र्याभावात्, स्वात्मना जीवरूपेण चकारादिन्द्रियैश्च गत्यागत्योः सम्बन्धी जीव इत्यर्थः, अतो मध्यमपरिमाणमयुक्तमित्यणुरेव भवति ॥ २० ॥

---

द्धत्वादित्यर्थः, एव ज्ञानधर्मा ज्ञानस्वरूपश्च जीव इति सिद्धं, अत्रापि जीवो वैशेषिकवदङ्गीकार्यो वा साङ्ख्यवदिति-सन्देहः, उभयथाश्रुतिः सन्देहबीजं, साङ्ख्यमतरीत्यैवेति पूर्व. पक्षः, सिद्धान्तस्तूक्त एव, विचारस्तु गुणमुख एव न तु स्वरूपमुख. ज्ञशब्दप्रयोगात् ॥ १८ ॥ ११ ॥

इति द्वितीयतृतीये एकादशाधिकरणम् ॥ ११ ॥

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ अतः परं जीवस्य शारीरकब्राह्मणे "स वा एष महानज आत्मे"ति-व्यापकत्वश्रावणात् श्वेताश्वतरे च "आराग्रमात्रो ह्यपरोपि दृष्ट" इत्यणुत्वश्रावणात् सन्देहे जीवस्य परिमाणं विचार्यते, तत्र सूत्रे एकं षष्ठ्यन्तं पद, तस्य सम्बन्ध. क्वापि न प्रतीयत इति तं बोधयन्ति अत इत्यादिना कर्तव्यमित्यन्तेन, भाष्ये प्रथमं वाक्यं कौशीतकिब्राह्मणे प्रतर्दनाख्यायिकास्थं, द्वितीयमपि तत्रैव गार्ग्यायणिश्वेतकेतुसंवादस्थं, श्रावणात् जीवे श्रावणात्, तथा च श्रुतित एवोत्क्रान्तिगत्यागतीनां जीवे श्रावणात्तद्योग्यमेव जीवस्य परिमाणमङ्गीकार्यमित्यर्थः, सूत्रार्थस्तु जीवात्मा उत्क्रान्तिगत्यागतिसम्बन्धी वर्तते अत एव तादृशार्थबोधकश्रुतिभ्य एवेति बोध्यः, अधिकरण-प्रयोजनमाहुः यद्यपीत्यादि, सूत्रे उत्क्रान्तिशब्द. प्रथमं किमर्थमुक्त इत्यत आहुः ब्रह्मेत्यादि, 'आसीनो दूरं व्रजती'ति ब्रह्मणोपि गतेरुक्तत्वात्तद्वैलक्षण्य गतौ बोधयितुं प्रथममुक्त इति भाव. ॥ १९ ॥

स्वात्मना चोत्तरयोः ॥ २० ॥ सूत्रप्रयोजनमाहु. उत्क्रान्तीत्यादि, उपाधितः जीवे उपाधिकृतः, एतेषां उत्क्रान्त्यादीनां, एवशङ्कायां सूत्रमाहेतिशेषः, समाधानमाहु. उत्तरयोरित्यादिना, तत्रोपष्टम्भिकां श्रुतिमाहुः 'ऊर्णनाभि'रिति, आद्याथर्वणे प्रसिद्धा, द्वितीया छान्दोग्ये, तृतीया बृहदारण्यके।

उक्तव्याख्याने सूत्रस्थचकारवैयर्थ्यमित्यरुच्या प्रकारान्तरेण सूत्रद्वयव्याख्यानमाहुः अथवेत्यादि, तत्र पूर्वसूत्रे षष्ठ्यन्तपदमात्रप्रयोगादुक्तश्रुतिभ्यो ज्ञस्योत्क्रान्तिगत्यागतिमात्रधर्मो बोध्यते, द्वितीये तु ज्ञःश्रुतिभ्य एवेत्यनेन स्वात्मनाप्युत्तरयोर्गत्यागत्योः सम्बन्धीत्यणुत्वं बोध्यते, तदुपपादयन्ति अङ्गुष्ठेत्यादि, तथा चोक्तस्मृत्या मध्यमपरिमाणत्वेन बोधितस्य "अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः बुद्धेर्गुणेने"तिश्रुत्युक्तबुद्धिगुणवैशिष्ट्यप्रतीतेर्गत्यतिरिक्ते उत्क्रमे स्वतोगतिसम्बन्धित्वाभावात् तद्व्यतिरिक्ते 'अनेन जीवेनात्मनानुप्रविश्य' 'ब्रह्माप्येति' 'कामरूप्यनु-

---

१ चकारो नास्ति क्वचन। २ श्रवणादित्यपि पाठ.। ३ अत्र टीकाकारास्तु स्वस्वटीकायामवरमिति पठन्ति। ४ सम्बन्ध इत्यपि पाठः। ५ केवलस्वरूपेणेतीत्यपि पाठ.।

## नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् ॥ २१ ॥

जीवो नाणुर्भवितुमर्हति, कुतः ? अतच्छ्रुतेः अणुत्वविपरीतव्यापकत्वश्रुतेः, "स वा एष महानज आत्मा योयं विज्ञानमय" इति चेत्, न, इतराधिकारात्, इतरः परंब्रह्म-तस्य अधिकारे "महानज"इतिवाक्यं, प्रकरणेन शब्दाश्च नियम्यन्ते, अन्यपरा अपि योगेन ब्रह्मपरा भविष्यन्ति ॥ २१ ॥

## स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥

"स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती"ति स्वशब्दोणुपरिमाणं जीवं बोधयति, न हि स्वप्ने व्यापकस्य वा शरीरपरिमाणस्य वा विहरणं सम्भवति, "बालाग्रशतभागस्य शतधा कल्पितस्य तु भागो जीवः स विज्ञेय" इति "आराग्रमात्रो ह्यपरोपि दृष्ट"इति चोन्मानं, चकारात् स्वप्नप्रबोधयोः सन्धावागतिदर्शनम् ॥ २२ ॥

## अविरोधश्चन्दनवत् ॥ २३ ॥

अणुत्वे सर्वशरीरव्यापि चैतन्यं न घटते इतिविरोधो न भवति, चन्दनवत्, यथा चन्दनमेकदेशस्थितं सर्वदेहसुखं करोति महातप्ततैलस्थितं वा तापनिवृत्तिम् ॥ २३ ॥

## अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

चन्दने अवस्थितिवैशेष्यं अनुपहतत्वचि सम्यक्तया अवस्थानं तस्मात्, त्वच एकत्वात् तत्र भवतु नाम न तु प्रकृते तथा सम्भवतीति चेन्न, अभ्युपगमात्, अभ्युपगम्यते

---

सञ्चर'न्निति वा इति ब्रह्मोपनिषदाद्युक्तस्थले स्वात्मना जीवरूपेण चकारादिन्द्रियैश्च यथासम्भवं गत्यागत्योः सम्बन्धी जीव इत्यर्थो भवति, अतः इन्द्रियसम्बन्धेनापि क्रियाकरणात्, अणुरेव वस्तुतोणुरेव ॥ २० ॥

नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् ॥ २१ ॥ ननु विज्ञानमयशब्दोन्यत्र जीवपरः श्रुत इति कथमस्य ब्रह्मप्रकरणत्वमित्यत आहुः प्रकरणेनेत्यादि, तथा च विज्ञानमयशब्दोन्यत्र जीवपरोप्यत्र विज्ञानप्राचुर्यं बोधयन् ब्रह्मपर एवावसेयः ॥ २१ ॥

स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥ स्वशब्दः आत्मवाचकः शब्द' उन्मानं स्वयमुद्यस्य कार्यकरणं, तथा चैताभ्यामपि जीवोणुरित्यर्थः, चकारः पूर्वसूत्रोक्तहेतुसमुच्चयार्थः, आगतिदर्शनं ज्योतिर्ब्राह्मणोक्तं 'सन्ध्यन्तृतीयं स्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं चे'ति ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥ ननु जीवस्याणुत्वे जलावगाहादौ सकलशरीरव्यापिशैत्याद्यनुपलब्धिप्रसङ्ग इत्याशङ्कायामिदं सूत्रमित्याशयेन व्याकुर्वन्ति अणुत्व इत्यादि, तथा चैतद्दृष्टान्तेनैकदेशस्थत्वेपि सकलशरीरव्यापिशैत्याद्युपलब्धिः सामर्थ्यव्याहत्या सुघटितेत्यर्थः, इत्थञ्च 'ज्वरं हन्ति शिरोबद्धा सहदेवी जटा यथे'तिवत् सकलदेहव्यापिशैत्योपलम्भ इति फलितम् ॥ २३ ॥

अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥ ननु चन्दनदृष्टान्तेन सामर्थ्यसाधनमुक्तं तन्नात्र युक्तं चन्दने एकदेशस्थायित्वस्य निश्चितत्वेन तत्र व्यापनसामर्थ्यकल्पनाया. सर्वदेहव्यापिशैत्यप्रत्यक्षबलेन युक्तत्वात् जीवे तु शरीरैकदेशस्थायित्वस्य प्रत्यक्षेणानिश्चयात् दृष्टान्तवैषम्येण तादृशसामर्थ्यसिद्ध्यभावादित्याशङ्कायामिदं सूत्रमित्याशयेन व्याकुर्वन्ति चन्दन इत्यादि, भवतु नामेति कल्प्यमानं सामर्थ्यं भवतु नाम, न त्वित्यादि प्रत्यक्षेणैकदेशावस्थानस्यानिश्चयादनुमानेनैकदेशस्थितत्वस्यैकदेशस्थितस्य च सर्वशरीरव्यापिचैतन्यजनकसामर्थ्यस्य चन्दनतत्सामर्थ्यदृष्टान्तेन कल्पनायां विलक्षणसामर्थ्यरूपस्य सामर्थ्यस्वरूपस्य वा हेतोः जीवव्यापकत्वोक्त्यासिद्धत्वान्न-

जीवस्यापि स्थानविशेषः, हृदि हि हृदि जीवस्य स्थितिः, "गुहां प्रविष्टा"विति हि युक्तिः ॥ २४ ॥

## गुणाद्वालोकवत् ॥ २५ ॥

जीवस्य हि चैतन्यं गुणः, स सर्वशरीरव्यापी, यथा मणिप्रवेकस्य कान्तिर्बहुदेशं व्याप्नोति तद्वत्, प्रभाया गुणत्वमेव स्पर्शानुपलम्भात् उदकगतौष्ण्यवत्, न च विजातीयस्यारम्भकत्वं, प्रमाणाभावात्, लोकप्रतीतिस्तु सर्वैर्वादिभिरुपपाद्या, तत्र गुणिकल्पनापेक्षया गुण एव स्थलान्तर आरभ्यत इति कल्प्यतां, तथैव लोकप्रतीतेः, पुष्परागादेरपि प्रभा रूपमेव तावद्देशं व्याप्नोतीति मणिस्वभावादेवाङ्गीकर्तव्यं[1], आरम्भकस्य तेजसस्तत्राभावात्, कान्तिः प्रभा रूपमिति हि लोके[2] पर्यायः, वाशब्दो यथालोकं युक्तिः कल्पनीयेति सूचयति, ब्रह्मसिद्धान्ते तु यथैव लोके दृश्यते तथैव ब्रह्मणो जातमिति न कल्पनालेशोपि ॥ २५ ॥

## व्यतिरेको गन्धवत् ॥ २६ ॥

सिद्धं दृष्टान्तमाह, यथा चम्पकादिगन्धश्चम्पकव्यवहितस्थलेप्युपलभ्यते, वेदोक्तत्वा-

---

त्वित्यर्थ, हृदीति, 'कतम आत्मा योय विज्ञानमय प्राणेषु हृद्यन्तर्ज्योतिः पुरुष· स वा एष आत्मा हृदि' 'हृद्येष आत्मे'त्यादिश्रुतेरित्यर्थ, युक्तिरिति ब्रह्माभिन्नत्वेन हृदयप्रवेशे युक्तिः, तथा च चन्दनवज्जीवस्याप्येकदेशावस्थितेः शब्दान्निश्चये जीवस्य त्वगादिवद्व्यापकत्वस्य वक्तुमसामर्थ्येन सर्वशरीरव्यापिचैतन्यजननसामर्थ्यस्य तत्र कल्पनायां न दृष्टान्तवैषम्यमितिभावः, अत्र पूर्वसूत्रादविरोधपदस्यानुवृत्तौ हृद्यभ्युपगमादविरोध इति सूत्रान्वयो बोध्यः ॥ २४ ॥

**गुणाद्वालोकवत्** ॥ २५ ॥ **जीवस्य** हीत्यादि, अत्राप्यविरोध इत्यनुवर्तते, तथा च बहुदेशव्यापिमणिप्रवेककान्तिवत् आलोकप्रभावच्च जीवस्यापि सर्वशरीरव्यापिचैतन्यगुणवत्त्वादविरोध इत्यर्थः, ननु प्रभादृष्टान्तोनुपपन्नः प्रभाया मणिजनितद्रव्यान्तरत्वेन गुणत्वाभावादत आहु. **प्रभाया** इत्यादि, तथा च सूर्यादिप्रभायां स्पर्शोपलम्भात् द्रव्यान्तरत्वं शक्यशङ्कमपि न तु मणिप्रभायामित्यर्थ·, **उदकगतौष्ण्यवदिति**, तथा चातितप्ततैलादौ कदाचित्तेजस उपलब्धावपि जले कदापि तेजसोनुपलम्भाज्जले प्रतीतमौष्ण्य तेजसो गुण एव न तु तद्द्रव्यं तद्वदित्यर्थः, ननु मास्तु मणेः प्रभारूपद्रव्यजनकत्वं किंतु मणिना प्रभाजनकं विजातीयं द्रव्यमुत्पाद्यते तेन च प्रभोत्पद्यते द्रव्यरूपा चिन्तामणिन्यायेनेत्यत आहुः **नचे**त्यादि, तथा च यदि चिन्तामणिन्यायेन विजातीयद्रव्यात् प्रभारूपं द्रव्यं स्यात् तदा चिन्तामण्यसन्निधाने तदुत्पन्नानां स्थितिवत् मण्यसन्निधाने प्रभाया अपि स्थितिः स्यान्नत्वेवमतः प्रमाणाभाव इत्यर्थः, तत्र मणिप्रभास्थले लोकप्रतीत्युपपादने, ननु प्रभायाः स्वसमवायिकारणतावच्छेदकतेजस्त्वनियतत्वात् कथं पार्थिवे मणौ तदुत्पत्तिरित्यत आहु. **तथैव लोकप्रतीते**रिति, तथा च सुवर्णरूप्यमृदादिघटेषु घटत्वेन व्यवहारेपि मृदादिसमवायिकार्यतावच्छेदकभेदः कल्पनीयो लोके, अन्यथा व्यभिचारात् कार्यकारणभाव एव न सिध्येत्तथात्रापि प्रभायां मणितेजोजन्यतावच्छेदकवैजात्यभेदाङ्गीकारान्न दोषलेश इतिभावः, **प्रभा रूपमेवे**ति एवकारेण प्रभाया द्रव्यत्वं व्यवच्छिद्यते, **आरम्भकस्य** तैजसप्रभारम्भकस्य, तत्र मणौ, **अभावा**दिति, तथा च तेजोजन्यप्रभाविलक्षणैव मणिजन्यप्रभेति फलितं, प्रभाया· गुणत्वे कोशसम्मतिमाहु· **प्रभा रूप**मित्यादि 'शोभा कान्तिर्द्युतिश्छवि'रिति 'स्युः प्रभारुग्रुचिस्त्विड् भे'त्यादि, **वाशब्द** इति वाशब्द एवकारार्थः, तथा च **गुणात्** गुणस्वीकारात् **लोकवदे**वाविरोधोत्रानुसन्धेय इति सूत्रार्थः, **ब्रह्मे**त्यादि, तथा च ब्रह्मैव सकललोकसिद्धकारणरूपं भूत्वा कार्यजातमुत्पादयतीति न लोकविरोधगन्धोपीत्यर्थः ॥ २५ ॥

**व्यतिरेको गन्धवत्** ॥ २६ ॥ ननु गुणस्य स्वसमवाय्यतिरिक्तवृत्तित्वं न क्वापि दृष्टमिति कथं गन्धव्यतिरेकोपपत्तिरित्यत आहुः **सिद्धमि**त्यादि, **सिद्धं** लोकवेदोभयसिद्धं, तथा च **व्यतिरेकः** जीवचैतन्यमणिप्रभयोः स्वाश्रया-

---

१ महीस्वभावादित्यपि पाठ· । २ लोके पर्याय इत्यपि पाठ· ।

दस्य दृष्टान्तत्वं, "यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति, अन्यथाकल्पना त्वयुक्तेत्यवोचाम ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वञ्च आत्मनोभिधाय "तस्यैवालोमभ्य आनखाग्रेभ्य" इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

"प्रज्ञया शरीरं समारुह्ये"ति करणत्वेन पृथगुपदेशाच्चैतन्यं गुणः ॥ २८ ॥ १२ ॥

॥ इति द्वितीयाध्याये तृतीयपादे द्वादशमुत्क्रान्तिगत्यागतीनामित्यधिकरणम् ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ ( २. ३. १३. )

ननु "तत्त्वमस्या"दिवाक्यैः परमेव ब्रह्म जीव इति कथमणुत्वमितीमामाशङ्कां निराकरोति तुशब्दः, तस्य ब्रह्मणो गुणाः प्रज्ञाद्रष्टृत्वादयस्त एवात्र जीवे सारा इति जडवैलक्षण्यकारिण इति अमात्ये राजपदप्रयोगवज्जीवे भगवद्व्यपदेशः, मैत्रेयीति[1] सम्पूर्णे ब्राह्मणे भगव-

---

धिकदेशप्रकाशकत्वाद्वृत्तित्वमुरीकार्यं यथा चम्पकगन्धस्येति लोकवेदानुसारेण स्वीकार्यमिति सूत्रार्थः, लोकदृष्टान्तं विवृण्वन्ति यथेत्यादि, न च तत्रापि चम्पकावयवा एवायान्ति न तु गन्धस्तत्र क्रियाभावादितिचेन्न, वेदे तन्मात्राभ्य एव पञ्चभूतोत्पत्तेः रूपादितन्मात्रास्वेव पृथिव्यादिपञ्चकलयस्य च श्रावणाद्गन्धेपि द्रव्यत्वेन क्रियासम्भवात्, अवयवागमने पूर्वपुष्पनाशः पूरकादृष्टेनावयवान्तरै पुनरुत्पादनमित्यादिनिर्मूलयुक्तिगौरवमपेक्ष्य वेदोक्तक्रियावत्त्वस्यैव पुष्पगन्धेङ्गीकारो लघुः समूलश्चेति स एवादर्तव्यः, न चैव चम्पकरूपरसादीनामन्यत्र गत्यापत्तिरिति वाच्यं, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इतिरीत्या सति दूषणे समाधानं न तु समाधानानुरोधाद्दूषणारोपोपि साम्प्रदायिक इति हृदिकृत्याहुः अन्यथेत्यादि ॥ २६ ॥

**तथा च दर्शयति** ॥ २७ ॥ चैतन्यगुणत्वे प्रमाणं दर्शयितुमिदं सूत्रमित्याशयेनोपन्यस्य विवृण्वन्ति **हृदयायतने**त्यादि, एतद्विषयवाक्यं कौशीतकिब्राह्मणे, तत्र हि 'तं होवाचाजातशत्रुर्यत्रैष[2] एतद्बालाके पुरुषोशयिष्ट यत्रैतदभूद्यत एतदागादि'ति प्रतिज्ञाय 'हिता नाम पुरुषस्य नाड्यो हृदयात् पुरीततमभिप्रतन्वन्ति तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्य" इत्यादिना नाडीष्वणुत्वं प्रतिपाद्य 'तस्यैव हृदयायतनस्याणोरात्मनः स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखाग्रेभ्य' इति प्रज्ञात्मत्वोक्तिपूर्वकं प्राप्तिबोधनाच्चैतन्यं गुण एवेत्यर्थः, गुणस्यैव च व्याप्तिरन्यथाणोर्व्यापकत्वासम्भवः ॥ २७ ॥

**पृथगुपदेशात्** ॥ २८ ॥ ननु 'शरीरं समारुह्ये'ति जीवस्यैव समारोहणदर्शनात् विरुद्धधर्मश्रवणाज्जीवस्यैव व्याप्तिसामर्थ्यमस्तु न तु चैतन्यस्येत्यत आहुः श्रुतिं प्रज्ञयेत्यादि, करणत्वेन व्याप्तिं प्रति करणत्वेन, **पृथगुपदेशात्** जीवापेक्षया पृथगुपदेशात् ॥ २८ ॥ १२ ॥

इति द्वितीयतृतीये द्वादशाधिकरणम् ॥ १२ ॥

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्** ॥ २९ ॥ तुशब्दस्य शङ्कानिरासार्थत्वात् तद्व्याख्यानमुखेनैव सूत्रप्रयोजनं वदन्तः सूत्रं व्याकुर्वन्ति नन्वित्यादि, ननु जीवाणुत्वविषयिणी विप्रतिपत्तिस्तदा निवर्तते यदि जीवस्य ब्रह्मणः सकाशाद्भेदः स्यात् स एव तु न सम्भवति छान्दोग्ये 'ऐतदात्म्यमिदं सर्वं तत्सत्य'मिति सर्वस्य ब्रह्मात्म-

---

१ मैत्रेयीम्प्रतीत्यपि पाठः । २ यत्रैति प्रकाशकारादीना पाठः ।

त्त्वेन जीव उक्तः, ननु कथमन्यस्यान्यधर्मत्वेन कथनं, न हि निरूपणस्थल एवोपचारः सम्भवति, तत्राह प्राज्ञवत्, "तद्यथा प्रियया स्त्रिया सम्परिष्वक्त" इत्यत्र "एवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्त" इत्यभिधाय प्राज्ञस्वरूपमाह "तद्वा अस्यैतदतिच्छन्दोपहतपाप्माभयं रूपमशोकान्तरमत्र पिता अपिता भवती"त्यादि, प्राज्ञश्च सुषुप्तिसाक्षी, न हि तस्यापहतपाप्मत्वमस्ति, ब्रह्मलिङ्गात्, एवमेव शारीरस्यापि जीवस्य ब्रह्मधर्मबोधिकाः श्रुतयः।

इदमत्र वक्तव्यं, सर्वोपनिषत्सु ब्रह्मज्ञानं परमपुरुषार्थसाधनमिति तन्निर्णयार्थं भगवान् व्यासः सूत्राणि चकार, तत्र ब्रह्मसूत्रे विचारं प्रतिज्ञाय जगत्कर्तृत्वाद्यसाधारणलक्षणं ब्रह्मणः प्रतिज्ञाय समन्वयनिरूपणे जीववाक्यानि दूरीकृत्याविरोधेऽपि[3] ऐक्येऽपि[4] हिताकरणादिदोषमाशङ्क्य "अधिकन्तु भेदनिर्देशा"दिति परिहृत्य जीवस्याणुत्वमुपचाराद्ब्रह्मत्वमंशत्वं पराधीनकर्तृत्वादिकं प्रतिपाद्य तस्यैव दक्षिणमार्गेण पुनरावृत्तिमुक्त्वा ससाधनेन ब्रह्मज्ञानेनार्चिरादिद्वारा ब्रह्म-

---

त्वमुक्त्वाग्रे 'स आत्मा तत्त्वमसी'ति सर्वस्माद्भिन्नतया त्वम्पदार्थस्य 'सत्यं ज्ञानमनन्तं ब्रह्मे'तिश्रुतिशतैर्ब्रह्मत्वं सिद्धमत कथमणुत्व जीवस्येतीमामाशङ्काम्परिहरतीत्यर्थः, परिहारप्रकारमाहु तथेत्यादिना, प्रज्ञाद्रष्टृत्वादयो ब्रह्मणि श्रुतिसिद्धा, तथा हि 'प्रज्ञा च तस्मात्प्रसृता पुराणी''ति श्वेताश्वतरे प्रसिद्ध, गार्गीब्राह्मणे 'एतद्वाक्षर गार्गि अदृष्ट द्रष्टृश्रुत श्रोत्रमतम्मन्त्रविज्ञात विज्ञात्रि'त्यादि, त एवात्र जीवे सारा इति इन्द्रप्रतर्दनसंवादे 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राण समारुह्य सर्वान्गन्धानाप्नोती'त्यादौ बोध्य, जडवैलक्षण्यकारिणः एत एव जडवैलक्षण्यस्य प्राधान्याज्जीवे सम्पादकाः, अन्यथा पदार्थत्वब्रह्मत्वांशत्वाना सर्वत्र तुल्यत्वात् केन जडवैलक्षण्यं स्यादितिभाव, गौण्या जीवे भगवद्व्यपदेशस्थलमाहु मैत्रेयीति, द्वितीयमैत्रेयीब्राह्मणे ब्रह्मत्वेन जीव एवोक्तो न तु ब्रह्मैवेति, इद च वाक्यान्वयाधिकरणस्य विषयवाक्य, तत्र च 'न वारे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पति प्रियो भवती'ति जीवमुपक्रम्याग्रे च तद्विज्ञानार्थ सर्वस्य तदात्मत्वकथनेन वेदादीनां तन्नि श्वासत्वकथनादिना च ब्रह्मधर्माणा तत्र बोधनात् भगवत्त्वेन जीव एव उक्तस्तत्र यथा वाक्यान्वयेन हेतुना प्रतिज्ञासिद्ध्यादिभिश्चोपक्रममनादृत्य ब्रह्मवाक्यत्वस्थापनाद्व्यपदेशपक्ष एव स्वीकृतस्तथा'तत्त्वमसी'त्यत्र तत्पदेऽप्यङ्गीकर्तव्यमित्यर्थः, शङ्कन्ते ननु कथमित्यादिना, अन्यस्य जीवस्य, अन्यधर्मत्वेन ब्रह्मधर्मत्वेन, निरूपणस्थल एव जीवब्रह्मणोर्भेदनिरूपणस्थल एव, तत्राह निरूपणस्थल एवाहेत्यर्थः, तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्य किंचन वेद नान्तरमिति जीवब्रह्मणोर्भेददृष्टान्तनिरूपणावसरे एवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्त इति जीवप्राज्ञयोर्भेदमभिधाय कः प्राज्ञ आत्मा इत्याकाङ्क्षायाम्प्राज्ञस्वरूपमाह तद्वा अस्यैतदतिच्छन्दोपहतपाप्मेत्यादिना, अत्रास्यरूपमित्यनेन परमेश्वरस्य रूपान्तरम्प्राज्ञ इत्यर्थः सिध्यति न तु परमपुरुष एव प्राज्ञ इत्यत्र निरूपणावसर एव दृष्टान्त एव रूपव्यपदेशेन जीवब्रह्मणोर्भेदनिरूपणं श्रुतौ कृतं, न हि तस्यापहतपाप्मत्वमस्तीति नह्यागन्तुकब्रह्मधर्मरूपापहतपाप्मत्वातिरिक्त प्राज्ञे स्वतोपहतपाप्मत्वमस्तीत्यर्थ, न च ब्रह्मधर्मलिङ्गात् प्राज्ञः परमात्मैवास्त्विति वाच्य, 'प्रणवस्य चत्वारः पादा विश्वो वैश्वानरः प्रथमस्तैजसो हिरण्यगर्भो द्वितीय प्राज्ञ ईश्वरस्तृतीय ईश्वरग्रासस्तुरीय स्वराडि'ति प्राज्ञस्य ब्रह्मपादेषु गणनात् परब्रह्मत्वासम्भवात्, ननु सूत्रे तत्पदद्वयं वर्तते तत्र पूर्वतच्छब्देनोपाधिः परामृश्यते द्वितीयेनाणुत्वमिति जीवे उपाधिकृताणुत्वगुणादुपाधिगुणसारत्वादुपाधिव्यपदेश उत तत्पदद्वयेन ब्रह्मैव परामृष्टव्यमिति ब्रह्मगुणसारत्वाज्जीवे ब्रह्मत्वव्यपदेश इति वार्थ इति कथमत्र निश्चय इत्यत आहु इदमित्यादि, सूत्रे यदस्माभिर्व्याख्यातन्तदेव व्यासाभिप्रेतन्तत्र हेतुमाहु सर्वोपनिषत्स्वित्यादि योजितवानित्यन्तं, चतुर्वेदोक्तासूपनिषत्सु 'ब्रह्मविदाप्नोति पर' 'तमेव विद्वानमृत इह भवति' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाये'त्यादिजातीयवाक्यदर्शनात् ब्रह्मज्ञानं पुरुषार्थसाधनमित्यर्थः, तन्निर्णयार्थं ब्रह्मनिर्णयार्थं, ब्रह्मसूत्रे अथातो ब्रह्मजिज्ञासेतिसूत्रे, तस्यैव जीवस्यैव, तत्र वेदान्तसूत्राणां विचारविषये, कश्चिच्छंक-

---

१ भगवत्त्वेन जीवत्वेन जीव उक्त इति पाठस्तु प्रमादज । २ अन्यधर्मवत्त्वेनेत्यपि पाठः। ३ अपिपदं नास्ति क्वचन। ४ अपिपदरहितोपि पाठः क्वचन। ५ अहिताकरणादिदोषमित्यपि पाठः।

प्राप्तिमुक्त्वा "न स पुनरावर्तते" इत्यनावृत्तिं वदन् शास्त्रपर्यवसानेन सर्वान् वेदान्तान् अव्याकुलतया योजितवान्, तत्र कश्चित् तद्व्यपदेशेन प्रोक्तानि "तत्त्वमस्या"दिवाक्यानि स्वीकृत्य जीवमात्रं च ब्रह्म स्वीकृत्य तदतिरिक्तस्य सर्वस्य कारणांशकार्यरूपस्य मिथ्यात्वं परिकल्प्य तद्बोधकश्रुतीनामर्थवादत्वेन मिथ्यात्वं स्वीकृत्य सुषुप्तिसम्पत्त्योर्भगवता प्रकटीकृतसानन्दरूपत्वं तत्प्रतिपादकवाक्यानां सद्योमुक्तिरूपफलवाचकत्वमुक्त्वा क्रममुक्तिमुपासनापरत्वेन योजयित्वा वेदसूत्राणि व्याकुलीचकार, तद् वेदान्तानां ब्रह्मपरत्वं जीवपरत्वं वेति यदत्र युक्तं तत् सद्भिरनुसन्धेयम् ॥२९॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

ननु कथमन्यस्य नीचस्य सर्वोत्कृष्टव्यपदेशोपि[1], न हि प्रामाणिकैः सर्वथायुक्ते[2] व्यपदेशः क्रियते, न चोक्तद्गुणसारत्वाद्ब्रह्मणः आनन्दांशस्य प्राकट्यादिति वाच्यं, तथा सति प्राज्ञवत् पुनस्तिरोहितं स्यादिति तस्य तद्व्यपदेशो व्यर्थोऽप्रयुक्तश्चेति चेन्नायं दोषः, कुतः ? यावदात्मभावित्वात् पश्चात् यावत्पर्यन्तमात्मा नित्यत्वात् सर्वदा आनन्दांशस्य प्राकट्यात् तस्य तथैव दर्शनमस्ति, अनावृत्त्यैश्वर्यादीनामुक्तत्वात्[3] प्राज्ञात् सम्पन्नत्वं विशेषः, चकारात् तस्य चानन्दः प्रकटित इति न दूषणगन्धोपि ।

व्यपदेशो वा नात्यन्तमयुक्तस्य, यावदात्मा ब्रह्म भवत्यानन्दांशप्राकट्येन तावदेव तद्व्यपदेशो राजज्येष्ठपुत्रवत्, तदेवोक्तं "व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः प्रतीयेरन् परिच्छेदो व्यापकत्वञ्च तस्य तदि"ति ॥ ३० ॥

---

राचार्यः, **तद्व्यपदेशेन** ब्रह्मव्यपदेशेन, **तदतिरिक्तस्य** तदितरस्य, **कारणांशे**त्यादि कारणरूपस्यांशरूपस्य कार्यरूपस्य च, **मिथ्यात्वं** अविद्यांशत्वं, **तद्बोधकश्रुतीनां** तेषां ब्रह्मताबोधिकानां श्रुतीनां, तद् **वेदान्तानामि**त्यादि, तथा च 'सर्वे वेदा यत्पदमामनन्ति' 'तन्त्वौपनिषदं पुरुषं पृच्छामि' 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिविषयो ब्रह्मेति वेदान्तानां ब्रह्मपरत्वमविवादं, ब्रह्म जगत्कर्तृत्वाद्यसाधारणधर्मैर्जीवविलक्षणमित्यपि पूर्वं सिद्धमेव, अन्यदपि जीवब्रह्मणोरंशांशिभावश्रवणात् सर्वं जीव उपपद्यत एवेति श्रुतिस्मृतिव्याकुलीकरणमपार्थमेवेत्यवसेयम् ॥ २९ ॥

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** ॥ ३० ॥ व्यपदेशविषये एव कंचिद्दोषमाशङ्क्य परिहरन्ति सूत्रकारस्तं दोषं प्रकाशयन्ति **नन्वि**त्यादि, **अन्यस्य** ब्रह्मभिन्नस्य, **सर्वोत्कृष्टव्यपदेशः** 'ब्रह्मविद्ब्रह्मैव भवती'ति निर्गलितः, **प्राकट्यात्** मुक्तजीवे प्राकट्यात्, **तिरोहितं स्यात्** मुक्तजीवगतमानन्दादि तिरोहितं स्यात्, सूत्रोक्तं समाधानमाहुः **नायमि**त्यादि, **यावदात्मभावित्वात्** आत्मनो नित्यत्वात्तत्स्थितिमनतिक्रम्य भगवद्धर्माणां मुक्तौ धृतित्वनियमादित्यर्थः, **तथैव** ब्रह्मत्वेनैव, **उक्तत्वात्** 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इत्यादिश्रुत्युक्तत्वात्, नन्विदमप्रयोजकं 'प्राज्ञस्तृतीयपाद एष सर्वेश्वर एषोन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूताना'मित्येवं प्राज्ञं प्रशस्याग्रे तुरीयव्याख्याने 'ईश्वरग्रासस्तुरीय' इतिकथनेन प्राज्ञलयस्य तुरीये उक्तत्वात् तस्यैवास्याप्यानन्दादिभगवद्धर्माणां लये यावदात्मभावित्वं दुर्वचमत आहुः **प्राज्ञात् सम्पन्नत्वं विशेषः**, तथा च प्राज्ञस्य ब्रह्मसम्पन्नत्वाभावात् लयेन ब्रह्मधर्माणान्तिरोभावो युक्तः, अस्य तु ब्रह्मसम्पन्नत्वेन लयाभावाद्ब्रह्मधर्माणामतिरोधानात् सदादर्शनमित्यर्थः, **चकारादि**त्यादि, तथा च यावन्तो दोषास्त आनन्दतिरोधानकृतास्तत्प्राकट्ये तु न कोपि दोषलेश इत्यर्थः, नित्यत्वादित्यनुक्त्वा **यावद्भावित्वादि**ति यदुक्तं तत्सूचितमर्थान्तरमाहुः **व्यपदेशो वे**त्यादि, **वा**शब्दोर्थान्तरे, युक्ततां व्युत्पादयन्ति **यावदि**त्यादि, तथा च ब्रह्मभावोत्तरं तु ब्रह्मेति ततः पूर्वं व्यपदेशः स च मुक्तौ ब्रह्मत्वसूचकोतो नायुक्तः, अयं सूत्रार्थः, यावदवधारणे, यावदात्मा संसारी तावत्कालं व्यपदेशित्वान्न **दोषः** नायुक्तत्वं, **तद्दर्शनात्** ब्रह्मदर्शनात्, 'ब्रह्म वेद ब्रह्मैव भवती'त्यग्रे ब्रह्मभावस्यैवोक्तत्वात्, पूर्वव्याख्याने व्यपदेशो

---

१ सर्वोत्कृष्टत्वेत्यादि पाठोपि । २ अयुक्त इत्यपि पाठः । ३ अनावृत्तैश्वर्यादीनामित्यपि पाठः ।

## पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ ३१ ॥

व्यपदेशदशायामपि आनन्दांशस्य नात्यन्तमसत्त्वं पुंस्त्वादिवत्, यथा पुंस्त्वं सेकादिसामर्थ्यं बाल्ये विद्यमानमेव यौवने प्रकाशते, तथा आनन्दांशस्यापि सत एव अभिव्यक्तियोगः[3] ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ॥ ३२ ॥

ननु कथमेवं स्वीक्रियते, इदानीं संसारावस्थायां सच्चित्प्राकट्यमेव मोक्षे त्वानन्दांशोपि प्रकट इति, तन्निवारयति, तथा सति नित्यमुपलब्धिः स्यादानन्दांशस्य, तथा सति न संसारावस्थोपपद्येत, अथानुपलब्धिः सर्वदा तथा सति मोक्षदशा विरुध्येत, अथान्यतरनियमः जीवो निरानन्द एव ब्रह्म त्वानन्दरूपं, तथा सति "ब्रह्मैव सन् ब्रह्माप्येती"तिश्रुतिविरोधः, तस्मात् पूर्वोक्त एव प्रकारः स्वीकर्तव्य इति सिद्धम् ॥ ३२ ॥ १३ ॥

॥ इति द्वितीयाध्याये तृतीयपादे त्रयोदशन्तद्गुणसारत्वाधिकरणम् ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ ( २. ३. १४. )

साङ्ख्यानां प्रकृतिगतमेव कर्तृत्वमिति तन्निवारणार्थमधिकरणारम्भः, कर्ता जीव एव, कुतः? शास्त्रार्थवत्त्वात्, जीवमेवाधिकृत्य वेदे अभ्युदयनिःश्रेयसफलार्थं[4] सर्वाणि कर्माणि विहितानि, ब्रह्मणोनुपयोगात्, जडस्याशक्यत्वात्, सन्दिग्धेपि तथैवाङ्गीकर्तव्यम् ॥ ३३ ॥

---

मुक्त्यनन्तरमपि स्वीकार्य. एतद्व्याख्याने तु मुक्तिपूर्वकाल एवेतिविशेष, अत्र च 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमि'रितिमत समर्थितं, ब्रह्मभावेन जीवस्य व्यापकत्वमाहु. एतदेवोक्तमित्यादिना, तस्य मुक्तजीवस्य, तत् विरुद्धधर्मवत्त्वम् ॥ ३० ॥

पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ ३१ ॥ ननु पूर्वमविद्यमानानन्दस्य मुक्तौ उत्पन्नत्वेन नाशसम्भवान्न यावदात्मभावित्वमित्याशङ्काया प्रवृत्त तत्समाधानाय सूत्रमिदमित्याहु. व्यपदेशेत्यादि, व्यपदेशदशायां मुक्तिपूर्वकाले ब्रह्मसादृश्यदशायां, सत एव पूर्वं जीवे विद्यमानस्यैव, अभिव्यक्तियोगः मुक्तौ अनुभवविषयतायोग. ॥ ३१ ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ॥ ३२ ॥ एवं जीवे मुक्तिदशायां आनन्द प्रकट मुक्तिपूर्वदशायां त्वप्रकट एव वास्तीतिप्रकारेण उक्तविपरीतार्थे दूपणमाहुः सूत्रार्थरूपं इदानीमित्यादि, प्राकट्यमेवेति एवकारेणानन्दसत्त्वं व्यवच्छिद्यते, निवारयति सूत्रकारो निवारयति, तथा सति पूर्वमविद्यमानानन्दस्य मुक्तिदशायां प्राकट्याङ्गीकारे सति, अनुपलब्धिः सर्वदा जीवे आनन्दानुपलब्धि. सर्वकालिका, अन्यतरनियममेवोपपादयन्ति जीवो निरानन्द इत्यनेन, सूत्रे पूर्वोक्तरीत्यार्थानङ्गीकार उक्तानि त्रीणि दूपणानि स्युरित्यर्थः ॥ ३२ ॥ १३ ॥

॥ इति द्वितीयतृतीये त्रयोदशाधिकरणम् ॥ १३ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ अधिकरणप्रयोजनमाहुः साङ्ख्यानामित्यादि, पूर्वं ज्ञानस्वरूपत्वेन ज्ञानाधिकरणत्वेन चोक्ते जीवे साङ्ख्यानामिवाकर्तृत्व नैयायिकानामिव कर्तृत्व वा स्यादिति संशय., तत्र 'नायं हन्ति न हन्यते' 'कार्यकारणकर्तृत्वे हेतु प्रकृतिरुच्यते' 'प्रकृते. क्रियमाणानी'त्यादिवाक्यैः प्रकृतिः कर्त्रीतिपूर्वपक्षे सिद्धान्तमाहु कर्तेत्यादि, कर्ता दर्शादिचित्रादिज्योतिष्टोमादिकर्मणा कर्ता, शास्त्रार्थवत्त्वात् शास्त्रोक्तफलेधिकारित्वात्, सन्दिग्धत्वेपि प्रकृतिकर्तृत्वप्रतिपादकवाक्यै. कर्तृत्वे सन्दिग्धेपि, तथा च श्रौतस्मार्तकर्मानुष्ठानं नेश्वरे न प्रकृतौ न वेतरजडे सम्भवति तथा सति तद्बोधकवाक्यवैयर्थ्यापत्तिरतो जीवे कर्तृत्वाङ्गीकार., न च प्रकृतिकारणताबोधकवाक्य-

---

१ अभिरहित पाठ प्रमादज.। २ स्वत इत्यपि पाठ.। ३ व्यक्तियोग इत्यपि पाठ । ४ अभ्युदयेतिपदं लुप्त क्वचन ।

## विहारोपदेशात् ॥ ३४ ॥

तस्यैव गान्धर्वादिलोकेषु "यद्यत् कामयते तत्तद्भवती"तिविहार उपदिष्टः, ततश्च कर्तृत्वभोक्तृत्वयोः "साधुकारी साधुर्भवती"तिसामानाधिकरण्यश्रवणात् जीव एव कर्ता ॥३४॥

## उपादानात् ॥ ३५ ॥

"तदेषां प्राणानां विज्ञानेन विज्ञानमादाये"ति जीवेन सर्वेषां विज्ञानमुपादीयते, तस्मादिन्द्रियादीनां करणत्वमेव, स्वातन्त्र्यादस्यैव कर्तृत्वं,

यस्तु मन्यते जीव[1]सम्बन्धात् जीवस्य कर्तृत्वमिति स प्रष्टव्यः, किं बुद्धिकर्तृत्वं जीवे समायाति? अथवा जीवगतमेव कर्तृत्वं बुद्धिसम्बन्धादुद्गच्छति? अथवा शशविषाणायितमेव कर्तृत्वं सम्बन्धे समायाति? नाद्यः, जडत्वात् अनङ्गीकारात् पूर्वं निराकृतत्वाच्च, द्वितीये त्विष्टापत्तिः उपादानविरोधश्च, तृतीये शास्त्रविरोधः ब्रह्मणि सिद्धत्वाच्च, असत्कार्यस्य निराकृतत्वात् सर्वविप्लवस्तु माध्यमिकवदुपेक्ष्यः ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

व्यपदेशः "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि चे"ति, अत्र साङ्ख्ये बुद्ध्यादीनामेव कर्तृत्वं न जीवस्येति क्रियायां यागादिकर्मसु, न तु भोगे, जीवस्य कर्तृत्वं न चेत् न, तथा सति

---

विरोधः, 'अधिष्ठान तथा कर्ता करणं च पृथग्विधं विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चम'मिति पञ्चभिः कार्येण जननीये 'कर्ते'त्यनेन जीवस्य कर्तृत्वोक्तेः, प्रकृते. करणत्वन्तु कामक्रोधादिलौकिकस्थल एवोपपादनीय सर्वानुभवसिद्धत्वात्, जीवे तु तत्कृतमेवाध्यस्यते, न तु सर्वत्र, उक्तश्रुतेः ॥ ३३ ॥

**विहारोपदेशात्** ॥ ३४ ॥ जीवस्य प्रकृतिसंसृष्टत्वेन संसृष्टजीवकर्तृत्वाङ्गीकारेपि शास्त्रार्थः सम्पद्यत एवेतिशङ्कायां तद्व्युदासाय सौत्र हेत्वन्तर व्याकुर्वन्ति तस्यैवेत्यादि ॥ ३४ ॥

**उपादानात्** ॥ ३५ ॥ सङ्कल्पस्य मनोधर्मत्वाद्दहरविदोपि मनसः संसृष्टत्वमेवेति न केवले जीवे कर्तृत्वसिद्धिरितिशङ्कानिरासायोक्त सूत्रोक्तहेतु विषयवाक्योपन्यासेन व्याकुर्वन्ति तदेषामित्यादि, श्रुतिस्तु बृहदारण्यके 'यत्रैष एतत्सुप्तोभूद्य एप विज्ञानमय पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय एषोन्तर्हृदयआकाशस्तस्मिञ्शेत' इति, अत्रा'भूदि'त्यन्तं भिन्न वाक्यं, अग्रे तु विज्ञानेन स्वीयेन गुणेन एषां प्राणानां अन्तर्बहिरिन्द्रियाणां विज्ञानं ज्ञानजनिकां शक्तिमादायेत्यर्थो बोध्यः, 'काम सङ्कल्प' इतिश्रुतिस्तु लौकिकपरा, अत. स्वातन्त्र्याज्जीवस्यैव कर्तृत्वं, **जीवसम्बन्धात्** जीवस्य बुद्धिसम्बन्धात्, **उद्गच्छति** घृतद्रवत्वन्यायेनोद्गच्छतीत्यर्थः, **पूर्वं** रचनानुपपत्त्यादिसूत्रेषु, **उपादानविरोधः** जीवे बुद्धिसम्बन्धात् कर्तृत्वोपगमस्वीकारे श्रुतौ प्राणानामिन्द्रियाणां बुद्ध्युपादानत्वमुक्तं न स्यात् जीवसम्बन्धित्वे प्राणसम्बन्धित्वासम्भवात्, **शास्त्रविरोधः** शास्त्रे हि व्यासे. कर्तृत्व प्रतिज्ञातं कर्तृत्वस्य मिथ्यात्वे समागमासम्भवात् शास्त्रविरोध इतिभावः, **ब्रह्मणी**त्यादि, तथा च वेदे ब्रह्मणि कर्तृत्वस्य सिद्धत्वान्न मिथ्यात्वं वक्तुं शक्यत इत्यर्थः, ननु निर्गुणे ब्रह्मणि कर्तृत्वस्य बाधादलीकमेवेत्यत आहुः असदित्यादि, **निराकृतत्वात्** ब्रह्मणि विरुद्धधर्माङ्गीकारेण निराकृतत्वादित्यर्थः, **सर्वविप्लवः** वेदेशेप्यप्रामाण्यवादी ॥ ३५ ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ॥ ३६ ॥ श्रुतार्थापत्त्या जीवस्य कर्तृत्वं साधयित्वा साक्षाच्छ्रुत्या साधयतीत्याशयेन व्याकुर्वन्ति **व्यपदेश इत्यादिना**, व्यपदेशः प्रथमाविभक्त्या कर्तृत्वेन निर्देशः, स 'विज्ञान'मितिश्रुतौ जीवे वर्तततेः कल्पना विना साक्षाच्छ्रुत्यैव जीवः कर्तेति सिद्धं, **अत्रेत्यादि** अस्यामपि श्रुतौ विज्ञानपदेन बुद्धिरेवोच्यते, **न तु भोगे** लौकिकवैदिककर्मसामान्ये बुद्धेः कर्तृत्व भोगे तु जीवस्यैव कर्तृत्वमित्यर्थः, तथा च क्रियायामेव जीवस्य कर्तृत्वं नेति चेन्न, **तथा सति** विज्ञानपदेन प्रकृतिव्यपदेश उच्यमाने सति, **विर्पयासः**

---

[1] बुद्धिसम्बन्धादित्यपि पाठः, स च साधुतर ।

निर्देशस्य विपर्ययो विपर्यासो भवेत्, "विज्ञानेन विज्ञानमादाये"तिश्रुत्यनुरोधात्, प्रकृतेपि तृतीयान्तता आपद्येत, अथ स्वव्यापारे कर्तृत्वं, तथापि पूर्वनिर्देशस्य विज्ञानमयस्य विपर्ययः स्यात्, विकारित्वं स्यात्, तच्चासङ्गतं त्र्यच्त्वात्, "विज्ञानमादाये"त्यत्र विपर्यय एव, एकस्य प्रदेशभेदेनार्थभेदोपि, भगवति सर्वे शब्दाः स्वभावत एव प्रवर्तन्ते औपचारिकत्वज्ञापनाभावात्, "यज्ञो जायमान"इति श्रद्धादीनां शिरस्त्वादिः, तस्मात् विज्ञानमयो जीव एव, जडस्य च स्वातन्त्र्याभावान्न कर्तृत्वम् ॥ ३६ ॥

## उपलब्धिवदनियमः ॥ ३७ ॥

ननु जीवस्य कर्तृत्वे हिताकरणादिदोषप्रसक्तिरिति चेत् न, उपलब्धिवदनियमः, यथा चक्षुषेष्टमनिष्टञ्चोपलभते एवमिन्द्रियैः कर्म कुर्वन् इष्टमनिष्टं वा प्राप्नोति ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

नन्वीश्वरवत् स्वार्थमन्यथा न कुर्यादिति चेत्, शक्तिविपर्ययात् तथासामर्थ्याभावात्, इत एव दैवादहितमपि करोति ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

जीवस्य क्रियाज्ञानशक्ती योगेन सिध्यतः, समाध्यभावात् शक्त्यभाव इत्यर्थः, च-

---

विभक्तिविपर्यासः, तथा च जीवपरविज्ञानपदस्य बुद्धिपरतापत्ति, इत्थं च विज्ञानेन यज्ञं तनुत इति स्यादित्यर्थः, ननु कारकाणां स्वव्यापारे जननसामर्थ्यात् 'स्थाली पचति काष्ठ पचती'त्यादिवदत्रापि कर्तृत्वं स्वव्यापारानुबन्धि शक्यवचनमतो निर्देशविपर्ययो न भविष्यतीत्याशङ्क्य दूषयन्ति अथेत्यादि, यद्येवं निर्देश. समर्थ्यते तथाप्ययं श्लोको विज्ञानमयमुपक्रम्य पठित इति भवन्मते तेन विज्ञानमयप्रतिपादकेनैकार्थ्यात् तत्रापि विज्ञानपदस्य बुद्धिवाचकत्वेपि विज्ञानमयपदस्य बुद्धिविकारवाचकत्वं स्यात्, तच्चासङ्गतं, त्र्यच्त्वात् 'द्व्यचश्छन्दसी'तिविधेर्बह्वज्व्यावृत्त्यर्थत्वात्, अतस्तत्रेवात्रापि तदनुरोधाज्जीववाचकत्वमेवाङ्गीकार्यं विज्ञानपदस्य, 'विज्ञानेन विज्ञानमादाये'त्यादिविज्ञानपदद्वयस्थले एकविज्ञानपदस्य बुद्धिवाचकत्वेन विपर्ययोस्त्येव तथाप्येकविज्ञानपदस्थले सोनुचित इतिभावः, ननु विज्ञानपदस्य जीववाचकत्वे 'विज्ञानमानन्दं ब्रह्मे'त्यत्र विज्ञानपदमौपचारिक स्यादित्यत आहु. भगवतीत्यादि, प्रणवविकृतित्वात् भगवति सर्वे वेदशब्दाः स्वभावत एव प्रवर्तन्त इत्यर्थ., ज्ञापनाभावात् ज्ञापकाभावात्, नन्वत्र विज्ञानमयपदस्य जीवार्थत्वं प्रत्ययस्य विकारार्थत्वभयात् स्वीकृत तच्च न सम्भवतीत्यत आहु. यज्ञ इत्यादि, श्रद्धादीनां मनोवागादिधर्माणां शिरस्त्वादिकल्पना वेदोक्ता निर्बाधैव विकारार्थत्वं तु बह्वचूस्थलेनुशासनबाधितमिति जीववाचकमेव विज्ञानमयपदमिति फलितम् ॥ ३६ ॥

उपलब्धिवदनियमः ॥ ३७ ॥ एवमिन्द्रियैरित्यादि, तथा च सुखदु खसाक्षात्काररूपभोगे जीवस्य स्वातन्त्र्येपि क्रियारूपे तत्करणानामिन्द्रियाणामधीनतया इष्टानिष्टे प्राप्नोतीत्यर्थ. ॥ ३७ ॥

शक्तिविपर्ययात् ॥ ३८ ॥ सूत्रमवतारयन्ति नन्वित्यादि, अयमर्थः, चक्षुरादिनानिष्टं जायते तन्न जीवस्वरूपसम्पाद्यं प्राणाधीनत्वेन दैवाज्जायमानत्वात्, कर्म तु न तथा स्वप्रयत्नसाध्यत्वात्, अतः कर्मजनितेष्टानिष्टोपलब्धिदृष्टान्तो न युक्तः, अतो यदि जीव. स्वत.कर्ता स्यात्तदा स्वार्थमनिष्टं न कुर्याद्यथेश्वर. स्वार्थमनिष्टं न करोति तद्वदतो न जीवः कर्तेत्यत्र समाधानमाहु अथेत्यादि, विपर्ययोभावः, तथा च शक्त्यभावादनिष्टकरण ईश्वरे तु सर्वशक्तिमत्त्वान्न दृष्टान्तता, अतोनिष्टकरणं न साहजिककर्तृत्वबाधकमिति फलितम् ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥ जीवस्य शक्त्यभाव एव कुत इत्याकाङ्क्षायाम्प्रवृत्तमेतत्सूत्रमित्याशयेन विवृ-

---

१ प्रदीपपाठ एवं प्रतिभाति । २ ज्ञापकाभावादित्यपि पाठ । ३ यजमान इतिपाठ समीचीन । ४ शिरस्त्वादित इतिपाठो भ्रान्तस्य । ५ चकाररहितोपि पाठ । ६ प्ररहितोपि पाठ । ७ चेन्नेत्यपि पाठ । ८ शक्तियोगेनेति त्वपपाठ एव ।

कारात् तादृशमन्त्राभावोपि, न च सहजकर्तृत्वे अनिर्मोक्षः, पराधीनकर्तृत्व एवैतत्[1], ब्रह्मवत्[2], साङ्ख्यस्य तन्मतानुसारिणो वान्यस्य भ्रम एव कर्तृत्वे न मुक्तिरिति, नपुंसक एव मुच्येतेति बाह्यवत्, निरिन्द्रियस्यैव समाधिरित्यपि करणत्वेन बुद्धिं[3] वदन् न केनापि दूष्यते[4], तस्माज्जीवस्य स्वाभाविकं कर्तृत्वं, "ध्यायतीव लेलायतीवे"त्यपि परधर्मानुकरणं, अयमप्येको धर्मः, स्वाप्ययसम्पत्त्योर्ब्रह्मव्यपदेशं पुरस्कृत्य सर्वविप्लवं वदन् उपेक्ष्यः ॥ ३९ ॥

## यथा च तक्षोभयथा ॥ ४० ॥

ननु कर्मकराणां[5] कर्तृत्वभोक्तृत्वभेदो दृश्यते, तथा[6] कर्तृत्वभोक्तृत्वयोर्भेदो भविष्यतीति चेत् न, यथा तक्षा रथं निर्माय तत्रारूढो विहरति पीठं वा, स्वतो वा न व्याप्रियते वास्यादिद्वारेण[7] वा, चकारादन्येपि स्वार्थकर्तारः, अन्यार्थमपि करोतीति चेत् तथा प्रकृतेपि सर्वहितार्थं प्रयतमानत्वात्, न च कर्तृत्वमात्रं दुःखरूपं, पयःपानादेः सुखरूपत्वात्, तथा च स्वार्थपरार्थकर्तृत्वं कारयितृत्वञ्च सिद्धम् ॥ ४० ॥ १४ ॥

॥ इति द्वितीयाध्याये तृतीयपादे चतुर्दशं कर्ताशास्त्रार्थवत्त्वादित्यधिकरणम् ॥

---

एवन्ति जीवस्येत्यादि, सिध्यतः सामर्थ्यं प्राप्नुतः, समाध्यभावात् संसारदशायां ज्ञानशक्त्यभावतः, शक्त्यभावः स्वतः स्वानिष्टनिवारणे शक्त्यभावः, मन्त्राभावः सामर्थ्यसम्पादकमन्त्राभावः, यथा 'भूमिर्भूम्ना द्यौर्वरिणे-त्याहाशिषमेवैतामाशास्ते सर्पा वै जीर्यन्तोमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नते'ति, एवंविधो मन्त्रोपि नास्तीत्यर्थः, अत्र साङ्ख्यास्तदनुसारिणो मायावादिप्रभृतयश्च जीवस्य बुद्धिसम्बन्धादौपाधिकं कर्तृत्वमङ्गीकुर्वन्ति जीवस्य स्वाभाविककर्तृत्वे यथा वह्नेरौष्ण्यान्न निवृत्तिस्तथा जीवस्य कर्तृत्वान्न निवृत्तिः स्यात्तदनिवृत्तौ न मोक्षोपि कर्तृत्वस्य दुःखरूपत्वादिति तन्मतं दूषयन्ति न चेत्यादि, पराधीनकर्तृत्वे आध्यासिककर्तृत्वे, एतत् अनिर्मोक्षरूपं दूषणं यथा स्वाप्निकयुद्धादौ तस्यैव दुःखरूपत्वात्, ब्रह्मवदिति साहजिककर्तृत्वे दुःखाभावे दृष्टान्तः, निर्धर्मके ब्रह्मण्यौपाधिकमाध्यासिकमेव कर्तृत्वमितिवादिन प्रत्याहुः साङ्ख्येत्यादि, भ्रम एव औपाधिकाध्यासिककर्तृत्वांशे कर्तृत्वविशेष्ये भ्रम एव, कर्तृत्वे न मुक्तिरित्यंशे, सुतरां शुकसनकादिवामदेवप्रभृतितत्त्वविदां बहुश उपदेशकर्तृत्वश्रवणात्, नपुंसकः स्वातन्त्र्यादिसकलपुरुषधर्मशून्यः, बाह्यवत् अयमभ्युपगमो बाह्यानामिव सर्वप्रमाणशून्य इत्यर्थः, निरिन्द्रियस्यैव इन्द्रियाभिमानशून्यस्यैव मुक्तस्यैवेत्यर्थः, समाधिः मुक्तिसम्पादकसामग्री, करणत्वेन अलौकिकबुद्धिकार्यकरणत्वेन मुक्तिप्रतिबन्धकाध्यासशून्यत्वेन च, न केनापीति, तथा चेहामुत्र चोभयत्रापि बुद्धिसत्ता निर्बाधा अध्यासमात्रं पर प्रतिबन्धकमिति बुद्धिसत्त्वं न केनापि दूष्यत इत्यर्थः, मुक्तानां स्वाभाविककर्तृत्वमुपपाद्य संसारिणोप्याह 'ध्यायतीवे'त्यादि, तथा च भगवतस्तद्गुणानां वानुकरणकर्तुर्मोक्ष इत्युक्तमेकादशस्कन्धे द्वाविंशे 'नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् एवं बुद्धिगुणान् पश्यन्ननीहोप्यनुकार्यत'इति गुणैर्भगवता वेति बोध्यं, बुद्धिगुणस्तु जीवस्यैव, स्वाप्ययसम्पत्त्योः सुषुप्तिमोक्षयोः, ब्रह्मव्यपदेशं ब्रह्मत्वेन निर्वचनं, सर्वविप्लवं ब्रह्मातिरिक्तो जीवो नास्तीति वदन् 'ममैवांशो जीवलोके' इति 'एतस्मादात्मनोणवो जीवा व्युच्चरन्ती'ति 'अंशो नानाव्यपदेशात्' इत्येतेषां सर्वेषां विप्लवं वदन्नुपेक्ष्य इत्यर्थः, 'तत् केन कं पश्येदि'त्यादिकं तु सांसारिकदर्शननिषेधविषयम् ॥ ३९ ॥

यथा च तक्षोभयथा ॥ ४० ॥ सूत्रमवतारयन्ति नन्वित्यादि, भेदः कर्तृत्वभोक्तृत्वभिन्ननिष्ठत्वं, भेदो भविष्यति लोकन्यायेन वेदोक्तकर्तृत्वभोक्तृत्वयोः कर्तृभिन्ननिष्ठत्वं भविष्यतीत्यर्थः, सूत्रोक्तसमाधिमाहुः नेत्यादि, तथा चोक्तं भिन्ननिष्ठत्वं यत्किञ्चित्कर्मकरदृष्टान्तेनोक्तं तत्प्रायिकं न तु नियम इत्यर्थः, न व्याप्रियते न करोतीत्यर्थः, वाशब्दात्

---

१ इतीत्यधिकं क्वचित् । २ ब्रह्मवदिति लुप्तं क्वचन । ३ बुद्धिवदितिपाठः क्वचित् । ४ अत्र वाक्यद्वयमङ्गीकुर्वन्तः श्रीमत्प्रकाशकाराः श्रीगिरिधरैर्विविच्य विवरणे परास्ताः । ५ कर्मकाराणामित्यपि कर्मकारिणामित्यपि च पाठौ । ६ तदित्यपि पाठः । ७ वाश्यादिद्वारेणेतिपाठोपि ।

## परात्तु तच्छ्रुतेः ॥ ४१ ॥ (२. ३. १५.)

कर्तृत्वं ब्रह्मगतमेव, तत्सम्बन्धादेवं जीवे कर्तृत्वं तदंशत्वादैश्वर्यादिवत्, न तु जडगतमिति, "अतो नान्योतोस्ती"ति सर्वकर्तृत्वं घटते, कुत एतत्? तच्छ्रुतेः, तस्यैव कर्तृत्वकारयितृत्वश्रवणात्, "यमधो निनीषति तमसाधु कारयती"ति, "सर्वकर्मा सर्वभोक्ता सर्वनियन्ते"ति सर्वरूपत्वान्न भगवति दोषः ॥ ४१ ॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

ननु वैषम्यनैर्घृण्ययोर्न परिहारः, अनादित्वेन स्वस्यैव कारयितृत्वादितिपक्षं तुशब्दो निवारयति, प्रयत्नपर्यन्तं जीवकृत्यं, अग्रे तस्याशक्यत्वात् स्वयमेव कारयति, यथा पुत्रं यतमानं बालं, पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभिनिवेशं दृष्ट्वा तथैव थकारयति सर्वत्र तत्करणत्वाय तदानीं फलदातृत्वे या इच्छा तामेवानुवदति "उन्निनीषति निनीषती"ति, अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यापत्तेः, अप्रामाणिकत्वञ्च, फलदाने कर्मापेक्षः, कर्मकारणे प्रयत्नापेक्षः, प्रयत्ने कामापेक्षः, कामे प्रवाहापेक्ष इतिमर्यादारक्षार्थं वेदं चकार, ततो न ब्रह्मणि दोषगन्धोपि, न चानीश्वरत्वं, मर्यादामार्गस्य तथैव निर्माणात्, यत्रान्यथा स पुष्टिमध्य इति ॥ ४२ ॥ १५ ॥

॥ इति द्वितीयाध्याये तृतीयपादे पंचदशं परात्तुतच्छ्रुतेरित्यधिकरणम् ॥

---

स्वतोपि करोति द्वारेणापि च करोतीत्यर्थः, स्वार्थकर्तारः याचकादयः, अन्यार्थमपीति कश्चित्करोतीत्यर्थः, प्रकृतेपि वेदोक्तकर्तृत्वस्थलेपि ॥ ४० ॥ १४ ॥

॥ इति द्वितीयतृतीये चतुर्दशाधिकरणम् ॥ १४ ॥

**परात्तु तच्छ्रुतेः ॥ ४१ ॥** जीवे कर्तृत्वं स्वाभाविकमित्यवधारितं तत् किं जीवस्वातन्त्र्येणोत ब्रह्माधीनतयेति विचारणीयं, 'पुण्यः पुण्येने'ति 'एष उ एवे'तिविरुद्धश्रुतिदर्शनेन सन्देहात्, तत्रेश्वराधीनत्वे जीवस्य दुःखभोगासम्भवात् कर्मानादित्वस्य च कर्तृत्वानादित्वाधीनत्वात् कर्तृत्वमप्यनाद्येवेति स्वातन्त्र्येणैव कर्तृत्वमिति वेतिशङ्कायां सूत्रं व्याकुर्वन्ति कर्तृत्वमित्यादि, ब्रह्मगतमेव कर्तृत्वमंशत्वाज्जीवे भासते अवयविक्रिया अवयवेष्विव, अतः कर्तृत्वद्रष्टृत्वादिधर्माणां ब्रह्मनिष्ठत्वादेव, 'नान्योतोस्ति द्रष्टे'त्यादिश्रुत्युक्तमन्यनिषेधेन ब्रह्मण एव दर्शनादिसर्वकार्यकर्तृत्वं घटते, 'सर्वकर्मे'तिश्रुतिरप्यसङ्कोचेन ब्रह्मणि सङ्गच्छते, एवं च ब्रह्मधर्मत्वादेव कर्मानादित्वमप्यव्याकुलं सङ्गच्छते कर्तुरनादित्वात् ॥ ४१ ॥

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥** तुशब्दव्याख्यानमुखेन सूत्रमवतारयन्ति नन्वित्यादि, पूर्वं कर्मानादित्वं तत्सापेक्षत्वं चेश्वरस्योरीकृत्य वैषम्यनैर्घृण्ययोः समाधानमुक्तं तत्तु न युज्यते कर्मानादित्ववत्तत्कारयितृत्वस्याप्यनादित्वादत· समाधानान्तरं करोति कृतप्रयत्नेत्यादि, अग्रे फलपर्यवसायिसामग्रीसम्पादने, तस्य जीवस्य, अशक्यत्वात् असमर्थत्वात्, स्वयमेव भगवानेव, अन्यथा भगवतो विहितकर्मफलदातृत्वा-

---

१ तत्सम्बन्धाज्जीवस्यदेवेत्यपि पाठ । २ सर्वकर्तेतिपाठोपि । ३ तस्यैवेत्यपि पाठ । ४ बालं पुत्रं यतमानमित्यपि पाठः । ५ बालं वेत्यपि पाठः । ६ तत्कारणत्वायेत्यपि पाठ. प्रकाशकृताम्प्रतिषिद्धो विवरणे । ७ अध इत्यधिकं क्वचन । ८ विवरणेधो निनीषतीति नास्ति । ९ चकारादित्यपि पाठः । १० अतीश्वरत्वमित्यपि पाठ. । ११ पुष्टिमध्य इत्यपि पाठः ।

# अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥ (२. ३. १६.)

जीवस्य ब्रह्मसम्बन्धि रूपमुच्यते, जीवो नाम ब्रह्मणः अंशः, कुतः? **नानाव्यपदेशात्**, "सर्व एवात्मानो व्युचरन्ति कपूयचरणाः रमणीयचरणा" इति च, ननु ब्रह्मणो निरवयवत्वात् कथं जीवस्यांशत्वमिति वाच्यं? न हि ब्रह्म निरंशं सांशमिति वा क्वचिल्लोके सिद्धं, वेदैकसमधिगम्यत्वात्, सा च श्रुतिर्यथोपपद्यते तथा तदनुल्लङ्घनेन वेदार्थज्ञानार्थं युक्तिर्वक्तव्या, सा चेत् स्वयं नावगता तपो विधेयं अभिज्ञा वा प्रष्टव्या इति, न तु सर्वविप्लवः कर्तव्यः, तत्रैषा युक्तिः, "विस्फुलिङ्गा इवाग्नेर्हि जडजीवा विनिर्गताः सर्वतः पाणिपादान्तात् सर्वतोक्षिशिरोमुखात् निरिन्द्रियात् स्वरूपेण तादृशादितिनिश्चयः सदंशेन जडाः पूर्वं चिदंशेनेतरे अपि अन्यधर्मतिरोभावा मूलेच्छातोस्वतन्त्रिण" इति, ब्रह्मवादे अंशपक्ष एव, ननु अंशत्वे सजातीयत्वमायाति, श्रुत्यन्तरे पुन"र्ब्रह्मदाशा ब्रह्मेमे कितवा उत", अत्र सर्वस्यापि ब्रह्मविज्ञानेन विज्ञानप्रतिज्ञानात् दाशादीनामपि ब्रह्मत्वं प्रतीयते तत् कार्यत्व एव स्यादिति चेत् न, अन्यथा चापि प्रकारान्तरेणापि एके शाखिनः दाशकितवादित्वमधीयते शरीरत्वेन अंशत्वेन च, स्वरूपतः कार्याभावेपि प्रकारभेदेन कार्यत्वात्, तथा च न साजात्यं, आनन्दांशस्य तिरोहितत्वात्, धर्मान्तरेण तु साजात्यमिष्टमेव ॥ ४३ ॥

---

भावे, अप्रामाणिकत्वं च विधिनिषेधवाक्यानामप्रामाण्यमप्यापद्येतेत्यर्थः, **कामापेक्षः** जीवकामापेक्षः, **प्रवाहः** जीवप्रभृतिलोकप्रसिद्धिसमुदायः, अन्यथा मर्यादाभिन्नपुष्टिमार्गनिष्ठतादशायाम् ॥ ४२ ॥ ॥ १५ ॥

इति द्वितीयतृतीये पञ्चदशाधिकरणम् ॥ १५ ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** ॥ ४३ ॥ अधिकरणमवतारयन्ति **जीवो नामेति**, **नानाव्यपदेशात्** श्रुतौ बहुत्वसङ्ख्याविशिष्टत्वेन कथनाद्ब्रह्मणः सकाशाद्विस्फुलिङ्गवद्विभागकथनाच्चेत्यर्थः, एकदेशिमतनिरासायाहुः **नन्वित्यादि**, निषेधहेतुमाहुः **न हि ब्रह्मेत्यादि**, **सा** जीवेषु ब्रह्मांशत्वबोधिका, **तदनुल्लङ्घनेन** श्रुत्युल्लङ्घनेन, **युक्तिर्वक्तव्या** 'न्यग्रोधबीजमाहरे'त्येवंविधा वैदिकी युक्तिर्वक्तव्या, **तपो विधेयं** 'तपसा ब्रह्म विजिज्ञासस्वे'तिविधानात्तपो विधेय, **अभिज्ञा वा प्रष्टव्या**. 'तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि'त्यादिश्रुतेः, श्रुतिसिद्धयुक्तिरूपमंशपक्षाङ्गीकारे हेतुमाहुः **तत्रेत्यादि**, **जडजीवा विनिर्गता इति** 'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोका सर्वे देवाः सर्वाणि भूतानी'त्युक्त्वा 'सर्व एवात्मानो व्युचरन्ती''तिकथनात् ते परस्परविलक्षणतया निर्गताः, जडजीववैलक्षण्ये हेतुमाहुः **सदंशेनेत्यादि**, जडजीवयोर्विरुद्धधर्माधारत्वाभावे युक्तिमाहुः **अन्यधर्मेत्यादि**, अन्यो आनन्दांशस्तस्य धर्मः विरुद्धधर्माश्रयत्व तस्य **तिरोभावो** येषु तादृशा इत्यर्थः, तत्र हेतुः **मूलेच्छात** इति 'प्रजायेये'तीच्छात इत्यर्थः, **अस्वतन्त्रिण** इति, स्वातन्त्र्यं ब्रह्मपरता विद्यते येषु तद्भिन्नाः, अंशत्वे किञ्चिदाशङ्क्य सूत्रांशेन परिहरतीत्याशयेनाहुः **नन्वित्यादि**, **सजातीयत्वं** सर्वेषां ब्रह्मसजातीयत्वमायाति, **अत्रेति** अस्यां श्रुतौ, **तत्** विजातीयानां ब्रह्मत्वं, **कार्यत्व एवेति** तेषां ब्रह्मत्वं ब्रह्मकार्यत्व एव घटेत यथा मृद्घटादीनां तन्तुपटादीनां कारणविजातीयानां कारणरूपकार्यत्वमुच्यते तथा, तथा च व्युच्चरणश्रुत्युक्तादीनां प्राणलोकादीनामिव जीवानामपि कार्यत्वमेवाङ्गीकार्यं न त्वंशत्वमितिशङ्कार्थः, **प्रकारान्तरं** विवृण्वन्ति **एक इत्यादि**, **दाशकितवादित्वं** ब्रह्मणोधीयत इत्यर्थः, **शरीरत्वेन** जीवानां ब्रह्मशरीरत्वेन, **अंशत्वेन** जीवानां ब्रह्मांशत्वेनेत्यर्थः, अत एव तेषु ब्रह्मप्रवेशोपि 'तत् सृष्ट्वा तदेवानुप्राविश'दिति सङ्गच्छते,

---

१ दासेत्यादिरपि पाठः । २ नत्वित्यपि पाठ । ३ इतिपदमधिकं क्वचन । ४ अन्यधर्मतिरोभावादित्यपि पाठः । ५ स्वतन्त्रिण इत्यपि पाठः । ६ चपदशून्योपि पाठः ।

## मन्त्रवर्णात्[1] ॥ ४४ ॥

"पुरुष एवेदꣳसर्वमि"त्युक्त्वा "पादोस्य विश्वा भूतानी"ति भूतानां जीवानां पादत्वं पादेषु स्थितत्वेन वा अंशत्वमिति ॥ ४४ ॥

## अपि स्मर्यते[2] ॥ ४५ ॥

वेदे स्वतन्त्रतया उपपाद्य वेदान्तरेपि तस्यार्थस्यानुस्मरणं, "ममैवांशो जीवलोके जीवभूतः सनातन"इति ॥ ४५ ॥

## प्रकाशादिवन्नैवम्परः ॥ ४६ ॥

जीवस्यांशत्वे हस्तादिवत्तद्दुःखेन परस्यापि दुःखित्वं स्यादिति चेत् न, एवं परो न भवति, एवमिति प्रकारभेदः द्विष्टत्वेनानुभव इति यावत्, अन्यथा, सर्वरूपत्वात्, कुत एवं? तत्राह प्रकाशादिवत्, "नाग्नेर्हि तापो न हिमस्य तत् स्यादि"ति, प्रकाशग्रहणं धर्मत्वद्योतनाय, दुःखादयोपि ब्रह्मधर्मा इति, अतो द्वैतबुद्ध्य[3] अंशस्यैव दुःखित्वं न परस्य, अथवा प्रकाशः प्रकाश्यदोषेण यथा न दु[4]ष्टः, [5]पापस्यापि तदंशत्वादिति ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

स्मरन्ति च[6], सर्वेपि ऋषयोंशिनः दुःख[7]सम्बन्धं स्मरन्ति, "तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसे"ति, "कर्मात्मा त्वपरो योसौ

---

अंशेषु धर्मिप्रवेशस्तन्तुषु पटे दृष्टः, स्वरूपतः जीवस्य स्वरूपतः, कार्याभावे कार्यत्वाभावे, प्रकारभेदेन देहतद्धर्माभिमानेन, कार्यत्वात् जातोहम्मरिष्यामीतिकार्यत्वाभिमानात्, धर्मान्तरेण चित्त्वनित्यत्वादिना ॥ ४३ ॥

मन्त्रवर्णात् ॥ ४४ ॥ मन्त्रवर्णमेवाहुः, पुरुष एवेत्यादि ॥ ४४ ॥

अपि स्मर्यते ॥ ४५ ॥ वेदे व्युच्चरणश्रुतिरूपवेदे ॥ ४५ ॥

प्रकाशादिवन्नैवम्परः ॥ ४६ ॥ एवं त्रिसूत्र्या जीवस्यांशत्वं व्युत्पाद्यांशत्वे प्राप्तान् दोषान् परिहरतीत्याशयेन सूत्रं व्याकुर्वन्ति जीवस्येत्यादि, तद्दुःखेन अंशत्वेनाभिमतजीवदुःखेन, एवं परो न भवति जीवसमानप्रकारः परमात्मा न भवति, प्रकारभेदः जीवापेक्षया भेदक प्रकारो ब्रह्मणि वर्तत इत्यर्थः, स च प्रकारः जीवेनिष्टसाधने द्विष्टत्वेनानुभवस्तदपेक्षया ब्रह्मणि सर्वस्य प्रियत्वेनानुभवः, अतः प्रकारभेदो भेदक इत्यर्थः, अन्यथा अतो हेतोः परोन्यथा जीवभिन्नप्रकार इत्यर्थ., कुत इत्यत्र हेतुः सर्वरूपत्वादिति, ननु कुत एवमवगम्यते तत्राह प्रकाशादिवदिति, नाग्नेरित्यादि, तथा च यथा प्रकाशशैत्यादयो धर्मा अग्निहिमादीनां न दुःखद्विष्टत्वादिबुद्धिजनकास्तथा दुःखादिजीवधर्मा अपि परस्मिन्न दुःखजनकाः, ब्रह्मधर्माः जीवात्मनः ब्रह्मधर्माः, न परस्य द्वैतबुद्धेरभावान्न परस्येत्यर्थः, एतत्पक्षस्य क्लिष्टत्वात् पक्षान्तरमाहुः अथवेत्यादि, प्रकाशः आलोकः, प्रकाश्यं तदंशो रूपं, तस्य रूपस्य दोषेण नालोकस्य दुष्टत्वं तथांशस्य जीवस्य दोषेण परस्यापि न दुष्टत्वमित्यर्थः, तदंशत्वात् विराजः पृष्ठरूपत्वादित्यर्थः, तथा च न विराजस्तेन दुःखमित्यर्थः, तथा च जीवदोषेण न परस्य दुष्टत्वमित्यर्थः ॥ ४६ ॥

स्मरन्ति च ॥ ४७ ॥ व्याकुर्वन्ति सर्वे इति, दुःखसम्बन्धं जीवरूपतया दुःखसम्बन्धं, एकस्तथेति

---

१–२ चकारयुक्तोपि पाठः । ३ द्विष्टत्वेनेत्यपि पाठः । ४ श्रूयत इत्यधिकं क्वचन । ५ रूपस्यापीति परस्यापीति च पाठौ । ६ ऋषय इत्यधिकम् । ७ दुःखासम्बन्धमंशस्य दुःखसम्बन्धमित्यपि पाठः, अंशिनो दुःखसम्बन्धमितिपाठस्तु किञ्चित् क्लिष्टः ।

मोक्षबन्धैः स युज्यते" "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोक[1]दुःखेन बाह्यः," चकारात् "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशी"ति ॥ ४७ ॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

ननु जीवस्य भगवदंशत्वे विधिविषयत्वाभावात् कर्मसम्बन्धाभावेन कथं फलसम्बन्धः? जीवस्य च पुनरनेकदेहसम्बन्धात् कः शूद्रः का भार्येतिज्ञानमप्यशक्यं, अतः कर्ममार्गस्य व्याकुलत्वात् कथं जीवस्यापि दुःखित्वमित्याशङ्क्य परिहरति, **अनुज्ञापरिहारौ** विधिनिषेधौ जीवस्य **देहसम्बन्धात्** यो देहो यदा गृहीतस्तत्कृतौ, यथा शवाग्निः [2]चाण्डालभाण्डस्थमुदकं तद्घटादिश्च परिह्रियते एवमुत्कृष्टं परिगृह्यते तथा जीवेपि देहसम्बन्धकृतः, सम्बन्धश्चाध्यासिको भगवत्कृतश्च, [3]आध्यासिको हि[4] [5]ज्ञानान्निवर्तते, द्वितीयो भगवतैव, जीवन्मुक्तानामपि व्यवहार-दर्शनात्, श्रुतिस्तु भगवत्कृतसम्बन्धमेवाश्रित्याग्निहोत्रादिकं विधत्ते, अन्यथा विद्यां स्वज्ञानञ्च बोधयन्ती कर्माणि न विदध्यात्, [6]शाब्दज्ञानस्य पूर्वमेव सिद्धत्वात्, कथं सिद्धव"द्यावज्जीवं" विदध्यात्? न्यासोपि देहसम्बन्ध एव ॥ ४८ ॥

---

श्रुतिः कठवल्लीस्था, द्वितीया श्वेताश्वतरस्था, एवं विरुद्धधर्मवत्त्वं जीवपरमात्मनोर्भेदकं सिद्धं, एवं सूत्रत्रयेण एको दोषः परिहृतः ॥ ४७ ॥

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्** ॥ ४८ ॥ पुनर्दोषान्तरमाशङ्क्य परिहरतीत्याहुः, नन्वित्यादि, अयमर्थः, 'कर्ता शास्त्रार्थवत्त्वा'दित्यत्र ब्रह्मण आप्तकामत्वेन फलानुपयोगाज्जडस्य च ज्ञानाद्यभावेन कर्मानधिकाराद्विधिनिषेधशास्त्रानर्थक्य स्यादितिदोषपरिहारार्थं जीवस्योभयविधकर्माधिकारः स्वीकृतः, अंशत्वे तद् विरुध्येत, भगवत इव जीवस्यापि कर्मफलसम्बन्धासम्भवात्, जीवस्य चानेकदेहसम्बन्धात् को जीवः शूद्र. का भार्येतिज्ञानमप्यशक्यं, तदज्ञाने च 'ऋतौ भार्यामुपेयात्' 'न शूद्राय मतिं दद्या'दित्याद्यनुज्ञापरिहारविषयज्ञानाभावः, एवं निश्चयाभावे कर्ममार्गस्य व्याकुलत्वात् व्यवस्थाकरणासम्भवात् कथं जीवस्यापि निषिद्धानुष्ठानदुःखं सम्भवेदितिद्वयमाशङ्क्य परिहरति, परिहारमाहु. अनुज्ञेत्यादि, सत्यं, जीवस्य यद्यपि भगवदंशत्वान्न स्वरूपतो विधिनिषेधविषयत्वं तथापि तत्तद्देहसम्बन्धकृतमागन्तुकं तद्भवत्येव, यथाग्न्युदकपृथिवीनां स्वरूपतो विधिनिषेधाविषयत्वेपि शवादिसम्बन्धान्निषेध्यत्वं श्रोत्रियादिसम्बन्धे च वैधत्व तद्वज्जीवस्यापि देहसम्बन्धाद्विधिनिषेधविषयत्वे सम्पन्ने तत्फलस्यापि सम्भवान्न शास्त्रसूत्रवैयर्थ्यं न वा कर्ममार्गव्याकुलता न वा जीवे दुःखानुपपत्तिरित्यर्थः, **अनुज्ञापरिहारौ तत्कृतौ** देहकृतावित्यर्थः, **देहसम्बन्धकृतः** विधिनिषेधसम्बन्धो देहसम्बन्धकृत इत्यर्थः, ननु देहसम्बन्धेन विधिसम्बन्धे देहसम्बन्धस्याज्ञानकृतत्वाच्छास्त्रस्याप्यज्ञाधिकारकत्वं स्यादज्ञानं च बुद्धिकृत बुद्ध्युपाधिकस्यैव न तु स्वतो जीवस्येतिशास्त्रार्थवत्त्वसूत्रव्याहतिर्न परिहृतैवेत्याशङ्कायामाहुः **सम्बन्धश्चे**त्यादि, **सम्बन्धः** देहस्य जीवे सम्बन्धः, **द्वितीयः** भगवत्कृतो जीवदेहसम्बन्धः, **भगवतैवे**त्येवकारेण भगवत्कृतदेहसम्बन्धस्य निवृत्तौ साधनान्तरं व्यवच्छिद्यते, देहसम्बन्धस्य भगवत्कृतत्वे उदाहरणमाहुः **मुक्तानामिति**, अज्ञाधिकारकत्वं शास्त्रस्य परिहरन्ति **श्रुतिस्त्वि**त्यादिना, **अन्यथा** श्रुतेरज्ञाधिकारकत्वे, **स्वज्ञानमिति** 'साङ्गो वेदोध्येयो ज्ञेयश्चे'त्यादिभिः स्वार्थज्ञानं, **पूर्वमेव सिद्धत्वात्** अध्यापनाध्यनविधिभ्यामध्ययनोत्तरकाले एव पूर्वं सिद्धत्वादित्यर्थः, तथा च पामराणां रागिणां दुष्कर्मणो निवृत्त्यर्थं सत्कर्मणि प्रवृत्त्यर्थं च कामाधिकारको विधिस्तेषां विश्वासोपजननार्थोऽज्ञाधिकारकः सन्मार्गप्रवृत्तिफलको नित्यविधिस्तु ज्ञानाधिकारकोतो नोक्तसूत्रविरोधः, ननु यावज्जीवविधिश्चेज्ज्ञानाधिकारकस्तदा 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिसन्न्यासविधिवैयर्थ्यमतो न युक्तेयं व्यवस्थेत्यत आहुः **न्यासोपी**त्यादि, तथा

---

१ दोषदु.खेनेत्यपि पाठः । २ चण्डालेत्यादिपाठोपि । ३ अध्यासिक इत्यपि पाठः । ४ हिरहितोपि पाठः । ५ अज्ञानादितिपाठस्तु क्लिष्टार्थ , आध्यासिको ब्रह्मज्ञानादितिशुद्धपाठे ब्रकारलोपे प्रामादिके ह्मकारस्य भ्रष्टं रूपं ह्मकार इति प्रतिभाति । ६ शब्देत्यादिरपि पाठ ।

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

ननु देहस्यापि बाल्यकौमारादिभेदात् कथं कर्मकाले ब्राह्मणत्वादि? जीवैक्यादिति चेद्देहान्तरेपि स्यादिति, तत्राह देहान्तरे सन्ततिरपि नास्ति, बाल्यादिभेदे पुनः सन्ततिरेका, अतः सन्ततिभेदान्न कर्मणां साङ्कर्यमिति ॥ ४९ ॥

## आभास एव च ॥ ५० ॥

ननु सच्चिदानन्दस्य ब्रह्मणोंशः सच्चिदानन्द एव भवेत्, अतः कथं प्रवाहे प्रवेशो भगवतश्च सर्वकार्याणि? तत्राह आभास एव जीवः, आनन्दांशस्य तिरोहितत्वात्, चकारादाकारस्याप्यभावः, न तु सर्वथा प्रतिबिम्बवन्मिथ्यात्वं, "जलचन्द्रवदि"त्येकस्यानेकत्वे दृष्टान्तः, तथा सत्यध्यासश्च स्वस्य न स्यात्, तत्रवृत्त्यादिदोषप्रसङ्गश्च, अतो न मिथ्यात्वरूप आभासोत्र विवक्षितः ॥ ५० ॥

## अदृष्टानियमात् ॥ ५१ ॥

ईशित्वाय नैयायिकाद्यभिमतं जीवरूपं निराकरोति, "नानात्मानो व्यवस्थात" इति भोगव्यवस्थया जीवनानात्वमङ्गीकृतं, तत्रादृष्टस्य नियामकत्वं तन्मते सिद्धं, देशान्तरवस्तूत्पत्त्यन्यथानुपपत्त्या व्यापकत्वञ्चाङ्गीकृतं, एवञ्च क्रियमाणे मूल एव कुठारः स्यात्, सर्वेषामेव

---

च जरामर्याग्निहोत्रस्य तत्रापि सत्त्वान्न वैयर्थ्यं, ये पुनर्ब्रह्मभूता आदितो वा साधनसम्पत्त्या वा देहसम्बन्ध नानुभवन्ति 'दैवादपेतमुत्त दैववशादुपेत'मितिन्यायेन देहं धारयन्ति पूर्णा एव ज्ञानिनस्तेषान्तु शुकादिवत् स्वत एव तत्र प्रवृत्तिर्न विधिनियम्या, अत एव 'यम्प्रव्रजन्तमि'त्यादि 'पञ्चषड्डायनार्भाभा' इत्यादि च, अतो न कोपि दोष ॥ ४८ ॥

**असन्ततेश्चाव्यतिकरः** ॥४९॥ सूत्रमवतारयन्ति नन्वित्यादि, यदत्र देहसम्बन्धेन विधिनिषेधव्यवस्थापनमुक्त तदयुक्त, यस्मिञ्जन्मनि यो देहो गृहीतस्तस्य **देहस्यापि बाल्यकौमारादिभेदेन** भिन्नत्वादाधानादिकर्मकाले तस्य देहस्याभावाद्ब्राह्मणत्वादिक कथं स्यात् ब्राह्मणत्वाभावे च'वसन्ते ब्राह्मण आदधीत' 'न ब्राह्मणं हिंस्या'दित्यादिविधिनिषेधव्यवस्था दुरुपपादात कर्मव्याकुलत्वमसमाधेयं, जीवैक्यान्नानुपपत्तिरित्यपि न, तस्य देहान्तरेपि सत्त्वात्तस्याप्याधानाद्यापत्तिरित्याशङ्कायां समाधिमाहु देहान्तरेत्यादि, सन्ततिरेकेति, तथा च ब्राह्मणादिदेहगतैकसन्ततिविशिष्ट एव विधिनिषेधौ बोध्यौ, अतस्तत्र देहाधिकारिकविधि.निषेधयोस्तत्तद्देहगतसन्तत्यैक्यनियम्यत्वात्, **सन्ततिभेदात्** ब्राह्मणाब्राह्मणदेहगतसन्ततेरैक्याभावात्, **साङ्कर्यं** अन्यदेहाधिकारिककर्मणामन्यदेहावच्छेदेन करणापत्तिरूपं साङ्कर्यं, तथा च सम्बन्धेन समाधौ न कोपि दोष इत्यर्थः ॥ ४९ ॥

**आभास एव च** ॥५०॥ पुनः किञ्चिदाशङ्क्य परिहरतीत्याशयेन सूत्रमवतारयन्ति **नन्वित्यादि, प्रवाहे** प्राकृतकार्यप्रवाहे, **भगवतः सर्वकार्याणि** भगवतश्च प्राकृतसर्वकार्याणि कथमुपदेयानि स्युरित्यर्थः, **आकारस्य** चतुर्भुजाद्याकारस्य, तथा च ब्राह्मणाभासवज्जीवोपि ब्रह्माभासोवसेयः, **अनेकत्वे दृष्टान्तः**, तथा चैकस्यैव चन्द्रस्य जलशरावसम्बन्धान्नानात्वं भासते तथैकस्यैव ब्रह्मणोविद्यासम्बन्धान्नानात्वं भासत इत्यनेकत्वे दृष्टान्त इत्यर्थ., **तथा सति** जीवस्य मिथ्यात्वे सति, **न स्यात्** मिथ्याभूतस्य शशशृङ्गादेरिव जीवस्याप्यध्यासो न स्यादित्यर्थ , **तत्रवृत्त्यादीत्यादि** 'तत्रवृत्तेर्द्वासुपर्णाश्रुतेरपि विरुध्यते' इतिकारिकोक्तानि दूषणानि बोध्यानि, तत्र हि 'यत्र यस्तिष्ठति तत्र तन्न प्रतिबिम्बते दर्पणरेखावदि'त्युक्त, एवं समानवृक्षारोहण तत्र स्थित्वा फलभोगकर्तृत्त्व च मिथ्यात्वे न स्यादित्याद्युक्तम् ॥ ५० ॥

**अदृष्टानियमात्** ॥ ५१ ॥ सूत्रप्रयोजनमाहुः **ईशित्वायेत्यादि, ईशित्वाय** भगवतः सर्वजीवनियामकत्वाय जीवानां नियम्यत्वायेत्यर्थादागतं, **व्यवस्थातः** एकः सुख्यपरो दु.खीतिव्यवस्थात इत्यर्थः, जीवैक्ये सर्वत्र सुखं दुःखं वा एकमेव स्यादतो नानात्वमित्यर्थ., **तत्र** भोगे, **तन्मते** नैयायिकमते, **देशान्तरेत्यादि**, तथा च पादे मे

---

१ नन्वितिपाठोपि ।

जीवानामेकशरीरसम्बन्धात् कस्याद्दृष्टन्तद्भवेत्? न च मिथ्याज्ञानेन व्यवस्था, तत्रापि तथा, न चानुपपत्त्या परिकल्पनं, श्रुत्यैवोपपत्तेः, एतेन विरोधादपिप्रामाण्यमपि निराकृतम् ॥ ५१ ॥

## अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

ननु मनःप्रभृतीनां नियामकत्वात् तेषामीश्वरेच्छया नियतत्वान्न दोष इति चेन्न, पूर्ववदेव दोषप्रसक्तिः, तादृशेश्वरकल्पना च पूर्वमेव निराकृता ॥ ५२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

आत्मनो विभुत्वेपि प्रदेशभेदेन व्यवस्था, आत्मनि तादृशः प्रदेशविशेषोस्ति येन सर्वमुपपद्यत इति चेत् न, अन्यस्यापि प्रदेशस्तत्रान्तर्भवति ।

---

दु खं शिरसि सुखमिति जीवव्यापकत्वाभावेनुपपन्नमिति व्यापकत्वस्वीकार इतिभाव, एकशरीरसम्बन्धादिति, जीवव्यापकत्वाभिप्रायेणेदमुक्त, कस्याद्दृष्टन्तद्भवेदिति, कस्य जीवस्य किं वाद्दष्ट कं भोगं साधयेद्विनिगमकाभावात् नियमासम्भवात्? न च मिथ्येत्यादि, तथा च यच्छरीरे यस्य जीवस्याहमित्यभिमानस्तस्यैवाद्दष्टेन तद्देहसम्बन्धिभोगो नान्यस्येत्यर्थ., तत्रापि मिथ्याज्ञानेपि, तथा च कस्मिन्देहे कस्य जीवस्य मिथ्याज्ञान स्यात्कस्य नेत्यत्र नियामकाभावादित्यर्थ, अनुपपत्त्या परिकल्पनं अवच्छेद्यावच्छेदकभावसम्बन्धेन देहस्य जीवभोगे नियामकत्वकल्पनमेवमदृष्टस्यापि स्वसमवायिजीवावच्छेदकजातीयदेहावच्छिन्नसमवायेन कारणता तेनैव सम्बन्धेन च भोगस्य कार्यताकल्पनमित्यपि न, कुत? श्रुत्यैवेत्यादि 'एष उ एवे'तिश्रुत्या भगवत एव भोगहेतुताप्रतिपादनात, एवकारेणान्यहेतुताया पराहतत्वात्, विरोधात् उक्तश्रुतिविरोधात् ॥ ५१ ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥ अभिसन्ध्येत्यादि, अभिसन्ध्या एतदात्मनियतमेतन्मनो भवत्वितीश्वरध्यानं, एवं विनिगमकाभावदोष., सूत्रमवतारयन्ति नन्वित्यादि, मनःप्रभृतीनामित्यादि, तदात्मनियतमन.समानाधिकरणादृष्टस्य समवायेन कारणता भोगे कार्यतापि समवायेन, एवं तादृशादृष्टजन्यशरीरस्य च शरीरजनकादृष्टस्य समानाधिकरणं यच्छरीरावच्छेद्यत्वं तेन सम्बन्धेन भोग प्रति कारणता, एवम्रीत्या कार्यकारणभावकल्पनस्य भोगनियामकत्वात्, तेषां भोगकारणानां, न दोषः विनिगमकाभावेन भोगनियमाभावरूपो दोषो नेत्यर्थ., पूर्ववदेवेति, 'एष उ एवे'तिश्रुत्या इतरकारणनिराकरणपूर्वक भगवत एव तस्य तस्य जीवस्य तत्तद्भोगासाधारणकारणत्वमुक्तं भज्येतेति पूर्वमुक्तो दोषो विरोधरूपो दोष. पूर्वसूत्रे तद्वदेवात्रापि स दोषस्तदवस्थ इतिभाव', तादृशेश्वरकल्पना निमित्तकारणतामात्रेणेश्वरकल्पना, 'स आत्मानं स्वयमकुरुते'त्यादौ निमित्तकारणतामात्रस्यासम्भवादित्यर्थः, सूत्रार्थस्त्वेवं, अभिसन्धिरभिमानो देहादौ, आदिशब्देनादृष्टतज्जन्यदेहादि, तेषु नियामकेषु सत्सु, भोगानियमो नेति न दोषस्तत्राह अपि चैवमिति, तेषु नियामकेषु सत्स्वपि श्रुतिविरोधो दोषस्तदवस्थ. ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥५३॥ नन्वात्मनां विभुत्वात् सर्वदेहेषु सत्त्वाच्च सकलात्मसु सर्वदेहेषु भोगादृष्टादीनामेकैकात्मनि सर्वदेहेषु प्रसक्ति. सर्वात्मसु च सकलभोगादृष्टादीना प्रसक्तौ तत्तद्देहावच्छिन्नात्मगतप्रदेशविशेषनियामकेनोक्तप्रसक्तिवारणं समाधान दूषयति सूत्रकार इति सूत्रमवतारयन्ति आत्मन इत्यादि, आत्मन इत्येकवचनं जात्यभिप्रायेण, प्रदेशभेदेनेत्यादि, तत्तदात्मगततत्तद्देहावच्छिन्नप्रदेशविशेषस्य तत्तदात्मनियतत्वाद्देशान्तरे कालान्तरे आत्मान्तरे च भोगादृष्टादि न भविष्यतीतिव्यवस्थेत्यर्थः, तादृश इति, तादृशः तदात्मनि तत्कालदेशावच्छिन्नसमवायेन भोगादृष्टादिकार्यं प्रति तादात्म्यसम्बन्धेन कारणीभूतस्तत्कालावच्छिन्नस्तद्देशावच्छिन्नः, सर्वं तत्तदात्मनियतं तत्तद्देशकालनियतं भोगादृष्टादि सर्वं, अन्यस्यापि प्रदेशस्तत्रान्तर्भवतीति, तथा चान्यात्मीयदेहदे-

---

१ नरहितोपि पाठ. ।

तस्यैव वा देहस्य देशान्तरगमने पूर्वदेशस्य त्यक्तत्वात् सोंशः अन्तर्भवेत् तिरोभूतो भवेदिति ॥ ५३ ॥ १६ ॥

॥ इति द्वितीयाध्यायस्य तृतीयपादे षोडशमंशोनानाव्यपदेशादित्यधिकरणम् ॥ १६ ॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥

---

शकालानामवच्छेदकानामात्मगतप्रदेशविशेषावच्छेदकत्वसम्भवात्तादृशावच्छिन्नप्रदेशविशेषस्यात्मान्तरेपि सत्त्वादन्यात्मीयभोगादृष्टादीनामन्यात्मनि प्रसक्तिर्दुर्निवारेत्यर्थः, ननु पूर्वोक्तावच्छेदकत्रयावच्छिन्नत्वविशिष्टतदात्मगतप्रदेशस्य तादात्म्येन तदात्मन्येव सत्त्वेन तादात्म्येन कारणीभूतप्रदेशस्यात्मान्तरेभावान्नात्मान्तरे भोगादृष्टाद्यापत्तिरित्यत आहु· तस्यैव वेत्यादि, देशान्तरेति कालान्तरस्थितेरप्युपलक्षणं, सोंशः तद्देहदेशकालावच्छिन्नत्वविशिष्टस्तदात्मगतप्रदेशविशेषस्तादात्म्येन कारणत्वेनाभिमत·, तथा च तदात्मगतकारणैस्तदात्मगतभोग एव प्रदेशान्तरे कालान्तरे वानुपपन्नः स्यादिति फलित, विशिष्टस्यान्तर्भावान्नाशादित्यर्थः ॥ ५३ ॥ ॥ १६ ॥

इति द्वितीयतृतीये षोडशाधिकरणम् ॥ १६ ॥

## ॥ इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते श्रीमद्ब्रह्मसूत्राणुभाष्यपदप्रदीपे द्वितीयाध्यायस्य तृतीयः पादः ॥

---

१ तिरोभवेदित्यपि पाठ· ।

# ॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

## तथा प्राणः[1] ॥ १ ॥ ( २. ४. १. )

जीवशरीरमध्य[2]वर्तिनां प्राणादीनां विचारार्थं पादारम्भः ।

तत्र जीवं निरूप्य तादृशधर्मवत्त्वं प्राणे अतिदिशति, प्राणशब्दप्रयोगः प्रियत्वाय, प्राणाः[3] इन्द्रियाणि, मनसो मुख्यत्वादेकवचनं, "उत्क्रान्तिगत्यागतीना"मित्यारभ्य सर्वोपपत्तिरत्रातिदिष्टा[4], चिदंशस्यापि तिरोभाव इति पृथङ्निरूपणं, ननु तद्गुणसारत्वादयः कथमुपदिश्यन्त इति चेन्न[5], सत्यमस्ति तत्रापि "ये प्राणं ब्रह्मोपासत" इति ॥ १ ॥

---

तथा प्राणः ॥ १ ॥ पूर्वपादे जीवस्य स्थूलशरीरनिष्पादकानां भूतानामुत्पत्तिक्रमादिकं विचार्य ततो जीवस्वरूपं विचारितमिन्द्रियादीना तु स्वरूपं न विचारितमिति तुरीयपादेवसरसङ्गति बोधयन्त पादप्रयोजनमाहु. जीवशरीरेत्यादि, जीवस्थूलशरीरमध्यवर्तिनां लिङ्गशरीरघटकानामन्तर्बहिरिन्द्रियाणां प्राणानां च विचारार्थं पादारम्भ इत्यर्थः, अत्रैतेषां शरीरान्तर्वर्तित्वोक्त्या शरीरान्वयव्यतिरेकानुविधायित्वं दर्शितं, तत्र द्वयी विधा सम्भाव्यते शरीरवदुत्पत्तिविनाशशालित्वं वा जीववद्गत्यागतिशालित्वं वा, आद्यविधायां वियदादिवद्ब्रह्मकार्यत्वमिन्द्रियप्राणानां, द्वितीयस्यां जीववद्ब्रह्मांशत्वं, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्तूभयथापि सिद्धिरतोत्रोभयोर्मध्ये किं विवक्षितमित्याकाङ्क्षायां प्राणादिनित्यतागमकस्य श्रुतावनुपलम्भा'देतस्माज्जायते प्राण' इत्यत्र जन्मोपलम्भाच्च कार्यत्वमेव विवक्षितमितिपूर्वपक्षे प्रवृत्तमिदं सूत्रमितिनिश्चयेनाहुः तत्र जीवमित्यादि, पूर्वपादे सधर्मजीवनिरूपणात् प्राणपदवाच्येन्द्रियेषु जीवधर्मातिदेशः सूत्रकारेण प्रतिपाद्यत इत्यर्थ , ननु मुख्यवाचकमिन्द्रियपद त्यक्त्वा कथं प्राणपदमिन्द्रियेषु प्रयुक्तं ? अत आहु. प्रियत्वायेति, इन्द्रियाणां प्राणवत्प्रियत्वबोधनायेत्यर्थ., प्राणा इन्द्रियाणीति 'अथ ह प्राणा अह श्रेयसि व्यूहिरे[6]' इत्यादिश्रुतौ प्राणशब्द इन्द्रियेषु प्रसिद्ध इति सोपि मुख्यप्राण एव, तर्हि सूत्रे प्राण इत्येकवचनं कथम् ? तत्राहु', मनस इत्यादि, लिङ्गशरीरे मनस एव प्राधान्यात्तत्प्रधानो निर्देश इतिभाव', ननु प्राणादिषु वियदादिधर्मातिदेशे 'स प्राणमसृजते'ति सृज्यत्वरूप लिङ्गं नियामक जीवधर्मातिदेशे किं नियामकमित्यत आहुः उत्क्रान्तीत्यादि, 'स यदास्माच्छरीरादुत्क्रामति सहैवैतै' सर्वैरुत्क्रामति यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकाम परिवर्तते स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतन विप्रतिष्ठन्त' इत्यादिपूक्ता जीवसहभावबोधिकोक्तिर्जीवधर्मातिदेशिका बोध्या, ननु जीवधर्मातिदेशार्थमिदं सूत्रं पूर्वपाद एव कुतो नोक्तमित्यत आहु. चिदंशेत्यादि, तथा चेन्द्रियप्राणादिषु चिदंशस्य तिरोभावाद्वियदादितुल्यत्वशङ्कया तेषां धर्मातिदेशशङ्का स्यादतस्तद्वारणाय पादान्तरे सूत्रप्रणयनमित्यर्थः, एतत्पादस्य तु जीवधर्मातिदेशार्थत्वान्न पूर्वोक्तशङ्कावकाश इतिभावः, प्राणेषु जीवसाम्यमसमन्वान. पृच्छति नन्वित्यादि, सकलधर्मातिदेशमध्ये ब्रह्मगुणसारत्वब्रह्मसादृश्यगुणगतयावदात्मभावित्वानां जीवगतानां प्राणेषु न सम्भवः प्रसिद्ध्यभावादित्यर्थ., नेतिसमाधानमाहुः, सत्यमस्ति बृहदारण्यके 'प्राणा वै सत्य तेषामेष सत्य'मितिश्रुत्युक्तं सत्यत्वं प्राणेष्वस्ति, तैत्तिरीये तत्र प्राणेपि 'ये प्राण ब्रह्मोपासत' इतिव्यपदेशोस्ति, एवं षडाचार्यब्राह्मणे प्राणवाक्चक्षुःश्रोत्रमनोहृदयेषु 'प्राणो वै ब्रह्मे''त्यादिषु सर्वप्राणनरूपो ब्रह्मगुणोपि प्राणेष्वस्ति यावदात्मभावी, एवं 'चक्षुषश्चक्षु'रित्यादिना स्वस्वकार्यक्षमत्वमपीन्द्रियेषु ब्रह्मगुणोस्ति, स एव च तेषु सारभूतो जडवैलक्षण्यसम्पादकत्वात्, स च

---

१ तथा प्राणा इत्यपि पाठः । २ मध्यशून्यः पाठ क्वचन स एव च साधु' । ३ प्राण इत्यपि पाठः। ४ अविशिष्टेत्यपि पाठः । ५ नरहितः पाठः क्वचित् । ६ व्यूदिर इत्यपि पाठ ।

## गौण्यसम्भवात् ॥ २ ॥

ननु उत्क्रान्त्यादिश्रुतिर्गौणी भविष्यति, न, गौण्यसम्भवात्, सा श्रुतिर्गौणी न सम्भवति, एकैव श्रुतिर्जीवे मुख्या प्राणे गौणीति कथं सम्भवति? ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

जडत्वेनाधिकविचारोत्र क्रियते, सृष्टेः पूर्वमपि प्राणादीनां स्थितिः श्रूयते, "असद्वा इदमग्र[1] आसीत् तदाहुः किं तदसदासीदित्यृषयो वाव तेग्रे असदासीत् तदाहुः के ते ऋषय इति प्राणा वा ऋषय" इति, ननु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मितिविरोध इति चेत्[2], स्वरूपोत्पत्तिरेवात्र निषिध्यते जीववत्, न तूद्गमः, उद्गमात् पूर्वन्तु "सदेवे"तिश्रुतिः, चकारात् मोक्षे तस्यापि सम्पत्तिः श्रूयते स्थलान्तरे, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"तिश्रुतिर्विस्फुलिङ्गसदृशी ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

"मनः पूर्वरूपं वागुत्तररूप"मिति "तस्य यजुरेव शिर" इति, तथा च वेदानां स्वत उत्पत्त्यभावात् तत्पूर्वरूप[3]मनसः कथमुत्पत्तिः? ॥ ४ ॥

---

प्राणानां यावदात्मभावी, इन्द्रियवधोपि कार्याक्षमत्वमेव न तु नाशः शरीरान्तरे तस्मिन्नेव वा पुनस्तेषां कार्यदर्शनादिति जीवधर्माणां प्राणेष्वतिदेशसम्भवान्न दोष इत्यर्थ. ॥ १ ॥

गौण्यसम्भवात् ॥ २ ॥ प्राणेपूत्क्रान्त्यादिजीवधर्मातिदेशं वाद्याक्षिपति नन्वित्यादि, ननु नित्यत्वस्य प्राणादिष्वश्रवणादुत्क्रान्त्यागतिश्रुतिर्नाशोत्पत्तिपरा सत्यत्वादिश्रुतिश्चोपासनापरेति श्रुतिर्गौणी नाम लाक्षणिकी भविष्यत्यतो न श्रुतीनामतिदेशकत्वमित्यर्थ., समाधानमाहु नेत्यादि, गौण्यसम्भवात् लक्षणायाः असम्भवात्, कथं सम्भवति? युगपद्वृत्तिद्वयविरोधदोषेण न सम्भवतीत्यर्थ. ॥ २ ॥

तत्प्राक् श्रुतेश्च ॥ ३ ॥ तथेत्यनुवर्तते, सूत्रप्रयोजनमाहु· जडत्वेनेत्यादि, जडानां भूतानां च चिरस्थायित्वदर्शनात्तद्वदेव प्राणानामप्युत्क्रान्त्यादि. सम्भाव्यते न तु नित्यत्वमिति तादृशसम्भावनानिराकरणाय प्राणानां नित्यत्वविचारः क्रियत इत्यर्थः, तमेवाहु. सृष्टेरित्यादि, श्रुतिस्तु वाजिनामग्निप्रकरणस्था, श्रुतौ 'प्राणा' इतिबहुवचनमिन्द्रियाणां बोधक, श्रुत्यन्तरविरोधमाशङ्क्य परिहरति नन्वित्यादि, तथा 'चेदमग्रे सदेवासी'दित्यनेन प्राणादीनामुद्गमो निषिध्यत इति श्रुतिविरोध इत्यर्थ., स्वरूपोत्पत्तिः असत सत्तारूपा, अत्र श्रुतौ, तदुद्गमः प्राणेन्द्रियाणामुद्गमः, सदेव ब्रह्मरूपमेव, तस्यापि तदीयप्राणानामपि, 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति समवनीयन्त इत्युत्क्रमहेतूनामविद्याकर्मणानिवृत्तत्वाद्ब्रह्मण्येव सम्पद्यन्त इत्यर्थः, श्रुत्यन्तरदोषमाशङ्क्य परिहरति, एतस्मादित्यादि, विस्फुलिङ्गसदृशी विभागरूपैवोत्पत्ति. ॥ ३ ॥

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ ननु सृष्ट्यादौ प्राणास्थितेरवान्तरप्रलये प्राक्स्थितप्रजापतिप्राणसत्ताप्रतिपादनेनाप्युपपद्यमानत्वान्न तया प्राणनित्यत्वसिद्धिरितिशङ्कायामिदं सूत्रमाहेत्याशयेनाहुः मन इत्यादि, प्रकृते प्राणशब्दस्येन्द्रियवाचकत्वादिन्द्रियेषु च मनसो मुख्यत्वान्मनोनित्यत्वसिद्ध्येन्द्रियाणां नित्यत्व सेत्स्यतीति मनसो वेदमूलभूतस्य नित्यत्वं साधयति सूत्रकारः, तस्य मनोमयकोशरूपस्य मनसः, वेदानां भगवन्निश्वासरूपतया नित्यानां वेदानां, स्वत उत्पत्त्यभावात् स्वेषामुत्पत्तिशालित्वाभावात्, तथा च मनसो वेदपरिणामीभूतमन.प्रभृतीन्द्रियाणाञ्च भगवदिन्द्रियव्यष्टिरूपत्वान्नित्यता निराबाधा 'अस्यैवैतानि निश्वसितानी'तिश्रुत्या च व्यष्टिरूपतोक्ता ॥ ४ ॥

---

१ अग्रमित्यपि पाठ. स चासाधु । २ नेत्यधिकं क्वचित् । ३ रूपशून्योपि पाठः क्वचन ।

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

"तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति पूर्वोक्तानां चक्षुरादीनां "अथारूपज्ञो भवतीत्येकीभवति न पश्यतीत्याहु"रित्यादिभिर्जीवगतिः सप्तानां गतिभिर्विशेष्यते, सप्तगतयस्तेन विशेषिताः एकीभवतीति[1], अतो जीवसमानयोगक्षेमत्वाज्जीवतुल्यतेति, चकारात् तत्तदुपाख्यानेषु चक्षुःप्रभृतीनां देवतात्वं संवादश्च, अतश्चेतनतुल्यत्वम् ॥ ५ ॥ १ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे प्रथमं तथा प्राण इत्यधिकरणम् ॥ १ ॥

केचिदिदं सूत्रमुत्तरसूत्रपूर्वपक्षत्वेन योजयन्ति, तत्रायमर्थः, ते प्राणाः कतीत्याकाङ्क्षायां "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्तजिह्वाः अष्टौ ग्रहा[2] अष्टावतिग्रहा" इति "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चा[3]"विति "नव वै पुरुषे प्राणा नाभिर्दशमी" "दश वै पशोः प्राणा आत्मैकादश" इत्येवमादिषु नानासङ्ख्या प्राणानां प्रतीता, तत्र श्रुतिविप्रतिषेधे किं युक्तमिति संशये सप्तैवेति प्राप्तं, कुतः ? गतेः, सप्तानामेव गतिः श्रूयते, "सप्त इमे[4] लोका येषु चरन्ति प्राणा गुहाशयां[5] निहिताः सप्त सप्ते"ति, किञ्च विशेषितत्वाच्च, जीवस्योत्क्रमणसमये सप्तानामेव विशेषितत्वं, अन्ये तु पुनरेतेषामेव वृत्तिभेदाद्भेदा इति, एवं प्राप्ते उच्यते ।

## हस्तादयस्तु स्थितेतो नैवम् ॥ ६ ॥ ( २. ४. २. )

पूर्वसम्बन्धे उत्सूत्रं पूर्वपक्षः, तुशब्दः पूर्वपक्षं व्यावर्तयति, हस्तादयः सप्तभ्योधिकाः, "हस्तौ चादातव्यश्च उपस्थश्चानन्दयितव्यश्च पायुश्च विसर्जयितव्यश्च पादौ च गन्तव्यश्चेति" चक्षुरादिगणनायामेतेपि चत्वार इन्द्रियत्वेन गणिताः, स्थिते सति श्रुतौ गणनया

---

सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥ एवं जीवस्य प्राणमनोवागतिदेशिकायाः श्रुतेः सिद्धावपि चक्षुरादिषु न सा स्फुटेति तदर्थं हेत्वन्तरं वदतीत्याशयेनाहुः तमित्यादि, प्राणमनु मुख्यप्राणपदवाच्यमनु चक्षुरादीनामुत्क्रम इत्यत्रान्वयः, अथ सर्वेषामुत्क्रमानन्तरं, न पश्यति देवदत्तादिर्न पश्यति, सप्तानां गतिभिः चक्षुस्त्वग्घ्राणरसनश्रवणमनोवाचां गतिभिः, तेन जीवगतिपदार्थेन, विशेषिताः विशेषणीभूताः, एकीत्यादि समुदायतां प्राप्नोतीत्यर्थः, तत्तदुपाख्यानेषु 'प्राणानां विज्ञानेन विज्ञानमादाये'त्यादिषु बोध्यम् ॥ ५ ॥ १ ॥

॥ इति द्वितीयचतुर्थे प्रथमाधिकरणम् ॥ १ ॥

केचिदित्यादि, इदं सूत्रं सप्तगतेरितीदं सूत्रं, उत्तरसूत्रपूर्वपक्षत्वेन द्वितीयाधिकरणीयहस्तादिसूत्रपूर्वपक्षत्वेन, तस्मात् यतः सप्तात इत्यर्थः, सप्तार्चिषः जठराग्नेः, समिधः समित्स्थानापन्नाः सप्तजिह्वाः पूर्वोक्ताग्नेरेव जिह्वास्थानीयाः, अष्टावित्याद्यपि प्राणसङ्ख्यैव, तत्र प्राणेषु, श्रुतिविप्रतिषेधे श्रुतिविरोधे प्राप्ते, विशेषितत्वं सप्तानामेव चक्षुस्त्वग्घ्राणरसनश्रवणमनोवाचां विशेषणत्वमित्यर्थः, अन्ये वादिनः, एतेषामेव सप्तानामेव ।

हस्तादयस्तु स्थितेतो नैवम् ॥६॥ ननु सप्तगतिसूत्रस्य पूर्वाधिकरणघटकत्वे द्वितीयाधिकरणे पूर्वपक्षालाभात् कथमधिकरणरचनेत्यत आहुः पूर्वसम्बन्ध इत्यादि, उत्सूत्रं सूत्रबहिर्भावेनैव पूर्वोक्त एव पूर्वः पक्षः कर्तव्य इत्यर्थस्ततोधिकरणसिद्धिरितिभावः, पूर्वपक्षं विरुद्धनानासङ्ख्याश्रवणात्कथं सप्तैवेतिपूर्वपक्षं, स्थित इति सूत्रस्थं पदं

---

१ एकीभवन्तीत्यपि पाठः । २ अत्रेतीत्यधिकं तु प्रामादिकम् । ३ प्राणाद्वाववाचावित्यपि क्वचित् । ४ इहेति क्वचित् । ५ गुहाशयान्निहिता इत्यपि पाठः ।

चक्षुरादितुल्यत्वे सति, अतो हेतोः, सप्तैवेति न, किन्त्वेकादश, अवान्तरगणना सूचनयासम्भवाभिप्राया, अधिकसङ्ख्यान्तःकरणभेदादिति एकादशैवेन्द्रियाणीति स्थितम् ॥ ६ ॥ २ ॥

इति द्वितीयाध्याये चतुर्थपादे द्वितीयं हस्तादय इत्यधिकरणम् ॥ २ ॥

## अणवश्च ॥ ७ ॥ ( २. ४. ३. )

सर्वे प्राणा अणुपरिमाणाः गतिमत्त्वेन नित्यत्वेणुत्वमेव, परिमाणप्रमाणाभावात् पुनर्वचनम् ॥ ७ ॥ ३ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे तृतीयमणवश्चेत्यधिकरणम् ॥ ३ ॥

## श्रेष्ठश्च ॥ ८ ॥ ( २. ४. ४. )

मुख्यश्च प्राणो नित्यगतिमान् अणुपरिमाणश्च, चकारादतिदेशः, "नासदासी"दित्यत्र "आनीदवातं स्वधया तदेक"मिति अननात्मकस्य पूर्वसत्ता प्रदर्शिता ॥ ८ ॥

---

सप्तम्यन्तं, अतो हेतोः चक्षुरादितुल्यतया श्रुतौ गणनारूपहेतोः, ननु तर्हि सप्तादिगणनायाः किम्प्रयोजनमित्यत आहुरवान्तरेत्यादि, सप्तगणना इतरेन्द्रियापेक्षया बहूपकारकत्वेन प्राधान्यद्योतनाय, अष्टगणना देहेविनाभावबोधनाय बन्धकत्वबोधनाय वा, नवगणना नवद्वारेष्वनावृतेषु क्रमेण स्थितिद्योतनाय, दशगणना शुद्धद्वारतामात्रताबोधनाय ब्रह्माण्डमादाय द्वाराणां दशत्वनियमादित्यादिरीत्यावान्तरप्रयोजनदर्शनायावान्तरगणनेत्यर्थः, एकादशावान्तरत्वं सर्वसङ्ख्यानां बोध्यं, अधिकसङ्ख्या अधिकसङ्ख्याप्रतिपादनं, अन्तःकरणभेदात् अन्तःकरणवृत्तिचतुष्टयभेदाद्बोध्या, सिद्धमाहुः एकादशैवेति, इन्द्रियत्वावच्छेदेनैकादशत्वबोधायैवकारः, नन्विन्द्रियेभ्य परं मन' इतिगीतावाक्यान्मनस इन्द्रियत्वाभावात् कथमेकादशसङ्ख्यासम्भव इति चेन्न, 'इन्द्रियाणि दशैकञ्चे'तिवाक्ये 'इन्द्रियाणां मनश्चास्मी'तिवाक्ये च मनस इन्द्रियत्वोक्तेः पुरञ्जनोपाख्यानेपि 'एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृदि'तिनिरूपणादेकादशत्वसिद्धिः ॥ ६ ॥ २ ॥

इति द्वितीयचतुर्थे द्वितीयाधिकरणम् ॥ २ ॥

**अणवश्च** ॥ ७ ॥ सङ्ख्यां निश्चित्य परिमाणं निश्चिनोतीत्याहुः **सर्वे** इत्यादिना, सर्वप्राणानां पूर्वोक्तरीत्या नित्यत्वे सिद्धे गतिमत्त्वेनाणुत्वं सिद्धमितिभावः, **परिमाणप्रमाणाभावात्**, प्राणानां परिमाणानुक्तेः, **पुनर्वचनं** जीवनिर्देशेन प्राप्तमणुपरिमाणं सूत्रस्थचकारेण पुनरुक्तमित्यर्थः, नन्विन्द्रियाणामणुत्वे समूहालम्बनज्ञानस्य देहस्थितानेकपदार्थानां युगपज्ज्ञानस्य चानुपपत्तिरिति चेन्न, चक्षुर्मनोवाचां तेजोदेवतायास्त्वचो वायुदेवतायाश्च व्यापकतया तदीयरूपस्पर्शगुणयोर्वा व्यापकतया सकललोकज्ञानानामुपपत्तेः ॥ ७ ॥ ३ ॥

इति द्वितीयचतुर्थे तृतीयाधिकरणम् ॥ ३ ॥

**श्रेष्ठश्च** ॥ ८ ॥ इन्द्रियाणि विचार्येदानीं मुख्यप्राणं विचारयति, तत्र मुख्यप्राणनित्यतायाः स्फुटमश्रवणात्प्रश्नोपनिषत्प्रभृतिषु 'मा मोहमापद्यथाः अहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामी'त्यादिरूपे प्राणानां संवादे शरीरस्थितिहेतुतया श्रेष्ठत्वेन निर्णीतत्वाच्च, अणुत्वसन्देहे श्रेष्ठस्य नित्यत्वागमकत्वे मानाभावादेवमनित्यत्वे प्राप्त आहेति व्याकुर्वन्ति **मुख्य** इत्यादि, मुख्यप्राणोपि नित्यो गतिमानणुश्च, तत्र हेतुर्जीवातिदेशप्रापकश्चकारेण द्योत्यते, नन्वस्य सृष्टेः पूर्वं सत्त्वे किं मानमत आहुः **नासदि**त्यादि, तथा चैवं सृष्टिपूर्वकाले वातरूपनिषेधपूर्वक'मानीदि'तिकथनाद्भगवतोननात्मको यो धर्मः स एव मुख्यप्राण इति तेन रूपेण सत्तायां सिद्धायां 'एतस्माज्जायते प्राण' इत्यत्रापि जीववद्व्युच्चरणमेव नतूत्पत्तिरतोयमपि जीवसमानयोगक्षेम एवेतिनिश्चयः, पञ्चधात्मविभागोक्तिस्तु वृत्तिरूपेत्यतो नाणुत्वव्याघात इत्यवसेयम् ॥ ८ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

ननु मुख्यः प्राणो वायुरेव भविष्यति इन्द्रियाणां क्रिया वा, एवं हि श्रूयते "यः प्राणः स वायुः स एष वायुः पञ्चविधः" "प्राणोपानो व्यान उदानः समान" इति "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चे"ति तन्त्रान्तरीया आचक्षते, तदुभयमपि न, कुतः? **पृथगुपदेशात्**, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"ति प्राणवाय्वोः पृथगुपदेशात् वृत्तिवृत्तिमतोरभेदेन ततोपि पृथगुपदेशाच्च ॥ ९ ॥ ४ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे चतुर्थं श्रेष्ठश्चेत्यधिकरणम् ॥ ४ ॥

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ (२. ४. ५.)

स प्राणः स्वतन्त्रः परतन्त्रो वेतिविचारे स्वतन्त्र इति तावत्प्राप्तं "सुप्तेषु वागादिषु प्राण एको मृतानाप्तः प्राणः संवर्गो वागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रानि"तीमामाशङ्कां निराकरोति तुशब्दः, चक्षुरादिवदयमपि प्राणः अस्वतन्त्रः, मुख्यतो भगवदधीनः, व्यवहारे जीवाधीनः, कुतः? तत्सहशिष्ट्यादिभ्यः चक्षुरादिभिः सह शासनात् इन्द्रियजयवत् प्राणजयस्यापि दृष्टत्वात्, आदिशब्देन जडत्वादयः ॥ १० ॥

---

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ प्राणस्वरूप एव किञ्चिदाशङ्क्य परिहरन्तीत्याशयमत्राहुः **नन्वित्यादि**, **समान** इत्यन्त एकः प्रकारः, सामान्यकरणवृत्तिरित्यनेन तन्त्रान्तरीयमतमुच्यते, तन्त्रान्तरे हि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि इमानि दश बाह्यानि, मनोबुद्ध्यहङ्काराख्यश्चान्तरा एवं त्रयोदशविधं करणं, तस्य त्रयोदशविधस्यापि करणस्य या साधारणी वृत्तिः सा प्राणादिपञ्चवायुरूपा भवति, **प्राणशब्देन** प्राणन, भावे घञ्, इत्थञ्चोक्ता वृत्तिरेव प्राणादिपञ्चकत्वेन व्यवह्रियते, तदुभयं **यःप्राण** इत्यारभ्य **समान** इत्यन्तमेकं मतं **सामान्यकरणे**त्यारभ्याचक्षते इत्यन्तं द्वितीयम्मतमेतदुभयमित्यर्थः, इत्थञ्च तदुभयमध्ये एकमादरणीयन्न तु पृथग्विचारः कर्तव्य इतिशङ्कापरिहारमाहुः नेति, नन्वेवं वायोः सकाशात्प्राणानां भेदोस्तु इन्द्रियक्रियातः कथ भेद इत्यत आहुः **वृत्तीत्यादि**, **वृत्तिवृत्तिमतोः** इन्द्रियवृत्तीन्द्रिययोः, ततोपि इन्द्रियतोपि, तथा च पदार्थान्तरमेव जीवमुख्यप्राण इति सिद्धं, ननु 'यः प्राणः स वायुः' 'स एष वायुः पञ्चविध' इति श्रुत्योर्विरोधो वायुभिन्नत्वाङ्गीकारे इति चेन्न, श्रुत्योर्वायुसमानताप्रतिपादनात्तथाहि 'सोमन्यतैतासाम्प्रबोधनायाभ्यन्तर विविशामीति स वायुरिवात्मानं कृत्वाभ्यन्तर प्राविशत् स एको नाशकत् स पञ्चधात्मान विभज्ये'त्यादि प्रजापतिमुपक्रम्य पठ्यतेतो न विरोधः, भूतात्मकवायुव्यतिरिक्तभगवत्प्राणात्मकवायुप्रतिपादकत्वेनापि न श्रुत्योर्विरोधः, जीवमुख्यप्राणस्तु न वायुरन्यथा 'सोमन्यते'तिश्रुतिविरोधः स्यात् ॥ ९ ॥ ४ ॥

इति द्वितीयचतुर्थे चतुर्थाधिकरणम् ॥ ४ ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अधिकरणान्तरताबोधनाय संशयादिकमाहुः **स प्राण** इत्यादि, **मृतानाप्तः मृतेन** मृत्युना सहानाप्तः प्रतिस्पर्धीभूतः, **संवर्गः** वागादिजीवनकर्ता, **संवृङ्क्ते** सङ्गृह्णाति, **इतरान्** पञ्चप्राणान् मुख्यः प्राणो रक्षतीत्यर्थः, **आशङ्कां** पूर्वपक्षं, **मुख्यतः** सम्पत्तिदशायां, **दृष्टत्वात्** 'जितेन्द्रियस्य मुख्यस्य जितश्वासस्य योगिन' इत्यादौ दृष्टत्वात्, **आदिशब्देन** सूत्रस्थप्रथमादिशब्देन, **जडत्वादयः** इन्द्रियतुल्यतया प्राणनिष्ठजडत्वादयः, जडत्वादय इत्यत्र **आदिशब्देन जीवोपकरणरूपत्वं संवादकरणादिकं ग्राह्यं, द्वितीयादिपदेन** प्राणव्यापारो बोध्यः ॥ १० ॥

---

१ क्रियेवेत्यपि पाठः । २ तन्त्रान्तरीया इत्यपि पाठः । ३ मृत्युनानाप्त इति एकोमृतनामाप्त इत्यपि च पाठौ ४ मुख्य एवेत्यपि पाठः ।

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

ननु प्राणस्य जीवोपकरणत्वे तदुपकारकव्यापारवत्त्वमपेक्ष्यते, तत्रैकादशैव वृत्तयस्तन्त्रान्तरेपि सिद्धाः, "एकादशामी मनसो हि वृत्तय आकृतयः पञ्चधियोभिमानः मात्राणि कर्माणि पुरञ्च तासां वदन्ति चैकादश वीर भूमी"रिति, तथा कश्चित्प्राणस्य व्यापारोस्तीति चेत्, नैष दोषः, कुतः? अकरणत्वात्, करणस्यैव हि व्यापारोपेक्षितः, न अन्यस्य कार्यमात्रपेक्षितं, तत्राह तथा हि, कार्यवत्त्वं युक्तं, तत् श्रुतिरेव दर्शयति, "तस्मिन्नुत्क्रामत्यथेतर" इत्यादिश्रुतिभिः प्राणनिमित्तैव शरीरस्थितिरिति, तस्माद्व्यापाराभावेपि स्वरूपस्थितिमात्रेण तस्योपकारित्वम् ॥ ११ ॥

## पञ्चवृत्तेर्मनोवद्व्यपदिश्यते ॥ १२ ॥

व्यापारव्यतिरेकेणोपकारित्वमसमञ्जसमिति चेत् तत्राह पञ्चवृत्तेः, "अहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामी"ति यथा मनसो द्वारभेदेनैकादश वृत्तयः स्वरूपत एव एवमेव प्राणस्यापि पञ्चधात्मानं विभज्य कार्यकारणं व्यपदिश्यते ॥ १२ ॥

## अणुश्च ॥ १३ ॥

अतिदेशेन प्राप्तमप्यणुत्वं "पञ्चधात्मानं विभज्ये"तिवचनात् सन्दिग्धं पुनर्विधीयते, आसन्योप्यणुः, चकारात् पूर्वोक्तसर्वसमुच्चयः ॥ १३ ॥ ५ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे पञ्चमं चक्षुरादिवत्त्वित्यधिकरणम् ॥ ५ ॥

---

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥ ननु प्राणस्य जीवोपकरणत्वं कथमित्याशङ्क्य समर्थयतीत्याहु नन्वित्यादि, तन्त्रान्तरेपि योगशास्त्रेपि, एकादशेतिश्लोकस्तु पञ्चमस्कन्धे जडभरतवाक्य, आकूतयः विसर्गानन्दनादानगमनवचनाख्यकर्मजनका बाह्यप्रयत्नाः कर्मेन्द्रियरूपाः, पञ्च शब्दस्पर्शरूपरसगन्धज्ञानानि पञ्च, अभिमान अहममेतिस्वीकारात्मक साक्षान्मनसो वृत्ति, एवमेकादश मनसो वृत्तयः, मनोद्वारभूतानामिन्द्रियाणान्तु प्रतिव्यक्तिनियता एकैकजातीयाः, मात्राणि शब्दादयो धिया भूमयो विषया, कर्माणि विसर्गादीन्याकूतीनां भूमयो विषया', पुरं शरीरं, तच्च स्वसम्बन्ध्यवयवानामप्युपलक्षक, तदहम्ममेत्यभिमानाख्यमनोवृत्तेर्विषय', एवमेकादश तासा वृत्तीना भूमीर्वीर वदन्तीति, तथा च जीवोपकरणभूतानां करणानां तत्तद्भोगरूपकार्यार्थं व्यापारा यथैता आकूत्यादय सन्ति तथा जीवस्य भोगसाधकः कश्चिद्व्यापारो नास्तीति कथ तस्य जीवोपकरणत्वमित्यर्थ., समाधिमाहु नैष दोष इति, एष व्यापाराभावरूपः, अकरणत्वात् प्राणानां जीवोपकरणतायां करणत्वाभावात्, अन्यस्य करणभिन्नकारणस्य, कार्यत्वं युक्तं न व्यापारोप्यपेक्षित इत्यर्थ., तत् व्यापारशून्यकारणत्वं, श्रुतिः प्रश्नोपनिषदि 'तस्मिन्नुत्क्रामत्यथैते सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्त'इतिश्रुति., तस्योपकारित्वं प्राणस्योपकारित्वम् ॥ ११ ॥

पञ्चवृत्तेर्मनोवद्व्यपदिश्यते ॥ १२ ॥ पुन किञ्चिदाशङ्क्य परिहरतीत्याशयेनाहु. व्यापारेत्यादि, तत्राह इतिशङ्काप्राप्तावाह सूत्रकार., पञ्चवृत्तेरिति तथा चैकादशवृत्तिमतो मनसो यथोपकारित्व तथा पञ्चवृत्तिमतः प्राणस्यापि स्वरूपत एवोपकारित्व न तु व्यापारापेक्षेतिभाव इतिसूत्रार्थ, इममेवार्थ विशदयन्ति अहमेवेत्यादिना अहंशब्देन मुख्यप्राणः, बाणं शरीर, एकादश वृत्तयः साक्षात्परम्पराभेदेनैकादश, साक्षादहंममात्मिका, परम्परया दशेन्द्रियद्वारा, प्राणे तु साक्षादेव पञ्चवृत्तिस्वीकारः, अतः स्वरूपात्मकवृत्तिरूपकार्यात्स्वरूपत एव प्राणानामुपकरणत्वम् ॥ १२ ॥

अणुश्च ॥ १३ ॥ सन्दिग्धं अणोर्विभागस्य युक्तिबाधितत्वात् सन्दिग्धमित्यर्थ., प्राणस्य पञ्चवृत्तिरूपश्रुति-

---

१ तृतीयान्तः पाठोपि क्वचित्। २ मनसोपीत्यपि पाठ

## ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४ ॥ ( २. ४. ६. )

वागादीनां देवताधिष्ठानवतां प्रवृत्तिः स्वत एव वा, जीवाधिष्ठानब्रह्मप्रेरणयोर्विद्यमानत्वादितिसंशयः, विशेषकार्याभावात् न देवतापेक्षेतिपूर्वपक्षं निराकरोति तुशब्दः, वागादीनां ज्योतिरादि अग्न्यादिरधिष्ठानमवश्यमङ्गीकर्तव्यं, कुतः? तदामननात्, तथा आम्नायते "अग्निर्वाग्भूत्वा मुखं प्राविश"दित्यादि, अयमर्थः, "योध्यात्मिकोयं पुरुषः सोसावेवाधिदैविकः यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिक"इत्याध्यात्मिकादीनां स्वरूपं, वागादयश्चानुरूपा[1] नित्याः, तत्र यदि त्रैविध्यं न कल्प्येत[2] तदैकस्मिन्नेव शरीरे उपक्षीणं शरीरान्तरे न भवेत्, कल्प्यमाने तु अग्निर्देवतारूपोनेकरूपभवनसमर्थो वाग्रूपो भूत्वा सर्वत्र प्रविष्ट इति सङ्गच्छते, ते चाग्न्यादयश्चेतना भगवदंशास्तिरोहितानन्दाः सामर्थ्य-

---

बोधितार्थावगमे तु सन्देह एव नास्ति, पूर्वोक्तसर्वसमुच्चय इति, उत्क्रान्तिगत्यागत्यादिवृत्त्यन्तधर्मसङ्ग्रहः, तथा च स्वसामर्थ्यादणुत्वः वृत्तिसामर्थ्यात्सर्वशरीरव्याप्तिः, बहिर्भूयस्त्वेन प्रत्ययस्तु त्रिवृत्करणोत्तरमद्भिःपोषणादुपपन्नः, तस्मादणुरेवासन्यः प्राण इति सिद्धं, यत्पुनः प्राणमुपक्रम्य 'सम एभिस्त्रिभिर्लोकैः समोनेन समः सर्वेणे'ति विभुत्वमुद्गीथब्राह्मणे श्रावितं यच्च 'प्राणे सर्वं प्रतिष्ठित'मिति सर्वाधारत्वं प्रश्नोपनिषदि श्रावितं 'सर्वं हीदं प्राणेनावृत'मिति च श्रुत्यन्तरे तच्च सर्वमुत्क्रान्त्यादिभिः परिच्छिन्नत्वे निर्णीते सर्वस्य प्राणिजातस्य प्राणाधीनत्वबोधनार्थंरामानुजमतवदथवा सर्वप्राणसमष्टिरूपाधिदैविकहिरण्यगर्भप्राणानां सूत्रात्मकतया व्यापकताबोधनेन वा शङ्करभास्करमतवत्सुकरं समाधानं परं किञ्चिद्वैलक्षण्येन ॥ १३ ॥ ५ ॥

### इति द्वितीयचतुर्थे पञ्चमाधिकरणम् ॥ ५ ॥

**ज्योतिराद्यधिष्ठानन्तु तदामननात्** ॥ १४ ॥ संशयाद्युपन्यासमुखेन सूत्रप्रयोजनं बोधयन्ति **वागादीनामित्यादि**, न च जडानां स्वतःप्रवृत्त्यसम्भवाद्देवताधिष्ठानतायाः प्रवृत्तिप्रयोजकतार्थाक्षिप्तेति संशय एव न सम्भवतीत्यत आहुः जीवेत्यादि, तथा च ब्रह्मप्रेरणतया प्रवृत्तिरुत **जीवाधिष्ठानतयेतिसंशयः**, **विशेषकार्येत्यादि**, अन्तर्यामिब्राह्मणोक्तस्य ब्रह्माण्डसृष्टिनियमनरूपस्य **विशेषकार्यस्याभावादित्यर्थः**, एवं भोगरूपकार्यस्यापि प्रतिप्राणं जीवाधिष्ठतामात्रादेवोपपत्तेर्न **देवतापेक्षेतिपूर्वपक्षं निराकरोतीत्यर्थः**, **अधिष्ठानमिति** अधितिष्ठतीत्यधिष्ठानं, नन्द्यादित्वात् कर्तरि ल्युः, नपुंसकन्तु सामान्यं बोध्यं, तथा च शरीरेपि प्राणानां सर्वेषां स्वस्वकार्यार्थं **ज्योतिरादीनामधिष्ठानतावश्यमङ्गीकर्तव्या**, **तदामननात्** तस्य देवतारूपस्याधिष्ठातुः श्रुतौ कथनात्, 'अग्निर्वाग्भूत्वे'तिश्रुतिस्त्वैतरेयोपनिषदि लोकानां लोकपालानाञ्च सृष्टिमुपक्रम्य अद्भ्यः पुरुषोद्धरणमुक्त्वा तत आलोचनान्तरेण तस्य मुखनिर्भेदं मुखाद्वाङ्निर्भेदं वाचोग्नेर्निर्भेदमुक्त्वा तथैव नासिकाक्षिकर्णत्वग्हृदयनाभिशिश्नानां सेन्द्रियाणां सदेवानां निर्भेदं ततस्तासां देवतानां प्रलयमहार्णवे पातमशनापिपासाभ्यां तासामावरणं ताभिः स्वान्नभोगार्थं स्थानप्रार्थनं ततो भगवता तासां स्थित्यर्थं पुरुषशरीरानयनञ्चोक्त्वा ततो भगवता 'यथायतनं प्रविशते'त्युक्ते 'अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदि'त्येवं तस्यास्तस्या देवतायास्तत्तदिन्द्रियभवनेन तत्तद्गोलके प्रवेशं वक्ति तस्मादित्यर्थः, ननु तासां देवतानां विराट्पुरुषशरीरीयतत्तद्गोलके प्रवेशोस्तु स्वस्वान्नभोगार्थो न तु लौकिकेन्द्रियकार्यार्थोतोनया श्रुत्या कथं देवताधिष्ठानसिद्धिरत आहुः **अयमर्थ** इति, अयं वक्ष्यमाणः सूत्रतात्पर्यगोचरः, **योध्यात्मिक** इतिश्लोकः द्वितीयस्कन्धे, 'पुराणं वेदसम्मत'मिति तदनुसारेण स्फुटत्वार्थं निरूप्यते श्रुतिः, अर्थस्तु आत्मनीत्यध्यात्मं तत्र भवः **आध्यात्मिकः**, एवं दैविकभौतिकावपि बोध्यौ, उभयोराध्यात्मिकाधिदैविकयोर्विच्छेदो द्वैधीभावो यस्मात्स **उभयविच्छेदः**, तथा च श्रुतौ मुखादिनिर्भेदोत्तरमेवेन्द्रियदेवतयोर्निर्भेदकथनादेतच्छ्लोकोक्तमाध्यात्मिकादिस्वरूपमाधिभौतिकोत्तरभाव्येव सिद्धं श्रुत्यभिप्रेतं, **अनुरूपाः** आधिदैविकादिरूपत्रयेपि योग्या अनुगता इत्यर्थः, **तत्र** वागादीन्द्रियेषु, **त्रैविध्यं** आधिदैविकादिभेदत्रयं, **उपक्षीणं** अन्यत्रगतिस्थितिरहितं, **शरीरान्तरे न भवेत्** शरीरान्तरसम्बद्धं न भवेत्, **कल्प्यमाने तु** वागादीनां त्रितयरूपत्वे कल्प्यमाने च, **सर्वत्र** सर्वशरीरेषु स्वगोल-

---

१ अणुरूपा इत्यपि पाठः । २ कल्पेदित्यपि पाठः ।

युक्ता इति कार्यवशादवगम्यन्ते[1], आध्यात्मिकाधिदैविकयोरेकत्वात् वदनादिकार्यार्थमाध्यात्मिका एव निरूपिता उद्गमने "एतस्मात् जायते प्राण" इत्यादिषु, वागादीनां नियमेन तत्तज्जीवसान्निध्यं स्वतश्चानिर्गमनं मृत्युरूपश्रमेण तत्र लयः पुनरुद्गमः[2] समष्टिव्यष्टिभावश्च अन्य[3]था नोपपद्येत, आधिभौतिककृतश्चायं भेद इत्यग्रे व्यक्तीकरिष्यते, एवमेव ब्रह्मणोपि "अनेन जीवेनात्मनानुप्रविश्ये"त्यत्र[4]ापि निःसन्दिग्धं द्रष्टव्यं यदज्ञानात् सर्वविप्लववाद[5]व्यामोहः ॥ १४ ॥ ६ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे षष्ठज्योतिराद्यधिष्ठानन्त्वित्यधिकरणम् ॥ ६ ॥

यदधिष्ठानमग्न्यादि तत् किं स्वत एव अन्यसहितं वेतिसन्देहः, किं तावत् प्राप्तम् ? स्वत एवेति, पूर्वोक्तन्यायेन तावतैव सिद्धेरनवस्थानाच्च देवतात्वव्याघातश्चेत्येवं प्राप्ते उच्यते,

## प्राणवता शब्दात् ॥ १५ ॥ ( २. ४. ७. )

प्राणवता अधिष्ठितं[6] वागादि, कुतः ? शब्दात्, "सोयमग्निः परेण मृत्युनातिक्रान्तो दीप्यत" इत्यादि, अयमर्थः, "द्वया ह प्राजापत्या" इत्यत्राधिष्ठातृत्वमग्नीनामुक्तं, "देवा" इत्य-

केषु, ते चेत्यादि, तथा च सर्व एवेन्द्रियदेवा. स्वस्वसामर्थ्येनेन्द्रियरूपतां स्वेषां सम्पाद्य स्वस्वगोलकेषु प्रविशन्तीत्यर्थापत्त्यैव सिद्धं, एकत्वादिति, एकत्वेनाध्यात्मिकानां सामर्थ्यं बोधितं, अन्यथान्नभोजनप्रार्थनं प्रवेशसामर्थ्यं च तेषु न भवेदितिभावः, नन्वेवं देवतानामिन्द्रियनियमे "एतस्माज्जायते प्राण" इत्यादौ देवतानामुद्गमः कुतो नोक्त इत्यत आहुराध्यात्मिका इति, निरूपिता इत्युद्गमनेन्वेति, तथा च तत्तन्नाम्नाध्यात्मिकाधिभौतिकयोरुभयोरप्युत्पत्तिर्निरूपितेत्यर्थः, नन्वेवं वागादिष्वेव दृष्टार्थापत्त्या तादृशसामर्थ्यं कल्पनीयं तावतैवानुपपत्तिपरिहारादत आहुः वागादीनामित्यादि, अन्यथा देवतारूपत्रितयभेदानङ्गीकारे, जीवसान्निध्यं आर्तभागब्राह्मणोक्तं प्राणवागादीनां जीवसान्निध्यं 'तमुत्क्रामन्तं प्राणोनूत्क्रामती'त्यादिवाक्यादवगत, स्वतोस्माज्जीवदेहादनिर्गमनं, व्रतमीमांसायां 'तानि मृत्यु. श्रमोभूत्वोपयेम' इत्यादिनोक्तमृत्युरूपश्रमेण शरीरे लयः, पुनरुद्गमः भुज्युब्राह्मणे 'वायुरेव व्यष्टिर्वायुः समष्टि'रित्यनेन बोधितो य· समष्टिव्यष्टिभाव आसन्यस्य, चकारात्तत्रतत्रोक्तं वागादीनां चेतनतुल्यत्वं च, एतत्सर्वं नोपपद्येत, तथा च देवतोद्गमे श्रुतार्थापत्तिरेव मानमिति न वागादिसामर्थ्यकल्पनया निर्वाह इतिभाव·, समष्टिः सम्यगेकरूपेण व्याप्तिः, व्यष्टिर्विविधनामरूपैर्व्यापकता, एवमुक्तोर्थः सर्वोपि व्यासाशयगोचर इति वदन्ति आधिभौतिकेत्यादि, अयं वागादिरूपः, एवमेव एतेषां त्रैविध्यवदेव, यथैतेषामाधिभौतिके प्रवेशानन्तरं भेदत्रयव्यवहार एवं ब्रह्मणोपि आधिभौतिकप्रवेशानन्तरमेव त्रितयव्यवहारगोचरता बोध्या, निःसन्दिग्धं श्रुतौ तिसृषु देवतासु 'अनेन जीवेनात्मनानुप्रविश्ये'तिप्रवेशकथनादत्रापि निःसन्दिग्धं द्रष्टव्यमित्यर्थः, 'तदनुप्रविश्य सच्च त्यच्चाभव'दितिश्रुत्यन्तरे प्रवेशोत्तरमेव द्वैधीभावश्रवणात् ॥ १४ ॥ ६ ॥

इति द्वितीयचतुर्थे षष्ठाधिकरणम् ॥ ६ ॥

प्राणवता शब्दात् ॥ १५ ॥ सूत्रप्रयोजनं बोधयितुं संशयादिकमाहुः यदित्यादि, स्वत एवान्यसहितं वेति, स्वत एव वागादीनधितिष्ठति मुख्यप्राणेन सहितं वा सदधितिष्ठतीतिसन्देह इत्यर्थः, पूर्वपक्षे युक्तिमाहुः पूर्वोक्तेत्यादि, ज्योतिराद्यधिकरणे स्वत एवाग्न्यादीनामेवाधिष्ठातृत्वसाधनात्तदधिष्ठानमात्रादेव वागादीन्द्रियाणां व्यापारस्य सर्वजीवसान्निध्यादेव सिद्ध्या इतरसाहित्ये प्रयोजनाभावात् मुख्यप्राणस्याग्न्याद्यधिष्ठातृत्वे प्रयोजकत्वाङ्गीकारे च मुख्यप्राणस्याप्यग्न्याद्यधिष्ठातृतायामधिष्ठात्रन्तरस्य प्रयोजकत्वकल्पनायामनवस्थापातात्, देवतात्वव्याघातः स्वत.सामर्थ्याभावाद्देवतात्वव्याघात इत्यर्थः, समाधानमाहुः प्राणवतेत्यादिना, मुख्यप्राणसहितेनाग्न्या-

१.अवगम्यत इत्यपि पाठ. । २ पुनरुद्गमनमित्यपि पाठः । ३ पदमिदं लुप्तं क्वचन । ४ अत्रपदं लुप्तं क्वचन । ५ विप्लववादीत्यादिरपि पाठ. । ६ अधिष्ठातृत्वमित्यपि पाठः ।

विशेषेणेन्द्रियाधिष्ठात्र्योन्याश्च, तेषां प्रतिबन्धकासुरातिक्रमेण स्वर्गलोके गमनेच्छा बभूव, तत्र "यज्ञेनैव स्वर्ग" इति, तत्र "जनको ह वैदेह" इतिब्राह्मणे "केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इत्युद्गात्रर्त्विजा वायुना प्राणेने"ति उद्गात्रैवाक्रमणमिति सिद्धं, तत्रान्योन्योद्गातृत्ववरणे तथोद्गाने[1] "यो वाचि भोगस्तं[3] देवेभ्य" इत्याम्नातं, तदनु श्रमरूपपाप्मना[4] वेधानन्तरमप्रतिरूपं[5] वदतीति निरूपितं, सोपि दोषो देवानां प्राप्नोति, तत् श्रुतिविप्रतिषिद्धं, "न ह वै देवान् पापं गच्छती"ति, तदनु प्राण एवोद्गाता सिद्धः, तेनान्येषामपि पापसम्बन्धो[7] निवारितः, ततः परेर्ण "मृत्युमतिक्रान्तो दीप्यत" इति, अतो दीप्यमानस्यैवाधिष्ठातृत्वात् प्राणवतैवाधिष्ठानमिति सिद्धम् ॥ १५ ॥

## तस्य च नित्यत्वात् ॥ १६ ॥

अग्न्यादेः प्राणसम्बन्धो नित्य इति सर्वदाधिष्ठातृत्वं, प्राणस्य तत्सम्बन्धस्य चेति चकारार्थः, प्राणसहायेनैव यथोचितवर्णोद्गम इति लोके स्वामिभृत्यन्यायेन[9] जीवे भोगः फलिष्यति ॥ १६ ॥ ७ ॥

### इति द्वितीयाध्याये चतुर्थपादे सप्तमम्प्राणवतेत्यधिकरणम् ॥ ७ ॥

---

दिनाधिष्ठितं वागादीत्यर्थः, इममेवार्थं विवृण्वन्ति अयमर्थ इत्यादिना, अग्नीनामुक्तं उद्गीथब्राह्मणे 'के ते देवा' इत्यपेक्षायां' ते ह वाचमूचु'रित्यादिभिरग्निमवाक्यैर्वागाद्यधिष्ठातार देवा इति निश्चीयते, अन्याश्च अग्न्यतिरिक्ता अपीत्यर्थः, तेषां अग्न्यादिपूर्वोक्तदेवानां, प्रतिबन्धकेत्यादि, देवाश्चासुराश्चोत्पन्नास्तत्र देवानां स्वर्गगतिप्रतिबन्धका असुरास्तेषामतिक्रमेणेत्यर्थ., 'ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययामे'तीन्द्रियाधिष्ठातृदेवानां चेतनानामुक्तिः, तत्र कथमुद्गीथेनैवासुरातिक्रम इत्यपेक्षायां 'जनको ह वैदेह' इति वक्ष्यमाणब्राह्मणे, "अथ केनाक्रमेण यजमानः स्वर्गलोकमाक्रमत" इत्याश्वलायनेन प्रश्ने कृते याज्ञवल्क्येन' उद्गात्रर्त्विजा वायुना प्राणेने'तिकथनात् उद्गात्रैवाक्रमणमिति सिद्धं, तत्रान्योन्येत्यादि, अन्योन्यस्य वागादेरुद्गातृत्वेन वरणे, तथोद्गाने 'ते ह वाचमूचुः त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदन्ति तदात्मन' इत्यनेन द्विविधमुद्गानमुक्त्वा यजमानार्थं स्वात्मनः कल्याणाय चेति, तदन्विति, उद्गानारम्भानन्तरं, 'तदा तेसुरा विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् तत्तेसुरा ज्ञात्वा तथावेधं कृतवन्तः,' तत्र 'स पाप्मा को वे'त्याकाङ्क्षायां व्रतमीमांसायां श्रमरूपपाप्मनस्तैर्वेध. कृत इत्युक्तं, तत्र श्रमेण यद्विरूपं गानं कृतं तदेव देवानां दोषाधायकं द्वेधा जातं स्वेषामेव यजमानत्वर्त्विग्त्वाभ्यां, तच्च श्रुत्या निषेधितं 'न ह वै देवान् पापं गच्छती'ति, तदनु इन्द्रियाधिष्ठातृदेवानां पापसम्बन्धानन्तर, 'अथ हेममासिन्यं प्राणमूचु'रित्यादिना मुख्यप्राण एक एवोद्गाता सिद्धः, 'तं यदा पाप्मनाविध्यंस्तदा यथाश्मानं प्राप्य लोष्टो विध्वस्तो भवति तथा सर्वेप्यसुरा नष्टा' इति तेन प्राणकृतासुरनाशनेन, अन्येषामपि पापसम्बन्धो निवारित इति ऋत्विग्यजमानोभयोत्पन्नो यो दोष उभयोरपि ऋत्विक्त्वयजमानत्वयोः सत्त्वादुभयोर्दोषनिरसनानन्तर श्रुतिविप्रतिषेधोपि निरस्तः, दीप्यते प्राणो दीप्यत इत्यर्थः, प्राणवतैव प्राणविशिष्टाग्निप्रभृतिदेवैरेवेन्द्रियाणामधिष्ठानमिति सिद्धमित्यर्थः ॥ १५ ॥

तस्य च नित्यत्वात् ॥ १६ ॥ तस्य प्राणाग्न्यादिदेवस्वरूपस्य तेषां सम्बन्धस्य चेत्यर्थः, सर्वदा सर्वकल्पेषु, चकारार्थः सौत्रचकारार्थ., वर्णोद्गमः गुणत्रयकार्यरूप इन्द्रियाणां कार्यात्मेत्यर्थ., नन्वत्र प्राणशब्देन प्राणी जीवो व्याख्येयः उचितं चैतत् जीवभोगप्रकारबोधनार्थमेव तत्परिकरविचारस्य प्रकृतत्वादत्र च जीवस्याधिष्ठातृत्वेवि-

---

१ तथोद्गातृप्राण इत्यपि पाठ । २ वागादिभोग इत्यपि पाठः । ३ स इत्यपि पाठ । ४ श्रमरूपयात्मनेतिपाठस्त्वशुद्धः । ५ वेद्यानन्तरमित्यप्यशुद्ध. पाठः । ६ श्रमरूपपाप्मना वेधदानं तदनन्तरमित्यपि पाठ· । ७ पापसम्बन्धोपीतिपाठोपि । ८ तस्य चेतिसूत्रेणेत्यधिकम् । ९ स्वामिभृत्यभावेनेत्यपि पाठः ।

## तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ ( २. ४. ८. )

इदमत्र[1] विचार्यते, इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात्तन्नामव्यपदेशाच्च प्राणवृत्तिरूपाणीन्द्रियाणि तत्त्वान्तराणि वेतिसंशयः, तत्त्वान्तराण्येवेतिसिद्धान्तः, तानि इन्द्रियाणि तत्त्वान्तराणि, कुतः ? तद्व्यपदेशात्, इन्द्रियशब्देन व्यपदेशात्, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"ति भिन्नशब्दवाच्यानां क्वचिदेकशब्दवाच्यत्वेपि नैकत्वं, आसन्येपि तर्हि भेदः स्यादित्यत आह अन्यत्र श्रेष्ठात्, तस्य ते यौगिकाः शब्दा इति ॥ १७ ॥

## भेदश्रुतेः ॥ १८ ॥

यत्रापि प्राणशब्दप्रयोगः तत्रापि भेदेन श्रूयते "तमुत्क्रामन्तं प्राणोनूत्क्रामती[2]"ति[3] "प्राणमनूत्क्रामन्तं[4] सर्वे प्राणा अनूत्क्रामन्ती[5]"ति ॥ १८ ॥

## वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यञ्च प्राणस्य चेन्द्रियाणाञ्च, सुप्तेषु वागादिषु प्राणो जागर्ति, स्वामिसेवकवच्चानेकं वैलक्षण्यम् ॥ १९ ॥ ८ ॥

### इति द्वितीयाध्याये चतुर्थपादेष्टममिन्द्रियाणि तद्व्यपदेशादित्यधिकरणम् ॥ ८ ॥

---

चारिते जीवस्य भोगासिद्धौ विचारवैयर्थ्यापात इत्याशङ्कायामाहुः लोक इत्यादि, तथा चेन्द्रियाणां करणतया स्वस्वकार्यसम्पादने प्राणतत्तदधिष्ठातृदेवतानामुपयोगो न तु भोगे तत्र प्राणदेवतेन्द्रियसर्वाधिष्ठातुर्जीवस्यैव सर्वस्वामित्वेन भोक्तृत्वात् ॥ १६ ॥ ७ ॥

इति द्वितीयचतुर्थे सप्तमाधिकरणम् ॥ ७ ॥

तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ इदं वक्ष्यमाणं, तद्व्यपदेशात् प्राणपदवाच्यत्वदर्शनात्, वृत्तिरूपाणि व्यापाररूपाणीत्यर्थः, तत्त्वान्तराणि प्राणभिन्नानि, तद्व्यपदेशात् अग्रिमाथर्वणश्रुतौ प्राणभिन्नत्वेनेन्द्रियाणामुपादानादित्यर्थः, भिन्नशब्दवाच्यानां इन्द्रियाणां, क्वचित् श्रुतिविशेषे, नैकत्वं न प्राणाभेदः, ननु वाचकशब्दभेदस्यार्थभेदसाधकतायां प्राणआसन्यइतिशब्दभेदसत्त्वादासन्यप्राणपदार्थयोरपि भेदः स्यादत आहुः आसन्य इत्यादि, श्रेष्ठात्प्राणादन्यत्रैव शब्दभेदोर्थभेदसाधको न तु प्राणवाचकशब्दभेदोप्यर्थभेदक इत्यर्थः, ते प्राणापानादिशब्दाः, यौगिकाः हृदयादियोगेन, तस्य एकस्यैव प्राणस्य बोधकाः शयनपठनादियोगेन यथा पाचकादिशब्दा एकार्थबोधकास्तथेत्यर्थः ॥ १७ ॥

भेदश्रुतेः ॥ १८ ॥ उक्तेर्थे प्रमाणमुपन्यस्यन्ति, यत्रापि श्रुतिविशेषे, प्राणशब्दप्रयोगः इन्द्रियेषु प्राणशब्दप्रयोगः, तत्रापि तच्छ्रुतावपि, भेदेन प्राणेन्द्रिययोर्भेदेन, तं जीवं, प्राणः आसन्यः, सर्वे प्राणाः इन्द्रियाणि ॥ १८ ॥

वैलक्षण्याच्च ॥ १९ ॥ स्वरूपभेदकमुक्त्वा धर्मरूपं भेदकं वदतीत्याहुः वैलक्षण्यमित्यादिना, इन्द्रियाणां स्वापे प्राणजागरणोक्तेः तत्सिद्धौ द्वयोर्भेदसिद्धिः, स्वामिसेवकवत्स्थितिश्च प्राणवतेत्यधिकरण एव सिद्धेत्यर्थः ॥ १९ ॥ ८ ॥

इति द्वितीयचतुर्थेष्टमाधिकरणम् ॥ ८ ॥

---

१ इदमपीतिपाठोपि । २ प्राणोनुत्क्रमतीत्यपि पाठः । ३ इतिपदं नास्ति क्वचन । ४ प्राणमनुत्क्रामन्तमित्यपि पाठः । ५ अनुक्रामन्तीत्यपि पाठः ।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ ( २. ४. ९. )

भूतभौतिकसृष्टिः परमेश्वरादेवेति निर्णीय नामरूपव्याकरणमपि परमेश्वरादेवेतिनिश्चयार्थमधिकरणारम्भः, लोके नामरूपकरणं कुलालादिजीवेषु प्रसिद्धमिति अलौकिकेपि स्थावरजङ्गमे मयूरादिसंज्ञां मूर्तिश्च[1] जीवादेव हिरण्यगर्भादेर्भविष्यतीति वह्न्यादिदेवानां जीवरूपाणामेव वागादिरूपेणानुप्रवेशात् तत्साहचर्येण नामरूपयोरपि जीव एव कर्ता भविष्यतीत्याशङ्कां निराकरोति तुशब्दः, संज्ञामूर्त्योः क्लृप्तिः[2] नामरूपयोर्निर्माणं त्रिवृत्कुर्वतः यस्त्रिवृत्करोति तस्मात्, "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति "तासां त्रिवृतं त्रिवृतमेकैकं करवाणी"ति त्रिवृत्कर्ता परमेश्वरः, स एव नामरूपयोरपि कर्ता, कुतः? उपदेशात्, उप सामीप्ये[3] एकवाक्ये उभयकरणस्य प्रतिज्ञानात्, जीवस्य तु त्रिवृत्करणानन्तरं शरीरसम्बन्धे कर्तृत्वात्, तस्मात् नामरूपप्रपञ्चस्य भगवानेव कर्तेति सिद्धम् ॥ २० ॥ ९ ॥

॥ इति द्वितीयाध्याये चतुर्थपादे नवमं संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणम् ॥९॥

इदमिदानीं विचार्यते, "अन्नमशितत्रेधा विधीयते, तस्य यः[4] स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योणिष्ठस्तन्मनः आपः पीतास्त्रेधा विधीयन्ते यः स्थविष्ठो धातुस्तन्मूत्रं यो मध्यमस्तल्लोहितं योणिष्ठः स प्राणः तेजोशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः सा मज्जा योणिष्ठः सा वाक्, अन्नमयं हि सौम्य मनः आपोमयः प्राणस्तेजोमयी वागि"ति, तत्र संशयः वाक्प्राणमनांसि किं भौतिकानि आहोस्वित् स्वतन्त्राणीति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"तिश्रुतिविप्रतिषेधात् संशयः, त्रिवृत्करणप्रसङ्गेनोदितामाशङ्कां निराकरोति, तत्र पूर्वपक्षमाह,

---

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥१८॥ भूतभौतिकेत्यादि, भूतान्याकाशादीनि, भौतिकानि पुरुषान्नादीनि, नामरूपव्याकरणं नामव्याकरणं वाक्साध्यं इन्द्रस्य बलरूपेण क्रियाप्रवेशाद्रूपव्याकरणं, संशयबीजमाहुः लोक इति, तत्साहचर्येण अग्न्यादिजीवसाहचर्येण, आशङ्कां पूर्वपक्षं, सिद्धान्तमाहुः संज्ञेत्यादिना, निर्माणमिति, तथा च त्रिवृत्करणकाल एव नामरूपयोर्व्याकरणं हिरण्यगर्भसृष्टेः पूर्वं जीवस्य शरीरसम्बन्धात् पूर्वं चेति बोध्यं, देवता परमात्मा, ऐक्षत विचारितवान्, तिस्रो देवताः तेजोबन्नरूपाः, सामीप्ये त्रिवृत्करणसमीपे, उभयकरणस्य नामरूपकरणस्य, शरीरसम्बन्धे सतीत्यर्थः, तस्मात् जीवशरीरसम्बन्धात् पूर्वमेव नामरूपव्याकरणात् ॥ २० ॥ ९ ॥

इति द्वितीयचतुर्थे नवमाधिकरणम् ॥ ९ ॥

मांसादिभौमं यथाशब्दमितरयोश्च ॥ २१ ॥ अधिकरणप्रयोजनमाहुः इदमित्यादि, इदमिति वक्ष्यमाणवाक्यं, संशयबीजमाहुः त्रिवृदित्यादि, उक्तश्रुतिविप्रतिषेधजनितामाशङ्कां त्रिवृत्करणप्रसङ्गेनेदानीं निराकरोतीत्यर्थः, तत्र सूत्रे, ननु सूत्रे मनःप्राणवाचाम्भौतिकत्वबोधकपदाभावात् कथमेतत्सूत्रस्यैतद्विषयप्रतिपादकत्वमित्याकाङ्-

---

१ संज्ञा मूर्तीश्चेत्यपि पाठः । २ समस्तं पदं क्वचन । ३ समीप इत्यपि पाठ. । ४ तास्विल्यधिकं क्वचन ।

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ ( २. ४. १०. )

**मांसादि भौमं** पुरीषमांसादि तेजोबन्नप्रकृतिकं, कुतः? **यथाशब्दं** "अन्नमशित"मित्यादिश्रुतितो निःसन्दिग्धं प्रतिपादनात्, किमतो यद्येवं? तदाह **इतरयोश्च,** वाचि तुल्यत्वान्न सन्देहः, इतरयोर्मनःप्राणयोरपि भौतिकत्वं यथाशब्दं, उद्गमश्रुतिस्तु स्तुतित्वेनानुवादपरा भविष्यति, उपपादकश्रुतिबाधात्, तस्मात् भौतिकान्येव मनःप्रभृतीनीत्येवं प्राप्ते उच्यते ॥२१॥

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

अन्नादिभिर्विशेष्यते मनःप्रभृति सम्यक्कार्यक्षमं भवति, तथा च[1] दर्शनादुपपादनाच्च[2], अतो **वैशेष्यादेव** हेतोरन्नमयत्वादिवादः, ननु कथमेतदवगम्यते? वैशेष्याद्गौणो वाद इत्युच्यते, अथ"त्मनेऽन्नाद्यमागायदि"त्यत्र[3] प्राण एव सर्वस्यान्नस्यात्ता निर्दिष्टः, स कथं तत्परिणामकार्यं स्यात्? वागादयश्च तत्रान्नार्थमनुप्रविष्टाः, सृष्टौ प्रथमतो भिन्नतया निर्देशात्, अतो

---

क्षायां मांसादीत्यादिपदेन तत्सङ्ग्रहादेतस्य विषयत्वावगम इत्याशयेन व्याकुर्वन्ति मांसादीत्यादि, अत्र 'तेजोमयी वाक्' ऐतरेये 'अग्निर्वाग्भूत्वे'तिश्रुतिद्वयेपि वाचि तेजोमयत्वस्य तुल्यत्वान्न सन्देहः इतरयोः, मनःप्राणयोस्तु ऐतरेये 'वायुः प्राणो भूत्वेति चन्द्रमा मनो भूत्वे'त्यन्यथाश्रावणेपि भौतिकत्वं छान्दोग्योक्तं शब्दमनतिक्रम्यैव मन्तव्यं, न चोद्गमश्रुतिविरोधान्न भौतिकत्वमिति शङ्क्यं, यतः सा मुण्डकेक्षरात् पर स्तोतुं प्रवृत्ता न तु वागादीनां स्वरूपं वक्तुं, अत. स्तुतित्वेनैवैतदनुवादपरा भविष्यति, एतदनुवादेनात्र ब्रह्मण. प्रयोजकत्वबोधनेप्युपपत्तेः, यथाशब्दं श्रुत्युक्तार्थानतिक्रमेण, भौतिकत्वं स्वीकार्यमित्यर्थ., उद्गमश्रुतिः 'एतस्माज्जायते प्राण' इतिश्रुतिः, अनुवादपरा मुण्डकोक्तार्थानुवादपरा, उपपादकश्रुतिः 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातु'रिति ॥ २१ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥२२॥ सिद्धान्तसूत्रं व्याकुर्वन्ति अन्नादिभिरित्यादि, तथा च पोषकतासम्बन्धेनान्नविशिष्ट मनो भवति अब्विशिष्टः प्राणो भवति अग्निविशिष्टा वाग्भवति एवम्रीत्या तेषां स्वस्वकार्यक्षमतैवोपपादिता श्रुतौ न तु 'एतस्माज्जायते प्राण' इतिश्रुतिमपोह्य भौतिकत्व मनःप्रभृतीनामुपपादितमित्यर्थ., तथा च दर्शनात् यादृशमन्नमद्यते तादृशं मनो भवति इति लोके दर्शनात्, उपपादनात् वाक्प्राणस्थलेपि समानन्यायेन पोषणोपपादनं बोध्यं, शङ्कते नन्वित्यादि, वैशेष्यात् तेजोबन्नपोषणाद्धेतो·, गौणः पोषणरूपगुणकृत , तद्वादः मन.प्राणवाक्षु अन्नाप्तेजोवाद·, समाधत्ते अथेत्यादि, श्रुतिस्तूद्गीथब्राह्मणस्था अथात्मनेन्नाद्यमागायद्यत्किञ्चान्नमद्यतेनेनैव तदद्यते इह प्रतितिष्ठती'ति, अर्थस्तु यथा वागादिभिरात्मार्थमागानं कृत तथा मुख्यप्राणोपि त्रिषु पवमानेषु देवार्थं गानं कृत्वा अथानन्तरमवशिष्टेषु नवसु स्तोत्रेष्वात्मने आत्मार्थं अन्नाद्यं अन्नं तदाद्य च आगायत्, तस्येदं निदर्शनं यत्किञ्चान्नं लोके प्राणिभिरद्यते तदन्नमनेनैव प्राणेनाद्यते तस्मात् स्वार्थमेवैतदागानमिति, ननु कथमत्र निर्णयः प्राणेनैवाद्यत इति वागादीनामप्यन्नकृतोपकारदर्शनादित्यत आहुः इह प्रतितिष्ठतीति, अन्नमिह प्राण एव प्रतिष्ठितमतःप्राणद्वारक एव तेषामुपकार इति, अन्नमत्रादनीयं, तथा च योदनीयमात्रस्यात्ता स्यात् स कथमदनीयानामपां कार्यं स्यात्? किञ्चैतरेये वागादयोन्नार्थं मुखादिस्थानेषु प्रविष्टा उक्ताः सृष्टौ प्रथमतो भिन्नतया च निर्दिष्टा., अतः कथमदनीयपरिणामभूता. स्युः? तस्मात् तत्त्वान्तराण्येवेत्याहुर्वागादयश्चेति, तत्र मुखादिस्थानेषु, भिन्नतया भौतिकभिन्नतया,

---

१ चकारो नास्ति क्वचन । २ उपादानाच्चेतिपाठोपि । ३ अथात्मनोन्नाद्यमित्यादिरपि पाठः ।

न भौतिकानि मनःप्रभृतीनि किन्तु तत्त्वान्तराणीति सिद्धं, तद्वाद इतिवीप्सा अध्यायसमाप्तिसूचिका ॥ २२ ॥ १० ॥

॥ इति द्वितीयाध्याये चतुर्थपादे दशमम्मांसादिभौममित्यधिकरणम् ॥ १० ॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

निर्देशात् 'एतस्माज्जायते प्राण' इत्यादौ निर्देशात्, अतः भिन्नतया निर्देशाद्धेतोः, मनःप्रभृतीनि मनःप्राणवाच', तत्त्वान्तराणि भौतिकभिन्नानि आधिदैविकसम्बद्धान्याध्यात्मिकानि वा, वीप्सा तद्वादस्तद्वाद इतिवीप्सा ॥ २२ ॥ १० ॥

इति द्वितीयचतुर्थे दशमाधिकरणम् ॥ १० ॥

## इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते श्रीमद्ब्रह्मसूत्राणुभाष्यपदप्रदीपे द्वितीयाध्यायस्य चतुर्थः पादः ॥



# ॥ अथ तृतीयाध्यायस्य प्रथमः पादः ॥

---

मर्वोपनिषदां सिद्धो[1] ह्यविरोधे समन्वयः ।
कथं बोधकता तासां स[2] तृतीये विचार्यते ॥ १ ॥
एकं वाक्यं प्रकरणं शाखाः सर्वाः सहैव वा ।
एकां विद्यामनेकां वा जनयन्तीति चिन्त्यते ॥ २ ॥
ससाधने हि पुरुषे जन्मना कर्मणा शुचौ ।
केवले वा यथा योगे प्रथमं तद् विचार्यते ॥ ३ ॥
विचारपूर्वकं तस्य ब्रह्मभावाप्तियोग्यता ।
अधिकारे ततः सिद्धे विषयावधृतिस्ततः ॥ ४ ॥
अन्तरङ्गविचारेण गुणानामुपसंहृतिः ।
[3]बहिरङ्गविचारेण कर्मणामिति सा द्विधा ॥ ५ ॥

तस्माद[4]धिकारिजन्मनिर्धारः, तदनु तस्य ब्रह्मभावयोग्यता, ततो गुणोपसंहारः, ततोऽङ्ग-

---

तदन्तरप्रतिपत्तौ रंहति परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ अथ तृतीयाध्यायार्थं विवरिषवः सङ्गतिं प्रदर्शयितुं पूर्वाध्यायार्थमाहु सर्वेत्यादि, सिद्धः प्रथमाध्याये समन्वयः सिद्धः, समन्वयसिद्ध्या स्मृतीनां श्रुतीनां च परस्परविरोधस्फूर्तौ जातायामुपोद्घातसङ्गत्या विरोधपरिहारकद्वितीयाध्यायेन विरोधे परिहृते सति सर्वोपनिषदां सम्यगन्वयः सिद्धः, कथमिति उपनिषदां ब्रह्मबोधने प्रकारजिज्ञासोक्ता, तासां पूर्वोक्तसमन्वयानामुपनिषदां, तृतीये तृतीयाध्याये, एकं वाक्यमिति, एकं वाक्यमुपनिषद्गतमुपासना बोधयित्वा ब्रह्मविद्यां जनयत्युपनिषद्गतं प्रकरणं वोपासनां बोधयित्वा ब्रह्मविद्यां जनयति तादृशैकवाक्यप्रकरणवत्यः सर्वाः शाखा वा सहैव ब्रह्मविद्यां जनयन्तीति ब्रह्मविद्याजनने प्रकारस्तृतीयाध्यायेन चिन्त्यत इत्यर्थ. ससाधने उपनिषदर्थश्रवणमननिदिध्यासनसामग्रीसहिते, पुरुषे इति स्त्रीव्यावृत्ति., जन्मना द्विजोत्पन्नत्वलक्षणेन, कर्मणा वर्णाश्रमविहितनिःकामकर्मणा, शुचौ शुद्धान्तःकरणे विद्यां जनयन्त्युत केवलमानसविचारमात्रेण प्रतिबन्धनिरासाद्योगतुल्यतया ब्रह्मविद्यां जनयन्तीति प्रथमं प्रथमे पादे, द्वितीयचरणविषयमाहु. विचारेत्यादि, विचारपूर्वकं जीवस्वरूपविचारपूर्वकं, तस्य अधिकारिणः, योग्यता स्वरूपयोग्यता, अधिकारे सिद्धे स्वरूपयोग्यतालक्षणाधिकारे सिद्धे, ततः तदनन्तरं, विषयावधृतिः विशेषाकारेण ब्रह्मप्रकाराणां निश्चयः, तृतीयचरणविषयमाहुः ततः अन्तरङ्गेत्यादिना, अन्तरङ्गविचारेण उपासनास्वावश्यकधर्मविचारेणेत्यर्थः, गुणानामुपसंहृतिर्नियमनं, चतुर्थचरणविषयमाहुस्ततस्तुरीय इत्यादिना, बहिरङ्गा इतरतुल्यतयानावश्यका ये धर्मास्तद्विचारेणेत्यर्थ., कर्मणां पूर्वकाण्डोक्तकर्मणां, सा उपसंहृति., द्विधा अन्तरङ्गबहिरङ्गभेदेन द्विविधा विचार्यते इत्यनेन सम्बन्धः, तथा चोक्तस्वरूपयोग्यता फलोन्मुखाधिकारिता चेति द्विविधयोग्यतासिद्धिसत्त्वे ब्रह्मस्वरूपनिश्चये सति तद्विद्यायां तद्गुणोपसंहारेण कर्मोपसंहारेण च ब्रह्मजनन उपनिषदां प्रकारविशेष एवात्राध्याये चिन्त्यत इति फलितं, एवं चरणचतुष्टयार्थमुक्त्वोपसंहरन्ति तस्मादित्यादि, यस्मात्पूर्वोक्तरीत्या पादार्थकरण एवोपनिषदां विद्याजनकता तस्माद्धेतोरधिकारिजन्मनिर्धारः प्रथमचरणार्थो न तु वैराग्यार्थं संसारगतिप्रदर्शनं प्रथमचरणार्थ., द्वितीयचरणोपि जीवावस्थाप्रदर्शनब्रह्मभावयोग्यत्वार्थो नतु वैराग्यमात्रार्थ., गुणोपसंहारस्तृतीये, अङ्ग-

---

१. सिद्धये इति पाठ कपुस्तके प्रामादिक. । २ सा इति पाठो बपुस्तके, प्रकाशादिषु तु स इत्येव पाठ । ३ 'ततस्तुरीय' इत्यादिप्रदीपोक्तप्रतीकस्य मूलं तु चतुर्थकारिकान्तस्थस्य तत पदस्यैवावृत्तिरिति ज्ञेयम् । ४ अधिकारिणो जन्मनिर्धार इतिपाठः सर्वेष्वादर्शेषु ।

विचार इति[1], तत्र प्रथमे पादे जीवस्य ब्रह्मज्ञानौपयिकं जन्म विचार्यते, तत्र पूर्वजन्मनि निःकामयज्ञकर्तुर्ज्ञानरहितस्य मरणे ज्ञानाभावेन यज्ञाभिव्यक्त्यभावाद्भूतसंस्कारक एव यज्ञो जात इति निःकामत्वाच्च तदधिकारिदेवाधीनान्येव[2] भूतानीति ते[3] देवास्तत्र तत्र हुत्वा तस्य शरीरं सम्पादयन्तीति "पञ्चम्याहुतावापः पुरुषवचसो भवन्ति" ( छान्दो. ७.९.१. ) इतिश्रुतिः, तत्र जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशङ्क्य तेषामपि होमं वक्तुमिदमधिकरणमारभते[4], न च पञ्चाहुतयो धूममार्ग एव, तत्र गमनागमनयोर्बहुविशेषश्रवणात्[5], "तद्य इत्थं विदुर्ये चेमे[6]ऽरण्ये[7] श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" (छान्दो.७.१०.१.) इति तज्ज्ञानवतोपि यत्रार्चिः—प्राप्तिस्तत्र तथा देवहुतानां कथं सा न स्यात् ? ज्ञानार्थमेव च[8] तथोत्पत्तेः, पुनरावृत्तिः परं तुल्या, अथवा निःकाम एव धूमादिमार्गः[9], "योगी प्राप्य निवर्तते" ( श्रीमद्भग. ८.२५. ) इतिस्मरणाद्भोगार्थमेव धूमादिलोकाः, निःपत्तिस्तु पञ्चाग्नावेव, अन्ने प्रविष्टानामन्येषामपि रेतोद्वारा योनित उत्पत्तिरिति कपूयचरणवर्णनं ( छान्दो. ७.१०.७. ), "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" ( श्रीमद्भग. ९.२१. ) इति कामनायां भिन्न एव प्रकारः, पृथगुपदेशात्, तस्माद्योग्यशरीरनिःपत्तये स्वयमेव गच्छति भूतसहितः श्रद्धाहोमानन्तरं सोमभावे[10] वा सम्बन्ध इतिसंशयः, भिन्नपक्षे योनौ वेति, तत्र श्रौतेऽर्थे श्रौतन्यायेनैव

---

**विचार**श्चतुर्थे, एवमुपसंहृत्य प्रथमपादार्थं वक्तुमुपक्रमन्ते **तत्रे**त्यादि, तत्र तेषामर्थानां मध्ये, **तदधिकारी** ज्ञानाधिकारी, **तत्र तत्र** उपनिषदुक्तालोकद्युलोकाद्ग्यादौ, **तस्य** नि कामकर्तु, **आप** इत्यादि, तथा चापां स्थाने वाचो होम इत्यर्थ, श्रुतितात्पर्यमुक्त्वाधिकरणतात्पर्यमाहु **तत्र जीवे**त्यादि, **धूममार्ग एवे**त्येवकारेणार्चिरादिमार्गे पुनरावृत्तिसाधकपञ्चाहुतीनां निषेध इति नेत्यन्वय, कुत इत्यपेक्षायां तत्र हेतुमाहु **तत्रे**त्यादिना, **तत्र** धूमार्चिर्मार्गयो., **गमनागमनयोः** अर्चिरादिमार्गगमने धूममार्गीयागमने चेत्यर्थ, **बहुविशेषश्रवणात्** बहुतारतम्यश्रवणादित्यर्थ., तथा च पञ्चाग्निक्रमेण नि पत्तिर्मुमुक्षूणामप्यपेक्षितैवेत्याहुतिक्रमोक्तिर्न विरुध्यत इत्यर्थः, ननु ब्रह्मविज्ञानवतामेवार्चिरादिमार्गगमन 'तद्य इत्थ विदु'रिति विद्यावतामेव गमनकथनान्न तु होमद्वारापि गमनमत आहुस्तद्य इत्यादि, **तज्ज्ञानवतः** श्रद्धातप क्रमेण विद्यावत, **सा** ऊर्ध्वगतिः, **तथोत्पत्तेः** देवहुतानां पञ्चाग्निविद्यान्यायेन देहोत्पत्ते, **पुनरावृत्तिरिति**, आहुतिक्रमेण अर्चिरादिमार्गगन्तुर्ब्रह्मभावानि पत्तौ पुरुषभावदशायां पुनरावृत्तिरपि सम्भावितैवेत्यर्थ., प्रकारान्तरेणापि ज्ञानिदेहसम्पादकता होमस्योच्यते **अथवे**त्यादिना, **निःकामयज्ञकर्तुरपि धूमादिमार्गो** ब्रह्मगतिप्रतिबन्धकप्रारब्धभोगार्थमेव **धूमादिलोक**भोगः, त एव 'रमणीयचरणा' श्रुतावुक्ता, **निःपत्तिः** फलप्राप्ति, **पञ्चाग्नावेव** पञ्चाग्निविद्यायामुक्तैव, नन्वेवं सति धूममार्गे **कपूयचरणो**क्तिविरोध इत्यत आहु **अन्न** इत्यादि, तथा च दुष्कर्मादिनान्ने **प्रविष्टानां** क्षुद्रसकामकर्मिणाम**न्येषां** दुःकर्मिणां मैथुनादिनोत्पत्तिर**पि** भवतीति प्रासङ्गिकमेतदुक्त न तु तदेव मुख्यं फलमित्यर्थ, **पृथगुपदेशा**दिति बृहदारण्यके **भिन्नप्रकारे**णैवमेवानुपरिवर्तत इतिरीत्या पृथगुपदेशात्, तथा च सकामधूममार्गप्रकारः पृथगेवोपदिष्ट इति न पूर्वोक्तप्रकारे बाधक इतिभाव., एवमधिकरणप्रयोजनमुक्त्वाधिकरणाङ्गसंशयमाहुः **तस्मादि**त्यादि, यस्माद्योग्य**शरीरनिःप**त्त्यर्थमेव लोकान्तरगमनं तस्मादित्यर्थः, **स्वयमेव** नि.कामकर्ता जीव एव, **सम्बन्ध** इति भूतसम्बन्ध, तथा च पूर्वं लोकान्तरगमनदशायां **भूतसहितो गच्छ**त्युत पूर्वं जीवमात्रस्य गमनं **सोमभाव**दशायां भूतानां **सम्बन्ध इतिसंशयः**, संशयबीज च 'अङ्गुष्ठमात्र पुरुष निश्चकर्षे'ति सभूताक्रमश्रवणं, **भिन्नपक्ष** इत्यादि, पञ्चाहुतिभ्यो धूमादिमार्गो भिन्नो यत्र सकामपुरुषं मन एव लोकान्तरं नयति पुनरानयति च 'एतल्लोकाय कर्मण' इति भिन्नपक्ष इत्यर्थ., **योनौ वे**ति, तथा च सोमभावदशायां भूतसम्बन्धो योनिसम्बन्धदशायां वा भूतसम्बन्धो न तु

---

१ इतिपदं लुप्तं गोपुस्तके। २ दैवाधीनान्येवेतिपाठ. पुंपुस्तके । ३ ते इतिपद लुप्तं कपुपुस्तकयो प्रकाशेपि। ४. आरभन्त इतिपाठ पुंपुस्तके । ५ गमनयोरितिपाठ प्रमादज पुंपुस्तके। ६ वेमे इतिपाठ पुंपुस्तके। ७ अरण्ये इतिपद लुप्तं बपुस्तके । ८. चरहितः पाठो दाकपुस्तकयो । ९. धूममार्ग इतिपाठो कबपुस्तकयो । १० सोमाभाव इति कपुस्तके।

निर्णयस्योचितत्वादाहुतावपाश्च गौणत्वापत्तेः संस्कृत्य भूतानामुपस्थापकत्वाभावाच्छरीरवियोगे देवानाश्च तावद्विलम्बे कारणाभावाच्च श्रद्धारूपा आप एव हूयन्तेतो न तैः परिष्वक्तो गच्छतीत्येवं प्राप्त उच्यते,

## तदन्तरप्रतिपत्तौ रंहति [३]परिष्वक्तः प्रश्ननिरूपणाभ्याम्॥ ( ३.१.१. )

तस्य जीवस्य यज्ञादिकर्तुरन्तरप्रतिपत्तौ अन्तरे मध्ये मुख्यप्रतिपत्तेर्मोक्षलक्षणाया अर्वाग् योग्यशरीरनिःपत्त्यर्थं, न हि वस्तुतो यज्ञानामिदं फलं भवति, अतो मुख्ये विलम्बात् प्रतिपत्तिरेषा, तस्य मुख्यफलस्य वा अन्तरे या प्रतिपत्तिस्तदर्थं [४]वापेक्षते[५], अतः सम्यगेव [६]च तत्कारणभूतैः सम्परिष्वक्त एव रंहति, [७]मरणानन्तरमेव कर्मसमाप्तेस्सम्यग्भूतानि तदैव संस्कृतानि, [८]प्रतिदिनसंस्कारार्थश्च [९]नैकंट्यसम्परिष्वक्तः, पूर्वं [१०]शरीरेण व्यवधानात्, शरीरदाहे वा तद्गतानि भूतसूक्ष्माणि सम्यक् तमेवासक्तानि, "तं विद्याकर्मणी समन्वारभेते पूर्व[११]प्रज्ञा च" ( बृह. ६.४.२. ) इति, जीवपक्षे ज्ञानकर्म[१२]णो हि स्वरूपभूता आपः, तत्र हेतुः प्रश्ननिरूपणाभ्याम्, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छान्दो. ७.३.३.)इतिप्रश्नः,

---

लोकान्तररहणदशायामित्यर्थ इति संशयपोषण, पूर्वपक्षमाहु तत्र श्रौत इत्यादि, अपाञ्च गौणत्वापत्तेः सर्वभूतसहितस्य गमनेपाञ्च होमे सर्वभूतसाहित्येपाङ्गौणत्वापत्तेरित्यर्थ., श्रौतन्यायश्च जीवमात्रस्य गमनं न तु भूतसाहित्यं गमन इति, उपस्थापकत्वाभावात् संस्कृत्य भूताना जीवेन सह गमनस्यात्र प्रकरणे वाक्यानां बोधकत्वाभावात्, देवानां यज्ञाधिष्ठातृदेवानां, तावद्विलम्बे पूर्वदेववियोगे सत्यग्रिमफलदाने कर्तव्ये योग्यदेहनिःपत्तिकृतविलम्ब इत्यर्थः, आप एव हूयन्त इति क्रियासङ्क्तैवकारेणापोपि हूयन्त इत्यर्थ., तथा च पूर्वदेहस्याग्नौ प्रतिपत्तिदशायां सर्वाण्येव भूतानि हूयन्त इति न तै सह गच्छतीति पूर्वः पक्ष , सिद्धान्तमाहु. तदन्तरप्रतिपत्तावित्यादिना, मध्ये यज्ञमुख्यफलमोक्षयोर्मध्ये, इदं योग्यदेहप्राप्तिरूप, प्रतिपत्तिरेषा मुख्यफलसाधनसम्पत्तिरूपा योग्यदेहनिःपत्तिरूपा अन्तरे या प्रतिपत्तिः साधनसम्पत्ति , अपेक्षते योग्यदेहोपेक्षते, पूर्वव्याख्याने तत्पदेन यज्ञकर्ता व्याख्यातो जीव· पक्षान्तरे सूत्रस्थतत्पदेन ज्योतिरादिमार्गप्राप्यं मुख्यं फलं व्याख्यायते, तस्य मुख्यफलस्य वेति, अन्तरे मध्ये, प्रतिपत्तिः साधनसम्पत्तिः, तत्कारणभूतैः ज्ञानोपयोगि— देहकारणभूतै· संस्कृतसूक्ष्मभूतैरित्यर्थः, कर्मसमाप्तेः मृताग्निहोत्ररूपकर्मसमाप्ते·, तदैव कर्मकाल एव, प्रतिदिनसंस्कारार्थं ज्ञानोपयोगिदेहे प्रतिदिनं ज्ञानयोग्यतासिद्ध्यर्थं, नैकट्यं संस्कृतभूतानां देहनैकट्यं, सूक्ष्मभूतसम्परिष्वक्तस्यैव जीवस्य लोकान्तरगमने प्रकारान्तर वदन्ति पूर्वमित्यादिना, पूर्वं योग्यदेहप्राप्तेः पूर्वं, व्यवधानात् भूतसूक्ष्माणा पूर्वदेहेन व्यवधानात्, दाहे वेति पूर्वदेहव्यवधाने निमित्तप्रदर्शन, तमेव एवविध जीवमेव, आसक्तानि प्रयान्तीत्यर्थ., तं विद्येत्यादि, तं जीव, विद्याकर्मणी तत्त्वज्ञानकृतकर्मणी, समन्वारभेते सह गच्छत. अग्रिमदेहार्थं, पूर्वप्रज्ञा 'यं यं वापि स्मरन्नि'त्याद्युक्ता स्मृतिरित्यर्थ·, जीवपक्षे जीवस्य गमनाङ्गीकारमते, ज्ञानकर्मणामासञ्जनमावश्यकं कर्मणां द्रव्यसूक्ष्मपृथिव्यादिभूतरूपत्वात्, स्वरूपभूता आप इति पृथिव्यादिसर्वरूपत्वेप्यपां मुख्यत्वात्स्वरूपोक्तिरित्यर्थ·, तत्र सर्वभूताना जीवे साहित्ये हेतुः प्रश्ननिरूपणाभ्यामिति छान्दोग्ये प्रश्ननिरूपणाभ्यामित्यर्थ.. पञ्चम्यामाहुताविति, तथा च सूर्यचन्द्रवृष्टिपृथिव्यन्नादिपञ्चस्थानेषु सपरि-

---

१. चरहित पाठः कबप्रकाशेषु । २ संस्कृतभूतानामित्येव पाठ सर्वेष्वादर्शेषु । ३ सम्परिष्वक्त इत्येव पाठ. सर्वेष्वादर्शेषु । ४. तदर्थं वा तत्कारणभूतै· सम्परिष्वक्त एव रहति मरणानन्तरमेव कर्मसमाप्ते· सम्यग्भूतानि तदैव संस्कृतानि प्रतिदिनसंस्कारार्थश्च नैकट्यमपेक्षते, अतः सम्यगेव च परिष्वक्त इतिपाठक्रम· पुंबगोपुस्तकेषु, अत्रापि अपेक्षन्ते इति पाठो बपुस्तके, कंपुस्तके तु तदर्थमित्यारभ्य ज्ञानकर्मणो हि स्वरूप इत्येतावत्पर्यन्तं लुप्तम् । ५ वापेक्षत इति कपुस्तके वाप्यपेक्षत इति च पुपुस्तके । ६ चपदं लुप्तं गोपुस्तके । ७. मरणान्तमेवेतिपाठः कपुपुस्तकयो· । ८. प्रतिदिनमितिपाठ. पुंपुस्तके । ९ नैकट्यमपरिष्वक्त इति पाठ कपुस्तके । १०. शरीरे इतिपाठो गोपुस्तके । ११. पूर्वपूर्वप्रज्ञेति कपुस्तके । १२. ज्ञानकर्मणी कर्मण इतिपाठो बपुस्तके प्रकाशे च, ज्ञानकर्मण इति च कपुस्तके ।

"असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्" ( छान्दो ७.४.१. ) इत्यादि निरूपणम्, प्रश्ने हि पुरुषत्वं वदति न देहमात्रं, तज्जीवाधिष्ठितानामेव भवति, सिद्धवत्कारवचनाच्च, निरूपणेपि चन्द्रो भवतीति, तत्रापि "सोमो राजा" ( छान्दो. ७.४.२. ) चेतनः, न ह्यन्याधिष्ठाने ह्यन्यस्य शरीरं भवेत्, तथान्नरेतोगर्भाश्च, अन्यथापि विनियोगसम्भवात्, जीवसाहित्येप्यपामेव मुख्यत्वं शरीरवत्, अयं होमस्तत्र तथा तज्जनयन्तीति न दुःखहेतुः, तस्मात् प्रश्ननिरूपणान्यथानुपपत्त्या सम्परिष्वक्त एव संस्कृतैर्भूतै रंहतीति सिद्धम् ॥ १ ॥

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

ननु कथं भूतसंस्कारमात्रत्वमवगम्यते यावता प्रश्ननिरूपणाभ्यामाप एवावगम्यन्ते ? न च तावन्मात्रसंस्कारकत्वं, नियामकाभावात्, "अस्थि चैव तेन मांसञ्च यजमानः संस्कुरुते" ( तैत्ति. ब्रा. १.५.९.७. ) इतिविरोधश्चेतिशङ्कां निराकरोति तुशब्दः, अपामेव ग्रहणेन तेजोन्नानि गृहीतानि ज्ञातव्यानि, कुतः ? त्र्यात्मकत्वात्, लोकादिनिर्माणानन्तरंभावित्वात्ता आपस्त्रिवृत्कृता एव, अतस्त्रयोपि गृहीता अपां ग्रहणेन, उपलक्षणत्वेप्यपामेव ग्रहणे हेत्वन्तरमाह भूयस्त्वात्, शुद्धत्वाद्विशेषाभावान्मध्यंभावाच्च, दीक्षिततुल्यत्वेन भारूपत्वेनाग्रे वक्तव्यत्वात्

करजीवगमनमेवाहुतिशब्देनोच्यते तानि च स्थानान्यग्नित्वेनोच्यन्ते, समिदिति प्रकाशकत्वेन समिद्रूपत्वमुक्त, न देहमात्रं जीवरहितदेहमात्र पुरुषो न भवतीत्यर्थः, तत् देहपदवाच्यत्वं, सिद्धवदित्यादि, पुरुषत्वेन रूपेण निरूपणादित्यर्थ., निरूपणेपि पुरुषत्वनिरूपणेपि, अन्याधिष्ठान इत्यादि, तथा च यस्मिन् स्थाने यद्योग्यं शरीरं तदेव तत्र भवति न त्वन्यथेत्यर्थः, तथान्नरेत इत्यादि, तथा च तत्तत्संस्कृतयोग्यावयवैर्यथा लोकान्तरस्थदेहास्तथा गर्भेपि संस्कृतावयवैरेव देहनि.पत्तिरित्यर्थ , संस्कृतावयवाभावे दूषणमाहुः अन्यथेत्यादि, तथा चासंस्कृतत्वे स्रावपातादिना गर्भनाशोपि स्यादित्यर्थः, ननूत्क्रमणमारभ्य ज्ञानयोग्यदेहप्राप्तिपर्यन्तं जीवे सर्वसूक्ष्मभूतसाहित्येपामेव होमः कुत उक्त इत्यत आहुः जीवसाहित्य इत्यादि, तथा च यथा वाजसनेयिशाखायां पुरुषस्याग्नौ होम्यत्वेनोक्तौ शरीरस्य मुख्यत्वमुक्तं तथात्र प्रथमहोमेपां मुख्यत्वमवसेयमित्यर्थ., नन्वस्य होमस्य दु.खजनकत्वाद्वैराग्यार्थत्वमेवैतदुपाख्यानस्यास्तामत आहुः अयमित्यादि, अयं देवैः कृतो होमः, तत्र ब्रह्मलोके, तथा प्रकाशमानं, तं जीवं, जनयन्ति ब्रह्मलोकसुखभोक्तारं कुर्वन्तीत्यर्थ., न दुःखहेतुः असंसारित्वान्न दुःखहेतुरित्यर्थः, तस्मादित्यादि, तस्मात् अपां होमस्य मुख्यतः सूक्ष्मभूतसंस्कारार्थत्वेन निःकर्मणां भूतसंस्कार एवोपयोगात्फलोपयोगिदेहप्राप्तिविलम्बकृत एव देवानां विलम्ब इति संस्कृतभूतान्वित एव गच्छति न तु होमानन्तरमेव देहान्तरप्राप्तिरत इत्यर्थः ॥ १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ अपामेव होम्यत्वेन संस्कारो देवैः क्रियते न तु सर्वभूतानामिति पूर्वपक्षनिरासार्थस्तुशब्दः, सर्वभूतसंस्कारे हेतुः त्र्यात्मकत्वादिति अपां त्रिवृत्कृतत्वादित्यर्थः, तथा चाप्शब्देन सर्वभूतान्येव लब्धानीत्यर्थः, तर्ह्यपामेव ग्रहणं कुत इत्यत आह भूयस्त्वादिति, रेतोलोहितादिपरिणामित्वेनापां भूयस्त्वादित्यर्थः सूत्रस्य, भूतसंस्कारमात्रत्वं दैवकृतहोमस्य सर्वभूतसंस्कारकत्वं, अवगम्यते उपाख्यानेवगम्यते, यावता यतो हेतो , अवगम्यन्ते होम्यत्वेन श्रूयन्ते, तावन्मात्रसंस्कारकत्वं देवानां होमस्य सर्वभूतसंस्कारकत्वं, एवं सति यो विरोधस्तमाहुः अस्थीत्यादिना, तेन होमेन, विरोधः अस्थिमांससंस्कारस्य श्रुत्युक्तस्य विरोधो जलमात्रसंस्कारकरण इत्यर्थः, त्रयोपि त्रिवृत्कृतापां ग्रहणात्तेजोन्नरूपास्त्रयोपि पदार्था गृहीता इत्यर्थः, पृथिवीतेजसोरब्विशेषणत्वेन ग्रहणमुक्त्वोपलक्षणत्वेनापि ग्रहणार्थमाहुः उपलक्षणत्वेपीत्यादि, भूयस्त्वात् रेतोलोहितादिपरिणामित्वेन भूयस्त्वात्, शुद्धत्वात् स्वभावतो मेध्यत्वात्, विशेषाभावात् तुल्यत्वेन शुद्ध्यविशेषात्, मध्यभावात् पृथ्वीतेजसोर्मध्यवृत्तित्वात्, अग्रे बृहदारण्यके षष्ठे पर्याये भास्वरवर्णपुरुषतायां दीक्षि-

१ समिदितिनिरूपणमितिपाठो कबपुस्तकयो. । २. हिपद लुप्तं पुंपुस्तके । ३ परिष्वक्त इतिपाठो बपुस्तके । ४. अवगम्यते इति कपुस्तके । ५. तावन्मात्रसस्कारत्वमिति गोपुस्तके । ६. ०नन्तरं भावित्वादिति गोपुस्तके । ७. मध्यमभावाच्चेति पुंपुस्तके । ८. भावरूपत्वेनेति पुंगोपुस्तकयो. ।

शुद्धा[1]पामेवेदं शरीरं, बहुहेतुकत्वमेव भूयस्त्वं बहुधापरिणामाच्च, द्रव्यभूयःकरत्वञ्च, तस्मान्नियामकानां भूयस्त्वादपामेव ग्रहणम् ॥ २ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह,

**प्राणगतेश्च ॥ ३ ॥**

प्राणस्य गतिः प्राणगतिः, "तमुत्क्रामन्तं प्राणोनूत्क्रामति" (बृह. ६.४.२.) इति प्राणाप्यायनजनकत्वादपां ग्रहणं, प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति, जलौका[2]वदन्यत्र देहसम्बन्धः, मुक्तौ न प्राणा गच्छन्ति, क्रममुक्तावपि देहसम्बन्ध इति पौराणिकाः, दै[3]वभाव इत्यौपनिषदाः, अतो दूरे प्राणगतिरत्रैव, अतोपां संश्लेषो वक्तव्यः, चकारात् "विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृह. ६.४.२.) इति क[4]र्मसहभावं बोधयति श्रुतिः, तस्मादद्भिः परिष्वक्तो गच्छति ॥ ३ ॥

श्रुतिविरोधम्परिहरति परस्परविरोधे व्यवस्था वा बोध्यते,

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

ननु "यत्रास्य पुरुषस्य मृतस्याग्निं[5] वागप्येति वातं प्राण" (बृह. ५. २. १३.) इत्यादिना अग्न्यादिगतिः प्राणानां श्रूयते, न च "ओ[6]षधीर्लोमानि वनस्पतीन् केशा" (बृह. ५. २. १३.) इत्यत्र प्रत्यक्षविरोधाद्बाधितविषयेयं श्रुतिरिति वाच्यं, आध्यात्मिकेन्द्रियमध्यपाताल्लोमकेशा अप्याध्यात्मिका एव ग्राह्या यैः कण्डूलावण्यप्रतीतिः, दृश्यमानानि तु गोलकस्थानानि, तस्मात् प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेन्न, भाक्तत्वात्, प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति, "अथ हैनं जारत्कारव आर्तभागः

तत्तुल्यत्वेनापां वर्णनादित्यर्थः, अपामेवेत्येवकारोप्यर्थः, बहुहेतुकत्वं, हूयमानापां पय सोमादिरूपबहुहेतुकत्वं, द्रव्यभूयःकरत्वं वरलाभेन द्रव्यभूयःकरत्वम् ॥ २ ॥

**प्राणगतेश्च** ॥ ३ ॥ युक्तिमाहु प्राण इत्यादिना, 'काममपः पिब आपोमयः प्राण' इत्यादौ प्राणाप्यायकत्वमपामुक्त लोकेपि पथिक. स्वाप्यायक जलं गृहीत्वा गच्छतीतिरीत्या युक्तेर्लौकिकत्व, एवं वाङ्मनसी अपि स्वाप्यायके तेजोन्ने गृहीत्वा गच्छत इति बोध्यं, **जलौकावदिति** जलौका यथा तृणं प्राप्य सर्वाण्येवाङ्गान्युपसंहरत्येवं जीवोपि देहान्तरं प्राप्य पूर्वोपार्जित सर्व स्वस्मिन्नुपसहरति, **अन्यत्र** मुक्तिभिन्नस्थल इत्यर्थ, **पौराणिकाः** शुकादयः, **दैवभावः** देवोपासनया प्राणानां देवभाव इत्यर्थः, अत्रैव क्रममुक्त्यादिस्थल एवेत्यर्थः ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** ॥४॥ **श्रुतिविरोधं** प्राणानां सहोत्क्रमणश्रुतिः 'अग्निं वागप्येति' इति च श्रुतिस्तयोर्विरोध, **परिहरति** सूत्रेण परिहरति सूत्रकार., **बोध्यते** सूत्रेण पक्षद्वयं बोध्यत इत्यर्थः, **पूर्वपक्षमाहुः नन्वित्यादिना**, इयं 'यत्रास्य मृतस्ये'तिश्रुतिः, **बाधितविषयेति**, तथा हि लोमकेशयोरपि सावयवत्वेन शरीरनाशे नाशसम्भवाद्वनस्पत्यादिप्राप्तिर्लयबोधिकैव न तु यथाश्रुतार्था तथा"ग्नि वागि"त्यपि श्रुतिरिन्द्रियाणां लयमेव बोधयति न तु यथाश्रुतार्थातो बाधितविषयेत्यर्थ, इति च न वाच्यमित्युपपादयन्ति **आध्यात्मिकेत्यादिना**, तथा चाध्यात्मिकलोमकेशयोरौषधिवनस्पतिप्राप्तिसम्भवेन यथाश्रुतार्थैवेयं श्रुतिरिति पूर्वापि **यथाश्रुतार्थैवेति पूर्व**श्रुत्योत्क्रमणश्रुतिबाध इति सिद्धः पूर्वः पक्षः, **भाक्तत्वात्** उत्क्रमणश्रुतेर्भाक्तत्वात्, भाक्तत्वं विवृण्वन्ति **प्रकरणे-**

१ शुद्धायामेवेति कपुंपुंबपुस्तकेषु । २. जलूकावदिति कपुपुस्तकयो. । ३. देवभाव इतिपाठ कबप्रकाशेषु । ४. सकर्मसहभावमिति कगोपुस्तकयो. स्वकर्मसहभावमिति च बपुस्तके । ५. अग्निर्वागप्येति वा तमिति बपुस्तके । ६. औषधीरिति पुपुंपुस्तकयोः ।

प्रपच्छ" ( बृह. ५. २. १. )इत्यत्र ग्रहनिरूपणानन्तरं मृत्युं पृष्ट्वा म्रियमाणप्रश्ने नामैव न जहात्यन्यज्जहातीति प्रतिज्ञाते प्राणोत्क्रमणप्रश्ने नेति प्रतिवचने ( बृह. ५. २. ११. ) वागादीनामग्न्यादिभावानुवादः, ततो मन्त्रणाज्जीवस्य ब्रह्मभावोवगम्यते सामग्र्या गतत्वात्, "तौ ह यदूचतुः" ( बृह. ५. २. १३. )इतिकर्मप्रशंसा भिन्नप्रश्नोत्तरा, उभयोर्वचनविधानात्, ब्रह्मविद्या च गोप्या, उत्क्रमणश्रुतिस्तु "स यत्रायं शारीर आत्मा" ( बृह. ६. ४. १. ) इतिब्राह्मणे जीवस्य परलोकविहारार्थं "निष्क्रामति चक्षुषो वा मूर्ध्नो वा" ( बृह. ६. ४. २. ) इत्यादिना प्राणानां विहारसाधकानां निर्गमनमाह, अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका, तस्मादन्यत्र सिद्धो धर्मोन्यत्रावस्थासाम्याद्योज्यमानो भाक्तो भवति, अतः प्राणोत्क्रमणमस्ति, तस्मात्सम्परिष्वक्तो गच्छतीति सिद्धम् ॥ ४ ॥

किञ्चिदाशङ्क्य परिहरति,

## प्रथमेश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

"असौ वाव लोको गौतमाग्निः" ( छान्दो. ७. ४. १. ) इत्यत्र "देवाः श्रद्धां जुह्वति" ( छान्दो. ७. ४. २. ) इतिश्रुतेरापो न सङ्कीर्तिताः, अपां हि पञ्चम्यामाहुतौ पुरुषवचनं, श्रद्धा मनोधर्मः, स कथं हूयते इति चेन्न, मनसा सह भविष्यति, तथाप्यरुणान्यायेन धर्ममुख्यत्वं, तर्हि कथं प्रश्नोपसंहारौ ? परोक्षवादाद्भविष्यति चमसवत्, "श्रद्धा वा आपः" ( तैत्ति. ब्रा. ३. २. ४. १. ) इतिश्रुतेः शुद्धिहेतुत्वसाम्यात्, "चन्द्रमा मनसो जातः"

---

त्यादिना, प्रकरणव्यतिरेकेण अमुक्तप्रकरणव्यतिरेकेण, तथा च मुक्तविषया'ग्नि वागि'तिश्रुतिरुत्क्रमणश्रुतिस्त्वमुक्तविषयेत्यविरोध. प्रतिपादितः, व्यवस्थापक्षं व्युत्पादयन्ति अथेत्यादिना, मृत्युसम्पादिका काश्चिद् देवतेति प्रश्न कृत्वा प्राणोत्क्रमणप्रश्न. कृतो नोत्क्रामतीत्युत्तरिते तदनन्तर वागादीनामग्न्यादिभावानुवादः कृतस्तदनन्तरं 'कुत्रायं पुरुषस्तिष्ठती'तिप्रश्ने कृत 'आहर सौम्य हस्तमि'त्यादिना मन्त्रकरणाज्जीवस्य ब्रह्मभावोवगम्यते, सामग्र्या गतत्वात् लौकिकभोगसामग्र्या गतत्वात्, ननु मन्त्रव्याख्यानश्रुतौ कर्मप्रशंसाया. कृतत्वान्मन्त्रण न जीवब्रह्मभावबोधकमित्यत आहु तौ ह यदित्यादि, भिन्नप्रश्नोत्तरा एतत्प्रश्नभिन्नप्रश्नोत्तरप्रतिपादिकेत्यर्थः, उभयोर्वचनविधानात् 'तौ यदूचतु'रितिवाक्येनोभयोर्वचनविधानाद्भिन्नप्रश्नोत्तरपरत्वमित्यर्थः कर्मप्रशंसायामिति फलितं, ननु तर्ह्यनुमन्त्रणश्रुतिः कुतो न विवृतेत्यत आहु. ब्रह्मविद्येत्यादि, तस्मादेतत्[3] परममुक्तिप्रकरणं सिद्धं, तथा चाग्न्यादिभावश्रुतिर्मुक्तविषयोत्क्रमणश्रुतिस्त्वमुक्तविपयेतिव्यवस्थापक्षेपि न विरोधः ॥ ४ ॥

प्रथमेश्रवणादितिचेन्न ता एव ह्युपपत्तेः ॥५॥ आपो न सङ्कीर्तिताः उपक्रमे आपो न कीर्तिता इत्यर्थः, पुरुषवचनं उपसंहारेपा पुरुषवचनत्वेन निरूपणं, उपसंहारस्य चोपक्रमाद् दुर्बलत्वादित्यर्थः, ननु श्रद्धा मनोधर्मः स कथ होतुं शक्यत इति श्रद्धापदेनाप एव ग्राह्या श्रद्धाधर्मकमनसा होम भावयतीत्यर्थ इत्यत आहुः मनसेत्यादि, 'मनसा प्रणयति' 'इय वै मन' इत्यत्रेयम्पदेन श्रद्धासाहित्यग्रहणसम्भवादित्यर्थ., ननु मनसो होम्यत्वेनोक्तेः श्रद्धायाः सहभूतत्वेन गौणत्वात् कथं होमकर्मत्वमत आहु तथाप्यरुणेत्यादि, तथा च क्रयभावनायां यथा प्राधान्येनारुण्यादिधर्मान्वयस्तथा मनोधर्मश्रद्धाया एव होमो न त्वपां, एवं सति उपक्रमोपसंहारयोरपामुक्तिर्विरुद्धेत्याहुः तर्हीत्यादिना, समाधानमाहु. परोक्षेत्यादिना, तथा 'चार्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यत्र चमसादिशब्दैर्गौण्या वृत्त्या यथा शिरःप्रभृत्युच्यते तथा 'श्रद्धा वा आप' इत्यत्रापि शुद्धिसम्पादकतासाम्या'दाप'इतिपदेनापि श्रद्धैवोच्यत इत्यर्थः, नन्वप्पदस्य श्रद्धारूपत्वे 'श्रद्धां जुह्वति तस्या आहुते. सोमो राजा भवती'ति श्रद्धाकार्यत्वेन सोमस्य कथनं विरुद्धमिति– विरोध परिहरति चन्द्रमा इत्यादिना, एवम्परा चन्द्रमसो हूयमानश्रद्धाकार्यत्वेन मनसश्च श्रद्धायां सहभावात्

---

१. दृष्ट्वेति कपुस्तके । २. चक्षुष्येवेत्यादिनेति कपुपुंगोपुस्तकेषु । ३ इदमिति जापुस्तके ।

( तैत्ति. आ. ३. १२. ६. ) इतिश्रुतिश्चैवम्परा भविष्यति, तस्मात् प्रथमाहुतावपामश्रवणान्न ताभिः सम्परिष्वक्तो गच्छतीति चेन्न, ता एव आप एव श्रद्धाशब्देनोच्यन्ते, हि युक्तोयमर्थः, यथा कर्मकाण्ड आपः श्रद्धाशब्देनोच्यन्ते तथा प्रकृतेपि, परं नोपचारः, उपपत्तेः, उपक्रमोपसंहारयोर्बलीयस्त्वात्, न तु मध्यश्रुतेन श्रद्धाशब्देनोपक्रमोपसंहारावन्यथाकर्तुं युक्तौ, श्रद्धासहभावः संस्कारद्वारेण संस्कृतेषु भूतेषु सिद्धः, तेन मनःस्थाने आप एव वाच्याः, "चन्द्रमा मनसो जातः" ( तैत्ति. आ. ३. १२. ६. ) इति तु भिन्ना सृष्टिः, श्रद्धाप्रयोगस्तु कामनाकृतव्यावृत्त्यर्थः, तत्र फल एव श्रद्धा न कर्मणि, "यो यच्छ्रद्धः स एव सः" ( श्रीमद्भग. १७. ३. ) इति श्रद्धाया आश्रयस्य विषयभावजनकत्वात् कर्तुः कर्मभावाय श्रद्धाप्रयोगः, ततः संस्कृता आपो यजमानरूपा हूयमाना भवन्तीति सिद्धं भवति, तस्मात् प्रथमेप्यपामस्ति श्रवणम् ॥ ५ ॥

स्थितमेतज्जीवः सम्परिष्वक्तो रंहतीति, तत्रेदं विचार्यते,

## अश्रुतत्वादिति चेन्नेष्टादिकारिणाम्प्रतीतेः ॥ ६ ॥

सर्वे जीवाः सम्परिष्वक्ता गच्छन्त्याहोस्विज्ज्ञानोपयोगिन इति विमर्शः, तत्र पञ्चाहुतिप्रकारे नाधिकारिणः श्रुताः, वेदे हि श्रुतानुसारिकल्पना, अतो विशेषस्याश्रुतत्वात् सर्वेषामेव पञ्चाहुतिप्रकार इति चेन्न, इष्टादिकारिणाम्प्रतीतेः, साधारणपक्षं दूषयति, कुतः ? इष्टादिकारिणाम्प्रतीतेः, इष्टादिकारिणः प्रतीयन्ते श्रद्धापदेन देवकर्तृत्वेन च, सोमभावसाम्याच्च, इष्टादिकारिणां धूममार्गव्युत्पादने सोमभाव उक्तः, अत्रापि प्रथमाहुतिफलं सोमभाव उच्यते, अतः श्रुतिसाम्यादपीष्टाधिकारिणो रंहन्तीति सिद्धम् ॥ ६ ॥

---

'चन्द्रमा मनसो जात' इतिव्यवहारपरा भविष्यतीत्यर्थ, पूर्वपक्षोपसंहारस्तस्मादित्यादिनोच्यते, नोपचारः न लक्षणया श्रद्धाशब्दोपां बोधको वैदिकनिघण्टौ 'श्रत् सत्यं शुद्धिं दधातीति श्रद्धे'ति श्रद्धापदस्याप्सु योगेन प्रवृत्तिसम्भवादित्यर्थः, उपपत्तिं विवृण्वन्ति उपक्रमेत्यादिना, तथा चोपसंहारेपां होन्यत्वश्रवणाच्छ्रद्धाशब्देनापि आप एवोपादेया अन्यथोपक्रमोपसंहारविरोध स्यादित्यर्थ, ननु श्रद्धापदस्याप्परत्वे कर्मणि श्रद्धासाहित्यालाभ इत्यत आहु. श्रद्धासहभाव इति. तथा च पूर्वजन्मनि मृताग्निहोत्रे यजमाने तदुत्तरं च देवेषु होमकर्तृषु श्रद्धासत्त्वात् संस्कारद्वारेण सूक्ष्मभूतेषु श्रद्धासत्त्वा'न्नाश्रद्धया हुत'मित्यादिविरोध इत्यर्थ., तेन श्रद्धापदस्याप्सु योगेन उपक्रमोपसंहारानुपपत्त्या श्रद्धासाहित्यलाभेन चेत्यर्थ, मनःस्थाने मन.सहकृतश्रद्धाहोमस्थाने, आप एव वाच्याः श्रद्धापदेनाप एव वाच्या इत्यर्थः, श्रद्धाप्रयोगः अप्सु श्रद्धापदप्रयोगः, तत्र सकामकर्तरि, निःकामकर्तृस्तु कर्मण्येव श्रद्धा, आश्रयस्य कर्मकर्तुः, विषयभावजनकत्वात् उद्देशरूपतासम्पादकत्वात्, श्रद्धाप्रयोगः अप्सु श्रद्धापदप्रयोग· ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणाम्प्रतीतेः ॥ ६ ॥ नाधिकारिणः श्रुताः पञ्चाहुतिप्रकारेण ज्ञानाधिकारिणो विशेषेण न श्रुता इत्यर्थ, श्रद्धापदेन कर्मणि श्रद्धाप्रतिपादकपदेन, तेन नि कामकर्तारो लभ्यन्ते, अत एव तादृशानामुपकारार्थमग्रे होमे देवकर्तृत्वं सोमभावोपि तादृशामेव सर्वेषामित्यर्थ., अत्रापि ज्योतिरादिमार्गेपि ॥ ६ ॥

---

१ एवापरेतिपाठ· कपुपुस्तकयो । २ उपक्रमेत्यारभ्य श्रद्धाशब्देनेत्यन्त लुप्त कपुपुस्तकयोः । ३ नन्विति बप्रकाशयोः । ४. संस्कारेणेति बपुस्तके, प्रकाशे त्वादर्शान्तरवत् संस्कारद्वारेणेत्येव । ५ इदमितिपदं लुप्तं पुबगोपुस्तकेषु । ६. सर्वजीवा इति गोपुस्तके । ७ पञ्चाहुतिब्राह्मणे इति पुंबगोपुस्तकेषु । ८. श्रुतानुसारिणीति बपुस्तके । ९. सर्वेषामेवमिति गोपुस्तके । १०. सोमभावसाम्यत्वाच्चेति कगोपुस्तकयो· ।

किञ्चिद्दूषणम्परिहरति,

## भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

ननु यदि श्रुतिसाम्येन सोमभावादिष्टादिकारिणो रंहन्तीत्युच्यते तदा सोमभावे तेषाम[1]-निष्टं श्रूयते "तद्देवानामन्नं तं देवा भक्षयन्ति" ( छान्दो. ७. १०. ४. ) इति, समानश्रुतौ चा"प्यायस्वापक्षीयस्वेत्येवमेतां[2]स्तत्र भक्षयन्ति" ( बृह. ८. २. १६. ) इति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते, ततश्च देवाः स्वान्नं पर्जन्येग्नौ कथं जुहुवुः? अतः पञ्चाहुत्यभाव इत्याशङ्क्य परिहरति वाशब्दः, तेषां सोमभावो गौणो भक्षणश्च, प्रकृतेप्यङ्गारत्वाच्चन्द्रमसः कथमाहुतिफलं भवेत्? सोमभावस्य भाक्तत्वमग्रे निरूपयिष्यामः, इदानीं भक्षणस्य गौणत्वं निरूपयति, अन्नभावे हि मुख्यं भक्षणं भवति, तदन्यस्यान्यभावो[3] नोपपद्यते, ब्रह्मज्ञाने तु भवति "स सर्वं भवति" (बृह. ३. ४. १०.) "तद्धैतत्[4] पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" ( बृह. ३. ४. १०. ) इति, प्रकृते तु तन्न, अनात्मवित्त्वात्, तथा सति मोक्ष एव भवेत्, अतो भक्षणमपि गौणं, तथा हि श्रुतिरेव गौणभावं[5] शब्दस्य बोधयति, "अथ योन्यां देवतामुपास्ते" ( बृह. ३. ४. १० ) इत्यत्र यथा पशुशब्द एवमत्रापि भक्षणं सहक्रीडनं सेवकभावः, चन्द्रतु-ल्योपदेशाय[6] तथावचनं, तथा सति तेषाममरत्वेन तथास्तुतिः, चन्द्रस्य भक्षणन्तु क्षयादनुमीयते श्रुत्या "प्रथमाम्पिबते[7] वह्निः[8]" इत्यादिरूपया, देवानाम[9]भक्षणं भगवदवयवानामेव, अशनानशने तस्याविरुद्धे, आधिभौतिकानां देवानामशनमेव, तस्माद्भक्षणस्य गौणत्वात् सोमभावे न काचिच्चिन्ता ॥ ७ ॥ १ ॥

॥ इति तृतीयाध्याये प्रथमपादे प्रथमं रंहत्यधिकरणम्[10] ॥

---

भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥ तद्दूषणमाशङ्कामुखेनोद्घाटयन्ति नन्वित्यादिना, तत् सोमरूपं, एतान् चन्द्रभावापन्नान्, परिहरति उक्तं दूषणं परिहरतीत्यर्थः, प्रकृतेपि चन्द्रमसोपि, तथा चाङ्गा-रत्वाच्चन्द्रमसोपि भक्षणं गौण किं पुनस्तद्भावापन्नानां? कथमित्यादि, सोमभावापन्नानां यष्टॄणां देवैर्भक्षणे कृते कथ-माहुतिफलं भवेदित्यर्थः, सोमभावस्य यष्टॄणा सोमभावस्य, भाक्तत्वं गौणत्वं, अन्यस्य अब्रह्मविदः, अन्यभावः अन्यस्य वस्तुनः स्वस्वरूपतयानुभवः, तथा च चन्द्रस्यान्नरूपतानुपपन्नेत्यर्थः, प्रकृते तु चन्द्रभावे तु, तथा सति आत्मवित्त्वे सति, गौणत्वं शब्दस्योपपादयन्ति अथेत्यादिना, 'योन्यां देवतामुपास्ते स पशु'रित्यत्र पशुशब्दस्य तत्सदृशोर्थस्तथान्नभोजनशब्दावपि सदृशार्थौ द्रष्टव्यौ, सहक्रीडनं स्त्रीभोगादिवाक्येषु भोगशब्दस्य क्रीडार्थत्वं न तु चर्वणघटितभोगार्थत्वं तथा प्रकृतेपि चन्द्रतुल्यार्थकत्वमेव ग्राह्यं, तेषां यष्टॄणां, तथास्तुतिः चन्द्रत्वेन तेषां स्तुतिः, भक्षणं मुख्यं भक्षण श्रुतिसिद्धं, ननु 'न वै देवा अश्नन्ति न पिबन्ती'तिश्रुत्याविरोधाद्देवानां चन्द्रकलाभक्ष-णादिरूपं पानमपि गौणमेव भविष्यतीत्यत आहुः देवानामभक्षणमित्यादि, तथा च देवानां यज्ञादिभागभोक्तृ-त्वस्य सिद्धत्वाद्भौतिकभोक्तृत्वं सिद्धमेवाभोक्तृत्वन्तु भगवद्रूपपदार्थानामेवेति व्याख्येयं, तस्य भगवतः अशनं तदभावश्चोभयमप्यविरुद्ध जीवसाक्षिरूपाभ्या तस्य विरुद्धधर्माश्रयत्वेन सर्वसम्भवात्, भक्षणस्य गौणत्वात् सोमभावापन्नयष्टॄणां भक्षणस्य गौणत्वात् देवैः सह रमणरूपत्वादित्यर्थः, एतेन वैराग्ययोग्यदेहनिःपत्तिरित्युभय साधित, केवलवैराग्यार्थत्वे मुख्यभक्षणेपि तत्सम्भवाद्गौणत्वप्रतिपादनवैफल्यापत्तेरितिभावः ॥ ७ ॥

इति तृतीयप्रथमे प्रथमाधिकरणम् ॥ १ ॥

---

१. तेषामपीति बपुस्तके । २. एनास्तत्रेति पुगोपुस्तकयो । ३. अन्नभाव इति बप्रकाशगोविवरणेषु । ४. तद्धैतदिति पुगोपुस्तकयो. । ५ गौणभावे इति कटिप्पन्याम् । ६ चन्द्रतुल्योपदेशायेति पुपुस्तके । ७. प्रथमोपिबत्ते वह्निरिति कपुस्तके । ८ सोमोत्पत्तिदरिशिष्टस्थेयं श्रुति. । ९. देवानामिति लुप्त पुपुस्तके । १० इदमधिकरणं श्रीप्रकाशकारैर्न सज्ञितमेकदेशिभिस्तु तदन्तरप्रतिपत्त्यधिकरणमिति व्यवह्रियते ।

प्रथमाहुतिः सफला विचारिता, द्वितीयां विचारयितुमधिकरणारम्भः सोमस्य पर्जन्य[1]होमे वृष्टित्वमिति, सोमाद्वृष्टिभावे रूपरसादीनां हीनतया प्रतीयमानत्वाद्यागस्यावान्तरफलं तत्र भुङ्क्त इति निश्चितं, तत्र संशयः किं सर्वमेवावान्तरफलं तत्र भुङ्क्त आहोस्विदनुशयवान् वृष्टिर्भवतीति, सद्वासनयाग्रिमजन्मनि सदाचारयुक्त एव स्यादिति "आचारहीनं न पुनन्ति वेदाः" (वसि. स्मृ. ६. ३.) इतिबाधोपलब्धेः, अतो विचार उचितः, तत्रावान्तरफलस्यावशेषेवान्तरफलत्वबाधाज्ज्ञा[2]नोपायिकशरीरभावादेव सदाचारसिद्धेः प्रयोजनाभावाच्च निरनुशय एव वृष्टिभावं प्राप्नोतीत्येवं प्राप्त उच्यते,

## कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥ (३. १. २.)

कृतात्ययेनुशयवान् कृतस्य सोम[3]भावस्य अत्यये नाशे सति अनुशयवान् अवान्तरफलसाधकलेशसहित एव वृष्टिभावं प्राप्नोति, कुतः? दृष्टस्मृतिभ्यां, दृष्टं तावद् भोगसाधकमूलद्रव्यनाशेपि भोगसाधकतादृशदेहवस्त्रादिसहित एव तस्मात्स्थानादपगच्छति, अन्यथा सद्य एव देहपातः स्या[4]त्, अतो यथा लोके सानुशयस्तथा[5]त्रापि, स्मृतिश्च "यद्यत्र नः स्वर्ग्य[6]सुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनं तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति" (श्रीमद्भाग. ५. १९. २८.) इतिदेवगाथा, अतो ज्ञानौपयिकं[7] जन्मा[8]नुशयवत एव भवति, अन्यथा पूर्वजन्मस्मृत्यभावे विषयासक्तिः प्रस[9]ज्येत, नन्वनुशयसहकृत एव जीवो

---

कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥ सफला सोमभावसम्पादकत्वात् सफलेत्यर्थः, द्वितीयां पर्जन्याहुतिं, पर्जन्यहोमे देवैः कृते पर्जन्यहोम इत्यर्थः, तत्र संशयः भोगे संशयः, अनुशयवान् अनु पश्चाच्छेते कर्मफलभोगानन्तरं कर्मफलशेषे तिष्ठतीति अनुशयवान् भवतीतिशेषः, पूर्वविचारस्य प्रयोजनं निरूपयन्ति वृष्टिरित्यादिना, सदाचार इति, तथा च पूर्वोक्तरीत्या वृष्ट्यादिद्वारा चेज्जन्म न भवेत्तदानीञ्च योनौ दुःकर्मचारी वा भवेदिति ज्ञानोपयोगिदेहाय तद्विचार आवश्यक इतिभावः, पूर्वपक्षमाहुस्तत्रेत्यादिना, तथा च सकामानां कर्मिणां धूममार्गीयाणामिदमेव चन्द्रभावरूपं मुख्यं फलं निःकामकर्मकर्तॄणां त्विदमवान्तरं फलं ज्ञानोपयोगिदेहप्राप्तिफलकं तत्रावान्तरफलभोगानन्तरं योग्यदेहप्राप्तिस्तत्रावान्तरफलशेषसामग्रीसत्त्वाङ्गीकारे भुज्यमानस्यावान्तरफलत्वमेव न स्यात्तस्य तदेकदेशत्वात्तस्माद्वृष्ट्यब्भ्याहुतिदशायामप्यवान्तरफलभोग एव न त्वनुशय इत्यर्थः, ननु पूर्वजन्मशेषसामग्र्यभावेग्रे सदाचारो न सिध्येदत आहुर्ज्ञानोपायिकेत्यादि, तथा च देवकृताहुतिक्रमेण शरीरलाभात् सदाचारादिसिद्धिरितिभावः, निरनुशय एव अशेषावान्तरफल एव, कृतात्यये सोमभावात्यये, अनुशयश्चात्रावान्तरफलसामग्रीशेषो बोध्यः, भोगसाधकेत्यादि, द्युलोके चन्द्रभावेन यो भोगस्तत्साधकं मूलद्रव्यं पूर्वतनं स्वदेवताकृताहुतिलक्षणं कर्म तन्नाशेपि मुख्यफलभोगेन मुख्यकर्मनाशेपि, तादृशः भोगानुकूलः, तस्मात् चन्द्रलोकात्मकात्, अपगच्छति योग्यदेहानुकूलगर्भवासायावतरति, अन्यथा पूर्वकर्मणो द्युलोकभोगेन समाप्त्या कर्मशेषसामग्र्यभावे, सद्य एवेति 'प्रारब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक' इतिवचनात्सद्य एव देहपातः स्यान्न तु भोगसामग्रीसहित उत्तरेदित्यर्थः, सानुशयः प्रारब्धशेषसहितस्तथायमपीत्यर्थः, ननु तथापि कर्मशेष एवास्तु न तु तज्जन्यसामग्रीशेष इत्यत आहुः स्मृतीत्यादि, तथा चात्र स्मृतौ कृतस्य शोभनं कर्मजन्यसामग्रीरूपमवशेषितमित्युक्त न तु कृतमवशेषितमित्युक्तमत. सामग्र्येवात्रशिष्टेत्यर्थः, अन्यथा पूर्वजन्मकर्मजनित-

---

१ पर्जन्यहेतोरिति कपुस्तके । २ ज्ञानौपयिकेति कपुबप्रकाशगोविवरणेषु । ३. भावस्येति गोविबरणयो । ४. भवेदिति कपुपुस्तकयोः । ५ तथात्रापीति लुप्तं कपुपुंगोपुस्तकेषु । ६. स्वर्गसुखेति पुंगोपुस्तकयो । ७. ज्ञानौपयिकेत्यादि पुपुंबप्रकाशगोविवरणेषु । ८. सानुशयवत एवेति पुंगोपुस्तकयोः । ९. प्रसज्यत इति बपुस्तके, प्रकाशादिषु तु प्रसज्येतेति । १०. कर्मेति जापुस्तके ।

नाद्भिः परिष्वक्तो भवेदत आह यथेतं यथागतं, अन्यथा प्रश्ननिरूपणयोर्बाधः स्यात्, तर्हि तावदवान्तरफलसाधकसहितः स्यादत आह अनेवञ्च, एवं प्रकारयुक्तागमनं नास्ति, भोगस्य जातत्वात्, चकाराद्वैराग्यसहितोपि, तस्मादनुशयवान् भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासहितो वृष्टिर्भवतीति ॥ ८ ॥

किञ्चिदाशङ्क्य परिहरति,

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

ननु नात्रोत्तमजन्मार्थमनुशयोपेक्ष्यते चरणादेव भविष्यति "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्" (छान्दो. ७. १०. ७.) इत्यादिना यः पूर्वजन्मनि विहिताचरणं करोति स उत्तमञ्जन्म प्राप्नोति यस्तु निषिद्धाचरणं करोति स श्वादियोनिं प्राप्नोतीति "साधुकारी साधुर्भवति" (बृह. ६. ४. ५.) इत्यादिश्रुत्या च प्रतिपाद्यते, प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग्जन्म भविष्यति किमनुशयसहभावेनेति चेन्न, चरणश्रुतौ या योनिरुक्ता सा उपलक्षणार्था, अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका, न तु तस्मिञ्जन्मनि समीचीनकरणे नियामिका, अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात्, तस्मादनुशयोपेक्ष्यते ज्ञानोपयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते, कार्ष्णाजिनिग्रहणं पञ्चाग्निविद्याया भिन्नप्रकारत्वज्ञापनार्थं, तस्मादस्य स्वमते भिन्नत्वान्न शङ्का न चोत्तरं, न हि पञ्चाग्निविद्यायां पुरुषादन्यभावः सम्भवति, प्रकरणपरिगृहीता श्रुतिर्नान्यत्र न्यायसम्पादिका ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

नन्वेवं सति चरणश्रुतिरनर्थिका, ज्ञापनायां प्रयोजनाभावात्, अतो विधायकत्वं श्रुते-

---

सामग्रीशेषानङ्गीकारे, ननु पूर्वकर्मजसामग्रीशेषरूपानुशयबलादेव तस्य सदाचारस्मृत्याद्युपपत्तेः संस्कृताद्भिः परिष्वङ्गो नाङ्गीकार्य इत्यत आहुर्नन्वित्यादि, यथेतमिति, यथेतं यथाद्भिः परिष्वक्तेनेतो गतं तथैवाद्भिः परिष्वक्तस्यागमनमप्यत्र बोध्यमित्यर्थः, अन्यथा अद्भिः परिष्वक्तस्यागमनानङ्गीकारे, बाधः स्यादिति, तथा च प्रश्नोत्तरयोरद्भिः परिष्वक्तस्यैव गमनागमने प्रतीयेते तयोर्बाधः स्यात् परिष्वक्तानागमन इत्यर्थः, इत्थञ्च धूममार्गीयगमनागमनातिरिक्तरीत्यङ्गीकारे विरोधः स्यादित्यर्थः, भिन्नप्रकाराद्भिरिति, तथा च भोगसामग्रीकापां भोगसाधनत्वं स्थितमागमनकालीनानां त्वपां वैराग्यसाधकत्वाद्भिन्नप्रकारकत्वमित्यर्थः ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥ आशङ्क्य पूर्वपक्षं, परिहरति समाधत्ते सूत्रकारः, अत्र योग्यदेहसाधनेषु, चरणादेव जन्मान्तरीयोत्तमाचारादेव, भविष्यति उत्तमं जन्म भविष्यति, 'अभ्याशो ह'ति पद क्षिप्रत्वार्थं, यत्पदं हेतुत्वार्थं, इत्यादिना इतिश्रुतिभ्यां, उपलक्षणार्था काकादिज्ञाने तृणादीनामिव पूर्वजन्मसत्कर्मज्ञापिकेत्यर्थ, अन्यथा कपूयचरणस्य कपूययोनिनियामकतायां, अनुशयः कार्ष्णाजिनिमते कर्मशेषरूपोनुशय एतन्मतेस्वरस. पञ्चाग्नीत्यादिना, भिन्नप्रकारेति, तथा च कर्मशेषातिरिक्तफलशेषसामग्रीरूपो वैराग्यजनको दृष्टसामग्रीरूपः प्रश्ननिरूपणाभ्यां पुरुषरूपस्य लभ्यत इत्यर्थः, न शङ्का दृष्टसामग्रीलाभेन नादृष्टरूपानुशयशङ्का, अत एव नोत्तरं, पुरुषादन्यभावः अदृष्टप्रकारेण ज्ञानोपयोगिदेहसिद्धिरूप, प्रकरणेत्यादि, दृष्टप्रकारेण पुरुषदेहबोधकप्रकरणस्था पञ्चाग्निश्रुतिः, अन्यत्र अदृष्टप्रकारेण देहसम्पादकन्यायसम्पादिका नेत्यर्थः ॥ ९॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ विधायकत्वं ज्ञानोपयोगिदेहप्रापिकामो निःकामो

---

१. अभ्यास इति कपुपुस्तकयो । २. विहिताचारमिति कपुपुंगोपुस्तकेषु । ३. उत्तमजन्मेति पुपुंगोपुस्तकेषु । ४ तुपदं लुप्तं गोपुस्तके । ५. आचारणादेवेति गोपुस्तके । ६. पञ्चाग्निविद्यायामिति बपुस्तके । ७. गमनसामयिकापामिति जापुस्तके ।

रिष्टानिष्टफलबोधकश्रुतिवत्, अतः कर्मतारतम्येन फलविधाना[1]न्निःकामकर्मकर्तुर्ज्ञानोपयोगिदेहविधानं भविष्यतीत्यनुशयसहभावो व्यर्थ इति चेन्न, तदपेक्षत्वात्, धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात्, काम्येष्टादिकारिणः फलभोगानन्तरमुत्पत्तौ 'सुखानन्तरं दुःख'मितिन्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्मा भवत्विति रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते न न्या[2]येनासमीचीनशरीरमिति, तस्मादन्यनिषेधार्थं सार्थकत्वान्नानुशयप्रति[3]बन्धिका, किञ्च रमणीय[4]योनिः किमाकस्मिकी सकारणा वा? नाद्या वेदवादिनां, द्वितीये तु "स्वकर्मणा पितृलोकः" (बृह. ३.५.१६) इति वस्वादित्यरूपता च वक्तव्या "प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः" (श्रीमद्भाग. ३. ३२. २०.) इति च, "त्रैविद्या मां सोमपाः" (श्रीमद्भग. ९. २०.) इत्यादिना इन्द्रलोकभोगानन्तरं तथैव पुनर्भवनश्च वक्तव्यं, न च सर्वेषामैक्यं, भिन्नरूपत्वात्, तस्मात् कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्याः, न त्वेकमपरत्र निविशते, उपरोधप्रसङ्गात्, तथा च प्रकृतेप्यनुशयाभावे भक्षणभवनयोर्नियमो न स्यात्, ब्राह्मणा[5]नामप्यन्ने बलिहरणे श्वचण्डालयोर्भक्षणं ब्राह्मणभक्षणेपि मलभावे शूकरभक्षणं, अनुशयस्य नियामकत्वे तुषादिष्वन्नभाव एव यावत्समीचीनरेतोभावः, तस्मादुपलक्षणतैव चरणश्रुतेर्युक्ता, तस्मादनुशयसहित एव वृष्टिभावं प्राप्नोतीति सिद्धम् ॥ १० ॥

फलांश एवानुशय इति तु स्वमतं, कर्म फलञ्च द्वयमेवेश्वरेच्छया नियतं, कर्म पुनर्भगवत्स्वरूपमेव ब्रह्मवादे, सों[6]शोभिव्यक्तः फलपर्यन्तं तदादिसंयोग इति स्वमतं, अन्तसंयोगपक्षमाहैकदेशित्वज्ञापनाय,

---

रमणीयाचरण कुर्यादितिरीत्या श्रुतेर्विधायकत्वं कल्पनीयमित्यर्थः, इष्टानिष्टेत्यादि, 'पुण्यः पुण्येन कर्मणा भवति पापः पापेने'तिश्रुतिवदित्यर्थः, अनुशयसहभावः फलभोगशेषसामग्रीरूपानुशयसहभावः, तदपेक्षत्वात्, तस्याः श्रुतेः रमणीयचरणश्रुतेरपेक्षत्वादवश्यापेक्षत्वादित्यर्थः, धूमादिमार्गे चरणश्रुतेरावश्यकतां बोधयन्ति काम्येत्यादिना, सुखानन्तरं पुण्यफलभोगानन्तर, असमीचीनशरीरप्राप्तिः धूममार्गेणासमीचीनशरीरप्राप्तिर्धूममार्गीयानेवोद्दिश्यत इति श्रुतिप्रवृत्तेस्तेषामेव चरणश्रुतिसापेक्षत्वादित्यर्थः, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्युक्तेर्धूममार्गस्य समासत्वेन पञ्चाग्निविद्यायां चरणश्रुतेरपेक्षाभावात्, अन्यनिषेधार्थं धूममार्गिणां निषिद्धयोनिनिरासार्थं, नानुशयप्रतिबन्धिका पञ्चाग्निविद्यावतां ज्ञानिदेहप्राप्त्यर्थोनुशय उक्तसामग्रीरूपस्तस्य प्रतिबन्धिका चरणश्रुतिर्नेत्यर्थः, सकामनिःकाममार्गद्वयेप्यनुशयावश्यकतां चरणश्रुतेरुपलक्षणार्थत्वञ्च साधयन्ति किञ्चेत्यादिना, नाद्या वेदबाह्यमतत्वान्नाद्येत्यर्थः, द्वितीये रमणीययोनेः सकारणत्वाङ्गीकारे, स्वकर्मणा स्वकर्तृककर्मणा स्वोद्देश्यकपुत्रादिकृतकर्मणा वा, पितृलोकः कर्मजन्यानुशयद्वारा पितृलोकः, एवमग्रेपि कर्मजन्यानुशयद्वारैव तत्तत्फलावाप्तिर्बोध्या, प्रजामित्यादि कर्मजन्यानुशयद्वारा पौत्रादिभावं प्राप्नुवन्तीत्यर्थः, तथैव वृष्ट्यादिद्वारैव, सर्वेषां कर्तृकर्मफलानां, ऐक्यं एकजातीयत्वं, भिन्नरूपत्वात् तत्तज्जातीयानां त्रिकाणां विजातीयरूपत्वात्, एकं एकजातीयं त्रिकं, अपरत्र विजातीयत्रिके, उपरोधप्रसङ्गात् कस्य कारणस्य किं फलमित्यनिर्णयापत्तेः, तथा च तत्तत्फलनियमार्थमवश्यमनुशयो वक्तव्यः, प्रकृतेपि चरणवाक्यस्थलीये धूममार्गेपि, भक्षणभवनयोः धूममार्गवाक्ये वा नानान्नभक्षणस्य नानायोनिभवनस्य चोक्तत्वेनानुशयाभावे तयोर्नियमो न स्यादित्यर्थः, ननूत्तमचरणमेवोत्तमभवनभक्षणयोर्नियामकं स्यादत आहुर्ब्राह्मणानामित्यादि, तथा च वृष्टिद्वारान्ने प्रविष्टधूममार्गीयादिजीवानामुत्तमैर्भक्षितान्नद्वारोत्तमयोनौ रेतःसेकद्वारोत्तमजन्मप्राप्तिरनुशयसाध्यैव नतूत्तमचरणश्रुत्यर्थज्ञानसाध्या, अशयस्यानियामकत्वे तु ब्राह्मणान्नस्य श्वश्वपाकादिभक्षितस्य मध्य एव तेषां जीवानां गमनं कुतो न स्यात्? अनुशयस्य नियामकत्वे तु किमपि भक्षजातीयमस्त्वनुशयादेवोत्तमोत्पत्तिर्भविष्यति ॥ १० ॥

---

१. फलविज्ञानादिति कपुपुस्तकयोः । २. न्यायेनेति लुप्तं कपुपुस्तकयोः । ३. प्रतिषेधिकेति कपुवप्रकाशगोपुस्तकेषु । ४. रमणीया योनिरिति पुपुस्तके । ५ ब्राह्मणादीनामिति कपुपुंवप्रकाशगोपुस्तकेषु । ६. सोभिव्यक्त इति बप्रकाशयो

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते, तेन मोक्षपर्यन्तमनुशयोनुवर्तिष्यत इतिसूत्रफलं, तुशब्देन निरनुशयपक्षशङ्कैव नास्तीत्युक्तं, एवं द्वितीयाहुतिर्निर्धारिता ॥ ११ ॥ २ ॥

॥ इति तृतीयाध्याये प्रथमपादे द्वितीयं कृतात्ययाधिकरणम् ॥ २ ॥

---

तुल्यत्वेन विचार ऐक्ये वा पञ्चाहुतिधूममार्गयोः सोमभावङ्गतस्य पुनरावृत्त्युपसंहार उपलक्षणेनापि पापाचारवतामुपसंहारदर्शनात्तेषामप्याहुतिसम्बन्धो धूममार्गश्च प्राप्नोति तन्निराकरणार्थमधिकरणारम्भः,

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ ( ३. १. ३. )

नन्वनिष्टादिकारिणामपि सोमभावः श्रूयते इष्टादिकारिव्यतिरिक्तानां[1] "ये वै के चास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" ( कौषी. १. २. ) इति कौषीतकिनः समामनन्ति, अत्र च "कपूयां योनिमापद्यन्ते" ( छान्दो. ७. १०. ७. ) इतिपर्यवसानं, तेन सर्वे चन्द्रमसं गच्छन्ति, अयमाशयः, कर्माकर्मविकर्मेति त्रिविधो[2] विधायको वेदः, "अग्निहोत्रं जुहुयात्" (मैत्री. ६. ३६.) "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषं" (कौर्म.उ. २१. २७.)[3] "न हिंस्याद्भूतजातानि" (श्रीमद्भाग.६.१८.४७.), ब्राह्मणादीनामपि त्रिविधकरणं सम्भवति, न हि सर्वोप्येकान्ततो विहितं वा प्रतिषिद्धं वा करोति, ततो विहितकर्तुरपि त्रयसम्भवाज्ज्ञानाभावेन फलभोगनैयत्यात् सोमभावानन्तरमेवाकर्मविकर्मभोगो वक्तव्यः, अत एवोविशेषोपसंहारौ[4], तस्मात् सोमभावानन्तरमेव सर्वेषां जन्मेति प्राप्तम् ॥ १२ ॥

---

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ इतःपरं भगवद्रूपकर्मात्मकस्य फलशेषसामग्रीरूपस्य कियत्कालमनुवृत्तिरितिविवेकार्थं सूत्रमवतारयन्ति फलांश इत्यादिना, तथा च फलं भगवत्स्मृतियुक्तं जन्म तत् सम्पाद्यानुशयो निवर्ततेग्रे स्मृत्यादितो मोक्षः फलं, द्वयमेव 'एष उ एवे'तिश्रुत्या द्विविधमेवेत्यर्थः, सः कर्मात्मको भगवान्, अभिव्यक्तः फलरूपेणाविर्भूतः, तदादिसंयोगः फलोत्पत्तिपर्यन्तमादिकालमारभ्य पुरुषेनुशयसम्बन्ध उत्तरं तिरोधत्तेनुशय इत्यर्थः, बादरायणाचार्यस्य मतं तु फलान्तपर्यन्तमनुशयस्तिष्ठतीति, अनुशयोप्येतन्मते कर्मशेषरूप एव न तु भाविफलशेषसामग्रीरूप', स च न सर्वसम्मत इत्येकदेशित्वोक्त्यास्वरसः सूचितः, सूत्रार्थमाहुः सुकृतदुष्कृते इति, अनारब्धफले सुकृतदुष्कृते अनुशयपदवाच्ये इति बादरिसूत्रार्थः, व्यासाभिप्रायस्तु यथाकथञ्चिदनुशयावश्यकता, शब्देन 'एष उ एवे'तिशब्देन ॥ ११ ॥ २ ॥

इति तृतीयप्रथमे द्वितीयाधिकरणम् ॥ २ ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ पूर्वाधिकरणेन गतार्थतायामधिकरणान्तरानर्थक्यमिति सार्थक्यं समर्थयन्ति तुल्यत्वेनेत्यादिना, तुल्यत्वेन पञ्चाग्निविद्यया धूममार्गेण च सोमभावं प्राप्तयोस्तुल्यत्वेन, ऐक्येति, अभेदे वा. एकजातीयत्वे इत्यर्थः, उपसंहारे उपसंहरणबोधकश्रुतौ, उपलक्षणेनापि 'ये वै के' इति-श्रुतौ यत्किंशब्दयोर्मृतमात्रपरत्वेनापि, तन्निराकरणार्थं कपूयचरणानां सोमभावनिराकरणार्थं, 'कपूयचरणाः कपूयां योनिमापद्यन्त' इतिश्रुत्या निराकरणार्थमित्यर्थः, पर्यवसानं सोमभावप्राप्त्युत्तरकालीनस्य कथनं पूर्वपक्षेभिप्रेतमित्यर्थः, अग्निहोत्रमिति कर्मविधिः, 'यस्य वेदश्च वेदी चे'त्यकर्मबोधकं, 'न हिंस्यादि'ति विकर्मबोधकं तदपि निषेधमुखेनैव, एकान्ततः नियमेन, ततः नियमाभावे सति, ज्ञानाभावेनेति, ज्ञानसत्त्वे तु ज्ञानाग्निना कर्मफलनाशनान्न भोगः सम्भवतीत्यर्थः, सोमभावानन्तरं कर्मफलभोगानन्तरं, उपसंहारौ 'तद्य इह रमणीयचरणाः' 'तद्य इह कपूयचरणा' इतिवाक्याभ्यां फलद्वयोपसंहारौ कृतौ ॥ १२ ॥

---

१. इष्टादिव्यतिरिक्तानामिति गोपुस्तके । २. त्रिविधकर्मविधायक इति बगोपुस्तकयो । ३. याज्ञवल्क्यदानश्राद्धप्रकरणापरार्कटीकायान्तु यमवाक्यत्वेनोपन्यस्तमिदम् । ४. विशेषेति पुंपुस्तके ।

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः पक्षं व्यावर्तयति, विहितव्यतिरिक्तकर्तॄणां संयमने यमसन्निधाने सुखं दुःखं वानुभूय आरोहावरोहौ अनुभवार्थमारोहः अनुभूय अवरोह इति, कुतः? तद्गतिदर्शनात्, तेषां गतिर्विसदृशी दृश्यते, वेदे हि प्रथमं विहिता द्वेधा गतिः सकामा निःकामा चेति, सकामा यथाकाममनन्तविधा, निःकामा ज्ञानरहिता द्विविधा वैदिकगृह्यस्मार्तभेदेन, तत्र गृह्यस्मार्ते यमः, श्रौते सोमभावः, तत्र त्रेताग्निविधानेन "निःकामानामदम्भानां पुण्यः स्यात्" ( ) इत्यधिकारिविशेषणाद्विशेषतः सामान्यतश्च प्रायश्चित्तविधानाच्च "दर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते" ( तै.आ.२.८. ) इति "तरति ब्रह्महत्यां" ( तै.सं.५.३.१२. ) इति च सर्वप्रायश्चित्तविधानाद्ब्रह्मानुभवाभावे सोमगतिरेव, पूर्वजन्मधर्मस्य चित्तशुद्धावुपयोगः, तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वं, अतः पापस्याभावात् पुण्यस्योपक्षीणत्वात् तस्य पञ्चाग्निप्रकार एव, ज्ञानोपयोगिजन्मनि पापसंश्लेषाभावोपायमग्रे वक्ष्यति, पितृमेधप्रथमाहुतिमन्त्रस्तु मन्त्रत्वाच्चमसवन्न गतिनियामकः, त्रेताग्निविद्यारहितानां पुण्यपापोपभोगो यम एव, "वैवस्वते विविच्यन्ते यमे राजनि ते जनाः ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः" ( तै.आ. ६.५. ) इति, यमगतेः पञ्चाग्निविद्यायाश्चैषा व्यवस्था, चित्तशुद्धिभावाभावाभ्यां वावश्यं काण्डद्वयव्यवस्था, एकस्यैतद्वक्तव्यं, सकामनिःकामभेदो वा, वेदान्तिनामपि पापार्थं यमापेक्षणात् सा गतिर्वक्तव्यैव, तस्मान्न सर्वेषां सोमगतिः ॥ १३ ॥

---

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ पक्षं मृतमात्रस्य सोमभावरूपं पूर्वपक्षं, अनुभवार्थं नानालोकीयसुखानुभवार्थं, अनुभूय सुखस्वमनुभूयेत्यर्थः, तेषां विहितकर्मातिरिक्तकर्तॄणां, विसदृशी सोमभावविरुद्धा, वैदिकेति वैदिक्येका, गृह्यस्मार्तीया द्वितीयेतिभेदेनेत्यर्थः, पूर्वजन्म चन्द्रभावपूर्वतनं जन्म, तथा चार्धाधानिनां स्मार्तश्रौतोभयधर्मसत्त्वेप्यनन्त्यस्मार्तस्य धर्मस्य चित्तशुद्धिद्वारा श्रौतफले चन्द्रभाव उपयोगो न तु तस्य पृथक् फलं, तदानीन्तनस्य चन्द्रभावपूर्वजन्मनि स्थितस्य, श्रौताङ्गत्वं चन्द्रभावरूपफलाङ्गत्वं, सिद्धमाहुरत इत्यादिना, उपक्षीणत्वात् चन्द्रभावे उपक्षीणत्वात्, पञ्चाग्निप्रकार एव पञ्चाग्निविद्यायामुक्तं ज्ञानोपयोगिदेहप्राप्तिरूपं फलमेवेत्यर्थः, अग्रे वक्ष्यति 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि'ति सूत्रे वक्ष्यतीत्यर्थः, तदधिगमे ज्ञानोपयोगिदेहोपगमे, ननु ब्रह्मज्ञानवतामाहिताग्नीनां प्रथमाहुतिरूपाग्निसंस्कारे चन्द्रभावोब्रह्मज्ञानां तेषामग्निसंस्कारे यमलोकगतिरित्यसङ्गतमुभयोरपि पितृमेधक्रियायां 'वैवस्वतं सङ्गमन'मितिमन्त्रे यमलोकप्राप्तिश्रवणादित्यत आहुः पितृमेध इत्यादि, प्रथमाहुतिः अग्निसंस्काररूपा, मन्त्रत्वात् सिद्धार्थबोधकत्वेनापि विधायकत्वात्, चमसवत् 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यस्य यथा सिद्धार्थबोधकत्वेनापि विधायकत्वं तद्वदित्यर्थः, तथा च त्रेताग्निरहितानामेव सा गतिर्मन्त्रे त्रेताग्निबोधकाभावात्, एतदेवोपपादयन्ति त्रेताग्नीत्यादिना, एषा व्यवस्था उक्तपञ्चाग्निविद्यावतां श्रौतानां चन्द्रभावस्तद्भिन्नानां यमलोकगतिरितिव्यवस्थेत्यर्थः, काण्डद्वयव्यवस्था चित्तशुद्धिसत्त्वे पञ्चाग्निविद्याया उत्तरकाण्डफलमन्यथा पूर्वतनकर्मकाण्डफलं यमलोकादिरित्यर्थः, एकस्य उत्तमाधमफलाधिकारिणोरेकस्मिन् फलं व्यवस्थापकमवश्यं वक्तव्यमित्यर्थः, ननूत्तरकाण्डनिष्ठानां ज्ञानाधिकारिणां न यमलोकार्थं व्यवस्थेत्यत आहुर्वेदान्तिनामित्यादि, तथा च 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदि'तिवचनाज्ज्ञानानिष्पत्तौ तेषामपि व्यवस्थावश्यकीत्यर्थः ॥ १३ ॥

---

१. तुशब्द इत्यारभ्य कर्तॄणामित्यन्तं लुप्तं पुंपुस्तके । २. आरोहावराविति बपुस्तके । ३. अनुभवार्थमारोहमिति कपुस्तकेनुभवार्थमारोह इति च सप्तम्यन्तम्पुपुस्तके । ४. इतिपदं लुप्तं बपुस्तके । ५. प्रथमविहितेति पुंपुस्तके । ६. द्विधेति पुंगोपुस्तकयोः । ७. निःकामानामितिवाक्यं स्मार्तमित्युक्त्वा पुण्य इतिपदस्य पुण्यो लोक इतिव्याख्यानमाहुः श्रीप्रकाशकाराः, श्रीविवरणकारा अप्येवमेव, पुण्यमितिपाठः कपुपुंबपुस्तकेषु । ८. तरति तरतीति कपुगोपुस्तकेषु । ९. ज्ञानोपयोगेति पुंगोपुस्तकयोः । १०. ये वै हेति कपुपुस्तकयोः । ११. वेति कगोपुस्तकयोः । १२. चेति पुंपुस्तके ।

## स्मरन्ति च ॥ १४ ॥

स्मरन्ति च व्यासादयो "यमेन पृष्टस्तत्राहं देवदेव जगत्पते पूर्वन्त्वमशुभं भुङ्क्ष उताहो नृपते शुभम्" ( श्रीमद्भाग. १०.६१.२२. ) इत्यादि, चकाराल्लोकप्रसिद्धिः ॥ १४ ॥

## अपि सप्त ॥ १५ ॥

चेत्यनुवर्तते, पापोपभोगार्थं यमालयगमनमङ्गीकर्तव्यं, यतस्तत्र नरकाः सप्त सन्ति रौरवादयः, सप्तसङ्ख्या सङ्ख्याभेदेष्ववरकक्षा, सर्वथानिराकरणाभावाय सप्तग्रहणं, तस्माद्यमगतिरस्ति ॥ १५ ॥

किञ्चिदाशङ्क्य परिहरति,

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

ननु नर[1]केषु चित्रगुप्तादयो भिन्ना एवाधिकारिणः सन्ति तथा सति तृतीय[2]ः पक्षः स्यादत आह, तत्र नरकादिषु येऽधिकारिणस्ते यमायत्तास्तत्सेवकाः, अतो यमस्यैव तत्रापि व्यापारान्न तृतीयपक्षप्राप्तिः, चकारात् सुखदुःखभोगेऽपि तृतीयपक्ष एव विरोधः ।

अथवा यमगतेर्मन्त्रलिङ्गसिद्धेः पापस्य च पौराणिकत्वे चन्द्रगतिरेकैव स्यादितिविरोधः, तेषां यमसेवकत्वे तु मन्त्रलिङ्गपोषकत्वान्मार्गद्वयसिद्धेरविरोधः, तस्माद्यमगतिरस्तीति सिद्धम् ॥ १६ ॥ ३ ॥

॥ इति तृतीयाध्याये प्रथमपादे तृतीयमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥

---

स्मरन्ति च ॥ १४ ॥ लोकप्रसिद्धिः शुभकर्मकारिणां यमलोकप्राप्तिरितिलोकप्रसिद्धिरित्यर्थः ॥ १४ ॥

अपि सप्त ॥ १५ ॥ सर्वथेत्यादि, तथा च सर्वेषां नरकाणां भोगभावेऽप्यवरसङ्ख्याविशिष्टस्य कस्यचित्तु भोगो भवत्येवेत्यनिवार्यत्वं सप्तसङ्ख्यया द्योतितम् ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ परिहरति सूत्रकारः परिहरतीत्यर्थः, तथा सति नरकप्राप्त्यङ्गीकारे सति, तृतीयःपक्षः सोमभावयमलोकाभ्यामतिरिक्तचित्रगुप्ताद्यधिकारको नरकप्राप्तिरूपस्तृतीयः पक्षः स्यादित्यर्थः, सुखदुःखेत्यादि, तथा च पुण्यपापयोः सुखदु.खान्यतरफलजनकत्वनियमात्तृतीयपक्षसत्त्व एव विरोध इत्यर्थः, मन्त्रलिङ्गसिद्धेः 'वैवस्वतं सङ्गमनमि'तिमन्त्रलिङ्गसिद्धेरित्यर्थः, एकैव स्यात् यमगतिचन्द्रगत्योः श्रुत्युक्तत्वेनैकजातीयत्वमेव स्यादित्यर्थः, विरोधः चन्द्रगतियमगत्योरेकजातीयश्रौतत्वेन पापस्य च पौराणिकत्वेन द्वयोरेव सिद्धेस्तृतीयपक्षसत्त्व एव विरोध इतिभावः, तेषां चित्रगुप्तादीनां, मन्त्रलिङ्गपोषकत्वात् मन्त्रलिङ्गप्राप्तयमगतिपोषकत्वादित्यर्थः, अविरोधः चन्द्रगत्यधिकारिभिन्नानामेव यमगतेः सम्भवादविरोध इत्यर्थः, यमगतिरस्तीति चन्द्रगत्यनधिकारिणां भिन्नै[3]गतिरस्तीत्यर्थः ॥ १६ ॥ ३ ॥

इति तृतीयप्रथमे तृतीयाधिकरणम् ॥ ३ ॥

---

१ नरक इति गोपुस्तके । २ तृतीय इत्यारभ्य व्यापारान्नेतिपर्यन्तं लुप्तं पुंपुस्तके । ३. यमगतिरिति जापुस्तके ।

साधारणत्वाभावाय पूर्वोक्तार्थसाधकमधिकरणमारभते,

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ ( ३. १. ४. )

ननु "ये के चास्माल्लोकात्प्रयं[1]न्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" ( कौषी. १. २. ) इत्यस्याः श्रुतेः का गतिः ? पञ्चाग्निविद्याप्रस्तावे वा यमगतिः कुतो नोक्ता ? तस्माद्वेदविरोधान्न तृतीयपक्षसिद्धिरित्याशङ्कां परिहरति तुशब्दः, अत्र वेदान्ते गौणमुख्यफलदेहार्थं विद्याकर्मणोरेव हेतुत्वेन निरूपणं विद्यया देवयानं कर्मणा सोमभाव इति, तयोरेव प्रकृतत्वात् कारणत्वात्, तेन कौशीतकि[2]ब्राह्मणेपि प्रकृतत्वात् कर्मिण एव सर्वशब्देनोक्ताः, अत्रापि न यममार्ग उक्तः, तस्माद्विद्याकर्मणोर्मुख्यत्वान्मार्गद्वयमेवोक्तं, नैतावता तृतीयबाधः ॥१७॥

ननु द्वयोः स्तुत्यर्थं यस्तृतीयो मार्ग उक्तः "अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्रा[3]ण्यसकृदावर्तीनि भूतानि भवन्ति" ( छान्दो. ७. १०. ८. ) इत्यादिना "जुगुप्सेत" ( छान्दो. ७.१०.८. ) इत्यन्तेन तृतीयनिन्दया द्वयोः स्तुतिरिति स एव तृतीयोस्तु किं यममार्गेणेत्यत आह,

## न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये मार्गे तथा पुण्यपापयोरुपभोग उपलभ्यते, यतः समानब्राह्मणे "कीटाः[4] पतङ्गा यदि दंदशूकं" ( बृह.८.२.१६. ) इति योनौ निर्वृतेर्विद्यमानत्वान्न महत्[5]पापोपभोगः, नापि कीटादिषु महासुखोपभोगः, एकवाक्यता चोभयोरुक्ता, यद्यपि महाराजादिराजदण्डादिषु तथोपभोगः सम्भवति तथापि रम्भादिसम्भोगे[6] नरके च यथा तथा न सम्भवति, जडे तु पञ्चम्याहुतिर्भरत एव [7]हीश्वरेच्छया जन्मद्वयमधिकं "त्रिभिः" ( श्रीमद्भा. ११. २. १८. )

---

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ साधारणत्वाभावाय सर्वेषामेव मृतानां साधारण्येन चन्द्रलोकप्राप्त्यभावायेत्यर्थः, पूर्वोक्तार्थसाधकं यमलोकगत्यधिकारिणां यमलोकसाधकं, तुशब्दव्याख्यानमुखेन यमलोकरूपतृतीयगतिं साधयन्तः सूत्रव्याख्यानमाहुर्नन्वित्यादिना, का गतिः यमगत्यङ्गीकारे सर्वेषां चन्द्रगतिविरोधाद्यमगतिः श्रुतिविरुद्धेत्यर्थः, कुतो नोक्तेति, तथा च पञ्चाग्निविद्यावतोपि यदि यमगतिरभिप्रेता स्यात्तदा पञ्चाग्निविद्याप्रस्तावे यमगतिरुक्ता स्यात्तस्माद्विरुद्धत्वान्न यमगतिसिद्धिरितिभाव., तृतीयपक्षसिद्धिरिति, चन्द्रगति-देवयानपक्षाभ्यां तृतीयः पक्षो यमगतिः सात्र सिद्धेत्यर्थः, फलदेहार्थं फलभोगोपयोगिदेहार्थं, तयोरेव विद्याकर्मणोरेव, प्रकृतत्वात् प्रकरणवशप्राप्तत्वात्, कारणत्वात् देवयानसोमगतिकारणत्वात्, अत्रापि कौशीतकिब्राह्मणेपि, न यममार्ग उक्तः अप्रकृतत्वान्न यममार्गः सर्वेषामुक्त इत्यर्थः, एतावता अप्राकरणिकत्वेनानुक्त्या, तृतीयः यमगतिरूपः ॥ १७ ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥ ननु बहुशोगत्यागतिरूप एव तृतीयमार्गोस्तु न तु यमगतिरूप इति-शङ्कानिराकरणमुखेन यमगतेस्तृतीयत्वं साधयन्ति नन्वित्यादिना, द्वयोः चन्द्रगतिदेवयानयो', एतयोः चन्द्रगतिदेवयानयो., न कतरेण एतदुभयभिन्नेन, तृतीयनिन्दया बहुशोगत्यागतिरूपतृतीयमार्गनिन्दया, द्वयोः चन्द्रगतिदेवयानयोः, समानब्राह्मण उत्तमगतिद्वयप्रतिपादकब्राह्मणे समानब्राह्मणे बृहदारण्यस्थं, कीटाःपतङ्गा इति, निर्वृतेः तादृशयोनिगतसुखविशेषस्य, विद्यमानत्वात् श्रुतौ श्रूयमाणत्वात्, एकवाक्यता चोभयोरिति, समानब्राह्मणोपादानात् 'कीटाः पतङ्गा'इत्यस्य चन्द्रगतिदेवयानप्रतिपादकब्राह्मणेनैकवाक्यता न तु यमगतिबोधकमन्त्रेणाप्येकवाक्यता विभिन्नस्थानीयत्वान्मन्त्रस्य, ननु पञ्चाग्निविद्यावतो भरतस्याग्रे हरिणब्राह्मणजन्मद्वयदर्शनेन यममार्गसमानत्वाद्यममार्गः पञ्चाग्निविद्यामार्ग एव प्रविशतु एवं चासकृदावृत्तिमार्ग एव तृतीयो भविष्यतीत्यत आहुर्जडेत्वित्यादि, जन्मद्वयं हरिणब्राह्मणजन्मद्वयं, वचनं तु नारदस्यैकादशस्कन्ध ऋषभान् प्रस्तुत्य "उपासीनस्तत्पदवीं लेभे

---

१ प्रयान्तीति पुंबपुस्तकयो प्रतियन्तीति च गोपुस्तके । २. कौषीतकीति कपुपुंबगोविवरणेषु । ३. क्षेत्राणीति पुपुंगोपुस्तकेषु । ४. कीट. पतङ्ग इति पुंबप्रकाशगोपुस्तकेषु कीटः पतङ्गा इति कपुपुस्तकयोः । ५. महापापोपभोग इति बपुस्तके । ६. °संयोग इति बपुस्तके सम्भोगेनेति च कंगोपुस्तकयोः । ७. हिपदं लुप्तं पुंपुस्तके ।

इतिवचनात् "भरतोह" (श्रीमद्भाग. ५. १२. १४.) इतिप्रतीतेश्च, ततः पूर्वमस्मरणाद्बाल्यादिवदेव जन्मत्रयं, तस्मा "जायस्व" ( छान्दो. ७. १०. ८. ) इत्यादिवैलक्षण्यादतिरिक्तो यममार्गः, पञ्चाहुतिनियमाभावस्तु ज्ञानोपयोगिदेहेप्यंशावतरणे पुष्टिमार्गत्वान्न तत्र दोषः ॥ १८ ॥

साधकान्तरमाह,

**स्मर्यतेपि च काले ॥ १९ ॥**

अपि च लोके[1]पि मूर्च्छादिषु यमलोकगमनसम्भाषणपुनरागमनानि स्मर्यन्ते ॥ १९ ॥

**दर्शनाच्च ॥ २० ॥**

यमपुरुषा दृश्यन्तेपि कैश्चिदजामिलप्रभृतिभिः, चकारात् तेषां वाक्यादिश्रवणं, तस्माद्वैवस्वतमार्गे न किमपि बाधकमिति सिद्धम् ॥ २० ॥ ४ ॥

॥ इति तृतीयाध्याये प्रथमपादे चतुर्थं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥

तृतीयामाहुतिं विचारयति, तत्र "वृष्टेरन्नं भवति" ( छान्दो. ७. ६. २. ) इति तृतीयाहुतिः सफला, पूर्वद्वयं शब्दैकसमधिगम्यं, "वृष्टेरन्नं"[2] ( छान्दो. ७. ६. २. ) इति साधनफलयोः प्रत्यक्षत्वान्न वृष्टिमात्रेणान्नं भवति बीजव्यतिरेकेण, बीजस्य हि फलं, न निमित्तमात्रेण तद्भावो वक्तुं शक्यते, तस्मादसङ्गतं "वृष्टेरन्न"मित्याशङ्क्याह,

**तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ ( ३.१.५. )**

तृतीयशब्दावरोधः तृतीयाहुतौ शब्देन शब्द[3]साम्येन कारणभूतस्य जलस्य अवरोधो ग्रहणं, "सदेव सौम्ये[4]दमग्र आसीत्" (छान्दो. ८. २. १.) इत्यत्र "तत् तेज ऐक्षत" ( छान्दो. ८.२.२.) "बहु स्यां प्रजायेय" ( छान्दो. ८. २. ३. ) इति "तदपोसृजत" (छान्दो. ८. २. ३.) "तस्माद्यत्र क्व च शोचति स्वेद[5]ते वा पुरुषस्तेजस एव तदध्यापो जायन्ते" ( छान्दो. ८.२.३.) इत्यत्र कारणरूपापान्निरूपणे शोकज[6]त्वमपामुक्तं, अग्रे च "तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति" (छान्दो. ८. २. ४.) इति, अतः पञ्चाग्निविद्यायामपि देवहोमात् कारणभूतैव

---

वै जन्मभिस्त्रिभि'रिति, प्रतीतेः पञ्चमस्कन्धे 'अहं पुरा भरतो नाम राजे'ति जडोक्तायाः प्रतीतेरित्यर्थः, इत्थ च नारदवचनेन वैराग्यसम्पज्जडवचनेन च स्मृतिसम्पदनुशयफलरूपा जडजन्मन्येव जातेति फलितं, ततः पूर्वं जडजन्मन' पूर्वं, बाल्यादिवदेवेत्यस्मरणहेतुः, ननु विदुरार्जुनादौ सोमभावासम्भवात् पञ्चाहुतिनियमभङ्ग इत्यत आहुः पञ्चाहुतीत्यादि, पुष्टिमार्गत्वात् भगवदनुग्रहमार्गत्वात्, न तत्र दोषः इच्छाकृतभङ्गस्येच्छेतरासमाधेयत्वान्न दोष इतिभावः ॥ १८ ॥

स्मर्यतेपि च काले ॥ १९ ॥ साधकान्तरं यमगतेस्तृतीयत्वे साधकान्तरम् ॥ १९ ॥

दर्शनाच्च ॥ २० ॥ सिद्धमिति, इत्थ च 'जायस्वे'तिमार्गस्यापि यममार्ग एव प्रवेशो बोध्यः ॥ २० ॥ ४ ॥

॥ इति तृतीयप्रथमे चतुर्थाधिकरणम् ॥ ४ ॥

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ अधिकरणप्रयोजन विशदयन्ति तृतीयेत्यादिना, सफला अन्नरूपफलसम्पादिका, साधनफलयोः अन्नतत्कारणयो., प्रत्यक्षत्वात् लोकेन्वयव्यतिरेकाभ्यां प्रत्यक्षसिद्धत्वादित्यर्थः, निमित्तमात्रेण समवायिकारणबीजं विना वृष्टिमात्रेणेत्यर्थ , शब्दसाम्येन कार्यकारणोभयजलेपि जलशब्दार्थस्य सत्त्वेन, जलस्य कारणरूपतायां सम्मतिमाहुः 'सदेवे'त्यादिना, शोचति स्रष्टुमिच्छति, स्वेदते जलं सृजति, तदधि तेजोधि तेजसः सकाशादित्यर्थ., शोकजत्वं कारणेक्षणजन्यत्वं, देवहोमात् पृथिवीरूपाग्नौ

---

१. लोक इति सर्वेष्वादर्शेषु । २. भवतीति लुप्तं बपुस्तके । ३. शब्दे साम्येनेति पुपुपुस्तकयो. । ४. सोम्येति पुपुबपुस्तकेषु । ५. स्वदत इति कपुपुस्तकयो. । ६. शोकत्वमिति पुपुस्तके ।

**वृष्टिर्जातेति नात्र बीजान्तरापेक्षा, शोकपदेन "यदश्रवंशीयत तद्रजतं हिरण्यमभवत्** (तैत्ति. सं. १. ५. १.) **इतिसहायः सूचितः, यद्यपि तत्रान्नशब्देन पृथिवी तथाप्यत्र पृथिव्या अग्निसमिद्रूपत्वादन्नमेव, तस्मात् कारणशक्तियुक्ताया वृष्टेरन्नं भवतीति न काप्यनुपपत्तिः ॥२१॥**

**किञ्चिदाशङ्क्य परिहरति, ननु कारणजलरूपवृष्टिरत्र वक्तुं न शक्यते, यतः समानधूममार्गे श्रुतौ वृष्टेरन्नाभावे ऐक्ये वा "तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तते यथेतमाकाशं"** (छान्दो.७.१०.५.)**इत्यादिना "तिलमाषा"** (छान्दो. ७.१०.६.) **इति "जायन्ते"** (छान्दो.७.१०.६.) **इत्यन्तेन तत्र "यथेतं"** (छान्दो.७.१०.५.) **इति आकाश एव, "आकाशाच्चन्द्रमसं"** (छान्दो. ७. १०.४.) **इति पूर्वमुक्तत्वादाकाशस्य मार्गत्वं, "वायुर्भूत्वा धूमो भवति"** ( छान्दो. ७.१०.५. ) **इत्यादिषु तत्तद्भावः श्रूयते, ते च विकृतास्तदनन्तरभावित्वात्, वृष्टिरपि विकृतैव, तस्मान्न कारणत्वमित्याशङ्क्य परिहरति,**

## साभा व्यापत्तिरुपपत्तेः ॥ २२ ॥

**सा वायुवादिरूपापत्तिः आभा व्यापत्तिरेव, वायुवदाभा आभानं मध्ये वायुमण्डलेनागच्छन्ती आहुतिर्वायुभवनशब्देनोच्यते, आकृतेरेव पदार्थत्वात्, व्यापत्तिशब्देन च तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशान्नाश इवेति द्योतयति, कुतः? उपपत्तेः, तथैवोपपद्यते, चित्रतुरगादिषु विकारस्य विकारान्तरापत्तावियमेव व्यवस्था, उपासनायां न तदपि, न च "भूत्वा"श्रुतेर्बाधः, प्रतिनियतपदार्था हि ते, भावनावरोहाभ्यामेव तथावचनात्, अन्यस्यान्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति, कारणांशव्यतिरिक्तस्थले तथैव प्रतीतेः, तस्मात्तदाकृतिमात्रेण न स्वरूपान्यथाभावः ॥ २२ ॥**

---

वृष्टिरूपाहुतेर्देवैःकरणादित्यर्थ., **शोकपदेन** शोकवाचक'शोचन्ती'तिपदस्य श्रुतावुपादानेन, **सहायः सूचितः** भौतिकजलस्यापि रजतादिकारणतायाः 'यदश्रिव'तिश्रुतौ प्रतिपादन आध्यात्मिकजलस्य कारणताया क· सन्देह इति दृष्टान्त· प्रदर्शित इत्यर्थ·, तत्र तैत्तिरीयश्रुतौ, **अग्निसमिद्रूपत्वात्** छान्दोग्येग्निरूपत्वेन बृहदारण्यके समिद्रूपत्वेन कथनात्तयोरेवाहुतौ योग्यत्वादित्यर्थ· ॥ २१ ॥

**साभा व्यापत्तिरुपपत्तेः ॥ २२॥ समानधूममार्गे** पञ्चाग्निविद्यामार्गसमाने धूममार्ग इत्यर्थ ,**ऐक्ये वा** पञ्चाग्निविद्याधूममार्गयोरन्नभावांशे ऐक्ये वा, **श्रुतौ** श्रुत्युक्ते, **तस्मिन्** चन्द्रलोके, **यावत्सम्पातं** तत पुन.पातपर्यन्त, **तत्तद्भावः** वायुधूमादिभावः, **ते** भावा , **तस्मात्** अनन्तरभावित्वात्, **न कारणत्वं** न वृष्टिजलस्य कारणरूपजलत्वं, **आहुतिः** वृष्टिरूपाहुति., **आकृतेरेव** वायुधूमादिभिन्नस्य जलस्यैव प्रकृत आकृतिसत्त्वात् तत्तदाकारेण प्रतीयमानमपि जलमेवोच्यते नत्वन्यदित्यर्थ., **विकारस्य** चित्रिततुरगस्य, **विकारान्तरापत्तौ** वास्तवतुरङ्गत्वेन प्रतीतिरूपापत्तौ, **इयमेव व्यवस्था** सादृश्यमात्रेणैव प्रतीतेरुपपत्तिरूपा, **उपासनायां** 'वाच धेनुमुपासीते'त्यत्र, **तदपि** आकृतिसाम्यमपि नेत्यर्थ , तथा च किञ्चिदंशेसाम्यस्थलेप्युपमेय उपमानवाचकपदप्रयोगे बहुसा[illegible]स्थले तादृशे तादृशपदप्रयोगे सुतरां सङ्गति., तादृशस्थलेपि वस्तुतादात्म्याङ्गीकारे चित्राश्वे क्रियापत्ति· 'धन्वन्निव प्रपा असी'-त्यग्निस्तुतौ अग्नौ वा प्रपाधर्मापत्ति· स्यादितिभाव., ननु वृष्टेराहुतेस्तत्तद्भावानङ्गीकारे 'वायुर्भूत्वे'तिश्रुतिविरोध इत्यत आहुर्न चेत्यादि, **प्रतिनियतपदार्थाः** जीवस्य वृष्टिद्वारावरोहे वाय्वादयस्तेषा या **भावना** तत्तदवरोहश्च यो जीवस्य **ताभ्यां गौण्या** वृत्त्या श्रुत्या 'भूत्वे'त्यादिनिर्देशः कृतो न तु वस्तुगत्या जलस्य तत्तद्रूपत्वेनेत्यर्थ., **कारणांशव्यतिरिक्तस्थले** कारण विना कार्यप्रतीतिस्थल इत्यर्थः, **तथैव** गौण्यैव, **आकृतिमात्रेण** तत्तदाकारतया प्रतीतिमात्रेण॥२२॥

---

१ वृष्टिरित्यारभ्य सूचित इत्यन्त लुप्तं कंपुस्तके। २ यदश्रव शीर्यन्त इति गोविवरणयो., अशीर्यत इति च पुपुस्तके। ३ यत इति लुप्त कंपुस्तके। ४ समानधूममार्गे च्युताविति गोविवरणयो समानधूममार्गश्रुताविति च पुपुंकबपुस्तकेषु। ५. अकाशस्येति बपुस्तके। ६ **साभा** व्यापत्तिरूपोपपत्तेरिति कपुस्तके। ७ **सा** भाव्यादिरूपापत्तिरिति कपुपुस्तके। ८. **आभा व्यापत्तिः** आभा व्यापत्तिरेवेति पुपुस्तके। ९. वायुमण्डल इति पुगोपुस्तकयो , वायुमण्डलमागच्छन्तीति बपुस्तके, सा गच्छन्तीति च गोपुस्तके। १० आदर्शान्तरे तु भवनेत्यादि। ११ वदन्निति पुपुंगोपुस्तकेषु। १२ कारणाशभावेत्यादि कपुपुंबगोपुस्तकेषु।

उपपत्त्यन्तरमाह,

नातिचिरेण विशेषात् ॥ २३ ॥

तद्रूपता च नातिचिरेण न बहुकालं तद्रूपता, कुतः? विशेषात्[1] अन्नभावापन्नस्यैव बहुकालश्रवणात्, "अतो वै खलु दुर्निःप्रपतरं"[2] (छान्दो. ७. १०. ६.) इति प्रापतरं, प्रपततरं[3] वा, वर्णलोपश्छान्दसः, अतस्तृतीयाहुतौ न चिरेणेत्यायाति, बहुकालस्थितौ हि तद्रूपता, कारणवशाद्देवानां मनुष्यभाववद्भिन्नपक्षे न कोपि दोषः, ऐक्यपक्षेपि ज्ञानवतो गृहस्थस्य दुर्लभत्वादेवंवचनं, तस्माद्वृष्टेरन्नं भवतीति सिद्धम् ॥ २३ ॥ ५ ॥

॥ इति तृतीयाध्याये प्रथमपादे पञ्चमं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥

चतुर्थ्याहुतिर्विचार्यते, ननु "संसर्गजैः कर्मदोषैर्याति स्थावरतां नरः" (मनु. १२. ९.) इति कथमस्यान्नत्वं? अपूर्वान्नत्वेपि कण्डनपाकादिषु क्लेशेन जीवस्यापगमात् कथं रेतोभावः? चर्वणौदर्यपाकस्त्वावश्यक एव, न च जीवस्य जडभावः, मर्यादाभङ्गप्रसङ्गात्, तस्मात् कथमन्नस्य रेतोभाव इत्याशङ्क्य परिहरति,

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ (३. १. ६.)

अन्याधिष्ठिते वृष्टेरन्नभावसमय एव अन्यैर्जीवैरधिष्ठितो व्रीह्यादिस्तस्मिन्न पूर्ववत्तद्भावापत्तिः, अतिथिवत् पूर्ववैलक्षण्येन वा, कुतः? अभिलापात् "व्रीहियवा[4] ओषधिवनस्पतयस्तिलमाषाः"[6] (छान्दो ७. १०. ६.) इति पूर्ववत्तद्भावमात्रं[5] न वदति किन्तु जगतिस्थितव्रीह्यादिभाव एवाभिलप्यते[7], तथा सति यथान्येषु व्रीह्यादिषु तत्तदधिष्ठातृदेवतया[8] नियुक्ता जीवास्ताना-

---

नातिचिरेण विशेषात् ॥ २३ ॥ 'अतो वै खलु दुर्निःप्रपतरं' अन्नभावात् पुरुषभवन तु प्रापतर दुर्गमतर वेत्यर्थ., वर्णलोपः तु प्रपतरमित्यत्रत्यतकारलोप, अतः बहुकालस्थित्यभावात्, न चिरेणेत्यायाति तृतीयाहुतौ वृष्टिरूपाग्नावाहुतौ जीवो बहुकाल न तिष्ठतीति न किञ्चिद्रूपता वक्तु शक्यत इत्यर्थ फलित, भिन्नपक्षे धूममार्गात् पञ्चाग्निमार्गस्य भिन्नपक्षत्वे, न कोपि दोष. धूममार्गिणामागमने य. क्लेश. स तेषां न भवतीत्यर्थः तत्र देवानां मनुष्यभावग्रहण दृष्टान्तः, वृष्टेः कारणीभूतजलादविकृतात् ॥ २३ ॥ ५ ॥

॥ इति तृतीयप्रथमे पञ्चमाधिकरणम् ॥ ५ ॥

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ अधिकरणप्रयोजनमाहु चतुर्थीत्यादिना, 'अन्नाद्रेतो भवती'ति चतुर्थ्याहुतेर्विचार. प्रयोजनं, 'पुरुषाग्नावन्न जुह्वती'ति होम्यत्वमुक्त, अन्नस्य रेतोभावे जीवस्यान्नभावे च दोषोद्धाराय विचारयितु सूत्रमवतारयन्ति नन्वित्यादिना, पञ्चाग्निप्रकारेण शुद्धस्य अपूर्वान्नत्वेपि संस्कृतान्नतुल्यान्नत्वेपि, मर्यादाभङ्गप्रसङ्गात् चेतनाचेतनविभागव्यवस्थाभङ्गप्रसङ्गादित्यर्थ, परिहरति तादृशशुद्धजीवस्यान्नभाव उक्त दूषणं परिहरतीत्यर्थः, अन्याधिष्ठित इति, उप्ते बीजे वृष्टौ जातायां जलभावापन्ना जीवा जलेन महान्नबीजे प्रविशन्ति तत्रान्यजीवाधिष्ठितव्रीह्यादौ पञ्चाहुतिप्रकारशुद्धो जीवोपि प्रविशति तथापि न पूर्ववत्तद्भावापत्तिर्वाय्वादिभाववदन्नभावापत्तिस्तादृशशुद्धजीवे नेत्यर्थः, अतिथिवत् किन्त्वतिथिवत् स्वकार्यार्थं तिष्ठति, पूर्ववैलक्षण्येन वा पूर्वमस्या अभिमानिजीवास्तद्वैलक्षण्येनाधिष्ठानाध्यासशून्यतया वा शुद्धजीवा अन्ने तिष्ठन्तीति नोक्तदोषगन्धोपीत्यर्थ., पूर्वोक्तार्थेभिलापरूपहेतुं व्याकुर्वन्ति व्रीहीत्यादिना, पूर्ववत् वायुधूमादिभाववदन्नाभेदबुद्धि शुद्धजीवेषु न वदतीत्यर्थः, व्रीह्यादिभाव एव व्रीह्यादिषु स्थितिमात्रमेव, तत्तदधिष्ठातृदेवतया नियुक्ता जीवाः व्रीह्यादेरधि

---

१ विशेषत इति गोपुस्तके । २ दुर्निष्प्रतरमिति पुगोविपु । ३. प्रपतरमिति वगोपुस्तकयो । ४ व्रीह्यादीति कपुपुस्तकयो । ५. अपूर्ववद्भावापत्तिरिति कंपुस्तके । ६. तिला मासाइति कंपुस्तके तिला माषा इति च पुंगोपुस्तकयो. । ७. अभिलाप्यत इति पुंपुस्तके । ८. तदधिष्ठातृदेवतयेति कपुपुंबगोषु ।

त्मत्वेनाभिमन्यन्ते एवमत्रापीति न कोपि दोषः, अधिष्ठाने हि वेदना, मरणानन्तरं कृमिभावस्य दृष्टत्वात्, तस्मादन्नस्य रेतोभावो युक्तः ॥ २४ ॥

किञ्चिदाशङ्क्य परिहरति

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

नन्वन्याधिष्ठानेऽङ्गीक्रियमाणे यातनाजीवानामशुद्धत्वादशुद्धमन्नं स्यात् तथा च कथ योग्यदेह इति चेन्न, शब्दात्, "देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति" (छान्दो. ७. ७. २.) इति देवैराहुतिरूपेण होमवचनाच्छुद्धत्वं, अन्यस्य हि संस्कारेणैव शुद्धिः, अन्यथा यावज्जीवं का गतिः स्यात्? तस्मात् संस्कारशब्दाच्छुद्धमेवान्नम् ॥ २५ ॥ ६ ॥

॥ इति तृतीयाध्याये प्रथमपादे षष्ठमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

पञ्चमाहुतिं विचारयति, ननु कथं पुरुषेऽन्नहोमाद्रेतोभावः? बाल्यकौमारवार्धकेषु व्यभिचारात्, तारुण्येपि न हि सर्वमन्नं रेतो भवति, जातमपि न नियमेन योनौ सिच्यते, नापि देवापेक्षा, पुरुषप्रयत्नस्य विद्यमानत्वादित्याशङ्क्य परिहरति,

## रेतःसिग्योगोथ ॥ २६ ॥ ( ३. १. ७. )

रेतःसिग्योगः पुरुषशब्देन पौरुषधर्मवानुच्यते, पौरुषश्च देशकालसंविधानेन मन्त्रवद्रेतःसेकसामर्थ्यं, न ह्येतत् सार्वजनीनं सार्वत्रिकं वा, तदर्थं देवापेक्षा, तथा सति न कोपि व्यभिचारः, कथं पुरुषशब्दमात्रेण च ज्ञायते? तत्राह अथ आनन्तर्यात्, शरीरार्थमेव देवैस्तत्रतत्र होमः

---

ष्ठातृदेवरूपा जीवा इत्यर्थः, तान् व्रीह्यादीन्, आत्मत्वेन स्वाधिष्ठानत्वेन, एवमत्रापि एवम्प्रकारेणैव होम्यव्रीह्यादिषु शुद्धजीवानामपि स्थितिरित्यर्थः, न कोपि दोषः कण्डनपेषणपचनचर्वणादावुक्तदोषाणां कोपि दोषः शुद्धनिष्पापजीवे न भविष्यतीत्यर्थः, अध्यासाभावादेव च न जडभावोपि, तदेवोपपादयन्ति अधिष्ठाने हीत्यादिना, अधिष्ठाने अधिष्ठानाभेदाध्यासेन स्वस्याधिष्ठानरूपतानिश्चये, तस्मात् पूर्वोक्तरीत्या क्लेशाभावेन जीवस्य व्रीह्यादितोपसरणासम्भवात् ॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ अन्याधिष्ठाने अशुद्धजीवाधिष्ठानस्यैव शुद्धजीवाधिष्ठानत्वाङ्गीकारे, अन्यस्य तादृशहोम्यातिरिक्ताशुद्धान्नस्य, का गतिः कथं निर्वाह इत्यर्थ, तस्मात् पूर्वोक्तात् संस्कारात्, 'जुह्वती'ति शब्दाद्वान्ने शुद्धत्वमित्यर्थः ॥ २५ ॥ ६ ॥

॥ इति तृतीयप्रथमे षष्ठाधिकरणम् ॥ ६ ॥

रेतःसिग्योगोथ ॥ २६ ॥ अधिकरणप्रयोजनमाहुः पञ्चमेत्यादि, पञ्चमाहुतिः रेत फलिकान्नस्याहुतिः, विचारांशमाहुर्नन्वित्यादिना, पुरुषे पुरुषाग्नौ, अन्नहोमात् पञ्चमाहुतिरूपान्नहोमात्, व्यभिचारात् तादृशावस्थासु सफलरेतसोऽदर्शनेन व्यभिचारादित्यर्थः, ननु पञ्चाग्निविद्यया शुद्धजीवाधिष्ठितं सर्वमेवान्नं रेतो भवति न त्वनधिष्ठितमत आहुर्जातमपीति, सर्वं रेतोभाव प्राप्तमपि, नियमेनेति तादृशनियमे प्रमाणाभावादित्यर्थः, देवापेक्षा आहुतिकरणार्थं देवापेक्षा, पुरुषप्रयत्नस्येत्यादि दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादितिभावः, पुरुषशब्देन सूत्रे रेतःसिक्पदस्य विषयवाक्ये 'पुरुषो वाव गौतमाग्निरि'त्यत्रत्यपुरुषपदेन तादृशपौरुषधर्मवानुच्यत इत्यर्थ, नन्वेतावता कथमुक्तदोषपरिहार इत्यत आहु पौरुषश्च देशकालसंविधानेनेत्यादि, तदर्थं विधानमन्त्रार्थं, तथा सति तादृशधर्मवति पुरुषेऽग्नौ हुतान्नस्य फलोपधायकरेतस्त्वे सिद्धे सति, अत एव तस्यान्नस्य रेतोभावो योनौ नियमेन सेकश्च पुत्रमन्थब्राह्मणोक्तरीत्या भवतीति पूर्वोक्तदोषनिरासः, कथमित्यादि पुरुषशब्दमात्रेण सर्व-

---

१. क्रिमिभावस्येति कपुपुस्तकयो. । २. अनङ्गीक्रियमाण इति कंपुस्तके । ३. तस्याहुतेरिति पुपुस्तके । ४ शुद्धत्वमेवान्नमितीति कंपुस्तके । ५ पञ्चमीमाहुतिमिति बपुस्तके । ६. पुरुषश्चेति कंपुंपुस्तकयो. पुरुषत्वमिति च गोपुस्तके । ७. न हीति लुप्तं पुपुस्तके । ८. तदिति पुपुस्तके । ९. सर्वजनीनमिति पुंगोपुस्तकयो. । १०. विज्ञायत इति दापुस्तके ।

कुतः, तत् कथं पञ्चमाहुतावेवान्यथा भवेत्? तस्मादानन्तर्यात् पुरुषाहुतिर्नान्नं रेतःसिग्योगः, योगशब्देनात्राप्यन्याधिष्ठानेन रेतःसिग्योगाभावः ॥ २६ ॥ ७ ॥

॥ इति तृतीयाध्याये प्रथमपादे सप्तमन्नेतस्सिगधिकरणम् ॥ ७ ॥

हूयमानं निरूप्य फलं निरूपयति, "तस्या आहुतेर्गर्भः सम्भवति" (छान्दो. ७.८. २.) इत्युच्यते, तत्र सन्देहः योनावन्तःस्थितमेव फलं बहिर्निर्गतं [२]वेति, तत्र गर्भशब्देन अन्तःस्थित एव, शरीरपरत्वे श्रुतिबाँधः स्यात्, उपसंहारोप्यग्रे कर्तव्याभावादुपपद्यते, ततश्च षण्मासानन्तरं गर्भे ज्ञानसम्भवाज्जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमित्याशङ्क्य परिहरति,

## योनेः शरीरम् ॥ २७ ॥ (३. १. ८.)

योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते, अग्रेरुत्थितस्यैव फलरूपत्वात्, मध्यभावस्याप्रयोजकत्वात्, मातृपरिपाल्यत्वाय गर्भवचनं, कलिलादिभावे पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च, शरीरशब्देन वैराग्यादियुक्तः सूचितः न तु स्वयं तदभिमानेन जात इति, तस्माद्योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ २७ ॥ ८ ॥

॥ इति तृतीयाध्याये प्रथमपादेऽष्टमं योनेःशरीरमित्यधिकरणम् ॥ ८ ॥

---

स्यादस्य रेतोभावः कथमवगम्यते तत्राहेत्यर्थः, सिद्धफलितार्थमाहुः तस्मादिति, अन्नमितिपदोत्तर किञ्चिद्विशेषोध्याहार्यः. तथा च पुरुषाग्नावाहुतिर्नान्नं किन्तु रेत सिचि योन्नयोग स इत्यर्थः, नन्वशुद्धानेकजीवाधिष्ठानत्वस्या उक्तत्वात्ताऽशान्नयोगो रेत.सिचि कथमभीष्टफलसाधक इत्यत आहुर्योगशब्देनेत्यादि, अन्याधिष्ठानेन जीवान्तराधिष्ठितान्नेन, सहार्थे तृतीया, रेतःसिग्योगाभाव इति, तथा च तादृशान्नेन सह रेत.सिचि योगाभावो लब्धः ॥ २६ ॥ ७ ॥

इति तृतीयप्रथमे सप्तमाधिकरणम् ॥ ७ ॥

योनेः शरीरम् ॥ २७ ॥ हूयमानं रेत.सिच्यन्नयोगरूपां पञ्चमाहुतिं, श्रुतिबाधः गर्भस्याहुतिफलत्वबोधकश्रुतिविरोधः, उपसंहारः पञ्चम्यामाहुता'वाप पुरुषवचसो भवन्ती'ति श्रुतिरूपः, अग्रे कर्तव्याभावात् रेतःसेकानन्तर पुरुषकर्तव्यव्यापाराभावादित्यर्थात्तस्यैव फलत्व, इत्याशङ्क्य इति पूर्वपक्ष्य, उत्थितस्य बहिर्नि.कासितस्य, यदुक्त गर्भे स्थितस्यैव स्तुत्याद्युपयोगिज्ञानस्य जातत्वादग्रे मोक्षोपयोगिज्ञानार्थं गुरूपसत्त्यादि न कार्यं तत्राहुर्मध्यभावस्येत्यादि, मध्यभावस्य गर्भे जातज्ञानरूपमध्यभावस्य, अप्रयोजकत्वात् भगवन्मायया‌प्रेपहरणादप्रयोजकत्वमित्यर्थः, उपसंहारानुपपत्तिः 'आप पुरुषवचसो भवन्ती'त्युपसंहारे रेतआहुते. पुरुषवचःपरिणामित्वोक्तेरनुपपत्तिरित्यर्थः, वैराग्यादियुक्तः शीर्यमाणत्वेन स्वदेहज्ञानाद्वैराग्यादियुक्त इत्यर्थः, स्वयं पञ्चाग्निविद्यानिष्पन्नो जीव., तदभिमानेन शरीराभिमानेन, तस्मात् पूर्वोक्तप्रकारेण जन्मशुद्धिनिरूपणात् ॥ २७ ॥ ८ ॥

इति तृतीयप्रथमेऽष्टमाधिकरणम् ॥ ८ ॥

॥ इति श्रीगोस्वामिश्रीवल्लभजीसुतगोपाललालजीविरचितेऽणुभाष्यपदप्रदीपे तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

१ नात्रेति कबपुस्तकयो, प्रकाशविवरणादिषु तु नान्नमित्येव। २. चेतीति पुंपुस्तके। ३. श्रुतिबाध इत्यारभ्य सम्भवादित्यन्त त्रुटं पुपुस्तके। ४. कर्तव्यभावादिति कबपुस्तकयोः। ५ मध्यभावलस्येति कंपुस्तके।

# ॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

पूर्वपादेऽधिकारियोग्यदेहो निरूपितः, द्वितीये जीवस्य मुक्तियोग्यता निरूप्यते, तत्र प्रथमं स्वप्नं निरूपयति, स्वप्नस्य सत्यत्वे तत्कृतगुणदोषसम्बन्धो जीवस्य भवेत् ततश्च शुद्धिर्व्यर्था स्यादतः स्वप्नस्य मिथ्यात्वं प्रदर्शयितुमधिकरणारम्भः, तत्र पूर्वपक्षमाह,

## सन्ध्ये सृष्टिराह हि (३. २. १.)

**सन्ध्ये स्वप्ने सृष्टिराह** "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीयं स्वप्नस्थानं" (बृह. ६. ३. ९.) इत्युपक्रम्य "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजति" (बृह. ६. ३. १०.) इत्यादिना सृष्टिराह सन्ध्ये स्थाने सृष्टिरस्ति यतः श्रुतिः स्वयमेवाह, हि युक्तश्चायमर्थः, यथैव श्रुतिर्वदति तथैव स्वप्ने दृश्यते देवादिवाक्यानां प्रबोधेऽपि बाधकाभावात्, न चेयमेव सृष्टिस्तत्र दृश्यते, "न तत्र रथाः" (बृह.६.३.१०.) इत्यादिना निषेधात्, श्रुतिवादिनां श्रुतिरेव प्रमाणं, किम्पुनरनुभवसंवादिनी ? तस्मात् स्वप्ने सृष्टिरस्ति ॥ १ ॥

## निर्मातारञ्चैके पुत्रादयश्च ॥ २ ॥

काठके चतुर्थवल्ल्यां श्रूयते "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" (कठ.४.२३.) इति निर्मातारमेके वदन्ति, यद्यपि "सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१.३.४२.) इत्यत्र "न तत्र रथा"(बृह.६.३.१०.)इत्यपि ब्रह्मप्रकरणं, तथापि नियतधर्मपक्षे जीव एव कर्तेति प्रतिभाति, तदर्थं निःसन्दिग्धं वचनमुदाहरति, भगवन्निर्मितत्वात् स्वप्नस्थस्यापि सत्यत्वं, न हि कर्तुः स्वापोऽस्ति, येन भ्रमः स्यात्, "जागर्ति" (कठ. ४. २३.) इतिवचनात्, इच्छापूर्वकञ्च सर्वं सृजति, "शतायुषः पुत्रपौत्रान्" (कठ. १. २३.) इति कामविषयाः पुत्रादयः उक्तास्ते च निर्मिताः परलोकसाधका इति लोकत्रयकल्पना, चकार-

---

॥ सन्ध्ये सृष्टिराह हि ॥ १ ॥ पादयोरेकनिर्वाहकत्वसङ्गतिप्रदर्शनायाहुः पूर्वेत्यादि, तत्र द्वितीयचरणारम्भे, व्यर्था स्यात् मोक्षोपयोग्युपदेशानर्हत्वेन तस्मिन् पुरुषे शुद्धिर्व्यर्था स्यादित्यर्थः, अधिकरणप्रयोजनोक्त्यैव स्वप्नसृष्टिः सत्या न वेति संशयस्योक्तप्रायत्वात् पूर्वपक्षमाहुस्तत्रेत्यादिना, आह सृष्टिमाहेत्यर्थः, बाधकाभावात् विषयांशे बाधाभावान्न मिथ्यात्वमित्यर्थः, मिथ्यात्वस्य विषयबाधाधीनत्वादितिभावः ॥ १ ॥

निर्मातारञ्चैके पुत्रादयश्च ॥ २ ॥ पूर्वसूत्रविषयवाक्येन स्वाप्निकसृष्टिसिद्धावपि एतत्सूत्रप्रणयनस्य प्रयोजनं वक्तुमाहुः यद्यपीत्यादि, ब्रह्मप्रकरणं सिद्धमितिशेष , नियतधर्मपक्षे 'कतम आत्मे'ति प्रश्ने 'योऽयं विज्ञानमयः पुरुषः प्राणेष्वि'त्युपक्रम्याग्रे 'स्वयं विहृत्य स्वयं निर्माये'तिकथनात्तस्यैवाग्रे'न तत्र रथा' इत्यादिना विवरणात्तस्यैवायं धर्म इतिपक्षे, निस्सन्दिग्धं भगवत्कर्तृत्वप्रतिपादनार्थैतत्सूत्रमित्यर्थ., भगवदित्यादि, निर्मितत्वादिति स्वप्नस्थविषयान्वयि, सत्यत्वं तृतीयसृष्टित्वेन विद्यमानत्व, न हीत्यादि, तथा च पूर्ववाक्ये 'स्वयं निर्माये'त्यनन्तरं 'स्वपिती'तिश्रवणादत्र च 'सुप्तेषु' जीवेन्द्रियादिषु 'जागर्ति' ब्रह्म जागर्तीतिश्रवणात् 'काम काम' मित्यनेनापीच्छापूर्वकसृष्टिश्रवणाद्भगवत्कर्तृत्वमेवावसीयते, न हि जीव इच्छापूर्वकं स्वानिष्टं सृजति, 'शतायुष' इत्यादि 'शतायुषः पुत्रान् पौत्रान् वृणीष्वे'ति, पूर्वं कामविषया एव पुत्रादय ऐहिका उक्तास्तेपि भगवन्निर्मिता एव भगवन्निर्मितत्वादेव परलोक-

---

१ प्रदीपव्यतिरिक्तसर्वेष्वप्यादर्शेषु बाधाभावादिति पाठः । २. एष्विति कपुपुस्तकयो ।

द्वयेन कारणकार्यगताः[1] सर्वे धर्मा उक्ताः, तस्माच्छ्रुत्युपपत्तिभ्यां स्वप्नप्रपञ्चस्य सिद्धत्वात् तत्कृतगुणदोषसम्बन्धे पूर्वोक्तदेहनिर्माणं व्यर्थमित्येवं प्राप्तम् ॥ २ ॥

## मायामात्रन्तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दः पक्षं व्यावर्तयति, स्वप्नसृष्टिर्मायामात्रं, तत्र हेतुः कात्स्न्येनानभिव्यक्तस्वरूपत्वात्, कृत्स्नत्वेन यस्य यादृशं स्वरूपं देशकालवस्तुसापेक्षं तथाभिव्यक्तिः कात्स्न्येनाभिव्यक्तिस्तदभावात्, अयमाशयः, श्रुतिः सृष्टिमेवाह न तस्य सत्यत्वमपि, यथा "ऐतदात्म्यमिदं सर्वं तत् सत्यं"(छान्दो.८.८.७.)इति "आत्मानं स्वयमकुरुत" (तैत्ति.ब्रह्म.७.) "तत् सत्यमित्याचक्षते" (तैत्ति.ब्रह्म.६.) "कथमसतस्सज्जायेत ?" (छान्दो.८.२.२.) इत्यादिश्रुतिसहस्रेभ्योऽस्य सत्यत्वं प्रतीयते नैवं स्वप्नप्रपञ्चस्य श्रुतिराह, सत्यप्रयोजनाभावाच्च, स्वप्नमात्रविहारस्तु[2] महामायावित्वान्माययापि सिध्यति, नापि भिन्नः प्रपञ्चः, जीवस्यैकत्वात्, "अविद्यया मन्यते" (बृह. ६. ३. २०.) इतिवचनान्न तत्सुखदुःखभोगार्थमपि सत्यत्वमङ्गीकर्तव्यं, स्थानद्वयप्रतिज्ञा च विरुध्येत, जीवतो मृतांश्च पश्यतीति लोकद्वयप्रदर्शनं[3], अतो लोकद्वयप्रतिच्छायरूपत्वान्मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वाद्भगवत्कृतमात्रवाचकत्वाच्च श्रुतेरतिरिक्तकल्पनायां प्रमाणाभावाज्ज्योतिःशास्त्रनियमाभावाच्च मायामात्रमेव स्वप्न इति न तत्कृतगुणदोषसम्बन्धः, दीक्षितस्यान्नभोजनादिप्रायश्चित्तं तु भगवत्क्रीडायामपि प्रतिच्छायत्वात् क्रियते, तदानीं कर्तृत्वस्यारोपात्, अन्यदा कर्तृत्वस्याशास्त्रत्वान्न धर्माधर्मजनकत्वं, देवताज्ञादिस्तु जीवब्रह्मणो-

---

स्यापि साधकाः, चकारद्वयेन सूत्रस्थचकारद्वयेन, तथा च लोकत्रयनिर्मातृत्वं कारणगतसामर्थ्यापरोक्षोपादानज्ञानादिस्वीकार कार्यगतसत्यत्वादिधर्मस्वीकारश्च भगवत एव, श्रुत्युपपत्तिभ्यामिति श्रुति'र्न रथा' इत्यादिरूपा, उपपत्तिः स्वप्नसृष्टे. भगवत्कर्तृत्वे सत्यत्वसाधिका युक्ति., पूर्वोक्तः पञ्चाग्निविद्यान्यायेन प्राप्तशुद्धिकः, सूत्रार्थस्तु एके निर्मातारमाहुः ततः पुत्रादय इति चाहुरिति ॥ २ ॥

मायामात्रन्तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सिद्धान्तं व्याकुर्वन्ति तुशब्द इत्यादिना, पक्षं स्वप्नस्य सत्यत्वरूप पूर्वपक्षं, मायामात्रं, देशेत्यादि, तथा च यस्मिन् देशकाले यद्वस्त्वेकवार यथा प्रतीत तथैव बहुप्रतीतिगोचरत्वं कालान्तरेपि यस्य तस्य कृत्स्नशब्दवाच्यत्वं यथा घटादौ, स्वाप्निकेषु तु नैवं, यथैन्द्रजालिकनटेन लोकव्यामोहाय प्रदर्श्यते तथा भगवतापि स्वाप्निकः प्रपञ्च. क्रियत इत्यर्थः, श्रुतिः 'न तत्र रथा' इतिश्रुतिः, अस्य बाह्यप्रपञ्चस्य, सत्यप्रयोजनाभावात् स्वप्नदृष्टे. सत्यत्वे प्रयोजनाभावादित्यर्थः, महामायावित्वात् भगवतो महामायावित्वादित्यर्थ , सिध्यति ब्रह्मकर्तृक मायोपादानक. स्वप्नप्रपञ्चो मिथ्यारूप· सिध्यतीत्यर्थ , ननु जीवस्य सुखदुःखहेतुत्वाद्धेतोरसत्त्वे च सुखदु खरूपकार्यासम्भवात् तादृशकार्यहेतुभूता स्वप्नसृष्टिः सत्यैवास्तामित्यत आहुः नापीत्यादि, भिन्नः एतल्लोकपरलोकाभ्यां भिन्नस्तत्समानः सत्य इत्यर्थः, जीवस्यैकत्वात् अवस्थात्रयेप्येकत्वात्, इदं च संस्कारस्य स्वप्नावस्थोपकारकत्वप्रदर्शनायोक्त, मन्यते स्वाप्निकपदार्थान् स्वप्ने सत्यतया मन्यत इत्यर्थ , सत्यत्वं स्वप्नप्रपञ्चस्य सत्यत्व, स्थानद्वयप्रतिज्ञा 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्चेती'ति–श्रुत्युक्तद्वित्वप्रतिज्ञा, लोकद्वयप्रदर्शनं 'तस्मिन्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च'त्यनेनोक्त लोकद्वयदर्शनं लोकद्वयस्थाना दर्शनमित्यर्थः, प्रतिच्छायरूपत्वात् प्रतिबिम्बसमानत्वादित्यर्थः, गुणदोषसम्बन्धः उक्तमुक्त्यधिकारिजीवे गुणदोषसम्बन्ध., अन्नभोजनेत्यादि, स्वप्नेऽन्नभोजनादौ प्रायश्चित्ताम्नान तद्भोजनारोपस्यैव प्रायश्चित्तमिति तेन न स्वप्नस्य सत्यत्वमित्यर्थ , अन्यदा स्वप्ने भोजनान्यकाले इत्यर्थ , कर्तृत्वस्य अगम्यागमनापक्वमांसादिभोजनकर्तृत्वस्य, अशास्त्रत्वात् स्वाप्निकस्य तस्य सत्यानुष्ठानविरुद्धशुभफलप्रदत्वस्मृत्या शास्त्रोक्तसत्यपदार्थविरुद्धत्वादित्यर्थः, ननु स्वप्नस्य मिथ्यात्वे देवताज्ञादेवदर्शनादीनामपि भ्रमविषयत्व स्यादत आहुः देवते-

---

१. कार्यकारणगता इति बपुस्तके, प्रकाशादयस्तु कारणकार्यगता इति । २ स्वमात्रविहारस्त्विति बप्रकाशयो । ३ जीवद्वयदर्शनमिति बपुस्तके, लोकद्वयेत्यादि प्रकाशादिषु. प्रदीपव्यतिरिक्तसर्वव्व्याख्यादर्शेषु दर्शनमित्येव ।

विद्यमानत्वाद्युक्ता, अलौकिकज्ञाने हि प्रतिच्छायरूपत्वात् संवादः, क्वचिद्भगवदावेशे ईषत्संवादोपि, तस्मात् स्वतन्त्रसत्यतायां प्रमाणाभावान्मायामात्रं स्वप्नप्रपञ्च इति सिद्धम् ॥ ३ ॥

ननु तर्हि जीवसाक्षिकमेकदेशेन किमिति सृजति? तत्राह,

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

सूचकः शुभाशुभफलसूचको भवति स्वप्नः, चकारात् क्वचिदाज्ञाविशेषदानं, कलिकालादेः प्रत्यक्षे बाधकत्वात्, युक्तश्चायमर्थः, अतः सूचकफलस्यैव दृष्टत्वान्न तु स्वप्नपदार्थस्य, सूचकत्वे प्रमाणमाह "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" ( छान्दो. ७. २. ९. ) इत्यादिश्रुतेः, किञ्चाचक्षते च तद्विदः स्वप्नाध्यायविदस्तथैवाचक्षते "आरोहणं गोवृषकुञ्जराणां" (स्वप्ना. १५.) इत्यादिना, तस्मात् सूचनार्थं जीवप्रदर्शनमिति ॥ ४ ॥

किञ्चिदाशङ्क्य परिहरति,

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

ननु जीवाय भगवान् सृष्टिं करोति प्रदर्शयति च स्वस्य सर्वलीलां, अंशश्चायं, कथमस्य दुःखित्वमित्याशङ्क्य परिहरति तुशब्दः, अस्य जीवस्यैश्वर्यादि तिरोहितं, तत्र हेतुः पराभिध्यानात्, परस्य भगवतोभितो ध्यानं स्वस्यैतस्य च सर्वतो भोगेच्छा तस्मादीश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः, ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वं, वीर्यतिरोभावात् सर्वदुःखसहनं, यशस्तिरोभावात् सर्वहीनत्वं, श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वं, ज्ञानतिरोभावाद्देहादिष्वहम्बुद्धिः सर्वविपरीतज्ञानश्चापस्मारसहितस्यैव[3], वैराग्यतिरोभावाद्विषयासक्तिः, बन्धश्चतुर्णां कार्यो विपर्ययो द्वयोः, तिरोभावादेवं[4], नान्यथा, युक्तोयमर्थः, एकस्यैकांशप्राकट्येपि तथाभावात्, आनंदांशस्तु

---

त्यादि, विद्यमानत्वात् अन्तर्हृदि विद्यमानत्वात्, युक्ता प्रामाण्ययुक्ता, तथा च यथा रथादिविषयाणां मायानिर्मितत्वेन तदादिज्ञानानां स्वाप्निकत्वेनाप्रामाण्यं न तथा देवाज्ञादर्शनादिविषयाणा मायिकत्वमिति सा प्रमा युक्ता, अलौकिकज्ञाने स्वप्रकाशजीवचैतन्ये, प्रतिच्छायरूपत्वात् देवदर्शनतदाज्ञादीनां प्रतिभासमानत्वात्, संवादः विषयज्ञानयोर्द्वयोरपि वास्तविकतया प्रामाण्यात् संवादः, क्वचिदित्यादि, तथा चेन्द्रप्रतर्दनसंवादस्थल इन्द्रे भगवदावेशोक्तिप्रामाण्यवत् स्वप्नैकदेशेपि क्वचिद्भगवदावेशाद्यत् सम्पन्न तदंशे प्रामाण्यमावेशमहिम्ना न तु स्वप्नेपि प्रामाण्यमस्तीत्यर्थः ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, जीवसाक्षिकं जीवमात्रप्रतीतिगोचरं, एकदेशेन देवाज्ञादिसत्यप्रपञ्चातिरिक्तांशेन, किमिति कुतो हेतोः, सृजति भगवान् स्वप्नसृष्टिं मिथ्याभूतां करोतीत्यर्थः, सूचको भवति, तथा च लोकानां शुभाशुभफलसूचनार्थं स्वप्नसृष्टिं करोति स्वस्य च स्वच्छन्दक्रीडार्थमितिहेतुवर्णनं कृतं, क्वचित् स्वप्नविशेषे, कलिकालादेः कलिकालादिकृत, तेन स्वप्नोत्कर्षो द्योतितः, प्रत्यक्षे बाधकत्वात् स्वप्नप्रत्यक्षविषयीभूतेर्थे जाग्रद्दशाया कलिकालादेर्बाधकदर्शनादित्यर्थः, अयं स्वप्ने सूचकत्वरूप उत्कर्षः, सूचकफलस्यैवेत्येवकारेण प्रमाफलव्यवच्छेदः, न तु स्वप्नपदार्थस्येत्यस्य विभक्तिपरिणामेन दृष्टत्वमित्यन्वयः ॥ ४ ॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ जीवाय जीवस्य फलदानार्थं, प्रदर्शयति जीवाय प्रदर्शयति, स्वस्येत्यादि, तथा च जीवस्य सकलेन्द्रियविषयकृतो यो भोगस्तत्र या भगवदिच्छा सैव पराभिध्यानशब्देनोच्यते, चतुर्णां ऐश्वर्यवीर्ययशःश्रीतिचतुर्णां, द्वयोः ज्ञानवैराग्ययोः, तिरोभावादेवं नान्यथेति षड्धर्मतिरोभावाद्बन्धविपर्ययौ नान्यथा न स्वत इत्यर्थः, युक्तत्वं स्फुटयन्ति एकस्येत्यादिना, एकस्य कस्यचिद्भगवदीयस्य, एकांशेति पूर्णषड्धर्माणां भगवत्येव सत्त्वात् षण्णमध्य एकस्य कस्यचिदेकांशेनाप्यावि-

---

१. प्रतिच्छायादिति कंपुस्तके, प्रतिच्छायत्वादिति कपुपुंबगोविषु । २. अतः सूचकफलस्यैवेति कंपुस्तके । ३. अपस्मारसहितस्यैवेति कंपुस्तके । ४. तिरोभावादेवेवमिति कपुपुंबगोषु ।

पूर्वमेव तिरोहितो येन जीवभावः, अत एव "काममयः", अकामरूपत्वादानन्दस्य, निद्रा च सुतरां तिरोभावकर्त्री भगवच्छक्तिः, अतोऽस्मिन्प्रस्तावे जीवस्य धर्मतिरोभाव उक्तः, अन्यथा भगवत ऐश्वर्यादिलीला निर्विषया स्यात्, तस्मान्न जीवस्वरूपपर्यालोचनया किञ्चिदाशङ्कनीयम् ॥ ५ ॥

ईश्वरेच्छयैवैश्वर्यादितिरोभावं स्वमते निरूप्य मतान्तरेणापि नियतधर्मवादेन निरूपयति,

## देहयोगाद्वा सोपि ॥ ६ ॥

देहयोगाद्वा देहसम्बन्धादेवास्य सर्वतिरोभावः विपर्ययो वा, अपिशब्दादन्यत्, अस्मिन्[2] पक्षे देहवियोग एव पुनरैश्वर्यादिप्राप्तिः पूर्वस्मिन् कल्पे विद्यमानेपीति विशेषः[3], नत्वीश्वरेच्छया विकल्पः ।

कश्चित्परशब्देन देहादिमाह, तदा अभिध्यानयोगयोराकस्मिकता स्यात् "सर्वस्य वशी सर्वस्येशानः" (बृह. ६. ४. २२.) इतिविरोधश्च ।

कश्चित्तु 'तस्याभिध्यानात्तृतीयदेहभेदे' (श्वेताश्व. १. ११.) इति श्रुत्यनुरोधेन जीवकर्तृकाभिध्यानं मत्वा अतिरोहितमिति कल्पयति विपर्ययशब्देन च मोक्षं, बह्वध्याहारेण च सूत्रद्वयं योजयति, तद् ब्रह्मवादाज्ञानादसङ्गतेश्च साधनोपदेशस्य भ्रान्तोक्तमित्युपेक्ष्यं, निद्राया विवेकज्ञानाभावावसरत्वाद्यथाव्याख्यात एवार्थः ॥ ६ ॥ १ ॥

॥ इति तृतीयाध्याये द्वितीयपादे प्रथमं सन्ध्याधिकरणम् ॥ १ ॥

---

भावेपि तथाभावात् बन्धविपर्ययभावाभावादित्यर्थः, नन्वानन्दांशतिरोभाव एव बन्धविपर्ययहेतुरस्त्वित्यत आहुः आनन्दांशस्त्वित्यादि, पूर्वमेव जीवभावात् पूर्वमेव व्युच्चरणकाल इत्यर्थः, अत एव आनन्दहीनत्वादेव, काममयः सुखकामनावान्, अकामरूपत्वात् स्वापेक्षयातिरिक्तोत्कृष्टकाम्यस्याभावेनाकामरूपत्वादित्यर्थः, निद्रा निद्रात्वेनोच्यमाना सकलभगवद्धर्मतिरोभावकर्त्र्यविद्या बोध्या, अन्यथा भगवद्धर्माणामतिरोभावे, निर्विषया स्यात् षण्णाम्मध्ये प्रत्येकधर्मेण भगवता क्रियमाणा लीला तादृशजीवानामभावे न स्यादित्यर्थः, स्वरूपपर्यालोचनया षड्धर्मतिरोभावलक्षणयेत्यर्थः, किञ्चित् दु खित्वानुपपत्त्यादिकम् ॥ ५ ॥

देहयोगाद्वा सोपि ॥ ६ ॥ नियतधर्मवादेन सूक्ष्मदेहनियतो भगवद्धर्माणा तिरोभाव इति यस्य वादिनो मतं तन्मतेनेत्यर्थः, वाशब्दोवधारणे, अस्य जीवस्य, सः[5] सर्वभगवद्धर्मतिरोभावः, विपर्ययः विपरीतज्ञानं, अन्यत् बन्धदु.खादि, देहवियोगे सूक्ष्मदेहवियोगे, पूर्वस्मिन् कल्पे ईश्वरेच्छयानन्दैश्वर्यादितिरोभावो विपरीतज्ञानञ्चेतिकल्पे, विद्यमानेपि, नत्वित्यादि, ईश्वरेच्छया तिरोभावो देहेन वा तिरोभाव इति तु विकल्पो नेत्यर्थः, परशब्देन पराभिध्यानादितिसूत्रस्थपरपदेन, देहादिं देहारम्भकादृष्टादि, आकस्मिकता स्यात् देहादृष्टादावचेतने ध्यानयोगयोरसम्भवादाकस्मिकता स्यादित्यर्थः, इतिविरोधश्चेति ईश्वरे श्रुत्युक्तसर्वनियन्तृत्वभङ्गरूपो विरोध इत्यर्थः, कश्चित् शङ्कराचार्यः, श्रुत्यनुरोधेन श्रुतिस्तु श्वेताश्वतरीया 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्यूप्रहानिः[6] तस्याभिध्यानात्तृतीयं[7]देहभेदे विश्वैश्वर्यं केवल आत्मकाम' इति, देवं परमेश्वर, सर्वपाशापहानिः सर्वबन्धकानां निवृत्ति., क्षीणै दग्धै., क्लेशैरविद्यास्मितादिभिः, जन्ममृत्यूपहानिः जन्ममृत्युप्रवाहनिवृत्तिः. तस्याभिध्यानात् परमेश्वरविषयकजीवकर्तृकाभिध्यानात्, तृतीयदेहभेदे इहलोकीयद्युलोकीयदेहभिन्नेति या प्राप्तिर्ज्ञानिदेहे तस्य भेदे नाशे सति, विश्वैश्वर्यं प्राप्य ब्रह्मरूपो भवतीत्यर्थः, अतिरोहितमिति कल्पयति पूर्वमध्यानात्तिरोहित ततोभिध्यानादतिरोहितमिति कल्पयतीत्यर्थ , विपर्ययशब्देनेत्यादि, तथा च बन्धः पूर्वमध्यानात्तत ईश्वरादेव तिरोधानतदभावाविति तत्सिद्धान्त', ध्यानात्तस्य विपर्ययो मोक्षस्तं कल्पयतीत्यर्थः, बह्वध्याहारेण 'न तृतीये तथोपलब्धे'रितिसूत्रात्तृतीयाध्याहारेण, सूत्रद्वयं पूर्वसूत्र 'पराभी'ति 'देहयोगे'ति चेतिसूत्रद्वयं, ब्रह्मवादाज्ञानात्[4] यदि ब्रह्मवाद जानीयाद्देहसूत्रं सिद्धान्तत्वेन नोरीकुर्यात्, असङ्गतेः ईश्वराभिध्यानस्य

---

१ एवपदं लुप्तं कपुबपुस्तकेषु । २ तस्मिन्निति कपुस्तके । ३ शेष इति वपुस्तके । ४ ब्रह्मवादापरिज्ञानादिति सर्वेप्यादर्शा । ५. सः सौत्र इतियावत् । ६ मृत्युप्रहाणिरितिप्रकाशविवरणपाठः । ७. तृतीय देहभेद इतिबप्रकाशविवरणपाठः, देहभेदैरित्यपि पाठः केषाञ्चन मते ।

प्रसङ्गाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं निरूपयितुं स्थानस्वप्नाभावौ[1] निरूपयति, एवं श्रूयते नाडीरनुक्रम्य "तासु तदा भवति यदा सुप्तः स्वप्नं न[2] कञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति" ( कौशी. ४. १९. ) इति तथा "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं" (बृह. ६. ३. २१.) इति, तत्र संशयः स्वप्नवत् प्रपञ्चसृष्टिं मायिकीमपि भगवान् करोति नवेति संशयः, तत्र "य एष सुप्तेषु जागर्ति" ( कठ. ५. ८. ) इत्यत्र जीवस्वापमात्रे भगवत्सृष्टे-रुक्तत्वात् "स्वप्नं न कञ्चन पश्यति" (कौशी. ४. १९.) इत्यत्रापि[3] दर्शनमात्रनिषेधात्, "न बाह्यं किञ्चन वेद नान्तरं" (बृह. ६. ३. २१.) इति च जागरणस्वप्नप्रपञ्चयोरविशेषेणादर्शनकथनात् सुषुप्तावपि प्रपञ्चनिर्माणमस्तीत्यवगन्तव्यं, ततश्च कस्यामप्यवस्थायां प्रपञ्चव्यतिरेकाभावान्मुक्ता-वपि स्यात्, स्वाप्ययसम्पत्त्योरज्ञानमात्रविशेषात्, "सति सम्पद्य न विदुः सति सम्पद्यामहे" (छान्दो. ८. ९. २.) इति, तस्माद्बाह्यसत्सम्पदोर्विद्यमानयोरपि यथाज्ञानाभावादग्रहणमेवं प्रपञ्च-स्यापीत्येवं प्राप्त उच्यते,

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ ( ३. २. २. )

**तदभावो नाडीषु**, तस्य स्वप्नस्याभावो नाडीषु तथात्मनि च, कुतः ? तच्छ्रुतेः[4] प्रप-ञ्चाभावश्रुतेः, कामनया हि प्रपञ्चः, सुषुप्तावस्थाया अकामरूपत्वश्रुतेः, "तद्वा अस्यैतदात्मकाममा-प्तकाममकामं[5] रूपम्" (बृह. ६. ३. २१.) इति, नाडीषु आत्मनि चेतिग्रहणात् सुषुप्तिर्द्विविधेति सूचयति, तथा हि "हिता नाम नाड्यः" पुरीतत्यन्ता हृदयदेशाद्बाह्याः, आभ्यन्तरः[6] परमात्मा, हृदयदेशस्तु जीवस्य, इन्द्रियाणां च स एव देशः, तत्र निद्रया भगवच्छक्त्या बहिर्दृष्ट्याच्छादने भगवल्लीलायां तां पश्यति, तत्राप्याच्छादने गाढसुप्तो[7] ज्ञानरहितः क्रियाशक्त्यान्तर्भगवन्तं वा

---

तन्मते साधनस्यासङ्गतेरित्यर्थः, उपेक्ष्य तत्र भ्रान्तोक्तिर्हेतुः, स्वोक्तार्थव्याख्याद्दृढत्वद्योतनायाहुर्निद्राया इत्यादि, तथा चाग्रे सुषुप्तेर्निरूप्यत्वादिद जीवस्य निद्राप्रकरणं, निद्रा च भगवदिच्छयोक्तषड्धर्मतिरोभावे सति विवेकस्यापि ज्ञानं तिरोधत्ते स एव निद्रावसर इति भगवदिच्छया पुनर्विवेकज्ञानाविर्भाव एव संसारात्मिकाया निद्राया निवृत्तिर्न तु जीवकृतव्यापारबलादीश्वरतो निद्रायाः प्राप्तिर्निवृत्तिर्वातोस्माभिर्व्याख्यात एवार्थो युक्त इतिभाव. ॥ ६ ॥ १ ॥

इति तृतीयद्वितीये प्रथमाधिकरणम् ॥ १ ॥

---

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अज्ञानं विपरीतज्ञानजनकमज्ञानं, केवलमज्ञानं विपरीत-ज्ञानाजनकमज्ञान, स्थानस्वप्नाभावौ सुषुप्तावज्ञानस्य स्थानं स्वप्नाभावश्चेत्युभौ निरूप्येते इत्यर्थः,विषयवाक्यमाहु-रेवमित्यादि, तासु नाडीषु, तदा भवति जीव. सुषुप्तिमान् भवति तदा, कदेत्याकाङ्क्षायामाह यदेत्यादि, यदा सुप्तो न किञ्चन स्वप्नं पश्यति तदेत्यर्थ., कौषीतकिब्राह्मणवाक्यमुक्त्वा बृहदारण्यकस्थज्योतिर्ब्राह्मणवाक्यमाहुस्तथेत्यादि, संशयः सुषुप्तौ मायिकसृष्टिकरणस्य सशयः, काठके सृष्टिनिर्माणमुक्तं विषयवाक्ये दर्शनाभावमात्रमुक्तमिति सन्देहबीज, स्वापमात्र इति मात्रपदेन सुषुप्तिस्वापोप्यागत., दर्शनमात्रनिषेधादिति मात्रपदेन सृष्टिनिषेधो न कृत इति ल-भ्यते, अदर्शनकथनादिति, तथा चादर्शनमात्रेण सृष्टिनिर्माणाभावो न निश्चेतु शक्य इत्यर्थः मुक्तावपि स्यात् सृष्टिनि-र्माणं स्यादित्यर्थः, अज्ञानमात्रविशेषादिति, तथा च 'स्वाप्ययसम्पत्त्यो'र्बाह्यप्रपञ्चनिर्माण भगवतस्तिष्ठति पर जीवो न जानातीति फलित पूर्वपक्ष इत्यर्थः, प्रपञ्चाभावश्रुतेः मायिकप्रपञ्चाभावस्य सुषुप्तौ श्रुतेः, सुषुप्तौ स्वप्नाभावं निरूप्य ज्ञानस्थानं निरूपयन्ति नाडीष्वित्यादिना, हृदयदेशाद्बाह्याः हृदयबाह्यदेशे स्थिता इत्यर्थ., आभ्यन्तरः हृदयाभ्य-न्तर., तां स्वाप्निकीं भगवल्लीलां, सुषुप्तिद्वैविध्ये प्रमाणमाहुः अत एवेत्यादि, द्वैविध्यमेव स्फुटीकुर्वन्ति "ता वा"

---

१. स्थानस्वप्नाभावे इति कखयोः । २. नपदं लुप्तं कंपुस्तके । ३. हीत्यधिकं कंपुस्तके । ४. इदं लुप्तं पुपुस्तके । ५. अकामरूपमिति पुंपुस्तके । ६. अभ्यन्तर इति कपुंपुस्तकेषु । ७. गाढसुप्ताविति कंपुस्तके ।

प्रविशति बहिर्नाडीषु वा समायाति, अत एव बृहदारण्यकषष्ठे "यत्र सुप्तो न कञ्चन कामं कामयते" (बृह. ६. ३. १९.) इति वारद्वयमाह "ता वा अस्यैता हिता नाम नाड्यः" (बृह. ६. ३. २०.) "तद्वा अस्यैतदात्मकामं (बृह. ६. ३. २१.) इतिभेदेन, सुषुप्तिस्तूभयत्र, ज्ञानशक्तेः सर्वथातिरोधानात्, तस्मात् सुषुप्तौ न प्रपञ्चसृष्टिः ॥ ७ ॥ २ ॥

॥ इति तृतीयाध्याये द्वितीयपादे द्वितीयं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥

प्रबोधे सन्देहः, "प्रतियोन्याद्रवति बुद्धान्तायैव" (बृह. ६. ३. १५.) इति जीवसमानधर्मब्रह्मप्रकरणे निरूपितं, ततो नाडीभ्यः पुनर्हृदयदेशं गत्वा भगवतो वा समागत्य जागर्तीति आहोस्विद्यत्र स्थितस्तत एव जागर्तीति, तत्र श्रुत्यनुरोधात् हृदयदेशमागत्य जागर्तीत्येवं प्राप्त उच्यते,

## अतः प्रबोधोस्मात् ॥ ८ ॥ ( ३. २. ३. )

अतो नाडीभ्य एव प्रबोधः, गर्तपतितस्य प्रबोधे हि ततो गमनं, प्रतियोन्याद्रवणं तु भगवत इति, किञ्च प्रबोधोस्मात्, अस्मादात्मनः सकाशादेव प्रबोधः, "प्रिययेव सम्परिष्वक्त"स्य बोधाभावे कथमागमनम्? अत एव "सम्परिष्वक्तो" (बृह. ६. ३. २१.) निबिडनिद्रः, तस्माद्यत्रैव तिष्ठति तत एव प्रबोध इति सिद्धम् ॥ ८ ॥

किञ्चिदाशङ्क्य परिहरति,

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

ननु "प्रिययेव प्राज्ञेनात्मना परिष्वक्त"स्य ब्रह्मलोकं गतस्य प्रबोधेन ज्ञाने मुक्त एव भवेन्न तु पुनरागच्छेदतो भगवदिच्छया देहनिर्वाहाय तत्स्थाने नियुक्तोन्य एव जीवः समायातु, अन्यतः प्रबोधे तु स एव, व्यवहारस्तु तावता सेत्स्यति, मुक्त्यर्थं प्रयत्नस्तु न कर्तव्य

---

इत्यादिना, तथा च जीवस्य सुषुप्तिस्थान हिता नाम नाड्योन्तर्यामी चेति सुपुप्तेर्द्वैविध्य स्फुटीकृत, एवं सुषुप्तिस्थानद्वयेपि कामनाभावात् सृष्टिरत एव न मुक्तावपि जीवहेतुका सृष्टिरितिभावः ॥ ७ ॥ २ ॥

इति तृतीयद्वितीये द्वितीयाधिकरणम् ॥ २ ॥

---

अतः प्रबोधोस्मात् ॥ ८ ॥ अधिकरणप्रयोजनमाहुः प्रबोध इत्यादिना, सन्देहः यत्र स्थाने स्थितस्तत्रैव जागर्त्युत समागत्येतिसन्देह, 'प्रतियोनीत्यादि' 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं पापं च प्रतियोन्याद्रवति बुद्धान्तायैवे'ति बृहदारण्यज्योतिर्ब्राह्मणश्रुतिः, अर्थस्तु सः प्रकृतो जीव. वै निश्चयेन एषः स्वयज्योतिः एतस्मिन् सम्प्रसादे सम्यक् प्रसीदत्यस्मिन्निति सम्प्रसादः स्वयंज्योतिः सुषुप्तिस्थानं तत्र रत्वा क्रीडित्वा सता सम्परिष्वज्य चरित्वा तदानन्द भुक्त्वा दृष्ट्वैव पुण्यं पापं च, चकारात्तत्फले, दृष्ट्वा स्वप्ननाडीष्वनुभूय, प्रतियोन्याद्रवति यतः सम्प्रसादे गतस्तत्स्थानं योनिः तत्स्थान प्रति आद्रवति आयाति बुद्धान्ताय जागरणायेति बोध्यः, जीवसमानेत्यादि सुषुप्तिप्रकरण इत्यर्थः, संशयाकारमाहुः तत इत्यादि, समागत्य हृदयदेशं समागत्येत्यर्थ., नाडीभ्य एव सुषुप्तिस्थानत एव, तत्र युक्तिमाहुः गर्तेत्यादि, प्रतियोन्याद्रवणं जीवस्य जागरणस्थान प्रत्यागमन, भगवतः भगवतः सकाशादित्यर्थः, आत्मनः अन्तर्यामिणः प्रेरणया नाडीस्थाने एव प्रबोधः इत्यर्थ., कथमागमनं कथमागमनानुकूला क्रियेत्यर्थः, तत एवेति, ततः सुषुप्तिस्थानत एव प्रतिबोधो न तु हृदय आगत्येति फलितम् ॥ ८ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥ किञ्चिदाशङ्क्य पूर्वाधिकरणे एव किञ्चिदाशङ्क्येत्यर्थः, अनेनाधिकरणान्तरता निरस्ता, प्रबोधेन स्वत एव प्रबोधेन, देहनिर्वाहाय सुषुप्तस्य देहनिर्वाहाय, तत्स्थाने सुपुप्तजीवदेहे, अन्यतः प्रबोधे तु भगवता सुषुप्तस्य प्रबोधकरणेपीत्यर्थः, स एव सुपुप्तान्यजीव एव, व्यवहारस्तु अन्यजीवगमनेपि पितृपुत्रभर्तृभार्याव्यवहारस्तु, तावता सेत्स्यति भगवता तस्य प्रबोधकरणात् स्वयं भगवान् योगिन्यायेन तस्मिन्

---

१. हितापदं लुप्तं कपुपुस्तकयोः । २. ब्रह्मेति लुप्तं बपुस्तके । ३. एवेति लुप्तं पुंपुस्तके । ४. तुपद लुप्तं कपुपुस्तकयोः । ५. अत इत्यारभ्यैकादशसूत्र एवं ब्रह्मधर्मविरोधोस्तीत्यन्तं लुप्तं पुंपुस्तके ।

इत्याशङ्क्य परिहरति तुशब्दः, अस्मादपि प्रबोधे स एव, कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः, चत्वारो हेतवः, लौकिकवैदिकयोर्ज्ञानकर्मभेदात्, तत्र लौकिके कर्मणि सामिकृतकर्मणः शेषसमापनात्, न हि कश्चिदपि सुप्तप्रतिबुद्धः सामिकृतं न समापयतीति क्वचित् सिद्धं, तथानुस्मृतिः, न हि पूर्वदृष्टं न स्मरतीति क्वचित् सिद्धं, शब्दाश्च "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" ( बृह. ६. ४. ५. ) "क्वैषं तदाभूत् कुत एतदागान्" ( बृह. ४. १. १६. ) इति तथा "सति सम्पद्य" (छान्दो. ८. ९. २.) इत्यादयश्च, विधयश्च "श्वोभूते ब्रह्माणं वृणीते" ( आप. श्रौत. ४. ४. १. ) "श्वोभूते शेषं समाप्नुयात्" ( आप श्रौत. १५. २. ३. ) "एक एव यजेत" ( तैत्ति. सं. ७. २. १०. ३.) "द्वादश रात्रीर्दीक्षितः स्यात्" (तैत्ति. सं. ७. २. १०. ३.) इत्यादि, "यः कामयेत वीरो मे औजायेत" ( तैत्ति. ब्रा. २. २. ३. ५. ) इत्यादयः, भगवतैव मर्यादारक्षार्थं तथाकरणात्, पूर्वपक्षयुक्तयो दुर्बलाः, तस्मात् स एव प्रतिबुध्यते ॥ ९ ॥

किञ्चिदाशङ्क्य परिहरति, ननु यत्र कर्मानुस्मृतयो न सन्ति तत्रान्यो भविष्यति, क्वचिन्मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात्, तत्र यथा लौकिकवैदिकव्यवहारास्तथान्यत्रापि भविष्यन्ति, अनुस्मरणादयश्च बुद्धिवृत्तयः, गङ्गाप्रवाहजलस्य गङ्गावत्, य एव चिदंशस्तत्रायाति स एव तथा भवतु, किं स एवेतिनिर्बन्धेनेत्याशङ्क्य परिहरति,

## मुग्धेर्धसम्पत्तिः परिशेषात् ॥ १० ॥

मुग्धे मुग्धभावे अर्धसम्पत्तिरेव, न सर्वा, न हि मुग्धस्य यज्ञादावधिकारोस्ति, पूर्वप्रवृत्तानि तु जीवनाधिकारात् क्रियन्ते, लौकिकव्यवहारोपि नापूर्वः सिध्यति, पूर्वोक्तहेतुसद्भावे

---

–प्रविश्य साधयिष्यतीत्यर्थः, न कर्तव्यः सुषुप्त्यैव सर्वेषा मुक्तिसम्भवान्न कर्तव्य इत्यर्थः, एवं च वेदोक्तमुक्तिसाधनवैफल्यं तद्बोधकवेदस्यापीत्यर्थः, परिहरति उक्तपूर्वपक्षं परिहरति, अस्मात् भगवतः सकाशात्, स एव पूर्वं सुप्तजीव एव, कर्मेत्यारभ्य सिद्धमित्यन्तेन लौकिकहेतुद्वयं शब्दाश्चेत्यादिना वैदिकहेतुद्वयं प्रतिपादयन्ति कुत इत्यादिना, कर्मानुस्मृतिशब्दविधिभ्य इति, सुषुप्तेः पूर्वमारब्धानां कर्मणामुत्तरकाले समापनात्, पूर्वानुभूतानामाग्रे स्मरणात् वक्ष्यमाणविधिभ्यः पूर्वसुप्त एव जीव उत्तिष्ठति नत्वन्य इतिभावः, सामिकृतं सुषुप्तेः पूर्वमर्धकृत पूर्वं सुषुप्ते. पूर्वं, न स्मरति सुषुप्तेरुत्तर न स्मरतीत्यर्थ., 'पुण्यः पुण्येने'ति, तथा च सर्वेषामेव सुषुप्तिसम्भवे मुक्तिसम्भवात् सुकृतदु.कृतफलबोधकश्रुतिवैयर्थ्यमित्यर्थ., 'क्वैष'इति श्रुत्यापि 'एष एतदि'तिपदाभ्यामेक एव बोध्यते, 'सति सम्पद्ये'त्यादयश्च विधयः, सर्वसुषुप्तानामज्ञान वदति श्रुतिस्तच्च मुक्ततायां न सम्भवति, श्वोभूतेत्यादि, तथा च सुषुप्तौ सर्वेषां मुक्तौ श्वोवरण कः कुर्यात् ? को वा शेषं समापयेत् ? को वा 'द्वादशरात्रीर्दीक्षितः स्यात्' इतिश्रुतिविरोध. स्यादित्यर्थः, तथाकरणात् स्वयं जीवप्रबोधनेपि मुक्त्यदानादित्यर्थः ॥ ९ ॥

मुग्धेर्धसम्पत्तिः परिशेषात् ॥ १० ॥ कर्मानुस्मृतय इति, यत्र यस्मिन् जीवे, पूर्वं सामिकृतकर्मणः सुषुप्त्युत्तरानुसन्धानपूर्वक समापन नास्ति, मूर्छारोगादिना पूर्वानुभूतस्य स्मरणमपि तादृशे विकले नास्ति एव श्वोभूते वरणमपि नास्ति दीक्षाप्युक्तानुसन्धानपूर्विका नास्तीत्यर्थः, तत्र तादृशस्थले, अन्यः सुप्तेरागतोन्यो जीवो भविष्यति न तु पूर्वं सुप्तः स एव, मुग्धभावदर्शनात् बहुषु विकलेषु मुग्धभावस्यानुभवसिद्धत्वादित्यर्थः, तत्र सर्वानुभवसिद्धवैकल्ये, अन्यत्रापि सुषुप्त्युत्थितजीवविशेषेपि, बुद्धिवृत्तय इति गङ्गाप्रवाहवद्बुद्धिः सर्वत्रैकैव न नाना, अनुस्मरणादिरूपा बुद्धिवृत्तयस्तु नाना यथा गङ्गाप्रवाहे प्रविष्टानि क्षुद्रनदीजलानि तद्वदित्यर्थः, य एव चिदंशः सुषुप्तापेक्षयान्यो य कश्चन चिदंश इत्यर्थ., तथा भवतु पूर्वोक्तलौकिकवैदिकसकलव्यवहारकर्ता भवत्वित्यर्थः, किं स एवेत्यादि, पूर्वसुप्त एवायाति इति निर्बन्धेन किमित्यर्थः, न सर्वा न स्वाधिकारविहितयावत्कर्मणां कृतिः, अधिकारोस्ति 'अर्थार्थी समर्थो विद्वानधिकारी'ति तस्यार्थित्वाभावान्नाधिकारीत्यर्थ., जीवनाधिकारात् 'यावज्जीवमग्निहोत्र जुहोती'ति जीवनरूपाधिकारसत्त्वादित्यर्थः, अपूर्वः सिध्यतीति सावधारणं तेनापूर्व इष्टसाधनताधीसाध्यो न सिध्यतीत्यर्थः, पूर्वोक्तहेतुसद्भावे लौकिकालौकिकभेदेनोक्तहेतु-

---

१. सुषुप्तेत्यादि बपुस्तकम् । २. क्वैवेति कपुस्तकम् । ३. अजायेतेति कपुस्तकम् । ४. तथाकरणमिति बपुस्तकम् । ५. पूर्वपक्षेयुक्तय इति बपुस्तकम् । ६. पूर्ववृत्तानीति कगोविपुस्तकेषु ।

तु न कोपि दोषः, अतो मुग्धेर्धसम्पत्तिः पूर्वैव नोत्तरा, कुत एतत् ? परिशेषात्, स एव वा न वेति निश्चयप्रमाणानामभावात् अर्थात् सन्देहोवशिष्यते, तस्मात् सन्देहान्मुग्धेर्धप्रतिपत्तिः, न तत्र[1] प्राणायनविघातकृता मूर्च्छा विचार्यते, तस्याः प्राणधर्मत्वात् यथा बाल्यं[2] शरीरधर्मः, व्यर्थश्च विचारः, जीवावस्था एव हि विचार्यन्ते, केवलसाक्षिवादस्तु न ब्रह्मवादः, तस्मादेक एव जीवः स्वप्नादिदोषसम्बन्धरहितस्तादृशजन्मयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति सिद्धम् ॥ १० ॥ ३ ॥

॥ इति तृतीयाध्याये द्वितीयपादे तृतीयमतःप्रबोध इत्यधिकरणम् ॥ ३ ॥

इदानीं विषयनिर्धारार्थं[3] ब्रह्मस्वरूपं विचार्यते, तत्र प्रथममन्योन्यविरुद्धवाक्यानां निर्णयः क्रियते, तदर्थमेतावत् सिद्धं, समन्वयाविरोधाभ्यामेकमेव[4] ब्रह्म[5] प्रतिपाद्यत इति, तत्र यथा कार्यविरोधः परिहृत एवं ब्रह्मधर्मविरोधोपि परिहरणीयः, अन्यथा बोधकता[6] न स्यात्, तत्र स्वगतधर्माणामविरुद्धानामग्रिमपादे[7] विचारः, जडजीवधर्मत्वेन प्रतीतानामत्र विचारः क्रियते, तत्र कचिज्जडजीवधर्मा भगवति बोध्यन्ते कचिन्निषिध्यन्ते यथा "सर्वकर्मा सर्वकामः"

---

चतुष्टयसद्भावे, न कोपि दोषः पूर्वसुप्तस्यैव पुनरागमने न कोपि दोष इत्यर्थः, नोत्तरा नापूर्वा, परिशेषात् अर्धसम्पत्त्यतिरिक्तसर्वकार्यकरणसाधकहेतोरभावादित्यर्थः, प्रमाणानामभावादिति, अमरुशरीरे मूर्छोत्तरं शङ्कराचार्यप्रवेशेनान्यजीवसमागमनात्, एवं ब्रह्मवैवर्ते ब्रह्मखण्डे उपबर्हणगन्धर्वशरीरे मूर्छोत्तर तस्यैव प्रवेशात् वसिष्ठोपदिष्टमन्त्रपूजादेस्तत्पत्न्या स्मरणेन यथापूर्वावस्थालाभात् स एव जीवस्तथा च यत्र पूर्वहेतूनां सत्त्वं तत्र स एव जीवः सर्वा च सम्पत्तिः, मुग्धे तु पूर्वैव नोत्तरा, अन्यजीवप्रवेशस्तु विचारविषय एव नेति न कोपि दोषः, केचिदस्मिन्सूत्रे मूसलाद्यभिघातजन्यां मूर्छां विचारयन्ति, जाग्रत्स्वप्नसुषुप्तमिति तिस्रोवस्थाः पूर्वं विचारिताः, उत्क्रान्तिश्चतुर्थी अग्रे विचार्यते, जाग्रत्स्वप्नयोर्न मूसलमूर्छाया अन्तर्भावः ज्ञानशून्यत्वात्, न सुषुप्तौ निमित्तभेदादत इयं पञ्चमी सूत्रविचारविषया, तन्मतं दूषयन्ति न तत्रेत्यादिना, प्राणायनविघातकृता मूसलप्रहारेण प्राणानां स्वस्थानत्यागकृता अत्र सूत्रे न विचार्यत इत्यन्वयः, व्यर्थः जीवातिरिक्तधर्मविचारो व्यर्थ इत्यर्थः, न च जीवस्य ब्रह्मरूपत्वेन केवलं साक्षित्वात् सर्वोपि विचारो जीवोपाध्यवस्थानामेवेति प्राणावस्थारूपमूसलप्रहाररूपोपाध्यवस्थाविचारे को दोष· ? अत आहुः केवलेत्यादि, न ब्रह्मवादः 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र जीवस्य साक्षिभिन्नत्वेन निरूपणात् साक्षिरूप एवेति ब्रह्मवाद एव न सम्भवतीति सर्वोपि तन्मतविचारोऽब्रह्मवाद इत्यर्थ , तस्मात् पूर्वोक्तरीत्यास्मदुक्तप्रकार एव पर्यवसानात् सुषुप्तस्यैव पुनरागमनात्, तादृशजन्म अव्यवहितपूर्वचरणे विचार ज्ञानोपयोगि जन्म ॥१०॥३॥

इति तृतीयद्वितीये तृतीयाधिकरणम् ॥ ३ ॥

---

न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ प्रकृतग्रन्थसङ्गतिं प्रदर्शयन्तोधिकरणप्रयोजनमाहुः इदानीमित्यादि, ज्ञानाधिकारिविचारोत्तरं ज्ञानविषयनिर्धारार्थमित्यर्थः, विचार्यते एतत्पादशेषाग्रिमपादाभ्यां विचार्यत इत्यर्थः, तत्र ब्रह्मस्वरूपविचारात् पूर्वं, प्रथमं स्वरूपनिर्णयात् पूर्वं, तदर्थं ब्रह्मस्वरूपनिर्णयार्थं, एतावत् सिद्धं तदेवाहुः समन्वयेत्यादि, तथा च प्रथमेऽध्याये सर्वोपनिषद्वाक्यानां समन्वयविचारेण ब्रह्मस्वरूपविचार एव कृतः, सर्वं कार्यं ब्रह्मण एव न प्रकृत्यादेरिति द्वितीयाध्याये विरोधपरिहारोपि ब्रह्मण एव नान्यस्येति परिहारः कृतः, एवं ब्रह्मस्वरूपनिर्णयार्थं, अन्यथा धर्मविरोधपरिहाराभावे, बोधकता न स्यात् सधर्मकं निर्धर्मकं वा जीववत् सदोष निर्दोष वेति निर्णयाभावादुपनिषदां ब्रह्मबोधकता न स्यादित्यर्थः, स्वगताः ब्रह्मगताः, अविरुद्धानां भगवद्धर्मत्वेन निर्णयादविरुद्धानां, अग्रिमपादे तृतीयपादे, अत्र द्वितीयपादे, अधिकरणविषयमाहुः तत्रेत्यादिना, निषिध्यन्ते 'अस्थूल'मित्यादिश्रुतिभिर्निषिध्यन्ते, तथा च संशयः विरुद्धवाक्यद्वयदर्शनाद्ब्रह्मोउभयविधलिङ्गमुतैक-

---

१. नत्वत्रेति कपुगोविषु । २. वाल्पमित्यशुद्धं कैपुस्तके । ३. विषयनिर्हारार्थमिति कैपुस्तके । ४. एकमिति लुप्तं कैपुस्तके । ५. ब्रह्मपदं लुप्तं गोपुस्तके । ६. अबोधकता स्यादिति सर्वेप्यादर्शाः । ७. अग्रिमे पाद इति बपुस्तके ।

(छान्दो. ५. १४. २.), न चैते जीवधर्मा एव न भवन्तीति वाच्यं, उच्चावचकर्मणां कामानाञ्च जीवगतत्वप्रतीतेः, "नेतरोनुपपत्तेः" (ब्र. सू. १. १. १५.) इति सर्वत्र वैलक्षण्यस्योक्तत्वात्, कार्यविशेषधर्माणां कारणे वक्तुमशक्यत्वात्, न च कारणधर्मा एव सर्वे कार्यंशे वा प्रतीयन्त इति वाच्यं, "अस्थूलमनणु" (बृह. ५. ८. ८.) इत्यादिवाक्यैः प्रापञ्चिकसर्वधर्मवैलक्षण्यस्योक्तत्वात्, अत्र केचिदविरोधमेवमाहुः सर्वत्र कारणत्वाद्भगवानस्ति ततश्चास्थूलेस्थूलोनणावणुरुच्चावचकर्तर्युच्चावचकर्त्तोच्चावचकाम उच्चावचकामः पृथिव्यां सर्वगन्धो जलादावगन्धः, एवं रसादिषु, एवं स्थानतः परस्योभयलिङ्गमुपपद्यते, अथवा कारण एव रूपमरूपश्चावच्छेदभेदेनाचिन्त्यसामर्थ्याद्वा, अन्यथा असतः सज्जननप्रसङ्ग इति अपिना सङ्गृहीत इति,

## न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ ( ३. २. ४. )

एतदुभयमपि न, कुतः? सर्वत्र हि सर्वत्र[1] तादृशं रूपं भगवत उपदिश्यते, हि युक्तोयमर्थः, भगवत्स्वरूपप्रतिपादकानि ह्येतानि वाक्यानि, न त्वनुवादकानि, वैयर्थ्यापत्तेः, अचिन्त्यत्वे ज्ञानानुदयः, "तमेव विदित्वातिमृत्युमेति" (श्वेता. ३. ८.) "भक्त्या मामभिजानाति यावान् यश्चास्मि यादृशः ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं" (श्रीमद्भग. १८. ५५.) इति ज्ञानानन्तरमेव सायुज्यप्राप्तेः, न च "यस्यामतं तस्य मतं मतं यस्य न वेद सः अविज्ञातं विजा-

---

विधलिङ्गमिति फलित, पूर्वपक्षमाहु न चेत्यादिना, ब्रह्मप्रकरणपठितत्वान्न जीवधर्मा इति चेन्नेत्यर्थ., तेषां जीवधर्मत्वे हेतुमाहुः उच्चावचेत्यादि, न च श्रुत्यपेक्षया दुर्बलत्वात् प्रतीतेरप्रामाण्यमित्यत आहु नेतर इत्यादि, सर्वत्र सूत्रेषु, वैलक्षण्यस्य जीवब्रह्मणोस्तुल्यतापत्त्या व्याससूत्राणां विरोधप्रसङ्गाद्ब्रह्मणि जीववैलक्षण्यस्योक्तत्वादित्यर्थ·, कार्यविशेषधर्माणां कार्यमात्रधर्माणा, वक्तुमशक्यत्वात् कार्यकारणभावभङ्गापत्त्या वक्तुमशक्यत्वादित्यर्थ·, प्रापञ्चिकेत्यादि, तथा च ब्रह्मणि धर्मप्रतिपादकवाक्यानि ब्रह्मणि धर्मारोपणोपासनपरतयापि चरितार्थानि स्युर्निर्धर्मकब्रह्मप्रतिपादकानि तु प्रयोजनान्तरासम्भवाद्ब्रह्मपराण्येवेत्याशयः, सूत्रं व्याख्यातुमाहु· अत्रेत्यादि, केचित् ब्रह्मवादिन ऋषयः, अविरोधं उभयलिङ्गस्य ब्रह्मण्यविरोधं, सर्वत्र कारणत्वात् 'यतो वा इमानि' 'सदेव सोम्येद'मित्यादिश्रुतिभिर्ब्रह्मणः समवायिकारणत्वादुपादेयमात्राधिकरणतया सर्वत्र भगवतः स्थितिरस्तीतिभावः, तदेवोपपादयन्ति ततश्चेत्यादिना, रसादिष्वित्यादि, तथा चान्यत्र यथा कार्यरूपेण तिष्ठति तद्वद्गुणेष्वपि तत्तद्रूपतया तिष्ठतीत्यर्थः, स्थानतः कार्यरूपत्वतः, परस्य ब्रह्मण., उभयलिङ्गं विरुद्धधर्मद्वयरूपं लिङ्गं, एवमेकप्रकारेण ब्रह्मण्युभयलिङ्गं व्यवस्थाप्य प्रकारान्तरेणोभयलिङ्ग व्यवस्थापयन्ति अथवेत्यादि, अवच्छेदभेदेन पृथिव्यसजोवच्छेदेन ब्रह्मणि रूपं तदन्यावच्छेदेनारूपत्वमित्येवम्प्रकारेणेत्यर्थः, एवं पृथिव्यां सर्वगन्धोजलादावगन्ध इत्येकः पक्षः, अवच्छेदभेदेनेति द्वितीयः, तत्रोभयत्र युक्तिरचिन्त्यसामर्थ्यं, अन्यथा अचिन्त्यानन्तशक्त्यनङ्गीकारेण कार्यात्मकस्थानभूते ब्रह्मणि धर्मानङ्गीकारे, असतः धर्मस्य, सज्जननप्रसङ्गः उत्पत्तिप्रसङ्ग., एतदुभयं पूर्वोक्तपक्षद्वय, अपि नेति, तथा च 'स्थानतोपी'तिसूत्रभागे पूर्वोक्तोर्थः सर्वोपि सम्पन्न इत्यर्थः, सर्वत्र श्रुतिवाक्येषु, तादृशं सधर्मकं निर्धर्मकञ्चेत्यर्थः, एतानि 'सर्वकामः' 'अस्थूल'मित्यादीनि, न त्वनुवादकानि ब्रह्मज्ञानस्यैव 'तमेव विदित्वे'तिश्रुत्या मोक्षसाधनत्वोक्त्या धर्माणामनुवादे प्रयोजनाभावान्नानुवादकानीत्यर्थः, अनुवादके दूषणमाहु. वैयर्थ्यापत्तेरिति, अनुवादे प्रयोजनाभावात् सधर्मकप्रतिपादकानां वैयर्थ्यापत्तेरित्यर्थः, एवमन्यान्यपि वाक्यानि 'अणोरणीयानि'त्यादीनि जीवातिरिक्तब्रह्मात्मान विषयीकुर्वन्ति न त्वनुवादकानि, औपाधिकधर्मानुवादेन ब्रह्मज्ञानस्य मुक्तावनुपयोगात् स्थानगतधर्मानुवादे वैयर्थ्यापत्तेरित्यर्थः, किञ्च 'ज्यायानाकाशादि'त्यादावनुवादोपि न सम्भवति, यदि लोकप्रसिद्धतादृशज्यायांश्चेत्स्यात् तदा तदनुवादोपि ब्रह्मपरिचयार्थः स्यान्नत्वेव, तस्मात् सर्वेषां ब्रह्मप्रतिपादकतैवावसेया न तु स्थानानुवादकता, यच्चोक्तमचिन्त्या या शक्तिस्तद्बलात् स्थाने उभयलिङ्गाविरोधस्तदपि न, तथा सति सामर्थ्यस्याचिन्त्यत्वे तद्वतोप्यज्ञानात् सर्वेषाममुक्तत्वापत्तेः, यस्येत्यादि, यस्य पुंसः, अमतं न ज्ञातं ब्रह्मस्वरूपमचिन्त्यानन्तशक्तिमत्त्वेन, तस्य पुरुषस्य ज्ञातं ब्रह्मज्ञानविषयीभूतं जातं, मतं ज्ञातं भवति. यस्य पुंसः स न वेद न जानाति, तथा चाचिन्त्यशक्तिमत्त्वेनाज्ञानेपि

---

१ सर्वत्रैवैतादृशमिति बपुस्तके, सर्वत्रैतादृशमिति कपुंपुंगोविवरणेषु ।

नतां विज्ञातमविजानताम्" (केन. २. ११.) इति वाच्यं, शास्त्रानारम्भप्रसङ्गात्, अयश्च विरोधः परिहरणीयः, सर्वे हि विरोधा अत्र चिन्त्यन्ते, नापि तत्तदुपादानभूतप्रदेशविशेषेणाविरोधः, अनुवादकत्वेन वैयर्थ्यापत्तेः, न च भगवति भेदोस्ति, प्रत्यारम्भमे "कमेवाद्वितीयं" (छान्दो. ८. २१.) इतिवचनात्, अल्पकल्पनायामपि श्रुतिविरोधः सिद्धः, श्रुत्यविरोधार्थमेव हि प्रवृत्तेः, तस्मान्न मतान्तरानुसारेण जडजीवधर्माणां सत्त्वासत्त्वे परिहर्तुं शक्ये ॥ ११ ॥

प्रकारान्तरेण समाधानमाशङ्क्य परिहरति,

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

न भवदुक्तो विरोधः सम्भवति, भेदात् कारणकार्येषु सर्वत्र भेदाङ्गीकारात्, प्रपञ्चविलक्षणं ब्रह्म भिन्नं प्रपञ्चधर्मवद्ब्रह्म भिन्नं तथाज्ञातं ज्ञातञ्च, एकस्य भेदस्याङ्गीकारे सर्वमुपपद्यत इति चेन्न, प्रत्येकमतद्वचनात् अभेदवचनात्, "इयं पृथिवी सर्वेषां भूतानां मधु" (बृह. ४. ५. १.) इतिब्राह्मणे "अयमेव स योयं" (बृह. ४. ५. १.) इति सर्वत्राभेदवचनात् कार्यकारणरूपप्रकाराणां भेदनिषेधात्, तस्मान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्याः ॥१२॥

भेदाङ्गीकारे बाधकमाह,

## अपि चैवमेके ॥ १३ ॥

अपि च एवमेव अभेदमेव भेदनिषेधेन एके शाखिनो वदन्ति, "मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (कठ. ४. ११.) इति भेददर्शननिन्दावचनात्, तस्मान्न भेदाङ्गीकारः कर्तुं शक्यः, "इव" शब्दो "बहु स्यां" (तैत्ति. ब्रह्म. ६. १.) इति व्यावृत्त्यर्थः, तस्मादुपनिषत्सु सर्वप्रकारोविरोधः सिद्धः ॥ १३ ॥ ४ ॥

॥ इति तृतीयाध्याये द्वितीयपादे चतुर्थमुभयलिङ्गमधिकरणम् ॥ ४ ॥

---

ब्रह्म ज्ञात भविष्यति मुक्तिरपि भविष्यतीति न वाच्यमित्यर्थ, शास्त्रेत्यादि, तथा च पूर्वोक्तरीत्या विचार विनैव सर्वेषां ज्ञानमुक्तिसम्भवे व्यासानां शास्त्रारम्भवैयर्थ्यमितिभाव., अयञ्च विरोध इति, 'यस्यामत तस्य मतमि'त्यत्र केन प्रकारेण मतत्वममतत्वञ्च केन प्रकारेणेतिप्रकारभेदज्ञानाभावेन यो विरोधः स', अत्र एतत्सूत्रमारभ्य पादद्वये, ननु परस्परविरुद्धकार्याणां ये विरुद्धोपादानप्रदेशविशेषास्तेषामेकस्मिन् विरोधस्तत्परिहारायोभयलिङ्गवाक्यानीत्यत आहु' नापीत्यादि, अनुवादकत्वेन पृथिव्या सिद्धस्यैतादृशोपादानत्वस्य लोकसिद्धत्वेनानुवादकवाक्यानां वैयर्थ्यापत्तेरित्यर्थः, ननु पृथिव्यादिरूपे भगवत्यंशसत्त्वात्तद्भेदेन विरोधपरिहार' भगवति तु अंशाभावादुभयमसिद्धमितिविरोधोतो नानुवादकत्ववैयर्थ्यमित्यत आहु' न चेत्यादि, भगवति पृथिवीरूपे तदतिरिक्ते भगवति, प्रत्यारम्भं ब्रह्मप्रतिपादनारम्भो वेदे यत्र यत्र तत्र सर्वत्रेत्यर्थः, अल्पकल्पनायामिति किञ्चिदंशेपि स्वल्पविरोधकल्पनायामपीत्यर्थ', प्रवृत्तेरिति व्यासस्य प्रवृत्तेरित्यर्थ., तथा च स्वल्पविरोधस्याप्यपरिहारे व्यासप्रवृत्तिवैयर्थ्यमित्यर्थः, प्रकारान्तरेण उक्तमतान्तररीत्या, सत्त्वासत्त्वे ब्रह्मणि सत्त्वासत्त्वे विरुद्धोभयलिङ्गत्वेनाभिमते, परिहर्तुं शक्ये ब्रह्मणि विरुद्धे अत. परिहार्ये इति नेत्यर्थः, तथा च मतान्तरोक्तरीत्या नोभयलिङ्गविरोधपरिहार सिध्यतीत्यर्थः ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥ भवदुक्त इत्यादि, तथाच भवद्भिः ब्रह्मणि पूर्वोक्तरीत्या यो विरोध उक्त स उभयलिङ्गविरोधोस्मद्वक्ष्यमाणप्रकारे न भवतीत्यर्थः, सर्वत्र श्रुतौ स्मृतौ चेत्यर्थः, भेदनिषेधात् पूर्वोक्तविधश्रुतिसहस्रेषु भेदनिषेधादित्यर्थ. ॥ १२ ॥

अपि चैवमेके ॥१३॥ 'बहु स्यामि'तिव्यावृत्त्यर्थ इति, तथा च 'बहु स्यामि'तीच्छया भगवद्रूपनानापदार्थदर्शने न 'मृत्यो. स मृत्यु'मित्यादिदोष. किन्तु वस्तुतो ब्रह्मभेदबोधे मृत्युरूपो दोष एवंव्यावृत्त्यर्थमित्यर्थः ॥१३॥४॥

॥ इति तृतीयद्वितीये चतुर्थाधिकरणम् ॥ ४ ॥

---

१. प्रत्यारम्भकमितिपुंगोविवरणेषु । २. तथाज्ञानं ज्ञानञ्चेति कपुपुस्तकयोः ।

एकदेशिमतेन समाधानमाह,

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ ( ३.२.५. )

कथमत्र सन्देहो विरोधो वा? जडजीवधर्माणां विधिनिषेधयोर्जडजीवयोर्हि जडजीवधर्मा भवन्ति, अन्यत्र तूपदिश्यमाना उपासनार्था भवन्ति, ननूक्तो भेदाभावः, सत्यं, तथापि कार्यकारणांशभावकृतस्य[1] भगवद्विहारार्थं जातस्य भेदस्य निषेद्धुमशक्यत्वात् तस्माद्ब्रह्मणि जडजीवधर्माणां निषेधो युक्तः, उपचारात्तु सर्वकर्मादयः, विपरीतं किं न स्यात्? अत आह अरूपवदेव, रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वं, तद्युक्तं रूपवदेव विश्वं, ब्रह्म तु[3] तद्विलक्षणं, कार्यकारणांशांशिनोर्वैलक्षण्यस्य युक्तत्वात्, नत्ववैलक्षण्यमपि[4] युक्तं कारणत्वादत आह तत्प्रधानत्वात्, तस्य[5] ब्रह्मणः प्रधानत्वात् मुख्यत्वात्, यत्र हि यत्[6] प्रतिपाद्यते तत्र तस्य मुख्यत्वं, ब्रह्मप्रतिपादने ब्रह्मधर्माणामेव मुख्यत्वं, नान्यधर्माणां, यथा प्रशासनस्य मुख्यत्वं तथा "सर्वकर्मे"ति, लौकिककर्मानुवादेन[2][7] भगवत्सम्बन्धे स्पष्टमेवामुख्यत्वं, विशिष्टबोधनेपि सर्वशब्दस्य प्रसिद्धानुवादकत्वादतिरिक्तकल्पनायां गौरवात् प्रमाणाभावाच्च, यथाकथञ्चिद्धर्मवत्त्वेन[8] ज्ञानस्यैवोपयोगाल्लोकधर्मानेवानूद्य वैशिष्ट्यबोधनमुचितं, अरूपमितिवक्तव्ये अरूपव-

---

अरूपवदेव हि तत्प्रधानत्वात् ॥१४॥ पूर्वाधिकरणेनैककार्यकारित्वमङ्गार्ति प्रदर्शयन्तोधिकरणमवतारयन्ति एकदेशिमतेनेत्यादिना, एतन्मतस्याग्रे किञ्चिदंशेङ्गीकार्यत्वादादौ कथनं, कथमत्र सन्देहः ब्रह्मणि सर्वकर्मेत्यादिधर्माणां कथं केन प्रकारेण सन्देह इत्यर्थः, अत्र एतस्मिन्नधिकरणे, इत्थं च पूर्वाधिकरणे उभयलिङ्गवाक्यश्रवणमात्रेणापाततः सन्देह., विरोधो वा जडजीवधर्माणां ब्रह्मणि विरोधनिश्चयो वा, संशयो विरोधनिश्चयोपि किमुभयलिङ्गश्रवणमात्रेणोतोभयलिङ्गधर्मिणोर्भेदनिश्चयाद्वा? तत्रोभयलिङ्गश्रवणमात्रेण सन्देह निराकुर्वन्ति जडजीवेत्यादि, विधिनिषेधयोः संशये कोटीभूतयोः, भवन्तीति, तथा च जडजीवयोरेवानयोर्धर्मा न तु ब्रह्मणीतिबाधनिश्चयान्नापाततः संशय इत्यर्थः अन्यत्र ब्रह्मणि, उभयलिङ्गधर्मिणोर्भेदमङ्गीकृत्योभयधर्मयोर्विरोधं निश्चित्याह ननूक्त इत्यादि, भेदाभावः, सत्यमित्यादि, 'सर्वं खल्वि'त्यादिश्रुतिभिः भेदाभावप्रदर्शनं सत्यमेव पर रमणेच्छातो बहुभवनेक्षणात् पूर्वमेव सत्यं नतूत्तरमपि, अशक्यत्वात् रमणान्यथानुपपत्त्या तादृशभेदनिषेधस्य वक्तुमशक्यत्वादित्यर्थः, निषेधो युक्त इति, तथा च धर्मिणोर्भेदाद्धर्मनिषेधो युक्तः, संशयस्त्वापातत एव धर्मिणो भेदाग्रहादितिभावः, उपचारात् अभेदक्रमेण गौण्या वृत्त्येत्यर्थ , विपरीतं ब्रह्मणि वास्तवं सर्वकर्मत्वादिकं, तथा च ब्रह्मणः कार्यमात्रोपादानत्वादुपादेये चोपादानधर्माणामेव सम्भवात् सर्वकर्मत्वादयो धर्मा ब्रह्मण्येव सन्तु विरुद्धधर्माणां श्रुत्या श्रावणात् संशयो वा स्यान्न तु ब्रह्मण्युक्तधर्माणामभावनिश्चय इत्यर्थ., समाधान वदन्तः सूत्रार्थमाहु. रूप्यत इत्यादि, नत्ववैलक्षण्यमित्यादि, तथा चावैलक्षण्ये कार्यकारणयोरंशांशिनोर्वा भेदे कार्यकारणभावोशांशिभावो वानुपपन्न एवभवेदित्ययुक्तता, कारणत्वात् ब्रह्मणो विश्वं प्रति कारणत्वात्, यत्र ब्रह्मणि, यद् विश्वं, तत्र तादृशप्रतिपादनस्थले, तस्य अधिकरणीभूतब्रह्मण., ब्रह्मधर्माणां अस्थूलत्वादिधर्माणा, नान्यधर्माणां न विश्वधर्माणा सर्वकर्मत्वादीनां प्राधान्यमित्यर्थः, तत्र दृष्टान्तमाहुः यथेति, प्रशासनस्य मुख्यत्वं, 'एतद्वै तदक्षरमि'ति ब्रह्मैवोद्दिश्य प्रशासनस्योक्तत्वात् प्रशासनस्य मुख्यत्वं मुख्यं ब्रह्मधर्मत्वं, तथेति व्यतिरेकदृष्टान्तः, तथा चात्र 'मनोमयः प्राणशरीर' इति विशिष्टमुपक्रम्य सर्वकर्मत्वादिधर्माणां पठितत्वात्तेषामनुवादं कृत्वा भगवत्सम्बन्धे भगवद्धर्मत्वे उच्यमाने, अमुख्यत्वं आरोपितं भगवद्धर्मत्वमित्यर्थः, विशिष्टबोधनेपि 'सर्वकर्मा सर्वकाम'इत्यादिशब्दैरुक्तधर्मविशिष्टतया ब्रह्मणो बोधनेपि, अतिरिक्तकल्पनायां ब्रह्मणि लौकिकधर्मसदृशातिरिक्तधर्मकल्पनायां, गौरवात् तादृशातिरिक्तधर्मकल्पनायां गौरवात्, प्रमाणाभावात् 'निष्कलं शान्त'मित्यादिश्रुत्या धर्माणां बाधप्रदर्शनात् सधर्मकत्वबोधकश्रुतिभिस्तत्रातिरिक्तधर्मकल्पनायाः कर्तुमशक्यत्वादित्यर्थ., उचितं उपासनार्थमुचितं, नन्वरूपमितिवक्तव्ये अरूपवदित्युक्तेः अरूपसदृशप्रतीतेर्विश्वविलक्षणधर्मवत्त्वैव बोध्यते इति किं न स्यादत आहुः भिन्ने-

---

१. कार्यकारणाशभावे कृतस्येति कंपुस्तके । २. इत आरभ्य लौकिककर्मानुवादेनेत्यन्तं लुप्तं गोपुस्तके । ३. तुपदं लुप्तं पुंपुस्तके । ४. नन्ववैलक्षण्यमिति कपुबपुस्तकेषु । ५. तस्य ब्रह्मण इति लुप्तं कंपुस्तके । ६. तदिति कबपुषु । ७. लौकिकधर्मेत्यादि पापुस्तके । ८. तद्धर्मेत्यादि कपुगोषु ।

दितिवचनं भिन्नधर्माणामेवैवं निर्णयो न तु प्रशासनवद्भगवद्धर्माणां, तस्मात् कार्यवत्तद्धर्माणामपि कार्यत्वाद्भगवत्त्वं न भगवद्धर्मत्वमिति सिद्धम् ॥ १४ ॥

ननु सर्वव्यवहारातीते शास्त्रवैफल्यं, "मनसैवैतदाप्तव्यं" ( कठ. ४. ११. ) इतिविरोधश्च न परिहृतः, "तं त्वौपनिषदं पुरुषं पृच्छामि" ( बृह. ५. ९. २६. ) "यतो वाचो निवर्तन्ते" ( तैत्ति. ब्रह्म. ९. १. ) इति चेत्यत आह,

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

प्रकाशवत्, यथा सौर[1]प्रकाशो व्यवहार्योऽव्यवहार्यश्च न हि स्वतः सम्पादयितुं शक्यते स्थापयितुं वा आगते तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारः कर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुं ईश्वरसन्निधाने तु शक्यते इति द्वयमाह श्रुतिः[2], कुत एतदवगम्यते ? तत्राह अवैयर्थ्यात्, अन्यथा शास्त्रं व्यर्थं स्यात्, चकाराद्धर्माणां तथात्वविरोधः परिहृतः, "आसीनो दूरं व्रजति" ( कठ. २. २०. ) "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" ( श्वेता. ३. १९. ) इत्यादावलौकिका भगवद्धर्मा उच्यन्ते, अकारणककार्यवचनाद्ब्रह्मधर्माणा[3]श्चाकार्यत्वं बोधयति, तस्मादव्यवहार्येपि न शास्त्रवैफल्यम् ॥ १५ ॥

किञ्चिदाशङ्क्य परिहरति, नन्वलौकिकानीन्द्रियाणि विरोधाभावाय कथं न कल्प्यन्ते ? अन्यथा अकारणकका[4]र्यत्वं तस्य च नित्य[5]त्वमलौकिकत्वं ततश्च "पश्यत्यचक्षुः" ( श्वेता. ३. १९. ) इति विरोध इत्याशङ्क्य परिहरति,

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिः स्वयमेव तन्मात्रं प्रज्ञानघनमात्रं "स यथा सैन्धवघनोनन्तरो[6]बाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृह. ६. ५. १३. )

---

त्यादि, भिन्नधर्माणां विश्वधर्माणां सर्वकर्मत्वादीनां, एवं निर्णयः भगवत्त्वभावनिर्णयः, नत्वित्यादि, तथा 'चास्थूला'दिवाक्य एव प्रशासनादिधर्मवतो भगवतः श्रवणात्तद्धर्मैर्व्यवहार्यमेव ब्रह्म न तु सर्वथाऽव्यवहार्यमेवेत्येतादृशार्थबोधायैवारूपवदित्युक्तमित्यर्थः, भगवद्धर्माणामित्यस्याभावनिर्णय इत्यन्वय., कार्यवत् प्रपञ्चवत्, न भगवद्धर्मत्वं प्रपञ्चरूपभगवद्धर्मत्वेपि न प्रधानरूपभगवद्धर्मत्वमित्यर्थ. ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ सूत्रमवतारयन्ति नन्वित्यादि, सर्वव्यवहारातीते पूर्वसूत्रे सर्वकर्मत्वादिभिर्ब्रह्मणो व्यवहार्यत्वोक्तेः प्रशासितृत्वादिवास्तवभगवद्धर्माणां चालौकिकत्वेन व्यवहारविषयत्वाभावेन सर्वव्यवहारातीत इत्यर्थः, शास्त्रवैफल्यं तादृशस्य ब्रह्मणो ज्ञानविषयत्वस्याप्यसम्भवाद्ब्रह्मबोधकशास्त्रस्य वैयर्थ्यमित्यर्थः, विरोधः सर्वव्यवहारातीते मनोवेद्यत्वस्याप्यसम्भवाच्छ्रुतिविरोध इत्यर्थः, इति चेति अनयोरपि श्रुत्योर्विरोध इत्यर्थः, स्थापयितुं यथा न गच्छति तथा स्थापयितुमित्यर्थः, सान्निध्येत्यादि प्रतिबन्धकाभावाद्व्यवहर्तुं शक्यत इत्यर्थः, द्वयं मनोवागविषयत्वं मनोवाग्विषयत्वञ्चेतिद्वयं, शास्त्रं 'मनसैवैतदवाप्तव्य' 'तमेव विदित्वातिमृत्युमेति' इतिशास्त्रं, धर्माणां भगवद्धर्माणां, तथात्वविरोधः लौकिकत्वविरोधः, भगवद्धर्माणां लौकिकत्वपरिहारिकां श्रुतिमाहुः 'आसीन' इत्यादि, न शास्त्रवैफल्यं अव्यवहार्येपि पूर्वधर्माणामिव व्यवहारदर्शनाद्विरुद्धधर्माधारत्वस्य भगवदसाधारणत्वान्न वैफल्यमित्यर्थः ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥ ततश्च अलौकिकेन्द्रियकल्पनातश्च, परिहरति अलौकिकेन्द्रियकल्पनाप्रयुक्तो योपाणिपादश्रुतिविरोधस्तं परिहरतीत्यर्थः, ननु लौकिकरीत्या स्वरूपातिरिक्तानामेवेन्द्रियाणा क्रियाजनकत्वदर्शना-

---

१. सौर इति कपुंगोपुस्तकेषु । २. श्रुतिरिति लुप्तं गोपुस्तके । ३. धर्माणामिति पुंगोविषु, तद्धर्माणामिति कपुपुस्तकयोः । ४. कार्यमिति पुपुस्तके । ५. नित्यमलौकिकत्वमिति कपुपुस्तकयो. । ६. अनन्तरबाह्य इति कं पुस्तके ।

इति स्वरूपातिरिक्तानामिन्द्रियाणामभावात्, न च क्रियाभावोपि, वेदविरोधेन तथा कल्पयितुमशक्यत्वात्, वेदनिश्वासायनभूतसमुत्थानादेरुक्तत्वाच, अतो नेन्द्रियाणां परिकल्पना, किन्तु सर्वाकारस्वरूपं वस्त्वेव तादृशमिति मन्तव्यं, "कृत्स्न"वचनात्, चकारात् "सर्वेन्द्रियविवर्जितं" ( श्रीमद्भग. १३.१४. ) इतिस्मृतिरपि, तस्मान्नेन्द्रियकल्पनया विरोधः ॥ १६ ॥

पुनः प्रकारान्तरेण विरोधमाशङ्क्य परिहरति, ननु ब्रह्म जगत्कारणमिति सिद्धं, तच्च समवायि निमित्तश्चेति च, कारणधर्मा एव हि कार्ये भवन्ति, असम्भावनायान्त्वन्यथाकल्पनं, कामादयो धर्माश्च श्रुतौ विहिताः, ते ब्रह्मण एव भवितुं युक्ताः, निषेधिकापि श्रुतिः, न हि वेदवादिनामणुमात्रमप्यन्यथाकल्पनमुचितमित्याशङ्क्य परिहरति,

## दर्शयति चाथोपि स्मर्यते ॥ १७ ॥

दर्शयति श्रुतिरेव जडजीवधर्माणां भगवत्यभाव इति, "द्वे वाव ब्रह्मणो रूपे" ( बृह.४.३.१.) इत्युपक्रम्य द्वेधा पञ्चभूतान्युक्त्वा "अथात आदेशो नेति नेति" (बृह.४.३.६.) इत्याह, इतिशब्दः प्रकारवाची, ब्रह्म पञ्चमहाभूतानि भवति, नत्वेवम्प्रकारकं, तत् साधयति, "न" भवत्येव ब्रह्म तादृशं, हि युक्तोयमर्थः, एतस्माज्जातमिति, न हि कार्यकारणयोरेकः प्रकारो भवति, अतो "नेति" ( बृह. ४.३.६. ) इति प्रकारनिषेधोपसंहारः, न तु समवायित्वमात्रं किन्त्वन्यत् परमस्तीति रूपं निरूप्य नाम निरूपयति "सत्यस्य सत्यं" (बृह.४.३.६.) इति, तेन प्रपञ्चातिरि-

---

द्भगवति च स्वरूपातिरिक्तेन्द्रियाभावात् क्रियापि न भविष्यतीत्यत आहुः न च क्रियाभाव इत्यादि, वेदविरोधेन 'दूरं व्रजती'तिवेदविरोधेन, तथा क्रियाशून्यत्वं, ननु तादृशव्रजनस्य प्रकरणान्तरीयत्वाच्छरीरविशिष्टस्यैव स धर्मो न तु शुद्धस्यैवेत्यत आहुः वेदेत्यादि, तथा च वेदनिश्वासरूपक्रियायनत्वस्य भूतसमुत्थानक्रियायाश्चैतत्प्रकरणेप्युक्तत्वाच्छुद्धस्यैव क्रियावत्त्वं सिद्धमित्यर्थः, कल्पनया विरोधः कल्पनाप्रयुक्तो विरोध इत्यर्थः ॥ १६ ॥

दर्शयति चाथोपि स्मर्यते ॥१७॥ सिद्धं 'तस्माद्वा एतस्माज्जायते प्राणः' 'यतो वा इमानि' इत्यादिश्रुतिभिः सिद्धं, इति चेति सिद्धमित्यनेनान्वयि, असम्भावनायां कारणीभूतब्रह्मधर्माणां कार्येनङ्गीकरणदशायां विवर्तवादस्य असतः सत्तावादस्य चाङ्गीकारे, अन्यथाकल्पनं 'एकोहं बहु स्याम्' 'ऐतदात्म्यमिद'मित्यादिश्रुतिविरुद्धकल्पनं, इत्याशङ्क्य श्रुत्युक्तविधिनिषेधौ ब्रह्मणीत्याशङ्क्य, परिहरति विषयवाक्यमुपन्यस्य 'दर्शयती'त्यनेन परिहरतीत्यर्थः, अभाव इत्यस्य दर्शयतीत्यनेनान्वयः, द्वे इत्यादि, इदं बृहदारण्यके मूर्तामूर्तब्राह्मणे, तत्र 'द्वे वाव ब्रह्मणो रूपे' इत्युपक्रम्य अधिदैवताध्यात्मभेदेन द्वेधा पञ्चभूतान्युक्त्वा 'अथात आदेशो नेति नेति' इतिनिषेधमाह, द्वेधा मूर्तामूर्तभेदेन द्वेधा, इतिशब्दः प्रथमस्य इतिशब्दः, तत् साधयति प्रथमस्य इतिशब्दस्य प्रकारवाचित्वं 'न ह्यस्मादन्यत्परमस्ती'तिव्याख्यानश्रुतिस्थप्रथमनकारेण साधयतीत्यर्थः, तादृशं मूर्तामूर्तमात्रप्रकारकं, एतस्माद्ब्रह्मणः सकाशात्, कार्यकारणयोः ब्रह्मप्रपञ्चयो, प्रकारनिषेधः मूर्तामूर्तप्रकारकमितिप्रकारः, उपसंहारः समाप्तिः, व्याख्यानश्रुतौ 'न हि' एतद्व्याख्यातं, 'अस्मादन्यत्परमस्तीति'श्रुतिभागं व्याख्यातुमाहुर्नत्वित्यादि, तथाचा'थात आदेशो नेति'ताभ्या कार्याभ्यां रूपाभ्यां ज्ञाप्यस्य ब्रह्मण उपदेशः, 'नेतिनेती'त्यत्र समवायित्वान्मूर्तामूर्तप्रकारकं ब्रह्मेति नेति प्रथम'नेती'त्यस्यार्थः, द्वितीय'नेति'ना ब्रह्मण एतावन्मात्रता परिहृता बोध्या, व्याख्यानश्रुतितः 'नेति नेती'त्यनेन प्रकारैतावत्त्वयोर्निषेधः फलितः, सर्वनिषेधे रूपद्वयनिषेधे भूतराश्योर्निषेधे नञ्द्वयेन तावन्मात्रत्वस्थापने वा सर्वप्रतिपादनस्य प्रक्रमान्तरस्य व्याख्यानश्रुतेश्चानुपपत्तिः स्यात्, रूपमित्यादि, ब्रह्मणो रूपं निरूप्य 'सत्यमिति ब्रह्मनाम' नाम निरूपयतीत्यर्थः, एतेन नामरूपत्वयोर्निरासः कृतः, 'सत्यस्य सत्य'मिति ब्रह्मनाम 'प्राणा वै सत्यं तेषामेष वै सत्यमिति, 'प्राणाः' पूर्वोक्ता अपरब्रह्मरूपाः, 'सत्यं' सत्यस्वरूपाः, तत्र हेतुः यत'स्तेषां' 'एषः' परमात्मा 'वै सत्यं' स्वरूपभूत इति,

---

१. वेदनिश्वासेत्यादि बपापुस्तकयो, भेदविश्वासेत्यादि च कंपुस्तके । २ कल्पनाविरोध इति कंबपापुस्तकेषु । ३. श्रुतिविहिता इति कंपुस्तके । ४. पञ्चभूतानीति पुंपुस्तके । ५. नेतिनेतीति बपापुस्तकयोः । ६. नन्विति पुपुस्तके । ७. मात्रत्वमिति कबपुपुंगोपापुस्तकेषु ।

क्तब्रह्मणो विद्यमानत्वात् प्रपञ्चधर्मवचनं तस्मिन्नौपचारिकमेव युक्तं, श्रुत्यैव तथाप्रतिपादनात्, चकारः पूर्वयुक्त्यनुसन्धानार्थः, अथो इति प्रक्रमभेदेपि, "अथात आदेशः" (बृह. ४.३.६.) इति भिन्नप्रक्रमेणाह, श्रुतेरन्यार्थतानिराकरणायाह अपि स्मर्यते "अनादिमत्परम्ब्रह्म न सत्तन्नासदुच्यते" (श्रीमद्भग.१३.१२.) इति, सदसतोः क्षेत्रत्वात् ज्ञेयत्वेन[2] निरूपणे निषेधः, प्रपञ्चधर्मा भगवत्युच्यन्ते वेदादौ न तु तद्धर्मा भवन्तीति ज्ञापयति, तस्माच्छ्रुतिस्मृतिभ्यामेव तथानिर्णयः ॥ १७ ॥

प्रपञ्चधर्मा भगवत्युपचारादुच्यन्ते[3] इत्यत्र निदर्शनान्तरमाह,

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

अत एव इममेव निर्णयमाश्रित्य "समः प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैः समोनेन सर्वेण" ( बृह. ३. ३. २२. ) ईत्यस्य भगवतो यदुपमानं तत् तद्धर्मसम्बन्धात्, न चात्र स्वतन्त्रतादृशधर्मवत्त्वं ब्रह्मणो वक्तुं युक्तं, नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तमाह सूर्यकादिवत्, सूर्येण सहितं जलं सूर्यकं, "यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोनुगच्छन्" (          ) "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" (ब्र. बि. १२.) इति यथेतरसंश्लिष्टस्योपमानत्वमेवं "समः प्लुषिणा" ( बृह. ३. ३. २२. ) इत्यपि, चकारस्तु विरोधाभावो[5] वक्तव्योधिकरणञ्च सम्पूर्णमेकदेशिन इति सूचयति, तस्माज्जडजीवधर्माणां भगवत्युपचारो निषेधस्तु मुख्य इति ॥ १८ ॥ ५ ॥

॥ इति तृतीयाध्याये द्वितीयपादे पञ्चममरूपवदेव हीत्यधिकरणम् ॥ ५ ॥

मुख्यसिद्धान्तं वक्तुमेकदेशिनं दूषयति,

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ ( ३. २. ६. )

तुशब्दः तथा[6]सिद्धान्तं व्यावर्तयति, तथात्वं समवायातिरिक्तस्य तद्धर्मयोगाज्जडजीव-

---

प्रपञ्चधर्मवचनं प्रपञ्चधर्माणां सर्वकर्मत्वादीनां ब्रह्मणि प्रतिपादन, औपचारिकं अभेदभ्रमेण सादृश्यभ्रमप्रयुक्तगौण्या वृत्त्येत्यर्थः, पूर्वयुक्तिः परब्रह्मणः प्रपञ्चातिरिक्तत्वसाधिका युक्तिः, प्रक्रमभेदे कार्यकारणब्रह्मणोः प्रकरणभेदेपीत्यर्थः, आह सूत्रकारोथोपीतिशब्देन परमात्मनिरूपणमाहेत्यर्थ, श्रुतेः 'न ह्यस्मात्परमस्ती'तिश्रुते अन्यार्थता ईश्वरात्मकमपर ब्रह्म एतदतिरिक्त परं ब्रह्मैतदर्थातिरिक्तार्थता, सत् प्रत्यक्षगोचर, असत् अतीतानागतप्रत्यक्षागोचरः, क्षेत्रत्वात् इतरनिर्माणभूमित्वात्, ज्ञेयत्वेन मोक्षार्थज्ञानविषयत्वेन निरूपणे निषेधो न तु सामान्यतो ब्रह्मतायामित्यर्थः, तद्धर्माः प्रपञ्चधर्माः, भवन्ति परे ब्रह्मणि भवन्तीत्यर्थः ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥१८॥ सूत्रमवतारयन्ति प्रपञ्चेत्यादि, अत एव प्रपञ्चधर्माणामौपचारिकत्वादेव, इमं औपचारिकत्वरूपमुपमेयधर्मशून्यं, अस्य 'न तत्समश्चाभ्यधिकश्चे'त्यादिश्रुत्योक्तस्य तु तत्, तद्धर्मसम्बन्धात् उपमानानां धर्मारोपात्, इदं निदर्शनं, विरुद्धं समत्वासमत्वयोर्द्वयोरपि श्रुत्युक्तत्वाद्विरुद्ध, दृष्टान्तमाह विरोधपरिहारकं श्रौतं दृष्टान्तमाहेत्यर्थः, इतरसंश्लिष्टस्य जलादिसश्लिष्टचन्द्रस्य, एवं इतरसंश्लिष्टस्य ब्रह्मण उपमेयत्वमपीत्यर्थः ॥ १८ ॥ ५ ॥

इति तृतीयद्वितीये पञ्चमाधिकरणम् ॥ ५ ॥

---

अम्बुवदग्रहणात्तु न तथात्वम् ॥१९॥ सूत्रमवतारयन्ति मुख्येत्यादि, पूर्वोक्त एव ब्रह्मणि सर्वकामत्वादितदभावयोः सशयः, धर्माणामौपचारिकत्वं पूर्वपक्षः, अयमेव पूर्वाधिकरणाद्विशेषः, एकदेशिनं धर्माणामौपचारिकत्वमतं, तथासिद्धान्तं 'तथात्व'मित्यादिना वक्ष्यमाणं सिद्धान्तं, तथात्वं विवृण्वन्ति समवायेत्यादिना, समवा-

---

१. प्रक्रमभेदोपीति कपुबप्रकाश गोपापुस्तकेषु । २. ज्ञेयनिरूपण इतिपाठः सर्वेष्वादर्शेषु । ३. उपचारादिति लुप्तं बपुस्तके । ४. निरुपमस्येतिपाठः सर्वेष्वादर्शेषु । ५. विरोधाभावे इति गोपुस्तके । ६. तथेति लुप्तं पुपुस्तके ।

धर्मयोगात् सर्वकामत्वादयो न भवन्ति, कुतः ? अम्बुवदग्रहणात्, सर्वपरस्य हि प्रतिबिम्बेधिकरणधर्मत्वं[1], तत्र रूपरहितं तत्र विद्यमानश्च न प्रतिबिम्बत इति वक्तव्यं, तथापि स्वमतविरोधादम्बुवदग्रहणमिति, स्वच्छमम्बु प्रतिबिम्बं गृह्णाति, न हि तथा धर्मा ग्रहीतुं शक्नुवन्ति, धर्मत्वाच्च सर्वाधारत्वेन तथोच्यमाने वैयर्थ्यमिति पूर्वमवोचाम, न च भ्रमात्कल्पनं वेदेनोच्यते, अप्रतारकत्वात्सर्वज्ञत्वाच्च, विप्लववादिन एवैवं[2]वचनं न वैदिकस्य, "पृथिव्यां तिष्ठन्" (बृह. ५. ७. ३.) इत्यादिविरोधश्च, तस्माद्ब्रह्मधर्मा एव सर्वकामादयो न तूपाधिसम्बन्धादौपचारिका इति ॥ १९ ॥

सिद्धान्तेन विरोधपरिहारमाह,

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

विरोधो हि परिहरणीयो लोकवेदाभ्यां तदनुसारेण, महानवकाशो अल्पोवकाशो "यथावकाशं दश चमसान्" (आप.श्रौत.१२.२.१०.) इति लौकिकवैदिकव्यवहारो वस्तुधर्मविरुद्धो दृश्यते, व्यापकत्वं वृद्धिह्रासौ चाकाशस्यैव, तत्र यथा करके प्रविष्ट आकाशस्तथा व्यपदिश्यते तथा सत्युभयसामञ्जस्यं भवत्यन्यथान्यतरबाधो[3] भवति, एवं तत्तदनुप्रवेशाद्ब्रह्माप्येवं, न चौपा-

व्यतिरिक्तस्येत्यर्थ, तथा च पञ्चीकृतजलसमवाय्यतिरिक्तस्य सूर्यादितेजसो यथा कम्पादिजलधर्माणा वास्तवयोगाभावस्तथा ब्रह्मण्यपि जडसमवाय्यतिरिक्ते सर्वकर्मत्वादिजडधर्माणा वास्तवयोगाभाव., अतो हेतो सर्वकर्मत्वादयो धर्मा ब्रह्मणि न सन्तीतिपरमत तन्नेति 'न तथात्व'मितिसूत्रस्थस्यार्थ., सर्वपरस्य सर्वापेक्षया परस्य ब्रह्मण, प्रतिबिम्बे अधिकरणीभूते ब्रह्मणि प्रतिबिम्बधर्मत्वे वक्तव्ये सति, अधिकरणधर्मत्वं जडजीवधर्माणां ब्रह्मधर्मत्व वक्तं शक्यत इत्यर्थः, इति वक्तव्यं वादिनं प्रति दूषण वक्तव्य, स्वमतविरोधात् स्वमतेपि विरुद्धधर्मद्वयाधारत्वस्य ब्रह्मण्यङ्गीकारेण व्यापकत्वसर्वत्रविद्यमानत्वधर्मयोरङ्गीकारात् ब्रह्मणि लौकिकधर्माभासस्याप्यङ्गीकारात्, तथा च तन्मतमात्रपर्यवसित दूषणं यथा स्यात्तथाम्बुवदग्रहणादितिहेतु व्युत्पादयन्ति स्वच्छमित्यादिना, तथा च स्वच्छमम्बु सूर्यादिप्रतिबिम्बं गृह्णाति नत्वनेकमलकलुषित जलं स्वसंश्लिष्टसूर्यप्रतिबिम्ब ग्रहीतुं योग्य भवति, तथा चास्वच्छमम्बु यथा संश्लिष्टसूर्यादिप्रतिबिम्बग्रहणासमर्थं तथा सर्वकामादयो धर्मा अपि अस्वच्छा भवतां मते मनोधर्मत्वात्तेषा स्वसंश्लिष्टब्रह्मप्रतिबिम्बग्रहणासामर्थ्यमतस्तेषां धर्माणां प्रतीतिः श्रुत्युपपादिता भवन्मतेनुपपन्नेत्यर्थः, धर्मत्वाच्चेति, ब्रह्मण. कार्यमात्रं प्रत्युपादानकारणत्वात्सत्कार्यमात्रस्य ब्रह्मोपादेयत्वात्समवायिकारणस्य च क्वापि समवायिकार्ये प्रतिबिम्बादर्शनाद्ब्रह्मणि धर्मप्रतिबिम्बत्वं सर्वथाऽयुक्तमित्यर्थ, सर्वाधारत्वेन ब्रह्मणः सर्वाधारत्वेन, तथोच्यमाने धर्मेषु ब्रह्मप्रतिबिम्बे उच्यमाने, पूर्वं 'अरूपवदेवे'तिसूत्रव्याख्याने 'रूपं' व्यवहारस्तद्विषयो न भवती'त्यरूपवदि'त्यत. सर्वाधारत्वेनापि व्यवहारविषयत्वादाधारत्वेन प्रतिबिम्बमुरीकृत्यापि धर्माणा व्यवहारो ब्रह्मणि न सम्भवतीतिसूचनादत्र तदुल्लेखो व्यर्थ इत्यर्थ., ननु यथा'सर्वं खल्विति'श्रुतौ ब्रह्मणि सर्वभेदभ्रमरूप कल्पन कृत्वोपासनार्थ श्रुत्योच्यते सर्वाभेदं तथेहापि सर्वकर्मत्वकामत्वादिकमुच्यमानमस्त्वत आहुर्नचेत्यादि, अप्रतारकत्वात् भगवतो मिथ्यावक्तृत्वाभावादित्यर्थः, वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वादीश्वरस्य च तादृशभ्रमरूपवाक्यार्थज्ञानासम्भवस्तस्य सर्वज्ञत्वात्, तथा च तादृशभ्रमजनकवेदवाक्यस्योत्पत्तिरेव दुर्घटेत्याहुः सर्वज्ञेत्यादि, एवंवचनं वेदस्याप्रमाजनकत्ववचनं, जगतोऽविद्याकल्पितत्वाङ्गीकारे श्रुतिविरोधमाहुः पृथिव्यामित्यादि, तथा च तन्मते पृथिव्यादीनामविद्याकल्पितत्वे सर्वथा विद्याविद्याशून्यस्य ब्रह्मणस्तत्र स्थितिप्रतिपादिका श्रुतिरप्रमाणं स्यादित्यर्थः ॥ १९ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥२०॥ सूत्रमवतारयन्ति सिद्धान्तेनेत्यादिना, एकदेशिना कृतविरोधपरिहारस्य दूषणेन विरोध एव पर्यवसितो जात इति सिद्धान्तिमतेन विरोधपरिहारमाह सूत्रकार इत्यर्थः, तदनुसारेण लोकवेदानुसारेण, लोकवेदानुसारमेव व्युत्पादयन्ति महानित्यादि ब्रह्माप्येवमित्यन्तेन, 'यथावकाश दश चमसानि'ति चमसासादनार्था श्रुति', एवमग्निचयनेपि 'यथावकाशं ग्रहान् यथावकाश प्रतिग्रहानि'ति 'वाचस्पते विधे नाम'न्नित्यादिमन्त्रोपधेयानां ग्रहसंज्ञकानामिष्टकानां तत्तद्विग्मध्ये योवकाशस्तदविरोधेनोपधानमुक्तं बोध्यं, अवकाशपदार्थश्चाकाश एव, तत्र यथापदेनाल्पत्वमहत्त्वे उच्येते तादृशो व्यवहारो वस्तुन आकाशधर्मस्य व्यापकस्य विरुद्ध इत्यर्थः, आकाशस्यैव आकाश एव तै रूपै. प्रतीयते इत्यर्थः, उभयसामञ्जस्यं विभुत्वाल्पत्वयोर्युक्ति-

१. अधिकरणधर्मवत्त्वमितिपाठ. सर्वेष्वादर्शेषु । २. एवेति लुप्तं बपुस्तके । ३. एकतरबाध इति सर्वेष्यादर्शाः ।

क्येपि "एतस्यैव प्रशासने" (बृह.५.८.९.) एतद्विदित्वा ( बृह. ५.८.१०. ) "आकाश ओतश्च प्रोतश्च" (बृह.५.८.११.) इति, चकारादेकवाक्योपाख्यानभेदौ सङ्गृहीतौ, सर्वत्र लौकिकं प्रतिषेधत्यलौकिकं विधत्त इति युक्त्या निर्णयः, तस्माद्युक्त्याप्यविरोधः ॥ २२ ॥ ६ ॥

॥ इति तृतीयाध्याये द्वितीयपादे षष्ठमम्बुवदग्रहणादित्यधिकरणम् ॥ ६ ॥

शब्दबलविचारेण विरोधं परिहृत्य अर्थबलविचारेणाविरोधप्रतिपादनायाधिकरणमारभते, सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यन्ते[1] "न चक्षुषा गृह्यते"(मुण्ड.३.१.८.) "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" (कठो.४.१.) "नापि वाचा" (मुण्ड. ३.१.८.) "सर्वे वेदा यत्पदमामनन्ति" (कठो.२.१५.) "अप्राप्य मनसा सह" (तैत्ति. ब्रह्म.९.) "मनसैवैतदाप्तव्यं" (कठो.४.११) "अस्पर्शमगन्धमरसं (कठो.३.१५.) "सर्वरूपः सर्वगन्धः सर्वरसः" (छान्दो.५.१४.२.) "अपाणिपाद" इत्यादि (श्वेता.३.१९.) "विश्वतश्चक्षु"रित्यादि (तैत्ति.सं.४.६.२.४.) निर्गुणश्च (श्वेता.६.११.) "यः सर्वज्ञः सर्वशक्तिः" (छान्दो.५.१४.२.) इत्यादिविरुद्धवाक्यानि,न हि वस्तु द्विरूपं सम्भवति, वाक्यद्वयमपि प्रमाणं, तथा सति प्रमाणान्तरानुरोधेनैकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वमिति युक्तं, तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते, तत्र पूर्वपक्षमाह,

## तदव्यक्तमाह हि ॥ २३ ॥ ( ३. २. ७. )

**तदव्यक्तं** तद्ब्रह्म अव्यक्तमेव भवितुमर्हति, कुतः? **आह हि** श्रुतिप्रत्यक्षाभ्यां "नेतिनेत्यात्मा अग्राह्यो न हि गृह्यते" (बृह.५.९.२६.) इति "न हि गृह्यते" ( बृह.५.९.२६. ) इत्यनुभवसाक्षिकं प्रमाणं श्रुतिराह, न हि केनचिदपि चक्षुषा मनसा वा[2] ब्रह्म दृष्टमस्ति, सर्वरूपत्वे तु सर्वैरेव द्रष्टुं शक्येत, तस्मात्सर्वधर्मवत्त्वेन[3] प्रतिपादकान्युपचरितार्थान्येव, अनुभवविरोधात् इत्येवं प्राप्तम् ॥ २३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

**अपी**ति पूर्वपक्ष[4]गर्हायां, सर्वथा मूर्खः पूर्वपक्षवादी, यतः **संराधने** सम्यक्सेवायां भगवत्तोषे जाते दृश्यते, "श्रद्धाभक्तिज्ञान[5]योगादवेहि" ( कैव. २. ) "यमेवैष वृणुते तेन लभ्यः" ( कठो. २.२३. ) "भक्त्या त्वनन्यया शक्यः अहमेवंविधोर्जुन" "ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुश्च परन्तप(श्रीद्भग.११.५४.)इति,द्विविधमपि रूपं दृश्यते,"ततस्तु तं पश्य[6]ति निष्कलं ध्यायमानः"

---

प्रशासन' इत्यादिना तत्तद्वाक्य एव प्रशासन विधत्ते एवं सर्वधर्मनिषेधमुखेन वेद्यत्वं निषिध्य'तद्विदित्वे'त्यनेन वेद्यत्वं विधत्ते, सर्वत्र एकवाक्योक्तविधिनिषेधस्थले विभिन्नोपाख्यानोक्तविधिनिषेधस्थले चेत्यर्थः, युक्त्या निर्णयः ब्रह्मणो वस्तुनः स्वाभाव्याद्विरोधपरिहारममन्वानं प्रति युक्त्या विरोधपरिहारनिर्णय इत्यर्थः ॥ २२ ॥ ६ ॥

॥ इति तृतीयद्वितीये षष्ठाधिकरणम् ॥ ६ ॥

---

तदव्यक्तमाह हि ॥२३॥ अधिकरणमवतारयन्ति शब्दबलेत्यादि, यद्यपि स्वमते शब्दबलप्राधान्यमेव तथापि ऋष्यन्तरमतानुरोधात्स्वल्पसमापिप्राचुर्यानुरोधाच्चैवमुक्तमितिभावः, संशयमाहुर्नहीत्यादिना, ब्रह्म द्विरूपं न वेतिसंशयः, बीज वाक्येत्यादि, उपचारितार्थत्वं, तत्र ब्रह्मणि, प्रत्यक्षानुरोधेन ब्रह्मणः सर्वरूपत्वे सर्वेषां प्रत्यक्षापत्तेरनुरोधेनेत्यर्थः, निर्णयः अर्थतो निर्णयः, तत्र संशयविषये, श्रुतिप्रत्यक्षाभ्यामित्यस्य नेतिनेतीत्याहेत्यन्वयः, फलितार्थमाह आत्मेत्यादि ॥ २३ ॥

अपिसंराधने प्रत्यक्षानुमानाभ्याम्, श्रद्धेति कैवल्योपनिषत्स्था, द्विविधं साकारं निराकारञ्चेत्यर्थः,

---

१. चिन्त्यत इति कपुगोपुस्तकेषु । २. वेति लुप्तं कपुस्तके । ३. सर्वधर्मवचनप्रतिपादकानीति पुंपुस्तके । ४. पूर्वपक्षीत्यादि गोपुस्तके । ५. श्रद्धाभक्तिध्यानयोगादिति बपापुस्तकयोः । ६. पश्यते इति कबपागोषु ।

(मुण्ड.३.१.८.) "अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोनन्तरूपं" (श्रीमद्भग.११.१६.) इति संराधकस्य स्वानुभवो ध्रुवादीनामनुमापकत्वञ्च, तस्मात् प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां वा ब्रह्म साकारमनन्तगुणपरिपूर्णञ्चेति नाव्यक्तमेवेतिनिश्चयः अतो लौकिकालौकिकप्रत्यक्षविषयत्वादुभयवाक्यार्थरूपमपि ब्रह्म ॥ २४ ॥ ७ ॥

॥ इति तृतीयाध्याये द्वितीयपादे सप्तमं तदव्यक्तमाह हीत्यधिकरणम् ॥७॥

पुनः प्रकारान्तरेण पूर्वोक्तमेव स्थिरीकर्तुमधिकरणान्तरमारभते, तत्र सूत्रद्वयेन पूर्वपक्षद्वयमाह,

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ ( ३. २. ८. )

ननु प्रत्यक्षानुरोधेनोभयविधवाक्यसमाधानं नोपपद्यते, वस्तुशक्त्यैव निर्णय उचितः, न तु श्रुतिप्रत्यक्षाभ्यां, यथा प्रकाशजलसुवर्णादीनामनेकविधत्वं नाङ्गीक्रियते, सूर्यचन्द्रमणिप्रकाशादिषूष्णशीतानुभयरूपस्पर्शाः प्रतीयन्ते, न हि तेजसि तावन्तः स्पर्शा अङ्गीक्रियन्ते, जलं च हिमतप्तकुण्डादिषु, तथा सुवर्णे वर्णभेदाः, न हि सर्वे स्वाभाविकाः, तेजस्त्वादिस्वभावहानिप्रसङ्गात्, तथा ब्रह्मणोपि अवैशेष्यमङ्गीकर्तव्यं, निर्विशेषं हि ब्रह्मेति सर्वप्रसिद्धिः, चकारादेवं-साधका "अग्राह्यो न हि गृह्यते" (बृह.५.९.२६.) इत्येवमादयः, ननूक्तं तस्य तथासाक्षात्कारात्तादृशश्रुतेश्च नैकविधत्वमङ्गीकर्तुं शक्यत इति, नैष दोषः, प्रकाशश्च कर्मणि तपःप्रणिधानादिकर्मणि भगवतः प्रकाशः, तत्र यथा तेषां कामस्तथा प्रकटीभवति, चकारादप्रकाशान्यथाप्रकाशौ, तत्र हेतुरभ्यासादावृत्तेः, यद्येकवारं प्रकटः स्यात् तदा तद्रूपत्वमङ्गीक्रियेतापि, प्रतिभक्तं प्रतिकर्म चाविर्भावः, अतः प्रकाशोपि कृत्रिम एव दीपप्रकाशवत्, अन्यथा सर्वदा स्यात्, तस्मान्न भक्तप्रत्यक्षेण निर्णयः ॥ २५ ॥

---

'निष्कलं ध्यायमानः पश्यती'त्यनेन निराकारस्यापि दर्शनमुक्तमित्यर्थः, अनुमापकत्वं स्मृतिप्रमाणसिद्धं भगवति ध्रुवादिप्रत्यक्षविषयत्वमित्यर्थः, प्रत्यक्षानुमानाभ्यामित्यत्र प्रत्यक्षं नारदब्रह्मादीनामनुमानं श्रुतिस्मृतिसमुत्थहेतुभिरस्मदादीनां बोध्यं, तथा च द्विविधमपि ब्रह्म वस्तुस्वाभाव्यरूप्यादर्थादेव प्रत्यक्षविषयतया श्रुतिसिद्धमित्यर्थतोपि विरोधपरिहारः फलितः ॥ २४ ॥ ७ ॥

इति तृतीयद्वितीये सप्तमाधिकरणम् ॥ ७ ॥

---

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ प्रकारान्तरेण संशयान्तरपूर्वपक्षोत्थापनेन, पूर्वोक्तमेव ब्रह्मण उभयरूपत्वमेव, ब्रह्म संराधकप्रत्यक्षनिर्णेयं न वेति संशय, तत्र निरूपणीयाधिकरणे, सूत्रद्वयेन 'प्रकाशादी'तिसूत्रेण 'तोनन्तेने'तिसूत्रेण चेत्यर्थः, पूर्वपक्षद्वयं भक्तप्रत्यक्षेण निर्णय श्रुत्या चोभयरूपब्रह्मणो न निर्णय इति सिद्ध, श्रुत्या निर्णयश्च द्वितीयसूत्रे स्फुटो भविष्यति, स्पर्शाः स्पार्शनप्रत्यक्षाणि, हिमः हिमस्पर्शः प्रतीयत इत्यर्थ, वर्णभेदा इत्यपि प्रतीयन्ते इत्यनेनान्वेति, एवंसाधकाः एकरूपतासाधका अन्येपि हेतवो बोध्या इत्यर्थः, तस्य संराधकस्य, तथासाक्षात्कारात् उभयरूपत्वसाक्षात्कारात्, तादृशश्रुतेः उभयविधब्रह्मप्रतिपादकश्रुतेः, एकविधत्वं निर्विशेषत्वं, अभ्यासात् तप.प्रभृतिकर्मसु संराधकानामभ्यासात्, आवृत्तेः भगवतः प्रकाशस्यावृत्तेः ॥ २५ ॥

---

१. साधकस्येति कपुस्तके । २. चेति गोपुस्तके । ३. मणीति त्रुटं पुंपुस्तके । ४. अनुभवेत्यादि कपुपुंबपापुस्तकेषु । ५. भक्तस्येति बपापुस्तकयोः । ६. तदा तदेति कपुपुस्तकयोः ।

फलितमाह,

## अतोनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

[1]अतः अभ्यासादनन्तेन अनन्त[2]रूपेणाविर्भावः, न ह्येकं वस्तु प्रतिक्षणमन्यादृशं भवति निमित्तभेदव्यतिरेकेण, क्वचिद्भक्तकामश्च निमित्तत्वेन प्रतीयते, न हि निमित्तभेदेन[3] [4]जायमानं वस्तु भवति, किन्तु तथा सति लिङ्गं विग्रह एव [5]भवति, युक्तश्चायमर्थः, "यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय" ( श्रीमद्भाग. ३. ९. १२. ) इति, अतः श्रुत्या प्रत्यक्षेण वा तथानिर्णयः कर्तुं शक्यः ? तस्मात् सर्वागोचरमेव ब्रह्म, इत्येवं प्राप्तम् ॥ २६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तुशब्दः पक्षं व्यावर्तयति, नैवं केवलयुक्त्या लोकदृष्टान्तेन निर्णयः शक्यते कर्तुं, अन्यथेदं शास्त्रं व्यर्थमेव स्यात्, अत्र हि वेदादेव ब्रह्मस्वरूपज्ञानं, तत् कथं स्वरूपशक्त्या निर्णयः ? ब्रह्म तूभयरूपं, उभयव्यपदेशात्, उभयरूपेण निर्गुणत्वेनानन्तगुणत्वेन सर्वविरुद्धधर्मेण [6]रूपेण [7]व्यपदेशात्, तर्हि कथमेकं वस्त्वनेकधा भासते ? तत्राह अहिकुण्डलवत्, यथा [8]सर्प[9]रज्जुरनेकाकारः कुण्डलश्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारं, भक्तेच्छया तथा स्फुरति, कल्पनाशास्त्रे हीदं बाधकं, अनेककल्पनागौरवञ्चेति, न तु [10]केवलं [11]श्रुत्यैकसमधिगम्ये, न वा शास्त्रवैफल्यं, एवं साधनार्थत्वात्, अत्रैव हि[12] सूरिव्यामोहाद[13]न्यशास्त्रोत्पत्तिः, अतः सर्वविरुद्धधर्माणामाश्रयो भगवान्, न हि प्रमाणश्रुतदृष्टेनुपपत्तिरस्ति यदर्थं युक्त्यपेक्षा, लोकेपि शरीरान्तःकरणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेनैकस्मिन्नपि[14] क्षणे प्रतीयन्ते, तस्मात् सकलविरुद्धधर्मा भगवत्येव वर्तन्त इति न क्वापि श्रुतिरुपचरितार्थेति सिद्धम् ॥ २७ ॥ ८ ॥

॥ इति तृतीयाध्याये द्वितीयपादेष्टमं प्रकाशादिवचेत्यधिकरणम् ॥८॥

---

**अतोनन्तेन तथा हि लिङ्गम्** ॥ २६ ॥ **अतएवस्यार्थोभ्यासादिति** कर्मण्यभ्यासादित्यर्थः, **वस्तु भवति** वस्तुत्वाभावे जायमानत्वमेव हेतुरवसेयः, **लिङ्गं** जायमानत्वबोधकमित्यर्थः, **अयमर्थः** जायमानस्यावस्तुस्वरूपोर्थः, **अतः** नानारूपाणां **नैमित्तिकत्वात्**, **कर्तुं शक्यः** कर्तुं शक्यः किमित्यर्थः, **तस्मात्** ब्रह्मणः श्रुतिप्रत्यक्षयोरगोचरत्वात्, **सर्वागोचरं** सकलप्रमाणागोचरम् ॥ २६ ॥

**उभयव्यपदेशात्त्वहिकुण्डलवत्** ॥ २७ ॥ **पक्षं** ब्रह्मनानारूपाणामवास्तवत्वपक्षं, **शास्त्रं** व्यासानां वेदार्थविचारशास्त्र, **अत्र** औपनिषदपुरुषप्रश्नोत्तरे, **स्वरूपशक्त्या** लौकिकयुक्तिविषयिभूतस्वरूपेण लौकिकयुक्तिविषयिभूतसामर्थ्येन चेत्यर्थः, **निर्णयः** ब्रह्मस्वरूपधारण, **उभयरूपं** सधर्मकं निर्धर्मकञ्चेति, **सर्वविरुद्धधर्मेण** प्रपञ्चविरुद्धधर्मेणेत्यर्थः, **व्यपदेशात्** अस्थूलादिवाक्य एव 'आकाश ओतः प्रोतश्चे'त्यनेन सधर्मकस्य व्यपदेशादित्यर्थः, **रज्जुः** मन्थनार्थं वासुकी रज्जुरूपः सर्वानुभवसिद्धः **इदं** नानारूपाणां वास्तवत्व, **न तु बाधक** नत्वित्यर्थ, नन्वेदोक्तविरुद्धधर्मवतो यथाश्रुतस्य नानारूपब्रह्मणोङ्गीकारे व्यासशास्त्रस्य वैफल्यमत आहुर्नवेत्यादि, **एवंसाधनार्थत्वात्** विरुद्धमतनिराकरणेन नानारूपब्रह्मस्थापनार्थत्वाच्छास्त्रस्येत्यर्थः, वेदोक्तधर्मदर्शन एव **सूरिव्यामोहमाहुरत्रैवेत्यादि**, तथा च विरुद्धशास्त्रसिद्धान्तितवुद्धिदोषवारणार्थमेव व्यासशास्त्रप्रवृत्तिरित्यर्थः, **यदर्थं** यदनुपपत्तिपरिहारायेत्यर्थ, **विषयभेदेन** साध्वसाधुरूपविषयभेदेन, **एकस्मिन्निति** राजनि **क्षणे** चेत्यर्थः, **सकलविरुद्धधर्माः** वास्तवा. **सकलविरुद्धधर्मा** इत्यर्थः ॥ २७ ॥ ८ ॥

इति तृतीयद्वितीयेष्टमाधिकरणम् ॥ ८ ॥

---

१. अत इति लुप्त पुपुस्तके । २. अनन्तेनेति पुंपुस्तके । ३. हीत्यधिकं पुंपुस्तके । ४ याजमानमिति कपुस्तके । ५. भगवतीति कंपुपुस्तकयोः । ६. रूपेणेति लुप्त दापुस्तके । ७. उपदेशादिति गोपुस्तके । ८ सर्पो ऋजुरित्यादि कपुपुंगोषु । ९. रिजुरिति पुंपुस्तके ऋजुरिति चान्येष्वादर्शेषु । १०. केवलेत्यादि पुंपुस्तके । ११ श्रुत्येकेत्यादि बपापुस्तकयोः । १२. हीति लुप्तं पुपुस्तके । १३. अन्यथेत्यादि कंपुस्तके । १४. अपीति लुप्तं बपुस्तके ।

धर्मस्वरूपविचारेण पूर्वोक्तपक्षद्वयं स्थापयितुमधिकरणारम्भः, ननु धर्मा नाम के ? ब्रह्मणो भिन्नास्तत्कार्यरूपा[1] आहोस्विद्ब्रह्मैवेति संशयः, तत्र लोके कार्यस्यैव पटरूपादेस्तद्धर्मत्वात्[2]समवेतत्वात्तन्नित्यतायां प्रमाणाभावात्स्वाभाविकत्वमात्रेण नित्यत्वकल्पनायां गौरवापत्ते "एकमेवाद्वितीयं"(छान्दो.८.२.१.) इतिश्रुतिविरोधाच्च धर्माः प्रपञ्चवत् कार्याः, तथा सति ब्रह्म कल्पना[3]रहितमेव सेत्स्यतीत्येवं प्राप्त इदमुच्यते,

## प्रकाशाश्रयाद्वा तेजस्त्वात् ॥ २८ ॥ ( ३. २. ९. )

प्रकाशाश्रयाद्वा, वाशब्दः पक्षं व्यावर्तयति, यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः पृथक्स्थित्यभावात्समवेतत्वाच्च मूलाविच्छेदरूपेण तदाधारतया स्थितत्वाच्च, नापि सूर्य एव, भिन्नप्रतीतेर्विद्यमानत्वाच्च, तादृशमेव तद्वस्तूत्पत्तिसिद्धमिति मन्तव्यं, कल्पनायामपि यथा सूर्यप्रकाशयोः कल्पनैवं ब्रह्मधर्मयोरपि, नह्यन्यथा वेदप्रवृत्ति[4]र्निषेधशेषता सत्यज्ञानानन्तानन्दपदानां सामानाधिकरण्यं वा सम्भवति, लक्षणायां तु सुतरामेव धर्मापेक्षा, अतो विशिष्टपदार्थ एव तादृशो वेदसिद्ध इति मन्तव्यं, तत्र हेतुः[5] तेजस्त्वात्[6] तेजःशब्दवाच्यत्वात्, बहुदूरव्याप्त्यर्थमेव हेतुरुक्तः, आतपादेर्धर्मत्वेन धर्मित्वेन च प्रतीतेः[7], अपूर्ववदेव[8] दृष्टत्वाच्छ्रुतत्वाच्च न धर्मेष्वपि युक्त्यपेक्षा, तस्मात् सिद्धं यथाश्रुतमेव ब्रह्मेति[9] ॥ २८ ॥

---

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ पूर्वोक्तपक्षद्वयं धर्मकल्पनां विनैव निर्गुणत्वानन्तगुणत्वयोर्ब्रह्मणि स्वीकाररूपपक्षद्वयं, ब्रह्मधर्मरूपं विषयञ्चाहुर्नन्वित्यादिना, संशयः ब्रह्मधर्मेषु ब्रह्मभेदाभेदयो संशयः, पूर्वपक्षमाहुस्तत्रेत्यादि, तद्धर्मत्वात् पटादिधर्मत्वात्, तन्नित्यतायां धर्मनित्यतायां, नित्यत्वकल्पनायां नित्यत्वानुमान इत्यर्थ, गौरवेत्यनेन प्रतिकूलस्तर्क. प्रदर्शित', श्रुतिविरोधात् द्वितीयधर्मरूपपदार्थसिद्ध्या श्रुतिविरोध इत्यर्थ., कल्पनारहितं कल्पनाविषयीभूतसर्वधर्मरहितमित्यर्थ', समवेतत्वात् प्रकाशस्य तेजसि समवेतत्वात्, स्थितत्वात् स्थितत्वेन प्रतीयमानत्वात्, सूर्य एव प्रकाशः सूर्य एव, तत्र हेतु. सूर्यसमानाकारप्रकाशकारित्वादिति, हेत्वन्तरमाहुर्भिन्नेत्यादि, तादृशमेव अविनाशिकन्दादुत्पन्नस्थूलसूरणादिकन्दवत्सूर्यादुत्पन्नप्रकाशरूप वस्त्वित्यर्थः, अन्यथा ब्रह्मधर्मैकतानङ्गीकारे, वेदप्रवृत्तिः वेदप्रतिपाद्यत्वं धर्मे, निषेधशेषता तल्लक्षणो धर्मे, सामानाधिकरण्यमिति, तथा च सत्यज्ञानानन्दपदार्थतावच्छेदधर्माणां परस्परभिन्नानां ब्रह्मण्यनङ्गीकारे ब्रह्मस्वरूपमात्रपरत्वे घटोघट इतिवदबोधकतापत्तिर्दोषः, प्रथमान्तत्रयस्यापि सम्भवतीत्यनेनान्वय., सामानाधिकरण्यं अभेदार्थबोधकता, लक्षणायां सत्यज्ञानानन्दपदाना असत्यभिन्नजडभिन्नअसुखभिन्ने लक्षणायां, धर्मापेक्षा लक्षणाया लक्ष्यतावच्छेदकव्याप्यत्वाल्लक्ष्यतावच्छेदकशक्यसम्बन्धरूपयोर्धर्मयोरपेक्षेत्यर्थ., एवं निषेधशेषतापि धर्मत्वाद्ब्रह्मणि न सिध्येत्, विशिष्टः सत्यत्वज्ञानानन्दैर्विशिष्ट, तादृशः विरुद्धधर्माश्रय, तेजःशब्दवाच्यत्वात् 'तदेव ज्योतिषाञ्ज्योतिः' 'यदतः परो ज्योतिर्दीप्यते' 'तस्य भासा सर्वमिद विभाती'त्यादौ ब्रह्मतद्धर्मयोस्तेज.पदवाच्यत्वादित्यर्थः, बहुदूरव्याप्त्यर्थं व्यापकत्वद्योतनार्थमित्यर्थः, आतपः उष्णस्पर्शवत्तेजः, आदिपदेन चन्द्रादिज्योत्स्ना, धर्मत्वेन चन्द्रसूर्यादिधर्मत्वेन, धर्मित्वेन चन्द्रसूर्यादिरूपत्वेन, अपूर्ववदिति, तथा च यथा चन्द्रसूर्यादिस्थले धर्मधर्मिभावो यथानुभवसिद्धस्तथा ब्रह्मणोपि धर्मविशिष्टस्य प्रत्यक्ष भक्तानामुलूखलबन्धनस्थले मुखमध्ये सकलवस्तुदर्शनस्थले चापूर्वमिव सर्वसिद्धं, एवं 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमि'त्यादिश्रुतिरप्यवसेया, धर्मेष्वपि ब्रह्मणो धर्मेष्वपि, न युक्त्यपेक्षा धर्माणामपूर्वतया प्रत्यक्षदृष्टत्वाच्छ्रुतिसिद्धत्वाच्च न युक्त्यपेक्षेत्यर्थः, यथाश्रुतं द्विविधश्रुतिप्रतिपादितं सधर्मकं निर्धर्मकं चेत्यर्थः ॥ २८ ॥

---

१ धर्मरूपेति बपापुस्तकयोः । २. तदिति लुप्तं कैंपुस्तके । ३. सर्वकल्पनेत्यादिः सर्वेष्वादर्शेषु । ४. वेदे प्रवृत्तिरिति बपापुस्तकयो. । ५ हेतुरुक्त इति कैंपुपुस्तकयोः । ६. इत आरभ्य हेतुरुक्त इत्यन्तं लुप्तं पुपुस्तके । ७. प्रतीतिरिति पुंपुस्तके । ८. पूर्ववदेवेति कपुस्तके । ९. ब्रह्मेति लुप्तं पुंपुस्तके ।

**एकदेशिमतेनापि सर्वसमाधान[6]माह,**

## पूर्ववद्वा ॥ २९ ॥

**अथवा** "अरूपवदेव हि" (ब्र. सू. ३.२.१४.) इत्यादिपञ्चसूत्र्या यः सिद्धान्तः कथितस्तादृशं वा ब्रह्म प्रतिपत्तव्यं, अयमाशयः, वेदस्थापनार्थं हि प्रवृत्तिः, तत्र यथाक्षरमात्रस्यापि बाधो न भवति तथा वक्तव्यं, यदर्थमुभयरूपताङ्गीकृता तत्र धर्माणां स्वरूपनिर्वाहार्थमवश्यं ब्रह्मवैलक्षण्यमङ्गीकर्तव्यं, तथा सति "एकमेवाद्वितीयं" (छान्दो. ८.२.१.) इति बाधः प्रसज्येत, तथा चोत्पत्त्या विचारे निर्धर्मकमेव पूर्वं ब्रह्मेति प्रतिपत्तव्यं, उपपत्त्यापि विचारः पूर्वानुरोधेनैव कर्तव्यः, तत्र धर्माणामपि ब्रह्मत्व एकविज्ञानेन सर्वविज्ञानमुप[1]पद्यते, नान्यथा, ततश्च प्रथमं ब्रह्म स्वधर्मेण[2] भवति, तदनु क्रियारूपेण[3] प्रपञ्चरूपेण च[4], तावतैव सर्ववेदार्थसिद्धेः, न च लौकिकी युक्तिस्तत्रापेक्ष्यते येन तादृशस्य कथं सर्वभाव इतिपर्यनुयोगो भवेत्, धर्मकल्पनायामपि "नैषा तर्केण मतिरापनेया[5]" (कठो. २.९.) इति समानं, उत्पत्त्या चोपपत्त्या च विचारद्वयं, उपपत्त्या पूर्वनयनं स्वसिद्धान्तः, एकदेशिनस्तद्विपरीतं, उभयमपि सूत्रकारस्य सम्मतमिति ॥ २९ ॥

---

**पूर्ववद्वा** ॥ २९ ॥ सूत्रार्थमाहुरेकेत्यादि, वाशब्दः पक्षान्तरे, **पूर्ववत्** 'अरूपवदेव ही'ति पञ्चसूत्र्या योर्थ उक्तः प्रपञ्चविलक्षणं तत्समवायित्वेपि न तथाविध प्रपञ्चसमवायिकारणत्वेपि तन्तुपटवन्न प्रपञ्चमात्र किन्तु ततोप्यधिकं कृत्स्नं चिन्मात्रमाविर्भावकाले च व्यवहारविषयीभूतं जडजीवधर्मास्तत्रोपचारका इत्येवंरूप कारणरूपञ्च ब्रह्म प्रतिपत्तव्यमिति **पूर्ववदि**त्यर्थः, पूर्वमनाङ्गीकारे बीजमाहुरयमित्यादि, पञ्चसूत्र्यामुक्तार्थस्य यथोपपत्ति स्यात्तथोपपादयन्ति **तत्रे**त्यादि, तत्र पञ्चसूत्र्यर्थकरणे वेदे वेदाक्षरमात्रस्यापि वैयर्थ्याभावार्थ, **उभयरूपता** ब्रह्मण सधर्मकता निर्धर्मकता चेत्यर्थ., **तत्र** सधर्मके ब्रह्मणि, **स्वरूपनिर्वाहार्थ**मौपचारिकत्व धर्माणां दूरीकृत्य नित्यत्वब्रह्मवृत्तित्वयोर्निर्वाहार्थं निर्धर्मकापेक्षया सधर्मकस्य वैलक्षण्यमङ्गीकार्यमित्यर्थ., **उत्पत्त्या विचारे** 'निष्कल शान्त'मित्यादिवाक्यैर्विचारे कर्तव्ये सतीत्यर्थः, **पूर्वं** सृष्टिकारणात्पूर्वं, **उपपत्त्या विचारः** सधर्मकत्वस्वीकारेप्यद्वैतश्रुतिविरोधो यथा न भवति तथा विचारः, **पूर्वानुरोधेन** निर्धर्मकाभेदानुरोधेन, तथा च ब्रह्माहिकुण्डलवदुभयरूपं प्रकाशाश्रयवदेकमित्युपपत्त्या **विचारोपि** मूलरूपानुरोधेन **कर्तव्य** इत्यर्थ., **नान्यथा** धर्माणां ब्रह्मभिन्नत्वाङ्गीकारेविद्याकल्पितत्वाङ्गीकारे वा नोपपद्यत इत्यर्थः, **स्वधर्मेणे**त्यादि, अक्षरकालस्वभावप्रकृतिपुरुषरूपंरादावाविर्भवतीत्यर्थ·, **तदनु** धर्मरूपेणाविर्भावोत्तरं, **क्रियारूपेण** प्रपञ्चोत्पत्त्यनुकूला या कारणरूपेषु क्रिया तद्रूपेणेत्यर्थ, **सर्ववेदार्थसिद्धेः** सर्वात्मकाद्वैतसिद्धेः, नन्वेकस्यानेकतातीन्द्रियस्य सेन्द्रियता लोके परमाणूनामन्यमेलनेन परम्परया सेत्स्यमानान्यपदार्थैर्घटादौ दृष्टा घटनाशे तदवयवेषु चानेकता दृष्टा न तथा ब्रह्मणि सम्भवत्यत आहुर्नचेत्यादि, **तत्र ब्रह्मणि, अपेक्ष्यते** 'तन्त्वौपनिषद'मितिश्रुत्या वेदैकसमधिगम्यत्वान्न लौकिकयुक्त्यपेक्षेत्यर्थ, **तादृशस्य** सृष्टिपूर्वदशायां 'निष्कल'मित्यादिश्रुतिप्रतिपादितस्य, **धर्मकल्पनायां** द्विविधश्रुतिदर्शनाद्विरुद्धधर्माश्रयत्वरूपधर्मकल्पनायां, **समानं** निर्धर्मकब्रह्मकल्पनेन समानं सधर्मकब्रह्मकल्पनमित्यर्थ, **उत्पत्त्या** निर्धर्मकप्रतिपादकवाच्यविचारेण, **उपपत्त्या** 'अविनाशी अरे अयमात्मानुच्छित्तिधर्मा' इत्यादिना नित्यधर्मवतो नित्यस्य विचार, **उपपत्त्या पूर्वनयनं** धर्माणामौपचारिकत्वव्यतिरेकेणाहिकुण्डलवदुपपत्त्या निर्धर्मकेण सधर्मकस्याभेदोपपादन, **स्वसिद्धान्त** अस्मत्सिद्धान्त इत्यर्थः, **तद्विपरीतं** अस्मत्सिद्धान्तविपरीतं धर्माणामौपचारिकत्वस्यैकदेशिनाङ्गीकाराद्वैपरीत्यमित्यर्थः, व्याससिद्धान्तापेक्षयाप्येकदेशिमतस्य वैपरीत्यं सधर्मकत्वनिर्धर्मकत्वयोस्तेन कालभेदेनाविरोधप्रतिपादनाद्धर्माणामौपचारिकत्वाङ्गीकाराच्चेत्यर्थ., **उभयं** धर्माणामनौपचारिकत्वे सति नित्यत्वे सति ब्रह्माभिन्नत्वमिति सिद्धान्तमतमेकदेशिमत **चेत्युभयं, सम्मतं** एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उभयमतेपि सूपपादत्वात्सम्मतमितिभावः ॥ २९ ॥

---

१. उत्पद्यत इति कगोपुस्तकयोः । २. स्वधर्मरूपेणेति सर्वेष्यादर्शा. । ३ क्रियादिरूपेणेति सर्वेष्यादर्शा । ४. प्रपञ्चरूपादि चेति गोपुस्तके प्रपञ्चरूपेणेति लुप्त बपुस्तके चेति लुप्त पुंपुस्तके । ५ अपनेयेति कपुपुंपुस्तकेषु । ६. समाधानमिति कपुपुस्तकयोः ।

एकदेशिमत उपपत्त्यन्तरमाह,

**प्रतिषेधाच्च ॥ ३० ॥**

"एकमेव" ( छान्दो.८.२.१. ) इत्युक्त्वा पुनर"द्वितीयं" ( छान्दो.८.२.१. ) इति द्वितीयं प्रतिषेधति, स एवकारेणैव सिद्धो व्यर्थःसन् धर्मनिषेधमपि सूचयति, "ऐक्षत" (छान्दो. ८.२.१. ) इतिवचनात्तदुत्पत्तिः, चकारादेकविज्ञानेन सर्वविज्ञानोपक्रमः परिगृहीतः, तस्मान्न ब्रह्मणि कश्चिद्विरोध इति सिद्धम् ॥ ३० ॥ ९ ॥

इति तृतीयाध्याये द्वितीयपादे नवमं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

धर्मिधर्मविरोधः परिहृतः, धर्म्यन्तरविरोधपरिहारार्थमधिकरणमारभते,

तत्र पूर्वपक्षमाह,

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ ( ३. २. १०. )**

परमतः, अतोपि ब्रह्मणः परमन्यदुत्कृष्टं फलमस्ति, तत्र वैदिकहेतवः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः, यद्यपि समन्वय एवैते दोषाः परिहृतास्तथापि स्वरूपविरोधपरिहाराय प्रस्तावात् पुनरुच्यन्ते, सर्ववाक्यप्रतिपाद्यमेकमेवेत्यपि न सिद्धं, एतैर्हेतुभिः परिच्छेदेन धर्मिभेदे सिद्धे न पूर्वाधिकरणसिद्धान्तविरोधः, ननु समन्वयेन ब्रह्मत्वमुत्तरपादेनैक्यं पूर्वाधिकरणेनाविरोध

---

**प्रतिषेधाच्च ॥ ३० ॥** उपपत्त्यन्तर एकदेशिमते श्रुत्योरुपपत्तिरूप युक्त्यन्तरमित्यर्थ., **धर्मनिषेधं** ब्रह्मणि धर्मनिषेध, **तदुत्पत्तिः** ब्रह्मधर्माणामुत्पत्तिः, न चेदमेव मत युक्त्युपन्यासाद्यभिप्रेतमिति वाच्य, प्रकाशाश्रयसूत्रे-हिकुण्डलसूत्रे च ब्रह्माभेदस्य धर्मेषु स्वयमुपपादितत्वात्, नच द्वितीयनिषेधश्रुतिविरोध. शङ्क्य. 'एकमेवे'तिश्रुते', घटे घटान्तरभेदवत् सजातीयभेदनिषेधपरत्वाद्द्वितीयनिषेधश्रुतेश्च घटपटयो. प्रसिद्धविजातीयभेदनिषेधपरत्वेनै-वोपपत्तेरेवं सत्य'नुच्छित्तिधर्मे'तिश्रुतिरपि न विरुध्यतेन्यथा तु विरुध्येदेवेत्यर्थः, 'अनुच्छित्तिधर्मे'त्यस्याविनाशिधर्म-वानित्यर्थकरणे नित्यधर्मवत्त्व नायाति तथापि ब्रह्माभिन्नधर्मप्रतिपादकपूर्वोक्तश्रुतिसूत्राणां बहूनां बाधापत्तेरप्रामा-णिकोयमर्थ इत्यर्थ , अनुच्छित्तिधर्मोविनाशित्वमेव चेत्स्यात्तदा'विनाशि अरे अयमात्मानुच्छित्तिधर्मे'तिपौनरुक्त्यमपि दोषो बोध्य. ॥ ३० ॥ ९ ॥

इति तृतीयद्वितीये नवमाधिकरणम् ॥ ९ ॥

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥** धर्माणां कार्यत्वात् परस्परविरुद्धत्वाच्च निर्धर्मके ब्रह्मणि तेषां वृत्तित्वासम्भव इति पूर्वपक्षरूप 'अरूपवदेवे'त्यारभ्याधिकरणचतुष्टयेन विरोधपरिहारपूर्वकं धर्माणां नित्यत्व व्यवस्थाप्य विरुद्धधर्माश्रयत्व व्यवस्थाप्य सर्वोपि विरोध परिहृत इत्याहु **धर्मिधर्मे**त्यादिना, **धर्म्यन्तरे**-त्यादि ज्ञेयाक्षरब्रह्मण. सकाशात्फलरूपमतिरिक्त ब्रह्मास्ति ततोप्युत्कृष्टमन्यदस्ति न वेति धर्म्यन्तरसन्देहः, सन्देहबी-जन्तु 'अक्षरात्परत. परः' 'पुरुषान्न पर किञ्चित्सा काष्ठा सा परा गति'रिति प्रसङ्गसङ्गति', धर्म्यन्तरविरोधपरिहारः प्रयोजन, **अतोपि** अक्षरोत्तमादपि, **तत्र** अक्षरोत्तमाद्भिन्नफलरूपधर्मिरूपब्रह्मसाधने, **हेतवः**, **'सेतुव्यपदेशात्' 'उन्मानव्यपदेशात्' 'सम्बन्धव्यपदेशात्' 'भेदव्यपदेशा'**दिति चत्वारो हेतव ,**यद्यपी**त्यादि, **समन्वये** प्रथमाध्याये, **एते** सेत्वादिपदोक्ता , तथापि शब्दबलेन विरोधे परिहृतेपि, **स्वरूपविरोधपरिहाराय** एतेषां धर्माणामर्थबलतो यो विरोधस्तत्परिहारायेत्यर्थ , **उच्यन्ते दोषा** निराकर्तु पुनरुद्भाव्यन्त इत्यर्थ., **न सिद्धमिति** समन्वये प्रत्येक वाक्या-र्थनिर्धारणात् सर्ववाक्येष्वेकधर्मिनिर्धारकत्वेन सिद्धान्तितमित्यर्थ , **एतैः** सेत्वादिभि , **परिच्छेदेन** परिच्छिन्नत्वबो-धनेन, धर्मिभेदे सिद्धे सधर्मकस्य परिच्छिन्नस्य ब्रह्मण सकाशाद्भेदे सिद्धे, **न पूर्वाधिकरणे**त्यादि पूर्वाधिकरणे ब्रह्मणः परत्वमद्वितीयत्वञ्च यद्व्यवस्थापित तत् परब्रह्मण्येव पर्यवसित बोध्यमतो **न विरोधः** पूर्वाधिकरणाक्षेपरूप इत्यर्थः, **समन्वयेन** प्रथमाध्यायप्रथमचरणेन, **ब्रह्मत्वं** जगत्कर्तुर्ब्रह्मत्व, **उत्तरपादेन** प्रथमाध्यायोत्तरपादेन, **ऐक्यं** जगत्कर्त्रा परब्रह्मण ऐक्य, **पूर्वाधिकरणेन** एतदधिकरणपूर्वाधिकरणेन, **अविरोध** इति सर्वेषा धर्माणामविरोध एकधर्मिवृत्तित्वे

---

१ प्रतिषेधमेतातिति पुंपुस्तके । २ स इति लुप्त पुपुस्तके । ३ तदिति लुप्तं गोपुस्तके । ४ उत्कृष्टफलमस्तीति बपुस्तके । ५. फलमिति लुप्त कंपुस्तके । ६. स्वरूपविरोधपरिहारप्रस्तावादिति सर्वेप्यादर्शा. । ७. ब्रह्मेति कंपुस्तके ।

इति व्यर्थमिदमधिकरणमितिचेन्न, अर्थबलविचारोयं, समन्वये चोत्तरपादे च शब्दबलविचारः, धर्मिविचारान्न पूर्वेण गतार्थत्वं,

फलतः साधनतश्च[1] प्रमेयाच्च प्रमाणतः ।
विचारेणाबृहत्त्वेत् कोन्यः[2] साधयितुं क्षमः ॥

अतो हेतून् बाधकानाह, एकदेशबाधकत्वात्, तत्र फलतो बाधहेतुमाह[3] सेतुव्यपदेशात् "अथ य आत्मा स सेतुर्विधृतिः" ( छान्दो. १०. ४. १. ) इति "दहर उत्तरेभ्यः" ( ब्र. सू. १.३.१४. ) इत्यत्र ब्रह्मत्वमस्य सिद्धं, "अथ य इहात्मानमनुविद्य व्रजन्ति" ( छान्दो. १०.५.२. ) इत्युपक्रम्य "सर्वेषु लोकेषु कामचारो भवति" (छान्दो. १०.५.४.) इत्युक्त्वा कामानुपपाद्याज्ञानव्यवधानं ज्ञानप्रशंसार्थमुक्त्वा ज्ञानानन्तरं संसारसम्बन्धाभावाय सेतुत्वं वदति पापब्धितरणार्थं यश्च तरति तद्गताश्च दोषा गच्छन्ति इति च, अतः संसार-फलयोर्मध्ये विद्यमानत्वात्तीर्णस्यैव फलश्रवणात् फलरूपं वस्तु किञ्चिदन्यदस्तीति ज्ञायते, निधित्वेन फलवचनमवान्तरफलपरं भविष्यति, "एतमानन्दमयमात्मानमुपसङ्क्रम्य" (तै. भृ. ५.) इत्यप्यत्रोदाहरणं, तथोन्मानव्यपदेशात्[4], "तत्रैव यावान् वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः"(छान्दो.१०.१.३.) इति साधनयुक्तिप्रश्न[5] उन्मानेन परिच्छेदं निरूपयति, दृष्टान्तदार्ष्टा-न्तिकत्वेन ज्ञानं[6] साधनं, तत्र बहिराकाशज्ञानमपि साधनं भवति, चतुष्पाच्च ब्रह्म, भूतादि-

निर्णीते धर्मिभेदोपि निराकृत एवेत्यविरोधः सिद्ध इत्यर्थः, धर्मिविचारादित्यादि तथा च पूर्वाधिकरणे धर्मा-णामेवाविरोधो विचारितो धर्म्यविरोधस्त्वार्थिकोत्र तु प्राधान्येन धर्म्यविरोध एव विचार्यते इति न गतार्थतेति-भाव., फलतः फलविचारितः, साधनतः 'भक्त्या मामभिजानाती'तिसाधनविचारितः, प्रमेयात् 'ब्रह्मवि-दाप्नोति पर'मित्यादिना प्रमेयविचारितः, प्रमाणतः 'वेदा श्रीकृष्णवाक्यानी'त्यादिप्रमाणविचारित, अबृहत् उक्तविधहेतुभ्यो न परम्ब्रह्मोक्ताधिकरणेषु सिद्ध चेदित्यर्थः, कोन्य इत्यादि, फलाद्युक्तहेतुभ्योन्यो हेतुः क परब्रह्मत्व साधयितुं क्षम इत्यर्थः, बाधकान् परब्रह्मत्वसाधकफलादिहेतुविरुद्धान्परब्रह्मत्वबाधकान्, एकदेशेत्यादि परब्रह्मपदार्थैकदेश. परत्व सेत्वादिहेतूनां तद्बाधकत्वादित्यर्थ, फलतः पूर्वाधिकरणेषु विचारितस्य ब्रह्मण· फलतायां, अस्य सेतोः सेतुत्वेनाभिमतस्य 'सर्वलोके'त्याद्युक्तफलश्रवणात्, फलरूपताबाधकमाह अथेत्यादिना, दोषा गच्छन्ति 'एवं सेतु तीर्त्वान्धः सन्ननन्धोभवती'ति तत्रोक्तेरित्यर्थ·, तथा च प्रतिबन्धनिवृत्तावेव सेतोरुपयोगो न तु फलरूप-ताप्यस्येत्यर्थः, मध्ये विद्यमानत्वात् सेतोर्मध्ये विद्यमानत्वादित्यर्थः, तीर्णस्यैव सेतुं तीर्त्वागतस्यैव पुरुषस्येत्यर्थः, अन्यत् सेतुभिन्नं, निधित्वेन वचनं 'तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि चरन्तोपि न विन्देयु'रित्यादिना दृष्टान्तेन सेतोर्हिरण्यस्येव फलरूपता प्रतिपादिता तथापि तत्प्रतिपादनमवान्तरफलपर हिरण्यस्य यथा परम्परया ब्रह्मप्रापकत्वमर्थरूपत्वात्तथा प्रतिबन्धनिवर्तकत्वेन सेतोरवान्तरफलरूपतेत्यर्थः, अत्रोदाहरणमिति, तथा च निधे-र्हिरण्यस्योपरि चरन्तोन्त.स्थितस्य स्वरूपं न जानन्ति तथान्नमयादिचतुष्टयस्यान्तःस्थितमानन्दमयमपि निधिरूपं पूर्वमुपरितनज्ञानवन्तो न जानन्तीत्येवरीत्योदाहरणत्वं, ब्रह्मप्राप्तिसाधनबाधकं हेतुं निरूपयन्ति, तथोन्माने-त्यादिना, तत्रैव दहरविद्यायामेव, साधनयुक्तिप्रश्ने तत्र हि दहरपुण्डरीकान्तर्यो दहर आकाशस्तदन्तःस्थितस्य ज्ञानार्थं यत्करणरूपमन्वेषणं साधनं तस्य युक्तिविषयावगमानुकूलत्वं तादृशार्थके प्रश्ने 'तच्चेद्ब्रूयुरि'त्यादिना कृते तस्योत्तर वदन्'यावान् वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश'इति यावत्तावत्पदाभ्यामुन्मानेन बाह्याकाशसमा-नताया दहराकाशे प्रतिपादनेन, परिच्छेदं 'आत्मन आकाशः सम्भूत' इत्यादिना बाह्याकाशस्य कालपरिच्छेदात्त-त्समानतयोक्तदहराकाशस्यापि कालपरिच्छेदं निरूपयत्युन्मानव्यपदेश इत्यर्थः, दृष्टान्तदार्ष्टान्तिकत्वेनेत्यादि, बाह्याकाशदहराकाशयोः समानतया ज्ञानं दहराकाशान्त.स्थितस्य ज्ञाने साधनमित्यर्थः, तत्र उभयोः समानता-ज्ञाने, साधनत इत्यस्यैवोदाहरणान्तरमाहुः चतुष्पादित्यादिना, अत्रापि भूतादिपादानामनित्यानां ज्ञानं धर्मि-

१ साधनेभ्यश्चेति बपुस्तके । २. कोन्यमिति कपुपुस्तकयो· । ३. बाधमाहेति कपुपुस्तकयोः । ४. तथेति कुसं गो पुस्तके । ५. एवेति पुगोपुस्तकयो· । ६. ज्ञानसाधनमिति कैगोपुस्तकयोः ।

पादाश्च ज्ञातव्याः, तथा सम्बन्धव्यपदेशात् तत्रैव प्रमेयनिरूपणप्रस्ताव "उभावप्यस्मिन्" (छान्दो.१०.१.३.)इत्यादिना आधाराधेयसम्बन्धो निरूपितः,अत्र च वस्तुपरिच्छेदो निरूपितः, "प्राज्ञेनात्मना सम्परिष्वक्तः" (बृह. ६.३.२१.) इति च, तथा भेदव्यपदेशात् "य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" (छान्दो.३.६.७.)"य एषोन्तरक्षिणि पुरुषो दृश्यते"(छान्दो. ३.७.५. ) इत्यत्र स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशमाह, अक्षिपुरुषनिरूपकमतिदेशः प्रमाणमिति, धर्मभेदेन तु स एवायमिति वदेत्, अतो देशकालवस्तुस्वरूपपरिच्छेदरहितमन्यत् किञ्चिदस्तीति प्रतिपत्तव्यमित्येवं प्राप्तम् ॥ ३१ ॥

## सामान्यात्तु ॥ ३२ ॥

तुशब्दः पक्षं व्यावर्तयति, समानस्य भावः सामान्यं, सेत्वाकाशादिशब्दास्तद्धर्मातिदेशार्थमुच्यन्ते, न तु तद्गतं दोषमपि कल्पयन्ति, संसारसागरोत्तरणोपायत्वात् सेतुत्वं, निर्लेपायाकाशत्वं, कामाभिदोहाय चतुष्पात्त्वं, अमृतत्वाय षोडशकलत्वं, अतिदुर्लभत्वाय सम्बन्धः, दिव्यत्वाय धर्मातिदेशः, कुण्डपायिनामयने मासाग्निहोत्रवद्गुणार्थमेव वचनं न दोषार्थमिति न ततोन्यशङ्कोत्पादनीया, तस्मान्न पूर्वोक्ता दोषाः ॥ ३२ ॥

अन्यसमानधर्मवत्त्वं कुत्रोपयुज्यत इत्यत आह,

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

बुद्ध्यर्थः तथाव्यपदेशो बुद्ध्यर्थः बुद्धिरेव प्रयोजनं यस्य, तथोपासनार्थमयुक्तमित्याशङ्क्य दृष्टान्तमाह यथा भूतादीनां पादत्वज्ञानमुपासनार्थं तथा गुणवत्त्वेन ज्ञानार्थं स्वधर्मप्रशंसार्थमेवमुच्यते ॥ ३३ ॥

---

ज्ञानसाधनमिति न धर्मिणः परत्वसिद्धिरितिभावः, तृतीयहेतुमाहुः तथा सम्बन्धेत्यादि, तत्रैव दहरवाक्य एव, अत्र 'उभावस्मि'न्नितिवाक्ये, वस्तुपरिच्छेदः वस्तुत्वेनाभिमतस्य प्रमेयस्योभयाधिकरणत्वेनैव निरूपणं कृतं न तु परब्रह्मत्वेनेति परिच्छेदः फलित इत्यर्थः, एतद्धेतावेवोदाहरणान्तरमाहुः प्राज्ञेत्यादि, तथात्रापि जीवभेदनिरूपणेन प्रमेये परिच्छिन्नत्वमेव सिद्धमितिभावः, चतुर्थं हेतुमाहु तथा भेदेत्यादि, धर्मातिदेशमाह अक्षिपुरुषधर्मातिदेशमादित्यपुरुष आह, तथा हि तस्यैतस्य तदेव रूपं यदमुष्य रूपं यदमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे'त्याहेत्यर्थः, 'तस्य' अक्षिपुरुषस्य, 'अमुष्य' आदित्यपुरुषस्य, 'गेष्णौ' नटनर्तकौ भक्तावित्यर्थः, अक्षिपुरुषनिरूपकमित्यादि अक्षिपुरुषप्रतियोगिकसादृश्यप्रतिपादकमादित्यपुरुषे प्रमाणमुभयोर्भेदबोधकमुक्तमित्यर्थः, धर्मभेदेन तु धर्म्यभेदे सत्त्वेन तु ॥३१॥

सामान्यात्तु ॥ ३२ ॥ सिद्धान्तसूत्रार्थः तुशब्दइत्यादिनोच्यते, पक्षं पूर्वोक्तहेतुभिः परत्वनिराकरणरूपं पूर्वपक्षं, तद्गतं दोषमित्यादि, पूर्वाधिकरणे विरुद्धधर्माणामविरोधेन धर्मिणि समावेशस्योक्तत्वान्न विरोधं कल्पयन्तीत्यर्थः, सूत्रोक्तं सामान्यमुपपादयन्ति संसारेत्यादिना, सेतुत्वं ब्रह्मणः सेतुत्वेन निरूपणं, अभिदोहाय सर्वत्र पुरुषार्थचतुष्टयपूरकत्वेन, सम्बन्धः आधारत्वेन निरूपणविषयः, दिव्यत्वाय अलौकिकत्वबोधनाय, धर्मातिदेशः अक्षिपुरुषधर्मातिदेशः, अतिदेशे दृष्टान्तेन गुणार्थतामाहुः कुण्डपायिनामित्यादिना, तथा च मासाग्निहोत्रनामके कर्मान्तरेऽग्निहोत्रपदप्रयोगेणाग्निहोत्रगुणा एव बोध्याः ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥ तथा पूर्वोक्तरीत्या, अयुक्तं हीनसाम्यवचनमयुक्तमित्यर्थः, तथा गुणवत्त्वेन पुरुषार्थचतुष्टयदोहकर्मत्वेन, स्वधर्मप्रशंसार्थं ब्रह्मण उपादानस्य धर्मप्रशंसार्थमित्यर्थः ॥ ३३ ॥

---

१. परिष्वक्त इति कंपुस्तके । २. अक्षिस्थितनिरूपकमिति सर्वेष्व्यादर्शा. । ३ धर्म्यभेद इति पुबगोपुस्तकेषु धर्म्यभेदेनेति पुंपुस्तके धर्मभेद इति कपुस्तके । ४. कामादिभिर्दोहायेति बपुस्तके । ५ अदुर्लभत्वायेति पुंबगोपुस्तकेषु । ६. अन्यसामान्येत्यादि पुंपुस्तके । ७.तथा तत्तद्गुणवत्त्वेनेति कपुबपुस्तकेषु तथा तत्तद्गुणत्वेनेति गोपापुस्तकयोः तथा सद्गुणेत्यादि पुंपुस्तके । ८. स्वधर्मप्रशंसार्थोयमुच्यत इति कपुस्तके । ९. अत्र श्रीमदाचार्यचरणकृतिः समाप्ता ।

ननु स एवायमित्यतिदेशेपि तथाबुद्धिः सम्पद्येतैवेति व्यर्थो धर्मातिदेश इत्याशङ्क्य तथोक्तेपि समानधर्मत्वज्ञानाभावे हेतुमाह,

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

स्थानविशेषादिति, धर्म्यैक्येपि स्थानविशेषप्राप्त्या समानधर्मत्वाभावो दृश्यते, अन्यत्रापि न तथात्वमायास्यतीत्यतिदेशो धर्माणामपि कृत इत्यर्थः, अस्मिन्नर्थे दृष्टान्तमाह प्रकाशादिवदिति, "यदादित्यगतं तेजः" (श्रीमद्भग. १५. १२.) इतिवाक्यादादित्यचन्द्राग्निगततेजसामैक्येपि न समानप्रकाशत्वं यथा तथात्रापीतिज्ञानसम्भवादित्यर्थः, आदिपदादेकस्यैव कालस्य यथोपाधिविशेषसम्बन्धादुत्तरायणत्वाद्युत्तमधर्मवत्त्वं तद्विपरीतधर्मवत्त्वं तथेत्यपि सङ्गृह्यते ॥ ३४ ॥

किञ्च,

## उपपत्तेश्च ॥ ३५ ॥

सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोन्य उत्तमोस्तीति वदता तत्रेत उत्कृष्टधर्मवत्त्वं वाच्यं, तच्चाशक्यं, प्रमाणाभावात्, साम्येपि तथा विशेषाभावोद्वैतश्रुतिविरोधश्च, तस्मादितः परस्यानुपपन्नत्वादुक्तरूपमेव परमकाष्ठापन्नं वस्त्वित्युपपद्यत इत्यर्थः ॥ ३५ ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा सेत्वादयः श्रुत्योक्तास्तथैव "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वेता. ६.८.) इति श्रुत्यैव ततोधिकस्य प्रतिषेधात् त्वयाप्यस्मदुक्तप्रकारोनुसर्तव्य इत्यर्थः, अवतारकाले पूर्वं स्वशक्त्याविर्भावमकृत्वा पश्चात्तदाविर्भावे कृते लोकानां पूर्वावस्थातो भगवत्येवाधिक्यमिव प्रतीतं भवतीत्यभिप्रायेणान्यपदोपादानम् ॥ ३६ ॥

---

स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥ इत आरभ्य श्रीमद्गोस्वामिचरणानां लेखो बोध्यः । तथाबुद्धिः उत्कर्षबुद्धिर्धर्म्यतिदेशेनेत्यर्थः, तथोक्तेपि धर्म्यतिदेशोक्तावपि, समानधर्मत्वाभावः सकलधर्मिगतैकस्यैव धर्मस्य समानत्वाभावः, अन्यत्र स्फटिकादौ वक्ष्यमाणदृष्टान्ते तेजसि च, न तथात्वं न धर्माणां समानत्वम् ॥ ३४ ॥

उपपत्तेश्च ॥ ३५ ॥ 'सत्यं ज्ञान'मित्यादिना प्रतिपादितादन्य उत्कृष्टो नेत्यत्र सूत्रद्वयेनोपपत्तिमाह सूत्रकार इत्याहुः किञ्चेत्यादिना, तत्र एतदपेक्षयोत्कृष्टत्वेनाङ्गीकृते, इतः 'सत्य ज्ञान'मित्यादिनोक्तात्, विशेषाभावः इत उत्कृष्टधर्मसत्त्वे विशेषाभाव इत्यर्थः ॥ ३५ ॥,

तथान्यप्रतिषेधात् ॥ ३६ ॥ तत् सेत्वादिधर्मवान्, ततः उक्तधर्मवतः, अस्मदुक्तप्रकारः 'सत्यं ज्ञान'मित्यादिनोक्तधर्मवतो ब्रह्मत्वस्वीकारः, पूर्वं अवतारात्पूर्वं, स्वशक्त्या स्वसामर्थ्येन, आविर्भावं धर्माविर्भावं, पूर्वावस्थातः अनवतारावस्थातः, भगवत्येव अवतारावस्थापन्ने पूर्वस्मिन्नेव, आधिक्यमिव पूर्वं सर्वं भगवति स्थितमेवाविर्भूतमिदानीमिति इवशब्दः, अन्यपदोपादानमिति, तथा च 'न तत्सम'इतिश्रुत्यान्यप्रतिषेधात् तथा पूर्वरूपमेवमितिसूत्रार्थ इत्यर्थः ॥ ३६ ॥

---

१. न समानधर्मत्वमिति कपुपुंगोपुस्तकेषु न समानधर्मवत्त्वमिति बपुस्तके । २. अन्यत्रेत्यत्रापीति पुंगोपापुस्तकेषु । ३. आदित्यचन्द्राग्निगते इति कपुस्तके । ४. तत्रापीतीति कंपुस्तके । ५. धर्मत्वमिति बपापुस्तकयोः । ६. तथेत्यत्रापीति कंगोपुस्तकयो । ७ अद्वैतविरोधश्चेति पुपुस्तके । ८. दित परस्या इत्येतान्यक्षराणि लुप्तानि पुपुस्तके । ९. श्रुत्युक्ता इति बपापुस्तकयो. । १०. अस्मदुक्तमार्ग इति पुंपुस्तके अस्मदुक्त एव मार्ग इति कपुबगोपापुस्तकेषु । ११. कृत इति बपापुस्तकयो. ।

प्रकरणमुपसंहरन् फलितमर्थमाह,

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥**

**अनेन** सेत्वादिव्यपदेशानां मुख्यार्थकत्वनिराकरणेन व्यापकत्वं ब्रह्मणः सिद्धमित्यर्थ इति केचित्, तन्न, "जन्माद्यस्य यतः" (ब्र. सू. १.१.२.) इत्यादिना सर्वदेशगतकार्यकर्तृत्वमुक्तमिति तेनैव व्यापकत्वस्य सिद्धत्वात्, न चाविरोधसाधनप्रकरणत्वात् पूर्वं[1] सिद्धं सर्वगतत्वमनेनोक्तग्रन्थेन कृत्वा सेत्वादिवाक्यैः सम[2]मविरुद्धमित्यर्थ इति वाच्य[3]मितिचेदग्रिमपदवैयर्थ्यापत्तेः, अत्रैवं ज्ञेयं, नोक्तकर्तृत्वेन व्यापकत्वमेकान्ततो ब्रह्मणि रोद्धुं शक्नोति, योगसिद्धदूरश्रवणादिवत् परिच्छिन्नेनाप्यनेकदेशगतकार्यकरण[4]सामर्थ्यविशेषस्य वक्तुं शक्यत्वात्, अन्यथा पूर्वसिद्धव्यापकत्वविरोधेन सेत्वादिव्यपदेशैः परिच्छिन्नत्वेन ब्रह्मणोन्यस्य परत्वं न शङ्केत, विरोधपरिहाराय तु सामान्यात्त्वविरोध इति वदेत्, तस्मादेवं सूत्रार्थो ज्ञेयः, **अनेन** ब्रह्मणोन्यस्य परत्वनिरासेन[5] **आयामशब्दादिभ्यः** व्यापकत्ववाचकश्रुतिवाक्यादिभ्यः साक्षात्सर्वगत[6]त्वप्रतिपादकेभ्य एवं[7] **सर्वगतत्वं** सिध्यति न तु गौतमीयानामिव कर्तृत्वाद्यनुपपत्त्येत्यर्थः, ते च **शब्दाः** "आकाशवत् सर्वगतश्च नित्यः" "ज्यायान् दिवो ज्यायानाकाशात्" (छान्दो. ५. १४. ३.) "वृक्षइव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" (तै. आ. १०. १०. ३.) इत्यादयः, **आदिपदात्** "सर्वतःपाणि[9]पादान्तं सर्वतोक्षिशिरोमुखं सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति" (श्रीमद्भग. १२. १३.) इत्यादिस्मृतयः सङ्गृह्यन्ते, अनेन[10] ब्रह्मणि श्रुतिरेव[8] मुख्यं प्रमाणं, अनुमानं तु विलम्बोपस्थितिकत्वेन साध्यसिद्धिपराहतमपीच्छाविशेषेण जननीयं चेदभ्युच्चयमात्रं[11] पर्यवसा[12]स्यतीतिभावः ॥ ३७ ॥ १० ॥

**इति तृतीयाध्याये द्वितीयपादे दशमं परमतः सेतून्मानेत्यधिकरणम् ॥ १० ॥**

---

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥३७॥ **प्रकरणं** धर्मधर्मिविरोधनिरासप्रकरण, स्वसिद्धान्तदृढीकरणायैकदेशिमत दूषयितुमुपन्यस्यन्ति **अनेनेत्यादि**, **व्यपदेशानां** सेतुविधृत्यादिपदवाच्यानां ब्रह्मदृष्टान्तानां, **मुख्यार्थेत्यादि** सधर्मकस्य ब्रह्मत्वनिराकरणेनेत्यर्थः, तथा च परब्रह्मत्वनिराकरणेपि सोपाधिकस्य ब्रह्मणो व्यापकत्वमस्त्येवेति फलित, **केचित्** मायावादिन., **व्यापकत्वस्य** जगत्कर्तुर्व्यापकत्वस्य, **पूर्वं सिद्धं** जन्माद्यधिकरणसिद्धं, **सेत्वादिवाक्यैः समम्मित्यादि**, सेत्वादिवाक्यप्रतिपादितसधर्मकोपक्षीणमेव वाच्यं न तु तत् परब्रह्मव्यापकत्वमित्यर्थः, **अग्रिमेत्यादि**, इति **चेदुच्येत** तदा **अग्रिमपदस्य** व्यापकताबोधक 'आयामशब्दादिभ्य' इतिपदस्य **वैयर्थ्यापत्ते**रित्यर्थ , उक्तवैयर्थ्यमुपपादयन्ति **अत्रैवमित्यादिना**, **रोद्धुं** निश्चेतु, **शक्नोति** सूत्रकार इत्यर्थः, **एकान्ततः** वास्तवं, **ब्रह्मणि** सधर्मके ब्रह्मणि, **अन्यथा** सधर्मके वास्तवव्यापकत्वाभावे, **परत्वं न शङ्केत** परिच्छिन्नत्वेन सधर्मकस्य व्यापकत्वासिद्ध्या परब्रह्मत्वस्याप्यसिद्ध्यान्यस्य परब्रह्मत्वं कथं शङ्केतेत्यर्थः, ननु श्रुतिषु सधर्मकस्यापि ब्रह्मत्वेन प्रतिपादनाद्विरोधपरिहारार्थमेव शङ्क्यत आहुः **सामान्येत्यादि**, तथा च 'सामान्यात्तु' इतिसिद्धान्तसूत्र इत्थमेव सूत्रं कुर्यादित्यर्थ', **सामान्यात्** ब्रह्मसत्ताया. सर्वत्रापि सत्त्वादपरस्मिन्नपि ब्रह्मत्वमविरुद्धमित्यर्थः स्यादित्यर्थः, इत्थ च तावतैवोपपत्तेरितरवैयर्थ्यमिति फलित, **व्यापकत्वेत्यादि**, व्यापकत्ववाचकपदघटितश्रुतीत्यर्थ., **आदिपदात्** सूत्रस्थादिपदात्, **विलम्बेत्यादि** व्याप्तिज्ञानपरामर्षादिकृतविलम्बेनेत्यर्थः, **साध्येत्यादि**, श्रुत्या ब्रह्मरूपसाध्यसिद्धेरनुमानवैफल्यमित्यर्थ., **इच्छाविशेषेण** सिसाधयिषाबलात्, **अभ्युच्चयमात्रं** वृथास्वीकारमात्रमित्यर्थ. ॥ ३७ ॥१०॥

**इति तृतीयद्वितीये दशमाधिकरणम् ॥ १० ॥**

---

१. पूर्वंसिद्धमिति सर्वेष्वादर्शा । २ सर्वमविरुद्धमित्यर्थमिति बपापुस्तकयो । ३. अग्रिमपदवैयर्थ्यापत्तेरितिचेदितिपाठः सर्वेष्वादर्शेषु । ४. कार्यकारणेत्यादि पुंपुस्तके । ५. परत्वनिरास इति कपुस्तके । ६ सर्वगतत्वाप्रतिपादकेभ्य इति बपुस्तके । ७. एवमिति कपुगोपुस्तकेषु । ८. इय श्रुतिरेव । ९. पादं तदिति कपुस्तके । १०. एतेनेति कपुगोपुस्तकेषु । ११. अभ्युच्चयत्वमात्रमिति कपुपुंगोविपुस्तकेषु । १२. पर्यवसिष्यतीति पुंगोपुस्तकयो ।

एवं सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा तदितराधिकारिणां तदाह, ते हि फलप्रेप्सव एव भजिष्यन्ति, तच्च फलदातृत्व एव सम्भवतीति तदाह,

**फलमत उपपत्तेः ॥ ३८ ॥ ( ३. २. ११. )**

अत ईश्वरादेव फलं भवति यत्किञ्चिदैहिकं पारलौकिकं वा, कुतः? उपपत्तेः, "सर्वस्य वशी सर्वस्येशानः" ( बृह. ६. ४. २२. ) इतिश्रुतिर्वस्तुमात्रेशितृत्वमसङ्कुचितमाह, नह्यन्यस्य वस्त्वन्यो दातुं समर्थोतो भगवानेव तथेत्यर्थः।

केचित्त्वत्रैव कर्मणस्तत्कार्यापूर्वस्य च फलदातृत्वमाशङ्क्य तत्रानुपपत्तिमत्रोपपत्तित्वेन[1] व्याकुर्वन्ति, तत्त्वग्रे जैमिनिमतोपन्यासस्वमतोपन्यासाभ्यां व्यास एव व्यक्तीकरिष्यतीत्यधुनैवाप्राप्तनिराकरणमग्रिमसूत्रद्वय[2]वैयर्थ्य[3] स्यादिति ॥ ३८ ॥

**श्रुतत्वाच्च ॥ ३९ ॥**

पूर्वसूत्रेण श्रुतमीशितृत्वं फलदान उपपत्तित्वेन निरूपितमिह तु[4] साक्षाच्छ्रुतिमेव फलदातृत्ववाचिकां प्रमाणयति, सा च "स वा एष महानज आत्मान्नादो वसुदान[5]" ( बृह. ६. ४. २४. ) इत्यादिरूपा, चकारात् "सुखं दुःखं भवो भावः" ( श्रीमद्भग. १०. ४. ) इत्युपक्रम्य "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" ( श्रीमद्भग. १०. ५. ) इत्यादिरूपा स्मृतिः सङ्गृह्यते ॥ ३९ ॥

अत्र[6] कर्मवादी प्रत्यवतिष्ठते,

**धर्मं जैमिनिरत एव ॥ ४० ॥**

ननु कर्मण एव फलमितिपक्षेप्युपपत्तिश्रावणे[7] तुल्ये, तथा हि ईश्वरवादिनापि[8] कर्मनिरपेक्षेण तेन फलमिति न वक्तुं शक्यं, विधिवैयर्थ्यप्रवृत्त्यनुपपत्तिप्रसङ्गाभ्यां, तत्सापेक्षत्वे तदेवास्तु, कृतं तत्सापेक्षेण तेन, न चाचेतनं चेतनाधिष्ठितमेव कार्यक्षममिति केवलेन तेन न[10] फलं सम्भ-

**फलमत उपपत्तेः** ॥ ३८ ॥ अन्ते फलाधिकरणनिरूपणेनाविरोधादिनिरूपणस्य सार्थक्यं निरूपयन्नधिकरणमारभत इत्याहुः **एवमित्यादिना**, एवं पूर्वाधिकरणोक्तरीत्या, **सर्वोत्तमत्वनिरूपणेन** ब्रह्मणि सर्वोत्तमत्वनिरूपणेन, **इतराधिकारिणां** सकामानां, **तदाह** भजनीयत्वमाह, **ते हि** सकामा हि, **तच्च** सकामभजनीयत्वं च, **तदाह** फलदातृत्वमाह, **अत** इत्यादि, अत्रोद्देश्यतत्तद्देवताभ्य फलमुत भगवत इति संशयः, तेषां तेषां देवानामुद्देश्यतया श्रावण 'सर्वस्य वशी सर्वस्येशान' इतिश्रुतिश्च सशयबीज, देवान्तराणामुद्देश्यत्वात्तेभ्य एव फलमिति पूर्वः पक्षः, तेषामपीशान. परमात्मेति **अत एव फलमितिसिद्धान्तः**, **तत्रानुपपत्तिमित्यादि**, तत्पूर्वपक्षसिद्धान्तत्वेन सूत्रं व्याकुर्वन्तीत्यर्थः ॥ ३८ ॥

**श्रुतत्वाच्च** ॥ ३९ ॥ स्फुटं भाष्यम् ॥ ३९ ॥

**धर्मं जैमिनिरत एव** ॥ ४० ॥ सूत्रार्थमाहु **अत्रेत्यादि**, **उपपत्तीत्यादि**, फलतरतमभावे फलतदभावयोर्वोपपादिका **युक्तिरुपपत्तिः**, **श्रावणं** कर्मणो ब्रह्मणो वा सकाशात्फलमितिश्रुतिदर्शन, **तुल्ये** ईश्वरात्फलपक्षे कर्मणः फलपक्षे च ते तुल्ये इत्यर्थः, सूत्रार्थस्तु, **अत एव** उपपत्तिश्रावणरूपफलदानहेत्वोस्तौल्यादेव **धर्मं** फलहेतुं **जैमिनिराहेति**, तदेवोपपादयन्ति **तथाहीत्यादिना**, **प्रवृत्त्यनुपपत्तिः** लोकानां धर्मात् फलाभावे धर्मकरणे प्रवृत्त्यनुपपत्तिः, **तत्सापेक्षत्वे** ईश्वरस्य फलदाने कर्मसापेक्षतयोक्तदूषणयोर्वारणे, **कृतं** अलम्, **तत्सापेक्षेण** कर्मसापेक्षे-

१ उपपन्नत्वेनेति कपुपुस्तकयो. । २ द्वयेति लुप्तं पुंपुस्तके । ३. वैयर्थ्यञ्चेति पुंगोपुस्तकयोः । ४. त्विति लुप्तं दापुस्तके । ५. वस्तुदान इति बपुस्तके । ६ अत्रेति लुप्तं कंपुस्तके । ७ श्रवणे इति सर्वेष्वादर्शेषु । ८. ईश्वरवादिनामिति कपुपुस्तकयो. । ईश्वरवादिनामपीति कंपुस्तके । ९ इत आरभ्य वाच्यमित्यन्तं लुप्तं गोपुस्तके । १०. न फलसम्भव इति पुंपुस्तके, फलासम्भव इति कपुपुस्तकयो ।

# ॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥



पूर्वपादे जडजीवधर्मनिराकरणेन शुद्धसच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितं, इह तु ब्रह्मण एव धर्मा विचार्यन्ते, ते चेदेकस्मिन् वाक्य एव सर्वे पठिता भवेयुस्तदा न विचारणीया भवेयुर्विरोधाभावात्, पठिताश्च तत्तदुपासनप्रकरणेषु, क्वचित् त एव, क्वचिद्भिन्नाः, यथा वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमन्यमग्निं पठन्ति 'तस्याग्निरेवाग्निः' ( बृह. ८. २. १४. ) इति, छन्दोगास्तु पञ्चसङ्ख्ययैवोपसंहरन्ति 'अथ य एतानेवं पञ्चाग्नीन् वेद' (छान्दो.७.१०.१०.) इति, तथा प्राणसंवादे मुख्यप्राणादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति, वाजसनेयिनस्तु तमपि पञ्चमं पठन्ति, अपरञ्च, अथर्वोपनिषत्सु क्वचिद्गोकुलवृन्दाकाननसञ्चर-द्गोपरूपमनल्पकल्पद्रुमप्रसूनविरचितविचित्रस्थलीककालिन्दीसलिलकल्लोलसङ्गिमृदुतरपवनचल-दलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांसमिलन्मूर्धन्यमहामणिकमुरलि-कामुखावलीमिलदतितरलकरकमलयुगलाङ्गुलीवशंवदविविधस्वरमूर्च्छनामोहितव्रजरमणीनितम्बिनी-कदम्बकटाक्षकुवलयार्चितं क्वचित् कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमतिविचित्र-चरित्राभिरामं रामस्वरूपं क्वचिदतिकरालवदनवित्रासितकमलाकमलासनवृषभासनादिकं नृकेसरि-रूपं क्वचिदुरुक्रमादिरूपं च निरूप्यते, तथा च द्रव्यदेवताभेदाद्यागभेदवद्धर्माणामावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च वेद्यभेदे प्राप्ते ब्रह्मानेकत्वापत्तौ श्रुतिविरोधाद्विनिगमकाभावात् सर्वेषामुपा-सनाविषयाणामब्रह्मत्वमापतितं, ननूपासनाविषयाणामौपाधिकत्वात्तेषाञ्चाविद्याकल्पितत्वात्त-द्विशिष्टानां तथात्वं युक्तमेव, न चैवं तन्निरूपकाणां वेदान्तानामब्रह्मपरत्वप्रसङ्गः, शुद्धस्य ब्रह्मणो दुर्ज्ञेयत्वेनोपाधिविशिष्टोपासनया चित्तशुद्धौ सत्यां स्वत एव तज्ज्ञानं भविष्यतीत्येत-त्तात्पर्यकत्वादितिचेत्, मैवम्, समन्वयविरोधापत्तेः, तासां ब्रह्मविद्यात्वहानेश्च, श्रुतेः प्रतारक-

---

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ साधनाध्यायस्य द्वितीयचरणानुवादपूर्वकं तृतीयचरणार्थ-माहुः **पूर्वपाद** इत्यादिना, **शुद्धे**त्यादि, जडजीवधर्माणां निराकरणेन ब्रह्मणि श्रुतिप्रतिपादितानां ब्रह्मस्वरूपनिरूपणेन विरुद्धधर्माश्रयत्वस्य श्रुतिबोधितत्वेन च शुद्धसच्चिदानन्दविग्रहत्व प्रतिपादितमित्यर्थः, इह तृतीयचरणे, **विचार्यन्ते** उपासनार्थमुपसंहारार्थं च विचार्यन्त इत्यर्थः, प्रसङ्गः सङ्गतिः, **ते** विरुद्धधर्माः, **एकस्मिन्** 'आसीनो दूर व्रजति' 'अपाणिपादो जवनः' इत्यादिवत्, **विरोधाभावात्** 'स्थितं व्रजन्तमासीन शयानं वा गुहाशय'मितिवत् कालभेदेन पर्यायभेदेन च विभावने विरोधाभावादित्यर्थः, **षष्ठं** पञ्चत एवैकमधिकमित्यर्थः, **तं** रैतं, **यागभेदवत्**, तथा च द्रव्यदेवतात्मकरूपभेदेन यागभेदवदुपासनाभेदोक्तधर्मभेदे ब्रह्मभेद स्वीकार्य इत्येका कोटिः संशये, द्वितीया-माहुः **धर्माणा**मित्यादिना, मुरलीकोदण्डादिधर्मा साकारस्य, 'सदेव'इतिसत्त्वांशास्थूलत्वादयो निराकारस्य तयोर्मध्य एकेषां **उद्वापेन** त्यागेन इतरेषामावापेन स्वीकारेण, **दृष्टे**त्यादि, **दृष्टं फलं** दर्शनं, **अदृष्टं** पदप्राप्ति-ब्रह्मत्वादिरूपं, **वेद्यभेदे** तत्तदुपासनाप्रकरणोक्तधर्मैर्वेद्यभेदे प्राप्ते, **ब्रह्मानेकत्वापत्तौ** ब्रह्मण एवोपास्यत्वेन ब्रह्मानेकत्वापत्तावित्यर्थः, **श्रुतिविरोधात्** 'एकमेवाद्वितीय'मितिश्रुतिविरोधात्, **विनिगमकाभावादि**त्यादि, तथा च ब्रह्म सधर्मकमुत निर्धर्मकमुपासनाभिस्तद्भिन्नं वेति संशय, पूर्वपक्षमाहुः **ननूपासने**त्यादि, **तद्विशिष्टानां** उपासनावाक्योक्तधर्मविशिष्टानां, **तथात्वं** अब्रह्मत्वं, **इतिचेदि**त्यन्त एकः पूर्वपक्षः, त पूर्वपक्षं दूषयन्त आहुः **मैवमि**त्यादि, **समन्वये**त्यादि, तथा चोक्तरीत्या तात्पर्यबोधकत्वमात्रेङ्गीकार्य उपनिषदां शक्त्या तत्सम्बन्धिधर्मा

---

१. शुद्धस्यैवेति बपापुस्तकयो । २ ब्रह्मगता धर्मा इति कबपापुंगोपुस्तकेषु । ३. उदाहरन्तीति पुंगोपुस्त-कयोः । ४ व्रजनरेत्यादि कंपुस्तके, व्रजवरेत्यादि बपापुंगोषु । ५. चरिताभिराममिति गोपुस्तके । ६. चपदं लुप्तं कपुस्तके, उरुक्रमादिकं चेति पापुस्तके । ७. समुच्चयेत्यादि गोपुस्तके ।

त्वापत्तेश्च, अपरश्च, 'योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते किं तेन न कृतं पापं चोरे[1]णात्मापहारिणा' (महा.शान्ति.२२१.२७.) इत्यन्यथाज्ञानं निन्दन्ती श्रुतिः कथं फलसाधकत्वेन तत्तदुपासनां[3] वदेत्? स्पष्टार्थानां श्रुतिवाक्यानां निर्णयमकृत्वा सन्दिग्धार्थानां ज्योतिराकाशादिशब्दानां तद्वाचकत्वं न निर्णयेद्[4]भगवान्[5] व्यासः, एवञ्च सत्युक्तरीत्या यागवत्तेषां परस्परं[6] भेदश्चा[7]वश्यक इत्युभयतःपाशारज्जुरिति प्राप्तेभिधीयते,

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ ( ३. ३. १. )

सर्ववेदान्तप्रत्ययमनेकरूपनिरूपकैः सर्वैर्वेदान्तैः[8] प्रत्ययो ज्ञानं यस्य तत्तथा, ब्रह्मणोनन्तरूपत्वेपि[9] यानि यानि रूपाणि विविधैर्जीवैरुपासितुं शक्यानि तानि तानि रूपाणि तैस्तैर्वेदान्तैर्निरूप्यन्त इति तावद्रूपात्मकमेवं[10] ब्रह्मेत्यर्थः, तत्र हेतुः चोदनाद्यविशेषादिति, चोद्यते कर्तव्यत्वेन बोध्यतेनेनेति चोदना विधिवाक्यमितियावत्, तस्या[11] विशेषादित्यर्थः, यथैकस्मिन्नग्निष्टोमे शाखाभेदेपि चोदना तथैव भवति 'अग्निष्टोमेन यजेत[12]' (आप.श्रौत.१०.२.१.) इति तथेहापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैवोपासना विधीयत इति तथा, आदिपदात् साक्षात्परम्पराभेदेन मोक्षफलकत्वक[13]थनमप्युपासनानामविशिष्टमिति प्रयोजनसंयोगः सङ्गृह्यते ॥ १ ॥

## भेदान्नेति चेदेक[14]स्यामपि ॥ २ ॥

ननु द्रव्यदेवताभेदाद्यागभेदवदुपास्यानां धर्मभेदेन मिथोभेदादुक्तहेत्वसिद्धिं भेदान्नेति चेदित्यनेनाशङ्क्य तत्परिहारमाह सूत्रकार एकस्यामपीतिसूत्रावयवेन, यथैकस्यामपि गृहीतषोडशिकायामतिरात्रव्यक्तावगृहीतषोडशिकायाः सकाशाद्गुणाधिक्येपि नातिरात्रभिन्नयागत्वमतिरात्रलक्षणकमे[15]वाधिकृत्य तद्[16]ग्रहणाग्रहणयोर्विधानादेवमिहापि ब्रह्मैवाधिकृत्य तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोरुक्तत्वान्न ब्रह्मोपासनं[17]भिन्नत्वमुपासनासु, तथा च ब्रह्मधर्मत्वेनाभेदस्य विवक्षितत्वा-

---

प्रतिपादकत्वेन ब्रह्मणि समन्वयोनुपपन्नस्तादृशतात्पर्यबोधकत्वेन समन्वयोक्तौ तु 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिविरोधः, तासां उपनिषदां, ब्रह्मविद्यात्वहानेः तात्पर्यबोधकतायां तात्पर्यस्याब्रह्मत्वेन ब्रह्माबोधकत्वमिति ब्रह्मविद्यात्वहानेरित्यर्थः, प्रतारकत्वापत्तेः ब्रह्मण्यविद्याकार्ये ब्रह्मत्वबोधनेयथार्थवक्तृत्वे प्रतारकत्वापत्तेरित्यर्थ, दूषणान्तरमाहुः अपरमित्यादिना, स्पष्टार्थानां उपनिषद्घटकानां रामकृष्णादिपदानां, तद्वाचकत्वं ब्रह्मवाचकत्वं, तथा च येषां ब्रह्मवाचकतायां न सन्देहस्तेषां न विचारः कृतो वाचकत्वे सन्दिग्धानां तु विचारः कृततो वाचकत्वेनैवोपनिषदां समन्वयो व्यासाभिप्रेत इत्यर्थः, तेषां उपासनावाक्यप्रतिपादितधर्मविशिष्टब्रह्मस्वरूपाणां, पाशारज्जुरिति भेदानङ्गीकार आमिक्षान्यायविरोधोङ्गीकार 'एकमेवे'त्यद्वैतश्रुतिविरोध एवं पाशारज्जुरित्यर्थः, अभिधीयते सिद्धान्त उच्यत इत्यर्थ, अनेकेत्यादि, व्यधिकरणबहुव्रीहिणा सूत्रैकदेशार्थमाहुः तत्तथेत्यन्तेन, आदिपदादिति, 'एक वा संयोगरूपचोदनाख्याविशेषात्' इति सूत्रोक्ताश्चत्वारो हेतवोनेकरूपाणामैक्यसाधका बोध्याः, आदिपदादिति, इत्थं च सूत्रे चोदनाश्च आदयश्चेति चोदनादीति समाहारद्वन्द्वोवसेयः, प्रयोजनसंयोगः एकस्मिन्नेव ब्रह्मणि नानाप्रकारैर्जातफलानां समुच्चयः ॥ १ ॥

भेदान्नेति चेदेकस्यामपि ॥२॥ धर्मभेदेन एकस्यामुपासनायामुक्तधर्मस्योपासनान्तरोक्तरूपेष्वभावेन, हेत्वसिद्धिं 'संयोगरूपचोदनाख्याः' इतिहेतुचतुष्टयमध्ये भेदसाधकरूपात्मकहेतोरसिद्धिमित्यर्थः, इत्यनेनाशङ्क्य इति-

---

१ चौरेणेति बपुंगोषु । २. प्राचाम्मतेनेयं श्रुतिरेव । ३. तदुपासनामिति पापुस्तके । ४ निर्णीयादिति पुव्यतिरिक्तेषु । ५. भगवानिति लुप्तं पापुस्तके । ६. परस्परभेद इति प्रकाशपाठः । ७ चपदं लुप्तं पुंपुस्तके । ८ सर्ववेदान्तैरिति बपागोषु । ९. अपीति लुप्तं पापुस्तके । १० एकमेवेति बपापुंषु । ११. तस्मादिति पुपुस्तके । १२ यजेदिति पापुस्तके । १३ मोक्षफलककथनमिति कंपुस्तके । १४ नैकस्यामपीति कपुस्तके । १५. लक्षणमिति गोपुस्तके । १६. तत्तदिति बपुस्तके । १७. उपासनभिन्नत्वमिति पापुस्तके ।

त्वदुक्तहेत्वसिद्धिः, एवं सति यत्रैकस्मिन्नुपास्ये[1] रूपेन्यस्माद्रूपादधिका गुणा उच्यन्ते तत्र तेषामुपसंहार उचित इतिभावः, अत्रायं विशेषो ज्ञेयः, उपासनाविषयेष्वखिलेष्वविशिष्टं[2] ब्रह्मत्वं ज्ञात्वा तेष्वेकतरं[3] रूपं य उपास्ते तस्य तत्र सर्वे गुणा उपसंहर्तुमुचिताः, यस्त्वनन्तेषु विभूतिरूपेषु ओमित्यक्षरादि[4] "ओमित्येतदक्षरं ब्रह्म" (कठोप.२.१५-१६.) इति ज्ञात्वोपास्ते तस्य शाखान्तरीया अप्येतदक्षरोपासनप्रकरणोक्ता एवोपसंहर्तव्या नान्ये, तद्रूपमधिकृत्यैव तेषां गुणानां कथनात्, अन्यथातिप्रसङ्गात्, इयं तूपासनामार्गीया[5] व्यवस्थोक्ता, भक्तिमार्गीया त्वेतद्विलक्षणा, साग्रे वाच्येति ॥ २ ॥

नन्वग्निष्टोममेवोद्दिश्य यावन्तो धर्मास्तैत्तिरीयके पठ्यन्ते न[6] तावन्तो वाजसनेयके, तथा च त्वदुक्तरीत्या वाजसनेयिनां तद्धर्मोपसंहारोपि न्याय्यो भवेत्, न त्वेवं सः, शिष्टाचारादिविरोधात्, तथा पञ्चाग्निविद्यामेवाधिकृत्योक्तोपि[7] षष्ठोग्निर्न छन्दोगैः शक्यत उपसंहर्तुं, तथैवाथर्वणिकैर्नैकस्मिन् रूपे रूपान्तरधर्मा इति प्राप्त उत्तरं पठति[8],

## स्वाध्यायस्य तथात्वेन[9] समाचारेधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायो वेदः, स एकमेव कर्म शाखाभेदेन भिन्नंभिन्नप्रकारकं[10] बोधयतीति तत्प्रयुक्तः सम्यग्भूतेग्निष्टोमादिलक्षण आचारे तत्तदङ्गाचारनियमोन्यूनानधिककरणलक्षण इत्यर्थः, तावद्भिरेवाङ्गैर्यागसम्पत्तेरधिककरणस्याप्रयोजनकत्वात्तावतामेवाङ्गानां[11] करणं, ननूक्तं तद्धर्माणामप्युपसंहारस्त्वदुक्तरीत्या सम्भवतीत्यत आह अधिकारादिति, सर्वेषां शाखिनां स्वस्वशाखोक्तकर्मण्येवाधिकारो[12] न परशाखोक्तेप्यतोपि तथानियमः[13], चकारात् स्वशाखोक्तात् कर्मणोतिरिक्तत्करणे[14] न्यूनकरणे च "यदस्य कर्मणः" (आप. श्रौत. ३.१२.१.) इत्यादिप्रायश्चित्तश्रवणमपि तन्नियमे हेतुः समुच्चीयते, अत एव क्वचित् परशाखोक्तमपि व्यवस्थितविकल्प-

---

सूत्रभागेनाशङ्क्येत्यर्थः, त्वदुक्तहेत्वसिद्धिः ब्रह्मधर्माणां ब्रह्माभिन्नत्वाद्धर्मिभेदसाधकधर्मभेदरूपस्य तव हेतोर्ब्रह्मण्यसिद्धिरित्यर्थः, एवं सति सर्वोपासनाविषयरूपाणां ब्रह्माद्वैते सिद्धे सतीत्यर्थः, तत्र न्यूनगुणत्वेन प्रतीयमानोपासनाविषये रूपे, तेषां वाक्यान्तरोपासनाविषयधर्माणां, उपसंहारः सामान्यतया श्रुतस्य विशेषे नियमनं, अत्र गुणोपसंहारे, विशेषः वक्ष्यमाणो विशेष., अखिलेषु ब्रह्मत्वेनोपासनाविषयेषु प्राणोपासनासु च, सर्वे गुणाः सर्वे ब्रह्मधर्मा., 'एतदक्षरं ब्रह्म' इत्यत्र ब्रह्मत्वं गौणीकृत्य वर्णप्राधान्येनोपासनं बोध्यं, एतदक्षरेत्यादि, एवंविधोपासनाबोधकशास्त्रोक्ता. सर्वे धर्मा ईदृश उपास्य उपसंहार्या नत्वन्यविधोपास्यधर्मा अपि, अन्यथा तत्प्रकरणातिक्रमेणोपसंहारे, अतिप्रसङ्गात् प्रकरणस्याङ्गनियामकत्वभङ्गलक्षणातिप्रसङ्गादित्यर्थः, अग्रे स्वाध्यायसूत्रादौ ॥ २ ॥

स्वाध्यायस्य तथात्वेन समाचारेधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ स्वाध्यायसूत्र उपसंहारबाधकथनादुपसंहारस्याग्रे वक्तव्यत्वेप्यत्र बाधप्रसङ्गेन स्मरणादुपसंहारनिरूपणमितिबोधनाय सूत्रमवतारयन्ति नन्वित्यादि, रूपान्तरधर्माः इत्यस्य उपसंहर्तुं शक्यन्ते इत्यन्वय, सूत्रार्थमाहुः स्वाध्यायेत्यादि, तथात्वेनेत्यस्यार्थमाहु. एकमित्यादिना, समाचार इत्यस्यार्थमाहुः तत्प्रयुक्त इत्यादि, तत् शाखाभेदभिन्नप्रकारकनिरूपणं, अधिकारादित्यादिसूत्रभागं व्याकर्तुमाशङ्कते नन्वित्यादि, त्वदुक्तरीत्या ब्रह्मणि त्वदुक्तधर्मोपसंहाररीत्येत्यर्थः, तथा च तैत्तिरीयशाखोक्ताग्निष्टोमधर्मा वाजसनेयकानामप्यनुष्ठेया स्युरित्यर्थः, तथानियमः स्वशाखीयानामेवानुष्ठाननियमः, तन्नियमे स्वशाखोक्तयावद्धर्मानुष्ठाननियमे, अत एव अधिकारप्रायश्चित्तोपदेश-

---

१. कस्मिन्निति कपुस्तके। २. अविशिष्टब्रह्मत्वमिति कपुस्तके। ३. एतेष्विति बपापुस्तकयो. प्रकाशे तु तेष्विति। ४ ओमित्यक्षरादिष्विति लुप्तं बपागोषु। ५. उपासनमार्गीयेति कगोपुस्तकयोः। ६. ते तावन्त इति कपुपुस्तकयोः, बपापुस्तकयोस्तु नपदं लुप्तम्। ७. एवपदं लुप्तं बपागोषु। ८ पठन्तीति गोविपुस्तकयो। ९. तथात्वेन हीति कपुस्तके। १०. भिन्नप्रकारकमिति पुंपुस्तके। ११. अप्रयोजकत्वादिति बपापुंगोषु। १२. एवपदं लुप्तं पुंपुस्तके। १३. तथापि नियम इति गोपुस्तके। १४. कारण इति गोपुस्तके।

विषयत्वेन कल्पसूत्र उच्यते, विकल्पे तूभयस्याशास्त्रार्थत्वमुपसंहारे तूभयस्यापि शास्त्रार्थत्वमतोपि नात्रोपसंहारशङ्का, अत्र दृष्टान्तमाह सववदिति, यथा सवा होमाः सप्तसूर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसम्बन्धादाथर्वणोदितैकाग्निसम्बन्धाच्चाथर्वणिकानामेव कार्यत्वेन नियम्यन्ते तथा तत्तच्छाखायास्तथात्वात् तत्तदुक्त[1] एव कर्मणि तत्तच्छाखिनामधिकाराच्च स्वस्वशाखोक्तादन्यूनानतिरिक्तकर्मकरणनियम इत्यर्थः, प्रकृतेपि यद्रूपोपासनाप्रकरणे यावन्तो धर्मा उक्तास्तस्मिन् रूपे तावद्धर्मवत्त्वेनै[2]वोपासना कार्या तद्बोधकप्रमाणानुरोधान्न तु रूपान्तरोपासनप्रकरणोक्ता साधारणधर्मवत्त्वेनापि, तथा सति मत्स्योपासकस्य चापशरादिकमपि भावनीयं स्यात् पुरुषरूपोपासकस्य च लक्षयोजनायामशृङ्गादिकं, नन्वाथर्वणोपनिषत्सु श्रीरामोपासनायां "यो वै ये मत्स्यकूर्माद्यवतारा भूर्भुवःसुवस्तस्मै वै नमो नमः" (रामो. ता. ५.) इतिवाक्येन तदितरावताररूपत्वमुच्यते तेन तद्धर्मवत्त्वमप्याक्षिप्यते, सत्यमाक्षिप्यते तद्धर्मवत्त्वं, तत्रायमभिसन्धिः, परमकाष्ठापन्नं ब्रह्मस्वरूपमिदमिति ज्ञात्वा ह्युपासना कार्या, तेनैतस्यैवान्येवतारास्तत्तद्रूपेण तानि तानि कर्माण्ययमेव कृतवानिति ज्ञेयं परं, न तु तस्मिन्नेव रूपेन्यावतारधर्मवत्त्वमपीति, तथा च तस्मिंस्तस्मिन्नवतारे तत्तद्धर्मवानिति श्रुत्या बोध्यते न तु सर्वत्रे[3]ति, तत्र बाधकमुक्तमेव, प्राणाद्युपासनास्वेतावान् विशेषः, यथा कर्मण्यतिरेके प्रायश्चित्तश्रवणं बाधकं श्रीरामस्वरूपाद्युपासनासु च तेनावतारेणाकृतकर्मणस्तत्र भावनेपराधो बाधको "योन्यथा सन्तमात्मानम्" (महा. शान्ति. २२१. २७.) ई[4]त्यादिवाक्यं च न तथा प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे किञ्चिद्बाधकं दृश्यत इति सत्कर्तुं[5] शक्यत इति, ननु पुरुषादिरूपस्य विग्रहस्यैव शुद्धब्रह्मत्वादयमेवावतारान्तरेष्वपि लीलाकर्तेतिज्ञानमनुपपन्नमिति चेत्, मैवम्, धर्मिग्राहकमानेनैकस्यैव शुद्धस्यै[6]वानन्तरूपत्वेन सिद्धत्वाद्वस्तु[7]न एव

रूपहेत्वोः कर्माङ्गनियामकत्वादेव, व्यवस्थितविकल्पेत्यादि, व्यवस्थितविकल्पो नामोभयोरेककोटिनिर्णायको विकल्पो यथोदितानुदितहोमकल्पयोर्मध्य एकस्यैवाङ्गीकारस्तेनैव च यावज्जीवमनुष्ठानं न तु द्वितीयस्याङ्गीकारो यथा व्रीहियवादिस्थल इतिभावः, विकल्पे तु ऐच्छिकविकल्पाङ्गीकारे तु, उभयस्यापि विकल्पलब्धपक्षद्वयस्यापि, अशास्त्रार्थत्वं अष्टदोषदुष्टत्वेनाशास्त्रार्थत्व, उभयस्यापि शास्त्रार्थत्वं शास्त्रेणोभयस्यापि प्राप्तिस्तथाचैकमपि न स्यात् परस्परविरोधादितिभावः, अत्र अग्निष्टोमादौ, ननु वेदविभागात् पूर्वं शाखाधिकारिभेदानामसम्भवात् सकलकर्माङ्गानां सर्वकर्मसूपसंहार. स्यादत आहुः अत्र दृष्टान्तमित्यादि, तथा चाविभागदशायामपि तत्तद्भेदे तत्तच्छाखानामपि नियामकानां विद्यमानत्वात्ताभिरेव नियमसम्भवान्न सर्वकर्मसु सर्वाङ्गोपसंहार इत्यर्थः, सवा होमाः आथर्वणिकानां प्रसिद्धाः, त्रेताग्न्यनभिसम्बन्धात् सवाहोमेष्वग्नित्रयसम्बन्धाभावात्, तथात्वात् तत्तच्छाखोक्तकर्मसु तत्तच्छाखोक्ताङ्गानामेवानुष्ठानं न तु विरुद्धेतरेषामित्यर्थनियामकत्वादित्यर्थः, उपासनायामपि तत्तदुपास्यरूपप्रकाराणामबाधकधर्माणामेवोपसंहारो न तु बाधकानामपीत्याहुः प्रकृतेपीत्यादिना, तथा सति तद्बोधकप्रमाणविरोधेन रूपान्तरासाधारणधर्माणामुपसंहारे कृते सतीत्यर्थः, लक्षेत्यादि, तथा च पुरुषोपासकस्य लक्षयोजनविस्तीर्णशृङ्गादि भावनीयं स्यादित्यन्वय', अभिसन्धिः समाधानं, परमकाष्ठापन्नं अवतारदशापूर्वकालीनं, इदं उपासनाविषयीभूतं रूपं, अयमेव मूलस्वरूपाभिन्नत्वेन ज्ञात उपासनागोचर एव, इति ज्ञेयं परं इति मन्त्र उक्त इतिभाव., न तु सर्वत्र अन्यावतारेषु तदन्यावतारधर्माणामुपसंहारस्तु नेत्यर्थः, तत्र बाधकमुक्तं प्रकरणस्य तस्य नियामकत्वे प्रकरणस्याङ्गतानियामकत्वभङ्गलक्षणातिप्रसक्तिः स्यादितिबाधकमुक्तमित्यर्थः, नन्वेवमुपासनाविषयप्राणेष्वपि शाखान्तरोक्तप्राणधर्मोपसंहारो न स्यादित्यत आहु. न तथा प्राणेत्यादि, अधिकगुणस्येत्यादि, शाखाविशेषोक्तन्यूनसङ्ख्याकप्राणे शाखान्तरोक्ताधिकसङ्ख्योपसंहारेधिकसङ्ख्यायां न्यूनसङ्ख्यायाः सम्भवाद्विरोधाभावान्न किञ्चिद्बाधकमित्यर्थः, शक्यत इति बाधकं सत्कर्तुं न शक्यत इत्यर्थः, ननु साकारस्य सर्वादिपुरुषस्यैव परब्रह्मणः सर्वावताररूपत्वमुच्यते तन्न सम्भवति धर्मिभेदकानां निरूप्यमाणप्रकारभेदानां मूलावताररूपयोः सत्त्वादित्यत आहुः नन्वित्यादि, अनुपपन्नं 'अन्यथा

१. तदुक्त इति कपुपुस्तकयोः। २. धर्मत्वेनापीति बपापुस्तकयो । ३. सर्वत्रापीति बपागोषु सर्वत्रेतीति तु प्रकाशे। ४. आदीति लुप्तं पुंपुस्तके। ५. स कर्तुमिति कपापुषु। ६. एवपदं लुप्तं पुंपुस्तके। ७. वस्तुत एवेति कपुस्तके।

तथात्वान्न काचिच्छङ्का, यथैकस्यैवान्योन्याभावस्यानन्तभावप्रतियोगिकतत्तद्रूपत्वं[1] तावत्तत्[2]प्रतियोगिकात्यन्ताभावरूपत्वं चाभावप्रतियोगिकान्योन्याभावात्यन्ताभावरूपत्वं च भाव[3]रूपत्वेप्यभावरूपत्वमेव चाङ्गीक्रियते तथेहाप्यस्तु, अभावत्वस्याप्रयोजकत्वात्, धर्मिग्राहकमानस्यैव तथात्वात्, तच्च तैत्तिरीयोपनिषत्सु "अतः परं नान्यदणीयस९ हि परात् परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्"(तैत्ति.महा.१.५.) इत्यादिश्रुतिरूपं प्रसिद्धमेव, अपरश्च, सर्वासामुपासनानां हि ब्रह्मवि[4]ज्ञानसाधनत्वेन श्रुतौ निरूपणं क्रियते यत्प्र[5]कारिकोपासना विज्ञानहेतुः स प्रकारश्च निरूप्यते, एवं सत्येकस्यां शाखायां कतिपयगुणनिरूपणं तदितरस्यां शाखायां तदतिरिक्तानामपि गुणानामित्यत्र को[6] हेतुरिति पृच्छामः, उपसंहारेण प्राप्तिमनिरूपणे हेतुं चेद्ब्रवीषि तत्र वदामः, एवं सति न्यूनगुणनिरूपिका श्रुतिः स्वोक्तानपि गुणान् न वदेत्, तथा हि, उपासनानां ब्रह्मविज्ञानफलकत्व[7]स्य निर्णीतत्वात्तस्य चैकजातीयत्वाद् घटवत्कृत्स्न[8]ाशेषसाधनसाध्यत्वादशेषतन्निरूपिकैव श्रुतिर्निरूपयेत्, अन्या तूपासनाया नामोक्त्वा 'उपासीत' इत्येतावदेव वदेत्, गुणानां[9]माक्षेपलभ्यत्वान्न वदेत्, उपसंहार्यानपि वा वदेत्, निरूपयति च गुणान्, नोपसंहार्यान्, न च स्व[10]शाखामात्राध्येतृणामुपासनासिद्ध्यर्थं सर्वशाखासूपासनप्रकारोक्तिरिति वाच्यं, परशाखाऽज्ञानेन तदुक्तगुणोप-

---

सन्त'मितिदूषणादनुपपन्नमित्यर्थः,धर्मिग्राहकमानस्य 'यदेकमव्यक्तमनन्त'मितिश्रुतिरूपस्येत्यर्थः,तथात्वात् विरुद्धनानाधर्माश्रयत्वेन श्रुतिसिद्धत्वादित्यर्थः, भेदकनानाप्रकाराणां सत्त्वेपि धर्मिभेदाभावे दृष्टान्तमाहुः यथैकस्यैवेत्यादिना, अनन्तभावेत्यादि, तथा च घटान्योन्याभावे विद्यमाना ये पटान्योन्याभावास्ते पटभेदरूपा एवाभावाधिकरणकाभावस्याधिकरणरूपत्वाङ्गीकारात्, तत्तद्रूपत्वं घटभेदस्य पटादिभावप्रतियोगिताकनानाभेदरूपत्वं, घटात्यन्ताभावाधिकरणकनानाभावप्रतियोगिकाभावानां घटात्यन्ताभावरूपत्वमाहुः तावत्तदित्यादिना, एवं भेदाधिकरणकात्यन्ताभावानां भेदरूपत्वमपि, नन्वभावप्रतियोगिकाभावाधिकरणस्यैवाभावस्याधिकरणरूपत्वं न तु भावप्रतियोगिकस्यापीत्यत आहुः अभावप्रतियोगिकेत्यादि, भावरूपत्वेपीत्यादि प्रतियोगितत्तावच्छेदकयोर्भावरूपत्वेपि, अभावरूपत्वं प्रतियोगिभेदात्यन्ताभावरूपत्वं चेत्यर्थः, लाघवादितिशेषः, तथेहाप्यस्त्विति सर्वेषामप्यवताराणामवतारिणश्च निरूप्यमाणप्रकारभेदानां भेदकानां सत्त्वेप्यभेदः स्वीकृतोस्त्वित्यर्थः, अभावत्वस्य नानाभावानामभावरूपत्वस्य प्रतियोगितत्तावच्छेदकयोश्चाभावरूपत्वस्येत्यर्थः, अप्रयोजकत्वात् ऐक्यबोधकप्रबलप्रमाणत्वात्, स्वमत ऐक्यबोधकप्रमाणमाहुः तच्चेत्यादिना, तच्च धर्मिग्राहकप्रमाणञ्च, नन्वेकस्यैव ब्रह्मणः सर्वेवतारा ब्रह्माभिन्नाश्च तदावताररूपान्तरेन्यावतारस्वरूपाभेदेनान्यावतारधर्मवत्त्वेन विभावनयोपासने दोषो न स्यात् सर्वत्रोभयलिङ्गाधिकरणे विरुद्धधर्माधारत्वस्योक्तत्वादत एवंरीत्या विभावने श्रुतितात्पर्यविरोधरूपं दोषं वक्तुं वादिनं प्रत्याहुः अपरश्चेत्यादि,विज्ञानहेतुः स्वस्य ब्रह्माभेदज्ञानहेतुः, सः विज्ञानहेतुभूतः,निरूप्यते शाखाभेदेषु भिन्नो भिन्नो निरूप्यते, तत्र को हेतुः भिन्नरूपैर्भिन्नरूपधर्मैश्चैकस्यैव विभावने ब्रह्मविज्ञानसम्भवे श्रुतिषु नानाधर्मवत्त्वेन नानारूपनिरूपणप्रयासे को हेतुरित्यर्थः, पृच्छामः एकाकारगुणैरेकरूपतया चानिरूपणे श्रुतितात्पर्यं पृच्छाम इत्यर्थः, प्राप्तिं एकरूपताया उक्ताया उपास्ये प्राप्तिं, अनिरूपणे सर्वशाखास्वेकस्वरूपताया अनिरूपणे, एवं सति उपसंहारेणापेक्ष्यादुपास्यरूपाणामेकजातीयतालाभे सति, सर्वशाखासूपास्यानामेकजातीयताङ्गीकारे न्यूनगुणनिरूपकशाखायां स्वोक्तगुणानामनिरूपणेप्युपासनाकरणप्रकारमाहुः तथा हीत्यादिना,तस्य सकलोपासनासाध्यब्रह्मविज्ञानस्य, एकजातीयत्वात् त्वन्मत एकजातीयत्वात्, घटवदिति घटो यथाशेषस्वजनकसमुदायसाध्यस्तद्वदुपासनापि त्वदभिमतरीत्या सकलगुणानुसन्धानसाध्यातोशेषगुणनिरूपकैव श्रुतिर्निरूपयेत् इत्यस्य पूर्वोपात्तोपासनामित्यनेनान्वयः, अन्या तु अन्यशाखाश्रुतिस्त्वित्यर्थः, न वदेत् उपासनोपयोगिगुणान् न वदेदित्यर्थः, उपसंहार्यानिति, त्वन्मते उपासनाया अशेषगुणसाध्यत्वान्न्यूनगुणनिरूपिका सकलगुणान्निरूपयेत् स्वोक्तानपि वा न निरूपयेदि-

---

१. तद्रूपत्वमिति सर्वेप्यादर्शाः । २. तावदित्याद्यादर्शान्तरेषु पुंव्यतिरिक्तेषु । ३ भावाभावेत्यादि सर्वेष्वाद्यादर्शेषु । ४. ब्रह्मज्ञानेत्यादि पुंपुस्तके । ५. यत्प्रकारकेत्यादि गोपुस्तके । ६. इदं पदं लुप्तं कंपुस्तके । ७. °फलत्वस्येति कंपुस्तके । ८. °कृतेत्यादि गोपुस्तके । ९. गुणानित्यादि बपागोषु । १०. स्वस्येत्यादि कबपापुपुंगोषु ।

संहारस्याप्यसम्भवेनोपासनाया एवासम्भवापातात्, तस्मात् स्वस्वशाखोक्तप्रकारिकोपासनायामेव सर्वेषामधिकारात्तथैवं ब्रह्मविज्ञानं भवति, तैत्तिरीयाणां वाजसनेयिप्रभृतीनां चाग्निष्टोमसम्पत्त्या स्वर्ग इव, प्रकृते ब्रह्मैक्यात्तत्तद्विज्ञानं ब्रह्मविज्ञानमेव, न हि रूपरसगन्धादिमत्यां भुवि पुरुषभेदेनैकस्यैवैकैकप्रकारकं यद्भूज्ञानं न तद्भूज्ञानं, एतेनानन्तधर्मवत्त्वं ब्रह्मणि ज्ञापितं, तदुक्तं "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वेता. ६. ८.) इति, अत्र 'स्वाभाविकी' इतिविशेषणादविद्याकल्पितत्वं शक्तीनां निरस्तम्।

केचित्त्वाथर्वणिकानां विद्यां प्रति शिरोव्रतापेक्षणादन्येषां तदनपेक्षणाद्विद्याभेद इति प्राप्त उच्यते स्वाध्यायस्यैवं धर्मो न विद्यायाः, कथमिदमवगम्यते? यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशनपरे ग्रन्थ आथर्वणिका इदमपि वेदव्रतत्वेन समामनन्ति "नैतदचीर्णव्रतोधीते" (मुण्ड.३.२.११.) इति चाधिकृतविषया'देत'च्छब्दा'दध्ययन'शब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते, तस्मादनवद्यं विद्यैकत्वमितिसूत्रार्थं वदन्ति,

स चिन्त्यते, नह्यस्य विद्याधर्मत्वं विद्याभेदकं, उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात्, न चानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति वाच्यं, उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमानत्वादुपेक्ष्य इव भाति, ननु तदुक्तिर्यथा तथास्त्वतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे कानुपपत्तिरिति चेत्, उच्यते, सूत्रस्य तदुक्तार्थत्वे हि तत्तात्पर्यकल्पना, स एव च न साधीयान्, तथा हि "स्वाध्यायोध्येतव्यः" (तैत्ति.आर.२.१५.) इत्यादिषु स्वाध्यायशब्दस्य वेदवाचकत्वं प्रसिद्धं समाचारशब्दस्य विहितक्रियावाचकत्वं च, तत्रोभयोरपि मुख्योर्थो बाध्यते, तस्मिन् सम्भवति तद्बाधस्त्वयुक्तः, किञ्चैवं "नन्वग्निष्टोममेवोद्दिश्य" इत्यादिनोक्ताशङ्काया अनिवृत्तिरिति।

---

त्यर्थः, स्वशाखेत्यत्र मात्रपदेनेतरशाखाध्ययनज्ञानयोर्निरासः, उपासनासिद्ध्यर्थं उपासनाकृतिकारबोधनार्थं, परशाखाऽज्ञानेनेत्यत्राध्ययनाभावो हेतुर्बोध्यः, तत् शाखान्तरं, एतेन अनन्तशाखास्वनन्तगुणानां निरूपणेन, तत् ब्रह्मण्यनन्तधर्मवत्त्वं, केचित् शङ्करप्रभृतय., स्वाध्यायस्यैव आथर्वणवेदोपनिषदध्ययनस्यैवेदं शिरोव्रतस्याध्ययनाङ्गत्वं न विद्याङ्गत्वमिति कथं ज्ञायत इति हेतुप्रश्न उत्तरमाहुः यत इत्यादि, अधिकृतेत्यादि, आथर्वणोपनिषदध्येतृविषयादित्यर्थः, एषः शिरोव्रतधर्मः, वदन्ति सिद्धान्तिनो वदन्तीत्यर्थः, स चिन्त्यते सूत्रार्थः सिद्धान्तिनो निश्चयार्थं विचार्यते, अस्य शिरोव्रतस्य, विद्याधर्मत्वमित्यादि, तथा चोक्तरीत्याध्ययनधर्मत्वेन विद्याधर्मत्वं विद्याभेदकत्वं वा न वक्तुं शक्यत इत्यर्थः, उक्तन्यायेन 'नैतदचीर्णव्रत' इतिरीत्येत्यर्थ, अन्यत्र अध्ययने, उपसंहारस्य शिरोव्रतोपसंहारस्य, अनुपसंहारार्थं विद्याभेदमङ्गीकृत्य विद्यान्तरधर्माणां विद्यान्तरेनुपसंहारार्थं, अतद्धर्मत्वं शिरोव्रतस्याध्ययनाभावो विद्याधर्मत्वं चेत्यर्थः, उपेक्ष्यः शिरोव्रतस्य विद्याधर्मत्ववक्ता उपेक्ष्य इत्यर्थः, नन्वाथर्वणिकानां शिरोव्रतस्य विद्याधर्मत्वं शाबरभाष्य उक्त तेन च विद्याभेदे सिद्धे सर्वोपनिषदां ब्रह्मण्युपसंहारो न स्यादितिदूषणं भवतामभिमेतं तत्रेष्टापत्तिरस्माकमनुपसंहारार्थमेव च शिरोव्रतस्य विद्याधर्मत्वोक्तिर्यथातथास्तु प्रामाणिकत्वेन नोरीक्रियतां तथाप्याह अतद्धर्मेत्यादि, शिरोव्रतस्य स्वाध्यायधर्मत्वाभावस्य विद्याधर्मत्वस्य च बोधनस्येत्यर्थः, अनुपसंहारेत्यादि, सकलोपनिषदां ब्रह्मण्युपसंहाराभावार्थकत्व इत्यर्थ., कानुपपत्तिः को दोषः, सूत्रस्य स्वाध्यायसूत्रस्य, तदुक्तार्थत्वे शिरोव्रतस्य विद्याधर्मत्वनिर्णयार्थत्वे सम्भवति सतीत्यर्थः, तत्तात्पर्यकल्पना सूत्रस्य तदुक्तार्थत्वे शिरोव्रतस्य निर्णयार्थत्वे तात्पर्यकल्पना, स एव उक्त सूत्रार्थ एव, तदुक्तसूत्रार्थासम्भवमुपपादयन्ति तथा हीत्यादिना, तत्र भवदुक्तसूत्रार्थतात्पर्यकल्पने, उभयोः स्वाध्यायपदसमाचारपदयोः, तस्मिन् मुख्यार्थे, तत् मुख्यार्थः, ननु तात्पर्यनिर्वाहार्थं मुख्यार्थबाधोपि

---

१. स्वेत्यादि पापुस्तके। २. तथैवेति गोपुस्तके। ३ चैकैकेत्यादि बपापुषु, वैकैकेत्यादि दाकयोः। ४ अन्तेत्यादि पापुस्तके प्रमादजम्। ५. स्वाध्यायस्यैष इति सर्वेष्यादर्शा। ६. अध्ययनशब्दाच्चेति त्रुटितं पापुस्तके। ७. नन्विति बपुपुस्तकयो.।

नन्वाथर्वणोपनिषत्सु पठ्यते "स होवाचाब्जयोनिः योवताराणां मध्ये श्रेष्ठोवतार[1]: को भविता येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति कथं चास्यावतारस्य ब्रह्मता भवति स होवाच तꣳहि नारायणो देवः" ( गोपालो. ता. १. ) इत्युपक्रम्य मथुरास्वरूपं निरूप्य[2] निगद्यते "यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहितः" ( गोपालो. ता. २. ) इति, तेनास्यावतारस्याशेषावताराणां मध्ये श्रैष्ठ्यं निरूप्यते, श्रीभागवतेपि च "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" ( श्रीमद्भाग. १. ३. २८. ) इति गीयते, पूर्वोक्तरीत्या तु सर्वतुल्यता प्रतीयत इति नैकतरनिर्धारः सम्भवति, किञ्च, ब्रह्मणो निरवयवत्वेनैकस्यांशित्वमन्येषां तदंशत्वमित्यपि वक्तुमशक्यमिति प्राप्तेभिधीयते ।

"सत्त्वं यस्य प्रिया मूर्त्तिः" (श्रीमद्भाग. १०.८६.१५.) "विशुद्धसत्त्वं तव धाम शान्तम्" ( श्रीमद्भाग. १०. २४. ४. ) इत्यादिवाक्यैरप्राकृतो भगवत्स्थानभूतः सत्त्वनामा भगवद्धर्मरूप एव[3] कश्चनास्ति, यादृशेन रूपेण भगवान् कार्यं कर्तुमिच्छति तादृग्रूपं तं प्रकटीकृत्य तस्मिन् स्वयमाविर्भूयायःपिण्डे वह्निवत् तत्तत्कार्याणि[4] करोति यस्मिन् यस्मिन्नवतारे स सोंश इत्युच्यते, तत्र हि विग्रहस्तत्राविर्भूतं ब्रह्मस्वरूपं च प्रतीयते, विग्रहस्य सत्त्वात्मकत्वेन धर्मरूपत्वात् तत्राविर्भूतस्यैव ब्रह्मत्वात् समुदितस्यावतारत्वेन गणनात् तत्रैकस्यैवांशस्य तद्रूपत्वं यत् तदेवांशत्व, यत्राधिष्ठानमनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्माविर्भवति भक्तार्थं स स्वयं पूर्णो भगवानुच्यते, एतदेव च 'श्रैष्ठ्य'मत एव 'सर्वतः पाणिपादान्त'त्वं स्वस्मिन् स्फुटं ज्ञापयितुं तोकादिभावेनाविर्बभूव, तेन यादृग्यादृग्लीलाविशिष्टं यद्यद्बाल्यपौगण्डाद्यवस्थाविशिष्टं तत्तद्रूपं नित्यमेवेति वयं जानीमः, न चैवं सच्चिदानन्दविग्रहोक्तिः सर्वत्र विरुद्धा भवेदिति वाच्यं,

---

न दोषायेत्यत आहुः किञ्चेत्यादि, एवं विद्यैकत्वमुरीकृत्य मन्त्रोक्तोपासनाधर्माणां ब्रह्मण्युपसंहारानङ्गीकारे, उक्ताशङ्कायाः अग्निष्टोमस्य शाखाभेदेपूपपादितस्यैक्याङ्गीकारे शाखान्तरोक्ताग्निष्टोमाङ्गानां तदन्यशाखीयानामप्युपसंहारेणानुष्ठानापत्तिरित्याकारिकायाः शङ्काया अनुपपत्तिर्विद्याभेद उपासनाधर्माणां भवन्मतेनुपसंहारवच्छाखाभेदेचाग्निष्टोमभेदे प्राप्तेग्निष्टोमधर्मोपसंहाराशङ्काया एवानुदयादित्युक्तं स्वरूपभेदं स्फुटीकर्तुमारभन्ते नन्वाथर्वणेत्यादि, तापनीयश्रुत्यर्थप्रसिद्ध्यर्थं श्रीभागवतवाक्यमाहुः एते चांशेति, पूर्वोक्तरीत्या 'यदेकमव्यक्ते'त्यादिश्रुत्युक्तरीत्या, सर्वतुल्यता सर्वेषामवताराणां तुल्यब्रह्मरूपता, एकतरनिर्धारः एको धर्म्यवतार इतरेंशकलावतारा इत्येकतरनिर्धार, 'निष्कलं शान्त'मित्यादिश्रुत्यावतारधर्माणामुपसंहारानुपसंहारचिन्तैवापार्था इत्याहुः किञ्चेत्यादिना, इति प्राप्ते इति पूर्वपक्षे प्राप्ते, विशुद्धसत्त्वं प्राकृतगुणत्रयघटकसत्त्वापेक्षयातिरिक्तं ब्रह्मस्वरूपघटकं सत्त्वं, कार्यं कर्तुं 'ऐतदात्म्यमिदं सर्व'मित्यादिश्रुत्युक्तं कार्यं कर्तुमित्यर्थः, तादृग्रूपं तं स्वरूपघटकं शुद्धसत्त्वं, प्रकटीकृत्य मूर्तित्वेनाविर्भाव्य, स स इति, स सोवतारोंशपदेनोच्यत इत्यर्थः, तत्र हि अवतारे हीत्यर्थः, समुदितस्य विग्रहतत्राविर्भूतोभयरूपस्य, तत्र अवतारे, एकस्यैवांशस्य सत्त्वे शुद्ध आविर्भूतांशस्य, तद्रूपत्वं ब्रह्मस्वरूपत्वं, तदेवांशत्वं एको मूर्तिभागोपर आविष्टभाग इति तद्ब्रह्मस्वरूपमेवांशपदेन व्यवह्रियत इत्यर्थः, धर्मिस्वरूपपरब्रह्माविर्भावं साकारं विवृण्वन्ति यत्राधिष्ठानेत्यादिना, अत एव यत एव साकार पूर्णं तद्ब्रह्मात एवेत्यर्थः, तोकादिभावेनेत्यादि, तथा च यदा यदा यादृग्यादृक् पाणिपादादिपरिमाणानि प्रतीयन्ते तानि च तथैव ब्रह्मस्वरूपनिष्ठानीति 'सर्वत' इतिश्रुत्या बोध्यते, इदमेवोलूखलबन्धने मुखव्यादाने ब्रह्ममोहे नारदमोहे च प्रत्यक्षत एव श्रुत्युक्तार्थः प्रतीतिगोचर आस्तिकानां, नन्वानन्दमात्रकरपादमुखोदरादिमते नित्यावबोधस्य नित्यतोकादिभावस्य सत्त्वाघटितस्वरूपतया ब्रह्मणः सच्चिदानन्दत्वोक्तिर्विरुद्धा स्यादत आहुः नचैवमित्यादि, सर्वत्र

---

१. अवतारक इति पापुस्तके । २. निगद्यनिरूप्यत इति पापुस्तके । ३. एवपदं लुप्तं पुंपुस्तके । ४. तत्कार्याणीति पापुस्तके ।

सत्त्वस्यापि भगवद्धर्मत्वेन सच्चिदानन्दरूपत्वादविरोधात्, मन्त्राधि[1]ष्ठानरूपाणि तु विभूतिरूपाणि, एतच्च यथा तथा भक्तिहंसे प्रपञ्चितं, तत्त्वं च "प्रकाशाश्रयवद्वा तेजस्त्वात्" ( ब्रह्म. सू. ३. २. २८. ) इतिन्यायेन, भगवद्धर्माणामपि सच्चिदानन्दरूपत्वाद्धीनाधिकारिणामप्युपासकानां फलप्रेप्सूनां तत्तत्फलदानार्थमैश्वर्यादिरूपेण तत्र तत्र स्थितत्वमेव, नन्वेकस्यैव शुद्धस्यैवानन्तरूपत्वं भवतैवोक्तमतो मत्स्यादिरूपेष्वपि नाधिष्ठानत्वेन सत्त्वं वक्तुं शक्यं किञ्चैवं निराकारस्वभावत्वं ब्रह्मणः सिध्यतीति सत्त्वाव्यवहितप्राकट्योक्तिरप्यनुपपन्नेति चेत्, मैवं, सत्त्वाधिष्ठानत्वस्य प्रमाणसिद्धत्वेनानपोद्य[2]त्वात्, तच्चोक्तं "यदेकमव्यक्तम्[3]" ( महाना. उ. १. ५. ) इत्यादि, प्राकट्यं हि भक्तिनिमित्तकं, सा तु बहुविधेति तदनुरूपं प्राकट्यमपि तथा[4], सर्गादिकार्येष्वधिकृतानां भक्तानामितरासक्तिरप्यस्तीत्युपाध्यन्तरितस्नेहवत्त्वाच्चानन्तरूपत्वेन मत्स्यादिरूपोपि तदर्थं तद्व्य[5]वहित एव प्रकटीभवति, ये तु भगवत्स्वरूपमात्रासक्तास्तदर्थं स्वयमेवातद्व्यवधानेन प्रादुर्भवति, एतेनैव निराकार[6]त्वशङ्कापि निरस्ता, एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूपप्राकट्यस्य प्रमाणसिद्धत्वान्निरुपधि[7]तद्वदर्थमेव श्रीव्रजनाथप्राकट्यस्यापि तथात्वात् सो[8]पधिस्नेहवत्स्वपि पुरुषार्थदानस्यानुषङ्गिकत्वात् "पुरुषविधः" ( तैत्ति. ब्रह्म. ) इतिश्रुतेश्चैतदेव रूपं "रसो वै सः" ( तैत्ति. ब्रह्म. ) इत्यादिश्रु[9]तिप्रतिपाद्यं निरुपधिस्नेहवतां विषयः, इदमेव च 'श्रैष्ठ्यं', मत्स्यादिरूपं तु सोपधितं[10]द्वतामेव तथा, तादृक्तद्वतामर्थ एव प्राकट्यादित्यव[11]सीयते, एवं सति गुणभेदस्याप्रयोजकत्वात् सर्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहम् ॥ ३ ॥

---

श्रुतिषु, भगवद्धर्मत्वेनेत्यादि, तथा च विशिष्टस्यैव धर्मिरूपत्वाङ्गीकारान्न तूभयरूपत्वानुपपत्तिरितिभावः, मन्त्राधिष्ठानरूपाणि मन्त्रजपादिना जापकपश्यतां प्राप्तानि रूपाणीत्यर्थः, विभूतिरूपाणि परब्रह्मण इतरानधीनत्वेन मन्त्राद्यधीनत्वासम्भवाद्विभूतिरूपाण्येवेत्यर्थः, भक्तिहंसे प्रपञ्चितं भगवतः सर्वात्मत्वेन तत्प्रतिपादकैश्वर्यादिभावसम्भवादिति प्रपञ्चितमित्यर्थः, तत्त्वं च विभूतिरूपं चेत्यर्थः, तत्र तत्र उद्गीथादिरूपेषु, स्थितत्वमेव विभूतिरूपत्वमेवेत्यर्थः, क्वचिच्छुद्धस्य धर्मिणः क्वचित्कलायाः क्वचिदंशस्यावताररूपतेति प्रकारत्रयमसहमानः शङ्कते नन्वित्यादिना, एवं धर्म्यवतार आनन्दस्याकारसमर्पकतावदवतारान्तरेषु सत्त्वस्याकारसमर्पकतेत्यस्यानङ्गीकारे, ब्रह्मणः धर्म्यवतारातिरिक्तावताररूपब्रह्मणः धर्म्यवतार आनन्दस्यैवाकारसमर्पकत्वादिति बोध्यं, प्राकट्योक्तिः अंशकलावताराणां प्राकट्योक्तिः, समाधानमाहुः मैवमित्यादिना, सत्त्वाधिष्ठानत्वस्येत्यादि, धर्मिणि सत्त्वधर्मस्याधिष्ठानतानन्दआकारसमर्पक इतरावतारेषु सत्त्वमेवाधिष्ठानरूपमाकारसमर्पकमितिरीत्यानन्तेष्वपि रूपेषु साकारत्वस्य प्रमाण सिद्धत्वेन साकारानन्तरूपत्वस्यानपोद्यत्वात्, तच्च साकारानन्तरूपत्वे प्रमाणं चेत्यर्थः, प्राकट्यं हि ब्रह्मस्वरूपाणां प्राकट्यं हि, सा बहुविधा भक्तिर्बहुविधा, सकामनिःकामभेदेन कामानां भेदेन चेत्यर्थः, तदनुरूपं भक्त्यनुरूपं, तथा व्यवहिताव्यवहितभेदेन नानाविधं, उपाध्यन्तरितेत्यादि, तथा च कामनोपाध्यन्तरितस्नेहवत्त्वात्तेषां तान् प्रति रूपप्रादुर्भावोपि सत्त्वोपाधिव्यवधानेनैवेति बोध्यमन्यथा तेषां स्वरूपलाभः स्यान्न तु काम्यफललाभ इत्यर्थः, तद्व्यवहितः सत्त्वोपाधिव्यवहितः, स्वयमेव आनन्दरूप एव, अतद्व्यवधानेन मलिनसत्त्वाव्यवधानेन, एतेन अधिकारिभेदेन प्राकट्यभेदनिरूपणेनेत्यर्थः, निरुपाधितद्वदर्थं निरुपाधिस्नेहवदर्थं, तथात्वात् निरुपाधिस्नेहवद्भक्तार्थत्वात्, तथा फलदातृ, एवं सति नानाविधभक्तिभेदैर्नानारूपैरेकस्यैव प्रकटीभावे सतीत्यर्थः, गुणभेदस्य तत्तत्स्वरूपनिष्ठधर्मभेदस्य, अप्रयोजकत्वात् धर्मिभेदप्रयोजकत्वासम्भवात्, सर्ववेदान्तेति निखिलनानारूपप्रतिपादकसर्ववेदान्तः ॥ ३ ॥

---

१. मन्त्राद्यधिष्ठातृरूपाणीति सर्वत्र । २. अनपनोद्यत्वादित्यादर्शान्तराणि । ३. अनन्तरूपमित्यधिकं बपागोषु । ४. न तथेति कंपुस्तके । ५. तद्व्यवधानेनेति कदापुषु । ६. °त्वाशङ्केति बपागोषु । ७. निरुपधितत्तदर्थमिति बपापुस्तकयोः, निरूपयितुं तदर्थमेवेति गोपुस्तके । ८. सोपाधीत्यादि सर्वेष्वादर्शेषु । ९. इत्यादिषु प्रतिपाद्यमिति गोपुस्तके । १०. सोपाधिस्नेहवतामिति कुंपुस्तके सोपाधितद्वतामिति गोपुस्तके । ११. अध्यवसीयत इति पुंपुस्तके ।

## दर्शयति च ॥ ४ ॥

वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति "सर्वे वेदा यत्पदमामनन्ति" (कठो.२.१५.) इत्यादिना, उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषं च दर्शयति "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति"( तैत्ति. ब्रह्म. ) इति, 'उत्' इत्यव्ययमप्यर्थकं, तथा च 'अरम्' अल्पम'प्यन्तरं कुरुत' इत्यर्थः ॥ ४ ॥

ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्तावसर इति सिद्धं, दृश्यते चोपसंहारः श्रीरामोपनिषत्सु "यो वै ये मत्स्यकूर्माद्यवताराः" (रामो. ता. ५.) इत्यादिनोक्तावताररूपत्वस्य श्रीरामे "नमस्ते रघुवर्याय रावणान्तकराय च" (श्रीमद्भाग.१.७.) इत्यादिषु 'ते'इति युष्मच्छब्दविषये श्रीव्रजनाथे रघुवर्यत्वादेरित्याशङ्क्य तत्प्रयोजकं रूपमाह उपसंहार इत्यादिना,

## उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

उक्तस्थलादिषु य[1] उपसंहारः स त्वर्थस्य पदार्थस्य भगवल्लक्षणस्योभयत्राप्यभेदादित्यर्थः, नन्वेवं सति मत्स्ये शरचापादिकं पुरुषे[2] शृङ्गादिकं भावनीयं स्यादिति चेत् तत्राह विधिशेषवदिति, यथा विधिविशेषाणाम[3]ग्निहोत्रादीनाम[4]ग्निहोत्रत्वादिलक्षणे धर्मे समानेपि सति स्वस्व[5]शाखोक्तप्रकारकस्यैव करणं नान्यशाखोक्तधर्मोपसंहार, एवमिहापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्मवत्त्वेनैवोपासनं नान्यावतारधर्मवत्त्वेनापीत्यर्थः, यद्वा मत्वर्थीयो वत्प्रत्ययोत्र, तथा च विधिशेषोर्थवादस्तद्वत्समानं च भवति यत्तत्र चोपसंहार इत्यर्थः, अत्रैवं ज्ञेयं, एकस्यां श्रुतौ यस्य कर्मणो यत् फलमुच्यते तदितरस्यां[6] तस्यैव कर्मणस्तदितरत् फलमुच्यते, एवं सति द्वितीयश्रुत्युक्तफलकामनयापि तदेव[7] कर्म कर्तव्यं भवतीति तत्फलसाधकत्वस्योपसंहारः, यथा "यद् वैश्वदेवेन यजते प्रजा एव तद् यजमानः सृजते" ( तैत्ति. ब्रा. १. ४. ११. ) इत्येका श्रुतिरस्य यागस्य प्रजाफलकत्वमाह, "यद् वैश्वदेवेन यजते अग्निमेव तत् संवत्सरमाप्नोति तस्माद्वैश्वदेवेन यजमानः संवत्सरीणा९ स्वस्तिमाशास्त इत्याशासीत" ( तैत्ति. ब्रा. १. ४. ११. ) इति द्वितीया श्रुतिराह तत्रोक्तरीतिरिति ।

यत्तु विधि[8]शेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादिकर्म सर्वत्रेत्यर्थाभेदादुपसंहार इति, तन्न साधु, अग्निहोत्रादेस्तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारस्यैव करणादतिरेके माय-

---

दर्शयति च ॥ ४ ॥ विद्यानां नानास्वरूपप्रतिपादकोपनिषदां, एकत्वं एकार्थप्रतिपादकत्वं, दोषं 'अथ तस्य भयं भवती'तिभयरूपं दोषं संसारसम्बन्धरूपम् ॥ ४ ॥

उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ पूर्वसूत्रोक्तरीत्या स्वाध्यायसूत्रोक्तरीत्या, गुणोपसंहारः अवतारान्तरधर्माणामवतारान्तरेपूपसंहारः, श्रीराम इति, तथा च मत्स्यकूर्माद्यवतारत्वस्य श्रीराम उपसंहारात् पूर्वसिद्धं विरुद्धमित्यर्थः, इत्याशङ्क्य इत्याशङ्कायां प्राप्तायां, तत्प्रयोजकं इतरधर्माणामत्रोपसंहारे प्रयोजकं, एवं सति भगवद्रूपार्थमैक्यस्योपसहारे प्रयोजकत्वे सति, विधिविशेषाणां विधिवाक्यश्रवणानन्तरं जायमानबोधविषयाणां, तद्वत्समानं चेति, तथा च 'धर्मे वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजौ' इत्याद्यर्थवादानां नानाशाखीयदर्शपूर्णमासादिषु यथा स्तावकत्वेनोपसंहारस्तद्वदित्येकोर्थः, अथवा तादृशार्थवादवत् समानं कर्मफलद्वये समानं तत्र कर्मणि फलद्वयजनकत्वस्योपसंहार इत्यर्थः, तदेवोपपादयन्ति तत्रोक्तरीतिरित्यादि, एवं 'चार्थाभेदा'दित्यत्र धर्माभेदादित्यर्थः, 'समाने' इत्यत्र फलद्वये समाने, 'च' फल-

---

१. य इति लुप्तं गोपुस्तके । २. पुरुषे चेति बपागोषु । ३. विधिशेषाणामिति सर्वेष्यादर्शाः । ४ अग्निहोत्रादीनामिति लुप्तं पापुस्तके । ५. स्वेत्यादि पापुस्तके । ६. इतरस्या तस्यामिति बपापुंगोषु । ७. तत्तदेव कर्तव्यमिति पुंपुस्तके । ८. विधिविशेषाणामिति गोपुस्तके ।

श्चित्तश्रवणान्नान्यशाखोक्तधर्मोपसंहारः शक्यवचनः, प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे न किञ्चिद्बाधकं दृश्यत इति तत्र स कर्तुं शक्यत इति चकारेण तदादयः सङ्गृह्यन्ते, वस्तुतस्तु पूर्वसमुच्चयार्थश्चकारः, शाखान्तरोक्तधर्मोपसंहारप्रयोजनाभावस्य "स्वाध्यायस्य तथात्वेन" (ब्रह्म. सू. ३. २. ३.) इत्यत्र निरूपितत्वादुपसंहारबीजमनेन सूत्रेणोक्तम् ॥ ५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

ननूपासनासूक्तन्यायेन गुणोपसंहारो ह्युपास्यानां ब्रह्मत्वेनैक्ये सति भवति, मिथोविरुद्धानां गुणानां शान्तत्वक्रूरत्वतपोभोगादीनामुपसंहारे क्रियमाणे स्वरूपाणामन्यथात्वमब्रह्मत्वं स्यादित्यर्थः, तत्र हेतुः शब्दादिति, एकत्वैकरसत्वादिधर्मनिरूपकश्रुतेरित्यर्थः, समाधत्ते नाविशेषादिति, एकरसत्वं यथा श्रुतिबलान्निर्णीयते तथा विरुद्धधर्मवत्त्वमपि तत एव तथेत्यर्थः, तेन वस्त्वेव तत् तादृङ्ङन्तव्यमितिभावः ॥ ६ ॥

पूर्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्वोक्तात् प्रकारान्तरेण कर्तव्यमित्याह न वेति[३],

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

तमेवाह प्रकरणभेदादिति, अत्रायं भावः, श्रुतिप्रामाण्याद्यावत्तदुक्तधर्मवद्ब्रह्मेति मन्तव्यं, एवं सति यादृशोधिकारिणो यादृग् वेद्यं रूपं तादृशस्य तस्य तादृक् तन्निरूपयति प्रकरणभेदेन, तथा च ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग्रूपं ज्ञेयं तादृक् तत्तस्मै[४] निरूपयति "अदृश्यमग्राह्यम्" (मुण्ड. १. १. ६.) इत्यादिरूपा श्रुतिः, भक्तिप्रकरणे तु भक्तेर्बहुविधत्वाद् यादृग्यादृग्भक्तानां यादृग् यादृक् तदनुभवविषयस्तादृक्तादृक् तन्निरूपयत्याथर्वणोपनिषदिति, अत्र दृष्टान्तमाह परोवरीयस्त्वादिवदिति, "अस्मिन् मे लोकेर्द्धुकं स्यात्" (तै. सं. ६. २. ३.) इति कामवत आराग्रावान्तरदीक्षा पूर्वमुक्त्वा तदग्रे "परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेर्द्धुकं स्यादिति चतुरोग्रेथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षा" (तैत्ति. सं. ६. २. ३.) इति पठितं, अस्य दीक्षाप्रकरणे पठितत्वा-

---

द्वयजनकत्व'स्योपसंहार' इत्यर्थः, तदादयः प्राणविद्यादयः, सङ्गृह्यन्त इति, तथा 'चाधिकं प्रविष्टं न तु तद्धानि'-रितिन्यायादधिकग्रहणेपि मूलसङ्ख्याया अबाधने प्रकृतवैगुण्याभावात् सङ्गृह्यन्त इत्यर्थः, **पूर्वसमुच्चयार्थः** अभेदे उपसंहारसमुच्चयार्थ इत्यर्थ ॥ ५ ॥

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्** ॥ ६ ॥ अब्रह्मत्वं विरुद्धधर्माणां धर्मिभेदकत्वादित्यर्थः ॥ ६ ॥

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्** ॥ ७ ॥ **आशङ्कानिराकरणं** 'अन्यथात्वं शब्दा'दिति पूर्वसूत्रभागेन कृता याशङ्का तस्या अनेन सूत्रेण **प्रकारान्तरेण निराकरणं** क्रियत इत्यर्थः, तदुक्तः श्रुत्युक्तः, **आथर्वणोपनिषदिति**, तथा च ब्रह्मस्वरूपं सकलतद्गुणाश्च सर्वत्रोपास्येषु तिष्ठन्ति तथापि यादृशोपासकं प्रति यावन्तो गुणा भगवता प्रकटीक्रियन्ते तादृशस्थले श्रुत्या तावन्त एव निर्णीयन्त इति तथा श्रुतिभिर्निरूपणात् तात्पर्यमवसीयत इति, अत्र **दृष्टान्तमि**त्यादि, एवमधिकारिभेदेन श्रुत्या भिन्नप्रकारेण ब्रह्मनिरूपणं कृतं तत्र दृष्टान्तमाहेत्यर्थः, विषयवाक्यमुक्त्वा दृष्टान्तं विशदयन्ति **अस्मिन्नि**त्यादि, एतच्छ्रुत्यर्थस्तु 'अहीना'ख्ये सोमयागे 'अहीन'सत्रे चोपसद्दिनसङ्ख्यां पूर्वं विधाय तेषु दिनेष्ववान्तरदीक्षाङ्गव्रतपानस्तनसङ्ख्यां विधत्ते, तत्रावान्तरदीक्षा द्विविधा, **योस्मिंल्लोके** समृद्धिशील फलं **कामयते** तस्याराग्रमात्रावान्तरदीक्षा, सोमक्रयदिने सायमेकस्तनं, अपरेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन् स्तनान्, परेद्युः प्रातश्चतुःस्तनान्, एवम्पान **आराग्रदीक्षा** सिध्यति सा **पूर्वमुक्ता**, **आरं** बलीवर्दप्रतोदनलोहं तद्वदग्रं मुखं यस्याः सा **आराग्रा**, **तदग्रे परोवरीयसी** वाक्येन्या, तत्र विपरीतं व्रतं, सोमक्रये चतुरः स्तनान् दुग्धे, अपरेद्युः प्रातस्त्रीन् सायं द्वौ, परेद्युः प्रातरेकमित्येव दिनत्रयं, एवं दोहनक्रमस्थले **परोवरीयसी** द्वितीयावान्तरदीक्षा बोध्या, अस्येत्यादि,

---

१. स्वाध्यायस्येति लुप्तं पापुस्तके। २. तत्पदं लुप्तं पुंपुस्तके। ३ न चेतीति बपाठ प्रमादज। ४ तत्पद लुप्तं बपापुंगेषु। ५ यादृगनुभवविषय इत्यादि कंपुस्तकपाठस्तु प्रमादज।

दीक्षां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वमेवं भक्तिप्रकरणीयानामाथर्वणोपनिषदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वं, ज्ञानसाधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं नेति ।

अथवा[1] पूर्वसूत्रेण सर्वरूपेषु मिथः सर्वधर्माणामुपसंहारः प्राप्तः, स चैकान्ति[2]भक्तानुभवविरुद्ध इत्यत्र व्यवस्थितविकल्पमाह न वेत्यन्तं[3], सर्वेष्ववतारेषु भगवदवतारत्वेन साधारणी भक्तिर्यस्य स सर्वत्रोपसंहारं करोतु नाम, यस्त्वेकान्ती तस्य स्नेहोत्कर्षेणान्तःकरणमेकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसम्भावनापीति तदेतदुच्यते न वेत्यनेन, तत्र हेतुः प्रकरणभेदा[4]दिति, श्रुत्यादिषु तत्तदधिकारिणमुद्दिश्य तत्तत्प्रकरणमुक्तं, तेनात्र प्रकरणपदे[5]नाधिकार उच्यते, एवं सत्युपासकादिभ्य उक्तरीत्योत्कृष्टाधिकारादित्यर्थः सम्पद्यते, परोवरीयस्त्वादि[6]वदिति, परस्मात् परश्च वराच्च वरीयानिति परोवरीयानुद्गीथः, तथा चाक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोपासनाया अप्युद्गीथोपासनत्वेन साम्येपि सर्वोत्कृष्टत्वेनात्रोद्गीथो भासत इति न हिरण्यश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासनायामेवं प्रकृतेपीति ॥ ७ ॥

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

एकान्त्यनेकान्तिनोरपि श्रीरामोपासकत्वादिसंज्ञा त्वविशिष्टेत्येकान्तिनोप्युपसंहारो युक्त इत्याशङ्कोत्तरं तु "न वा प्रकरणभेदात्" ( ब्रह्म. सू. ३. ३. ७. ) इत्यनेनैवोक्तं, संज्ञा तु लौकिकी, अधिकारस्त्वान्तरः, स एव बलीयानिति, संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह अस्ति तु तदपीति, प्रमित[7]भेदेष्वप्युपासनेषु परोवरीयस्त्वादिषु संज्ञैकत्वमुद्गीथोपासनेष्व[8]स्तीत्यर्थः ॥८॥

अस्य व्रते स्तनपानक्रमस्य, उक्तरीत्या व्रते स्तनदोहनोक्तक्रमेण व्रते, एवं दीक्षाव्यतिरेकेण क्रियमाणोक्तव्रते दीक्षात्वाभावात्, न भक्तीत्यादि, भक्तिफलातिरिक्तफलार्थं नोपास्यत्वमित्यर्थः, भक्तित्वं नेति, भक्त्यतिरिक्तफलार्थं क्रियमाणत्वाद्भक्तित्वं नेत्यर्थ, पूर्वसूत्रेण 'उपसंहारोर्थाभेदादि'तिसूत्रेण, व्यवस्थितविकल्पं ज्ञानिनामुपसंहारो भक्तानां नेत्येवविधव्यवस्थितविकल्पार्थं इत्यर्थः, न वेत्यन्तेन न वेतिसूत्रभागेनेत्यर्थ, तत्र व्यवस्थाया, अधिकार उच्यत इति, तथा चोत्कृष्टाधिकारे नोपसंहार इत्युच्यत इत्यर्थ., एवं सति प्रकरणभेदादित्यस्य अधिकारिभेदादित्यर्थे सिद्धे सतीत्यर्थः, उपासकादिभ्य इति प्रकरणभेदादित्यस्यार्थ., फलितार्थमाहुः उक्तेत्यादि, इत्यर्थ इति, तथा च प्रकरणभेदाद्व्यवस्थेत्यस्योत्कृष्टाधिकारान्नोपसंहार इति फलितार्थ इतिभावः, उत्कृष्टाधिकारस्यानुपसंहारहेतुत्वं दृष्टान्तेन साधयन्ति परस्मादित्यादि, परात् अक्ष्याद्युद्गीथोपासनापरात्, अत एव वरः श्रेष्ठः, वराच्च वरीयान् वरत्वादेव श्रेष्ठतम इत्यर्थः, उद्गीथः ब्रह्मात्मकरूप उद्गीथः, इदञ्च छान्दोग्य उद्गीथविद्याकुशलेन प्रवाहणेनोक्तमुद्गीथविद्यासमाप्तौ, तथा हि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण स एष परोवरीयानुद्गीथः स एषोनन्त' इति तद्विद्यायामेवाक्ष्यादित्यादिप्रतीकोपासनाप्युक्तेति, साम्येपि अक्ष्याद्युद्गीथोपासनस्याकाशोद्गीथोपासनस्योद्गीथत्वेन साम्येपीत्यर्थः, सर्वोत्कृष्टत्वेन इतरोद्गीथापेक्षयाकाशरूपोद्गीथस्योत्कृष्टत्वेन, उद्गीथः आकाशरूपोद्गीथ, न हिरण्येत्यादि, अक्ष्याद्युपासनायां विद्यमानहिरण्यश्मश्रुत्वादेर्नाकाशोद्गीथोपासनायामुपसंहार इत्यर्थः ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥८॥ अधिकारिभेदेनोपसंहारानुपसंहारव्यवस्थां पूर्वोक्तां द्रढयितुं किञ्चिदाशङ्क्य सूत्रं व्याकुर्वन्ति एकान्तीत्यादि, एकान्त्यनेकान्तिनोः ज्ञानिभक्तयोः, एकान्तिनोपि भक्तस्यापीत्यर्थ., इत्यनेनैवोक्तं अधिकारस्योपसंहारानुपसंहारव्यवस्थापनेनोक्तमित्यर्थः, संज्ञैकत्वस्येत्यादि, हेतोः उपसंहारहेतोः, अन्वयस्य व्यभिचारः यत्र यत्र संज्ञैकत्वं तत्र तत्र सर्वत्र संज्ञिकधर्माणां सञ्ज्ञिषूपसंहार इत्यन्वये व्यभिचार इत्यर्थः, प्रमितभेदेषु निर्णीतभेदेषु, तथा च छान्दोग्य उद्गीथावयवप्रणवस्योद्गीथत्वेनैवमादित्याक्षिपुरुषस्य

१ अथवापदानन्तर "न भेदादिति चेदेकस्यामपि' (ब्र. सू. ३. ३. २ ) इत्यस्य भाष्ये भक्तिमार्गीयव्यवस्थाप्रतिज्ञापूरणाय पक्षान्तरमाहु " इति गोपुस्तकेधिकम् । २. ऐकान्तिकेत्यादि बपागोषु । ३ नवेत्यादिनेति सर्वेष्यादर्शो । ४ °भेदेनेति बपागोषु । ५ °त्वेनैवेति बपापुषु ६ °त्वादीत्यादि पापुस्तके । ७. प्रमितीत्यादि कपुपुस्तकयो, प्रमितेरिति कंपुस्तके । ८. °ष्वस्तीत्यथ इति पुपुस्तके, °त्यस्तीत्यर्थ इति पुंपुस्तके ।

अथेदं विचार्यते, उपास्येषु रूपेषु बाल्यपौगण्डादिकमप्युच्यते, तथा सति विग्रहे न्यूनाधिकभाव आपततीति तत्रोक्तं सच्चिदानन्दत्वमनुपपन्नं स्यात् तेषां सदैकरूपत्वात्, प्राकृतत्वे च सर्वमसमञ्जसं स्यादिति प्राप्त आह व्याप्तेरिति[1],

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

"सर्वतः पाणिपादान्तम्" ( श्वेता. ३. ३६. ) इत्यादिश्रुतेः साकारमेव व्यापकमिति, चकारात् "सर्वरसः" ( छान्दो. ५. १४. २.) इतिश्रुत्या रसात्मकत्वेन भक्तानां यादृशरूपेण[2] लीलारसानुभवस्तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटीकरोतीति बाल्यादिभावोपपत्तेः सर्वमुपपन्नमित्यर्थः, तेन यावदुक्तधर्मवद्ब्रह्मेति सिद्धम् ॥ ९ ॥

ननु ब्रह्मधर्मत्वेन[3] ते सर्वे नित्या वाच्यास्ते च तत्तद्भक्तविशिष्टास्तत्र चैकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासम्बन्धित्वं श्रूयते, तथा च पूर्वलीलाया नित्यत्वेन तत्सम्बन्धिभक्तस्यापि तथात्वं वाच्यं, एवं सति तस्यैवाग्रिमलीलासम्बन्धोऽशक्यवचनः, तथावचने तु पूर्वलीलाया नित्यत्वं[4] भज्येत, नित्यत्वे त्वग्रिमलीलासम्बन्धिनो[5] भिन्नत्वं स्यात्, तच्चानुभव[6]तदावेदकमानविरुद्धमित्यत उत्तरं पठति,

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

लीलामध्यपातिनां सर्वेषां पदार्थानां ब्रह्मणा सहाभेदाद्ब्रह्मणश्चैकत्वात् पूर्वलीलातोऽन्यत्रोत्तरलीलायामपीमे पूर्वलीलासम्बन्धिन एव त इत्यर्थः, अत्रेदमाकूतं, "रसो वै सः" (तैत्ति. ब्रह्म.) इतिश्रुत्या[7] "सर्वरसः"[8] (छान्दो.५.१४.२.) इतिश्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो

प्रतीकस्योद्गीथत्वेनोपासनमुक्तं, एवमाकाशमुपक्रम्य परोवरीयस्त्वगुणकमुद्गीथोपासनमुक्त, न हि तत्र संज्ञैकत्वसत्त्वेपि धर्मोपसंहारोस्तीत्यन्वयव्यभिचार इत्यर्थः ॥ ८ ॥

व्याप्तेश्च समञ्जसम् ॥ ९ ॥ तथा सति ब्रह्मत्वाभिमते बालपौगण्डाद्यवस्थाङ्गीकारे सति, तत्रोक्तं ब्रह्मप्रकरणीयश्रुतिषूक्तं, तेषां ब्रह्मनिष्ठसच्चिदानन्दानां, सर्वमिति उपास्यरूपेषु साधित ब्रह्मत्वं तेषां रूपाणा ब्रह्मत्वेनोपासने श्रुतिविरोधपरिहारादिकञ्चेत्यर्थः, इति प्राप्ते उक्तरीत्यावतारेष्वब्रह्मत्वप्रसक्त्यानुपास्यत्वे प्राप्ते, आह तत्परिहारं सूत्रकार आहेत्यर्थः, यादृशरूपेण यादृशयादृशरूपेण, क्रमेण भक्तानां लीलारसानुभावक्रमेण, सर्वमुपपन्नं व्याप्तेर्व्याप्तैः समञ्जसमित्युक्तत्वादाकाशे परिमाणन्यूनाधिकभानवद्ब्रह्मण्यपि सकलपरिमाणभानोपपत्तेः सर्वमुपपन्नमित्यर्थः, तेन 'यदेकमव्यक्तमनन्तरूप'मितिश्रुत्या साकारव्यापकब्रह्मरूपाणां प्रतीत्युपपादनेन, यावदुक्तधर्मवत् पूर्वोक्तबाल्यपौगण्डादिनिखिलधर्मवत् ॥ ९ ॥

सर्वाभेदादन्यत्रेमे ॥ १० ॥ अग्रिमसूत्रमवतारयन्ति नन्वित्यादि, ते सर्वे बाल्यादिधर्मा., नित्याः 'अनुच्छित्तिधर्मे'तिश्रुतेर्नित्या इत्यर्थः, ते च अवस्थारूपधर्माश्च, तत्तद्भक्तेत्यादि, तत्तदवस्थाविशिष्टोपासकभक्तसहितास्ते धर्मा नित्या वाच्या इत्यर्थः, श्रूयते 'यो नन्दः परमानन्द' इत्यादि कृष्णोपनिषदि श्रूयते, तस्यैव पूर्वलीलानुभवितुर्भक्तस्यैव, अशक्यवचनः एकस्मिन्नेकदा विरुद्धलीलाद्वयस्यासम्भवादेकस्मिन् भक्त एकदा नानालीलानुभवस्य चासम्भवादशक्यवचन इत्यर्थः, तथावचने तु पूर्वलीलायास्तिरोधानोक्तौ तु, नित्यत्वे पूर्वलीलाया नित्यत्वे, अग्रिमलीलासम्बन्धिनः ब्रह्मणो भक्तस्य चेत्यर्थ , भिन्नत्वं स्यात् एकस्मिन्नेकदा विरुद्धधर्मद्वयस्यैकस्मिन्नेकदा विरुद्धधर्मद्वयानुभवस्य चासम्भवाद्भिन्नत्वं स्यादित्यर्थः, तच्च सम्बन्धिभिन्नत्वं च, अनुभवतदावेदकमानविरुद्धमिति, एकस्मिन्नेव नानालीलास्तदनुभवोप्येकस्मिन्नेकस्यैवेति श्रुत्युक्तानुभवसम्बन्धैक्यबोधकमानविरुद्धमित्यर्थः, ब्रह्मणा सहाभेदादिति 'तस्मान्न भिन्ना एतास्तु ताभिर्भिन्नो न वै प्रभु भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासित'मिति कृष्णोपनिषच्छ्रुतौ सर्वेषां ब्रह्माभेदश्रावणेन तथात्वात्, अन्यत्र देशविषये, इमे पूर्वलीलासम्बन्धिन., ते

१ स्मृतेरिति बपापुस्तकयो । २ यादृग्रूपेणेति सर्वेष्यादर्शा । ३ °धर्मवत्त्वेनेति कपुस्तके । ४ नित्यत्व इति सप्तम्यन्त प्रमादज पाठ कंपुस्तके । ५ सम्बन्धिभिन्नत्वमिति कंपुस्तके । ६ °भव इति सप्तम्यन्तं कपुस्तके । ७ श्रुत्या चेति कंपुस्तके । ८. सर्वरस इतिश्रुत्येति लुप्तं कंपुस्तके ।

निर्णीतं, तथा च यस्य रसस्य ये विभावानुभावादिरूपास्तैः स रसः सम्पद्यत आतानवितानात्मकतन्तुभिः पट इवातस्तत्तादात्म्यं रसस्येति सर्वाभेदो निःप्रत्यूह इति, ननु विरुद्धदिक्कयोरेकजातीयभाववतोर्भक्त्यतिशयेन युगपदेकजातीयलीलासहितभगवत्प्रादुर्भावे भगवतो व्यापकत्वेनैवम्प्रादुर्भावस्योपपन्नत्वेपि लीलापदार्थानामव्यापकत्वाद्युगपदाविर्भावोनुपपन्नो[1] भक्तयोः समानत्वाद्भक्तिमार्गविरोधापाताद्विनिगमकाभावाच्चैकत्र मायया प्रदर्शयतीति च वक्तुं न[2] युक्तमितिशङ्काप्येताभ्यां सूत्राभ्यां[3] निरस्तेति ज्ञेयं, ब्रह्मणो व्यापकत्वाल्लीलायाश्च तेन सहाभेदात् तथात्वादेकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्था आविर्भवन्ति तथैव तदैवान्यत्रापि भक्तसमानदेश आविर्भवन्तीति सर्वसामञ्जस्यात्॥ १०॥

ननु व्यापकत्ववत् पूर्णानन्दैश्वर्यवीर्यादयोपि धर्मास्तेषु प्रतीता भवेयुः, न चैवमस्ति, दुःखसम्भावनायां प्रभुमेव प्रार्थयन्ति यतः, एवं सति व्यापकत्वमपि न वक्तुं शक्यं, तुल्यत्वात्, अत उत्तरं पठति,

## आनन्दादयः प्रधानस्य॥ ११॥

पूर्णानन्दैश्वर्यादयः प्रधानस्य धर्मिणो ब्रह्मण एव धर्माः, लीलापदार्थास्तु ब्रह्मधर्मत्वेन व्यापका उच्यन्ते, व्यापकस्य धर्मिणोनागन्तुकधर्मस्य व्यापकत्वनियमात्, न हि धर्मेषु पूर्णानन्दत्वादयः सम्भवन्ति, धर्मित्वापत्त्या धर्मत्वव्याहतेः[4], अत एवात्र प्रधानपदमुपात्तं गुणभावेन[5] लीलापदार्थानामाविर्भाव इति ज्ञापयितुम्॥ ११॥

ननूपासकस्य प्रियत्वादिप्रकारकज्ञानक्रममादाय प्रियत्वादिधर्माणां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वादत्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणामुपसंहारः कार्य इत्याशङ्क्य परिहरति प्रियशिरस्त्वाद्यप्राप्तिरिति,

---

उत्तरलीलासम्बन्धिनः, ननु श्रुत्या भक्तानामभेदनिश्चयेपि सकललीलास्थपदार्थानां कथमभेद इत्याकाङ्क्षायां तदुपपादयन्ति अत्रेदमित्यादिना, पूर्वश्रुत्या रसात्मकत्वेन यत् सिद्धं तदाहुः तथा चेत्यादिना, विभावा इत्यादि सात्त्विकादय आलम्बनविभावरूपा भक्ता उद्दीपनविभावरूपा वसन्तादयः संचारिभावा गूढानुभववासनादयोनुभावाः कटाक्षवेणुवादनादयः, तेषां सर्वेषां रसाभेदे सिद्धे सर्वमुपपद्यत इति तदुपपादयन्ति आतानेत्यादिना, आतानाः दीर्घतन्तवः, वितानाः तेषु प्रोततन्तवः, अत इत्यादि, तथा च पटे तन्तुरूपकारणानां यथाभेदस्तादात्म्यरूपस्तथा रसे कारणीभूतनिखिललीलास्थपदार्थानामपि रसतादात्म्यरूपाभेदसिद्ध्या रसत्वेन सर्वेषामभेदाद्भक्तानां पूर्वोत्तरलीलाकरणेपि न भेदोनित्यत्वं वेति, इदानीं विरुद्धदेशस्थैकजातीयभक्तलीलास्थपदार्थेषु किञ्चिदाशङ्क्य परिहरन्ति नन्वित्यादिना, युगपत् विरुद्धदेशद्वये युगपदित्यर्थः, उभयत्र भक्ताभ्यां सह लीलाकरण एकाकारलीलापदार्थानामनाविर्भावणे दूषणमाहुः भक्तयोरित्यारभ्य न युक्तमित्यन्तेन, भक्तिमार्गेत्यादि, एकत्र मायया कापट्येन लीलापदार्थसम्पादन एकान्तभक्तेषु स्वल्पमपि मेन्तर नास्तीति यो भक्तिमार्गस्तस्य विरोध इत्यर्थः, निरसनप्रकारमाहुः ब्रह्मण इत्यादिना, तथात्वात् ब्रह्मरूपत्वाद्व्यापकत्वादित्यर्थः॥ १०॥

आनन्दादयः प्रधानस्य॥ ११॥ सूत्रमवतारयन्ति नन्वित्यादिना, तेषु भक्तेषु, एवं सति पूर्णानन्दैश्वर्यवीर्यादीनामभावे सतीत्यर्थः, ब्रह्मधर्मत्वेन व्यापका इति, धर्मत्वेन व्यापकता चाकाशपरिमाणे प्रसिद्धा, न हि व्यापकाकाशस्य परिमाण आकाश एकदेशे नित्यं वाक्येन विच्छीक्रियते तद्वद्ब्रह्मधर्मा अपि बोध्या इत्यर्थः, अनागन्तुकधर्मस्य परिच्छिन्नप्रतीतिविषयत्वप्राकृतत्वप्रतीतिविषयत्वादयो धर्मा ब्रह्मण्यागन्तुका लीलासम्बन्धिधर्मास्त्वनागन्तुका एवानुपदोक्तकृष्णोपनिषच्छ्रुतेरित्यर्थः, स्वोक्तार्थे सूत्रकारसम्मतिमाहुरत एवेत्यादिना, आविर्भावः आनन्दाविर्भावः, एतदन्वयो लीलापदार्थेषु बोध्यः॥ ११॥

---

१ °भावानुपपत्तेरिति कपुस्तके। २ नपदं लुप्तं कपुस्तके। ३ सूत्राभ्यामिति लुप्तं बपुस्तके। ४ धर्मव्याहतेरिति कपुपुस्तकयो, धर्मव्यपहतेरिति कपुस्तके। ५. धर्मगुणभावेनेति वपापुस्तकयो।

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

चित्तशुद्धितारतम्यहेतुकप्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्ध्यपेक्षाभावान्न सम्भवतीति न तेषामत्रोपसंहारः कार्य इत्यर्थः ।

अथवा नन्वानन्दमयोपासनामाथर्वणोपनिषदुक्तपञ्चरात्राद्यागमोक्तप्रकारेण कुर्वतः पुरुषरूपे पक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूपस्यैवोक्तत्वात् पुरुषरूपः कथमानन्दमयः? तथात्वे वा कथं नोक्तोपसंहारः? अपरञ्च, मोदप्रमोदयोरुपचितानुपचितानन्दरूपयोर्युगपत्सत्त्वेन देशभेदेनापि भिन्नत्वान्नित्यानन्दैकरसे ब्रह्मणि तादृग्रूपकथनमनुपपन्नमित्याशङ्क्य परिहरति प्रियशिरस्त्वादीति, यद्याथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेदः स्यात् तदा तदप्राप्तिः स्यान्न च तथेति प्रियशिरस्त्वादिकमुपासनामार्गीयस्याप्याथर्वणिकादेरुपसंहार्यमेवेत्यर्थः, चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानमितिपक्षे परोक्षवादपक्षेपि तत्र भेदाभावान्मोदप्रमोदयोर्न त्वदुक्तरूपत्वमित्यर्थः, ब्रह्मधर्मा एव भिन्ना इत्युपासनार्थं तानादाय शिरःपाण्यादि निरूप्यत इति तत्रैव निरूपितमस्माभिः, यद्यप्यानन्दमयाधिकरण

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ पूर्वत्रिसूत्र्या साकारव्यापकत्वादयो भगवद्धर्मा भक्तेष्वपि तिष्ठन्ति पूर्णानन्दैश्वर्यादयस्तु भगवति धर्मिण्येव तिष्ठन्ति नान्यत्रेति सिद्ध, एतत्सूत्रप्रयोजन वक्तु सूत्रमवतारयन्ति नन्वित्यादि, भगवन्निष्ठा द्विविधा एक उपासका एक एकान्तभक्ता., तत्रोपासकैर्यथा प्रियशिरस्त्वादिप्रकारभगवद्विशेष्यकज्ञानैर्भगवान् विभाव्यते तथा भक्तानामपि भगवति प्रियत्वस्य भानात् प्रियत्वस्य च शिरस्त्वरूपताया आनन्दमयाधिकरणे व्यवस्थापितत्वादेकान्तभक्तैरपि प्रियशिरस्त्वमुपसंहृत्य भगवति तेन रूपेण भजनं कर्तव्यमितिपूर्वपक्ष समाधत्ते उपासकस्येत्यारभ्य परिहरतीत्यन्तेन, स्वरूपोपासकस्य एकान्तभक्तस्य, तारतम्य, हेतुकं साधारणशुद्धौ मोदज्ञानमसाधारणशुद्धौ प्रमोदज्ञानमित्यादिरीत्या बोध्यमित्यर्थ., चित्तशुद्ध्यपेक्षाभावात् निरुपधिस्नेहकारणत्वेन चित्तशुद्धेरपेक्षाभावादित्यर्थः, तेषां प्रियशिरस्त्वादिधर्माणां, अत्रोपसंहारः भक्तानां भगवद्भजने भगवत्फलसंहार. पूर्वनिरुक्तपक्षे, एकान्तभक्तानां निर्णयसम्भवेप्युपासनामार्गीयाणामुपासनानिर्णयस्यासम्भवात्तन्निर्णयार्थं प्रकारान्तरेण व्याख्यानमाहुः नन्वानन्दमयेति, तथा च पक्षिरूपस्य धर्मानुपसंहृत्य पुरुषरूपोपासनां कुर्वतः इति प्रकारः, तद्रूपस्यैवोक्तत्वात् 'पुरुषश्चक्रे द्विपद' इत्यादिना पक्षिरूपस्यैवोक्तत्वात्तत्र पुरुषत्वेन निरूपणस्य स्त्रीत्वव्यावृत्त्यर्थत्वेनाप्रियतार्थत्वासम्भवादित्यर्थ, तथात्वे वस्तुत पक्षिरूपस्य पुरुषाकारत्वे- कथं नोपसंहारः? पुरुषे पक्षिधर्माणां कथं नोपसंहार इत्येका शङ्का, अपरञ्चेत्यादिना द्वितीया, उपचितानुपचितौ अनल्पाल्पभावं प्राप्तौ, युगपत् एकस्मिन् धर्मिणि युगपत्, देशभेदेन दक्षिणोत्तररूपदेशभेदयोर्धर्मिणि सत्त्वेम, भिन्नत्वात् अखण्डानन्दब्रह्मणः सकाशात् पक्षिरूपस्य भिन्नत्वात्, तादृग्रूपकथनं पक्षिरूपत्वकथन, परिहरति उपसहारेनुपपत्तिं परिहरति, तर्कमुखं सूत्रार्थं कुर्वन्ति यदीत्यादि, आथर्वणोपास्यात् नित्यानन्दैकरसब्रह्मण सकाशात्, प्रियशिरस्त्वादिविशिष्टस्य पक्षिरूपस्य, तदप्राप्तिः प्रियशिरस्त्वविशिष्टप्राप्तिः, उपसंहार्य सदानन्दैकरसे उपसंहार्यं, इत्थं च पक्षिस्वरूपं नित्यानन्दस्वरूपमेकमेवेतिभावः, ननु न्यूनाधिकभावप्राप्तयोर्मोदप्रमोदयो. पक्षिरूपे सत्त्वात्तादृशयोस्तयोर्नित्यानन्दैकरससम्भवाद्भेदः सिद्ध इत्यत आहु चित्तशुद्धीत्यादि, तथा च चित्तशुद्धितरतमभावेन भासमानोप्यानन्दतरतमभावो नानन्दन्यूनतां सम्पादयति वस्तुतस्तस्य पूर्णत्वात्, परोक्षेत्यादि, तथा च परोक्षवादपक्षे भक्तानामलौकिकदेहरक्षायै पक्षिरूपो भूत्वा स्वयमन्नमयादिरूपस्तत्र तत्र कोशेषु प्रविशति जीवे त्वानन्दमय इतिपरोक्षवादपक्ष इत्यर्थः, तत्र पक्षद्वये, भेदाभावात् पक्षिरूपपुरुषोत्तमयोर्भेदाभावात्, न त्वदुक्तरूपत्वं नोपचितानुपचितरूपत्वं किन्तु पूर्णानन्दरूपत्वमेवेत्यर्थ, ब्रह्मधर्मा एव भिन्ना इति, तथा च एवकारेण धर्मिणो भेदो व्यवच्छिद्यते, इत्थञ्च पक्षिरूपस्यावयवा भिन्ना एव त उपासनार्थमुपासकैरुपसंहार्या एकान्तभक्तानां तु तेषु धर्मेषु ब्रह्मधर्मभेदज्ञानान्न तैस्त उपसंहार्या इत्यर्थः, तान् पक्षिरूपब्रह्मधर्मान्, तत्रैव 'पुरुषश्चक्रे

१ °श्रद्धापेक्षेत्यादि कपुस्तके, °शुद्धापेक्षेत्यादि कंपुस्तके । २ भेदेनाभिन्नत्वादिति कंपुंपुस्तकयो । ३ अपिपदं लुप्तं गोपुस्तके । ४ तादृशेत्यादि प्रकाशे पुपुस्तके च । ५ तदा तदप्राप्ति स्यादिति लुप्तं कंपुस्तके । ६ त्वदुक्तरूपित्वमिति गोपुस्तके ।

एवास्यार्थस्योक्तत्वान्नेयं शङ्का सम्भवति तथापि गुणोपसंहारप्रसंङ्गे[1] मिथ्यावादिन आपाततः शङ्का सम्भवतीत्याचार्येणोक्त्वा निरस्ता ॥ १२ ॥

ननूपास्यरूपस्याविरुद्धा एव गुणा उपसंहर्तव्या न तु विरुद्धास्तथा च पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्यमित्याशङ्क्याह,

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे पुरुषरूपे विरुद्धत्वेन ये भासमाना[2] धर्मास्तेप्युपसंहर्तव्याः, तत्र विरोधव्यवच्छेदज्ञापनाय तुशब्दः, तत्र हेतुरर्थसामान्यादिति, अर्थः पदार्थ आनन्दमयत्वलक्षणस्तस्य समानत्वादेकत्वादित्यर्थः ॥ १३ ॥

अथानन्दमयाधिकरण उक्तप्रकारेण ये प्रियत्वादिधर्मास्तेषामेवोपसंहारः कार्यो न तु पुरुषरूपे पक्षादीनामपीत्यग्रिमं पठति,

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आनन्दस्वरूपस्य यावन्तो धर्मा भक्तिमार्गीयाः परोक्षवादेनोच्यन्ते प्रियत्वप्राधान्यादयस्तेषां सर्वेषामाध्यानमासमन्ताद्ध्यानं[3] तदर्थं ये[4] धर्माः प्रयुक्तास्त[5] एवोपसंहर्तव्या नान्ये, तत्र हेतुः प्रयोजनाभावादिति, ध्यानपदार्थस्य तावद्भिरेव सिद्धेरधिकोपसंहारे तथात्वादित्यर्थः ॥ १४ ॥

अन्येषामनुपसंहारे हेत्वन्तरमप्याह,

## आत्मशब्दाच्च ॥ १५ ॥

"प्रियमेव" ( तैत्ति. ब्रह्म. ) इत्यादिना परोक्षवादेनोक्तानां प्रियप्राधान्यादीनामेव भावना कार्या न तु यथाश्रुतानां शिरःपक्षादीनां, तेषामविवक्षितत्वात्, अत्र[6] हेतुरात्मशब्दादिति, "आनन्द आत्मा" ( तैत्ति. ब्रह्म. ) इत्यनेन पूर्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तं, अग्रे "रसो वै सः" ( तैत्ति. ब्रह्म. ) इति वक्ष्यमाणत्वात् तस्य च स्थायिभावात्मकत्वात् तस्यैवानन्दमयत्वाच्च प्रियविषयकलीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूपत्वात् तेषामुपासना तूत्तमाधिकाराभावात् शिरःपक्षादिरूपेण कार्येतिभाववती श्रुतिस्तथा न्यरूपयत्, एतेन यत्परम्परासम्बन्धेप्युपास्यत्वं[7] तदस्य

---

द्विपद' इतिश्रुतिविचार एव, आपाततः शङ्का पक्षिरूपस्य ब्रह्माभिन्नत्वशङ्का ॥ १२ ॥

**इतरे त्वर्थसामान्यात् ॥ १३ ॥** पूर्वोक्तार्थोपष्टम्भकतया सूत्रान्तरमवतारयन्ति नन्वित्यादि, **अविरुद्धाः** पुरुषधर्माः, **विरुद्धाः** पक्षिधर्माः, **तेप्युपसंहर्तव्याः** विरुद्धत्वेन भासमाना वस्तुतोविरुद्धा पक्षिधर्माः पुरुष उपसंहर्तव्या इत्यर्थः, **विरोधव्यवच्छेदो** विरोधाभावः, **समानत्वात्** पक्षिपुरुषरूपयोर्विद्यमानत्वस्यैकत्वात् ॥ १३ ॥

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥** **प्रियत्वादिधर्माः** पक्षिनिष्ठा इत्यर्थः, **अग्रिमं** सूत्रमित्यर्थः, **नान्ये** पक्षादिरूपा इत्यर्थः, **तत्र** अनुपसंहारे, **तथात्वात्** प्रयोजनाभावादित्यर्थः ॥ १४ ॥

**आत्मशब्दाच्च ॥ १५ ॥** **अन्येषां** पक्षादीनां **प्रियमेवेत्यादिना** 'तस्य प्रियमेव शिर' इत्यादिवेदवाक्येन, **अविवक्षितत्वात्** आनन्दमयात्मध्याने शिरःपक्षप्रभृतीनामनुपसंयोगादित्यर्थ , **अत्र** अनुपसंहारे, **इत्युक्तं** 'आत्मानं स्वयमकुरुते' त्यादिश्रुतिभिरुक्तमित्यर्थः, **अग्रे** रसमयानन्दमयात्मनिरूपणे, **तस्य** आत्मस्वरूपस्य, **भक्तज्ञानप्रकाराणां** एकान्तभक्तज्ञानविषयभगवद्धर्माणां, **तेषां** उपासकानां, एतेषामुपासनाविषयीभूतं रूपं विभूतिरूपमेव न तु मूलरूपं तस्यैकान्तभक्तिमात्रविषयत्वात्, **भाववती** भगवत्स्वरूपागाधत्वग्राहवती, **तथा न्यरूपयत्** 'यतो वाचो निवर्तन्ते

---

१. प्रसङ्ग इति प्रथमान्त पाठ केगोपुस्तकयो । २. भावसामान्या इति गोपुस्तके । ३. ध्यानमिति कबपुपुंगोषु । ४. चेति केपुस्तके । ५. उपयुक्ता इति केबपापुंगोषु । ६. तत्रेति सर्वेप्यादर्शाः । ७. उपास्यमहत्त्वमिति केपुस्तके ।

महत्त्वं कियदवधि वाच्यमिति ज्ञाप्यते, एवं सत्युपासनामार्गीयोपास्यं विभूतिरूपं न तु मूलरूपं "यन्न योगेन" ( श्रीमद्भाग. ११. १२. ९. ) इतिवाक्यादिति ज्ञेयम् ॥ १५ ॥ १ ॥

इति तृतीयाध्याये तृतीयपादे प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

तैत्तिरीयकेऽन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य "तस्यैष[1] एव शारीर आत्मा यः पूर्वस्य" ( तैत्ति. ब्रह्म. ) इति सर्वत्र निगद्यते, तत्रानन्दमयपर्यन्तं शारीरात्मत्वकथनाद्भवति संशयः शरीराभिमानी जीव एव कश्चिदुत ब्रह्मैव, तत्र शारीरपदाज्जीव एव भवितुमर्हति, तथा सत्यानन्दमयस्यापि ब्रह्मत्वं नोपपद्यते, उच्यते च भार्गव्यां विद्यायां "अन्नं ब्रह्मेति व्यजानात्" ( तैत्ति. भृगु. ) इत्यारभ्यानन्दमयपर्यन्त"मानन्दो ब्रह्मेति व्यजानात्" ( तैत्ति. भृगु. ) इत्यन्तया श्रुत्या ब्रह्मत्वमित्युभयतःपाशारज्जुरिति प्राप्त आह,

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ ( ३. ३. २. )

**इतरवत्** जीववत् **आत्मगृहीतिः** आत्मग्रहणं "तस्यैष एव शारीर आत्मा" ( तैत्ति. ब्रह्म. ) इति यत् तदुत्तरात्, "यः पूर्वस्य" ( तैत्ति. ब्रह्म. ) इति सर्वत्रोक्तत्वात् सर्वेभ्य **उत्तर** आनन्दमयस्तस्माद्धेतोरित्यर्थः, अन्नमया[2]दिषु सर्वेष्वानन्दमयस्यैवोक्त[3]तत्तच्छरीराभिमानित्वात् तथा, एतद्यथा त[4]थानन्दमयाधिकरणे प्रपञ्चितमस्माभिः ।

अथवा "अन्योन्तर आत्मा" ( तैत्ति. ब्रह्म. ) इत्यन्नमयादन्यत्र सर्वत्रोक्तत्वात् पू[5]र्वपूर्वनिरूपितो यः स इतर इत्युच्यते, तथा च "यः पूर्वस्य" इतिश्रुत्येतरवत् पूर्वनिरूपितवत् प्रकृतस्याप्यात्मग्रहणं[6] कथनं यत्तदुत्तरादिति पूर्ववत्[7] ॥ १६ ॥

---

अप्राप्य मनसा सहे'तिश्रुतिः पूर्णानन्द उपासनाविषयत्वं न्यरूपयदित्यर्थः, **परम्परासम्बन्धेपि** पक्षादिसम्बन्धविशिष्टरूपेपि, **अस्य मूलधर्मिणः** ॥ १५ ॥ १ ॥

॥ इति तृतीयतृतीये प्रथमाधिकरणम् ॥ १ ॥

**आत्मगृहीतिरितरवदुत्तरात्** ॥ १६ ॥ पूर्वाधिकरण एकान्तभक्तानां पुरुषोत्तमे पक्षिधर्माणामनुपसंहारे 'आनन्द आत्मे'त्यानन्दपदप्रयोगहेतुरुक्त इति तत्प्रसङ्गस्मृत्यानन्दमयप्रकरणस्थात्मशब्दयुक्तवाक्यान्तरं सूत्रकारो विचारयतीत्येतदधिकरणवाक्यमाहुः **तैत्तिरीय** इत्यादि, **तेषाम्** अन्नमयादीनां, **सर्वत्र** पञ्चसु, **भवति संशयः** एतद्वाक्यार्थे भवति संशय इत्यर्थः, पूर्वपक्षमाहुस्तत्रेत्यादिना, तथा च तस्मिन् वाक्ये प्राणमयमारभ्योच्यते 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति, तत्र सर्वापेक्षया पूर्वविचारेऽन्नमयः समायातीति तस्य योऽभिमानी शारीरः स एवानन्दमयस्यापि तदभिमानी च जीव एव लोके प्रसिद्ध इत्यानन्दमयाभिमानिनोपि न ब्रह्मत्वं सेत्स्यति, तत्रेष्टापत्तौ त्वन्नमयमारभ्यानन्दमयपर्यन्ताना ब्रह्मत्वप्रतिपादकश्रुतिविरोध इति पूर्वः पक्षः, **आत्मगृहीतिः** 'तस्यैष एव शारीर आत्मे'तिश्रुतौ 'शारीर'पदसमभिव्याहाराद्यथा जीव आत्मपदप्रयोगो लोके प्रसिद्धस्तद्वदत्र श्रुतावप्यन्नमयादिब्रह्मात्मकशरीरसम्बन्धादुत्तरादानन्दमयरूपार्थादप्यात्मशब्दप्रयोग कृत इत्यर्थ, **तदुत्तरात्** सर्वोत्तरादानन्दमयाभिप्रायादित्यर्थः, **सर्वत्रोक्तत्वात्** सर्वत्रैकस्य प्रवेशनसमर्थस्यान्यस्याभावादित्यर्थः, **उक्ततत्तच्छरीरे**त्यादि, तथा चान्नमयाद्याध्यात्मिकतत्तच्छरीराभिमानी **आनन्दमय एव, अभिमानश्च** 'तदात्मानमेवावेदहं ब्रह्मास्मि' इतिश्रावणेन यथार्थज्ञानरूप एव नत्वध्यासरूप इति न जीवत्वशङ्का, **तथा** आनन्दमय एव, **प्रपञ्चितं** 'यः पूर्वस्ये'त्यनेनानन्दमय एव सर्वात्मनोक्त इत्यर्थः, 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यत्रोक्त 'आत्मा' 'यश्चान्योन्तरात्मे'त्यत्रोक्त 'आत्मा' स उभयत्राप्युक्त आनन्दमय एव आत्मा न तु 'शारीर'पदाज्जीवोपीतीममर्थं स्फुटीकुर्वन्ति **अथवे**त्यादिना, **अन्यत्र** प्राणमयादिविज्ञानमयान्तेषु, यः स आनन्दमय इत्यर्थ , फलितमाहुः **तथा चे**त्यादिना, **पूर्वनिरूपितवत्** विज्ञानमयान्तेषु निरूपितात्मवत्, **प्रकृतस्ये**त्यादि, आनन्दमयेपि तस्य स्वस्यैवात्मत्वेन ग्रहणमित्यर्थः, **उत्तरात्** आनन्दमयाभिप्रायात्, **पूर्ववदितीतरवदि**त्यस्यार्थो बोध्य इत्यर्थः ॥ १६ ॥

---

१. पुरुष एवेति केपुस्तके । २. अन्नमयादिष्वित्यारभ्योक्तपर्यन्तं लुप्तं पापुस्तके । ३ उक्तत्वादि बपुस्तके । ४. तथापदं लुप्तं केपुस्तके । ५. पूर्वनिरूपित इति बपापुंगोषु । ६ आत्मग्रहणकथनमिति बपागोषु । ७ पूर्ववदिति लुप्तं कपुपुस्तकयोः ।

## अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

ननु सर्वत्र "अन्योन्तर आत्मा" ( तैत्ति. ब्रह्म. ) इतिश्रुत्या प्रत्येकमन्नमयादीनां भेदनिरूपणाच्छारीरपदाच्च भिन्नो[१] भिन्नो जीव एवात्मा[२] शरीराभिमानी सर्वत्रोच्यते, आनन्दमयेपि तथोक्तिर्या सा त्वानन्दमयस्य[३] ब्रह्मत्वेन व्यापकत्वेन[४] सर्वत्रान्वयात् सर्वेषु शरीरेषु सम्बन्धादित्याशङ्क्य तन्निरासायोक्तेर्थे उपपत्तिमाह स्यादित्यादिना, स्यात् आनन्द[५] एवोक्तशरीराभिमानी भवतीत्यर्थः, तत्र हेतुरवधारणादिति, "एष एव" ( तैत्ति. ब्रह्म. ) इत्येवकारेणेतरनिषेधपूर्वकमानन्दमयस्यैवात्मत्वनिर्धारादित्यर्थः ॥ १७ ॥ २ ॥

इति तृतीयाध्याये तृतीयपादे द्वितीयमात्मगृहीत्यधिकरणम् ॥ २ ॥

तैत्तिरीयके पठ्यते "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्युपक्रम्य महाभूतसृष्टिमुक्त्वाम्नायते "पृथिव्या ओषधय ओषधीभ्योन्नमन्नात् पुरुषः स वा एष पुरुषोन्नरसमयः" ( तैत्ति. ब्रह्म. ) इति, एतदग्रेन्नस्योत्पत्तिस्थितिलयहेतुत्वमुक्त्वा[६] "येन्नं ब्रह्मोपासते" ( तैत्ति. ब्रह्म. ) इत्युच्यते, भृगुवरुणसंवादे च "अन्नं ब्रह्मेति व्यजानात्" ( तैत्ति. भृगु. ) इत्युच्यते, तत्र "स वा एष पुरुषोन्नरसमयः" ( तैत्ति. ब्रह्म. ) इत्यनेन पूर्वोक्त एव पुरुष उच्यत उत तद्भिन्न इति भवति संशयः, किमत्र युक्तम्? पूर्वोक्त एवेति, यतः पूर्वोक्तस्यैव "स वा एषः" ( तैत्ति. ब्रह्म. ) इत्यनेन प्रत्यभिज्ञानं प्रतीयते, तत्र ब्रह्मत्वेनोपासना कार्येत्यभिप्रायेण ब्रह्मत्वेन स्तूयत इति प्राप्त आह कार्याख्यानादपूर्वमिति ।

## कार्याख्यानादपूर्वम् ॥ १८ ॥ ( ३. ३. ३. )

पूर्वस्यान्नकार्यस्य पुरुषस्याख्यानात् "स वा एषः" ( तैत्ति. ब्रह्म. ) इत्यनेनाग्रिमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमन्नरूपमेवोच्यते न तु पूर्वमित्यर्थः, "स वा एषः" इति प्रत्यभिज्ञानमिति यदुक्तं तन्न, "अन्नात् पुरुषः" ( तैत्ति. ब्रह्म. ) इत्यन्तेनाधिभौतिकतन्निरूपणात्[८] "स वा एषः" इत्यनेनाध्यात्मिकतन्निरूपणादुभयोश्च भेदात्, अत एव संशयाभावायाह वै निश्चयेन, एषः वक्ष्यमाणः पुरुषः, सः आध्यात्मिकत्वेन प्रसिद्धोत्तरसमय[९] इति, अन्यथा

---

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥ भेदनिरूपणात् कोशपञ्चकेपि प्रत्येकमात्मभेदनिरूपणादित्यर्थ., तथोक्तिः आत्मत्वोक्तिः, तन्निरासाय चतुर्थ जीवस्यात्मत्वनिरासायेत्यर्थः, उक्तशरीराभिमानी अन्नमयादीनां शरीरत्वेनोक्तानामभिमानीत्यर्थ., तत्र अन्नमयादीनामात्मनि परब्रह्मत्वे, एवकारेण 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'तिश्रुत्युपात्तैवकारेण, इतरनिषेधः जीवनिषेधः ॥ १७ ॥ २ ॥

॥ इति तृतीयतृतीये द्वितीयाधिकरणम् ॥ २ ॥

कार्याख्यानादपूर्वम् ॥ १८ ॥ एतदग्रे 'अन्नाद्वै प्रजाः प्रजायन्त'इत्यनुवाके, संशयमाहुस्तत्रेत्यादिना, पूर्वोक्त एव 'अन्नात् पुरुष' इत्यत्रान्नजन्यतयोक्तपुरुष एव, तद्भिन्नः पूर्वोक्तभौतिकपुरुषाद्भिन्न आध्यात्मिक इत्यर्थः, 'स वा एष' इत्यनेन 'स वा एष पुरुषोन्नरसमय'इत्यनेनेत्यर्थः, अन्नरूपमेव कोशात्मकान्नरूपमेव, उच्यते पुरुषो ब्रह्मत्वेनोच्यत इत्यर्थः, न तु पूर्वं न तु भौतिकपुरुषरूपमित्यर्थः, उभयोः आधिभौतिकाध्यात्मिकयोः, संशयाभावाय भौतिकत्वसंशयाभावाय, आह 'अन्नाद्वै प्रजा प्रजायन्त'इत्यत्राहेत्यर्थ, उत्तरसमयः श्रुतिसङ्केतग्राह्य इत्यर्थ', अन्यथा 'स वा एष' इत्यनेनान्नकार्यपुरुषस्योक्ता'वन्नं ब्रह्मे'त्यनेनापि भौतिकान्नस्योक्तावाध्यात्मिक-

---

१. भिन्न इति कपुंपुस्तकयोः । २. एवपद लुप्तं कपुपुस्तकयो । ३. तुपदं लुप्तं कपुस्तके । ४. व्यापकत्वेनेति लुप्तं कपुस्तके । ५. आनन्दमय एवेति बपापुंगोषु । ६ उक्तसर्वशरीराभिमानीति सर्वेष्यादर्शाः । ७. उक्त्वाम्न इति बपापुस्तकयो । ८. इत्यनेनेति बपापुस्तकयो. । ९. प्रसिद्धोन्नरसमय इति सर्वेष्यादर्शा ।

ब्रह्मात्मकतपोलक्षणसाधनेनाधिकारे सम्पन्ने "अन्नं ब्रह्मेति व्यजानात्" ( तैत्ति. ब्रह्म. ) इति न वदेत्, न च तदपि[1]–तत्[2] तथात्वेन स्तूयत इति–वाच्यं, श्रुतेः प्रतारकत्वापत्तेः, आनन्दमयान्तमेवमेव निरूपणाच्च, अत एवास्याप्यात्माग्रे निरूपितो "यः पूर्वस्य" इति ( तैत्ति. ब्रह्म. ), स त्वाधिदैविक आनन्दमयः ।

अथवा वाजसनेयिशाखायाम् "आत्मेत्येवोपासीत" ( बृह. ३. ४. ७. ) इत्युपक्रम्य "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा" ( बृह.३.४.८. ) इत्येतदग्रेन्यस्य प्रियत्वं निराकृत्य "ईश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीत"(बृह.३.४.८.) इति पठ्यते, अत्रात्मौपाधिकत्वात् सर्वत्र प्रियत्वस्यात्मपदेन जीवात्मन एव प्रियत्वेनोपासना विधीयत उतेश्वरपदात् परमात्मन इति भवति संशयः, किमत्र युक्तम्? जीवात्मन एवेति, कुतः[3]? यथा पुत्रादेरात्मौपाधिक[4]प्रियत्वोक्त्या जीवात्मन एव प्रियत्वमुच्यतेन्यत्र श्रुतौ तथेहापि "प्रेयः पुत्रात्" ( बृह. ३. ४. ८. ) इत्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्त आह कार्याख्यानादपूर्वमिति, इतः पूर्वमाम्नायते "प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यं[6]श्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि[7] कर्मनामान्येव" ( बृह. ३.४.७. ) इति, तथा च प्राणनवदनादिकार्यैः कृत्वा प्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथनादपूर्वं, पूर्वं[9] तु[10] पुत्रवित्ताद्यभिमानदशायां "न वा अरे पत्युः कामाय पतिः प्रियो भवति" ( बृह. ४. ४. ५. ) इत्यादिना यत् प्रियत्वेनोच्यते तस्माद्भिन्नमात्मशब्दवाच्यमत्रेत्यर्थः, लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्तच्छब्दवाच्यता न तु जीवस्य, अत एवाग्रे श्रुतिराह "ईश्वरो हि तथा स्यात्" (बृह.३.४.८.) इति, अत एव "प्रेयोन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा" ( बृह. ३. ४. ८. ) इत्याह, अन्तरो जीवात्मा ततोप्यतिशयेनान्तरमन्तरतरं[11] पुरुषोत्तमस्वरूपमेव भवितुमर्हतीति, एतेन विग्रहस्यैवात्मरूपत्वं सिध्यति[12], तेनाविकृतत्वपरमानन्दत्वादयोपि धर्मा उपसंहर्तव्याः ॥ १८ ॥

---

कोशरूपान्नस्य पुरुषरूपत्वेनानुक्ता'वन्नं ब्रह्मेति व्यजाना'दित्यनेनानुक्तौ चेत्यर्थ., न वदेदिति 'अन्नाद्वै प्रजाः प्रजायन्त' इत्युक्त्वाग्रे 'सर्वं वै तेन्नमाप्नुवन्ति येन्न ब्रह्मोपासत'इति सफलब्रह्मोपासनमात्रमेव वदेत् तावतैव भौतिकान्नस्य ब्रह्मत्वेनोपासनस्य सिद्धेर्न तु तपस उपदेशेनाधिकारसिद्ध्यनन्तर'मन्नं ब्रह्मेति व्यजाना'दिति वदेदित्यर्थः, इत्थं च तपोरूपसाधनं विनैतदन्नस्याज्ञानादेतदन्नं भौतिकान्नादतिरिक्तमाध्यात्मिकं ब्रह्मरूप भिन्नमेवेत्यर्थः सिद्ध , 'स एष'इतिशब्दयो' प्रत्यभिज्ञाबोधकत्वमपि नास्त्येव, तच्छब्दस्य प्रत्यक्षार्थबोधकत्वादेतच्छब्दस्य च वक्ष्यमाणार्थकत्वात्, तत् भौतिकान्नं, तथात्वेन 'ब्रह्मात्मक' इत्यारभ्य 'व्यजाना'दित्यन्तेन स्तूयत इति तदपि न वाच्यमित्यन्वयो बोध्यः, प्रत्यभिज्ञानेन भौतिकान्नश्रुतिपरतया ज्ञापने भौतिकस्याब्रह्मत्वेन तत्र ब्रह्मत्वबोधकश्रुतेः प्रतारकत्वापत्तिदोषः स्यादित्यर्थ., आनन्दमयान्तमित्यादि, तथा चानन्दमयज्ञानपर्यन्त 'तपसा ब्रह्म विजिज्ञासस्वे'त्युक्तेरन्यत्र वास्तवं ब्रह्मत्वमन्नमय आरोपितं स्तुत्यर्थं श्रुतिर्वदतीतिविषमव्याख्याने प्रमाणाभाव इत्यर्थ', अत एव एतदन्नमयस्य भौतिकत्वाभावादेव, स तु अन्नमयस्य आत्मा तु, पूर्वनिरूपितार्थस्यानन्दमयाधिकरण एव प्रायशः स्फुटत्वान्नात्यन्तावश्यकतेत्यरुच्या प्रकारान्तरेणाधिकरणरचनामाहुरथवेत्यादिना, विषयवाक्यमाहुः 'आत्मे'त्यादि, अत्र आत्मन प्रियत्वप्रतिपादकश्रुतिषु, आत्मौपाधिकत्वात् आत्ममात्रोद्देश्यकत्वादित्यर्थः, सर्वत्र अत्रोक्तश्रुता'वात्मनस्तु कामाये'त्यादिश्रुतिषु चेत्यर्थ., जीवात्मन एवेति, जीवस्यैव पुत्राद्यभिमानसम्भवादेवकारेणेश्वरव्यवच्छेदः, अन्यत्र श्रुतौ 'आत्मनस्तु कामाये'त्यादिश्रुतौ, इतः पूर्वं 'आत्मेत्येवे'त्यस्य पूर्वमित्यर्थः, एकस्यैव सर्वकर्तुः सर्वात्मकस्यैकस्यैवेत्यर्थः, तस्माद्भिन्नं पुत्राद्यभिमानिभिन्नमपूर्वशब्दबोध्यं, अत्र आत्मशब्दार्थमध्ये बोध्यमित्यर्थः, तत्तच्छब्दः प्राणवागादिशब्दः, अत एव जीवे तत्तच्छब्दवाच्यत्वाभावादेव, पुरुषोत्तमस्वरूपमेवेति एवकारेणाक्षरस्य स्वरूपाभावेनान्तरत्वं व्यवच्छिद्यते, एतेन पुरुषोत्तमस्यान्तरत्वप्रतिपादनेन ॥ १८ ॥

---

१. एतदपीति कपापुपुंषु । २ तत्पदं लुप्तं पापुस्तके । ३. अत इति कपुस्तके । ४ पुत्रात्मौपेत्यादि पुपुस्तके । ५. आत्मोपेत्यादि बपापुगोषु । ६. रूपमित्यधिकं बपागोषु । ७. अस्यैवैतानीति पापुस्तके । ८ कृत्स्नप्राणेत्यादि कबपापुस्तकेषु । ९. पूर्वमिति लुप्तं कपुपुस्तकयो.। १०. त्विति लुप्तं कपुपुंगोषु । ११. अन्तरमिति लुप्त पुंपुस्तके । १२. सिध्यतीतीति पुंपुस्तके ।

ननु विग्रहे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वादुक्तकर्मनामवत्त्वं ब्रह्मण्यनुपपन्नमित्याशङ्क्योत्तरं पठति ।

## समान एवं चाभेदात् ॥ १९ ॥

चोऽप्यर्थे, तथा चैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूप एव न तु विषमः, तत्र हेतुरभेदादिति, चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः ।

अत्रेदमाकूतम्, "तन्त्वौपनिषदं पुरुषं पृच्छामि" ( बृह. ५.९. २६. ) इतिश्रुतेरुपनिषद्वेद्यमेव ब्रह्मस्वरूपं, ताश्च "प्राणन्नेव प्राणो भवति वदन् वाक्" ( बृह.३.४.७. ) इत्यादिरूपाः प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव गृह्णद्ब्रह्म तत्तच्छब्दवाच्यं भवतीति वदन्ति, तद्वाच्यता च व्यवहार्यत्वे, स च[1] "तदेतत्प्रेयःपुत्रा"[2] दित्यादिवाक्यैकवाक्यतया निरुपधिस्नेहवतामेव व्यवहार्य इति ज्ञाप्यते, स चाविर्भूतेवताररूप एव सम्भवति, एवं सति तत्र भक्तैर्भगवद्विग्रहे तत्तदवयवेषु भेदेन यथा यथा व्यवह्रियते तथा तथैव तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः सम्पद्यते, एवंविधो लोके न प्रसिद्ध इत्यसम्भावना स्यात्, तदभावायाग्रे श्रुतिराह "ईश्वरो हि तथा स्यात्" ( बृह. ३. ४. ८. ) इति, एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वाद्यो[3] धर्मा उपसंहर्तव्या अनाविर्भूतेपीति स्थितं, एवं सत्याविर्भावेनाविर्भावेपीश्वरः समानः, न ह्याविर्भावे कांश्चनागन्तुकान् धर्मानादायाविर्भवतीति वक्तुं शक्यं, अनाविर्भूतस्याप्येवमाविर्भूतप्रकारेणैवाभेदादित्यपि सूत्रार्थः सूत्रकाराभिमत इति ज्ञातव्यं, चकारेण विरुद्धसर्व[4]धर्माश्रयत्वं समुच्चीयते, एवं साक्षादाविर्भूत[5]भगवद्रूपे पूर्णानन्त[6]धर्मास्तदुपासकेनोपसंहर्तव्या इति सिद्धम् ॥ १९ ॥

अथ यत्र कार्यचिकीर्षया जीवे स्वयमाविशति तदावेशात्तद्धर्मा अपि केचित् तस्मिन्नाविर्भवन्ति तत्रोपासकेनाखिलब्रह्मधर्मोपसंहारः कर्तव्यो न वेति शङ्कासमाधानं विकल्पेनाह सूत्राभ्यां, तत्रादौ विधिपक्षमाह ।

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्रापि जीवेप्येवं ब्रह्मणीवोपासना कार्या, तत्र हेतुः सम्बन्धादिति, अयोगोलके वह्नेरिव तस्मिन्नावेशलक्षणः सम्बन्धोस्तीति तत्त्वेन व्यपदेशाच्च तथेत्यर्थः, अत्रैवं ज्ञेयं, अयं तु जीवोत्राविष्टं भगवन्तमहमुपास इति जानाति चेत् तदा न सा जीवगामिन्युपासना किन्तु ब्रह्मगामिन्येव, तत्राखिलधर्मोपसंहारे न किञ्चिद्बाधकं, यत्र ब्रह्मत्वेनैव ज्ञात्वोपास्ते[7] तत्रापि "तं यथा यथोपासते तथैव भवति तद्धैतान्[8] भूत्वावति" ( मुद्गलो. ९. ३. ) इतिश्रुतेर्गुर्वादौ जीवत्वबुद्धिनिषेधाच्च[9] तथा, तत्र[10] यादृगुपासकस्तदुपासनासिद्ध्यर्थं तत्फलदानार्थं च तादृग्रूपो भगवानाविशतीति च तथा ॥ २० ॥

---

समान एवं चाभेदात् ॥ १९ ॥ उक्तकर्मनामवत्त्वं प्रणववागादिपदवाच्यत्वं, तत्तच्छब्दवाच्यं प्रणववागादिशब्दवाच्य, तद्वाच्यता श्रुतिवाच्यता, व्यवहार्यत्वे ब्रह्मणः शब्दात्मकव्यवहारविषयत्वे, स च व्यवहार्यश्च, स च निरुपधिस्नेहवद्व्यवहारश्च, तत्तदवयवेषु भक्तानां स्वस्वानन्दानुभावकतत्तद्भगवदवयवेष्वित्यर्थः, तदुपासकेन पूर्णपुरुषोत्तमोपासकेन ॥ १९ ॥

सम्बन्धादेवमन्यत्रापि ॥ २० ॥ आविर्भूते भगवत्युपसंहारं विचार्यावेश उपसंहारं विचारयतीत्याहुरथेत्यादि, विधिपक्षं संशये विधिकोटिपक्ष, अयं तु आवेशाधिकरणीभूतस्तु, तत्रापि तादृशस्थलीयोपास्ये ब्रह्मण्यपीत्यर्थः, तथा उपसहारः सर्वधर्माणां कार्य इत्यर्थ. ॥ २० ॥

---

१. चपदं लुप्तं गोपुस्तके । २ यदेतदिति पुंपुस्तके । ३ °नन्दादय इति पुंपुस्तके । ४ सर्वेति लुप्तं गोपुस्तके । ५ सप्तम्यन्तं पृथगेवेदं बपापुंपु । ६. पूर्णानन्दतद्धर्मा इति गोपुस्तके । ७. ज्ञात्वेति लुप्तं पुंपुस्तके । ८. एनानिति पुपुस्तके । ९ जीवबुद्धीत्यादि कंपुस्तके । १०. तत्तदुपासकस्येति कपुपुस्तकयोः ।

यस्त्वन्तरङ्गभगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वैतद्भजनेनाहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते स भक्तिमार्गीय इति भक्तहृद्याविर्भूतेऽपि रूप उपसंहारो धर्माणां तेन न कार्य इत्यग्रिमं पठति ।

## न वाविशेषात् ॥ २१ ॥

अनुपसंहारे हेतुरविशेषादिति, अस्य भक्तभक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति गुणोपसंहारेऽनुपसंहारे वा भक्तोपासनायां विशेषाभावादित्यर्थः, अनुपसंहारस्यात्र बाधकत्वाभावज्ञापनाय वाशब्दः, विशेषादिति वा, पूर्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्वन्नप्युक्तरूपभक्तसङ्गेन तद्भजनेन च पूर्वस्माद्विशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद्गुणोपसंहारं स न करोतीत्यनुवादः, विहितत्वेन गुणोपसंहारपूर्वकोपासनायां नीरसत्वेनानादरज्ञापनाय वाशब्दः, भगवदवताररूपोऽपि बादरायणः प्रासङ्गिकेऽपि भक्तिमार्गस्मरणे तदीयरसावेशपरवशस्तद्भावस्वभावमनूक्तवान् ॥ २१ ॥

अपि च, उपसंहारो हि तत्रानुक्तानामन्यत्रोक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रं, उक्तरूपभक्ताय तु तद्भजनीये भक्त एवालौकिकाननुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारापेक्षागन्धोऽपीति यथायोग्यमुत्तरं पठति ।

## दर्शयति च ॥ २२ ॥

ननु भक्तभक्तः स्वसेव्येऽत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति तत्सम्भारकत्वस्येन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोकादिव्यापकत्वस्योपसंहारं करिष्यतीत्याशङ्क्याह ।

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ ( ३. ३. ४. )

राणायनीयानां खिलेषु पठ्यते "ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" ( तैत्ति. ब्रा. २.४.६. ) इति, अस्यार्थस्तु, अन्यैर्हि पुरुषैः सहायानपेक्ष्य विक्रमाः सम्भ्रियन्ते तेन तत्पराक्रमाणां त एव

---

न वाविशेषात् ॥ २१ ॥ सूत्रमवतारयन्ति यस्त्वन्तरङ्गेत्यादिना, अस्य भक्तभक्तस्य, तद्भजनेति उपास्यभक्तभजनेत्यादि, तन्निरपेक्षत्वेन आवेशनिरपेक्षत्वेन, भजनं कुर्वन्नपि उपसंहारस्य वैधत्वेनोपसंहारपूर्वकं भजनं कुर्वन्नपीत्यर्थः, अनादरज्ञापनायेति, तथा चैकान्तभक्तानां रसानुभावकस्वरूप एव भजननियमो नतूपसंहारेऽपीतिभावः, अनुवादप्रयोजनमाहुर्भगवदवतारेत्यादिना, तदीयेति भक्तिमार्गीयेत्यादि, तद्भावस्वभावं भगवद्भक्तिभावस्वभावं, अनूक्तवान् स्वस्य भक्ततादशायामेभिः सूत्रैः स्वयं निरूपितवानित्यर्थः ॥ २१ ॥

दर्शयति च ॥ २२ ॥ तत्र निरूप्यप्रकरणे, तद्भजनीये भक्ते भक्तिमार्गीयभजनीयभक्ते, अलौकिकान् रसरूपानित्यर्थः, यथायोग्यमुत्तरं पठति तादृशभक्तस्योपसंहारे प्रयोजनाभाव उत्तरं पठनीयत्यर्थः, विशदीकृतार्थमेतत्सूत्रम् ॥ २२ ॥

सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ सूत्रान्तरमवतारयन्ति नन्वित्यादि, तत्सम्भारकत्वस्य भगवत्सम्बन्धिवीर्यादिसमूहस्य द्युलोकादिव्यापकत्वस्य चेत्यर्थः, सूत्रार्थमाहुः सम्भृतिश्चेत्यादिना, तथा सम्भृतिद्यु-

---

१. अन्तरङ्गमिति बपाप्रगोविभासु । २ अपिपदं लुप्तं बपागोषु । ३. नपद लुप्तं बपापुस्तकयो । ४ भगवत्त्वेनेति गोपुस्तके । ५ षष्ठ्यन्तं कगोपुस्तकयो । ६. स इतिपद लुप्तं पुपुस्तके । ७ सप्तम्यन्तं पृथक्पदं गोपुस्तके । ८. स इत्यधिकं कैपुस्तके । ९ ज्ञापनमात्रमिति पुंपुस्तके । १०. प्रथमान्तमेतद् गोपुस्तके । ११. समस्तमिदं पुगोपुस्तकयोः । १२. यथायोग्यमितिपद नास्त्येवादर्शेषु । १३. द्युलोकेत्यादि सर्वेष्यादर्शा. ।

नियतपूर्वभावित्वरूपकारणत्वेन ज्येष्ठाः, ब्रह्मधर्माणां तु ब्रह्मैव ज्येष्ठमनन्यापेक्षं सृष्ट्यादि करोतीत्यर्थः, एवं सति ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्याणि, अत्र छन्दसि बहुवचनस्य डादेशः, किञ्च, अन्येषां वीर्याणां बलवद्भिर्मध्ये भङ्गोपि भवति, तेन ते स्ववीर्याणि न सम्बिभ्रति, ब्रह्मवीर्याणि तु ब्रह्मणा सम्भृतानि निःप्रत्यूहं सम्भृतानीत्यर्थः, तच्च ज्येष्ठं ब्रह्माग्रे इन्द्रादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्नुवन्नित्यमेव विश्वव्यापकमित्यर्थः, देशतोपरिच्छेदमुक्त्वा कालतोपि तमाह ब्रह्मेति, भूतानामाकाशादीनां पूर्वमेव जज्ञे आविर्बभूवेत्यर्थः, एतेन वीर्यसम्भृतिद्युव्याप्तिप्रभृतिमाहात्म्यमुक्तं भवति, तथा च सम्भृतिश्च द्युव्याप्तिश्च तयोः समाहारस्तथा, एतावत्यपि स तत्र नोपसंहरति, तत्र हेतुः "न वाविशेषात्" (ब्र. सू. ३. ३. २१.) इतिसूत्रोक्त एवेत्यतिदिशत्यत एवेति, एतद्यथा तथा तत्रैवोक्तं, विषयवाक्योत्तरार्धोक्तधर्मानुद्देशेनैवं ज्ञायते भक्तस्यैहिकपारलौकिकोपयोगिधर्मोपलक्षणार्थं द्वयोरेवोद्देशः कृत इति, चकारेण दर्शनमप्युक्तं समुच्चीयते, अन्यच्च, स्पर्धाकृतिसम्भावनायां हि तद्योग्यतानिषेधः सम्भवति, सा चाविर्भूत एव भगवति सम्भवतीत्यखिलशक्त्याविर्भावपूर्वकसाविर्भूतस्य तस्यैतया श्रुत्या माहात्म्यमुच्यत इति गम्यते, एवं सत्येतद्वाक्योक्तधर्मयोरेवानुपसंहार्यत्वेन यत् कथनं तत्तु भक्तहृद्याविर्भूतं ब्रह्माप्येवम्भूतमेवेतिज्ञापनायातो युक्त एवानुपसंहारः ॥ २३ ॥ ३ ॥

इति तृतीयाध्याये तृतीयपादे तृतीयं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

तैत्तिरीयके "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भव्यम्" (तैत्ति. सं. ३. १२. १.) इत्यादिना पुरुषविद्या निरूप्यते, तत्रैव "ब्रह्मविदाप्नोति परम्" (तैत्ति. ब्रह्म.) इतिप्रश्ने "स वा एष पुरुषोन्नरसमयः" (तैत्ति. ब्रह्म.) इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरूप्यते, तत्र सर्वत्र "स वा पुरुषविध एव" (तैत्ति. ब्रह्म.) इति च पठ्यते, अत्रान्नमयादिषु पुरुषसूक्ते च पुरुषपदश्रवणादन्नमयादिषु सहस्रशीर्षत्वाद्युपसंहारः कर्तव्यो न वेति भवति संशयः, किमत्र युक्तम् ? उपसंहर्तव्यमेवेति, कुतः ? सर्वत्र ब्रह्मण एवोपास्यत्वादत्राप्युपासनोक्तेर्ब्रह्मत्वपुरुषत्वयोरविशेषाद्विद्यैक्यादिति प्राप्त उच्यते, पुरुषविद्यायामिवेति ।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ ( ३. ३. ४. )

अन्नमयादिषु सहस्रशीर्षत्वादिकं नोपसंहर्तव्यं, कुतः ? पुरुषविद्यायां यथा

---

व्याप्तिशब्दवाच्य, सः भक्तभक्त., तत्र भक्ते, तत्र अनुपसहारे, सूत्रोक्त एव उपसहारे विशेषाभावाद्भक्तकृपयैवैहिकामुष्मिकसकलपदार्थाना सिद्धावुपसंहारे विशेषाभावादिति सूत्रोक्तोर्थोवसेय इत्यर्थ·, तत्रैवोक्तं पूर्वसूत्र एवोक्तं, उत्तरार्धोक्तधर्मानुद्देशेन सूत्रकारेण विषयवाक्यपूर्वार्धोक्तवीर्यद्युव्याप्त्योरेवोद्देश. कृतो न तूत्तरार्धोक्तभूतादित्वेतरास्पर्ध्यत्वयोस्तेनेत्यर्थ., उपलक्षणार्थं उभयोर्बोधनार्थं, उद्देशः कृतः सूत्रकारेणोद्देश कृत इत्यर्थः, चकारेण सूत्रोपात्तचकारेण, दर्शनं भक्तभक्तस्य भक्तकारितभगवद्दर्शनं पूर्वमुक्तं, सम्भावनायां हि भगवता स्पर्धितु योग्यस्यान्यस्य सम्भावनायां हीत्यर्थ, एवम्भूतं अखिलशक्त्याविर्भावपूर्वक स्वयमाविर्भूतम् ॥ २३ ॥ ३ ॥

॥ इति तृतीयतृतीये तृतीयाधिकरणम् ॥ ३ ॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ एवमनारभ्याधीतवाक्योक्तधर्माणामनुपसंहारमुक्त्वा पूर्णाधिकारिभिरशेषपूर्णगुण पर ब्रह्मैवोपास्य न तु विभूतिरूपमिति बोधयितुमुपासनामार्गेपि विशेषतोनुपसहार वदनीत्याशयेनाधिकरणविषयवाक्यमाहुस्तैत्तिरीयक इत्यादि, तत्र सर्वत्र अन्नमयादिषु पुरुषसूक्ते चेत्यर्थ, अत्रापि अन्नमयादिष्वपि, अविशेषात् अन्नमयादिषु ब्रह्मत्वस्य पुरुषसूक्ते च पुरुषत्वस्योक्त्योभयत्रापि ब्रह्मपुरुषत्वस्याविशेषा-

---

१. व्याप्तवदिति कपुंगोपु । २ भृतीति बपुस्तके । ३ एतावत्यपि सति तत्र नोपसहार इतीति बपागोषु । ४. गन्तव्यमिति गोपुस्तके । ५ अध्याय इति पुंपुस्तके । ६ समस्तमिदं बपापुस्तकयो· । ७ चेति बपापुंगोषु । ८. चेनीति पापुस्तके । ९. विद्यैका स्यादिति गोपुस्तके ।

पुरुषस्वरूपं निरूप्यते न तथेतरेषामन्नमयादीनां विज्ञानमयान्तानां स्वरूपं तत्प्रकरणे[1] निरूप्यते, तत्र[2] हि पुरुषत्वमुच्यते, सहस्रपदमनेकत्वोपलक्षकं[3], अन्यथाक्ष्णां शिरोभ्यो द्वैगुण्यं वदेत्, तेन साकारव्यापकत्वमुक्तं भवति, तत्र पुरुषविधत्वं[4], स चाध्यात्मिकरूपः, तच्छरीराभिमान्यात्मा चान्य आधिदैविक उच्यते, न तथात्र, किञ्च, "पुरुष एवेद७ सर्वम्" (तैत्ति. सं. ३. १२. १.) इत्यादिना प्रपञ्चात्मकत्वं मुक्तिदातृत्वं चोक्त्वा नैतावन्मात्रमस्य माहात्म्यमितोपि महन्माहात्म्यमस्तीति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपमिति "एतावानस्य महिमा" (तैत्ति. सं. ३. १२. १.) इत्यनेनोक्त्वा तत आधिक्यमाह "अतो ज्यायाꣳश्च पूरुषः" (तैत्ति. सं. ३. १२. १.) इति, एवमतिवैलक्षण्यात्[5] पुरुषपदमात्रसाधर्म्येण नैकविधत्वं[6] वक्तुं शक्यं न चोपसंहार इति, चकारात् "अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्" (तैत्ति. नारा.) इत्यादिश्रुतयः "सर्वतःपाणिपादं[7] तत्" (भग. १३. १३.) इत्यादिस्मृतयश्च सङ्गृह्यन्ते, एतेन यत्किञ्चिद्धर्मसाम्येपि न मूलभूतं[8] ब्रह्मरूपमत एव न तत्रोपास्यता तथात्वेनेति ज्ञापितं, अत एव भृगूपाख्यानेन्नमयादिब्रह्मज्ञानेपि जिज्ञासैवोक्ता, भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता, तेनाशेषगुणपूर्णं ब्रह्मेत्युक्तं भवति, अत उत्तमाधिकारिभिस्तदेवोपासनीयं न विभूतिरूपमिति ज्ञापितम् ॥२४॥४॥

इति तृतीयध्याये तृतीयपादे चतुर्थं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

अथ निर्दोषत्वं[9] ज्ञात्वा भजनीयमिति ज्ञापयितुमधिकरणान्तरमारभते, वाजसनेयिशाखायां "द्वया[10] ह प्राजापत्याः" (बृह. ३. ३. १.) इत्युपक्रम्य तेषां मिथःस्पर्धामुक्त्वोच्यते "ते ह[11] देवानूचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तं देवेभ्य आगायद्[12] यत् कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्[13] स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव[14] पाप्मा" (बृह. ३. ३. १.) इति, एवमेव प्राणचक्षुःश्रोत्रप्रभृतिषु पापवेधमुक्त्वोच्यते "अथ हेममासन्यं[15] प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्[13] स यथाश्मानमृत्वा लोष्टो विध्वंसेतैव७ हैव[16] विध्वंसमाना विष्वञ्चो विनेशुः" (बृह. ३. ३. ३.) इति, छान्दोग्येपि प्राणादिष्वेवमेव पाप्मवेधमुक्त्वासन्येन तथेत्युच्यते, एतावान् परं विशेषः, वाजसनेयिनां गानकर्तृत्वं सामगानामुद्गीथत्वेनोपास्यत्वमुच्यते वाक्प्राणादीनामिति[17], अत्र देहसम्बन्धित्वगानकर्तृत्वयोरुपास्यत्वस्य

---

दित्यर्थः, सूत्रेण पुरुषेत्यादिना सिद्धान्तमाहुरन्नमयादिष्विति, स्वरूपं निरूप्यते सहस्रशीर्षत्वादिना पुरुषस्वरूप निरूप्यत इत्यर्थः, तत्र हि पुरुषविद्यायां हि, तत्र अन्नमयाद्युपासनाप्रकरणे, स च अन्नमयादिरूपः पुरुषविधश्च, न तथात्र पुरुषोपासनेनाध्यात्मिकोपासनमित्यर्थः, अतिवैलक्षण्यात् अन्नमयाद्यपेक्षयोपास्यपुरुषस्यातिवैलक्षण्यात्, मूलभूतब्रह्म पुरुषोत्तमः, न तत्रोपास्यता न विभूतिरूपे तेन रूपेणोपास्यतेत्यर्थः, तेन विभूतिवैलक्षण्येन ॥ २४ ॥ ४ ॥

॥ इति तृतीयतृतीये चतुर्थाधिकरणम् ॥ ४ ॥

---

१. प्रकरण इति पुपुस्तके। २. अत्र हीति पुव्यतिरिक्तेषु सर्वेष्वादर्शेषु। ३. °लक्षणमिति गोपुस्तके। ४. °विषयत्वमिति गोपुस्तके। ५. एवं सतीति पुं१पुस्तके। ६. नैकविधत्वं......न चोप° बपापुस्तकयो। ७ °पादं तदिति कपुस्तके। ८. मूलभूतब्रह्मरूपत्वमिति बपागोषु। मूलभूतधर्मरूपत्वमिति पुं१पुस्तके। ९. निर्दोषमितीति पापुस्तके। १०. द्वया ह प्रजापत्या इति कं२बपुं१षु। द्वयमाह प्रजेति गोपुस्तके। ह वा इति च पापुस्तके। ११. ह पदं लुप्तं गोपुस्तके। १२. अगादिति कं२पुस्तके। आगादिति बपुस्तके। अगायदिति च पुपुस्तके। १३. °विध्यन्निति पुपुं१गोषु। १४. एव स इति कं२पुस्तके। १५. एनमिति बपापुं१गोषु। १६. हैवेति पुपुं१पुस्तकयोः। १७. वाक्प्राणेन्द्रियादीनामिति गोपुस्तके।

चाविशेषेपि वागादिषु पाप्मवेध आसन्यप्राणे कुतो नेति भवति जिज्ञासा, न चासन्योपासनाया विधेयत्वात् तत्स्तुत्यर्थमन्येषु पाप्मवेध उच्यतेस्मिन्नेति[1] वाच्यं, न हि प्रयोजनायासन्तमप्यर्थं बोधयति श्रुतिरिति वक्तुं शक्यं, प्रमाणत्वव्याहतिप्रसङ्गात्, एकत्र प्रतारकत्वे सर्वत्रापि तच्छङ्कया तदुक्ते कोपि न प्रवर्तेतापि, साक्षात्क्रियार्थत्वाभावेपि नासन्निरूपकत्वमर्थवादानां, वस्तुतस्तु "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" (छान्दो. ३. १. १०.) इतिश्रुतेः, "ज्ञात्वाज्ञात्वा च कर्माणि जनोयमनुतिष्ठति विदुषः कर्मसिद्धिः स्यात् तथा नाविदुषो भवेत्" (श्रीमद्भाग. १०. २१. ६.) इत्यादिवाक्यैः "य एवं वेद" (तैत्ति. ब्रह्म.) इतिवाक्यैश्चार्थवादोक्तस्वरूपं ज्ञात्वा कर्मकरणे पूर्णं फलमन्यथा नेत्यर्थवादानां फलोपकार्यङ्गनिरूपकत्वान्नानर्थक्यमत उक्तेर्थे हेतुं न पश्याम इति प्राप्ते तमेवाह वेधादीति ।

## वेधाद्यर्थभेदात् ॥ २५ ॥ ( ३. ३. ५. )

वाक्प्राणादिषु यः पाप्मवेधः, आदिपदात् दुष्टविषयसम्बन्धश्च, तत्र हेतुरर्थभेदः, अर्थो भगवांस्तस्माद्भेदादित्यर्थः, आसन्यस्तु "य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत"[2] ( छान्दो. ३.२.७. ) इति छान्दोग्य उपास्यत्वेनोक्तः, "सर्ववेदान्तप्रत्ययम्" ( ब्र. सू. ३.३.१. ) इतिन्यायाद्वेदान्तेषूपास्यं ब्रह्मातिरिक्तं नोच्यत इत्यासन्योपि ब्रह्माभिन्नोत एव "अपहतपाप्मा ह्येषः" ( छान्दो. ३. २. ९. ) इति सामगैः पठ्यते, अतस्तत्र न पाप्मवेध इतिभावः, ब्रह्मणः स्वतन्त्रपुरुषार्थत्वज्ञापनायार्थपदेनोक्तिः[3], एतेन विभूतिरूपेपि यत्रैवं तत्र मूलभूतब्रह्मणि निर्दोषत्वे[4] किं वाच्यमिति ज्ञापितम् ।

अथवा अर्थः प्रयोजनं विषय इति यावत्, तद्भेदादित्यर्थः ।

अत्रेदमाकूतं, देवा हि स्वस्यासुरजयाय गानार्थं वागादीनूचुः "त्वं न उद्गाय" ( बृह. ३.३.१. ) इति, गानानन्तरं "यो वाचि भोगस्तं[5] देवेभ्य आगायत्"[6] ( बृह. ३. ३.१. ) इत्युच्यते, एवमेव प्राणादिष्वपि स्वस्वभोगं "देवेभ्य आगायत्" इति, एवं सति देवार्थमेवैतद्गानं न तु भगवदर्थं, यद्यप्यासन्येप्येवमुच्यते "तेभ्य एष[7] प्राण उदगायत्" (बृह.३.३.३.) इति तथापि यथा वागादिषु स्वनिष्ठभोगं "देवेभ्य आगायत्" ( बृह. ३. ३. १. ) इत्युक्तं तथा नासन्ये, तेनोक्तमानैर्ब्रह्मात्मकत्वेनासुरजयहेतुर्भगवत्सम्बन्ध एवेति ज्ञात्वा तथैवागायदासन्य इति ज्ञायते, अत एवान्यत्र वेध उक्तोत्र तत्करणेच्छायामप्यासुराणां नाश उक्तः,

---

वेधाद्यर्थभेदात् ॥ २५ ॥ अधिकरणमवतारयन्त्यथेत्यादि, तेषां देवासुराणां, अत्ययाम जयेम, ते देवाः, ते असुराः, विष्वञ्चो विनेशुः असुरा. सर्वतोदिशं विनाशं प्रापुरित्यर्थः, तथेत्युच्यते न पाप्मवेध उच्यत इत्यर्थ., सन्देहमाहुरत्रेत्यादि, अविशेषेपि उक्तधर्मत्रयस्य वागादावासन्ये च तुल्यतायाः सत्त्वेपीत्यर्थः, भवति जिज्ञासेति, तथा च वागादिषु पाप्मवेध. सत्यो न वेति भवति विचार इत्यर्थ , पाप्मवेधस्य सिद्धत्वेनोक्तिः सन्देहबीजं, अस्मिन्निति आसन्ये पाप्मवेधो नेत्युच्यत इत्यर्थः, प्रयोजनाय आसन्यस्तुतिरूपप्रयोजनायेत्यर्थः, क्रियार्थत्वं यज्ञार्थत्वं, फलोपकार्यङ्गेत्यादि अर्थवादानामर्थः, फलोपकार्यङ्गं तज्ज्ञानसम्पादकत्वेनार्थवादान सार्थक्यमित्यर्थः, उक्तेर्थे अन्यत्र पाप्मवेधो नास्तीत्युक्तेर्थ इत्यर्थः, दुष्टेत्यादि असुराणां सम्बन्ध इत्यर्थः, अर्थपदेनोक्तिः सूत्रे ब्रह्मणोर्थपदेनोक्तिरित्यर्थः, यत्रैवं ब्रह्माभेदान्निर्दोषत्वं, अर्थपदस्य ब्रह्मरूपार्थत्वानङ्गीकारे त्वाहुरथवेत्यादि, तद्भेदात् आसन्यापेक्षया वागादीनां भेदादित्यर्थ , तथा नासन्ये आसन्यः स्वनिष्ठभोग देवेभ्यो नागायदित्यर्थः, तेन अन्यादृशगानेन, उक्तमानैः आसन्ये वेधासुरसम्बन्धाभावरूपमानैः, ब्रह्मात्मकत्वेन

---

१. अस्मिन्नितीति पापुस्तके । २. उद्गीथमिति लुप्तं पापुस्तके । ३. अर्थपदेनोक्तेरिति गोपुस्तके । ४ निर्दोषत्वमिति कॆबपापुगोषु । ५. भोगस्त इति कॆपुस्तके । ६ सर्वत्रैव गोपुस्तकेगायदिति । ७ एष इति लुप्तं पुंपुस्तके ।

अग्रे च "भवत्यात्मना परास्य[1] द्विषन् भ्रातृव्यो भवति य एवं वेद" ( बृह. ३. ३. ७. ) इति पठ्यते, तेन परब्रह्म निर्दोषमिति किमु वाच्यं ? यत्र तद्विभूतिरूपासन्यस्योक्तरूपतां यो वेत्ति सोपि गुणयुक्तो दोषरहितश्च भवतीति कैमुतिकन्यायः सूचितो भवति, एतेन लोके दोषत्वेन ये धर्माः प्रतीयन्ते त एव धर्मा भगवति निरूप्यमाणा न[2] दोषत्वेन ज्ञेयाः किन्तु गुणत्वेनैव वस्तुन[3] एव तथात्वादितिभावो ज्ञाप्यते ॥ २५ ॥

एवं भगवत्सम्बन्धाभावे दोषसम्बन्धमुक्त्वा तथा सति गुणहानिं च वदंस्तत्र विशेषमाह ।

## हानौ तूपायनशब्दशेषत्वात्[4] कुशाच्छन्दःस्तुत्युपगानवत्तत् तदुक्तम् ॥ २६॥

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ( मुण्ड. ३. ३. १. ) इत्याथर्वणिकैः पठ्यते, परमपदेन ब्रह्मोच्यते, तथा च सकार्याविद्यारहितः "परममुपैति" तदनन्तरं "साम्यमुपैती"तियोजना, तत्रेदं विचार्यते, साम्यंहि समानजातीयधर्मवत्त्वं, तच्च कतिपयधर्मैरशेषतन्निष्ठधर्मैर्वा भवति तत्रान्त्यः पक्षो ब्रह्मणा समं न सम्भवति, "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वेता. ६. ८.) इतिश्रुतिविरोधात्, अत आद्य एव पक्षोनुसर्तव्यः, तत्र कैर्धर्मैः साम्यमिहोच्यत इत्याकाङ्क्षायामाह हानाविति, ब्रह्मणः सकाशाद्विभागो जीवस्य हानिशब्देनोच्यते, तथा च तस्यां सत्यां ये धर्मा जीवनिष्ठा आनन्दांशैश्वर्यादयो भगवदिच्छया तिरोहितास्ते ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव तथेत्यर्थः, भगवदानन्दादीनां पूर्णत्वाज्जीवानन्दादीनामल्पत्वात् नाम्नैव समैर्धर्मैः[5] कृत्वा ब्रह्मसाम्यं जीव उपचर्यते "साम्यमुपैति"इति, वस्तुतस्तु नैतैरपि धर्मैः साम्यमितिभावः, अत एव "न तत्समः"इति श्रुतिरविरुद्धा, अत एव सूत्रकृता "साम्यमुपैती"ति साम्योपायनशब्दमात्रं न तु साम्यपदार्थः स्वारसिकोत्रास्तीतिभावप्रकटनाय शब्दशब्द[6] उक्तः, ननु तैरेव धर्मैः साम्यं नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह उपायनशब्दशेषत्वादिति, "परममुपैती"ति य उपायनशब्दस्तच्छेषत्वात् साम्योपायनस्येत्यर्थः, ब्रह्मसम्बन्धहेतुकत्वादानन्दांशाद्याविर्भावस्य तदैव साम्योपायनकथनात्तैरेव धर्मैः साम्यमभिप्रेतमितिभावः, नन्वानन्दादीनां ब्रह्मधर्मत्वात् तैस्तत्साम्यकथनं तदभेदमेव गमयतीत्याशङ्क्य तद्धर्मवत्त्वमात्रस्य न तद्भेदसाधकत्वमित्यत्र दृष्टान्तमाह कुशेत्यादि, कुशा

---

गीयमानार्थस्य ब्रह्मात्मकत्वेनेत्यर्थः, तथैव स्वस्मिन् भगवत्सम्बन्धार्थं भगवदुद्देशेनैव, अन्यत्र वागादिषु, अत्र आसन्ये, तत् वेधः, तेन भगवत्सम्बन्धादन्येषां निर्दोषत्वेन, सोपि आसन्योपासकोपि, वस्तुन एव ब्रह्मात्मकवस्तुन एव, तथात्वात् दोषत्वनिराकरणपूर्वकगुणत्वसम्पादकत्वादित्यर्थः, अत एवा'ज्ञत्वं पारवश्यं च विधिभेदादिकं तथा तथा प्राकृतदेहत्व देहत्यागादिकं तथा असुराणां विमोहार्थं दोषा विष्णोर्न हि क्वचि'दिति ब्रह्माण्डवाक्यम् ॥ २५ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥२६॥ सूत्रमवतारयन्ति एवमित्यादिना, तथा सति दोषसम्बन्धे सति, सूत्रार्थोपयोगित्वाद्भगवत्सम्बन्धे फलविशेषबोधिकां श्रुतिमाहु'स्तदे'त्यादि, एतत्पूर्वार्धं तु 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति, पठ्यते मुण्डके पठ्यते, सकार्या पुण्यपापरूपस्वकार्यसहिता, आद्यः पक्षः कतिपयधर्मैः साम्यपक्षः, तैरेव तथा आविर्भूतानन्दैश्वर्यांशैरेव साम्यं वाच्यमित्यर्थः, साम्योपायनं साम्यप्राप्तिः, तच्छेषत्वात् तदर्थप्रतिपादकत्वात्, तैरेव धर्मैः व्युच्चरणकालतिरोहितैरेव धर्मैः पुनः प्राप्तैः साम्यमित्यर्थः, कुशेत्यादीति, तथा कुशाभिः कृत्वा छन्दःस्तुत्युपगानसाधनभकारत्वादित्यर्थः,

---

१. परात्मद्विषन्निति कैपुस्तके परास्यं द्विषन्निति च बपुस्तके । २. दोषत्वेन नेति कैपुस्तके । ३. वस्तुत इति कपुस्तके । ४. कुशच्छन्द इत्यादि कपुस्तके । ५. धर्मत्वमिति कैपुस्तके । ६. समो धर्म इति कपुस्तके सर्वैर्धर्मैरिति पुंपुस्तके । ७. शब्दइति पुपुंगोषु ।

औदुम्बर्यः समिधः, ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते, तदा तत्सम्बन्धि यच्छन्दः-स्तुत्युपगानं तद्वदित्यर्थः, तत्र "अभि त्वा शूर नोनुमो दुग्धा इव धेनवः" (ऋ.सं.५.३. २१.) इत्यृचि ये वर्णास्तेषामच एवोपसंहृत्य भकारेणैव गानं क्रियते, न हि तदार्चिकवर्णधर्माणामचामुपसंहारोस्तीति तदृगात्मकत्वं भकारस्य सम्भवति, एवं प्रकृतेपि ब्रह्मधर्मप्राकट्येन न तदात्मकत्वं जीवस्य सम्भवति, ननु "तत्त्वमसि" (छान्दो.८.८.७.) आदिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत् तत्राह तदुक्तमिति, जीवब्रह्माभेदबोधनतात्पर्यमुक्तमित्यर्थः, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" (ब्र. सू. २. ३. २९.) इतिसूत्रेणेतिशेषः, अपि च श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायन हेतुत्वमिति ज्ञाप्यते, तथा च "पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" (ब्र. सू. ३. २. ५.) इतिसूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वाद्ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्मतिरोधानस्य संसारित्वे हेतुत्वमुक्तं यत्तदपि तदुक्तमित्यनेन स्मार्यत इति न विस्मर्तव्यं, यथान्यशाखोक्तधर्मा अप्येकस्यां विद्यायामुपसंह्रियन्त एवं ब्रह्मनिष्ठा धर्मा जीवेष्येतया श्रुत्या बोध्यन्त इत्येतावत्साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतम् ॥ २६ ॥ ५ ॥

इति तृतीयाध्याये तृतीयपादे पञ्चमं वेधाद्यधिकरणम् ॥ ५ ॥

वाजसनेयिशाखायां "स एष नेति नेतीत्यात्मा" (बृह.५.९.२६.) इत्युपक्रम्य "न व्यथते" (बृह.५.९.२६.) इत्यन्तेन ब्रह्मस्वरूपमुक्त्वा एतादृग्ब्रह्मातस्तद्विदपि विवक्षितरूप इत्यभिप्रायेणाग्रे पठ्यते "अतः पापमकरवमतः कल्याणमकरवमित्युभे ह्येष एते तरत्यमृतः" (बृह.६.४.२२.) इत्यादिनाग्रिमया "एष नित्यो महिमा ब्राह्मणस्य" (तै.ब्रा.३.१२.९.७.) इत्यृचा च ब्रह्मविदो माहात्म्यमुक्त्वा पठ्यते "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् सर्वमेनं पश्यति सर्वोस्यात्मा भवति सर्वस्यात्मा भवति सर्वं पाप्मानं तरति नैनं पाप्मा तरति" (बृह.६.४.२३.) इत्याद्युक्त्वान्ते पठ्यते "य एवं वेद" (बृह.६.४.२५.) इति, अत्र हि पाप्मतरणादिरूपं ब्रह्मज्ञानमाहात्म्यमुच्यते ज्ञानस्य संसारमुक्तिहेतुत्वात्, आथर्वणोपनि-

---

इत्थं च भकारेण गानकरणेपि न भकारस्य ऋगन्तःपातित्वं तद्वज्जीवेपि ब्रह्मसाम्यमुक्तमिति न जीवे ब्रह्माभेद इत्यर्थः सूत्रस्य, तेषामच इत्यादि, तथा च ऋग्वर्णानां भकार उपसंहारं कृत्वा 'नभि' इत्यादिरीत्या भकारेण गाने क्रियमाणेपीत्यर्थः, एवं प्रकृतेपि जीवब्रह्मस्थलेपीत्यर्थः, अस्तु तथा जीवब्रह्मणोरभेदोस्त्वित्यर्थः, जीवेत्यादि जीवधर्मो मुक्तिदशायामाविर्भूतं निर्दोषत्वं ब्रह्मणि च तत् सार्वदिकं तयोरभेद इत्यत्र तात्पर्यं श्रुतेरित्यर्थः, एतदर्थस्य सूत्रकारसम्मतत्वमाहु'स्तद्गुणसार' इत्यादिना, ब्रह्मोपायनं ब्रह्मप्राप्तिः, साम्योपायनं साम्यप्राप्तिः, तदनुपायनस्य ब्रह्मप्राप्तेर्युचरणस्येत्यर्थः, साम्यानुपायनं साम्याभावः, एतया श्रुत्या 'विद्वान् पुण्यपापे विधूये'तिश्रुत्या ॥ २६ ॥ ५ ॥

इति तृतीयतृतीये पञ्चमाधिकरणम् ॥ ५ ॥

सम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥२७॥ जीवस्य भगवत्सम्बन्धसाधनयोर्ज्ञानभक्त्योर्मध्ये किं ज्याय इति विचारयितुमधिकरणारम्भ इति तत्र विषयवाक्यमाहुर्वाजसनेत्यादि आथर्वणेत्यादि च, एतद्विषयवाक्यात् पूर्वं शारीरब्राह्मणे 'मनसैवानुद्रष्टव्य'मितिज्ञानसाधनमुक्तं तदनन्तर 'विरजः पर आकाशा'दित्यादिना विरजस्त्वादिधर्मान् ब्रह्मणि प्रतिपाद्य तदनन्तरं तावन्मात्रत्वं ब्रह्मणो 'नेति नेती'त्यनेन निषेधयित्वा 'गृह्यो न हि गृह्यते न व्यथत' इत्यादिना लौकिकप्रमाणागोचरत्वं सर्वविलक्षणत्वं च बोधयित्वा ब्रह्मस्वरूपबोधनानन्तरं, तद्विदपि ब्रह्मस्वरूपविदपि, विवक्षितरूपः पुण्यपापरहितः, एते पुण्यपापे, अत्र उक्तवाक्ये, ब्रह्मज्ञानमाहात्म्यं

---

१. स्थाप्यत इति कैपुस्तके । २. मकारो वाच्यते सर्वत्र कैपुस्तके । ३. °धर्मोप्राकट्येनेति कैपुस्तके । ४. तदुक्तमपीतिगोपुस्तके । ५. °सनस्येति कैगोपुस्तकयो । ६. समस्तमिदं कैपुस्तके । ७ यत इत्यधिकं बपापुगोषु । ८. अग्र इति लुप्तं कैगोपुस्तकयोः । ९. उभे इति द्विरुक्तं कपुपुस्तकयोः । १०. ऋक्संहितायामियं सम्प्रति नोपलभ्यतेपि तु तैत्तिरीयशतपथब्राह्मणबृहदारण्यकोपनिषद्बोधायनधर्मसूत्रेषु ।

ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां "दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः" ( श्रीमद्भाग. १०.२६.१०. ) इतिवचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात् पूर्वोक्तवचनैर्विरोध इत्याशङ्कायामुत्तरं पठति।

## छन्दत उभयाविरोधात् ॥ २८ ॥

छन्द इच्छा, तथा च भक्तिमार्गीयाणामपि पूर्वं पापनाशो यः स भगवदिच्छाविशेषतोतो[1] भक्तेः पूर्वमेव पापनाशनिरूपकातन्नाशनिरूपकवचनयोरविरोधाद्धेतोर्भक्तेः पूर्वमेव पापनाश आवश्यक इत्यर्थः, एवं सति भक्तेः पूर्वमेव तन्नाश औत्सर्गिकः, स क्वचिद्विशेषेच्छयापनोद्यत इतिभावो ज्ञापितो भवति, अत्रेच्छाविशेषे[2] वक्तव्यबहुत्वेपि किञ्चिदुच्यते[3], चिकीर्षितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यो न सगुणविग्रहा न वा सुकृतादियुक्ता इति ज्ञापयितुं कतिपयगोपीस्तद्विपरीतधर्मयुक्ताः कृत्वा तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं कारयित्वा स्वयमेव तादृशान्[4] नाशयित्वा स्वलीलामध्यपातिनीः कृतवानिति, न ह्येतावता सार्वदिक एवायं भावो भवति, न हि मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति तत्स्वभावत्वमेव तस्य सार्वदिकमिति वक्तुं शक्यं, एतच्च श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः ॥ २८ ॥ ६ ॥

इति तृतीयाध्याये तृतीयपादे षष्ठं सम्परायाधिकरणम् ॥ ६ ॥

ननु "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" ( तै. ब्र. ) इति "तमेवं[5] विद्वानमृत इह भवति नान्यः पन्था विद्यतेयनाय" (तै.आ.३.१२.७.) इत्यादिश्रुतिभिरुक्तरूपब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते, "यमेवैष वृणुते तेन लभ्यः" ( कठो. २. २२. ) इतिश्रुत्यात्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव स इत्युच्यते, किञ्च "भक्त्या मामभिजानाति" ( भग. १८. ५५. ) इत्युक्त्वा "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" ( भग.१८.५५. )इति भगवतोक्तमिति भक्तिमार्गेपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते ज्ञानमार्गे त्वक्षरज्ञानेनेतिविशेषः, "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह" ( श्रीमद्भाग. ११.२०.३१. ) इतिवचनेन भक्तिमार्गीयस्य ज्ञानैरपेक्ष्यमप्युच्यते[6], तथा चैवं मिथःश्रुत्योः स्मृत्योश्च[7] विरोधान्नैकतरनिर्धारः

छन्दत उभयाविरोधात् ॥ २८ ॥ सूत्रमवतारयन्ति ननु भक्तीत्यादि, सूत्रार्थमाहुश्छन्द इच्छेत्यादिना, एवं सति भक्तेः पूर्वं पापनाशस्य 'नराणां क्षीणपापाना'मितिबहुवचनसिद्धत्वे सति, औत्सर्गिकः अनियतः, सः नियमाभावः, अपनोद्यते नियमाभावापनोदनेन नियमः स्थाप्यत इत्यर्थ., सोपधिस्नेहः किञ्चित्प्रयोजनाय स्वयं साधनै. सम्पादित स्नेहः, सगुणेत्यादि, सगुणाः प्रकृतिगुणसहिताः, प्राकृताः, सुकृतेत्यादि, तद्विपरीतेत्यादि, तथा चैच्छिकं भगवत्प्राप्तिप्रतिबन्धकं यल्लौकिक प्राकृतगुणसुकृतादि तत्सदृशं यद्गुणसुकृतादि केवलं 'लोकवत्तु लीलाकैवल्य'मितिवाक्यात्तद्विशेषान् कृत्वेत्यर्थः, तादृशान् लौकिकसदृशगुणसुकृतादीन्, सार्वदिकः इच्छाविशेषेण सम्पादितः, न हि मन्त्रेत्यादि, तथा च भगवदिच्छासम्पादितभगवत्प्राप्तिप्रतिबन्धकीभूततादृग्गुणकृतादिविशिष्टा अपि गोप्यो भगवत्प्राप्तियोग्या नेति नेत्यर्थः ॥ २८ ॥ ६ ॥

इति तृतीयतृतीये षष्ठाधिकरणम् ॥ ६ ॥

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥ पूर्वाधिकरणे ज्ञानिज्ञानाभ्यां भक्तिभक्तयोरुत्कर्षप्रतिपादितः स एव पुनरधिकरणान्तरेण दृढीकरोतीति प्रतिपादयन्ति नन्वित्यादिना, भक्त्यैव स मोक्षः, श्रुत्योर्विरोधमुक्त्वा स्मृत्योर्विरोधमाहुः किञ्चेत्यादिना, नैकतरनिर्धार इति, तथा च ज्ञानेन मोक्षो भक्त्या वेतिसंशयः,

१. अत इति लुप्तं कंपुस्तके। २. °विशेष° पुपुस्तके। °व्ये कंगोपुस्तकयो.। ३. किञ्चिदिति लुप्तं कंपुस्तके। ४. ता दशामिति प्रायः सर्वत्र। ५. तमेवेति पुपुस्तके। ६. ज्ञानेन नैरपेक्ष्यमिति पुंपुस्तके। ७. स्मृत्योरिति लुप्तं कपुस्तके।

सम्भवति, न च ज्ञानेनैव मोक्षः, उभयत्रापि तथोक्तेः ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्यभिप्रायेति वाच्यं, विषयभेदेन ज्ञानभेदान्मुक्तिसाधनं कतमज्ज्ञानमित्यनिश्चयात्, न च श्रौतत्वाविशेषात् समुच्चय इति वाच्यं, ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासम्भवात्, तर्ह्येवं विरोधाभावादुपपन्नं सर्वमिति चेन्न, पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतो लयस्थाननिर्धाराभावात्, अपरश्च "ततो मां तत्त्वतो ज्ञात्वा" ( भग. १८. ५५. ) इति- वचनाद्भक्तिमार्गे तत्त्वतो भगवज्ज्ञानमेव प्रवेशसाधनमिति मन्तव्यं, तथा च "मत्कामा रमणं जारं मत्स्वरूपाविदोबलाः ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः" (श्रीमद्भाग. ११.१२.१३.) इतिवाक्यात् ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्तत्साधनत्वनिरूपकश्रुति- विरोधः, तथा च क्वचिज्ज्ञानं मुक्तिसाधनत्वेनोच्यते क्वचिद्भक्तिः क्वचिन्नोभयमपीत्येकतर- साधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसम्भव इति प्राप्त आह **गतेरर्थवत्त्वमित्यादि,**

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥ ( ३. ३. ७. )

गतेर्ज्ञानस्यार्थवत्त्वं फलजनकत्वमुभयथा मर्यादापुष्टिभेदेनेत्यर्थः, अत्रायमाशयः, "एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" ( कौ. ३. ९. ) इत्यादि- श्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एवैतस्मै जीवायैतत् कर्म कारयित्वैतत् फलं दास्य इति विचारितवानिति तथैव भवति, तत्रोक्तरीत्या मुक्तिसाधनानुगमे हेतुरवश्यं वाच्यः, एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते ताभ्यां विहिताभ्यां मुक्तिर्मर्यादा, तद्रहिताना- मपि स्वस्वरूपबलेन स्वप्रापणं पुष्टिरित्युच्यते, तथा च यं जीवं यस्मिन् मार्गेऽङ्गीकृतवांस्तं जीवं तत्र प्रवर्तयित्वा तत् फलं ददातीति सर्वं सुस्थं, अत एव पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादि- नैरपेक्ष्यं मर्यादायामङ्गीकृतस्य तदपेक्षित्वं च युक्तमेवेतिभावः, अत्र साधकत्वेन विपक्षे बाधकं- माह **अन्यथा हि विरोध इति,** अन्यथा मर्यादापुष्टिभेदेन व्यवस्थाया अकथने विरोधा- द्धेतोस्तथेत्यर्थः, **विरोधस्तु** पूर्वपक्षग्रन्थ उपपादितः, एतेनैव—ननु श्रवणादिरूपा प्रेमरूपा च

---

उभयत्राप्यक्षरपुरुषोत्तमोभयमोक्षौ प्रति, तथोक्तेर्ज्ञानस्य साधनत्वोक्तेः, विषयभेदेन पुरुषोत्तमाक्षररूपज्ञान- विषयभेदेनेत्यर्थः, कतमज्ज्ञानं पुरुषोत्तमस्याक्षरस्य वेतिसंशयादित्यर्थः, श्रौतत्वाविशेषादिति, तथा च 'ब्रह्म- विदाप्नोति पर'मित्यादिश्रुत्याक्षरज्ञानस्य 'तमेव विदित्वातिमृत्युमेती'तिश्रुत्या च पुरुषोत्तमज्ञानस्य मुक्तिसाधकत्वोक्ते- रित्यर्थः, समुच्चयासम्भवादिति, तथा 'चाक्षरात्परतः पर'इतिश्रुतेः 'अव्यक्तोक्षर इत्युक्त' इत्यनेन च ज्ञानद्वय- स्यापि प्राप्यफलभेदोक्तेरेकत्र फले समुच्चयासम्भवादित्यर्थः, तर्हि समुच्चयासम्भवे, एवमक्षरपुरुषोत्तमयोः प्रत्येकज्ञानस्य प्रत्येकप्राप्तिरूपफलसाधकत्वे, विरोधाभावात् किंज्ञानात् किंफलमितिविनिगमनाभावरूपविरोधा- भावात् संशयाभावाद्वा, उपपन्नं सर्वं संशयाभावादधिकरणं व्यर्थमित्यर्थः, निर्धाराभावादिति, तथा च पूर्वज्ञानस्य वैयर्थ्यनिरासायाधिकरणसार्थक्यमितिभावः, ज्ञानमार्गीयेत्यादि, तथा च भक्तिमार्गीयस्य मत्कामनाहेतुभूतस्य रमण- त्वादिप्रकारज्ञानस्य च सत्त्वाद् ब्रह्मत्वेनाज्ञानेपि न व्यभिचारः, तादृशकामादिप्रत्येकस्यापि पुरुषोत्तमप्रापकत्वाज्ज्ञान- मार्गीयेत्युक्तं, तत्साधनत्वं ब्रह्मत्वेन ज्ञानस्य मुक्तिसाधनत्वं, इति प्राप्ते मुक्तिसाधनानामनिश्चयात् स्वर्गार्थयत्नः कार्यो न मुक्त्यर्थ इतिपक्षे प्राप्त इत्यर्थः, मर्यादापुष्टीत्यादि, तथा च मार्यादिकज्ञानस्य भक्तेश्च मार्यादिकमोक्षं प्रति पुष्टिमार्गीयभक्तेर्ज्ञानस्य च पुष्टिमार्गीयमोक्षं प्रति हेतुत्वान्न विनिगमनाभावो व्यभिचारो वेत्यर्थः सिद्धः, तत्र भग- वद्विचारितमध्ये, उक्तरीत्या पुष्टिमर्यादाभेदमादाय, साधनानुगम एतत्फलस्येदमेव साधनमितिनिश्चये हेतुः, एवं सति इच्छायाः कार्यकारणभावनियामकत्वे सति, तद्रहितानामनुग्रहमात्रेणाङ्गीकृतानामित्यर्थः, सर्वं सुस्थं सर्वोपि पूर्वोक्तः पूर्वः पक्षः समाहित इत्यर्थः, अत्र मार्गभेदेन व्यवस्थापक्षे, एतेनैव पुष्टिमर्यादाभेदेन साधनानां

---

१. अक्षर इति लुप्तं गोपुस्तके। २. निर्धारासम्भवादिति कबप्रभापासु। ३. मुक्तिसाधनाननुगम इति कप्रभा- पुपुंषु। ४. विहिताभ्यामिति लुप्तं कैपुस्तके। ५. स्वरूपबलेनेति बपापुस्तकयोः। ६. स्वस्थमिति पुंपुस्तके। ७. बाध- मिति कपुस्तके।

भक्तिरविशेषेण पापक्षय एवोदेत्युत कश्चिद्विशेषोस्ति? तत्राधुनिकानामपि भक्तानां दुःखदर्शना-च्छ्रवणादेः पापनाशकत्वश्रवणाच्चाविशेषपक्षस्त्वसङ्गतः, अथ श्रवणादिरूपा पापे सत्यपि भवति प्रेमरूपा तु तन्नाश एवेतिविशेषो वाच्यः सोपि प्रेमवतामप्यक्रूरादीनां मणिप्रसङ्गे भगवता समं कापट्यकृतिश्रवणान्न साधीयान्—इत्यपि शङ्का निरस्ता वेदितव्या, तथा हि मर्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्यादाद्यायामङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिस्तद्दातृत्वेनैव भगवति प्रेमापि न तु निरुपधिः[1], कदाचिद्वस्तुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधन-मार्गीयत्वाद् "निच्छतो मे गतिमण्वीं[2] प्रयुङ्क्ते" (श्रीमद्भाग. ३. २५. ३६.) इतिवाक्यादन्ते मुक्तिरेव भवित्री, अस्मिन् मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः, पुष्टिमार्गेङ्गीकृते-स्त्वत्यनुग्रहसाध्यत्वात् तत्र च पापादेरप्रतिबन्धकत्वात् श्रवणादिरूपा प्रेमरूपा च युगपत् पौर्वापर्येण वा वैपरीत्येन वा भवत्येव, अत्र श्रवणादिकमपि फलरूपमेव, स्नेहेनैव क्रियमाण-त्वात् न विधिविषयः, न ह्यविद्यादिमुक्त्यन्तरूपभजनानन्दात्यन्तरायरूपाभ्रङ्कषाविरलवि-विधमहातरुगहनानां दहने लोलुपस्यानुग्रहानलस्य तदान्तरालिकपापतूलं प्रतिबन्धकमिति वक्तुं शक्यं, तदुक्तं श्रीभागवते "स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः" (श्रीमद्भाग. ११.५.४२.) इति, 'विकर्म' प्राक्तनं तद्दुःखमिति[3] स्वयञ्च "हरि"त्वेन दुःखहर्तेति "धुनोति", उक्तविशेषणविशिष्टस्य स्वतो विकर्मोत्पत्त्यसम्भवात्[4] सांसर्गिकं मत्तो भूतं न तु मया कृतमितिवद्वा यत् कृतं 'विकर्म' तत् "कथञ्चिदुत्पतित"मित्युच्यते, "त्यक्तान्यभाव"त्वेन भगवत्सेवाव्यासङ्गेनेन्द्रद्युम्नाख्यपाण्ड्य-राजवन्महदागमनाद्यज्ञानं वा, वक्त्रोक्तरूपे भक्ते विकर्मोक्तावरुचिज्ञापनाय वा "कथञ्चिदि"त्यु-क्तवान्, तेन तर्कितं विकर्मात्राप्यभिप्रेतमिति[5] ज्ञायते, एतादृशस्यापि यदि 'विकर्म' भवेत् तदा तन्निवृत्त्यर्थं न तेनान्यत् कर्तव्यं, भगवानेव "हृदि निविष्ट"स्त"द्धुनोति" यत इति, कदाचित् स्वभक्तिबलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामीत्यङ्गीकुर्याच्चेद्भक्तस्तदैव तद्धृदिस्थ[6] एवं तत्सं-सर्गजं दोषमस्यैतदङ्गीकारेण तद्दोषमपि धुनोतीति "सर्व"पदेनोच्यते, चिरकालभोग्यमपि तत्क्षणे-नैव नाशयति, तन्नाशने कालादेरप्रतिबन्धकत्वमित्यपि ज्ञापयितुं "पर"स्य कालादे"रीश"त्व-मुक्तं, अत्र भजनादिहृन्निवेशान्तानां स्पष्ट एव विकर्मणि सत्यपि सम्भव इति ॥ २९ ॥ ७ ॥

इति तृतीयाध्याये तृतीयपादे सप्तमं गतेरर्थवत्त्वमित्यधिकरणम् ॥ ७ ॥

---

व्यवस्थापनेनेत्यर्थः, एतस्येत्यपि शङ्का निरस्ते'त्यग्रेतनेनान्वयः, कश्चिद्विशेषः प्रेमलक्षणायाः पापनाशोत्तर-कालीनत्वरूप', कापट्येति पापं विना कापट्यासम्भवादित्यर्थः, शङ्कानिरसनमेवोपपादयन्ति तथा हीत्यादिना, आद्यायां मर्यादामार्गीयभक्तौ, तत् मुक्तिः, वस्तुस्वभावेन वस्तुमाहात्म्यजातप्रेमस्वभावेनेत्यर्थः, अण्वीं मुक्तिरूपां, अस्मिन् मर्यादाभक्तिमार्गे, न विधिविषयः पुष्टिमार्गीयश्रवणादि न विधिविषयः, तद्दुःखं कथञ्चि-दुत्पन्नमपि विकर्म दुःखरूपमित्यर्थः, उक्तविशेषणमनुग्रहरूपं, मत्तो भूतमित्यादि नान्तरीयकमित्यर्थः, अरुचि-ज्ञापनाय 'त्यक्तान्यभावे'नुगृहीते भक्ते पापानुत्पत्तिज्ञापनायेत्यर्थः, तर्कितमित्यादि, तथा च 'कृत्वा चिन्तामि'त्यादि-न्यायेन तादृशविकर्मोत्पत्तिरितिभावः, तद्धृदिस्थ एनं कृतार्थीकरिष्यामीतिभगवदिच्छाविषयीभूतः, तत्संसर्गज-मज्ञातं कथञ्चित्संसर्गेणोत्पन्नं, अस्य भगवतः, एतदङ्गीकारेण 'एन'मित्यादिनोक्ताङ्गीकारेण, तद्दोषं धुनोति भक्तोपि धुनोतीत्यर्थः, तत्क्षणेनैवेत्यस्योदाहरणं 'दुःसहप्रेष्ठविरहे'त्यादौ बोध्यं, फलितमाहुरत्रेत्यादि, तथा च मर्यादा-भक्तिमार्गे सर्वव्याभावाज्ज्ञानमार्गत उत्कर्षः सिद्धः पुष्टिभक्तिमार्गे तु 'स्वपादमूलमि'त्यादिवाक्यानुरोधात् सत्यपि विक-र्मणि भजनादिहृन्निवेशितानां सम्भवो भगवत्कृपयैव विकर्मनाशश्चेति ततोप्युत्कर्षः सिद्ध इति फलितम् ॥२९॥७॥

इति तृतीयतृतीये सप्तमाधिकरणम् ॥ ७ ॥

---

१. निरुपाधिक इति गोपुस्तके। २. आण्वीमिति कपुपुस्तकयोः। ३. दुःखदमिति प्रायःसर्वत्र। ४. °कृत्यसम्भवा-दिति बपापुंगोषु। ५. अपीति लुप्तं कैंपुस्तके। ६. हृदिस्थ इति बपागोषु। ७. एवपदं लुप्तं कैंपुस्तके। ८. भजने हीति पुंपुस्तके।

ननु मुक्तेरेव सर्वत्र फलत्वमुच्यते, युक्तश्चैतत्, संसृतेर्दुःखात्मकत्वात् तन्निवृत्तेः सर्वेषामिष्टत्वात्, पुष्टिमार्गीयभक्तानां तु तदनपेक्षित्वमुच्यते, तदुक्तमाथर्वणोपनिषत्स्वष्टादशार्णमन्त्रस्वरूपमुक्त्वा पठ्यते "परंब्रह्मैतद्यो धारयति" ( गो. पू. १. ) इत्यादेरन्ते "सोमृतो भवति" ( गो. पू. १. ) इत्यादि, एतदग्रे "किं तद्रूपं किं रसनं कथं हैतद्भजनम्" ( गो. पू. १. ) इत्यादि प्रश्नोत्तरं पठ्यते, "भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यम्" ( गो. पू. १ ) इति, एतदत्र विचार्यते, मन्त्रावृत्तितदधिष्ठातृरूपध्यानादेरमृतत्वं फलमुच्यते, भजनस्वरूपं च यावत्फलनैराश्येन भगवत्यात्मनः कल्पनमित्युच्यते, न च फलनैराश्येन भजनेप्यन्ते मुक्तिरेव भवित्रीति वाच्यं, "तं यथा यथोपासते तथैव भवति तद्भूतान् भूत्वावति" ( मुद्गल. ३. ९. ) इतिश्रुतेर्मुक्तिसाधनत्वेन ज्ञात्वा भजतः सैव फलं स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वमनुभवन् यो भजते तस्य तदेव फलमिति यतो निर्णयः सम्पद्यते, "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" (श्रीमद्भग. ४. ११. ) इति भगवद्वाक्याच्च, अत एव "रहस्यभजनं" लक्ष्यमुक्तं, तथा च श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात् कतमो गरीयानिति संशये गूढाभिसन्धिः[३] पठति,

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ ( ३. ३. ८. )

मुमुक्षोः सकाशाद्रहस्यभजनकर्तैवोपपन्नः उपपत्तियुक्तः, तमेवोद्घाटयति, तल्लक्षणार्थोपलब्धेरिति, तल्लक्षणो भगवत्स्वरूपात्मको योर्थः स्वतन्त्रपुरुषार्थरूपस्तदुपलब्धेः स्वाधीनत्वेन तत्प्राप्तेरित्यर्थः, यद्यपि पुरुषोत्तमे प्रवेशे तदानन्दानुभवो भवति, तथापि न प्रभोस्तदधीनत्वं भक्तितिरोभावात्, प्रत्युत वैपरीत्यं, भजनानन्दस्य तत आधिक्यं तु "मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्" ( श्रीमद्भाग. ५. ६. १८. ) "दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" (श्रीमद्भाग. ३. २९. १३.) "नारायणपराः" (श्रीमद्भाग. ६. १७. २८.) इत्युपक्रम्य "स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" ( श्रीमद्भाग. ६. १७. २८. ) इत्यादिवाक्यैरध्यवसीयते, अत एव सामीप्यवाच्युपसर्ग उक्तः, तेन दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता

---

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ मर्यादापुष्टिभक्तयोस्तारतम्यं विवरीषवः सूत्रमवतारयन्ति ननु मुक्तेरित्यादि, एतन्मुक्तेः फलत्वं, तदनपेक्षित्वं मुक्त्यनपेक्षित्वमित्यर्थः, तदुक्तं मुक्त्यनपेक्षित्वमुक्तं, एतदग्रे मोक्षनिरूपणोत्तरे भजननिरूपणे, पठ्यते गोपालपूर्वतापनीये पठ्यते भक्तिलक्षणमुच्यत इत्यर्थः, तदेवाह भक्तिरहस्यभजनमिति, अत्र भक्तिशब्दाच्छान्दसः सोर्लुक्, रहस्यभजनमित्यस्य विवरणं तदिहेत्यादि, तद्रहस्यभजन, इहामुत्रोपाधिनैराश्येनैहिकामुष्मिकफलकामनाराहित्येन, अमुष्यात्मनो भगवदीयजीवस्य, कल्पनमनन्यतया भगवदीयत्वसम्पादन, एतदेव निःकामतया भगवदीयत्वसम्पादनमेव, बाह्याभ्यन्तरसेवाभ्यां भगवदीयत्वदृढीकरणत्वमिति फलित, नैष्कर्म्यं संन्यास इत्यर्थ , तत्र पारलौकिकफलसामान्यमध्ये मुक्तेरपि प्रविष्टत्वात्तन्निरासोप्युक्त इति बोध्य, एतदत्र विचार्यत इति पूर्वोक्तानि तापनीयवाक्यान्यत्र विचार्यन्त इत्यर्थः, संशयमुपपादयितुमाहुर्मन्त्रेत्यादि, 'अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तदि'तिमन्त्रोक्ता या पञ्चपदस्याष्टादशमन्त्रस्यावृत्तिः पुनःपुनःकथनं तस्मात् 'कृष्ण एव परो देवस्तं ध्यायेत् तं रसेत् तं भजेदि'तिब्राह्मणोक्तं यत्तदधिष्ठातृध्यानादि तस्य सर्वस्यामृतत्वं फलमुच्यत इत्यर्थः, वक्ष्यमाणसंशये मुक्तिकोटिगरीयस्त्वमुपपादयन्ति न चेत्यादिना, अत एव स्वरूपस्य फलत्वादेव, कतमो गरीयान् मुक्तिस्वरूपफलयोर्मध्ये कः पदार्थो गरिष्ठ इत्यर्थः, प्रत्युत वैपरीत्यं मुक्तिपूर्वदशातोपि वैपरीत्य मुक्तिदशायां, अत एव मुक्त्यपेक्षया भजनानन्दाधिक्यस्य व्यासाभिप्रेतत्वादेव, उपसर्ग उक्त उपलब्धेरितिसूत्र उपसर्ग उक्तः, अन्यथा तल्लक्षणार्थलब्धेरित्येव सूत्रयेन्मुक्त्याधिक्यस्याभिप्रेतत्वे,

---

१. परमिति कपुस्तके। २. मुक्तिसाधनत्वमिति कैपुस्तके। ३. सर्वेष्वप्यादर्शेष्वेवमेव पाठोपलब्धेरत्र बहुव्रीहिर्माह्यो न तु कर्मधारयः। ४. वैलविकं पुंपुस्तके।

भवति, न च महत्पदार्थस्वरूपाज्ञानादल्प एवानन्दे यथा सर्वाधिक्यं मन्वानः पूर्वोक्तं न वाञ्छति तथात्रापीति वाच्यं, दीयमानानामर्थानां स्वरूपाज्ञानासम्भवात्, अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात्, तदज्ञाने स्वर्गादित्रये तुल्यदर्शित्वासम्भवश्च, "मुक्तिं ददाति कर्हिचित् स न भक्तियोग"मितिवाक्ये भक्तेराधिक्यं स्पष्टमेवोच्यते, तस्मान्न्यूनार्थजिघृक्षोः सकाशात् पूर्णार्थवान् महानितियुक्तमेवास्योपपन्नं, इममेवार्थं दृष्टान्तेनाह लोकवदिति, यथा स्वाधीनभर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकं दीयमानमपि नोरीकरोति तथेत्यर्थः।

अथवा स भगवानेव लक्षणमसाधारणो धर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः स एवार्थः स्वतन्त्रपुरुषार्थरूप इत्यग्रे पूर्ववत्, भगवत्प्राकट्यवानेव हि भक्तो भक्तत्वेन ज्ञायत इति तथा, एतेन ज्ञाप्यं हि ज्ञापकादधिकं भवति, एवं सति यज्ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्वफलरूपं तन्महत्त्वं कथं वक्तुं शक्यमिति सूच्यते ॥ ३० ॥ ८ ॥

इति तृतीयाध्याये तृतीयपादेऽष्टमभुपपन्नाधिकरणम् ॥ ८ ॥

आथर्वणोपनिषत्सु पठ्यते "परब्रह्मैतद्यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोमृतो भवति"[3] ( गो. पू. १. ) इति, तत्र धारणादीनां समुदितानामेवामृतसाधकत्वमुत प्रत्येकमपीति भवति संशयः, अत्र धारणादिसाधनकलापमुक्त्वा फलमुच्यत इति समुदितानामेव मुक्तिसाधकत्वं, उपलक्षणं चैतत्, श्रवणादिनवविधभक्तीनामप्येवमेव तथात्वमितिपूर्वपक्षे सिद्धान्तमाह अनियम इति,

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ ( ३. ३. ९. )**

समुदितानामेव तेषां फलसाधकत्वमितिनियमो नास्तीत्यर्थः, अत्रोपपत्तिमाह सर्वासामविरोध इति, "चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः" ( गो. पू. १. ) इति-

---

तेन सामीप्यबोधकोपोपसर्गप्रयोगेण, महत्पदार्थो ब्रह्मलोकमुक्त्यादिरूपः, अल्प एवानन्दे राज्यादिलौकिकानन्दे, पूर्वोक्तं मोक्षसुखं, तथात्रापीति मुक्त्यपेक्षया न्यूने स्वरूपानन्दे भजनानन्दे भक्तो महत्त्वं जानातीत्यर्थः, तदज्ञाने दीयमानभक्ताग्राह्यपदार्थानां भक्तानामज्ञाने, तस्मात् पूर्ववाक्ये तु मुक्त्यपेक्षया भक्तेराधिक्यप्रदर्शनात्, न्यूनार्थजिघृक्षोर्मुक्तिग्रहणेच्छोः पुरुषात्, पूर्णार्थवान् भक्तिमान्, अस्य भक्तस्य, उपपन्नं महत्त्वमुपपन्नमित्यर्थः, तदवस्थारसिको नोरीकरोति 'भर्तुः स्वमात्राधीनीकरणं त्यजान्यद्वाञ्छितं गृहाणे'त्युक्ताप्यन्यन्नाङ्गीकरोति यथा तथेत्यर्थः, पूर्वोक्तपक्षापेक्षयाप्याधिक्यमुपवर्णयन्ति अथवेत्यादिना, असाधारणः उद्भटभक्तिभाववदतिरिक्ते विद्यमानाभावप्रतियोगिरूपः, स्वतन्त्रेत्यादि, तथा च फलरूपभक्तेर्न मुक्तौ साम्यसम्भावनापीतिभावः, इति तथा उक्तहेतोर्भक्तस्य महत्त्वं, एतेन पूर्वोपपादनेन, ज्ञाप्यं भक्तमहत्त्वं, ज्ञापकात् प्रकटमानाद्भगवतः, यज्ज्ञापकं भक्तमहत्त्वज्ञापकं, तन्महत्त्वं भक्तमहत्त्वं, कथं वक्तुं शक्यं न कथमपि वक्तु शक्यमित्यर्थः ॥ ३० ॥ ८ ॥

इति तृतीयतृतीयेऽष्टमाधिकरणम् ॥ ८ ॥

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥३१॥ एव पुष्टिभक्तेः फलत्वं पुष्टिभक्तस्वरूपं च निरूप्य मर्यादाभक्तिसाध्यमुक्तौ सर्वासां भक्तीनां समुदितानां कारणत्वमुतेतरनैरपेक्ष्येणैकैकस्याः कारणत्वमितिविचारयितुमधिकरणारम्भ इति विषयादिकमाहुराथर्वणेत्यादि, अत्र धारयतिपदार्थ. सर्वाङ्गध्यानं, रसतिपदार्थो जपात्मकं कीर्तनं, भजतिपदार्थः शारीरी सेवा, ध्यायतेपदार्थ एकाङ्गस्य लीलाया वा चिन्तनं, प्रेमति भगवद्विषयकप्रेमयुक्तो भवति, उपदिशति मन्त्रद्वारा भगवन्तं बोधयति, आचरति भगवत्प्राह्यनुकूलधर्मानितिशेष., समुदितानां पूर्वोक्तानां नवानामित्यर्थः, अमृतसाधकत्वं मर्यादाभक्तिजन्यमुक्तिसाधकत्वं, पूर्वपक्षमाहुरत्रेत्यादि, एवमेव समुदितानामेव कारणमिति तथात्वंपदार्थः, अत्रेतरनैरपेक्ष्येणैकैकस्याः कारणतायां, श्रुतीनामविरोधमेवोपपादयन्ति

---

१. उपपन्नत्वमिति सर्वत्र । २. तन्महित्वमिति कपुपुंषु । ३. सोमृतो भवतीतिवीप्सा बपापुपुंषु । ४. तत्रेति कपुपुस्तकयो. ।

श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते, "पञ्चपदीं जपन्"इत्याद्युक्त्वा "ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते" ( गो. पू. १. ) इतिश्रुत्या कीर्तनमात्रस्य तथात्वमुच्यते, तथा च प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः स्यात्, एवं सति "परब्रह्मैतद्यो धारयति" ( गो. पू. १. ) इत्यादिषु "सोमृतो भवति" ( गो. पू. १. ) इतिपदं प्रत्येकं सम्बध्यत इति ज्ञेयं, ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्यैव तज्जनकत्वमेवमत्राप्येकैकस्य चिन्तनादेस्तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषामिति चेत्, मैवं, योर्थो यत्प्रमाणैकसमधिगम्यः स तेन प्रमाणेन यथा सिध्यति तथा मन्तव्यः, दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु, प्रकृते तु तेषां तथात्वमलौकिकशब्दैकसमधिगम्यं, श्रुतिस्तूक्तैव, न चोक्तन्यायः श्रुतिष्वपि तात्पर्यनिर्णायको भवतीति वाच्यं, अलौकिकेर्थे लौकिकस्यासामर्थ्यात्, अन्यथा ब्रह्मणा मनसैव प्रजाजनने निषेकादिकमपि कल्प्येत, स्मृतिरपि "केवलेन हि भावेन गोप्यो गावः खगा मृगाः येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ( श्रीमद्भाग. ११. १२. ८. ) "एतावान् साङ्ख्ययोगाभ्याम्" ( श्रीमद्भाग. २. १. ६. ) इत्युपक्रम्या"न्ते नारायणस्मृतिः" (श्रीमद्भाग. २. १. ६.) इत्यादिरूपैवमेवाह, इममेवार्थं हृदि कृत्वाह सूत्रकारः **शब्दानुमानाभ्यामिति** श्रुतिस्मृतिभ्यामित्यर्थः, ते चोक्ते ।

एतेन सूत्रकारस्यान्योप्यनुशयोस्तीति भाति, यत्रोक्तसाधनस्तोमसम्पत्तिरेकस्मिन् भक्तेस्ति तत्रैकेनैव मुक्तावितरसाधनत्वबोधकश्रुतिविरोधाच्छ्रवणकीर्तनस्मरणानां मुक्त्यव्यवहितपूर्वक्षणे युगपदपि सम्भवादन्यथासिद्धिसम्भवे विनिगमकाभावादेकेनैव मुक्तिरिति न नियमोतः प्रत्येकसाधकत्वबोधिकानां **सर्वासां** श्रुतीनां मिथोविरोधः, तर्ह्येकत्र तथात्वे सर्वत्रैव तथास्त्वित्याशङ्क्य तत्र बाधकमाह **शब्दानुमानाभ्यामिति** पूर्ववत्, तत्र प्रत्येकमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः, यत्र प्रत्येकमपि तथात्वं तत्र किमु वक्तव्यं समुदितानां तथात्व इतिभावः, तेन श्लिष्टः प्रयोगोयमिति ज्ञेयम् ॥ ३१ ॥ ९ ॥

## इति तृतीयाध्याये तृतीयपादे नवममनियमाधिकरणम् ॥ ९ ॥

'चिन्तय'न्नित्यादिना, **प्रत्येकं सम्बध्यते** नवकारणेषु 'सोमृतो भवती'ति प्रत्येकं सम्बध्यत इत्यर्थः, **अत्रापि** मुक्तिसाधनविचारेपि, **तथात्वोक्तावे**कैकस्य कारणत्वोक्तौ, **समुदितानामेव तथात्वं** फलोपधायकत्वं, **उक्तन्यायः** दण्डचक्रादिस्थलीयो न्यायः, **केवलेन** स्वातिरिक्तसाधननैरपेक्ष्येण, **ते** श्रुतिस्मृती, **एतेन सूत्रे शब्दानुमानाभ्यामि**त्युक्तेन, **पूर्ववत्** श्रुतिस्मृतिभ्यां प्रत्येककारणताया एव व्यवस्थापनेन मिलितानामेकत्र कारणत्वे मानाभावेन सकलोक्तकारणानामेककार्यं प्रत्यनियमः पूर्वमुक्तस्तथात्रापि समाधेयमित्यर्थः, **तत्रानियम** इतिसूत्रभागे, **न तथा** कारणसमुदायस्थलेपि प्रत्येककारणेनैव कार्यसिद्धौ चक्रयोजितद्वित्रादिदण्डजनितैकघटस्थले त्रयाणां कारणत्वेपि न हि सर्वत्र द्वित्रादिदण्डानामेव कारणता वक्तुं शक्या, एकदण्डजन्यघटस्थले व्यभिचारान्न समुदायकारणतानियमः सर्वत्रेतिभावः, **प्रत्येकमपी**तिस्वोक्तमपिशब्दं विवृण्वन्ति **यत्रे**त्यादिना, **तथात्वं** कार्यजनकत्वं, **तथात्वे** कार्योपधाने, **तथा च** 'सम्भेदेनान्यतरवैयर्थ्य'मितिन्यायो द्योतितः, **श्लिष्टः प्रयोग** इति, **तथा च** सूत्रेनियम इतिश्लिष्ट. प्रयोग', तेन क्वचित्कारणद्वयेन क्वचित्कारणत्रयेण कार्यजननेपि **न सर्वत्र नियम इति** श्लेषबोधितोर्थः फलितः ॥ ३१ ॥ ९ ॥

### इति तृतीयतृतीये नवमाधिकरणम् ॥ ९ ॥

१. नास्ति वीप्सा पुपुस्तके । २. यथेति लुप्तं कैपुस्तके । ३. एकेतिलुप्त पापुस्तके । ४. जात्यर्थं° गोपुस्तके । ५. प्रजनन इति कैपुस्तके । ६. °साधन° पुपुस्तके । ७. भक्तिहेतुत्वमिति पुपुस्तके ।

पूर्वं मुमुक्षुभिः साधनत्वेन क्रियमाणानां भगवद्धर्माणां मुक्तिसाधनप्रकारो विचारितः, अधुना तु भगवान् स्वविचारितकार्यं लौकिकैश्वर्याद्यशक्यं ज्ञात्वा स्वैश्वर्यादिकं दत्वा येन जीवेन तत् कारयति स जीवस्तैर्धर्मैर्मुक्तो भवति न वेति विचार्यते, तत्र जीवकृतभगवद्विषयकधर्माणां यत्र तत्साधकत्वं तत्र भगवदीयानां धर्माणां तत्साधकत्वं सुतरामेव तेषां स्वकृत्यसाध्यत्वेनाविधेयत्वात् तत्साधनेष्वप्रवेशोपीतिसन्देहे निर्णयमाह यावदित्यादि ।

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ ( ३. ३. १०. )

यस्मिञ् जीवे यत्कार्यसाधनार्थमधिकारो भगवता दत्तस्तत्कार्यसाधनक्षमास्तस्मिन् ये स्वधर्मा भगवता स्थापितास्त आधिकारिका इत्युच्यन्ते, तत्कार्यसम्पत्तिरेव तदधिकारप्रयोजनमिति तावदेव तेषां तस्मिन् स्थितिरित्यर्थः, एवं सति तत्सम्पत्तौ सोपि निवर्तत इति तत्सम्बन्धिनो धर्मा अपि निवर्तन्त इति मुक्तिपर्यन्तं न तेषां व्यापारसम्भवः, भगवता तथैव विचारितत्वात्, मुक्तिस्तु भक्त्यैवेतिभावः, यच्च "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ( कूर्म. पू. १२. २६९. ) इतिवाक्यं तत्त्वाकल्पान्तं येषामधिकारः सप्तर्षिप्रभृतीनां तद्विषयकमिति ज्ञेयं, अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत्, 'कृतात्मानः' इतिपदात् तेषामपि भगवति कृतान्तःकरणानामेव 'परस्य' भगवतः 'परम्पदं' व्यापिवैकुण्ठे प्रवेश उच्यते न त्वाधिकारिकगुणैः ॥ ३२ ॥ १० ॥

### इति तृतीयाध्याये तृतीयपादे दशममाधिकारिकाधिकरणम् ॥ १० ॥

ननूक्ताथर्वणोपनिषद्वाक्यैर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते, श्रुत्यन्तरेषु "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय" ( तै. आ. ३. १२. ७. ) "ज्ञानादेव तु कैवल्यम्" (ग. पु. सा. १६. ८७.) "तरति शोकमात्मवित्" ( छान्दो ७. १. ३. ) "ब्रह्म वेद ब्रह्मैव भवति" (मु.३.२.९.) इत्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते । श्रुतित्वाविशेषादुभयोस्तथात्वे

---

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥ पूर्वाधिकरणेन-सहैतदधिकरणस्यैव निर्वाहकत्वसङ्गतिं प्रदर्शयन्तोधिकरणमवतारयन्ति पूर्वमित्यादिना, भगवद्धर्माणां भजनरूपभगवद्धर्माणां, स्वविचारितकार्यं सूर्यस्य प्रकाशकत्वमग्नेः पाचकत्वं प्रियव्रतादेस्तथा राज्यादिकरणमेवमादि, तत् स्वविचारितं, स जीवोधिकारिजीवः, तैरधिकारकार्यार्थं भगवद्दत्तैः, मुक्तो भवति न वेतिकोटिद्वयमध्ये प्रथमपक्षे भक्तेर्मुक्तिजनकतायां व्यभिचार आधिकारिकधर्माणां भक्तित्वाभावाद्, द्वितीय आधिकारिकधर्माणां भागवतानां मुक्तिप्रतिबन्धकत्वापत्तितो विचारविषयतेत्यर्थः, इत्थं च भगवद्धर्मा विषयः, ते मुक्तिहेतवो न वेतिसंशयः, पूर्वपक्षमाहुस्तत्रेत्यादि, भगवदीयानामाधिकारिकाणामित्यर्थः, धर्माणां 'धारयति रसति भजती'त्यादिपूर्वश्रुत्युक्तभगवद्धर्माणामित्यर्थः, तेषामाधिकारिकाणामविधेयत्वान्मुक्तिसाधनत्वेन विधातुमशक्यत्वादित्यर्थः, तन् मुक्तिः, धर्माणामधिकारार्थत्वेनैव ॥ ३२ ॥ १० ॥

इति तृतीयतृतीये दशमाधिकरणम् ॥ १० ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३ ॥ पूर्वाधिकरणे भक्तेरेव मुक्तिरिति निरूप्याक्षरज्ञानस्य मुक्तिकारणताप्रकारं वक्तुं सूत्रमवतारयन्ति नन्वित्यादि, भगवद्धर्माणां पूर्वश्रुत्युक्तभजनादिरूपाणां, अत्र भक्तेर्मुक्तिसाधनत्वं विषयो भक्तेर्मुक्तिसाधन ज्ञानस्य वेतिसंशयः, श्रुतिद्वैधं संशयबीजं, श्रुतीत्यादिना पूर्वपक्ष उच्यते, श्रुतित्वाविशेषाद् भक्तिज्ञानयोर्मुक्तिं प्रति कारणत्वप्रतिपादकश्रुतीनां श्रुतित्वा-

---

१. परपदे व्यापीत्यादि बपापुषु । परपदेनापि वैकुण्ठ इति कपुस्तके ।

कारणवैजात्ये कार्यवैजात्यस्यावश्यकत्वान्मुक्तौ च तदसम्भवाद् "भक्त्या मामभिजानाति" (गीता. १८. १५.) इतिवाक्याद्भक्तौ ज्ञानस्यापि सम्भवाज्ज्ञानेनैव मुक्तिरितिपूर्वपक्षे ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात् तद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वाहाक्षरधियामित्यादि ।

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ (३.३.३३.)

तुशब्दः पूर्वपक्षनिरासे, वाजसनेयके श्रूयत "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूल" ( बृ. ५. ८. ८. ) मित्यादि, तथाथर्वणे "अथ परा यया तदक्षरमधिगम्यते" ( मुण्ड. १. १. ५. ) इति, तेन ज्ञानमार्गेक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि नेति निश्चीयते, "ब्रह्मविदाप्नोति परम्" (तै. ब.) इति श्रुतावक्षरब्रह्मविदोक्षरात् परस्य प्राप्तिरुच्यते, "अक्षरादपि चोत्तमः" (गीता. १८. ५५.) इतिभगवद्वाक्याच्चाक्षरातीतः पुरुषोत्तमः, "भक्त्या मामभिजानाति" इतिवाक्ये "मामि"तिपदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते न त्वक्षरविषयकं, किञ्च "ब्रह्मभूत"स्य भक्तिलाभोक्तेस्तस्य चानन्दांशाविर्भावात्मकत्वात् तस्य चाविद्यानाशजन्यत्वात् तस्य चाक्षरज्ञानजन्यत्वात् पूर्वकक्षा[1]विश्रान्तमेवाक्षरज्ञानं, एवं सत्यक्षरविषयिणीनां धियां श्रुतौ मुक्तिसाधनेषु योवरोधः प्रवेशनं गणनेतियावत् स सामान्यतद्भावाभ्यां हेतुभ्यां, पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरिति सामान्यं, मर्यादामार्गेङ्गीकृतानां "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" (गीता. १८. ५४.) इतिवाक्याद् ब्रह्मभावानन्तरमेव भगवद्भावसम्भवात् तेन पुरुषोत्तमे प्रवेशात् तत्र परम्परोपयोगो ब्रह्मभावस्येत्युभाभ्यां हेतुभ्यां तथेत्यर्थः, वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरितिभावः ।

नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषाञ्चित्तत्रैव लयः केषाञ्चिद्भक्तिलाभ इति कथमुपपद्यत इत्याशङ्क्य तत्र हेतुं दृष्टान्तेनाहौपसदवदिति, उपसदाख्ये[2] कर्मणि तानूनप्त्रस्पर्शाख्यमौपसदं कर्मास्ति, तत्रातिथ्यायां ध्रौवात् स्रुचि चमसे वा यदाज्यं चतुरवत्तं पञ्चावत्तं[3] वा समवद्यति तत् तानूनप्त्रमित्युच्यते, "अनाधृष्टमसि" (तै. सं. १. २. १०.)

---

विशेषादित्यर्थः, उभयोर्भक्तिज्ञानयोः, तथात्वे स्वातन्त्र्येण मुक्तिकारणत्वे, तदसम्भवाद् वैजात्यासम्भवात्, भक्ताविति सतिसप्तमी, तत्प्रापकत्वं मुक्तिप्रापकत्वं, पूर्वपक्षनिरासेक्षरज्ञानस्यैव साक्षान्मुक्तिहेतुत्वमितिपूर्वपक्षनिरासे, भक्तिलाभोक्ते'र्ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति समः सर्वेषु भूतेषु मद्भक्तिं लभते परा'मितिवाक्येन भक्तिलाभोक्तेरित्यर्थः, तस्य भक्तिलाभस्य, तस्यानन्दांशाविर्भावस्य, तस्याविद्यानाशस्य, पूर्वकक्षाविद्यानाशरूपा, एवं सत्यक्षरज्ञानस्याविद्यानाशकत्वेन भगवत्सम्बन्धिसत्सम्बन्धकार्यसम्पादकत्वे सतीत्यर्थः, स प्रवेशः, सामान्यतद्भावाभ्यामितिहेतुं विवृण्वन्ति पुरुषोत्तमेत्यादिना, मुक्तिरितीति साधनसम्पत्तिसम्भवान्मुक्तिरित्यर्थः, सामान्यं सामान्यपदार्थरूपः प्रथमो हेतुरित्यर्थः, तद्भावरूपं द्वितीयं हेतुं विवृण्वन्ति मर्यादेत्यादिना, ब्रह्मभावस्य सर्वत्राक्षरात्मत्वेन ज्ञानस्य, तथाक्षरज्ञानस्य परममुक्तिसाधकत्वं, अक्षरस्य परमापरममुक्तिसाधकाक्षरज्ञानस्य, अविशिष्टत्वेनोभयोः सत्त्वेन, तदुपासकानामक्षरोपासकानामविशिष्टत्वात् परापरमुक्तिं प्रत्यधिकारित्वात्, तत्रैवाक्षर एव, भक्तिलाभः परममुक्तिलाभ इत्यर्थः, कथमुपपद्यते कारणवैजात्याभावात् कथं कार्यवैजात्यमित्यर्थः, तत्र कार्यवैजात्ये, औपसदमुपसत्सम्बन्धि, ध्रौवाद् ध्रुवायां विद्य-

---

१. पूर्वकक्षविश्रान्तमिति कंपुस्तके । २. उपसदाख्यकर्मणीति पुपुस्तके । ३. पञ्चावत्तमिति छुप्तं बपुस्तके ।

इतिमन्त्रेण षोडशाप्यृत्विजो यजमानेन सह तानूनप्त्रं समवमृश "न्त्यनु मे दीक्षाम्" (तै. सं. १. २. १०.) इतिमन्त्रेण यजमानस्तत् समवमृशन् "यमृत्विजं कामयेतायं यज्ञं [1]यशसमृच्छे- दिति तं प्रथममवमर्शयेत्" (        ) इति श्रुतौ[2] कल्पे (आप. श्रौ. ११. १. ४.) च, अत्र सर्वेषामृत्विजां तानूनप्त्रि[3]त्वाविशेषेपि यस्मिन् स्नेहातिशयेन तथेच्छा तत्रैव तथाकृ- तिर्नेतरेषु, न हि तत्राविशिष्टेषु कथमेवं कृतिरितिपर्यनुयोगः सम्भवत्येवमिहापीत्यर्थः। ननु श्रवणादेर्यथा पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्वमेवमक्षरस्याप्यस्त्वित्याशङ्का तु नि- खिलासुरजीवतमःपुञ्जनिरासकेन यदुवंशोदयाचलचूडामणिनैव निरस्तेति न स्वतो वक्तुमु- चितेत्याशयेनाह तदुक्तमिति भगवद्गीतास्थितिशेषः, तत्र "यदक्षरं वेदविदो वदन्ति" (गीता. ८. ११.) इत्युपक्रम्य "स याति परमां गतिम्" (गीता. ८. १३.) इत्यन्तेनाक्षरप्राप्त्यु- पायमुक्त्वा "नन्यचेताः सततम्" (गीता. ८. १४.) इत्यादिना स्वप्राप्त्युपायं वैलक्षण्यं चोक्त्वा भक्त्येक[4]लभ्यत्वं स्वस्य वक्तुं पूर्वं क्षराक्षरयोः स्वरूपमाह, "सहस्रयुगपर्यन्तम्" (गीता. ८. १७.) इत्युपक्रम्य "प्रभवत्यहरागमे" (गीता. ८. १८.) इत्यन्तेन क्षरस्वरूपमुक्त्वा "परस्तस्मात् तु भावोन्यः" (गीता. ८. २०.) इत्युपक्रम्य "तद्धाम परमं मम" (गीता. ८. २१.) इत्यन्तेनाक्षर- स्वरूपमुक्तं, अत्र पूर्वं क्षरस्वरूपमुक्तमिति "परस्तस्मात्तु" (गीता. ८. २०.) इत्यत्र क्षरादेव परत्वमुच्यते, तच्छब्दस्य पूर्वपरामर्शित्वात्, तस्यैव पूर्वमुक्तत्वात्, अतएवाक्षरव्यावर्तकस्तु- शब्द उक्तः, एतेन "नित्यत्वेन क्षरणाभावादक्षरशब्देन जीव एवोच्यते न तु पुरुषो- त्तमाधिष्ठानभूतो जीवातीत' इति निरस्तं, "यं प्राप्य न निवर्तन्त" (गीता. ८. २१.) इति वाक्याज्जीवे तथात्वासम्भवान् नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तेश्च, इत एव ज्ञानमार्गिणां तत्प्राप्तिरेव मुक्तिरिति ज्ञेयं, ततोनिवृत्तेः, "पुरुषः स परः पार्थ" (गीता. ८. २२.) इत्यने- नाक्षरात् परस्य स्वस्य भक्त्येकलभ्यत्वमुक्तं, तेन ज्ञानमार्गीयाणां न पुरुषोत्तमप्राप्तिरिति सिद्धं, "यस्यान्तःस्थानि" (गीता. ८. २२.) इत्यनेन परस्य लक्षणमुक्तं, तच्च मृत्स्ना[5]दिप्रसङ्गे श्रीगोकुलेश्वरे स्पष्टमुच्यते, तेनाक्षरोपासकानां न पुरुषोत्तमोपासकत्वं तद्विषयकश्रवणादेर- भावादितिभावः, "अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम्" (गीता. ८. २१.) इतिवाक्यात् "स याति परमां गतिम्" (गीता. ८. १३.) इत्यत्राक्षरमेव यातीत्यर्थो ज्ञेयः।

किञ्च तैत्तिरीयोपनिषत्सु पठ्यते "यस्मिन्निदं सञ्च वि चैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् येनावृतं खञ्च दिवम्महीं च

---

मानात्, समवमृशन्ति स्पर्शं कुर्वन्ति, अवमर्शयेद् वृणुयादित्यर्थ, तथेच्छा स्वकीययज्ञयशःसम्पादकत्व- प्रकारिकेच्छा, तथाकृतिर्मुख्यत्वेनादौ वरणं, एवमिहापि परममुक्तावपि भगवान् भक्तिं दत्वा यस्य जीवस्य स्वप्राप्तिमिच्छति तस्मै भक्तिं ददाति नेतरेभ्य इत्यर्थः, श्रवणादेः सर्वासां भक्तीनामित्यर्थः, एवमक्षरस्याप्यस्त्व- क्षरसम्बन्धिश्रवणादीनामक्षरप्रापकत्वमप्यास्तामित्यर्थः, वैलक्षण्यं स्वस्याक्षराद्वैलक्षण्यं, तुशब्दः 'परस्तस्मा'त्त्विति तुशब्दः, एतेनाक्षरपदेन कूटस्थजीवातीतब्रह्मप्रतिपादनेन, नित्यमुक्तत्वापत्त्या 'यं प्राप्य न निवर्तन्त' एतादृशार्थस्याक्षरपदेन प्रतिपादनात्तस्यैव च जीवत्वोक्तौ मुक्तिसाधनवैफल्यापत्तेरित्यर्थः, इत एव 'यम्प्राप्ये'ति- वाक्यादेव, पुरुषोत्तमस्याक्षरोत्तमत्वासिद्धावप्यक्षरस्य लोकत्वं तत्रस्थितत्वं च पुरुषोत्तमस्येति न वाक्यात्सिद्धमत आहुः किञ्चेति, 'यस्मिन्निद'मितिश्रुतावक्षरस्य सर्वाधारत्वं सर्वलीलोपयोगिदेवस्थानत्वं सर्वात्मकत्वं पादत्रयेणोच्यते

---

१. यज्ञयशसमिति कपुपुंषु। २. श्रूयत इत्यधिकं बपुंगोषु। ३. तानूनप्त्रत्वा° बपुस्तके। ४. भक्त्यैक° पुंगोपुस्तकयोः। ५. मृत्सेत्यादि कबगोषु।

येनादित्यस्तपति तेजसा भ्राजसा च यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा" इति (नारा. १.) अत्राक्षरात्मकत्वेन क्षरात्मकादाकाशात् "परमे व्योम्नि" भक्तानां हृदयाकाश इति यावत् । तत्र प्रकाशमानमित्यर्थात्, अत एव "ब्रह्मविदाप्नोति परम्" (तै. ब्र.) इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" (तै. ब्र.) इत्येतदुपनिषत्स्वेव पठ्यते, "यदक्षरे परमे प्रजा" इतिपद"मवयन्ती"त्यनेन सम्बध्यते, अत्र "प्रजा"-पदाद् व्यापिवैकुण्ठात्मको लोकोक्षरपदेनोच्यत इत्यवगम्यते, अत एव "न यत्र माया" (भाग. २. ९. १०.) इत्यादिना श्रीभागवते तत्स्वरूपमुच्यते, एतेनाक्षरस्य पुरुषोत्तमाधिष्ठानत्वं निश्चीयते, इतोप्यक्षरातीतः पुरुषोत्तम इत्यवगम्यते, एवं सति **सामान्यं** भगवद्विभूतिरूपत्वं **तद्भावस्तस्य** पुरुषोत्तमस्य **भावः** सत्तोक्तरीत्या तत्र स्थितिरितियावत्, ताभ्यां हेतुभ्यां तथेत्यप्यर्थो ज्ञेयः ॥ ३३ ॥

ननु संसारनिवृत्त्यानन्दाविर्भावयोरविशेषादक्षरे ब्रह्मणि लये पुरुषोत्तमे प्रवेशान् न्यूनतोक्तौ को हेतुरित्याकाङ्क्षायामाह ।

## इयदामननात् ॥ ३४ ॥

इयदिति परिमाणवचनं तस्य श्रुतौ कथनादित्यर्थः, अत्रेदमवधेयम्[2], तैत्तिरीयोपनिषत्सु "सैषानन्दस्य मीमांसा भवति" (तै. ब्र.) इत्युपक्रम्य मानुषमानन्दमेकं गणयित्वा तस्मादुत्तरोत्तरं शतगुणमानन्दं गन्धर्वानारभ्य प्रजापतिपर्यन्तस्योक्त्वोच्यते, "ते ये[3] शतं प्रजापतेरानन्दाः[4] स एको ब्रह्मण आनन्दः" (तै. ब्र.) इति, एवं सतीयदे[5]तावदित्यक्षरानन्दस्य सावधिकत्वेन[6] श्रुतौ कथनादानन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात् तथोक्तिरिति ॥ ३४ ॥ ११ ॥

**इति तृतीयाध्याये तृतीयपाद एकादशमक्षरधियामित्यधिकरणम् ॥ ११ ॥**

अथ ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानं तथा भक्तिमार्गेपि भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति न वेति विचार्यते, सर्वान्तरत्वेन श्रुतौ कथनात्

---

तुरीयपादे तु पुरुषोत्तमाधारत्वमुच्यते, एतच्च प्रथमचरणस्यार्थमाहुरत्राक्षरेत्यादिना, **अत्र** भक्तानां हृदयाकाशे, **प्रकाशमानं** पुरुषोत्तमाधिष्ठानत्वविशिष्टमक्षरं **प्रकाशमान**मित्यर्थं, 'परमव्योम'पदस्य भक्तहृदयबोधकतायां मानमाहुरत **एवे**त्यादि, ननु तथाप्यक्षरस्य लोकात्मकत्वे किं गमकमत आहुर्यदक्षर इत्यादि, तत्स्वरूपं व्यापिवैकुण्ठात्मकाक्षरस्वरूपं, **इतोपि** शुकवाक्यादपि, सामान्यतद्भावाभ्यामितिसूत्रभागस्यार्थान्तर स्वयं व्याख्यातार्थानुकूलमाहुरेवं सतीत्यादिना, **एवं सति** पूर्वोक्तरीत्या पुरुषोत्तमाधिष्ठानत्वस्याक्षरे श्रुतिसिद्धत्वे सति, **सामान्य**मिति समानानां भगवद्विभूतिरूपाणां भावः सामान्यमक्षरस्य भगवद्विभूतिरूपत्वमितियावत्, **उक्तरीत्या** 'यदक्षरे परमे प्रजा'इतिश्रुत्युक्तरीत्या, **तत्र स्थिति**स्तद्भावशब्देन सौत्राक्षरे पुरुषोत्तमस्य स्थितिरुक्तेत्यर्थः, **तथा**स्मद्व्याख्यातार्थस्य याथार्थ्यम् ॥ ३३ ॥

**इयदामननात्** ॥ ३४ ॥ नन्वक्षरात् संसारनिवृत्त्यानन्दयोर्लाभात्पुरुषोत्तमापेक्षयाक्षरस्य न्यूनतायां को हेतुरिति सूत्रेण प्रदर्शयन्तः सूत्रमवतारयन्ति **नन्वि**त्यादि, **तस्य** पुरुषोत्तमापेक्षयाक्षरे न्यूनत्वस्य, **अत्रेदमवधेय**मक्षरे पुरुषोत्तमापेक्षया न्यूनत्वे प्रमाणं बोद्धव्यमित्यर्थः, **एवं सत्य**क्षरानन्दस्यैकत्वेन परिच्छेदश्रावणे सति, **इयदि**तिसूत्रभागार्थमाहुरियदेतावदिति । परिच्छिन्नानन्दवदितिहेतोरित्यर्थः ॥ ३४ ॥ ११ ॥

**इति तृतीयतृतीय एकादशाधिकरणम् ॥ ११ ॥**

---

१. अस्मात् पूर्वमेतेनाक्षरस्येत्यारभ्य पुरुषोत्तम इत्यवगम्यत इति कपुपुस्तकयो. । २ अत्रेदं ज्ञेयमिति सर्वेप्यादर्शा. । ३. य इतिपद लुप्तं कंगोपुस्तकयो । ४. आनन्द इति कंगोपुस्तकयो । ५. सति यदिति कंपुस्तके सति यत इति च गोपुस्तके । ६. सावधित्वेनेति कपुपुस्तकयो ।

तद् भवतीति पूर्वः पक्षः, तथात्वेपि "सर्वस्य वशी सर्वस्येशानः" (बृह ६. २. २२.) इत्यादिश्रुतिभिरेवमेव ज्ञानं न तु तथेतिसिद्धान्तः, अत्र तथाज्ञानाभावस्यावश्यकत्वार्थं विपरीते बाधकमाह, पूर्वस्मिन् सूत्रे ब्रह्मानन्दाद् भजनानन्दस्याधिक्यं निरूपितं, स तु भगवद्दत्तः, तद्व्यवधायकोर्थश्च प्रभुणा न सम्पाद्यते, स्वात्मत्वेन ज्ञानञ्च भजनानन्दान्तरायरूपं, यद्येतत्सम्पादयेत् तं न दद्यात्, अन्यथाभावात्, अतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य न सम्भवतीत्याशयेनाहान्तरा स्वात्मन इति ।

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥ ( ३. ३. १२. )

भगवता भक्तिमार्गे[1] स्वीयत्वेनाङ्गीकृतो य आत्मा जीवस्तस्य यदात्मत्वेन ज्ञानं तद् भजनानन्दानुभवेन्तरा व्यवधानरूपमिति भगवता तादृशे[2] जीवे तन्न सम्पाद्यत इत्यर्थः, तत्सम्पादनस्य सर्वथैवासम्भावितत्वं[3] हीनत्वञ्च ज्ञापयितुं दृष्टान्तमाह भूतग्रामवदिति, उक्तभक्तस्य विग्रहोप्यलौकिक इति तत्र लौकिको भूतग्रामो न सम्भवति हीनत्वात्तथेत्यर्थः ।

अथवा लौकिको भूतग्रामः स्त्रीपुत्रपश्वादिर्ब्रह्मानन्दानुभवे बाधकस्तथा भजनानन्दानुभवे स्वात्मत्वेन भगवज्ज्ञानमित्यर्थः ॥ ३५ ॥

ननु भक्तेष्वप्युद्धवादिषु ज्ञानोपदेशः श्रूयते, स चात्मब्रह्माभेदज्ञानफलक इत्यात्मत्वेन ज्ञानाभावे तदभेदोपदेशानुपपत्तिः स्यादिति तन्न मन्तव्यमेवैवं[4] सति भक्तिमार्गाज्ज्ञानमार्गस्योत्कर्षश्च सिध्यतीत्याशङ्क्य परिहरत्युपदेशान्तरवदिति ।

## अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

न ह्यत्राभेदज्ञानायोपदेशः किन्तु यथाग्रिमस्वर्गापवर्गाख्यपारलौकिकानन्दफलकालौकिके कर्मण्यधिकाररूपसंस्कारार्थं गायत्र्युपदेशः क्रियते तत्संस्कारसंस्कृतं तच्छरीरादिकमपि

---

**अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥** अक्षराभेदविचारेणाभेदज्ञानश्रवणानन्तरं प्रसङ्गसङ्गत्या ज्ञानमार्गे पूर्णज्ञानसम्पत्तौ यथा स्वात्मब्रह्माभेदानुभावो जायते तथा भक्तिमार्गे भक्त्युत्पत्त्यनन्तरं 'भक्त्या मामभिजानाती'त्यादिवाक्योक्तः स्वात्मपुरुषोत्तमाभेदानुभावो भवति न वेति विचार्यतेथेत्यादिना, पूर्वपक्षमाहुः सर्वान्तरत्वेनेत्यादिना, श्रुतौ कथनात् 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती'त्यादिश्रुतौ कथनात्, स च यस्मिंस्तिष्ठति तं स्वान्तः स्थापयत्ययोगोलकाग्निवत्, इत्थञ्चाभेदज्ञानं पर्यवसितं सर्वत्रेतिभावः, सिद्धान्तमाहुस्तथात्वेपीत्यादिना, तथात्वेपि वस्तुतो जीवानां ब्रह्माभिन्नत्वेपि, एवमेवज्ञानं पुरुषोत्तमभक्तानां सर्ववशित्वेन सर्वेशत्वेनैव पुरुषोत्तमज्ञानं, न तु तथा, न तु स्वात्माभेदेन ज्ञानं फलायेत्यर्थः, अत्र पुरुषोत्तमभक्तेषु, तथाज्ञानाभावस्य भगवति स्वात्माभेदज्ञानाभावस्य, विपरीते तादृशाभेदज्ञाने, पूर्वस्मिन् सूत्र 'इयदामनना'दिति सूत्रे, स तु भजनानन्दस्तु, तद्व्यवधायकः 'स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छ'दित्यादिश्रुतिभ्यो मुख्यभक्तिमार्गस्य रमणार्थत्वावगमादभेदावगमो भजनानन्दव्यवधायक इत्यर्थः, स्वात्मत्वेन ज्ञानं 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये'दित्यादिरूपं, एतदभेदज्ञानं, अग्रे भेदज्ञानदशायां, अन्यथाभावाद्रमणासम्भवात्, तादृशे जीवे भजनानन्दयोग्ये जीवे, तदभेदज्ञानं, उक्तभक्तस्य भजनानन्दयोग्यभक्तस्य, तथाभेदज्ञानमपि तथेत्यर्थः ॥ ३५ ॥

**अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥** ननु भक्तेषु स्वात्मनि ब्रह्माभेदानुभवस्य भजनानन्दानुभवप्रतिबन्धकत्वे भगवांस्तेषु कथमभेदमुपदिशति इत्यत्र समाधानं सूत्रकारस्यावतारयन्ति नन्वित्यादि, स च

---

१. मार्ग इति कैगोपुस्तकयो । २. त्वेतादृश इति कपुपुस्तकयो । ३ असम्भावितमिति कपुपुस्तकयो. । असम्भवितमिति च कैपुस्तके । ४. तन्मन्तव्यमेवेति सर्वेप्यादर्शा. । प्रदीपेपि षष्ठपङ्क्तौ तन्मन्तव्यमेवेत्युपन्यासः ।

भूतादिभिरपि नोपहतं भवति यथा वा योगोपदेशसंस्कृतस्य वपुरग्न्यादिभिर्नोपहन्यते तथा प्रकृते भक्तिभावस्य रसात्मकत्वेन संयोगविप्रयोगभावात्मकत्वाद् द्वितीयस्य प्रलयानलादतिकरालत्वेन कदाचित् तद्भावोदये तेन भक्तवपुरादेस्तिरोधानेऽग्रिमभजनानन्दानुभवप्रतिबन्धः स्यादिति तन्निवृत्त्यर्थं ज्ञानोपदेशसंस्कारसंस्कृतं तद्वपुरादिकं भगवता क्रियते न त्वात्माभेदज्ञानं भगवतोऽभिप्रेतमित्यर्थः, अन्यथोपदेशानन्तरं बदरीं गच्छन् विदुरं प्रती"हागतोऽहं विरहातुरात्मा" (भाग. ३. ४. २०.) इति न वदेदेवमेवान्येष्वपि भक्तेषु ज्ञेयं, अत्रोपदेशान्तरपदं प्रस्तुतोपदेशभिन्नमुपदेश[1]माहेति प्रस्तुतस्य तस्यान्यस्याभावादभेदपदेनाभेदोपदेश एवोच्यते, एतेन भगवान् स्वीयानां भक्तिभावप्रतिबन्धनिरासा[2]यैव सर्वं करोतीति ज्ञापितं भवति ।

अथवोपदेशान्तरवदित्यस्यायमर्थः, शरीराद्यध्यासवतस्तद्भिन्न आत्मा तत्त्वं न तु शरीरादिरित्युपदेशो ज्ञानमार्गे यथा क्रियते तेन शरीरादावात्मबुद्ध्या यः स्नेहादिः सोपगच्छति तथात्र सर्वेषामात्मनो ह्यात्मा "य आत्मनि तिष्ठन्" ( बृह. ५. ७. ) इत्यादिश्रुतिसिद्धो जीवात्मनोऽप्यात्मा पुरुषोत्तम इति बोध्यते तेन पुरुषोत्तमे निरुपधिः स्नेहस्तत्सम्बन्धे[3]त्वनात्मनि स सिध्यति, यद्यप्येवम्भावः पूर्वमप्यासीदेव तथापि सहजस्य शास्त्रार्थत्वेन ज्ञानेतिप्रमोदो[4] दार्ढ्यं च भवतीति तथा, नैतावता जीवाभेद आयाति, अग्रे जीवनसम्पत्तिरेवोपदेशकार्यं न तु तेन पूर्वभावोपमर्दः सम्भवतीति सारं, तेन ज्ञाने सर्वाधिक्यं मन्वानाय भक्तिबलप्रदर्शनञ्च सिध्यति ॥ ३६ ॥

---

उपदेशश्च, तदभेदः स्वात्मनि ब्रह्माभेदः, तन्न मन्तव्यं भक्तानां फलभोगदशायां स्वात्मनि ब्रह्मभेदज्ञानं न मन्तव्यमित्यर्थः, एवं सति स्वात्मब्रह्माभेदज्ञानस्य फलदशायां सर्वत्रावश्यकत्वे सति, परिहरति सूत्रकारः समाधत्त इत्यर्थः, तत्र सूत्रमध्येऽन्यथापदस्यार्थं आत्मत्वेन ज्ञानाभाव इत्यनेनोक्तः, अभेदानुपपत्तेरितिसूत्रभागस्यार्थस्तद् भेदोपदेशानुपपत्तिरित्यनेनोक्तः, इति तन्मन्तव्यमेवेत्यारभ्य परिहरतीत्यन्ते'नेति चेन्ने'तिसूत्रभागस्यार्थं उक्तः, परिहरति पूर्वोक्तदृष्टान्तेन सूत्रकारः परिहरतीत्यर्थः, अत्रोद्धवे साक्षाद्व्रजाङ्गनासु चोद्धवद्वारान्यत्राप्येकान्तभक्तेषु, अभेदज्ञानाय अभेदज्ञानरूपफलायेत्यर्थः, भूतादिभिः शरीरनाशकत्वेनाभिमतभूतादिभिरित्यर्थः, तथा प्रकृते देहरक्षार्थमेकान्तभक्तेषु स्वात्मनि ब्रह्माभेदोपदेश इत्यर्थः, तन्निवृत्त्यर्थं भक्तदेहानां तिरोभावनिवृत्त्यर्थं, ज्ञानोपदेशसंस्कारेति, अत्र स्वात्मनि पुरुषोत्तमाभेदोपदेशो बोध्यो 'भक्त्या मामभिजानाती'त्यनेनोक्तो न त्वक्षराभेदोपदेशो भक्तानां तादृशसंस्कारो भवितुमर्हति तस्य तादृशविरहदुःखनिवर्तकत्वात्, अन्यथाभेदोपदेशस्य मोक्षजनकत्वे, न वदेन् मुक्त एव भवेदित्यर्थः, इत्थं च तादृशविरहातुरात्मनो देहपात एव स्याद्यदि भगवता तादृशोपदेशो न कृतः स्यादितिभावः, एवमेव विरह उपदेशस्य देहरक्षार्थत्वमेव, अन्येष्वपि यथा कुरुक्षेत्रे व्रजभक्तानां वाक्य 'माहुश्च ते नलिननाभ पदारविन्दं योगीश्वरैर्हृदि विचिन्त्यमगाधबोधं संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात् सदा न' इत्यादि, ननु मूलेऽभेदानुपपत्तिरेवोक्ता न त्वभेदोपदेशानुपपत्तिरभेदोपदेशपरतया भवदीयव्याख्याने किं मानमित्यत आहुरत्रेत्यादि, उपदेशान्तरपदं दृष्टान्तप्रतिपादकमुपदेशान्तरपदमित्यर्थः, प्रस्तुतस्य दार्ष्टान्तिकस्य, अन्यस्याभेदोपदेशातिरिक्तस्य, अभेदोपदेश एवोच्यते अभेदपदलक्षणयाभेदोपदेश एवोच्यत इत्यर्थः भक्तिभावेत्यादि, भजनानन्दानुभवप्रतिबन्धको यो विरहे देहतिरोभावस्तन्निरासायैव स्वाभेदज्ञानोपदेशं तेषु करोतीत्यर्थ., अत्र भक्तिमार्गे, तेन पुरुषोत्तमस्य स्वात्मत्वेन ज्ञानेन, तत्सम्बन्धेन पुरुषोत्तमाभेदसम्बन्धेन, आत्मनि पुरुषोत्तमाभेदेन ज्ञाते जीवात्मनीत्यर्थः, स परः प्रेमा, एवम्भावः पुरुषोत्तम आत्मत्वेन प्रेमातिशयरूपो भाव इत्यर्थः, पूर्वभावः भजनानन्दानुभवरूपः ॥ ३६ ॥

---

१ °देशान्तरमाहेति बप्रकाशयो । २. °निरासादिति कं[2]पुस्तके । ३. सम्बन्धित्वेनेतिपाठ. ४. अतिप्रमोदार्थञ्चेति कं[2]गोपुस्तकयो ।

ननु "तद्योहं सोसौ योसौ सोहम्" (ऐत. आर. २. १२. २.) इत्यैतरेयके तैत्तिरीयके "चाहमस्मि ब्रह्माहम्" ( महानारा. ५. १०. ) इति पठ्यते, अत्र मध्यस्थं "ब्रह्म" पदमुभयत्र सम्बध्यते, तेनावृत्त्या व्यतिहारोतो[1] ब्रह्माभेदः सिध्यति, तथा लीलामध्यपातिभक्तानामपि "कृष्णोहमहं कृष्णः" ( भाग. १०. १९. २७. ) इतिभाव उल्लेखश्च[2] श्रूयतेतत्तदभेदज्ञानं भक्तिफलमिति पम्फुल्यमानं[3] प्रतिवादिनं तत्स्वरूपं बोधयति ।

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

रसात्मकत्वाद्भक्तेः संयोगविप्रयोगात्मकत्वाद् द्वितीयभावोद्रेके यथेतरेश्रुप्रलापादयो व्यभिचारिभावास्तथातिविगाढभावेन तदभेदस्फूर्तिरप्येकः, स न[4] तु सार्वदिकः, तदा स्वात्मानं तत्त्वेन विशिंषन्ति तं च स्वात्मत्वेन, सोत्र व्यतिहारपदार्थ इत्यर्थः, अपरश्चोद्देश्यविधेयभावस्फूर्तौ न ह्यद्वैतज्ञानमस्ति किन्तु भावनामात्रं, भक्तानां तु विरहभावे तदात्मकत्वमेवाखण्डं स्फुरति येन[5] तल्लीलां स्वतः कुर्वन्ति, एतद् यथा तथा[6] श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः, एवं सति मुख्यं यदद्वैतज्ञानं तद् भक्तिभावैकदेशव्यभिचारिभावेष्वेकतर[7] इति सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमितिभावः ॥ ३७ ॥ १२ ॥

॥ इति तृतीयाध्याये तृतीयपादे द्वादशमन्तरा भूतग्रामवदित्यधिकरणम् ॥ १२ ॥

अथेदं विचार्यते, प्राप्तभक्तेः पुरुषस्य सत्यशमदमादयो विधीयन्ते न वेति फलोपकार्यन्तरङ्गसाधनत्वाच्छुद्धौ सत्यामेव चित्ते भगवत्प्रादुर्भावसम्भवाद्विधीयन्त इति पूर्वः पक्षः।

## सैव हि सत्यादयः ॥ ३८ ॥ ( ३. ३. १३. )

तादृशस्य ते न विधीयन्त इतिसिद्धान्तः, तत्र हेतुमाह, हि यस्माद्धेतोः, सैव भक्तिरेव

---

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ नन्वित्याद्यैतरेयकवाक्यं जीवस्यादित्यपुरुषं प्रति तैत्तिरीयवाक्यं जीवस्य जलस्थब्रह्म प्रति, अत्र तैत्तिरीयवाक्ये, उभयत्रास्मदर्थे विशेषणतयास्मदर्थे विशेष्यतया चेत्यर्थः, आवृत्त्या ब्रह्मपदस्यावृत्त्येत्यर्थः, व्यतिहारो विशेषणविशेष्यभावेन व्यत्यय इत्यर्थः, उल्लेखश्च श्रूयते पञ्चाध्याय्यां भक्तानामुल्लेखः श्रूयत इत्यर्थः, भक्तिफलं भक्तिजन्यं फलमित्यर्थः, तत्स्वरूपं भक्तानां व्यतिहारस्वरूपं, बोधयति सूत्रकारो बोधयति, तदभेदः श्रीकृष्णाभेदः, एकः स व्यभिचारः, तत्त्वेन श्रीकृष्णत्वेन, विशिंषन्ति निरूपयन्ति, तं च श्रीकृष्णं च, अत्र भक्तिमार्गे, उद्देश्यविधेयभावस्फूर्तौ 'वहमस्मि' 'ब्रह्माहमस्मी' तिवाक्यार्थे उद्देश्यविधेयभावस्फूर्तावित्यर्थः, तल्लीलां भगवल्लीलां, प्रपञ्चितं पञ्चाध्याय्यां प्रपञ्चितमित्यर्थः, एवं सति भगवल्लीलायाः स्वयंकरणे सति, मुख्यं स्वस्मिन् भगवद्धर्मातिरिक्ताविषयं, भक्तिभावैकदेशो भक्तिभावयोः संयोगविप्रयोगयोर्मध्य एकदेश एको विभागोर्धभक्तिभाव इत्यर्थः, एकतर इति, तथा च भक्तिभावैकदेशो विरहभावस्तत्रत्या ये सञ्चारिभावास्तेषामप्येकतरोभेदानुभव इत्यर्थः, इतीति हेतौ, अन्येषां फलमूर्धन्यो यो भावनारूपोभेदानुभवस्तदपेक्षयोत्कृष्टो यो भगवदभेदानुभव इतरविषयक सोपि फलसाधनीभूतभक्त्येकदेशविरहभावीयव्यभिचारिभावानामेकदेश इतिहेतोरित्यर्थः, कथं वर्णनीयं न कथमपि वर्णयितुं शक्यमित्यर्थः ॥ ३७ ॥ १२ ॥

इति तृतीयतृतीये द्वादशाधिकरणम् ॥ १२ ॥

सैव हि सत्यादयः ॥ ३८ ॥ भक्तेः फलोत्कर्षमुपपाद्य फलसाधनतोप्युत्कर्षं प्रतिपादयन्त्यधिकरणप्रयोजनं वदन्तः सूत्रमवतारयन्त्यथेत्यादिना । विधीयन्ते भक्तिसिद्ध्युत्तरमपि विधीयन्ते भक्तस्य फलोद्देशेन विधीयन्ते न वेतिसंशयः, शमादिविधिर्विषयः फलेत्यादिपूर्वः पक्षः, विधीयन्ते भक्तिसिद्ध्युत्तरमपि विधीयन्त

---

१. व्यतिहारत इति कगोपुस्तकयोः । २. उन्मेषश्चेति कपुस्तके । ३. पम्फुल्लमानमिति कपुस्तके । ४. स च नेति कबगोषु । ५. ये तत्तल्लीलामिति कपुस्तके । ६. तथेति लुप्तं कपुस्तके । ७. एकतरदिति बपुस्तके ।

सत्यादिसर्वसाधनरूपा, तस्यां सत्यां[1] सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिस्ते भक्तहृदि भगवत्प्रादुर्भावात् स्वत एव भवन्तीति न विधिमपेक्षन्त इत्यर्थः ॥ ३८ ॥

पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वं भक्तेरुक्तं तद्दार्ढ्यार्थमधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेनोक्तानां कामादीनामपि भगवत्सम्बन्धान्मुक्तिसाधकत्वमुच्यते, भक्तिस्तु विहिताविहिता चेति द्विविधा, माहात्म्यज्ञानयुतेश्वरत्वेन प्रभौ निरुपधिस्नेहात्मिका विहितान्यतोप्राप्तत्वात्, कामाद्युपाधिजा सा त्वविहिता, एवमुभयविधाया अपि तस्या मुक्तिसाधकत्वमित्याह ।

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

इतरत्र विहितभक्तेरितिशेषः, कामाद्युपाधिस्नेहजरूपायां कामाद्येव मुक्तिसाधनमित्यर्थः, भगवति चित्तप्रवेशहेतुत्वात्, आदिपदात् पुत्रत्वसम्बन्धित्वादयः, स्नेहत्वाभावेप्यविहितत्वभगवद्विषयकत्वयोरविशेषाद् द्वेषादिरपि सङ्गृह्यते, तेन भगवत्सम्बन्धमात्रस्य मोक्षसाधकत्वमुक्तं भवति, तत्र विहितभक्तावित्यर्थः, शास्त्रे सर्वथा हेयत्वेनोक्ता हि गृहाः, सर्वनिवेदनपूर्वकं गृहेषु भगवत्सेवां कुर्वतां तदुपयोगित्वेन तेभ्य एव मुक्तिर्भवतीत्यर्थः, एतादृशानां गृहा भगवद्गृहा एवेतिज्ञापनायायतनपदं, तेषु तथाप्रयोगप्राचुर्यात्, आदिपदेन स्त्रीपुत्रपश्वादयः सङ्गृह्यन्ते, एतेन ज्ञानादिमार्गादुत्कर्ष उक्तो भवति, बाधकानामपि साधकत्वात्, माहात्म्यज्ञानपूर्वकस्नेहे सत्येव भर्तृत्वेन ज्ञाने कामोपि सम्भवतीतिज्ञापनाय चकारः ॥ ३९ ॥ १३ ॥

॥ इति तृतीयाध्याये तृतीयपादे त्रयोदशं सैव हीत्यधिकरणम् ॥ १३ ॥

---

इत्यर्थः, तादृशस्येति सिद्धभक्तेः, ते शमादयः, तत्र भक्तिसिद्धिमति भक्ते शमाद्यनपेक्षायां, भक्तिरेव 'भक्त्या त्वनन्यये'तिवाक्यादित्यर्थः, 'यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यद् योगेन दानधर्मेण श्रेयोभिरितरैरपि सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसे'तिभगवद्वाक्यादसद्भावयश्चरत्वाद्भक्तिरेव सर्वसाधिकेतिभक्तिसिद्धौ नेतरापेक्षेतिसिद्धान्तः ॥ ३८ ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ कामादीनामित्यादि, 'कामं क्रोधं भयं स्नेह'मित्यादिवाक्यान्मुक्तिसाधकत्वमित्यर्थः, विहिता तापनीये विहितेत्यर्थः, अन्यतः प्रमाणान्तरतः, कामाद्युपाधिजा 'गोप्यः कामाद्भयात् कंस' इत्यादिवाक्योक्तेत्यर्थः उभयविधाया 'विहिताविहिते'त्यनेनोक्ताया द्विविधाया अपीत्यर्थः, इतरत्रेत्यस्यार्थमाहुः कामादीत्यादिना, चित्तप्रवेशहेतुत्वात् कामाद्युपाधिजाताया अपि भगवति चित्तप्रवेशहेतुत्वान्मुक्तिजनकत्वमित्यर्थः, आदिपदात् कामादित्यादिपदात् सौत्रादित्यर्थः, स्नेहत्वाभावेपि द्वेषादौ स्नेहत्वाभावेपि, सौत्रतत्रपदस्यार्थमाहुर्विहितभक्ताविति, सौत्रायतनपदस्यार्थमाहुः शास्त्र इत्यादिना, तदुपयोगित्वेन सेवोपयोगित्वेन, तेभ्य आयतनादिभ्य, तेष्वित्यादि, तेषु भगवदायतनेषु हृदयादिषु, तथाप्रयोगदर्शनादायतनेतिप्रयोगदर्शनात्, एतेन मुक्तिविरोधित्वेन ज्ञानमार्गे उक्तानामपि गृहादीनां भक्तिमार्गे मुक्तिसाधकतया सूत्र उक्तत्वेन ॥ ३९ ॥ १३ ॥

इति तृतीयतृतीये त्रयोदशाधिकरणम् ॥ १३ ॥

---

१. सत्यामिति लुप्तं पुपुस्तके ।

ननु नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां चैककाले प्राप्तौ युगपदुभयोः करणासम्भवादन्यतरबाधे प्राप्ते कस्य स्यान्न कस्येति स्यात् संशयः, तत्र कर्मणां स्वस्वकाले विहितानामकरणे प्रत्यवायश्रवणादितरत्रातथाश्रवणात्[1]न्यदापि तत्कृतिसम्भवात् सावकाशत्वेन तेषामेव बाधो युक्तो न तु निरवकाशानामिति पूर्वः पक्षस्तत्र सिद्धान्तमाहादरादिति ।

## आदरादलोपः ॥ ४० ॥ ( ३. ३. १४. )

ब्रह्मयज्ञप्रकरणे तैत्तिरीयैः[2] पठ्यत "ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरं तदेतदृचाभ्युक्तं, ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासत इति" (तै. आ. २.११.१.) इति, अत्र ऋक्सम्बन्धित्वेन वर्णात्मके वस्तुतस्तु "परमे[3]" "परमव्योमा"त्मकेक्षरे ब्रह्मण्योङ्कारे वर्तमानं "तल्"लोकवेदप्रसिद्धं परं ब्रह्म "यो न वेद स[4] किमृचा करिष्यती"त्यनेन तदज्ञाने वेदाध्ययनस्य निष्फलत्वमुच्यते, एवं सति तदुक्तकर्मणोपि तथात्वमायाति, एतेन "भक्त्या मामभिजानाति" इतिवाक्यात् परब्रह्मस्वरूपज्ञानं भक्त्यैवेति भक्ताः सन्तः पुरुषोत्तमविदो ये तेषामेव वेदाध्ययनादिकं फलप्रदं नान्येषामित्युक्तं भवति, अत एव श्रीभागवतेप्युक्तं "ऋषयोपि देव युष्मत्प्रसङ्गविमुखा इह सञ्चरन्ति[5]", संसरन्तीति वा (श्रीमद्भाग.३.९.१.), अन्वये निदर्शनं, "य इद्" ईश्वरत्वेन "तत्" पूर्वोक्तं परं[6] ब्रह्म 'विदुस्त इमे' भक्ताः सर्वापेक्षया 'स'म्यक्प्रकारेण भगवन्निकटे श्रीगोकुलवैकुण्ठादि"ष्वासत इति[7]", तेनान्येषां सम्यगसत्त्वमर्थाक्षिप्तं भवति, पुरःस्थितार्थवाचीदंशब्दप्रयोगेण चान्येषामसत्तुल्यत्वं श्रुतेरभिमतमिति ज्ञायते, ऋक्शाखायामपि

---

आदरादलोपः ॥ ४० ॥ पूर्वाधिकरणे सात्त्विकभक्तानां ज्ञानासक्तिवारणाय ज्ञानमार्गाद् भक्तिमार्गस्य फलतः साधनतः स्वरूपतः सम्बन्धतश्चोत्कर्षः प्रतिपादितः, अतःपरं राजसानां भक्तानां कर्मकरणासक्तिं वारयितुं कर्मकरणनिर्णयाधिकरणसूत्रमवतारयन्ति नन्वित्यादिना, कस्य स्याद् बाधः कस्य स्यादित्यर्थः, सूत्रार्थमाहुर्ब्रह्मयज्ञेत्यादिना, तैत्तरीयैः पठ्यत आरण्यके स्वाध्यायब्राह्मणे पठ्यते, श्रुत्यर्थस्तु ब्रह्मयज्ञेन यक्ष्यमाण ओमिति प्रतिपद्यते, प्रणवाक्षरं प्रथममुच्चारयेत्, प्रतिपद्यत इति पञ्चमो लकारः, पूर्वोच्चारणे हेतुरेतद् वै यजुस्त्रयीं विद्यां प्रति, अयं यजूरूपः प्रणवमन्त्रस्त्रयीं विद्यां लक्ष्यीकृत्य प्रतिनिधिरूपो यतोस्ति, एषा वाक् सर्ववेदबीजत्वात् सर्ववेदमयी प्रणवरूपा वागित्यर्थः, तदेतदृचाभ्युक्तमिति, तदेतत् परमं ब्रह्मस्वरूपमक्षरमृचाभ्युक्तं, अनुपदोक्तर्चा स्पष्टमुक्तमित्यर्थः, यस्मिन् प्रणवार्थेक्षरात्मके लोके, अधिविश्वे विश्वात्मकमक्षरं लोकमधिकृत्य, निषेदुः स्थिता भवन्ति, यस्तन्न वेद यः पुरुषस्तत्रत्यं पुरुषोत्तमं न वेद, किमृचा करिष्यति? ऋगिति वेदमात्रोपलक्षणं, स पुरुषो वेदेन किं करिष्यति ? न किञ्चिदित्यर्थः, इदिति निर्धारणार्थकमव्ययं, समासते ब्रह्मलोके सम्यगासत इत्यर्थः, तल् लोकवेदप्रसिद्धं पुरुषोत्तमस्वरूपं, 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इतिगीतावाक्याल्लोकवेदप्रसिद्धं, एवं सति पुरुषोत्तमस्वरूपाज्ञाने वेदानां निष्फलत्वनिर्वचने सति, तदुक्तकर्मण उत्कृष्टत्वेन निर्णीतस्य पुरुषोत्तमसम्बन्धि यत् कर्म तस्य, तथात्वं उत्कृष्टत्वमित्यर्थः, अत एव पुरुषोत्तमस्वरूपाविदां वेदाध्ययनस्य निष्फलत्वादेव, ऋषयोपीतिवाक्यं तृतीयस्कन्धनवमाध्यायस्थं, अन्वये निदर्शनं वेदाध्ययनसत्त्वेपि संसारित्वकथनेन फलाभावप्रदर्शनं, वेदाध्ययनसत्त्वेन संसारित्वकथनेन फलाभावप्रदर्शनादन्वयव्यभिचारप्रदर्शकमित्यर्थः, पूर्वोक्तश्रुतिशेषं व्याकुर्वन्ति य इत्यादि, तेन उक्तश्रुत्यर्थबलेन, अन्येषां पुरुषोत्तमस्वरूपाविदां, सम्यगसत्त्वं ब्रह्मलोके सम्यगगमनमित्यर्थः, इदंशब्दप्रयोगेणे'मे समासत' इतिश्रुतौ भक्तेष्विदंशब्दप्रयोगेणेत्यर्थः, एतेन वरलभ्यभक्तावादरो निर्णीतः, साधनभक्तिरपि श्रुतिसम्मतेत्याह ऋगित्यादिना, एतच्छ्रुत्यर्थस्तु तं लोकवेद-

---

१. तथाश्रवणात् पुं । २. तैत्तिरीयकैः पुं । ३. परमव्योमात्मके बपापुंगो । ४. स लुप्तं पागो । ५. सञ्चरन्ति लुप्तं पापुं । ६. परब्रह्म पुपुंगो । ७. इति लुप्तं कपु ।

"तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन आस्य जानन्तो नाम चिद् विवक्तन[1] महस्ते विष्णो सुमतिं भजामह" (ऋक्सं १.१६४.३९.) इत्याद्यृग्भिरन्येभ्यो धर्मेभ्यः सकाशाद् भगवद्धर्मेष्वादरः श्रूयत इति तेषामलोप एवेत्यर्थः, एतेन 'नाकरणे प्रत्यवायश्रवणा'दित्यादि यदुक्तं तदपि प्रत्युक्तं वेदितव्यं, करणेपि वैयर्थ्यात् तदपरिहारात्[2], एवं सति यदकरणे प्रत्यवाय-कथनं तेन तस्मादवकाशं प्राप्य गौणकालेप्यकरणे तथेति तस्याशय इति ज्ञायते ॥ ४० ॥

नन्वेवंतात्पर्यकत्वे श्रुतेरुपनयनादिवत्[3] कर्मोपयोगित्वं भक्तितज्ज्ञानयोः[4] स्यादिति कर्मण एव प्राधान्यं न तु भक्तेः सिध्यतीत्याशङ्क्य भक्तितज्ज्ञानावश्यकर्तव्य[5]बोधक[6]श्रुति-तात्पर्यमाह ।

## उपस्थितेतस्तद्वचनात् ॥ ४१ ॥

तयोर्युगपत्करणेनुपस्थितेपि यदि पूर्वं भगवद्धर्मकरणमुच्येत तदा त्वदुक्तं स्यान्न त्वेवं किन्तूभयोर्युगपत्करण उपस्थिते बलाबलविचारे क्रियमाणेत आदराद्धेतोस्तद्वचनाद् भगवद्धर्माणां बलवत्त्वेनालोपवचनान्न[7] कर्माङ्गत्वमेतेषां सिध्यतीत्यर्थः ॥ ४१ ॥ १४ ॥

इति तृतीयाध्याये तृतीयपादे चतुर्दशमादरादलोप इत्यधिकरणम् ॥ १४ ॥

---

प्रसिद्धं भगवन्तं, उ इति सम्बोधनार्थमव्ययं, श्रुतय आहुर्भो स्तोतारो भगवद्वर्णनपराः, तं पूर्व्यं सर्वकारणकारणं, यथाविदो अयथावद् भगवत्स्वरूपवेत्तारो भवन्तः, ऋतस्य सूनृतवाणीस्वरूपस्य वेदस्य, गर्भमन्तर्निहितं, जनुषा यावजीवं जन्मना, पिपर्तन सन्तुष्टं कुरुतदेहेन्द्रियादिसकलस्वीयपदार्थानां भगवत्येव विनियोगं कृत्वा सन्तोषय-न्त्विविभावः, इत्थं च श्रुतिरपि सर्वप्रकारैर्भगवद्धर्मादरमेव सूचयति स्फुटं, सर्वप्रकारैर्भगवति प्रपत्त्या सन्तोषा-जनने जन्मवैफल्यं स्यादत उत्तरार्धेनानुकूल्यमाहास्येत्यादि, आ समन्तात्, अस्य पुरुषोत्तमस्य, नाम जानन्तो-खण्डब्रह्मात्मकत्वेन नामस्वरूपं जानन्तः, विवक्तन विशेषेण वदत, नामस्वरूपं ज्ञात्वा तदेव कीर्तयतेत्यर्थः, अनुकल्पेन कथं सन्तोषेत आह चिदिति, नाम सच्चिदानन्दस्वरूपं भवतीत्यर्थः, तथा च नाम्नः सच्चिदा-नन्दरूपत्वात् तेन भगवत्स्वरूपावबोधात् ततः सन्तोषणमपि भगवतो भवतीत्यर्थः, नामस्वरूपाज्ञाने तदुपायमाहु-र्मह इत्यादिना, हे विष्णो, ते त्वत्सम्बन्धिनं, महस्त्वत्तेजोरूपं, सुमतिं सम्यग्भगवत्स्वरूपं जानन्तं भगवद्भक्तं गुरुं भजामहे, तथा चान्यो भजतु मा वा वयं तु भजामह इति श्रुतयः स्वकृत्यमावेदयन्ति, इत्थं च भगवद्धर्मप्राप्त्युपायेष्वादरबोधनाद् भगवद्धर्मेष्वत्यादरो बोधितः श्रुतीनां ज्ञेयः, इत्थं च भगवद्धर्माणामवश्यकर्तव्यता-बोधनात् तद्विरुद्धाकरणे प्रत्यवायाभावोपि श्रुत्यैव बोधित इति फलितं, करणेपीत्यादि, श्रुत्या भगवद्धर्माणामनुष्ठेयानां परित्यागेन प्रत्यवायपरिहाराय कृतानां कर्मणां वैयर्थ्यात्, श्रुतिविरोधेन वैयर्थ्यात्, तदपरिहारात् कर्मणां वैयर्थ्ये प्रत्यवायस्याप्यपरिहार इत्यर्थः, एवं सति भगवद्धर्माणामवश्यानुष्ठेयत्वे सति, तेन प्रत्यवायकथनेन, अवकाशं प्राप्य भक्त्युपयोगिपदार्थानुष्ठायोत्तरकालेवकाशं प्राप्येत्यर्थः, अकरणे नित्यकर्मणामकरणे, तथा प्रत्यवाय-सम्भव इत्यर्थः, तस्याशयः प्रत्यवायबोधकवाक्यानामाशय इत्यर्थः ॥ ४० ॥

उपस्थितेतस्तद्वचनात् ॥ ४१ ॥ सूत्रावतरणमाहुर्नन्वित्यादिना, एवं श्रुतिभ्यां भगवद्धर्माणामवश्यानुष्ठेय-त्वेन बोधने कृते तेषामनुष्ठाने कृत एव श्रौतकर्मणां सफलता नान्यथेत्येवं सतीत्यर्थः, कर्मोपयोगित्वं पूर्वाङ्गवत् कर्मणां साफल्याय कर्मोपयोगित्वमित्यर्थः, तयोः श्रौतभगवद्धर्मयोः, अत आदरादुक्तश्रुतिभ्यामादरात्, एवं सूत्रार्थेनैव सर्वं समाहितम् ॥ ४१ ॥ १४ ॥

इति तृतीयतृतीये चतुर्दशाधिकरणम् ॥ १४ ॥

---

१. विविक्तनेति सर्वत्राशुद्धमपि । २. तदपरीहारात् कपुगो । ३. वत् लुप्तं क । ४. भक्तितज्ज्ञानयोः बपुंगो । ५. भक्तितज्ज्ञान° बपापुपुंगो । ६. °प्रबोधक° कंबगो । ७. लोपवचनाद् ब्रह्मकर्माङ्गत्वं गो ।

अथेदं विचार्यते पुरुषोत्तमविदः कर्म कर्तव्यं न वेति, तत्र मार्गत्रयफलात्मके तस्मिन् सम्पन्ने पुनस्तस्य स्वतोपुरुषार्थस्य करणमप्रयोजकमिति न कर्तव्यमेवेति पूर्वः[1] पक्षः, तत्र सिद्धान्तमाह तन्निर्धारणेत्यादिना ।

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ (३. ३. १५.)

अत्रेदमाकूतं, भक्तिमार्गे हि मर्यादापुष्टिभेदेनास्ति द्वैविध्यं, तत्र मर्यादायां पुष्टौ चतौदृशस्य न कर्मकरणं सम्भवति, अत एव तैत्तिरीयकोपनिषत्सु पठ्यत "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन इति" (तै. ब्रा.) इति, "एतꣳह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवम्" (तै. ब्र.) इति, श्रूयते चोभयविधानामपि कर्मकरणमम्बरीषोद्धवपाण्डवादीनां, एवं सत्युभयविधानां मध्ये मम कर्मकरणे प्रभोरिच्छास्तीति यो निर्धारयति स करोति, य एतद्विपरीतं स न करोति यथा शुकजडादिः, एतन्निर्धारश्च भगवदधीनोतो भक्तेष्वपि तन्निर्धारणानियमोतः कर्म कर्तव्यमेवातन्निर्धारणे त्वाधुनिकानां, एवं सतीच्छाज्ञानवता तत्सन्देहवता च कर्म कर्तव्यमिति सिद्धं, तत्रोभयोः फलं वदन्नादावाद्यस्याह तद्दृष्टेस्तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्य स तथा तस्य, जीवकृतकर्मफलात् पृथग् भिन्नमीश्वरकृतकर्मणो यत् फलं वेदमर्यादारक्षा लोकसङ्ग्रहश्च तत् फलमित्यर्थः, हिशब्देन "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत कुर्याद् विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहं" (श्रीमद्भग. ३. २५.) इति— भगवद्वाक्यरूपोपपत्तिः सूचिता, द्वितीयस्य मध्यमाधिकारात् कालसङ्गादि[2]जनितचित्तमालिन्येन भगवत्सान्निध्ये प्रतिबन्धः स्यात् तन्निवृत्तिस्तत्कृतकर्मणः फलमित्यर्थः ।

अथवा पूर्वसूत्राभ्यां भगवद्धर्मकृतेरावश्यकत्वमुक्तं, सर्वात्मभाववतो "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह" (श्रीमद्भाग. ११. १२. १४.) इतिभगवद्वचनाद् विधेयाभावादसम्भवाच्च कर्मज्ञानयोर्विहितभक्तेश्च करणं न सम्भवतीति तस्य किं फलमित्याकाङ्क्षापूरणाय तदनुवदति तन्निर्धारणे[3]त्यादिना, तस्मिन् धर्मिण्येव न तु धर्मेष्वपि दृष्टिर्यस्य स तथा, दृष्टिपदेन ज्ञानमात्रमुच्यते, तेनान्यविषयकदर्शनश्रवणादिज्ञानाभाव उक्तो भवति, एतादृशस्य प्रभुसङ्ग[4]-

---

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ मार्गत्रयफलात्मके कर्मज्ञानभक्तिमार्गत्रयं तस्य फलात्मके, तस्मिन् पुरुषोत्तमज्ञाने, तस्य कर्मणः, एतादृशस्य भगवदानन्दानुभवकर्तुर्भक्तस्य, अत एव तादृशभक्तयो. कर्मकरणस्यानावश्यकत्वादेव, उभयविधानां मर्यादापुष्टिभेदेन द्विविधानामपि भक्तानां, एतद्विपरीतं कर्मकरणे भगवदिच्छाभावरूपं विपरीतं, तन्निर्धारणानियमो भगवदिच्छातदभावयोरनिर्णये कर्मकरणतदभावयोरनिर्णयादनियमः, कर्तव्यमेवाकरणे प्रत्यवायश्रवणात्, पाक्षिकोपि दोषः परिहरणीय इति— न्यायात् कर्म कर्तव्यमेवेत्यर्थः, अतन्निर्धारणे भगवदिच्छाया अनिर्धारणे, इच्छाज्ञानवता कर्म कर्तव्यमितीच्छाज्ञानवता, तन्निर्धारणानियम इतिसूत्रभागं व्याख्याय तद्दृष्टेः पृथगितिसूत्रभागार्थमाहुस्तत्रेत्यादिना, आद्यस्य कर्मकरणेच्छाज्ञानवतः, हिशब्देन सौत्रहिशब्देन, द्वितीयस्य करणाकरणविषयकभगवदिच्छाज्ञानरहितस्य, तन्निवृत्तिः कालकृतप्रतिबन्धनिवृत्तिः, साधारणरीत्या सूत्रार्थं व्याख्यायासाधारणार्थं वक्तुं सूत्रस्यार्थान्तरमाहुरथवेत्यादि, आवश्यकत्वं श्रौतादिनित्यधर्मकरणापेक्षया भगवद्धर्माणामावश्यकत्वं, विधेयाभावाज् ज्ञानकर्मवैराग्यादिरूपविधेयाभावात्, असम्भवाच्च तस्य भक्तस्य ब्रह्मभावे पुरुषोत्तमातिरिक्तास्फूर्त्या विधेयसामान्यस्य करणासम्भवाच्चेत्यर्थः, किं फलमेकस्यापि साधनस्याभावान्न किञ्चित् फलं भविष्यतीत्यर्थः, तदनुवदति सूत्रकारस्तस्य किं फलमितिपूर्वपक्षं तन्निर्धारणानियम इतिसूत्रभागेनानुवदति, तद्दृष्टेरितिसूत्रभागस्यार्थमाहुस्तस्मिन्नित्यादिना, तथा तद्दृष्टिपदवाच्यः, एतादृशस्य पुरुषोत्तमातिरिक्ताकारशालिज्ञानसामान्यशून्यस्य, सङ्गमात्रं

---

१. पूर्वपक्ष. कबपागो । २. कामसङ्गादि° बपा । ३. तन्निर्धारणेत्यादिना लुप्तं पा । ४. सङ्गममात्रं सर्वत्र ।

मात्रमपेक्षितं भग[1]वदुक्तं, तत्र स्वसङ्गमावधिकस्य भक्तस्य सङ्गमसमयनिर्धारो भवत्यतो[2]दृशस्य तस्य स नेति तन्निर्धारणानि[3]यमः, एतेन फलप्राप्तेः प्रागवस्थोक्ता भवति, फलस्वरूपमाह पृथक् फलमिति, अस्यानिर्वचनीयत्वादनुभवैकवेद्यत्वान्मोक्षान्तं यत् फलं शास्त्र उक्तं तस्माद् भिन्नमित्युक्तं, अन्यत्र हि धर्माणां साधनत्वं, यत्र फलमेव साधनं तत्फलस्यानिर्वाच्यता युक्तैवेति हिशब्देनाह, ज्ञानमोक्षादिना तद्भावाप्रतिबन्धश्च फलमित्यर्थः, प्रासङ्गिकमेतत् सूत्रम् ॥ ४२ ॥ १५ ॥

इति तृतीयाध्याये तृतीयपादे पञ्चदशं तन्निर्धारणाधिकरणम् ॥ १५ ॥

अथेदं विचार्यते, सर्वात्मभा[4]वो विहितकर्मज्ञानभक्तिसाध्यो न वेति, तत्र पुराणे "तस्मात् त्वमुद्धवोत्सृज्य" (भाग. ११. १२. १४.) इत्युपक्रम्य "मामेकमेव शरणमात्मानं सर्वदेहिनां याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम्" ( भाग ११. १२. १५. ) इतिवाक्ये मुक्त्यात्मकाकुतोभयसाधनरूपशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यतेतः साधनसाध्य इति पूर्वः पक्षः, तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपमाह प्रदानवदिति ।

## प्रदानवदे[5]वं तदुक्तम् ॥ ४३ ॥ ( ३. ३. १६. )

यद्ययं साधनोपदेशः स्या[6]त् तदा साधन[7]त्वेन सर्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वं, नत्वेवं, किन्तु तदुक्तं भगवदुक्तं, प्रदानवत्, प्रकृष्टं दानं [8]प्रदानं [9]वरदानमिति यावत् तद्वदेवेत्यर्थः, वरेण हि स्वकृत्यसाध्यमपि सिध्यतीति तथा, शत्रुसंसा[10]रभयादिनापि [11]शरणाप्तिर्भवति, तत्र न तस्याः पुरुषार्थत्वं किन्तु तन्निवृत्तेरेव, प्रकृतेपि सर्वात्मभावे स्वरूपप्राप्तिविलम्बासहिष्णुत्वेना[12]त्यार्तौ स्वरूपातिरिक्तास्फूर्त्या तद्भावस्वाभाव्येन गुणगानादिसाधनेषु कृतेष्वप्यप्राप्तौ

रासलीलासम्बन्धिसङ्गमात्रं, भगवदुक्त'मानन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'यास्यसे ह्यकुतोभय'मित्यादिना भगवदुक्तं, अतादृशस्य पुरुषोत्तमीयसर्वात्मभावशून्यस्य, स भगवत्प्राप्तिसमयनिर्धारः, नेति तन्निर्धारणानियम इतिसूत्रभागेनार्थ उक्त इत्यर्थः, एतेनोक्तरूपसूत्रभागार्थकरणेन, सौत्रपृथक्पदस्यार्थमाहुः फलमिति, अस्य सङ्गमरूपफलस्य, अनिर्वचनीयत्वाद् 'यतो वाचो निवर्तन्त' इत्यनेनानिर्वचनीयत्वोक्तेः, शास्त्र उक्तं गणितानन्दत्वेन शास्त्र उक्तं, भिन्नमगणितानन्दरूपं, अन्यत्रागणितानन्दफलातिरिक्तफले, फलमेव परमानन्दस्फूर्तिरेव, मोक्षादिनेत्यादिपदेन भेदेनानुभवाभावः, फलं सर्वात्मभावस्यार्थवशसम्पन्नं प्रासङ्गिकं फलमित्यर्थः, प्रासङ्गिकं नत्वधिकरणरूपमित्यर्थः ॥ ४२ ॥ १५ ॥

इति तृतीयतृतीये पञ्चदशाधिकरणम् ॥ १५ ॥

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ पूर्वाधिकरणद्वयेन राजसभक्तानां कर्मासक्तिं वारयित्वोत्कृष्टभक्तेः फलं च प्रदर्श्यैतःपरं मुख्या भक्तिः केन साधनेन भवतीतिजिज्ञासायामिदमधिकरणमारभन्तेथेत्यादिना, सन्देहमुक्त्वा पूर्वपक्षमाहुस्तत्रेत्यादिना, 'तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनां मामेकमेव शरणमात्मानं सर्वदेहिनां याहि सर्वात्मभावेन यास्यसे ह्यकुतोभय'मितिवाक्य इत्यस्याग्रे कथनेनेत्यत्रान्वयः, स्वप्रयत्नः शरणगमनानुकूलः स्वप्रयत्नः, तदुपदेशस्वरूपं सर्वात्मभावेन शरणगमनरूपोपदेशस्वरूपं, सूत्रार्थेन समाधानमाहुस्तदुक्तमिति, तदर्थो भगवदित्यादि, तथा सर्वात्मभावेन शरणगमनं स्वकृत्यसाध्यं, तन्निवृत्तेर्भयनिवृत्तेः फलत्वमित्यर्थः, प्रकृतेपि भजनानन्दानुभवार्थं सर्वात्मभावेन शरणगमनेपि, सर्वात्मभावे सिद्ध इत्यर्थः, तद्भावः सर्वात्मभावः, अप्राप्तौ

१. तत्र भगवदुक्त° सर्वत्र । २. एतादृशस्य कबपापुपुं । ३. °निर्णयः कें । ४. °भावो हि पुं । ५. °वदेव हि कें । ६. स्यात् स्यात् बप्रपागो । ७. साध्यत्वेन कें । ८. प्रदानं लुप्तं कैंबपापुं । ९. वरदानं लुप्तं कपु । १०. °संहार° कैंबपापुंगोवि । ११. °प्राप्ति° पा । १२. अत्यार्त्या बपागो ।

स्वाशक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छ[1]ति, एतच्च न स्वकृतिसाध्यमिति सुष्ठूक्तं प्रदान-वदि[2]ति, भक्तस्येप्सितोर्थो हि वरो भवति, सर्वात्मभावस्यानुभवैकवेद्यत्वेन पूर्वमज्ञानेनेप्सित-त्वासम्भवेपि स्वत एव कृपया दानमिति वेदित्युक्तम्।

अथवा सर्वात्मभावेन मां याहीति सम्बन्धः।

यद्वा प्रदानवदित्यस्य पूर्ववदेव व्याकृतिः, तत्र साधनासाध्यत्वे प्रमाणमाह तदुक्त-मिति, "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः" (कठ. २. २२.) इतिश्रुत्या वरणातिरिक्तसाधनाप्राप्यत्वमुच्यत इति तत् तथैवेत्यर्थः, भग-वदुक्ताकुतोभयपदस्य न मुक्तिरर्थः, किन्तु "यतो वाचः" (तै. ब्र.) इत्यादिनानन्दस्य स्वरूपमुक्त्वा "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै. ब्र.) इतिश्रुत्युक्तं यत् पूर्वोक्त[3]रसात्मकपुरुषोत्तमभजनानन्दानुभवोत्तरकालीन'मकुतोभयं' तदर्थः ॥ ४३ ॥ १६ ॥

इति तृतीयाध्याये तृतीयपादे षोडशं प्रदानवदित्यधिकरणम् ॥ १६ ॥

ननु प्रतिबन्धककालादृष्टादिसद्भावेपि वरणकार्यं स्यादुत तन्निवृत्तावितिसंशये प्रति-बन्धकाभावस्य सर्वत्र हेतुत्वात् तन्निवृत्तावेव तथेति पूर्वपक्षे सिद्धान्तमाह लिङ्गेत्यादिना।

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥ ( ३. ३. १७. )

सामोपनिषत्सु नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमत एव मुख्या ब्रह्मविद्योप-देशार्हा न भवतीति ज्ञात्वा सनत्कुमारो नारदाधिकारं च ज्ञातुं "यद् वेत्थ तेन मोपसीद" (छान्दो. ९. १. २.) इत्युक्तो[4] नारदः स्वविदितं[5]मृग्वेदादिसर्पदेवजनविद्यान्तमुक्त्वा "सोहं भगवो[6] मन्त्रविदेवास्मि" (छान्दो. ९.१.३.) इति स्वाधिकारमुक्त्वाह "नात्मविच्छ्रुत५ ह्येव मे भगवद्दृशेभ्य-स्तरति शोकमात्मविदिति सोहं भगवः शोचामि[7] तं मा[8] भगवान् शोकस्य पारं[9] तारयतु" (छान्दो. ९.१.३.) इति नारदेनोक्तः सनत्कुमारः पूर्वसात् पूर्वसाद् भूयो वदेति पृष्टः, भूयःपद-

परमानन्दस्वरूपाप्राप्तौ, प्रदानवदिति पूर्वोक्तशरणगमनं वरप्रदानवदेवेत्यर्थः, सर्वात्मभावस्य फलोपहितसर्वात्मभाव-स्य, यदित्युक्तं फलसमानताप्रदर्शनं पूर्वदशायां कृतमित्यर्थः, 'याहि सर्वात्मभावेने'तिवाक्यस्यार्थमाहुरथवेत्यादिना, 'शरण'मिति मामित्यस्य विशेषणं, पुराणवाक्यस्यात्र विषयत्वेनोपन्यासादेतद्विचारस्याश्रौतत्वशङ्का स्यादिति तन्निरासाय पूर्वोक्तसूत्रत्रयेपि विचारस्य श्रौतत्वप्रदर्शनायाहुर्यद्वेत्यादि, पूर्ववदेव वरदानत्वेनैव, तत्र वरदाने, तदुक्तं वरदानस्य स्वकृत्यसाध्यत्वमुक्तं, तत् तथैव सर्वात्मभावस्य साधनासाध्यत्वमुक्तं तद् यथार्थमेवेत्यर्थः, अकुतोभयं तदर्थो 'रसो वै सः' 'रस५ह्येवायं लब्ध्वानन्दी भवती'तिप्रभृतिश्रुत्युक्तं रसस्वरूपमेवाकुतोभयपदार्थं इत्यर्थः ॥ ४३ ॥ १६ ॥

॥ इति तृतीयतृतीये षोडशाधिकरणम् ॥ १६ ॥

लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥४४॥ पूर्वाधिकरणे सर्वात्मभावरूपभक्तेर्वरणलभ्यत्वमुपपादितं, 'यमे-वैष' इतिश्रुतौ तु परमात्मनो वरणैकलभ्यत्वं प्रतीयत इतिदूषणं समाधातुमधिकरणसूत्रमवतारयन्ति नन्वित्यादिना, उतेति संशयोल्लेखः, कालादृष्टस्वभावादिप्रतिबन्धकसद्भावे वरणकार्यसर्वात्मभावो भवति न वेतिसंशयस्वरूपं, तन्निवृत्ताविति प्रतिबन्धकाभावस्य कार्यसामान्यं प्रति कारणतायाः सर्वशास्त्रसम्मतत्वात् तन्निवृत्तावेवेत्यर्थः, तथा वरणेन सर्वात्मभावसिद्धिः, सिद्धान्तमाह सूत्रकारः सिद्धान्तमाहेत्यर्थः, सिद्धान्तप्रकारोपदर्शनमाहुः सामेत्यादिना, तथा च सामोपनिषत्सु वरणमेवासहायशूरतया सर्वात्मभावसम्पादकं सर्वात्मभाव एव च वरणस्य गमकं लिङ्गमिति सामोपनिषत्सिद्धान्तो बोध्यः, संवादे'धीहि भगव इति होपससाद सनत्कुमारं नारद इतिसंवादेधीहीति ण्यन्तः प्रयोगः, अध्यापयेत्यर्थः, प्रथमत एवाधिकारनिर्णयात् पूर्वमेव, यद् वेत्थेत्यादि, 'यद् वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति होवाच' यत् त्वं जानासि तत्कथनेन मदुपसन्नो भवेति स्वाधीतं वद ततोतिरिक्तं तुभ्यं कथयिष्या-मीत्युक्तवान्, इत्युक्तो नारदः सनत्कुमारेणाज्ञप्तः, उक्त्वा ऋग्वेदादिपुराणान्तं स्वविदितं सर्वमुक्त्वा, नाहमात्म-विदिति महापुरुषाणामाप्तानां वचसा स्वस्य शोकेन च ज्ञातं नाहमात्मविदिति, भगव इति सम्बोधनं, पूर्वस्मादि-

१. गच्छामः कैंगो। २. न वदिति ब। ३. पूर्वोक्तं बपा। ४. इत्युक्तौ पुं। ५. विदितामृग्...विद्यां तमुक्त्वा क। ६. भगवतः कैंगो प्रायः सर्वत्र। ७. शोचिमि ब। ८. मां बपा। ९. परं पारं पा।

माधिक्यार्थकं[1], नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराशाप्राणान् ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वा प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्त्वा विजिज्ञासितव्यत्वेन[2] सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्त्वा सुखस्वरूपजिज्ञासायामाह[3] "यो वै भूमा तत् सुखम्" ( छान्दो. ९. २३. १. ) इति, भूम्नः स्वरूपजिज्ञासायामाह "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा" ( छान्दो. ९. २४. १. ) इति, एतेन सर्वात्मभावस्वरूपमेवोक्तं भवति, तत्र विरहभावेतिविगाढभावेन सर्वत्र तदेव स्फुरतीति "स एवाधस्तात्" ( छान्दो. ९.२५.१. ) इत्यादिनोक्त्वा कदाचित् स्वस्मिन्नेव भगवत्त्वस्फूर्तिरपि भवतीत्य"थाहङ्कारादेशः" (छान्दो. ९. २५. १.) इत्यादिना तामुक्त्वैतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाह "अथात आत्मादेश" ( छान्दो. ९. २५. २. ) इत्यादिना, ततः संयोगभावे सति पूर्वभावेन सर्वोपमर्दिना स्वप्राणादिसर्वतिरोधानेनाग्रिमलीलानुपयोगित्वं न शङ्कनीयं यतो भगवत एव सर्वसम्पत्तिरित्याशयेन "तस्य ह वा एतस्यैवं पश्यतः" इत्युपक्रम्या"त्मन[4] एवेदꣳ सर्वम्" (छान्दो. ९.२६.१.) इत्युक्तवान्, ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाहा"हार[5]शुद्धौ" (छान्दो. ९. २६. २.) इत्यादिना, प्राणपोषको ह्याहारस्तस्य सदोषत्वे तु न किञ्चित् सिध्यति, एवं सति भ[6]गवदतिरिक्तस्य स्वतो निर्दोषत्वाभावाद् भगवानेव चेत् प्राणपोषको भवेत् तदा सर्वं सम्पद्यते, स च सर्वात्मभावे सत्येव

त्यादि, उत्तरोत्तरं स्वयं ज्ञानं बाहुल्येन वदेति सनत्कुमारेण नारदः पृष्ट इत्यर्थः, उपासनाविषयत्वेनोक्त्वा त्वया पूर्वोक्तानि यावन्ति तावन्ति नामोपासनाधिकरूपाणि भवन्तीत्युक्त्वेत्यर्थः, तथा च नाम भगवतः प्रसिद्धं, वाक् भगवच्चरित्रप्रतिपादिका, मनःपदेन भगवत्सम्बन्धिप्रभाद्यनुकूलान्तःकरणव्यापारविशेष , सङ्कल्पः कर्तव्यनिर्णयार्थमन्तःकरणीयव्यापारविशेषः, चित्तं भूतभविष्यवर्तमानस्वकृतिनिर्णायकोन्तःकरणीयवृत्तिविशेषः, ध्यानं निदिध्यासनं, ज्ञानं शास्त्रोक्तविशिष्टज्ञानं, बलमन्नभक्षणजं मनसो विज्ञेयविभावनसामर्थ्यं, अन्नमापस्तेजआकाशश्च प्रसिद्धः, स्मरः स्मरणमप्रयत्नश्चित्तव्यापारः, आशाप्राप्तार्थविषयिणी कामना, एषामुत्तरोत्तरमाधिक्येनोपासनामुक्त्वेत्यर्थः, सत्यवादित्वेनोक्त्वा पूर्वोपासकेभ्य उत्कृष्टत्वेनोक्त्वेत्यर्थः, सुखस्वरूपजिज्ञासायां नारदस्य सुखस्वरूपजिज्ञासायां, आह सनत्कुमार आह, एतेन स्वरतिविषयान्यस्यास्फूर्तिनिर्वचनेन, तामुक्त्वा स्वरतिविषयस्याहम्भावेन स्फूर्तिमुक्त्वेत्यर्थः, एतेषां 'नान्यत् पश्यति' सर्वत्र दिक्षु तमेव च पश्यतीत्यादिभावानां, आत्मादेशः भगवन्मात्रस्फूर्तिरित्यर्थः, ततः पूर्णविरहदशासम्पत्त्यनन्तरं, अग्रिमलीलानुपयोगित्वं वरणसम्पादितविरहभावस्य द्वितीयदललीलानुपयोगित्वं, यतः वक्ष्यमाणोपपत्तितः, सर्वसम्पत्तिर्वरणविरहभावाग्रिमलीलोपयोगिदेहादिरक्षाणां सम्पत्तिः, तस्य ह वा एतस्य वरणेनोद्भवं प्रत्युक्तसर्वात्मभावपूर्वकप्राप्तशरणभावस्य, एवं पश्यतः स्वे महिम्न्यक्षरे स्थितं भूमानं पश्यतः, इदं सर्वं वरणादिसंयोगान्तं सर्वमित्यर्थः, ततो भगवत एव सर्वोपपत्तितः, तद्भावस्वरूपं भक्तभावस्य सर्वात्मभावरूपस्य स्वरूपं, एतस्य सर्वात्मभावस्य, श्लोकैरित्यश्रोक्ताः श्लोकास्तु 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वꣳ हि पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतञ्च दश चैकश्च सहस्राणि च विंशतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिप्रतिम्भे सर्वग्रन्थीनां प्रविमोक्ष' इति, अर्थस्तु, पश्यो भूम्नः पुरुषोत्तमस्य द्रष्टा मृत्युप्रभृतीन् न पश्यतीत्यर्थः, सर्वꣳ हि पश्यः पश्यति पश्यः सर्वं भूमात्मकं पश्यति, इदमेव सर्वानिष्टनिवारणे हेतुरुक्तः, सर्वश इति सर्वदेशकालेष्वित्यर्थः, नानाप्रकारैराविर्भूय भूमा भक्तेष्टं साधयतीत्यादि,स भूमा,प्रतिलम्भे प्राप्तौ, सत्त्वशुद्धौ मूलकारणमाहारशुद्धिः,सा च 'त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः उच्छिष्टभोजिनो दासास्तव माया जये मही'ति भगवद्दत्तप्रसादेन भवतीति बोध्यं,सर्वग्रन्थीनां प्रविमोक्ष इति,अविद्याकामकृतानां सर्वग्रन्थीनां प्रविमोक्षो ज्ञानिनोप्यपेक्षयोत्कृष्टो मोक्ष इत्यर्थः, पूर्वोक्तस्य सर्वस्य तात्पर्यमाहुरेवं सतीत्यादिना, एवं सति श्रुत्या वरणसर्वात्मभावात्मरक्षणादेः प्रतिपादने कृते सति, सर्वं सम्पद्यते वर-

१. अधिकार्थं बपा । २. जिज्ञासितव्येन कपुगो । ३. सुखरूप° कं । ४. आत्मत. गो । ५. आहार. कपु । ६. सत्यतिरिक्तस्य कं ।

भवति, स च तथा, तेन[1] प्रकारेणेत्यर्थः, तद् वरणं विना न भवति, तच्चोक्तकार्यानुमेयमिति वरणलिङ्गं सर्वात्मभावस्तस्यैव भूयस्त्वात् सर्वतोधिकत्वात् तद् वरणमेव सर्वतः कालादेर्बलीय इत्यर्थः, यल्लिङ्गमेव सर्वतोधिकं तस्य तथात्वे किं वाच्यमितिकैमुतिकन्यायोपि सूचितः, ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायामाह तदपीति, उक्तमिति शेषः, "अन्तरा भूतग्रामवत् स्वात्मनः" ( ब्र. सू. ३. ३. ३५. ) इतिसूत्रेण, तच्चोपपादितमस्माभिः ॥ ४४ ॥

त[2]त्राह, नात्र वरणलिङ्गभूयस्त्वं निरूप्यते किन्त्वात्मज्ञानप्रकारविशेष एव, तथा हि, पूर्वप्रपाठक आत्मना सहाभेदः सर्वस्य निरूपितः श्वेतकेतूपाख्यानेन, अग्रिमे च "सोऽहं भगवो मन्त्रविदेवास्मि नात्मविद्" (छान्दो. ७. १. ३.) इत्यादिना नारदस्यात्मजिज्ञासैवोक्ता, एवं सत्युत्तरमपि तद्विषयकमेव भवितुमर्हत्यत आत्मप्रकरणत्वादुभयोः प्रपाठकयोः पूर्वस्मिन् यदभेद उक्तस्तस्यैव स्वरूप"मात्मन एवेद९ सर्वम्" ( छान्दो. ७. २६. १. ) इत्यन्तेनोक्तमिति पूर्वोक्तप्रकारा[3]दन्येन प्रकारेणात्माभेद एव सर्वस्योक्त इति[4] तदेवाह ।

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

पूर्वस्य पूर्वप्रपाठकोक्तात्माभेदज्ञानस्य विकल्पः प्रकारभेद एवाग्रेपि निरूप्यते, तत्रोपपत्तिमाह प्रकरणादिति, एतत्[5]तूपपादितं, अत्र सिद्धान्ति[6]सम्मतमेव[7] दृष्टान्तमाह तद्धृदयसंवादार्थं क्रिया मानसवदिति, यथा पूजनप्रकरणे बाह्यं तत्क्रियारूपमुच्यत आन्तरं तु मनोव्यापाररूपमुच्यते, न ह्येतावतान्यतरस्य तद्भिन्नत्वं वक्तुं शक्यं प्रकरणाभेदात् तथेहापीत्यर्थः ॥ ४५ ॥

---

णादिपुरुषोत्तमप्राप्त्यन्तं सर्वं सम्पद्यत इत्यर्थः, सूत्रार्थं वक्तुमाहुः स चेत्यादि, स च भगवतः प्राणपोषकभावश्च, स च सर्वात्मभावश्च, तेनेत्यादि, अनुग्रहेण यद् वरणं तत्प्रकारेणेत्यर्थः, तत् सर्वात्मभावरूपं कार्यं, तच्च वरणरूपं कारणं, उक्तकार्यानुमेयं सर्वात्मभावरूपकार्यानुमेयं, यल्लिङ्गं सर्वात्मभावरूपं वरणस्य लिङ्गं, तस्य वरणस्य, तथात्वे कालाद्यपेक्षया बलिष्ठत्वे, प्रतिबन्धशङ्कायां स्वात्मनि ब्रह्माभेदज्ञाने सति विरहभावस्यासम्भवेन प्रतिबन्धकत्वशङ्कायामित्यर्थः, उक्तमिति सूत्रेणेत्यत्रान्वेति, फलपूर्वदशायां विरहभावो भगवता सम्पाद्यते भजनानन्ददित्सायामिति स एव प्रतिबन्धं न करिष्यतीति तदधिकरण एव प्रपञ्चितमिति सा शङ्का तत एव निरस्ता बोध्या ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥ पूर्वोक्तसिद्धान्तं दृढीकर्तुं सूत्रकारः सूत्रद्वयेनाशङ्कते, तदवतारयन्ति तत्राहेत्याद्युक्तमित्यन्तेन ग्रन्थेन, तत्राह पूर्वप्रतिपादितेर्थे वादी पूर्वपक्षमाहेत्यर्थः, अत्र पूर्वसूत्रे निरूपित इत्यर्थः, अग्रिमे नारदोक्ते, तद्विषयकं सर्वस्मिन् ब्रह्माभेदविषयकं, पूर्वोक्तप्रकाराद् वरणादिसर्वात्मभावप्रकारात्, तदेवाहात्माभेदज्ञानमेवाह पूर्वविकल्पइतिसूत्रेण सूत्रकार आहेत्यर्थः, सूत्रार्थमाहुः पूर्वस्येत्यादिना, अग्रेपि नवमेस्मिन् प्रपाठकेपि, एतदभेदनिरूपणं, उपपादितमेतत्सूत्रावतरण एवोपपादितमित्यर्थः, सिद्धान्तिसम्मतं पूर्वपक्षे यः सिद्धान्ती तत्सम्मतमित्यर्थः, आह सूत्रकार आह, तद्धृदयसंवादार्थं वादिहृदयदृढीकरणार्थं, अन्यतरस्य बाह्याभ्यन्तरपूजनयोर्मध्य एकस्यापि, तद्भिन्नत्वं पूजनभिन्नत्वं, तथेत्यादि, तथा प्रकृतेपि पूर्वपूर्वकारणत्वेनोत्तरोत्तराणि मुक्तिसाधनत्वेनोक्त्वा 'यो वै भूमा तत् सुख'मित्यनेनापि साधनान्येवोक्तानि 'नान्यत् पश्यती'त्यादिकमपि मुक्तिदशाप्रतिपादनमेव न तु भगवदभिमतविरहसर्वात्मभावप्रतिपादनमित्यर्थः ॥ ४५ ॥

---

१. तेन...त्यर्थः लुप्तं कँबप्रपा । २. अत्राह कपुपुँ । ३. प्रकारादन्येन लुप्तं कँगो । ४. इति लुप्तं पा । ५. एतदे° पुँ । ६. सिद्धान्त° कपुगो । ७. एव लुप्तं पा ।

## अतिदेशाच्च ॥ ४६ ॥

नामरूपात्मकं हि जगत्, तत् पूर्वं 'सर्व'शब्देनानूद्य तस्मिन् ब्रह्माभेदो निरूपितोऽग्रे त्वृगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते "नामैवैतन्नामोपास्स्व" ( छान्दो. ९. १. ४. ) इति, इतोपि हेतोर्ज्ञानप्रकारभेद एवाग्रे निरूप्यत इत्यर्थः ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति, यदुक्तं सनत्कुमारनारदसंवाद आत्मज्ञानप्रकारविशेष एव निरूप्यत इति तन्न, किन्तु विद्यैव निरूप्यत इति, अत्रेदमाकूतं, 'नायमात्मा' (कठ. २. २२., मुण्ड. ३. ३.) इतिश्रुतिरितरसाधननिषेधपूर्वकं वरणस्य साधनत्वमुक्त्वा वृतलभ्यत्वे हेतुत्वं वदन् वरणविषयमप्याह "तस्यैष आत्मा वृणुते तनुं स्वा"मिति, 'तस्य' वृतस्यात्मन 'एष' भगवान् 'आत्मा', अत एव तत्तनूरूपः स जीवात्मा, तद्वरणस्यावश्यकत्वज्ञापनाय 'स्वाम्' इति, सर्वो हि स्वकीयां तनुमात्मीयत्वेनात्मत्वेन च वृणुते, तद्विशिष्ट एव भोगान् भुङ्क्ते, अत एव तैत्तिरीयकोपनिषत्स्वपि "ब्रह्मविदाप्नोति परम्" ( तै. ब्र. ) इति सामान्यतो ब्रह्मविदः परब्रह्मप्राप्तिमुक्त्वाग्रिमर्चा विशेषतो वदन् "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै. ब्र. ) इति परब्रह्मस्वरूपमुक्त्वा "यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" ( तै. ब्र. ) इत्युक्तं, एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चितमस्माभिः ।

किञ्च पुरुषोत्तमलाभहेतुभूतं तु भक्तिमार्गे यद् वरणं स्वीयत्वेनाङ्गीकाररूपं तदेव न त्वन्यादृशमपीतिज्ञापनायाग्रे वदति "नायमात्मा बलहीनेन लभ्यः" ( मुण्ड. ३. ४. ) इति,

---

अतिदेशाच्च ॥ ४६ ॥ तत् पूर्वं नामरूपात्मकं जगत् पूर्वप्रपाठके, सर्वशब्देनानूद्य 'तदात्म्यमिदं सर्व'मिति सर्वशब्देनानूद्य, अग्रे त्वस्मिन् प्रपाठके तु, ऋगादिविद्या नारदोक्तर्गादिविद्याः, इतोपि हेतो रूपात्मकप्रपञ्चे ब्रह्माभेदस्तदतिदेशस्य नामप्रपञ्चे ब्रह्माभेदस्य कृतत्वाद्धेतोरित्यर्थ., तथा चास्मिन् प्रपाठके ज्ञानप्रकार एव निरूप्यते न तु भवदभिमतभक्तिप्रकार इत्यर्थः ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥ विद्यैव सर्वात्मभावस्वरूपज्ञानविशेषिका विद्यैवेत्यर्थः, निरूप्यते द्वितीयप्रपाठके निरूप्यते न तु मोक्षोपयोगिज्ञानरूपेत्यर्थ., विद्यापदेन सर्वात्मभावरूपज्ञानविशेष एवेतिनियमस्तन्नियमनिर्वाहाय प्रकृतश्रुतीनां वरणश्रुत्येकवाक्यतया तात्पर्यनिर्वाहाय वरणश्रुतिं व्याकर्तुमाहुरत्रेत्यादि, नायमात्मेतिश्रुतिरिति, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य' इति, वरणविषयो भक्तजीवः, 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति, मुण्डके कठवल्ल्यां चैतच्छ्रुतिद्वयमस्ति, तस्य वृतभक्तजीवस्य, एष पुरुषोत्तमः, स जीवः पुरुषोत्तमस्य तनुरूपः, वरणं च भोगार्थं, तनुविशिष्टस्यैवात्मनः सर्वत्र भोगदर्शनात्, अत एव यतस्तज्जीवस्य भगवानात्मातस्तस्य तनुरूपत्वमित्यर्थः, ननु माध्यन्दिनान्तर्यामिब्राह्मणे 'यस्यात्मे'त्यनेन सर्वजीवानां भगवच्छरीरत्वश्रवणात् कथमेकान्ततो वृतजीवस्यैव तच्छरीरत्वमित्यत आहुस्तद्वरणस्येत्यादि, तथा च 'य आत्मानमन्तरो यमयती'तिविशेषश्रावणाद् 'यमात्मा न वेदे'त्यनेन ज्ञाननिवृत्तेश्च भक्तजीवस्यैव वरणावश्यकत्वमन्यथा पूर्वार्धेन 'नायमात्मे'त्यादिना साधनालभ्यत्वोक्तिरनुपपन्ना स्याद्, भक्तभिन्नानां साधनेन मुक्तिलाभस्य श्रुतिसिद्धत्वात्, तस्मात् सर्वात्मभावरूपो भगवान् भक्तानामेव वरणेनैव लभ्य इति तस्यैव वरणावश्यकतेति श्रुतिसिद्धं, अत एव वरणस्य

---

१. तत्पूर्वकं कैगो । २. अग्रे तत् कै । ३ तत्रादिश्यते कपुगो । ४. तत्रेद° पुं । ५. साधनमुक्त्वा पा । ६. हेतुं पुंगो । ७. आत्मत्वेन लुप्तं कैगो । ८. °रीयोप° पुं । ९. विशेषतोवदत् बगो ।

'बल'कार्यं हि प्रभुवशीकरणं, तच्च "हं भक्तपराधीनः" ( भाग. ९. ४. ६३. ) "वशे कुर्वन्ति मां भक्त्या" ( भाग. ९. ४. ६६. ) इत्यादिवाक्यै"र्भक्त्यैवे"ति 'बल'शब्देन भक्तिरुच्यते, अन्यथा पूर्ववाक्य एवेतरनिषेधस्य कृतत्वात् पुनर्बलाभावनिषेधं[1] न कुर्यात्, वरणमात्रस्य हेतुत्वमुक्त्वा[2] बलस्य तथात्वं च[3] न वदेत्, एतादृशस्य हृदि भगवत्प्राकट्यं भवतीत्याह "एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम" ( मुण्ड. ३. २. ४. ) इति, अस्यार्थः'स्त्वेष आत्मा'त्मनोप्यात्मा[4] पुरुषोत्तमो 'ब्रह्मा'क्षरब्रह्मात्मकं 'धाम विशत'इति[5], 'धाम'पदं पुरुषोत्तमस्याक्षरं ब्रह्म सहजं स्थानमितिज्ञापनार्थमुक्तं, अन्यथा न वदेत्, तेन तद्धृदये स्वस्थानमाविर्भावयित्वा स्वयं तत्र प्रकटीभवतीति ज्ञाप्यते[6], प्रकृते श्वेतकेतूपाख्याने परोक्षवादेन ब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते, अग्रे तु[7] न ह्येतावतैवाधिष्ठानात्मकाक्षराविर्भावो भवति पुरुषोत्तमस्य वा—तथा सति ज्ञानिनां सर्वेषां परप्राप्तिः स्यात्, नत्वेवं, "भक्त्याहमेकया ग्राह्यः" ( भाग. ११. २४. ११. ) इत्यादिवाक्यैः—किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यामितिज्ञापनाय भक्त एव तद्बोधाधिकारीत्यपि ज्ञापयितुं भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च संवाद उक्तः, त'त्रात्म'शब्देन पुरुषोत्तम उच्यते, भक्तिमार्गे तु निरुपधिस्नेहविषयः स एव यतः, स तु सर्वात्मभावैकसमधिगम्य इति सर्वात्मभाव एव विद्या—शब्देनोच्यते, परमकाष्ठापन्नं यद् वस्तु तदेव हि वेदान्तेषु मुख्यत्वेन प्रतिपाद्यं, अक्षरब्रह्मादिकं तु तद्विभूतिरूपत्वेन तदुपयोगित्वेन मध्यमाधिकारिफलत्वेन च प्रतिपाद्यते, तेन तत्र विद्याशब्दप्रयोग औपचारिकः, सर्वात्मभाव एव मुख्यः, युक्तं चैतत्, अक्षरविषयिण्या विद्यायाः सकाशात् तत उत्तमविषयिण्यास्तस्या उत्तमत्वं, एवं सति पूर्वप्रपाठकस्याक्षरप्रकरणत्वादुत्तरस्य पुरुषोत्तमप्रकरणत्वात् त्वद्धेत्वसिद्धित्वादुक्तन्यायेन[8] विद्यैवाग्रिमप्रपाठके निरूप्यते न तु पूर्वोक्तात्मज्ञानप्रकारविशेषः[9], अत्र हेतुमाह निर्धारणादिति, "सुखं त्वेव विजिज्ञासितव्यम्" (छान्दो. ९.२२.१.) इत्युक्त्वा सुखस्वरूपमाह "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः" (छान्दो.९.२३.१.) इति, अक्षरपर्यन्तं गणितानन्दत्वात् पुरुषोत्तम-

---

भगवता सह सर्वभोगार्थत्वादेव, अन्यादृशं भगवतोन्त स्थितत्वमात्ररूपं, अन्यथा 'नायमात्मा बलहीनेन लभ्य' इत्यनुपपन्नं स्याद् बलस्य भगवद्वशीकरणहेतोर्भक्तिभिन्नस्यासत्त्वात्, पूर्ववाक्ये 'नायमात्मे'तिश्रुतौ, बलस्य तथात्वं भगवत्प्राप्यभावप्रयोजकाभावप्रतियोगित्वं बलस्य न वदेदित्यर्थः, तथा च वरणलभ्यभक्त्यैव पुरुषोत्तमलाभः, पुरुषोत्तमस्वरूपं तु 'ब्रह्मविदाप्नोति पर'मिति तैत्तिरीयक उक्तं, प्रथममुण्डकेपि 'यत् तदद्रेश्यमग्राह्य'मित्यादिना सर्वकारणत्वेनाक्षर स्तुतं, द्वितीयमुण्डके 'सुदीप्तात् पावका'दित्यादिना सजातीयविजातीयकार्यजनकत्वमुक्त्वा 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्रोक्षरात् परतः पर' इत्यनेनाक्षरभिन्नत्वेन निरूपितं बोध्यं, ब्रह्माभेदबोधनेनाक्षरब्रह्माभेदस्य प्रथमप्रपाठके बोधनेन, एतावतैवाक्षराभेदग्रहमात्रेणैव, तथा सत्यक्षराभेदग्रहमात्रेणाविर्भावे सति, सत्सङ्गेन नारदस्य सनत्कुमारसङ्गेन, तद्बोधाधिकारी सनत्कुमारोक्तोपदेशाधिकारी, तत्रोभयोः संवादे, स एव पुरुषोत्तम एव, सर्वात्मभाव एवेति, एवकारेणाक्षराभेदनिरासः, तद्विभूतित्वेन पुरुषोत्तमविभूतित्वेन प्रतिपाद्यत इत्यर्थः, तदुपेत्यादि, तथाक्षरस्य वेदान्तेषूपपादनं परप्राप्त्युपयोगित्वेन मध्यमाधिकारिफलार्थं वा न तु सर्वोत्तमत्वेनेत्यर्थः, औपचारिकः परम्परया विद्यासाधके लाक्षणिक इत्यर्थः,त्वद्धेत्वसिद्धिः प्रपाठकद्वयस्यापि भिन्नप्रकरणत्वाद् वाद्युक्तैकप्रकरण त्वद्धेतोरसिद्धिरित्यर्थः, विद्यैव सर्वात्मभावरूपा विद्यैव, अत्र पुरुषोत्तमस्य सर्वात्मभावस्य विद्यात्वे, आह सूत्रकार आहेत्यर्थः, हेतुं निरूपयन्ति सुखं त्वेवेत्यादिना, तथा च पूर्वं 'सदेव सौम्ये'त्यादिनाक्षराभेदज्ञानमुक्तमस्मिन् प्रपाठके तु निरवध्यानन्दरूपमुच्यत इति स्फुटः प्रकरणभेदः, भूमा

---

१. निषेधनं कगो । २. °मुक्त्वा पा । अशुद्धम् । ३. च लुप्तं कपु । ४. आत्मपुरुषोत्तमः कपु । ५. इति लुप्तं गो । ६ ज्ञायते कपुगो । ७. तु लुप्तं कपु । ८. तद्धेत्व° कगो । ९. अपूर्वो° कगो ।

स्यैवानन्दमयत्वेन निरवधिसुखात्मकत्वात् स एव भूमा तस्यैव विजिज्ञासितव्यत्वेन निर्धारणादित्यर्थः, भूम्नो लक्षणमग्र उच्यते "यत्र नान्यत् पश्यति" (छान्दो. ९. २४. १.) इत्यादिना, यस्मिन् ज्ञाते सति 'नान्यत् पश्यती'त्यर्थः, तथा सति सर्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकमनुपपन्नमितिशङ्का तु "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणाः" (छान्दो. ९. २६. १.) इत्यादिना निरस्ता वेदितव्या, तैः सह लीलां चिकीर्षतः प्रभुत एव सर्वं सम्पद्यते न तु भक्तसामर्थ्येनेतिभावेन तदुक्तेः ॥ ४७ ॥

## दर्शनाच्च ॥ ४८ ॥

दृश्यते च सर्वात्मभाववतां भक्तानां व्रजसीमन्तिनीप्रभृतीनां पूर्वमितरविस्मृतिर्भगवत्स्पर्शादिनाग्रे सर्वसामर्थ्यमिति व्यासः स्वानुभवं प्रमाणत्वेनाह, उक्तं च श्रीभागवते ताभिरेव "चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये पादौ पदं न चलतस्तव" (श्रीमद्भाग. १०. २६. ३४.) इत्यादिना, तेन ज्ञानशक्तिक्रियाशक्तितिरोधानमुक्तं भवति, अग्रे तदाविर्भावादिकं स्फुटमेव ॥ ४८ ॥

ननु सनत्कुमारनारदसंवादात्मकमान्तमेकवाक्यं, तत्रोपक्रमे "मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोहं भगवः शोचामि" (छान्दो. ९. १. ३.) इत्यादिना स्वात्मज्ञानस्यैवोपक्रमादुपसंहारोपि तमादायैवोचितः, अग्रे चे'दात्म'-पदानामीश्वरपरत्वं स्याद् वाक्यभेद उपक्रमविरोधश्च स्यात्, तस्माद् वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेष एवायमिति मन्तव्यमित्यत उत्तरं पठति ।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं वाक्यानुरोधाद् वरणजसर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यं, वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात्, एतद्बलीयस्त्वं तु "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम्" (जै. सू. ३. ३. १३.) इतिजैमिनीयसूत्रे सिद्धं, प्रकृत इतरसाधननिषेधपूर्वकं "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" (मुण्ड. ३. २. ३.) इतिश्रुतिर्वरणमात्रलभ्यत्वमाह, एतदग्रे च "नायमात्मा बलहीनेन लभ्य" (मुण्ड. ३. २. ३.) इत्युपक्रम्य "तैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम" (मुण्ड. ३. २. ४.) इतिश्रुतिः पठ्यते, एतच्च "विद्यैव तु निर्धारणात्" (ब्र. सू. ३. ३. ४७.) इत्यत्र निरूपितं, अपरं च

---

गणनाशून्यः, अल्पे गणितानन्दे, ननु भूम्नो ज्ञानस्य सर्वात्मभावरूपत्वे किं नियामकमत आहुर्भूम्न इत्यादि, 'नान्यत् पश्यती'त्यादि सर्वात्मभावस्वरूपम् ॥ ४७ ॥

दर्शनाच्च ॥ ४८ ॥ शब्देनान्यादर्शनं साधयित्वा स्वप्रत्यक्षेण समाधिरूपेणान्यादर्शनं साधयतीत्याशयेनाहुर्दृश्यत इत्यादि ॥ ४८ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ आन्तं समाप्तिपर्यन्तं, एकवाक्यं एकार्थकं विभागे साकाङ्क्षं चेत्यर्थः, स्वात्मज्ञानस्य स्वात्मनाक्षराभेदज्ञानस्य, तमुपक्रमं, अग्रे द्वितीयप्रपाठके, ईश्वरपरत्वमक्षरात् परब्रह्मपरत्वं, सूत्रमवतारयन्ति नैवमित्यादि, वाक्यानुरोधात् वाक्यप्रमाणानुरोधादित्यर्थः, वरणजं श्रुतिप्रमाणबोधितं यद् वरणं तज्जमित्यर्थ, श्रुतिभिर्लिङ्गभूयस्त्वं प्रकटं प्रदर्शयन्ति प्रकृत इत्यादिना, एतच्च वरणमारभ्यात्मप्रवेशपर्यन्तमुक्तंचेत्यर्थः, इत्यत्रेति सूत्रव्याख्याने, अपरं च विशेषतः पुरुषोत्तमविद्यानिर्णायकं चेत्यर्थः, अग्र उच्यत इतिशेषः,

---

१. जिज्ञासि° पा । २. तद्भूम्न° पुं । ३. तव लुप्तं बपागो, पादमूलमधिकं पुं । ४. °कं मान्तं क, आन्तं लुप्तं कैबपागो, °मेव दापुं । ५. °वं कैबपुगो । ६. ते बगो । ७. बाधा कैपुपुंगो । ८. वरणेन कैबपागो । ९. पर° कपु ।

"नात्मवित् तरति शोकमात्मवित्" (छान्दो. ९. १. ३.) इतिनारदवाक्यानुवादयो'रात्म'पदमुत्तम-प्रश्नात्मकेन[1] लिङ्गेन पुरुषोत्तमपरमिति ज्ञायते, स हि सर्वेभ्य उत्तमोतो 'ब्रह्मे'त्युपास्यत्वेन सनत्कुमारोक्तं[2] प्रतिरूपं तत'स्ततो भूयोस्ती'त्यपृच्छत्, अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा नापृच्छत् किन्तु तत्प्राप्त्यर्थमत्यार्त्या[3] "कस्मिन् प्रतिष्ठितः" (छान्दो. ९.२४.१.) इत्यपृच्छत्, तदा सर्वात्मभाववत्स्वेव प्रतिष्ठित इत्याशयेन सर्वात्मभावलिङ्गात्मकं भावं "स एवाधस्तात्" ( छान्दो. ९. २५. २५. ) इत्यादिनोक्तवान् ॥ ४९ ॥

नन्वेतया[4] श्रुत्या न सर्वात्मभावलिङ्गात्मको भाव उच्यते किन्तु व्यापकत्वेन सर्वरूपत्वेन स्वभिन्नाधिकरणाभावादन्यत्राप्रतिष्ठितत्वमेवोच्यत इत्यत उत्तरं पठति ।

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५० ॥

भूमस्वरूपं श्रुत्वा "स भगवः कस्मिन् प्रतिष्ठितः" (छान्दो. ९. २४. १.) इतिप्रश्ने "स्वे महिम्नि" (छान्दो. ९. २४. १.) इत्युत्तरं, तदर्थस्तु स्वीयत्वेन वृते भक्ते यो 'महिम'रूपः सर्वात्मभावस्तस्मिन्निति स्वरूपात्मके महिम्नीति वा भगवदात्मकत्वात् सर्वात्मभावस्य, तदितरस्य साक्षात् पुरुषोत्तमाप्रापकत्वादस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहिम[5]रूपोयमेव भाव इति महिमशब्देनोच्यते, स तु विप्रयोगभावोदये सत्येव सम्यग् ज्ञातो भवति व्यभिचारिभावैः, ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः "स एवाधस्तात्" (छान्दो.९.२५.१.) इत्यादिना "स्मै-वेद्ंसर्वम्" (छान्दो. ९. २६. १.) इत्यन्तेन निरूप्य भूमप्रतिष्ठाधिकरणप्रश्ने यदुत्तरितं[6] "स्वे महिम्नि" (छान्दो. ९. २४. १.) इति तमेवानुबध्नाति "स वा एषः" (छान्दो. ९. २५. २.) इत्यनेन, 'त'च्छब्दस्य पूर्वपरामर्शित्वात्, एवं सति त्वदुक्तमन्यत्राप्रतिष्ठितत्वं चेदिह प्रतिपाद्यं स्यात् तदोक्त-

---

'नात्मवित् तरति शोकमात्मवित्', अत्र जीवात्मनो दुःखित्वादक्षरात्मनश्च गणितानन्दत्वादेतदुभयस्मादुत्तमात्मज्ञानादेव शोकतरणमितिश्रुत्यर्थः, नारदवाक्यानुवादयोरात्मपदमिति, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां' 'नायमात्मा बलहीनेन लभ्य'इत्युपक्र'म्यैतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे'तिश्रुतिसमुदायरूप एकोनुवादः, द्वितीयस्तु 'नात्मवित् तरति शोक'मितिश्रुतिरूपः, एतयोरनुवादयोरात्मपदमित्यर्थः, लिङ्गेन उक्तश्रुतिसमुदायेन पुरुषोत्तमरूपबोधकलिङ्गेनेत्यर्थः, प्रतिरूपमुक्तापेक्षयोत्तरोत्तरमधिकमित्यर्थः, तथा नापृच्छदितोप्यग्रे भूयोस्तीति नापृच्छदित्यर्थः, इत्यादिनोक्तवान् भक्तानां सर्वदिक्षु पुरुषोत्तमभानात् सर्वात्मभावमेव सनत्कुमारो नारदं प्रत्युक्तवानित्यर्थः ॥ ४९ ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ५० ॥ अग्रिमसूत्रमवतारयन्ति नन्वित्यादिना, एतया श्रुत्या 'स एवाधस्तादि'त्यादिनारभ्या'स्मैवेदं सर्व'मित्यन्तेनोक्तद्वितीयप्रश्नश्रुत्या, अन्यत्र स्वात्मकस्वमहिम्नि, उच्यते स भूमा 'कस्मिन् प्रतिष्ठित' इतिप्रश्ने 'स्वे महिम्नि प्रतिष्ठित' इत्युत्तरं श्रुत्योच्यत इत्यर्थः । तदर्थस्तु 'स्वे महिम्नि प्रतिष्ठित' इतिश्रुत्यर्थस्तु, 'स्व'पदस्यात्मीयरूपमर्थमादावुक्त्वात्मरूपार्थपरतया व्याख्यानमाहुः स्वरूपात्मक इति, तदितरस्य पूर्वोक्तसर्वात्मभावभिन्नस्याक्षराभेदज्ञानस्य, 'ब्रह्मविदाप्नोति पर'मितिश्रुत्याक्षरभेदज्ञानस्याप्यन्तःकरणशोधनद्वारा पुरुषोत्तमप्रापकत्वात्, साक्षादिति, अयमेव 'स एवाधस्ता'दित्यादिश्रुत्युक्तः पुरुषोत्तमसर्वात्मभाव एव 'ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेद'मित्यादिस्वरूपः, ते व्यभिचारिभावाः त्रिविधास्तिस्रो विधास्तदादेशाहङ्कारादेशात्मादेशरूपा ज्ञापका यस्येत्यर्थः, ताश्च तिस्रो विधा 'जातोहं खलानां ननु दण्डधृक्' 'कस्याश्चित् पूतनायन्त्या' इत्याद्युदाहरणेषु सर्वेषु च द्रष्टव्या , 'स्वे महिम्नी'तीति, 'स्वे महिम्नी'तिश्रुत्या कृत्वा, तमेव पूर्वोक्तसर्वात्मभावमेव, अनुबध्नाति सर्वात्मभाववद्भक्ते नियमयति, भक्तसर्वात्मभावनियामकत्वं पूर्वश्रुतेरस्ति, तत्र प्रमाणमाहुः 'स वा एष' इत्यादिना 'स वा एष एवं पश्यन्नि'त्यत्र शब्दस्य पूर्वोक्तसर्वात्मभाव-

---

१. प्रश्नात्मकत्वेन कपु । २. °क्तं कपु । ३. अत्यार्तो ? क । ४. न त्वे° क । ५. महित्व° कबपुपुंगो, महिमत्व° पा । ६. °त्तरं कंगो ।

रीत्यानुबन्धं न कुर्यादहङ्कारादेशादिकं च न कुर्यादुक्तप्रश्नोत्तरं स्वान्यवस्त्वभावान्न क्वापीत्येव वदेत्, तस्मादस्मदुक्त एव मार्गोनुसर्तव्यः, आदिपदात् त्रिविधा ये भावा उक्तास्तेषामपि स्वरूप"मेवं पश्यन्नेवं मन्वान एवं विजानन्" (छान्दो. ७. २५. २.) इतिक्रमेण यन्निरूपितं तदुच्यते, पूर्वं ह्यतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यति, एतदेवोक्त"मेवं पश्य"न्नित्यनेन, ततः किञ्चिद्बाह्यानुसन्धानेहङ्कारादेशो भवति, स त्वहमेव सर्वतः स्वकृतिसामर्थ्ये[1]न तं प्रकटीकरिष्य इति मनुते, करोति च तथा, अत एवान्वेषणगुणगाने कृते ताभिः, एतदेवोक्त'मेवं मन्वान' इत्यनेन, ततो निरुपधिस्नेहविषयः पुरुषोत्तम 'आत्म'शब्देनोच्यत इति तदादेशो भवति, तदा पूर्वकृतस्वसाधनवैफल्यज्ञानेनातिदैन्ययुक्तसहजस्नेहजविविधभाववान् भवति, तदेतदुक्त'मेवं विजान'न्नित्यनेन, अत एवोपसर्ग उक्तः, ततोतिदैन्ये[2]नाविर्भावे सति या अवस्थास्ता निरूपिता 'आत्मरति'रित्यादिना, अत्रा'त्म'शब्दाः पुरुषोत्तमवाचका ज्ञेयाः, अन्यथौपचारिकत्वं स्यात्, मुख्ये सम्भवति तस्यायुक्तत्वात्, ननु सर्वात्मभावस्यापि मुक्तौ पर्यवसानमुत नेतिसंशयनिरासाय दृष्टान्तमाह प्रज्ञान्तरपृथक्त्ववदिति, मुमुक्षुभक्तस्य स्वेष्टदातृत्वेन भगवद्विषयिणी या प्रज्ञा सा सर्वात्मभाववद्भक्तप्रज्ञातः प्रज्ञान्तरमित्युच्यते, तच्च कर्मज्ञान[3]तदितरभक्तप्रज्ञाभ्यः पार्थक्येन तदिष्टमेव साधयति यथा[4] तथा सर्वात्मभाववतो भक्तस्य यत्प्रकारिका भगवद्विषयिणी प्रज्ञा तमेव प्रकारं स भावः साधयति नान्यमिति न मुक्तौ पर्यवसानमित्यर्थः, अत्र व्यासः स्वानुभवं प्रमाणत्वेनाह दृष्टश्चेति, उक्तभाववतो भक्तस्य प्रभुस्वरूपदर्शनाद्यतिरिक्तफलाभावोस्माभिरेव दृष्ट इत्यर्थः, एतादृशा अनेके दृष्टा इति नैकस्य नाम गृहीतं, अत्र शब्दमपि प्रमाणमाह तदुक्तमिति, भगवतेतिशेषः, श्रीभागवते दुर्वाससं प्र"त्यहं भक्तपराधीनः" ( भाग. ९. ४. ६३. ) इत्युपक्रम्य "वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" (भाग. ९. ४. ६६ .) इति, यो हि यद्वशीकृतः स तदिच्छानुरूपमेव करोत्यतो न सायुज्यादिदानं किन्तु भजनानन्ददानमेव, तेषां मुक्त्यनिच्छा तु "मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयं नेच्छन्ति सेवया पूर्णाः कुतोन्यत् कालविप्लुतं स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" (भाग. ९. ४. ६७–६९.) इत्यादिवाक्यसहस्रैर्निर्णीयते ॥ ५० ॥

---

वद्भक्तपरामर्शकत्वात् तस्यैव दर्शनाद्युच्यत इति पूर्वोक्तभक्त एव महिमाधिकरणमिति भक्त एव भूम्नः प्रतिष्ठोक्तेति फलितं, इह 'स्वे महिम्नि प्रतिष्ठित' इतिश्रुतौ, उक्तरीत्येत्यादि, 'स्वे महिम्नि प्रतिष्ठित' इति, 'स वा एष एवं पश्यन्नि'तिश्रुतिभ्यां सर्वात्मभावस्य तादृशदर्शनस्य च तादृशभक्ते नियमनं कुर्यादित्यर्थः, अहङ्कारेत्यादि, तदादेशाहङ्कारादेशात्मादेशादिरूपाः सर्वात्मभावबोधिकास्तिस्रोवस्थाश्च न वर्णयेदित्यर्थः, तस्मादुक्तश्रुतीनां त्वदुक्तरीत्या व्याख्यानासम्भवात्, आदिपदात् सूत्रस्थादिपदात्, त्रिविधस्तदादेशाहङ्कारादेशात्मादेशादिशब्दैर्बोध्या, तत्रादौ तदादेशस्यात्ममात्रस्फूर्तिरूपस्यादौ स्वरूपं निरूपयन्ति पूर्वं ह्यतीत्यादिना, पूर्वमहङ्कारात्मदेशाभ्यां पूर्वं, तदितरास्फूर्त्या भगवदतिरिक्तास्फूर्त्या, अहङ्कारादेशस्वरूपमाहुस्ततो निरुपधीत्यादिना, सूत्रांशान्तरव्याख्यानमाहुर्नन्वित्यादि, प्रज्ञान्तरं पृथक्त्ववत्, अन्या प्रज्ञा प्रज्ञान्तरं सर्वात्मभाववद्भिन्नपुरुषोत्तममुमुक्षुभक्तप्रज्ञारूपं यस्मिन् यथान्यमुमुक्षुप्रज्ञापृथक्त्वं तद्वत् सर्वात्मभावस्यापि मुक्तिपर्यवसायिभिन्नत्वं बोध्यमित्यर्थः, तदिष्टं मोक्षरूपं 'तमेव' 'सोश्नुते सर्वान् कामानि'त्याद्युक्तमेव रूपं, स भाव उक्तसर्वात्मभावः, अत्र सर्वात्मभावस्योक्तरूपफलसाधकतायाम् ॥ ५० ॥

---

१. °सामर्थ्येन कपु । २. °दैन्यावि° कंगो । ३. °ज्ञानं कंबपागो । ४. यथा लुप्तं कंबपागो ।

ननु "नान्यत् पश्यति" इत्यारभ्य सर्वस्य प्रपाठकस्य सर्वात्मभावनिरूपकत्वोक्तिरनुपपन्नात एवात्मपदानां पुरुषोत्तमपरत्वोक्तिश्च, यतस्तस्य मुक्तावपि कामाभावः प्रतिपाद्यतेत्र तु तस्य "सर्वेषु लोकेषु कामचारो भवति" (छान्दो. ९. २५. २.) इतिश्रुतिः पठ्यते, एवं[3] सति न तन्निरूपणमत्रेति वाच्यं तद्भाववतोप्यन्यकामवत्त्वमिति वा, द्वितीयस्योक्तप्रमाणपराहतत्वेनाद्यपक्ष एवाश्रयणीय इतिपूर्वपक्षं निरस्यति नेति ।

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

तत्र हेतुमाह **सामान्यादप्युपलब्धेरिति**, तत्समानधर्मयोगादपि तत्प्रयोगः श्रुतावुपलभ्यतेनेकशो यतः प्रकृतेपि विविधानां लोकानां विविधसुखप्रधानत्वाद् भगवत्सम्बन्धिषु 'सर्वेषु' सुखेषु 'कामचारो भवती'तिश्रुतेरर्थो ज्ञेयः, ननु यथाश्रुत एवार्थोस्तु तत्राह **न हि लोकापत्तिरिति**, सर्वात्मभाववत इति, प्रकरणात् 'नान्यत् पश्यति' इत्यादिधर्मविशिष्टस्यात्मनः प्राणादिसर्ववतो लोकसम्बन्धो युक्तिसहोपि नेतिज्ञापनाय हिशब्दः, किञ्चैतदग्रे "न पश्यो मृत्युं पश्यति" (छान्दो. ९. २६. २.) इतिश्रुत्या यथा मृत्युनिषेधः क्रियते तथा'त्मन एवेदꣳ सर्वम्" (छान्दो. ९. २६. २.) इतिश्रुत्यै'व'कारेणात्मातिरिक्तव्यवच्छेदः क्रियत इति **मृत्युवल्लोकोपि** न सम्बध्यत इत्याह **मृत्युवदिति**, तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्योरेव यन्निदर्शनमुक्तं तेन भक्तानां लोकान्तरसम्बन्धस्तत्तुल्य इति ज्ञाप्यते, अत एव "नोत दुःखम्" (छान्दो. ९. २६. २.) इति दुःखसामान्यनिषेधोग्रे कृतः ॥ ५१ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः ॥ ५२ ॥

अत्र हेत्वन्तरमाहास्मिन्नेव श्लोके "सर्वमाप्नोति सर्वशः" (छान्दो. ९. २६. २.) इति **परेण** पदेन **शब्दस्य** श्रुतिवाक्यस्य "आत्मन एवेदꣳ सर्वम्" (छान्दो. ९. २६. २.) इति यत् पूर्वं श्रुति-

---

**न सामान्यादुपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥** तस्यान्यदर्शनाभाववतः, मुक्तावप्यक्षरमुक्तावपीत्यर्थः, अत्र तु सर्वात्मभाववद्भक्तिप्रतिपादकसनत्कुमारवाक्ये, एवं सत्यकामकत्वबोधककपिलस्मृतेः कामचारबोधकश्रुतिविरोधे सति, **न तन्निरूपणं** न सर्वात्मभावनिरूपणं, अत्र सनत्कुमारश्रुतिषु, **तद्भाववतः** सर्वात्मभाववतः, **इति वा** न वा, न वाच्यमित्यर्थः, **द्वितीयस्य** सकामत्वबोधकश्रुतिवाक्यस्य, **उक्तप्रमाणेत्यादि**, 'दीयमानं न गृह्णाती'ति कपिलस्मृतिपराहतत्वेनेत्यर्थः, **आद्यपक्षो**कामत्वपक्षः, **नेतीत्यादि**, पूर्वमुक्तं सर्वात्मभावोत्र निरूपणीय इति तन्नेत्यर्थः, **तत्र** सर्वात्मभावस्य सर्वथा निरूपणीये, **हेतुमाह** सूत्रकारः हेतुमाह, हेतुं व्याकुर्वन्ति **तत्समानधर्मयोगादिति**, तथा च लोके सुखभोगरमणादयः प्रसिद्धाः, तेषां सादृश्यं सर्वात्मभावाद्भक्तानां भगवत्सम्बन्धिरमणादिष्वपि तिष्ठतीति सर्वलोकसुखापेक्षयाप्यस्य सुखस्योत्कृष्टत्वेन'सर्वलोक'पदप्रयोगः कृतो न त्विहापि सुखं लोकसुखं भवतीतिहेतुना श्रुतितात्पर्यं प्रदर्शितं, **यथाश्रुत एवार्थ** इति, 'सर्वेषु लोकेषु कामचारो भवती'तिश्रुतेर्भक्तानां पुरुषोत्तमसम्बन्धिनां सर्वलोकसम्बन्धिसुखानुरूप एवार्थो भवतु न तु तत्सदृशालौकिकसुखानुभवरूपोर्थ इत्यर्थः, **आत्मन इत्यादि** भगवत्सम्पादितदेहेन्द्रियान्तःकरणादिसकलधर्मवतः सर्वात्मभाववद्भक्तस्येत्यर्थः, **एतदग्रे** 'नान्यत् पश्यती'त्यादिश्रुतेरग्रे,' 'न पश्यो मृत्युं पश्यती'तिश्रुति , तथाच चतुर्मुखलोकपर्यन्तानां पुनरावृत्तिदर्शनादेतस्य मृत्युनिषेधाल्लोकातीतत्वमवगम्यते, एतदेवाहु'रात्मन एवेदं सर्वे'मिति, **आत्मातिरिक्तव्यवच्छेदः** परमानन्दभोगसाधनेष्वात्मातिरिक्तव्यवच्छेदः सुखे चेति बोध्य, **तत्तुल्यो** रोगदुःखादितुल्य इत्यर्थः ॥ ५१ ॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥** **अत्र** भक्तभावानां लौकिकत्वाभावे, **अस्मिन्नित्यादि** 'न पश्यो मृत्युं पश्यती'त्यादिश्लोके, पादान्तरेण तुरीयेण 'सर्वमाप्नोति सर्वश' इत्यनेनेत्यर्थः, **शब्दस्य** 'सर्वेषु लोकेषु कामचारो भवती'तिश्रुतिवाक्यस्य, **पूर्वं** कामचारश्रुतेः 'आत्मन एवेदं सर्वं'मितिश्रुतिवाक्यं पूर्वं,

---

१. प्रपाठकस्य लुप्तं पा । २. लोकेषु लुप्तं कपु । ३ च अधिकं गो । ४. वा वाच्यं कबपु । ५. सर्वेषु सुखेषु लुप्तं पुं । ६. सर्वात्मवतः कपु । ७. आत्मतः गो प्राय. सर्वत्र । ८. पूर्वोक्तं कबपा ।

वाक्यं तद्विधतैव प्रतीयत इति न लोकसम्बन्धो वक्तुं शक्य इत्यर्थः, नन्वा''त्मन एवेद५ सर्व''मितिवाक्येनैवैतदर्थलाभे पुनस्तदुक्तिर्नोचितेतिशङ्कायां तत्र हेतुमाह, तुशब्दः शङ्कानिरासे, भूयस्त्वाद्धेतोः, उक्तेर्थे हेतूनां बाहुल्ये तद्दार्ढ्यं भवतीत्याशयेनोक्तार्थस्यैव श्लोकेनानुबन्धः कृत इत्यर्थः, अथवा भूयःपदमाधिक्यार्थकं, तथा च स्वकृतसाधनसाधितफलापेक्षया स्वयमुद्यम्य भगवता साधितफले निरवधिरुत्कर्ष इतिज्ञापनाय पुनः श्लोकेन तथेत्यर्थः ॥ ५२ ॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

उक्तेर्थे श्रुत्यन्तरसम्मतिमप्याहैके शाखिनस्तैत्तिरीयाः शरीरे भक्तशरीरे हृदयाकाश इति यावत्, तत्रात्मनो भगवतो भावादाविर्भावात् तेन सह सर्वकामोपभोगं वदन्तीं श्रुतिं पठन्ति ''सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'' ( तै. ब्र. ) इति, अत्रोपक्रमे ''ब्रह्मविदाप्नोति परमि''तिश्रुतिरक्षरब्रह्मविदः परब्रह्मप्राप्तिं सामान्यत उक्त्वा विशेषतः कथनार्थं ''तदेषाभ्युक्ता'' ( तै. ब्र. ) इतिवाक्यं 'तद्' ब्रह्म प्रतिपाद्यत्वेना'भि'मुखीकृ'त्यैषा' वक्ष्यमाणा ऋक् परब्रह्मविद्भि'रुक्ते'त्युक्त्वा तामुक्तवती ''सत्यं ज्ञान''मिति, परब्रह्मस्वरूपमनुभवैकवेद्यं न शब्दादिभिर्वेद्यमितिज्ञापनाय स्वयं तत्त्वप्रतिपादिकाप्यन्यमुखेनोक्तवती, अत्र 'ब्रह्मणा सह' 'सर्वकामो'पभोग उक्त इत्येतदेकवाक्यतायै ''सर्वेषु लोकेषु कामचारो भवति'' ( छान्दो. ९. २५. २. ) इतिश्रुतेरप्युक्त एवार्थो मन्तव्यः ॥ ५३ ॥ १७ ॥

### इति तृतीयाध्याये तृतीयपादे सप्तदशं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

ननु ''ब्रह्मविदाप्नोति परम्'' ( तै. ब्र. )इतिश्रुत्याक्षरब्रह्मविदः परब्रह्मप्राप्तिरुच्यते, तत्रेतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयत्युत तन्निरपेक्षमिति भवति संशयः, अत्र श्रुतौ तन्मात्रोक्तेरितरनिरपेक्षमेव तत् तथेति पूर्वः पक्षः, सिद्धान्तस्त्वेवं सति ज्ञानमार्गीयाणा

---

तद्विधतैवात्मसम्पादितसम्पत्तिमत्त्वैव, न लोकसम्बन्धो भक्तेषु न लोकसम्बन्ध इत्यर्थः, एतदर्थलाभे भक्तसम्बन्धिनिखिलपदार्थानामलौकिकत्वलाभे, पुनस्तदुक्तिरलौकिकत्वसाधकहेत्वन्तराणां श्रुतिभिरुक्तिः, शङ्कानिरासे हेत्वन्तरोपन्यासः किमर्थमितिशङ्काया निरासे, तथा 'चात्मत एवेदं सर्वं'मितिभावः, भूयःपदं सूत्रस्थ'भूयः'पदं, हेतुबाहुल्यापेक्षया विशेषतस्तुष्टार्थबोधनायाहुरथवेत्यादि, भूयःपदसूचितार्थमाहुस्तथा चेत्यादिना, स्वकृतं जीवकृतं, पुनः श्लोकेन पूर्वं'मात्मत एवेदं सर्वं'मितिश्रुत्या बोधनेप्यात्मपदस्य जीवसाधारण्याद्भगवद्दत्तासाधारणफललाभसूचनाय 'सर्वमाप्नोति सर्वश' इतिश्रुत्या पुनः फलस्यानुबन्धः कृतः, तथानुबन्ध इत्यर्थः, ॥ ५२ ॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ उक्तेर्थे 'सर्वेषु लोकेषु कामचारो भवती'त्यर्थस्यालौकिकस्वरूपेर्थे, उक्त एवार्थः 'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति'श्रुत्युक्तं सर्वकामाशनमेव सर्वलोककामचार—वाक्यस्याप्यर्थः, प्रकटार्थमन्यत् ॥ ५३ ॥ १७ ॥

इति तृतीयतृतीये सप्तदशाधिकरणम् ॥ १७ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ पूर्वाधिकरणान्ते 'ब्रह्मविदाप्नोति परमि'तिश्रुतेः सम्मतिरूपोक्ता प्रसङ्गात् तदर्थविचाराधिकरणान्तरमारभत इत्यवतारयन्ति नन्वित्यादि, तत्राक्षरब्रह्मज्ञानस्य परब्रह्मप्राप्तिश्च संशयबीजं, तदक्षरज्ञानं, तथा पुरुषोत्तमप्रापकं, एवं सति केवलाक्षरज्ञानस्य पुरुषोत्तमप्रापकत्वे

---

१. यत् पूर्वं श्रुतिवाक्यं तेन । २. °शरीरहृदया° कपु । ३. ब्रह्म यो वेद निहितं परमितिश्रुते. कगो । ४. अक्षर° कगो । ५. एवं बपा । ६. शब्दादिवेद्य° पुं । ७. तत्र पुं ।

मपि परप्राप्तिः स्यात्, सा त्वनेकप्रमाणबाधितेति पूर्वमवोचाम, किञ्च, ज्ञानशेषभूतब्रह्मापेक्षया फलात्मकस्य परस्य[1] मुख्यत्वात् "तदेषाभ्युक्ता" ( तै. ब्र. ) इतिश्रुतिस्तदेव प्रतिपाद्यत्वेनाभिमुखीकृत्य ऋगुक्तेत्याह, तेन तत्र 'ब्रह्म'पदे पुरुषोत्तमपरे ज्ञायेते, तथा च गुहायां यथाविर्भूतं[2] परमं व्योम पुरुषोत्तमगृहात्मकमक्षरात्मकं व्यापिवैकुण्ठं भवति तदा तत्र भगवानाविर्भवतीति तत्प्राप्तिर्भवतीत्युच्यते "यो वेद निहितं गुहायां परमे व्योमन्" ( तै. ब्र. ) इत्यनेन[3] ।

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ (३. ३. १८.)**

तथा च ज्ञानिनां गुहासु परमव्योम्नो व्यतिरेक एव, तत्र हेतुस्तद्भावाभावित्वा[4]दिति, "यमेवैष वृणुत" ( कठ. २. २२. ) इतिश्रुतेर्वरणाभावे भगवद्भावस्यासम्भवाज् ज्ञानिनां तथावरणाभावाद् भगवद्विषयको भावो न भावीति तथेत्यर्थः, ननु ज्ञानविषयत्ववदाविर्भावोप्यस्तु किञ्च तदतिरिक्तमाविर्भावमपि न पश्याम इत्याशङ्कायामाह न तूपलब्धिवदिति, उपलब्धिर्ज्ञानं तद्वद् गुहायामाविर्भावो न भवतीत्यर्थः, यस्मै भक्ताय यल्लीलाविशिष्टं स्वस्वरूप[5]मनुभावयितॄं[6] प्रभुर्भवति तद्गुहायां तल्लीलाश्रयभूतमक्षरस्वरूपं वैकुण्ठलोकवदाविर्भावयतीति नोक्तशङ्कालेशोपि, यत्र पुरुषोत्तमस्य चाक्षुषत्वं तत्र ततोधःकक्षस्य तस्य तथात्वे का शङ्का नाम? एतच्चोपपादितं[7] पूर्वं विद्वन्मण्डने च ॥ ५४ ॥

ननु ज्ञानिज्ञानविषयभक्तगुहाविर्भूताक्षरयोर्भेदोस्ति न वा? नाद्यः, मानाभावादेकत्वेनैव सर्वत्रोक्तेः, न द्वितीयः, निरवयवस्य क्वचिल्लोकरूपत्वातद्रूपत्वाभ्यामेकत्वानुपपत्तेरिति चेत्, मैवं, लोकरूपत्वस्य पश्चाद्भावित्वे हीयमनुपपत्तिर्नत्वेवं किन्त्वक्षरस्वरूपमेव तथेति

---

सति, अनेकप्रमाणेत्यादि, 'यमेवैष वृणुते' 'भक्त्याहमेकया ग्राह्य' इत्याद्यनेकप्रमाणेत्यर्थः, ऋगुक्तेत्याहेति, श्रोतॄनभिमुखीकृत्य पुरुषोत्तमसाक्षात्कारविद्भिरेषा 'सत्यं ज्ञानमनन्त'मित्यृगुक्तेत्यर्थः, तेन पुरुषोत्तमप्रतिपादकतयैतादृङ्निर्वचनेन, तत्र 'सत्यं ज्ञानमनन्त'मित्यृचि, ब्रह्मपदे 'अनन्तं ब्रह्मे'ति ब्रह्मपदं 'सह ब्रह्मणे'ति ब्रह्मपदमेते ब्रह्मपदे इत्यर्थः, **पुरुषोत्तमपरे** तत्राविर्भूतपुरुषोत्तमप्रत्यक्षतात्पर्यके, तथा चेत्यादि, एवं सत्यग्रे तद्धृदयाकाशे पुरुषोत्तमाधिष्ठानत्वविशिष्टे 'परमव्योम'पदवाच्येक्षर आविर्भूते सति 'सोश्नुत' इत्यादिरूपं फलं भवतीति पर्यवसितोर्थः, तदा वैकुण्ठाविर्भावकाले, तत्र हृदये, पूर्वसूत्रार्थं श्रुत्योक्त्वा सूत्राक्षरैर्व्याख्यानमाहुस्तथा चेत्यादि, **गुहासु** हृदयेषु, **परमव्योम्नः** पुरुषोत्तमाधिष्ठानत्वविशिष्टाक्षरस्य, **व्यतिरेक** आविर्भावाभावः, तत्र तादृशानाविर्भावे, **तद्भावाभावित्वादि**तीति, तद्भावस्याभावित्वं **तद्भावाभावित्वं**, **तद्भावस्य** पुरुषोत्तमाधिष्ठानेषु विशिष्टपरमव्योमाविर्भावकारणस्य सर्वात्मभावस्य, **अभावित्वाद्** 'यमेवैष वृणुते तेन लभ्य' इति 'तस्यैष आत्मा वृणुते तनुं स्वा'मितिश्रुतिभ्यामुक्तवरणरूपकारणस्याभावेन कार्यभूतसर्वात्मभावस्य तेष्वसम्भावित्वादित्यर्थः, **ज्ञानविषयव**दित्यादि, तथा च ज्ञानिनां हृदये यथाक्षरविषयताशालिज्ञानमाविर्भवति तथा तादृशपरमव्योमाविर्भावोप्यास्तामित्यर्थः, पुरुषोत्तमाधिष्ठानवत्त्वं परमं व्योमाप्यक्षरमेव न तु तदतिरिक्तं विशिष्टस्यानतिरिक्तत्वादित्यर्थः, **किञ्चे**त्यादि, **तद्वद्गुहाया**मित्यादि, ज्ञानाविर्भाववज्ज्ञानिगुहायां तादृशपरमव्योमाविर्भावो न भवतीत्यर्थः, ननु पुरुषोत्तमाधिष्ठानत्वविशिष्टाक्षरस्यातिरिक्तत्वाभावाच्छुद्धाक्षरस्य ज्ञानिगुहायामाविर्भावे किमवशिष्यत इत्यत आहुर्यस्मा इत्यादि, तथा च यादृशी वरणसर्वात्मभावादिसामग्री यस्य वर्तते तस्मिंस्तादृशलीलाविशिष्टमेवाविर्भावयितुमिच्छति प्रभुर्न तु नियमेनेति न काप्यनुपपत्तिरितिभावः, ननु तादृशवैकुण्ठात्मकाक्षरस्याविर्भावेन भक्तानां दर्शनमुक्तं तदनुपपन्नमक्षरस्यादृश्यत्वादिगुणकत्वस्य श्रुतावुक्तत्वादित्यत आहुर्यत्रेत्यादि, **तस्य तथात्वे**क्षरस्य चाक्षुषत्वे, **पूर्व**मित्यादि, 'कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षु'रितिश्रुत्या सति वरणे दिव्यचक्षुर्लाभेनाक्षरस्यापि ज्ञानमुक्तमित्यर्थः, अक्षरस्वरूपं विशदीकृत्य प्रदर्शयितुमाहुर्नन्वित्यादि, **नाद्यो** न भेदः, **सर्वत्रै**'कमेवाद्वय'मित्यादिश्रुतिष्वित्यर्थः, **न द्वितीयो** न भेदाभावः, **पश्चाद्भावित्वे** कृत्रिमत्वे, इयं भेदाभेदचिन्तारूपा, तथा श्रुत्युक्तं

---

१. परस्य लुप्तं गो । २. यथावि° कैंगो । ३. °त्यन्तेन कैंगो । ४. हेतुम° बपा । ५. स्वरूप° बपा । ६. °यिला पा । ७. च लुप्तं बपा ।

श्रुतिराह "अम्भस्यपारे भुवनस्य मध्ये" ( तै. आ. १०. १. १. ) इत्युपक्रम्य "तदेव भूतं तदु- भव्यमा इदं तदक्षरे परमे व्योमन्" (तै. आ. १०. १. १.) एतदग्रे च "यमन्तःसमुद्रे कवयोवयन्ति यदक्षरे परमे प्रजा" ( तै. आ. १०. १. १. ) इत्यादिरूपा, स्मृतिरपि "परस्तस्मात्तु भावोन्यो व्यक्तोव्यक्तात् सनातनः सर्मः सर्वेषु भूतेषु नश्यत्सु न विनश्यति अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां मतिं यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" ( भग. ८. २०-२१. ) इत्यादि तु गीतासु, श्रीभागवतेपि "दर्शयामास स्वं लोकं गोपानां तमसः परं सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनं यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः" ( भाग. १०. २५. १४-५. ) इति दशमे, द्वितीये च "तस्मै स्वलोकं भगवान् समाहितः सन्दर्शयामास" ( भाग. २. ९. ९. ) इत्युपक्रम्य कालत्रिगुणमाया[३]सम्बन्धराहित्यमुक्त्वा भगवत्पार्षदानुक्त्वा विमानप्रमदा उक्त्वा श्रीरुक्ता, तथा च श्रुतिस्मृत्येकवाक्यतायां तादृक्स्वरूपमेवाक्षरमितिनिर्णयो भवति, एवं सति सच्चिदानन्दत्वदेशकालापरिच्छेदस्वयंप्रकाशत्वगुणातीतत्वादिधर्मवत्त्वेनैव ज्ञानिनामक्षरविज्ञानं भक्तानामेव पुरुषोत्तमाधिष्ठानत्वेन तथेति ज्ञेयं "मल्लानामशनि" ( भाग. १०. ४०. १७. )रिति- श्लोकोक्तरीत्या पुरुषोत्तमस्येवं, प्रभुणा ये यथा विचारिताः सन्ति ते[६] तथा भवन्तीति तद्विचार एव सर्वेषामधिकाररूप इति "कृतप्रयत्नापेक्षस्तु" (ब्र. सू. २. ३. ४२.) इत्यत्र निर्णीतम्[७] ॥ ५४ ॥

अस्मिन्नर्थे कैमुतिकन्यायकथनार्थं निदर्शनेनोत्तरं पठति,

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

यागे तत्तदृत्विङ्नियतकर्तव्यान्यन्वाधानादीन्यङ्गानि तत्रावबद्धाः सर्व एवर्त्विजो यज- मानेन, 'अवबन्धनं' नामा'ध्वर्युं त्वा[८] वृणे' 'होतारं त्वा वृण' उद्गातारं त्वा वृण' इत्यादिरूपं वरणमेवान्यथा सर्वकर्मविदुषां तत्कृतिपटूनामेकत्राधिकारो नान्यत्रेतिनियमो न स्यात्, तस्य तस्य तथावरणे तु यजमानेच्छैव हेतुः, ते च तदा न सर्वासु शाखासु विहितान्यङ्गानि कर्तुं सर्वेपि[९] शक्ताः किन्तु यजमानवरणनियमिता एव तथा, तत्र हेतुमाह हि यतःकारणात् प्रतिवेदं नियमितान्यङ्गानि "हौत्रमृचाध्वर्यवादि यजुषौद्गात्रं साम्ना" (आप. परि. १. १८-२०.) इति, तथा चालौकिके वैदिके कर्मणि जीवेच्छा नियामिका भवति यत्र तत्र किमु वाच्यं प्रतिरोम[१०]कूपं[११] साव- काशममितब्रह्माण्डस्थितिमतस्तदीशितुरिच्छैव नियामिका तत्तत्साधनफलसम्पत्ताविति ॥ ५५ ॥

ननु पूर्वं कर्मज्ञाननिष्ठानामपि पुंसामग्रे भक्तिमार्गीयत्वं यत्र भवति तत्र तथैव भग- वद्वरणमिति हि[१२] सिद्धान्तः, ऋत्विजस्त्वेकस्मिन् याग एकत्र वृतस्य नापरत्रापि तथेति विरुद्धो दृष्टान्त इत्यरुच्या निदर्शनान्तरमाह,

---

नानाविधात्मकं, इत्यादिरूपा 'यदक्षरे परमे प्रजा' एवमादिनानाविधाक्षरप्रतिपादिकेत्यर्थः, पुरुषोत्तमस्यैवेति, तथा चैक एव भगवानधिकारभेदेन भक्तैर्दशधा दृष्ट इति 'मल्लानामशनि'रितिश्लोके निरूपितं तद्वदेव भगवद्दत्ताधि- कारेणाक्षरस्वरूपमपि वास्तवनानाप्रकारैर्द्रष्टुं शक्यमित्यर्थः ॥ ५४ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ सूत्रमवतारयन्ति तस्मिन्नित्यादि, कैमुतिकेत्यादि, अलौकिके वैदिके यज्ञादिकर्मणि यज्ञादौ मनुष्ययजमानवरणेन ऋत्विजां षोडशपदार्थकरणसमर्थानामपि नियत- स्वकीयतत्तत्पदार्थानुष्ठानमेव भवति न त्वनियतं तत्र भगवद्वरणेन भक्तानां नानाविधलीलानां मध्ये यदधिकारिणे यल्लीलाप्रदर्शनं भगवतोभिप्रेतं तदेव भवतीत्यत्र किं चित्रमितिकैमुतिकन्यायः, तथा यजमानशाखानियतकर्म- कर्तारः, स्फुटमन्यत् ॥ ५५ ॥

---

१. यः सः बपापुंगो । २. सभाजितः पा । ३. °मायादि° कपु । ४. °स्यै° कपु । ५. °स्यै° कपुं । ६. ते ते कें । ७. निर्णीतः कें । ८. त्वा कंबपागो । ९. सर्वे कपु । १०. °लोम° कपु । ११. °रूपं° क । १२. लुप्तं कंगो ।

## मन्त्रादिवद् वाविरोधः ॥ ५६ ॥

यथैक एव कश्चिन्मन्त्रो बहुषु कर्मसु सम्बध्यते कश्चिद् द्वयोः कश्चिदेकत्रैव तथैव विधानात् तथात्रापीत्यर्थः, आदिपदात् कर्मोच्यते, यत्र काम्येनैव नित्यकर्मनिर्वाहस्तत्र कामितार्थसाधकत्वं[1]प्रत्यवायपरिहारे[2]प्येकमेव तदुपयुज्यते, यथा[3] च सर्वतोमुखेनेकहोतृप्रवरेध्वर्यु-प्रवरे च गृह्यमाणे "देवाः पितर" (तै. ब्रा. ३.७.५.४.) इत्यादिना यजमानकर्तृकानुमन्त्रणमेव[4] सर्वत्र सम्बध्यते तथैवं[5] विधेः, तथात्रापि तावद्विधं यदेकमेव वरणं तेन तत्तन्निष्ठानन्तरं[6] भक्ति-निष्ठेति न दृष्टान्तविरोध इत्यर्थः ।

अथवो"मित्यु"दाहृत्यैव मन्त्राणामुच्चारणान्मन्त्रादिरोङ्कारः, स यथा ब्रह्मात्मकत्वेनैक एव सर्वमन्त्रेषु सम्बध्यते तथा वरणमपीति तथेत्यर्थः[7], यद्यपीतरनिष्ठानन्तरभूतभक्तिनिष्ठावर्तो वरणं तथाभूतमेकमेवेति न[8] दोषस्तथाप्युत्कृष्टमार्गे वृतस्य नीचकक्षापादानमनुचितमिति मत्वा पक्षान्तरमुक्तं, वस्तुतस्तु साधनमर्यादया यत्र भक्तिर्दित्सिता तत्र तथेति नानुपपत्ति[9] काचित् ॥ ५६ ॥ १८ ॥

### इति तृतीयाध्याये तृतीयपादेऽष्टादशं व्यतिरेकाधिकरणम् ॥ १८ ॥

ननु सुखस्वरूपजिज्ञासायां "यो वै भूमा तत् सुख" (छान्दो. ९. २३. १.) मित्युक्तं, भूमस्वरूपजिज्ञासायां "यत्र नान्यत् पश्यती"(छान्दो. ९.२४. १.)त्यादिना तद्यन्निरूपितं तत् सर्वात्मभावस्वरूपमिति यदुक्तं तन्नोपपद्यते, भूम्नो हि सुखरूपतोच्यते, सर्वात्मभावे तु विरहभावे दुःसहदुःखानुभवः श्रूयते, तेन मोक्षसुखमेव "यो वै भूमे"त्यादिनोच्यते, "यो वै भूमा तदमृत" (छान्दो. ९. २४. १.) मितिवाक्याच्च, अग्रे च "स वा एष एवं पश्य"ः

---

मन्त्रादिवद् वाविरोधः ॥ ५६ ॥ तत्र तेषु तथैव ज्ञानमार्गादि सम्पादयतामेव, तेन न कालभेदेनान्यत्र वरणमितिसमाधानं, एक एवेति, प्रणवव्याहृत्यादिरूपः, द्वयोरिति, यथा शनिमन्त्रो मार्जने शनिप्रसादने चोप, युज्यते, एकत्रैव यथा 'सूर्यो ज्योति'रिति प्रातरग्निहोत्रहोमे, तथात्रापीति, तथा च भगवद्वरणस्थलेप्येकमेव वरणं क्वचित् कर्मज्ञानद्वारा भक्तिं दत्वैनमुद्धरिष्य इत्याकारकं क्वचिदेकद्वारा भक्तिं दत्वैनमुद्धरिष्य इत्याकारकमिति न कोप्यनुपपत्तिलेश इत्यर्थः, आदिपदात् सूत्रस्थादिपदात्, कर्मोच्यत इति, यथाग्निहोत्रादिकर्म स्वर्गप्रत्यवाया-भावोभयसाधकं, एवमन्यदप्याहुर्यथा चेत्यादिना, प्रवरे गणे, 'देवाः पितर' इति तेषामनुमन्त्रणमन्त्रः, सर्वत्रानेकगणे, तथैव विधेरेकस्यैवानेकत्र कार्यत्वसाधकत्वस्य विधिना बोधनात्, तथात्राप्येकस्यैव वरणस्य नानाप्रकारैर्भक्तिप्रदत्वं 'यमेवैष' इत्यत्र सामान्याकारेणोद्धर्तव्योपदेशात्, तावद्विधमेकमेव नानाप्रकारकं समूहा-लम्बनज्ञानवदित्यर्थः, तेन वरणेन, तत्तन्निष्ठा धर्मज्ञानसत्सङ्गादिनिष्ठा, भौतिकदृष्टान्तमुक्त्वाध्यात्मिकदृष्टान्तमाहुः प्रणवस्य ब्रह्मरूपत्वादथवेत्यादि, तथा ब्रह्मात्मकमेकमनेकधोपकरोतीत्यर्थः, इतरनिष्ठा कर्मज्ञानसत्सेवादिनिष्ठा-इतरनिष्ठत्वं चासाधारणभक्तिसाधकोपदेशाद्यपेक्षया, तथाभूतमितरनिष्ठानन्तरं भक्तिं दास्यामीत्याकारकं, न दोषो न दृष्टान्तवैषम्यं, तथाप्युत्कृष्टेत्यादि, तथा च साक्षान्मोक्षप्रदस्य प्रणवस्य क्षुद्रकर्माङ्गमन्त्रादावुपयोगवत् कर्मादिनिष्ठानन्तरभक्तिनिष्ठादानमपि नोचिततरमितिप्रदर्शनायाथवेतिपक्षान्तरं स्वयं प्रदर्शितमित्यर्थः, नानुपपत्ति-र्नहीनता विभावनीयेत्यर्थः ॥ ५६ ॥ १८ ॥

॥ इति तृतीयतृतीयेऽष्टादशाधिकरणम् ॥ १८ ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ मध्ये प्रासङ्गिकं निरूप्य प्रकृतं निरूपयितुं सूत्रयतीति सूत्रमवतारयन्तः संशयमाहुर्नन्वित्यादिना, तद्यदिति 'सर्वात्मभावे'न्वेति, तेनेति, तेन 'यो वै भूमा तत् सुख'मित्युक्त-

---

१. साधकत्वे कैंबपापुंगो । २. परीहारे कपु । ३. तथा च कदापुगो । ४. एकमेव कैंबपागो । ५. तथैव लुप्तं पा । ६. तन्निष्ठा° पापु । ७. तथा लुप्तं कें । ८. अपि बपापुंगो । ९. नोक्त° सर्वत्र ।

(छान्दो. ९.२५.२.)मित्याद्युक्त्वा “[1]तस्य सर्वेषु लोकेषु कामचारो भवती”(छान्दो.९.२५.२.)ति फलमुच्यते, तच्च मोक्षानन्तरमसं[2]भाव्यतः स भावो मोक्षो वा[3]त्रोच्यत इतिसंशयः, तत्र[4] कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यनिरूपणार्थत्वा‘दमृत’शब्दाच्च मुक्तिरेव ‘भूम’पदेनोच्यत इति पूर्वः[5] पक्षः, तत्र ‘भूम’शब्देन स भाव एवोच्यत इतिसिद्धान्तः, तत्र दुःखदर्शनानुपपत्त्या सर्वाधिकत्वलक्षणं भूमत्वमनुपपन्नमितिशङ्कां परिहरति ।

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ ( ३. ३. ११. )

भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वस्मान्मन्तव्यं, तत्रोक्तानुपपत्तिपरिहारार्थं दृष्टान्तमाह क्रतुवदिति, दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते “परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छ”(तै. सं. १.६.९.)दित्युपक्रम्य “य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छती”(तै. सं. १. ६. ९.)ति, यथा व्रतादिदुःखात्मकत्वेपि परमकाष्ठालक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्योधिकत्वं वक्तु“मग्र आसी”दिति स्तू[6]यते तथा दुःखहेतुत्वेप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यत इत्यन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः, अत्रोपपत्तिमाह तथा हि दर्शयति, श्रुतिस्तु “स एवाधस्ता”(छान्दो.९.२५.१.)दित्याद्युक्त्वा“प्यहङ्कारा[7]देश” (छान्दो ९.२५.१.) इत्याद्युक्त्वा“थात्मादेश” (छान्दो. ९.२५.१.) इत्याद्युक्तवती, एतदग्रे[8] चैतादृशस्या“त्मतः[9] एव” (छान्दो. ९.२६.१.) प्राणाशास्मरादि‘सर्व’मिति च दर्शयति, एतत् सर्वात्मभाववत्येव सर्वमुपपद्यते न तु[10] मुक्तस्य, वृत्तिभावाभेदा[11]त् प्राणाद्यभावाच्च, जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वा‘दात्मतः प्राणा’ इत्यादि न वदेत् ।

---

सुखरूपत्वस्य सर्वात्मभावे सम्भवेनेत्यर्थः, संशयबीजमाहुरग्रे चेत्यादिना, तत्र मुक्तौ, तन्माहात्म्येत्यादि, तथा च मुक्तिदशायां मुमुक्षोः सर्वलोककामचारयोग्यता भवतीत्यर्थवाद एवायं मुक्तिश्रुतेर्न तु कामचारश्रुतिः स्वार्थे प्रमाणमितिभावः, तत्र सर्वात्मभावदशायां, भूम्नो भूमपदवाच्यस्य, तत्र सर्वात्मभावरूपार्थकरणे, उक्तानुपपत्तिः सुखरूपत्वानुपपत्तिः, व्रतादि कर्माङ्गव्रतादि, तथा दर्शपूर्णमासवत्, दुःखहेतुत्वेपि भूमपदवाच्यसर्वात्मभावस्य विरहात्मकत्वेन दुःखरूपत्वेपि, सुखरूपत्वमसाधारणसुखसाधनत्वेन सुखरूपत्वमित्यर्थः, अत्रोपपत्तिमिति, भाविसुखजनकतामादाय सुखरूपत्वाङ्गीकाराद् भूमपदेन सर्वात्मभाव एवोच्यते न तु मोक्ष इत्यत्रोपपत्तिं, श्रुतिस्तु ‘यो वै भूमतत् सुख’मितिश्रुत्यर्थलाभोत्तरमेतच्छ्रुत्यनन्तरं पठ्यमाना श्रुतिः, ‘स एवाधस्ता’दित्यादिना ब्रह्मातिरिक्तास्फूर्तिरुक्ता, ‘अहङ्कारादेश’ इत्यनेन किञ्चित्स्वात्मस्फूर्तावन्वेषणाद्युपायैर्भगवन्तं प्राप्स्यामीत्यन्वेषणाद्युपाय उक्तः, ‘आत्मादेश’ इत्यनेन स्वकृतयत्नवैफल्ये सम्पन्नेतिदीनतायां जातायां भगवदाविर्भावस्य स्वात्मनि जातत्वात् तदनन्तरं स्वयं भगवद्धर्माविःकरणमुच्यते, एतदग्र उक्तश्रुत्यग्रेतनश्रुतौ, आत्मत एवेति, एवकारेण प्रकारान्तरनिष्पन्नप्राणाशास्मरणादीनां निरास उक्तः, एतत् पूर्वोक्तवृत्तित्रितयरूपादेशत्रितयमादाय स्मरादिसर्वमित्यन्तं, सर्वात्मभाववत्येवेत्येवकारेण मुक्तस्य व्यवच्छेदः, वृत्तिभावाभेदादिति ‘आत्मैव तदिदं सर्वं’ ‘एवं पश्यन्नेवम्मन्वान एवं विजानन्नि’त्यनेन तदादेशो ब्रह्माकारवृत्तिरुक्ता, एव ‘महङ्कारादेश’ इत्यनेन स्वयत्नेनेष्टं साधयिष्य इतिवृत्तिरुक्ता, एवमात्मादेशो भगवत्कृत्यनुरूपानुकूला वृत्तिः, एवं तिस्रो वृत्तय उक्तास्तासां मुक्तेसम्भवादित्यर्थः, प्राणाद्यभावात् भूमलाभत ‘आत्मत एव’ प्राणाशास्मरादिसर्वमुक्तं तस्य मुक्तेसम्भवादित्यर्थः, ननु परममुक्त उक्तवृत्तिप्राणादीनामसम्भवेपि जीवन्मुक्तानामेव ते धर्मा भवन्तु न सर्वात्मभाववतामित्यत आहुर्जीवन्मुक्तीत्यादि, प्राचीनानां प्राचीनप्रारब्धार्जितानां, न वदे‘दात्मत

---

१. तस्येत्यारभ्य मोक्षेत्यन्तं लुप्तं पा । २. °भवि बपागो । ३. वा लुप्तं क । ४. तत्र लुप्तं पा । ५. पूर्वं° बपापुंगो । ६. श्रूयते बपापु । ७. अथाहङ्कारादेश इत्याद्युक्त्वान्तं लुप्तं पा । ८. अग्रे सर्वत्र । ९. आत्मनः सर्वत्र । १०. तु लुप्तं पा । ११. वृत्तिभेदाभावात् सर्वत्र ।

यद्वा, ननु लोकेपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्तभावसम्बन्धिव्यभिचारिभावाः श्रूयन्ते 'सैव सर्वत्र स एव सर्वत्रे'ति, एवं सति लौकिकसधर्मत्वान्न[1] त्वदुक्तभावस्यालौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यमलौकिकविषयत्वाल्लौकिकत्वमपि न तथेति भवति संशयः, तत्र रिपुत्वमनुजत्वादि[2]ज्ञानानामिव कामादिभावेन स्नेहस्यापि[3] सम्भवान्नास्यालौकिकत्वमिति पूर्वः पक्षः, सिद्धान्तस्त्वस्य भावस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यं, ननूक्तं लोकसाधारण्यं बाधकमितिशङ्कानिरासाय निदर्शनमाह क्रतुवदिति, यथा दर्शादिषु दोहनाधिश्रयणातञ्चनव्रीह्यवघातादिपुरोडाशभक्षणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेपि न लौकिकत्वं लौकिकप्रमाणाप्राप्तत्वादलौकिकतत्प्राप्तत्वात् तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वान्न लौकिकत्वमस्य भावस्येतिदिक्, वस्तुतस्तु ग्रामसिंहस्य सिंहसरूपत्वेपि[4] न तादृग्रूपं[5] वक्तुं शक्यं तथा लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते तद्दृष्टान्तेन भगवद्भाववद्भक्तरीतिभावनार्थं, न त्वृषीणां लौकिके तात्पर्यं भवितुमर्हति, अत्रोपपत्तिमाह तथा हीत्यादि, पूर्वोक्तभाववत 'आत्मनः' प्राणादिकं 'सर्वं' दर्शयति श्रुति"स्तस्य ह वा एतस्यैवं पश्यत" (छान्दो.९.२६.१.) इत्यादिना, इतः पूर्वमपि "स वा एष एवं पश्य" (छान्दो.९.२५.२.) न्नित्युपक्रम्या"त्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवती"(छान्दो.९.२५.२.)तिश्रुतिश्च, न हि लोक एवं सम्भवत्यात्मपदानां भगवद्वाचकत्वादिति सर्वोत्तमविषयकभावस्यैव तथात्वं युक्तमिति चोपपत्तिर्हिशब्देन सूच्यते ॥ ५७ ॥ १९ ॥

इति तृतीयाध्याये तृतीयपादे एकोनविंशं भूम्न इत्यधिकरणम् ॥ १९ ॥

पूर्वाधिकरणैः सर्वात्मभावस्वरूपादिनिर्णयं कृतवान्, अथ मत्स्यादिरूपाणां भगवदवतारत्वमविशिष्टमिति[6] सर्वेषां समस्योपासना कार्योत पार्थक्येनेति विचारयति, तत्रोपास्याभेदेपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणावज्ञासम्भवादस्या अप्यसिद्धिसम्भवादपि समस्यैव सा कार्येति प्राप्ते सिद्धान्तमाह ।

---

एव प्राणा' इत्यत्रैवकारेणेतरासम्पादितप्राणादिमत्त्वं न वदेदित्यर्थः, उक्तरीत्या विवरणस्य पूर्वाधिकरणसिद्धप्रायत्वात् प्रकारान्तरेण सूत्रार्थं वक्तुं वर्णकान्तरमाहुर्यद्वेत्यादि, अधिकरणमारचयितुं संशयादिकमाहुर्नन्वित्यादिना, त्वदुक्तभावेत्यादि, रसनिरूपकसात्त्विकभावाः, श्रूयन्ते भरतसूत्रादौ श्रूयन्त इत्यर्थः, सैव लौकिकरसरीतिरेव, सर्वत्र सकलरसाधिकारिषु, स एव रसोपि लोकसिद्ध एव, एवं सति रसनिष्पत्तिप्रकारस्य सर्वत्रैकरूपत्वे सति, त्वदुक्तभावस्य सर्वात्मभावस्य, अलौकिकज्ञानादिभ्यः परममुक्तिजीवन्मुक्तितत्साधकज्ञानादिभ्य इत्यर्थः, अलौकिकविषयत्वात् सर्वात्मभाववदुक्तभावानां ब्रह्मविषयत्वान्न तथा वक्तुं शक्यं, भवति संशयो लौकिकसजातीयत्वाल्लौकिकविषयत्वाभ्यां भवति संशय इत्यर्थः, पूर्वपक्षमाहुस्तत्रेत्यादिना, तत्र भगवति, तथा च भगवति रिपुत्वमनुजत्वादिज्ञानानामिव स्नेहस्यापि लौकिकस्य सम्भवाल्लौकिकत्वं स्नेहस्येत्यर्थः, अस्य भावस्य सर्वात्मभावस्य, निदर्शनमुक्तभावस्यालौकिकत्वसाधकदृष्टान्त, तत् प्रमाणं, तथोक्तप्रमाणं तद्वदलौकिकप्रमाणं, अत्रोपपत्तिं सर्वात्मभावस्यालौकिकत्व उपपत्तिं, पूर्वोक्तभावो भूमपदवाच्यः सर्वात्मभावः, स्फुटमन्यत् ॥ ५७ ॥ १९ ॥

॥ इति तृतीयतृतीय एकोनविंशाधिकरणम् ॥ १९ ॥

---

१. सधर्मकत्वात् कैगो । २. मनुजत्वरिपु॰ सर्वत्र । ३. स्नेहभाव॰ सर्वत्र । ४. ॰रूपत्वेपि कैगो, ॰स्वरूपत्वेपि बपा. अपि लुप्तं पै । ५. तादृप्यं वप्रपापुगी । ६. अवतारवत्त्वं कपुपु ।

## नाना शब्दादिभेदात् ॥ ५८ ॥ ( ३. ३. २०. )

सर्वेष्ववतारेषु नानैवोपासना कार्या, तत्र हेतुः शब्दादिभेदादिति, तत्तत्स्वरूपवाचकशब्दानां मन्त्राणां चादिपदादाकारकर्मणां च भेदादित्यर्थः, एतेनैव मिथोविरुद्धानामाकारकर्मणामेकत्र भावनस्याशक्यत्वमयुक्तत्वं चेतिभावः सूचितः ॥ ५८ ॥ २० ॥

इति तृतीयाध्याये तृतीयपादे विंशं नानाशब्दादिभेदादित्यधिकरणम् ॥ २० ॥

पार्थक्येनोपासनानि कर्तव्यानीतिस्थिते विचार्यते, किमग्निहोत्रदर्शपूर्णमासादिवदेषां समुच्चय उत विकल्प[1] इति, तत्र विधिफलयोः समानत्वात् समुच्चय इति प्राप्ते निर्णयमाह ।

## विकल्पोविशिष्टफलात्[2] ॥ ५९ ॥ ( ३. ३. २१. )

उपासनानां विकल्प एव, तत्र हेतुरविशिष्टफलत्वात्, मुक्तिफलकत्वं हि सर्वेषामुपासनानामविशिष्टं, एवं सत्येकेनैव तत्सिद्धावपरस्याप्रयोजकत्वादग्निहोत्रादिवन्नित्यताबोधकश्रुत्यभावात् तदर्थिनो विकल्प एव ॥ ५९ ॥

## काम्यास्तु[3] यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

येषु तूपासनेषु भिन्नानि[4] फलान्युच्यन्ते तत्र त्वनेकफलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन्नविशिष्टफलत्वाभावात्, यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकत्वं[5] श्रूयते तत्र तथैव चेदुपासनं करोति तदा न समुच्चीयेरन्नपि, स्वकामितेष्वेकतरस्य तदन्यफलवैशिष्ट्येनाविशिष्टफलत्वाभावादिति पूर्वहेत्वभावादितिश्लिष्टप्रयोगाभिप्रायेणोक्तमिति ज्ञेयम् ।

अथवा कामैक्ये नियतफलकानि तानि न समुच्चीयेरन्, अत्र हेतुः स्पष्टः ॥६०॥२१॥

इति तृतीयाध्याये तृतीयपाद एकविंशं विकल्प इत्यधिकरणम् ॥ २१ ॥

---

नाना शब्दादिभेदात् ॥ ५८ ॥ पूर्वाधिकरणेन प्रसङ्गसङ्गतिं बोधयन्तः संशयादिकमाहुः पूर्वेत्यादिना, स्वरूपादीत्यादिपदेन सपरिकरं फलमूर्धन्यं सर्वात्मभावं निरूप्येत्यर्थः, अस्या अपीत्यादि, अन्यत्रानादरण एकस्या अपि फलासम्भवादित्यर्थः ॥ ५८ ॥ २० ॥

॥ इति तृतीयतृतीये विंशाधिकरणम् ॥ २० ॥

विकल्पोविशिष्टफलात् ॥ ५९ ॥ पूर्वोक्ताधिकरणार्थानुकूलत्वादग्रिमाधिकरणस्यार्थस्येत्युपोद्घातसङ्गत्याधिकरणमारचयितुमाहुः पार्थक्येनेत्यादि, समुच्चय एकस्य सर्वोपासनाकर्तव्यता, विधिफलयोरुपासनाविधिमुक्तिरूपफलयोः, समानत्वात् सर्वोपासकान् प्रत्यविशिष्टत्वादित्यर्थः, अविशिष्टेत्यादि, एकैकोपासनायामेव फलपर्याप्तिदर्शनादित्यर्थः, नन्वेवं सत्यग्निहोत्रादीनामप्येकैकस्य फलश्रवणात् समुच्चयो व्यर्थ इत्यत आहुरग्निहोत्रादिवदिति ॥ ५९ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ येष्वक्षमयाद्युपासनेषु, अविशिष्टेत्यादि, अनेकफलानामेकोपासनातोसम्भवादित्यर्थः, तथैवानेकफलकामनयैव, न समुच्चीयेरन्निति, समानफलकोपासनान्तरं नानुष्ठेयमित्यर्थः, पूर्वहेत्वभावात् समुच्चये पूर्वमुक्तो यो हेतुः कामितयावत्फलसिद्धिरूपस्तदभावादसत्त्वादित्यर्थः, श्लिष्टप्रयोगो 'न वे'त्यनेन सूत्रे श्लिष्टप्रयोगः कृतः, कामनाभेदेन समुच्चयासमुच्चयौ सूत्राभिप्रेतावित्याशयेनाहुरथवेत्यादि, कामैक्येत्यादि, तथा च नानाकामनायां नानाफलकानां समुच्चयः कार्यस्तत्रैकस्यामुपासनायां नानाफलानामविशिष्टत्वाभावादेकफलकामनायां तु तस्य फलस्य तदुपासनायामविशिष्टत्वात् समुच्चयहेतोरभावादुपासनान्तराणि न समुच्चेयानीत्यर्थः, इदमेवाहुरत्र हेतुरित्यादिना ॥ ६० ॥ २१ ॥

॥ इति तृतीयतृतीय एकविंशाधिकरणम् ॥ २१ ॥

---

१. फल° बपा । २. °फलत्वात् सर्वत्र । ३. पादेस्मिन् पञ्चविंशतिरधिकरणानीति मत्वाधिकरणमालाकारैरत्र द्वाविंशमधिकरणमादृतम् । ४. भिन्नानि भिन्नानि कैबपागो । ५. अनेकफलकत्वं कैबपागो ।

प्रधानेषु निर्णयमुक्त्वाङ्गेषु तमाह, एकार्थसाधकानामुपासनानां भेदेनाङ्गभेदेऽप्येकतरोपासने फलैक्यादङ्गानि तत्र समुच्चीयेरन्न वेतिसंशये निर्णयमाह ।

## अङ्गेषु यथाश्रयभावात्[1] ॥ ६१ ॥ ( ३. ३. २२. )

उपासनाङ्गानां तदेवाश्रयः, तथा च यदङ्गं यदुपासनाश्रितं तत्रैव तस्य भाव इत्यर्थः॥६१॥

अत्र हेतुमाह ।

## शिष्टेश्च ॥ ६२ ॥

तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यत इति तथेत्यर्थः, चकारादतिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेति सूच्यते ॥ ६२ ॥ २२ ॥

इति तृतीयाध्याये तृतीयपादे द्वाविंशमङ्गेष्वित्यधिकरणम् ॥ २२ ॥

कर्ममार्गीयोपासने निर्णयमुक्त्वा ज्ञानमार्गीयोपासने तमाह ।

## समाहारात् ॥ ६३ ॥ ( ३. ३. २३. )

अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादिरूपत्वेनापि स्तुतिः श्रूयते, श्रीभागवते च "नमस्ते रघुवर्याय"(श्रीमद्भा. १०.३०.२.)त्यादिरूपा स्तुतिर्व्रजनाथे, एवं सति रूपभेदेपि भगवदवतारस्याविशिष्टत्वादेकस्मिन् रूपे रूपान्तरसमाहारो दृश्यत इति सर्वरूपत्वेनैकत्रोपासनमपि साध्वित्यर्थः ॥ ६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

ऐश्वर्यवीर्यादिगुणानां सर्वेष्ववतारेषु साधारण्यं श्रूयते, तेन धर्मिधर्माणामैक्यात् पूर्वोक्तं साध्वित्यर्थः ॥ ६४ ॥ २३ ॥

इति तृतीयाध्याये तृतीयपादे त्रयोविंशं समाहाराधिकरणम् ॥ २३ ॥

नन्वेवमुपासनं नित्यमुत वैकल्पिकमितिसंशयः, उक्तरीत्या नित्यत्वे प्राप्ते तन्निषेधमाह नेति ।

---

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ प्रसङ्गसङ्गत्याधिकरणान्तरमाहुः प्रधानेष्वित्यादि, निर्णयं समुच्चयासमुच्चयनिर्णयं, तं निर्णयं, फलैक्यात् तादृशोपासनानां फलैक्यात्, तत्रान्योपासनाङ्गान्यन्यत्रोपासने, तत्रैवेत्येवकारेणान्यत्र समुच्चयाभावो बोधितः ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥ अत्रान्योपासनाङ्गानामन्यत्रासमुच्चये ॥ ६२ ॥ २२ ॥

॥ इति तृतीयतृतीये द्वाविंशाधिकरणम् ॥ २२ ॥

समाहारात् ॥ ६३ ॥ कर्ममार्गीयोपासने समाध्यङ्गकोपासने, तमाह सूत्रकारो निर्णयमाहेत्यर्थः, स्तुतिः श्रूयते, तथा हि 'यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै नमो नम' इति श्रीरामोपासनायां च 'यो वै रामचन्द्रः स भगवान् ये च मत्स्यकूर्माद्यवतारास्तस्मै नमो नम' इत्येवं श्रूयत इत्यर्थः, एकस्मिन् रूपे परब्रह्मस्वरूप इत्यर्थः, तथा च परब्रह्मत्वेनोपासनायां परब्रह्मणि सर्वरूपोपसंहारेणाप्युपासने बाधकाभावोवतारितावच्छेदकधर्मावच्छिन्नेवतारतावच्छेदकप्रत्येकरूपेणोपासनायां तु न सर्वरूपसमुच्चय इत्यर्थः, अत्रावतारिणि नानाविरुद्धधर्मैरुपासना कार्या न वेतिसंशयः, शब्दभेदेनोपासनाभेदस्य पूर्वमुक्तत्वान्न कार्येति पूर्वः पक्षः, समाहारात् सर्वेषां धर्मिण्येकीभावात् कार्येति सूत्रेण समाधानम् ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥ धर्मिरूपेणानेकावताराणामुपासने हेत्वन्तरमिदम् ॥ ६४ ॥ २३ ॥

॥ इति तृतीयतृतीये त्रयोविंशाधिकरणम् ॥ २३ ॥

---

१. °भावः प्रदीपे ।

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ ( ३. ३. २४. )

किन्तु वा, विकल्प एवैवमुपासन ऐच्छिकस्तत्र हेतुमाह सहभावाश्रुतेरिति, नियमतस्तेषां रूपाणां सहभावश्रवणं चेत् स्यात् तदा स्यात् तथोपासनस्य नित्यता, न त्वेवमतो विकल्प एवेत्यर्थः ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

योपि रूपान्तरसमाहारपूर्वकमुपास्ते सोप्येकं रूपमुपास्यत्वेन मत्वा तत् तथोपास्त इति फलं तस्यैकस्यैव रूपस्य दर्शनं भवति न तु सर्वेषामितोपि हेतोर्विकल्प एवेत्यर्थः, एतद्दृष्टान्तेन यस्मिन् रूपे यादृग्धर्मवत्त्वं श्रूयते तादृग्धर्मविशिष्टमेवैकं[१] रूपमुपास्यमितिव्यासहृदयमिति ज्ञायते, उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्वोपासनानां भगवत्साक्षात्कारः फलमिति ज्ञाप्यते[२], माहात्म्यज्ञापनार्थं परं सर्वावताररूपत्वं यथार्थमेव कैश्चिज्ज्ञाप्यते, यथार्थत्वात् तदप्यविरोधीति[३] ज्ञेयम् ॥ २४ ॥

इति तृतीयाध्याये तृतीयपादे चतुर्विंशं न वा तत्सहभावाश्रुतेरित्यधिकरणम् ॥२४॥

इति श्रीवेद[४]व्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥

---

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ प्रसङ्गसङ्गत्याधिकरणमवतारयन्ति नन्वित्यादि, एवमुपासनमेकस्मिन्नवतारे परब्रह्म वेनोपासनीये सर्वावतारस्वरूपाणां क्रमेण समाहारेणाभेदेनोपासनं, नित्यं दर्शपूर्णमासाग्निष्टोमानां क्रमिकानुष्ठानवत् सर्वेषां क्रमिकसमाहारेणोपासनं नित्यं, वैकल्पिकमैच्छिकविकल्पेनानुष्ठेयं समाहारांश इत्यर्थः, नित्यत्वे प्राप्ते सर्वावतारेषु गुणानां साधारण्यादुपासने सर्वाभेदांशे नित्यत्वे प्राप्त इत्यर्थः, सौत्रवाशब्दस्यार्थः किन्त्विति, सिद्धान्तमाहुर्विकल्प इत्यनेन, ऐच्छिक इतरावताराभेदांश ऐच्छिको विकल्प इत्यर्थः, नियमत इति, तथा च दर्शपूर्णमासाग्निष्टोमादीनां नित्यतया यथैकस्मिन् समुच्चयः क्रमेण कर्तव्यताबोधकोस्ति तथात्रापि क्रमेण सर्वरूपाभेदेनोपासनं यदि वाचनिकं स्यात् तदा तथोपासनं नित्यं स्यादित्यर्थः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥ मत्वा निश्चित्य, तदेकं रूपं, तथा सर्वभेदेन, एकस्यैव धर्मित्वेन मुख्योपास्यतया सम्मतस्यैव, माहात्म्येत्यादि, परब्रह्मणः सर्वात्मरूपमाहात्म्यस्य भक्तिपूर्वार्धस्वरूपताज्ञापनायेत्यर्थः, कैश्चिदुपनिषद्वाक्यैः ॥ ६६ ॥ २४ ॥

इति तृतीयतृतीये चतुर्विंशाधिकरणम् ॥ २४ ॥

इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतगोपालजीकृते ब्रह्मसूत्राणुभाष्यपदप्रदीपे तृतीयाध्यायस्य तृतीयश्चरणः ॥ ३ ॥

---

१. एकैकं कें । २. ध्वन्यते कंबपापुगो । ३. अविरोधात् कपु । ४. इति श्रीविष्णुस्वामि° पुउ ।

# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

उपासनाभेदेऽप्युपास्याभेदाच्छाखान्तरोक्तधर्माणामप्युपसंहारः कर्तुमुचित इति पूर्वपादे निरूपितमिति तन्न्यायेनोत्तरकाण्डप्रतिपाद्यब्रह्मफलकसर्वात्मभावेपि पूर्वकाण्डप्रतिपादितकर्मणामुपसंहारः प्राप्नोति न वेत्यधुना विचार्यते, विधिपक्षे तत्सहकृतस्यास्य फलसाधकत्वमिति सिध्यति, निषेधपक्षे तु केवलस्येतीममेव पक्षं सिद्धान्तत्वेनाह पुरुषार्थ इत्यादिना, सिद्धान्ते ज्ञाते तत्र पूर्वपक्षसम्भव इत्यादौ तमेवाह ।

## पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥ ( ३. ४. १. )

अतः सर्वात्मभावादेव केवलात् पुरुषार्थः सिध्यति । कुतः? शब्दात्, श्रुतेरित्यर्थः, श्रुतिस्तु "नायमात्मा प्रवचनेने"( कठोप. २. २२. )त्युपक्रम्य "यमेवैष वृणुत" ( कठोप. २. २२. ) इत्यादिका "ब्रह्मविदाप्नोति पर" ( तै. ब्र. ) मित्यादिका "तमेवं विद्वानमृत इह भवति[1]" ( नृ. पू. १. ६. ) सनत्कुमारनारदसंवादे "यत्र नान्यत् पश्यती" (छान्दो. ९. २४. १.)त्याद्यात्मिका छान्दोग्यश्रुतिश्च, एतदादिश्रुतिषु पूर्वोक्तरीत्या केवलस्यैव भगवद्भावस्य फलसाधकत्वं श्रूयत इति तथा, अत्र "फलमत उपपत्ते" (ब्र. सू. ३. २. ३८.) रित्यत्रै[2]वोपपत्ति हेतुत्वेनानुक्त्वा श्रुतिपदं चानुक्त्वा शब्दपदं यदुक्तवांस्तेन श्रुतिस्मृत्यात्मकः सर्वोपि प्रमाणशब्दो हेतुत्वेन व्यासाभिमत इति ज्ञायते, तेन "केवलेन हि भावेन गोप्यो गावः खगा मृगाः येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा यन्न योगेन साङ्ख्येन दानव्रततपोध्वरैः व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद् यत्नवानपी" (श्रीमद्भाग. ११.१२.८–९.) त्यादिरूपा स्मृतिरपि सङ्गृह्यते, एतेन श्रुत्यादिप्रमाणवादिनामिदमेवाभिमतं तद्विरुद्धवादिनामितोन्यदिति तेषामप्रामाणिकत्वं ज्ञाप्यते, अत एव स्वनाम गृहीतं, स्वस्य वेदव्यासकर्तृत्वेन तत्रैव यतो भरः ।

अपरं च, वैदिकसिद्धान्ते भगवत्स्वरूपस्यैव स्वतन्त्रपुरुषा[3]र्थत्वात् प्राप्ततत्स्वरूपाणां मुक्त्यनिच्छाकथना"न्मुक्तोपसृप्यव्यपदेशाच्च" (ब्र. सू. १. ३. २.) मुक्तेरपरमपुरुषार्थत्वात् सा भवतु नामान्यैः साधनैः, वस्तुतः परमपुरुषार्थो य उक्तरूपः स तु सर्वात्मभावेनैवेतिज्ञापनाय फलपदमनुक्त्वा पुरुषार्थपदमुक्तं, एवं सत्यस्य सूत्रस्यार्थान्तरमपि व्यासाभिमतमिति ज्ञायते, तथा सत्ययं श्लिष्टः प्रयोगः, तथा हि पुरुषार्थो भगवानेव, कुतः? अतःशब्दात्, अतःपदविशिष्टश्रुतिवाक्यादित्यर्थः, तैत्तिरीयोपनिषत्सु पठ्यते"तःपरं नान्यदणीयसꣳ हि परात् परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता"(महानारा. १. १.)दिति ॥ १ ॥

---

पुरुषार्थोऽतःशब्दादिति बादरायणः ॥१॥ प्रसङ्गसङ्गत्या चरणान्तरमारचयितुमाहुरुपासनेत्यादि, उपास्याभेदाद् ब्रह्मत्वात्, उपसंहारः समुच्चयेनानुष्ठान, ननु पूर्वकाण्डोक्तकर्माणि, अस्य सर्वात्मभावस्य, केवलस्य पूर्वकाण्डीयकर्मासहकृतस्य सर्वात्मभावस्य परब्रह्मप्रापकत्वं, अत एवोक्तेर्थे प्रामाण्यातिशयादेव, तत्रैव वेदप्रामाण्य एव, मुक्त्यनिच्छा नृसिंहादिरूपैर्मुक्तिवरदाने कृतेपि भक्तानामग्रहणेच्छा, अन्यैः सर्वात्मभावातिरिक्तैः, य उक्तरूपः 'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यनेनोक्तपुरुषोत्तमप्राप्तिरूपः, एवं सत्युक्तार्थस्य सूत्रतात्पर्यविषयत्वे सति, अतःपदविशिष्टां श्रुतिमाहुरतःपरमित्यादिना, सा 'ह्यत.परं नान्यदणीयसꣳ हि परात् परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूप'मित्यादि ॥ १ ॥

---

१. भवतीति के । २. अत्रैवोप° क । ३. अपुरुषार्थित्वात् के ।

## समन्वारम्भणात् ॥ ५ ॥

"तं विद्याकर्मणी समन्वारभेते" ( बृह. ६. ४. २. ) इतिश्रुतिः फलारम्भे विद्याकर्मणोः साहित्यं दर्शयतीति न स्वातन्त्र्यं विद्यायाम् ॥ ५ ॥

## तद्वतो विधानात् ॥ ६ ॥

"ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीत" (आप.श्रौत.३.१८.१.) इतिकल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेन वरणं विधीयत इति ब्रह्मज्ञानस्यार्त्विज्याधिकारसम्पादकत्वात् कर्मशेषत्वमेवेत्यर्थः ॥६॥

ननु "यदहरेव विरजेत् तदहरेव प्रव्रजेद् गृहाद् वा प्रव्रजेद् वनाद्"(जाबा. ४.)वेत्यादिश्रुतिभ्यो विहितत्वाविशेषात् कर्मतत्त्यागयोरैच्छिको विकल्पोऽङ्गीकार्योऽतो न शेषिशेषभाव इत्यत उत्तरं पठति ।

## नियमाच्च ॥ ७ ॥

"आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासे" (तै.सं.२. १. १०.) "दैन्द्राग्नं पुनरुत्सृष्टमालभेत ये आ तृतीयात् पुरुषात् सोमं न पिबेद् विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना तृतीयात् पुरुषात् सोमं न पिबति" (तै. सं. २. १. १५.) "यावज्जीवमग्निहोत्रं जुहुया" (            ) दित्यादिश्रुतिभ्यो यथा कर्मकरणे नियमः श्रूयते न तथा तत्त्याग इति नोक्तपक्षः साधुरित्यर्थः, चकारा "न्नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते मोहात् तस्य परित्यागस्तामसः परिकीर्तित" (भग. १८. ७.) इत्यादिरूपा स्मृतिः समुच्चीयते ॥ ७ ॥

त्यागविधिरशक्तविषय इत्युक्तमिति प्राप्ते प्रतिवदति ।

## अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दः पूर्वपक्षं व्यवच्छिनत्ति, यदुक्तं "शेषत्वात् पुरुषार्थवाद" (ब्र.सू. ३.४.२.) इति तन्नोपपद्यते, कुतः? अधिकोपदेशात्, कर्मसाम्यमपि न वक्तुं शक्यं यत्र तत्र तच्छेषत्वं दूरापास्तं, यत ईश्वरः कर्मणः सकाशादधिक उपदिश्यते, तथा हि "स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च स न साधुना कर्मणा भूयान्नो एवासाधुना कनीया"(बृह. ६. ४. २२.)नित्युपक्रम्याग्रे पठ्यते "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रज"(बृह. ६. ४. २२.)न्तीत्यादि, एवं सति यज्ज्ञानसाधनत्वं यज्ञे तस्य यज्ञशेषत्वं कथं स्यात्? किन्तु यज्ञस्य तद्वेदनशेषत्वं, एतेनेज्यत्वेन तच्छेषत्वं प्रत्युक्तं वेदितव्यं, तज्ज्ञानस्य

समन्वारम्भणात् ॥ ५ ॥ तं फलार्थकर्मारम्भम् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥ स्फुटार्थमिदम् ॥ ६ ॥

नियमाच्च ॥ ७ ॥ न शेषिशेषभावो न ज्ञानस्य कर्माङ्गत्वमित्यर्थः, उत्तरं पठति सूत्रकारो जैमिन्युत्तरमनुवदतीत्यर्थः, कर्मकरणनियममुपपादय'न्त्याश्विनमि'त्यादिना, नोक्तपक्षो ज्ञानस्य स्वातन्त्र्येण पुरुषार्थसाधकत्वपक्षः, नियतस्य नियततया नित्यतया वेदबोधितस्य ॥ ७ ॥

अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ इति प्राप्त इति पूर्वसूत्रैः पूर्वपक्षे प्राप्ते, प्रतिवदति सूत्रकारः समाधत्त इत्यर्थ, पूर्वपक्षं जैमिनिपूर्वपक्षं, यत्र ब्रह्मणि, तच्छेषत्वं कर्मशेषत्वं, यज्ज्ञानसाधनत्वं यज्ञादिकर्मणि ब्रह्मज्ञानशेषत्वं, तस्य ब्रह्मणो ज्ञानस्य, एतेन यज्ञादिना साधनानां ब्रह्मज्ञाने शेषत्वाङ्गीकारेण, तच्छेषत्वमिज्यादियागशेषत्वं, ब्रह्मज्ञानस्य कर्माङ्गत्वाभावे युक्तिमाहुस्तज्ज्ञानस्ये-

१. °शेषमे° क । २. यथा तृतीयात् के । ३. उद्दिश्यते कपु । ४. न स. कं । ५. भवतु के । ६. °दिना पुं ।

यागपूर्वाङ्गत्वात् तद्विशिष्टस्यै ब्रह्मज्ञानसाधनत्वात्, न च पूर्वं सामान्यत इज्यज्ञानमासीद् यज्ञेन विशेषतो ज्ञाने सति पुनर्यज्ञकरणे पूर्णं कर्मफलं भावीति न तदशेषत्वमिति वाच्यं, "तमेव विदित्वा मुनिर्भवत्येतमेव प्रवाजिनो लोकमभीप्सन्तः प्रव्रजन्ती"(बृह. ६. ४. २२.)तिश्रुतेस्तद्वेदनस्य गार्हस्थ्यविरोधित्वेन तदसम्भवात्, यश्च साध्वसाधुकर्मफलसम्बन्धरहितस्तस्य कर्तृत्वेन तथात्वमनुपपन्नमतो जीवात्मन एव तथात्वं न तु परस्य, न चैतयोर्वास्तवाभेदान्नैवमिति वाच्यं, वास्तवाभेदाज्जीवेप्युक्तश्रुतिभ्यस्तथात्वस्य सुवचत्वात्, वास्तवाभेदस्य पूर्वमेव निरस्तत्वात् तमादाय ये पूर्वपक्षास्ते पूर्वपक्षा एवेत्यलमुक्त्या, "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ती"(महा.नारा.१०.५.)तिश्रुत्या 'कर्मप्रजाधनै'र्मोक्षाप्राप्तिमुक्त्वा 'त्यागेन' तत्प्राप्तिरुच्यते, त्यागविषयस्यान्यस्यानुक्त्या सान्निध्यात् 'कर्मा'दीनामेव त्यागोभिप्रेतः, तथा च 'मुक्तोपसृप्य'त्वाद् भगवत उक्तसाधनेन मुक्ताः सन्तो'नाकं' 'परेण' विद्यमानमपि भक्त्या 'गुहायां' 'विभ्राजते' तत्, "यस्मात् परं नापरम"(महा.नारा.१०.५.)स्तीत्यादिनोपक्रान्तत्वात् पुरुषोत्तमस्वरूपं 'यतयो' विरहभावेन तद्विना स्थातुमशक्तास्तत्प्राप्त्यर्थं यतमाना 'विशन्ती'ति भक्तिमार्गीयाणां फलमुक्तं, अग्रे 'वेदान्तविज्ञाने'(महा.नारा.१०.६.)त्यृचा ज्ञानमार्गीयाणां फलमुक्तं, अन्यथा पौनरुक्त्यं स्यात्, एवं कर्मज्ञानाभ्यामधिको भक्तिमार्गस्तत्प्राप्यः पुरुषोत्तमश्च श्रुतावुपदिश्यत इति तदेकप्रमाणवादिनो बादरायणस्य मतमप्येवं जैमिनिमता-

त्यादिना, तद्विशिष्टस्य तस्येज्यत्वेन यद् ब्रह्मज्ञानं तद्विशिष्टस्य कर्मण इत्यर्थः, इत्थं च ब्रह्मज्ञानाङ्गकर्मणो ब्रह्मज्ञानस्य कारणतायामात्माश्रयप्रसङ्गोन्योन्याश्रयप्रसङ्गो वेतिभावः, कर्मरूपमेकमन्तराकृत्य ब्रह्मज्ञानस्य स्वस्मिन् सापेक्षत्वात्, ननु 'यदेव विद्यया श्रद्धयोपनिषदा वा करोति तदेव वीर्यवत्तरं भवती'तिश्रुतेः पूर्वं यज्ञाङ्गभूतं ब्रह्मज्ञानं शाब्दं तादृशज्ञानाङ्गकयज्ञोत्तरं जातं ज्ञानं ब्रह्मसाक्षात्काररूपं तत्साक्षात्काराङ्गकयज्ञकरणानन्तरं च मोक्षो जनकादीनामिति पूर्वोत्तरयोर्ज्ञानयोर्भेदात् स्वस्मिन् सापेक्षाभावान्नात्माश्रयदोष इत्यत आहुर्न चेत्यादि, पूर्वं मोक्षव्यवहितयज्ञात् पूर्वं, सामान्यतः शाब्दरूपमिज्यज्ञानं ब्रह्मज्ञानं, यज्ञेन द्वितीययज्ञेन स्वल्पव्यवहितेन, विशेषतो ज्ञाने ब्रह्मसाक्षात्काररूपे ज्ञाने, न तद्शेषत्वं ब्रह्मज्ञानस्य न कर्माशेषत्वमित्यर्थः, तदसम्भवाद् ब्रह्मज्ञानिनः कर्मकरणासम्भवादित्यर्थः, न'न्वहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत' इतिवाक्यैर्भगवत एव यज्ञकरणसम्भवाद् भगवज्ज्ञानस्य च कर्माङ्गत्वसम्भवाद् ब्रह्मज्ञानस्य कर्माङ्गत्वमव्याहतमेवेत्यत आहुर्यश्चेत्यादिना, यश्चेश्वरश्च, तस्येश्वरस्य, कर्तृत्वेन यज्ञादिकर्मकर्तृत्वेन, तथात्वं मोक्षकामनया क्रियमाणयागे मोक्षकामनावतो ब्रह्मज्ञानस्य यज्ञाङ्गत्वं, अनुपपन्नं तत्करणस्य लोकसङ्ग्रहार्थत्वेन मोक्षार्थकरणमनुपपन्नमित्यर्थः, तथात्वमिति, तथात्वं मोक्षार्थं यज्ञकरणं, यज्ञे जीवीयब्रह्मज्ञानस्याङ्गत्ववचनं कर्तव्यमित्यर्थः, तच्च दूषितं 'तदसम्भवा'दितिपूर्वग्रन्थेनेतिभावः, एतयोर्जीवेश्वरयोः, नैवं जीवीयब्रह्मज्ञानस्य कर्माङ्गशेषत्वं नेत्यर्थः, इति न वाच्यमितिसमुदितार्थः, वादिपक्षहेतुभूतं वास्तवाभेदं निरूपयन्ति वास्तवेत्यादिना, उक्तश्रुतिभ्यो जीवस्य ब्रह्माभेदबोधकश्रुतिभ्यः, तथात्वस्य ब्रह्मतज्ज्ञानस्येव जीवीयब्रह्मज्ञानस्यापि कर्मशेषत्वस्य, वास्तवाभेदं निरूपयन्ति वास्तवाभेदस्येत्यादिना, वास्तवाभेदो नाम घटाकाशमहाकाशयोरिवौपाधिकभेदाभावः, स च पूर्वमेव द्वितीयाध्यायतृतीयचरणें'शो नानाव्यपदेशादि'त्यधिकरणे निरस्त इतिभावः, भक्त्यैव पुरुषोत्तमप्राप्तिरितिविशेषप्रतिपादिकां बृहन्नारायणोपनिषद्य'णोरणीयानि'त्यनुवाकस्थां श्रुतिमाहु'र्न कर्मणा न प्रजया धनेन त्यागेनैकेमृतत्वमानशु'रित्यादिकां, नाकं मोक्षसुखं, परेण कृतं सम्पादितमिति तृतीयार्थे, तद् भक्तिलभ्यं पुरुषोत्तमस्वरूपं, यस्मात् परं'ब्रह्मविदाप्नोति पर'मित्यादिश्रुतिबोधनात् परमित्यर्थः फलमुक्तं तादृशयतीनां फलमुक्तमित्यर्थः, अग्र एतत्फलनिरूपकश्रुतेरग्रे, अन्यथोभाभ्यां श्रुतिभ्यामेकफलनिरूपणे, तदेकेत्यादि, श्रुत्येकप्रमाणवादिन इत्यर्थः, बादरायणस्येति, अनेन

१. °स्य तस्य गो। २. भवतीति कैंबपागो। ३. अनीप्सन्त कैंपु। ४. साधू इति प्रमत्तः पाठः क्वचित्। ५. °मुक्त्वा बपा। ६. तद् कैंगो। ७. °विषयस्यानुक्त्या कैंगो। ८. सान्निध्यकर्मा° गो। ९. यद् "यस्मात् बपा। १०. सप्रमाण° कैं।

दधिकमित्यर्थः, एवं श्रुत्या परमतं निरस्य शिष्यैविश्वासार्थं स्वानुभवमपि प्रमाणयति तद्दर्शनादिति, उक्ताधिक्यवक्त्वेनैव भगवतो भक्तिमार्गस्य चानुभवादित्यर्थः, श्रुतयोधिकमात्मानं दर्शयन्तीति न व्याख्यानं, उपदेशपदेन पौनरुक्त्यापत्तेः, तन्मतमनिरस्य तस्मात् स्वमत आधिक्यमालोक्त्या निष्कामकर्मणश्चित्तशुद्धिहेतुत्वेन परम्पर्या ज्ञानमार्गोपयोगाङ्गीकारः सूच्यते, पुष्टिभक्तिमार्गे तु सोपि न, "यन्न योगेने"(श्रीमद्भाग. ११. १२. ९.)तिवाक्यात्, एवं सति क्व कर्मशेषत्वगन्धोपि ब्रह्मणीतिभावः ॥ ८ ॥

## तुल्यं दर्शनम् ॥ ९ ॥

यदुक्त'माचारदर्शनात् कर्मशेषत्वं ब्रह्मण' इति तदपि न साधीयः, तुल्यं यतो दर्शनं, ब्रह्मविदां शुकतृतीयजन्मवदार्षभादीनां त्यागदर्शनात्, एतेन यद्विदां कर्मत्यागस्तस्य कर्मशेषत्वं कथं शङ्कितुमपि शक्यमितिभावः सूच्यते, एतेन 'कर्मण्यशक्तान् प्रति त्यागविधि'रिति निरस्तं, शुकादीनामतथात्वात् ॥ ९ ॥

ननु "जनको ह वैदेह" (बृह. ५. १. १.) इतिश्रुतिसाहाय्यादाचारदर्शनं त्यागदर्शनादधिकबलमित्यत उत्तरं पठति ।

## असार्वत्रिकी ॥ १० ॥

ब्रह्मविदां सर्वेषामेतदाचारं चेन्निरूपयेच्छ्रुतिस्तदा त्वदुक्तं स्यात्, न त्वेवं, यत एतादृशी श्रुतिर्ब्रह्मवित्सु सर्वेषु न श्रूयते, तथा हि, "एतद्ध स्म वा एतद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्वे विद्वांसोग्निहोत्रं न जुहवाञ्चक्रिर एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्त्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्रा" (बृह. ६. ५. १५.) त्येत्यादिश्रुतयो बह्वयस्तद्विदां कर्मत्यागमेवानुवदन्ति, अतस्त्यागपक्ष एव बलवान् ॥ १० ॥

---

सूत्रे बादरायणपदतात्पर्यमुक्तं, एवं पूर्वोक्तरीत्या श्रुत्युक्तपरत्वव्याख्यानेन, परमतं परपदेन शारीराज्जीवात् परत्वमितिश्रुत्यर्थवक्तुर्मतं, उक्तेत्यादि, उक्तौ यौ कर्मज्ञानमार्गौ तयोः फले च तदपेक्षयाधिक्यवक्त्वेनेत्यर्थः, श्रुतयो 'न कर्मणा' 'परेण नाकं' 'ब्रह्मविदाप्नोति पर'मित्याद्याः श्रुतयः, अधिकमक्षरापेक्षयाधिकं, आत्मानं पुरुषोत्तमं, न व्याख्यानं शारीरजीवापेक्षयात्मन आधिक्यं श्रुत्या बोध्यत इति 'न कर्मणे'त्यादिश्रुत्याग्रेतन'वेदान्तविज्ञाने'तिश्रुत्या च मुक्तिरेव प्रतिपाद्यत इति च व्याख्यानं न वाच्यमित्यर्थः, तत्र हेतुमाहुरुपदेशपदेनेत्यनेन, तथा च 'न कर्मणे'त्यादिश्रुतिष्वप्युपदेशोग्रेतन'वेदान्तविज्ञाने'तिश्रुतावपि मोक्षोपदेश इतिहेतोरिदं व्याख्यानं न समीचीनमित्यर्थः, तन्मतमनुपदमुक्तं वादिमतं, अनिरस्य सूत्रकारेणानिरस्य, परम्पर्येत्यादि, चित्तशुद्धिद्वारा ज्ञानोत्पादनेन मोक्षे कर्मोपयोगाङ्गीकार इत्यर्थः, सोपि चित्तशुद्धिद्वारा कर्मोपयोगोपि, कर्मशेषत्वगन्धः परब्रह्मणः कर्मशेषत्वसम्भावना ॥ ८ ॥

तुल्यं दर्शनम् ॥ ९ ॥ ब्रह्मण इतिपदेन ब्रह्म ब्रह्मविद्या चेतिद्वयं बोध्यं, आर्षभादीनामृषभप्रभृतीनामित्यर्थो बोद्धव्यः, त्यागदर्शनात् कर्मत्यागदर्शनात्, यद्विदां ब्रह्मविद्यावतां, तस्य ब्रह्मविद्याया ब्रह्मणश्चेत्यर्थः, एतेन ब्रह्मविद्यावद्भिः शुकादिभिरतिसमर्थैः कर्मत्यागेन, अतथात्वात् समर्थत्वाभावात् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥ सूत्रमवतारयन्ति नन्वित्यादिना, एतादृशी जनकाचारप्रदर्शकश्रुतिसदृशी, एतद्विद्वांसो ब्रह्मविद्यावन्तः, त्यागपक्ष एवेति, एवकारेणाचारपक्षस्य बलं व्यवच्छिद्यते ॥ १० ॥

---

१. श्रुत्वा पा अशुद्धम् । २. शिष्येति लुप्तं पा । ३. शिष्य उक्ताधिक्य° पा अशुद्धम् । ४. परम्परा° कबपापुंगो । ५. °कारोत्र कँबपागो । ६. न ह्येवं कें । ७. तद् कबपापु । ८. आहू ऋषयः सर्वत्र । ९. जुहुवा° बपुं । १०. लुप्तं कँबपागो । ११. एवं कें अशुद्धम् ।

ननु ब्रह्मवित्त्वाविशेषे[1]प्येकेषां कर्मकृतिरेकेषां तत्त्याग इतिविभागः कुत इत्याशङ्क्य तत्र हेतुमाह ।

## विभागः शतवत् ॥ ११ ॥

"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"(बृह. ६. ३. ३२.)तिश्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तं ये गणिता आनन्दास्ते सर्वे[2] पुरुषोत्तमानन्दात्मका एव, एवं सति येषु यावानानन्दो दत्तोस्ति तावन्तं तं निरूपयन्[3]त्यधिकारतारतम्येन तद्दानमितिज्ञापनाय शतोत्तरं शतोत्तरमानन्दं श्रुतिर्न्यरूपयत्, अत एव पुरुषायुःसङ्ख्यासमानसङ्ख्ययैवोत्कर्ष उक्तः, तेन पुरुषधर्मस्याधिकारस्यैवोत्कर्षः सूच्यते, एवं प्रकृतेप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यं, अत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे त्यागस्तदनुत्कर्षे नेत्यर्थः ॥ ११ ॥

यच्चोक्तं "तद्वतो विधाना" (ब्र. सू. ३. ४. ६.)दिति तत्राह ।

## अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं "ब्रह्मिष्ठो ब्रह्मे"(आप.श्रौत.३.१८.१.)त्यादि तत्र 'ब्रह्म'शब्देन वेद एवोच्यते न तु परः, तथा च[5] तं ब्रह्मत्वेनाविकृतशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः करोति न तु तेन किञ्चित् कामयते तस्याधिकारो ब्रह्मत्वार्त्विज्य इत्युच्यत इति न ब्रह्मज्ञानस्य कर्मशेषत्वं, प्रत्ययस्यातिशायनार्थकत्वादतिशयेन ब्रह्मरूपस्तदेव भवतीति युक्तं तस्य तदार्त्विज्यं, एवं सति ब्रह्मपदं ब्राह्मण्यपरमपि सङ्गच्छते ।

अथ वा वेदाध्ययनमात्रवतः कर्मण्यधिकारो न तु ब्रह्मविदोपीत्यर्थः, न च तदन्तःपातित्वेन वेदान्तानामप्यध्ययनस्यावश्यकत्वे तत्प्रतिपाद्यब्रह्मज्ञानस्याप्यवर्जनीयत्वात् तद्वत एव तत्राधिकार इति वाच्यं, शब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात्, न हि 'सिता मधुरे'तिशाब्दज्ञानमात्रवांस्तन्माधुर्यज्ञो भवति, तथा सति पित्तोपशमा[6]दिकं तत्कार्यमपि स्यात्, नत्वेवं, अत एव छान्दोग्ये सनत्कुमारेण 'यद् वेत्थ तेन मोपसीदे'(छान्दो. ९. १. १.)त्युक्तो नारद ऋग्वेदमारभ्य सर्पदेवजन[7]विद्यापर्यन्तं स्वाधीत[8]मुक्त्वाह "सोहं मन्त्रविदेवास्मि नात्मवि"(छान्दो. ९. १. ३.)दित्यतोपरोक्षब्रह्मज्ञानमेव ब्रह्मज्ञानमुच्यते, अत एव तैत्तिरीयोपनिषत्सु

विभागः शतवत् ॥ ११ ॥ सूत्रमवतारयन्ति नन्वित्यादि, एकेषां जनकादीनां, एकेषां शुकर्षभादीनां, तत्र विभागे, गणिता आनन्दवल्ल्यां गणिताः, निरूपयन्ती श्रुतिर्भगवद्दत्तानन्दमधिकारिभेदेन निरूपयन्तीत्यर्थः, निरूपयन्तीति स्त्रियां प्रथमा, अत एव कर्मकरणतत्त्यागविभागयोरधिकारविभागाधीनत्वादेव, उत्कर्ष उक्तः आयुरुत्कर्षेणानन्दोत्कर्ष उक्त इत्यर्थः, एवं प्रकृतेपि कर्मत्यागविभागेपि, अपकृष्टाधिकारेत्याग इत्यर्थः, एतदेवोपपादयन्त्यन्यभावेत्यादिना, तथा च भगवदतिरिक्तभावराहित्ये कर्मत्यागोन्यभावसत्त्वेत्याग इत्यधिकारविभागेन विभागो बोध्यो ज्ञानमार्गे, अत्र तु भगवन्मार्गे तु, तदुत्कर्षेनुग्रहोत्कर्षे, त्यागः कर्मत्यागः ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥ सूत्रमवतारयन्ति यच्चोक्तमित्यनेन, तद्वतो ब्रह्मिष्ठत्ववतो ब्रह्मणः, विधानात् कर्मकरणार्त्विज्यविधानात्, न तु परो ब्रह्मविद्यावांश्चतुर्मुखः, तं ब्रह्मपदवाच्यं वेदं, तेन वेदाध्ययनेन, प्रत्ययस्य ब्रह्मिष्ठेत्यत्रत्येष्ठन्प्रत्ययस्येत्यर्थः, तादृशाध्ययनवतो ब्रह्मत्वेन वरणयोग्यस्य दुर्लभत्वात् कर्मविलोपप्रसङ्गादाहुरथ वेत्यादि, तद्वत एव शाब्दपरोक्षरूपब्रह्मविद्यावत एव, तत्र कर्मणि, एवं च ब्रह्मतद्विद्यावतोः कर्मशेषत्वमनाकुलमेवेत्यर्थः, ब्रह्मज्ञानत्वाभावाच्छाब्दपरोक्षस्य प्रथमाध्याय एव खण्डितत्वेन ब्रह्मज्ञानत्वासम्भवादित्यर्थः, 'तुष्य'त्वितिन्यायाद् दूषणसौकर्याच्च दूषणान्तरमाहुर्न हीत्यादिना, तथा सति शाब्देन सितारसप्रत्यक्षे सति, अत एव शाब्देनार्थापरोक्षस्यासम्भवादेव, मन्त्रविदेवात्मप्रतिपादकशब्दजन्यशाब्दबोधवान्, एवकारेणात्मप्रत्यक्षं व्यव-

१. °त्त्वाशेषेपि क[२]गो अशुद्धम् । २. सर्वेपुरु° के[२] अशुद्धम् । ३. °त्यधि° पु[१] । ४. लुप्तं वपापु[१] । ५. च लुप्तं पा, तत्त्वं क[२] । ६. °क्षया° के[२] । ७. °यजन° के[२]गो । ८. स्वाधीनं कपु[१] ।

"वेदान्तविज्ञानसुनिश्चितार्था" (महा.नारा.१०.६.) इति पठ्यते, 'विज्ञान'मनुभव एव न तु ज्ञानमात्रं, अतो दूरापास्तं कर्मशेषत्वं ब्रह्मणः, "तं विद्याकर्मणी" (बृह.६.४.२.) इत्यादिस्तु संसार्यात्मनः पूर्वदेहत्यागसामयिकं वृत्तान्तं निरूपयति न तु ब्रह्मविद[1] इति 'समन्वारम्भणा' (ब्र.सू.३.४.७.)दितिसूत्रमुपेक्षितमाचार्येण ॥ १२ ॥

यच्चोक्तं "नियमाच्चे"ति तत्राह ।

## नाविशेषात् ॥ १३ ॥

"आश्विन" (तैत्ति.सं.२.१.१०.)मित्यादिश्रुतिभ्यः कर्मकृतौ[2] यथा नियमः श्रूयते न तथा त्याग इति यदुक्तं तन्न, कुतः? अविशेषात्, "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु" (महा.नारा.१०.५.)रितिश्रुतिः कर्मादिनामृतत्वाप्राप्तिमुक्त्वा तत्त्यागेन तां वदन्ती कर्मत्यागस्यावश्यकत्वं वदतीति तस्मान्न विशेषो यत इत्यर्थः, तथा चा"मृतत्वमानशु"रितिपदात् मुमुक्षोः कर्मत्यागे[3]नियमोमुमुक्षोस्तत्कृतिनियम इतिव्यवस्थेतिभावः ।

अथ वा ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्मत्यागो द्वितीये तस्मिन् कर्मकरणनियमस्तत्र च कर्तुरङ्गत्वेन तत्स्वरूपज्ञानमावश्यकं तच्च वेदान्तैरेवेति कथं न कर्मशेषत्वमित्युत्सूत्रमाशङ्क्य निषेधति नेति, "यदहरेव विरजे"(जाबा.४.)दितिश्रुते"स्तावत् कर्माणि कुर्वीत न निर्विद्येत याव"(श्रीमद्भाग.११.२०.९.)तेतिभगवद्वाक्याच्च त्यागे वैराग्यस्य च प्रयोजकत्वादाश्र[4]मविशेषे विशेषाभावादप्रयोजकत्वादित्यर्थः, यत्रापि क्वचित् क्रमप्राप्तिस्तत्रापि न तज्ज्ञानं ब्रह्मज्ञानमिति पूर्वसूत्र एवोक्तमितिभावः, एतेन वेदाध्ययनादिकमप्यप्रयोजकमिति ज्ञापितमतएव शुकस्य वैराग्यातिशयादुपनयनादेरप्यनपेक्षोच्यते, एवं सूत्रद्वयेन कर्माधिकारसम्पादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तम् ॥ १३ ॥

---

च्छिद्यते, अनुभवः प्रत्यक्षं, एवकारेण शाब्दं व्यवच्छिद्यते, अत उपनिषज्जन्यशाब्दबोधस्य ब्रह्मविद्यात्वाभावात्, तं पञ्चाग्निविद्यया कर्मफलालौकिकदेहप्राप्त्यर्थं द्युलोकादौ गच्छन्तं, विद्या कर्मविद्या न तु ब्रह्मविद्या, समन्वारभेते अनुगच्छतः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥ सूत्रमवतारयन्ति यच्चोक्तमित्यादिना, 'नियमाच्चे'तिसूत्रे नियम उक्तस्तत्राहेत्यर्थः, आश्विनमित्यादि, 'आश्विनं धूम्रललाममालभेते'त्यादिश्रुतिभ्य इत्यर्थः, कर्मकृतावित्यादि, तथा च यथा नियमात् कर्मकृतेरावश्यकता तथा नियमाभावान्न त्यागावश्यकतेतिपूर्वपक्षः, तन्नेति, त्यागे नियमाभाव इत्युक्तं तन्नेत्यर्थः, अविशेषान्नियमेनानुष्ठानांशे कर्मत्यागयोर्विशेषाभावादित्यर्थः, त्यागे नियमेनानुष्ठेयत्वमुपपादयन्ति 'न कर्मणे'त्यादिना, नन्वौपनिषदब्रह्मात्मज्ञानस्य कर्मशेषत्वाभावेप्यौपनिषदजीवात्मज्ञानस्य कर्मशेषत्वमावश्यकमित्युपपाद्य निषेधितुमाहुरथ वेत्यादि, तस्मिन् गृहाश्रम इत्यर्थः, तत्र कर्मकरणे, आवश्यकं 'ज्ञात्वा कर्माणि कुर्वीते'तिवाक्यात् कर्तुः स्वात्मज्ञानमावश्यकमित्यर्थः, कथं नेत्यादि, औपनिषदजीवात्मज्ञानस्य कर्मशेषत्वमित्यर्थः, नेति, नाविशेषादित्यर्थः, एतत्पक्षे यतिगृहस्थयोः सति वैराग्ये विशेषाभावात् कर्मनैरपेक्ष्येणैव ब्रह्मविद्यासम्भवात् कर्मणामप्रयोजकत्वान्न कर्मापेक्षेतिभावः, एतदेवोपपादयन्ति 'यदहरेवे'त्यादिना, यत्रापि कर्मभिश्चित्तशुद्धिसत्त्वे ज्ञानोदयस्थले, तज्ज्ञानं कर्माङ्गभूतोपनिषदर्थशाब्दं ज्ञानं, ब्रह्मज्ञानं ब्रह्मसाक्षात्काररूपं विद्यात्मकं ज्ञानं न भवतीत्यर्थः, पूर्वसूत्रेत्यादि, तथा च ब्रह्मणस्तद्विद्याया वा न क्वापि कर्माङ्गत्वमित्यर्थः, एतेन वैराग्यहेतुककर्मत्यागमात्रस्यैव विद्याहेतुत्वेन, तच्छेषत्वं कर्मशेषत्वम् ॥ १३ ॥

---

१. ब्रह्मविद् पा अशुद्धम् । २. °कृतो कवपागो । ३. त्यागा° पा अशुद्धम् । ४. लुप्तं कें ।

अथ ग्रहिलतया 'ब्रह्मिष्ठ' इत्यत्र 'ब्रह्म'पदेन पर एवोच्यत इति वदसि तत्रापि वदामः।

## स्तुतयेनुमतिर्वा ॥ १४ ॥

दर्शपूर्णमासावेतादृशौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्स्तुत्यर्थं 'ब्रह्मिष्ठो ब्रह्मे'त्यनेन ब्रह्मविदोप्यार्त्विज्येनुमतिः[1] क्रियते, न तु तस्याधिकारित्वमभिप्रेतमुक्तानुपपत्तेरित्यर्थः[2] ॥ १४ ॥

## कामकारेण चैके ॥ १५ ॥

न"न्वेष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीया"(बृह. ६. ४. २३.)निति-श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिध्येते, स च प्राप्तिपूर्वक इति ब्रह्मविदः कर्मकरणमावश्यकमिति प्राप्त उच्यते कामकारेणेति।

करणं कारः, कामेनेच्छया करणं कामकारः, तथा च परानुग्रहार्थमिच्छामात्रेण न तु विधिवशाद् यत् करणं तत् कामकार इत्युच्यते, तथा चैवंकृते कर्मणि तत्कृतगुणदोषप्रसक्तौ तत्प्रतिषेधमेके शाखिन "एष नित्य"( बृह. ६. ४. २३. )इत्यादि पठन्ति, न ह्येतावता कर्मकृत्यधिकारप्राप्तिरितिभावः।

अथ वा कामेन कारो यस्य स तथा, तादृशेन कर्मणा प्राप्तवृद्धिह्रासयोः सम्बन्धाभावं ब्रह्मविद्येके पठन्तीत्यर्थः, चकारेणेश्वराज्ञया लोकसङ्ग्रहार्थं कृतं कर्म समुच्चीयते "सर्वस्य वशी सर्वस्येशान" ( बृह. ६. ४. २२. ) इतिश्रुतेस्तथा ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

अनेन कर्माधिकाराभावे हेत्वन्तरमुच्यते, द्वैतभाने हि यथाकथञ्चित् कर्मकृतिसम्भावनापि यस्य त्वखण्डब्रह्माद्वैतभानं ब्रह्मेत्येव न त्विदं ब्रह्मेति सखण्डं, अत्रोद्देश्यत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वं[4], तथा चाखण्डतज्ज्ञाने कर्मतदधिकारादेरुपमर्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसम्भावनापीत्यर्थः, श्रुतिस्तु "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये" ( बृह. ६. ५. १५. ) दित्यादिरूपा ॥ १६ ॥

---

स्तुतयेनुमतिर्वा ॥ १४ ॥ पूर्वोक्तैः षड्भिः सूत्रैर्जैमिनीयमतं निराकृत्य किञ्चिदाशङ्क्य निराकरोतीत्याशयेन सूत्रमवतारयन्त्यथेत्यादि, सूत्रं व्याकुर्वन्ति दर्शेत्यादिना, एतादृशावुत्कृष्टावित्यर्थः, तत्स्तुत्यर्थं दर्शपूर्णमासस्तुत्यर्थं, उक्तानुपपत्तेर्नियमेन ब्रह्मनिष्ठानां कर्मत्यागबोधककावषेयश्रुतेरनुपपत्तेरित्यर्थः ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥ ब्राह्मणस्य ब्रह्मविदः, परानुग्रहार्थं परस्य कस्यचित् प्रार्थनया तदनुग्रहार्थं 'सर्वभूतहिते रत'त्वात् करणमित्यर्थः, तत्कृतेति, कर्मकरणकृतगुणदोषप्रसक्तौ, तत्प्रतिषेधं गुणदोषप्रसक्तिप्रतिषेधं, नित्य इत्यादि, न'न्वेष नित्यो महिमा ब्राह्मणस्ये'त्यादि पठन्तीत्यर्थः, एतावता निष्कामतयान्यार्थं कर्मकृतिमात्रेण, पूर्वोक्तव्याख्याने स्वकृतेर्दोषासमर्पकत्वेपि स्वकृतकर्मणां दोषासमर्पकत्वं नोपलभ्यतेत आहुरथ वेत्यादि, स तथा कामकारस्तेनेत्यर्थः, सम्बन्धाभावं कदाचित् कर्मकरणेपि ब्रह्मविदः फलकामनाभावात् फलसम्बन्धाभावमित्यर्थः, तथा भगवद्वश्यतयाज्ञया कर्मकरणमित्यर्थः ॥ १५ ॥

उपमर्दं च ॥ १६ ॥ अनेनैतत्सूत्रेण, कर्मेत्यादि, ब्रह्मविदः कर्माधिकाराभावे, सखण्डं मध्य इदमंशस्यापि भानात् सखण्डमित्यर्थः, अत्रेदं ब्रह्मेतिज्ञाने, सम्भावनापीत्यादि, तथा च शाब्दरूपसखण्डब्रह्मज्ञाने कर्मसम्भावनासत्त्वेपि साक्षात्काररूपाखण्डब्रह्मज्ञाने कर्मसम्भावनापि नेत्यर्थः ॥ १६ ॥

---

१. °मिति ब। २. °कार° पुंगो। ३ °पत्तिभिरि° सर्वत्र। ४. खण्डत्वं कें।

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

अत्रेदं विचार्यते, ब्रह्मचर्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते, "ब्रह्मचर्यादेव प्रव्रजे" (जाबा. ४.) दित्यादिश्रुतिभिर्ब्रह्मचारिण एवं प्रव्रजनमपि बोध्यते, एवं सत्यविरोधाय "यदहरे" (जाबा. ४.) वेतिश्रुतेश्च रागितद्रहितभेदेन विषयभेदो वाच्यः, तत्र ब्रह्मचर्याविशेषेपि भगवदनुग्रहविशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञानमेव हेतुर्वाच्यः, "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वा" (महा. नारा. १०. ६.) इतिश्रुतिरिममेवार्थमाह, तथा चैतादृशा एवोर्ध्वरेतस इत्युच्यन्ते, एवं सत्यूर्ध्वरेतस्सु कर्माभाव उक्तरीत्या त्वयाऽधुरीकार्य इति ज्ञानरहितानां कर्मण्यधिकारस्तद्वतां सन्न्यास इति त्वदुक्ताद् विपरीतोर्थः सिध्यतीति क्व कर्मशेषत्वसम्भावना ज्ञाने? ननु सन्न्यासेपि तदाश्रमीणं कर्मास्तीति वैराग्यसहकृतं ज्ञानं तच्छेषभूतं तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न वैपरीत्यमिति प्राप्त आह शब्दे हीति, ज्ञानस्वरूपं तत्फलं च न युक्तिसिद्धं किन्तु वेदमात्रसिद्धं, तत्र तु "तमेवं विद्वानमृत इह भवति" (नृ. पू. १. ६.) "ब्रह्मविदाप्नोति परं" (तै. ब्र. ) "य एनं विदुरमृतास्ते भव" (बृह. ६. ४. १४.) न्तीत्यादिवाक्यैर्ब्रह्मज्ञानस्य मोक्ष एव फलं श्रूयते, सर्वसाधनानां साक्षात्परम्पराभेदेन तत्रैव पर्यवसानात्, अतो धर्मिग्राहकमानविरोधात् सन्न्यासाश्रमिणः कर्मशेषत्वमपि न वक्तुं शक्यमित्यर्थः, नन्वेवं सन्न्यासवैयर्थ्यमिति चेत्, न, ब्रह्मविदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनात्, अत एव "वेदान्तविज्ञानसुनिश्चितार्था" (महा. नारा. १०. ६.) इत्युक्त्वा "सन्न्यासयोगाद् यतयः शुद्धसत्त्वा" इत्युक्तं, अत्र पञ्चम्याऽन्तःकरणे संस्कारविशेषाधायकत्वं च प्रतीयते सन्न्यासस्य, स च संस्कारः फलोपकार्यङ्गमित्यावश्यकः सन्न्यासो मर्यादामार्गे, पुष्टिमार्गे त्वन्यैव व्यवस्था, "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदि" (श्रीमद्भाग. ११. २०. ३१.) हेतिवाक्यात् ।

## परामर्षं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ऊर्ध्वरेतस्सु च ज्ञानोक्तेस्तस्य मुक्तिफलकत्वोक्तेः "किं प्रजया करिष्यामो येषां नोयमात्मा नायं लोक" (बृह. ६. ४. २२.) इत्यादिश्रुतेश्च ब्रह्मप्राप्तावेव सर्वस्याः श्रुतेस्तात्पर्यमिति सिध्यति, तस्या एव सर्वक्लेशापायपूर्वकपरमानन्दरूपत्वात्, न तु कर्मणि, दुःखात्मकसंसार-

---

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ पूर्वसूत्रनिर्णीतार्थादधिकनिर्णयार्थं सूत्रमवतारयन्त्यत्रेदमित्यादिना, अत्रैतत्सूत्रविषयवाक्ये, रागीत्यादि, तथा च रागिणो ब्रह्मचर्यानन्तरं गार्हस्थ्यं विरक्तस्य सन्न्यास इति 'यदहरेव विरजेत् तदहरेव प्रव्रजे'दितिश्रुतेर्विषयभेदेन व्यवस्था कार्येत्यर्थः, तत्र रागिविरागिणोः, हेतुर्वाच्यो वैराग्ये हेतुर्वाच्यः, इममेवानुग्रहादिसम्पत्तिं सन्न्यासे हेतुत्वेनाहेत्यर्थं, उक्तरीत्या गार्हस्थ्याभावात्, विपरीतो ब्रह्मविद्यायाः कर्माङ्गत्वाभावः, तच्छेषभूतं सन्न्यासाश्रमीणकर्माङ्गत्वं, तदसहकृतं वैराग्यजज्ञानासहकृत ब्रह्मचर्यं, तत्र तु वेदे तु, धर्मिग्राहकेत्यादि, सकलसाधनानां ज्ञाने पर्यवसानाज्ज्ञानरूपधर्मिणः साक्षान्मोक्षकारणत्वश्रुतेर्ज्ञानस्य कर्मशेषत्वाङ्गीकारे तद्विरोध इत्यर्थः, एवं ज्ञानमात्रस्य मोक्षसाधकत्वे, अत्र श्रुतौ, पञ्चम्या 'सन्न्यासयोगा'दितिपञ्चम्या, स च रजस्तमोमिश्रीभावदूरीकरणेन शुद्धसत्त्वात्मकः, अन्यैवेत्यादि, केवलानुग्रहाधीना फलव्यवस्थेत्यर्थः ॥ १७ ॥

परामर्षं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ ऊर्ध्वरेतसां कर्मत्यागादेव मुक्तिरितिपूर्वोक्तं दृढीकर्तुं सूत्रमिदमिति जैमिनिपूर्वपक्षं सिद्धान्तपुरःसरं वदन्तः सूत्रमवतारयन्त्यूर्ध्वेत्यादिना, तस्य ज्ञानस्य, 'किं प्रजया करिष्यामो' 'न कर्मणे'त्यादिश्रुतेरित्यर्थः, तस्या एव ब्रह्मप्राप्तेरेव, न तु कर्मणि सर्वश्रुतीनां कर्मफले तात्पर्यं

---

१. एव च बपा। २. ऊरी° पा। ३. एत° सर्वत्र। ४. एवं बपा। ५. पञ्चम्या अन्तः° ब। ६. °मर्श सर्वत्र ७. शुक्ति° पुं ८. अयं बपागो।

हेतुत्वात् तस्य, जीवश्रेयोनिमित्तमेव श्रुतिप्राकट्यात्, अन्यथा निषेधविधिर्न स्यात्, तथा च कर्मविधिनापि परम्परया[1] मोक्ष एव फलत्वेन परामृष्यत[2] इति सिद्धं[3], तं परामर्षं[4] कर्मस्वातन्त्र्यवादी जैमिनिरपवदति बाधत इत्यर्थः, मोहकशास्त्रप्रवर्तकः स इतीश्वरमेव न मनुते यतोतस्तत्प्राप्तिस्तस्य मते दूरापास्ता, कर्मानधिकारिणामन्धादीनां सन्न्यासविधिविषयत्वमन्यथा "वीरहा वा एष देवानां योग्निमुद्वासयत" (तै. सं. १. १. ५. २.) इतिनिषेधविधिर्न[5] स्यात्, अतो "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद् वनी भूत्वा प्रव्रजेद् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वनाद्" (जाबा. ४. ) वेतिश्रुतेरप्यङ्गहीन एव स विषयः, यत आयुर्भागविभागेनाश्रमाणां विधानं, तुरीये तस्मिन् देहेन्द्रियादिवैकल्यं नियतं अतः कर्मण्येव श्रुतेस्तात्पर्यं, अपि च ज्ञानकर्मणोरलौकिकफलसाधकत्वे[6] तत्त्वेन विहितत्वमेव प्रयोजकं, अपरोक्षब्रह्मज्ञानं च न विधेयं, साक्षात्स्वकृत्यसाध्यत्वात्, चोदनाबोधकलिङाद्यभावाच्च[7] ज्ञानस्य न मुक्तिसाधकत्वं वक्तुं शक्यं, "य एनं विदु" (बृह. ६. ४. १४.) रित्यादिस्तु यागेष्विज्यविष्णुस्तुतिपरेत्याशयेनाह चोदना चेति, जैमिनिवत् तत्सहायभूतेयमचोदना च परामर्षमपवदतीतिसम्बन्धः, तथा च विधिसम्बधात् कर्मैवानुष्ठेयं न तु मुक्तिसाधनमप्यतथात्वादिति स्थितम् ॥१८॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

बादरायण आचार्यो जैमिनेरपि गुरुस्तदेव कर्तव्यमिति शिष्यसम्मतमनुष्ठेयं कर्मापवदतीति पूर्वेण सम्बन्धः, तत्र हेतुः साम्यश्रुतेः, "यथा वीरहा वा एष देवाना" (तै. सं. १. ५. २.) मितिश्रुत्या कर्मत्यागकर्तुर्निन्दा श्रूयत एवमेव[8] भगवज्ज्ञानरहितस्यापि सा श्रूयते यतः, तथा हि "असुर्या[9] नाम ते लोका अन्धेन तमसावृताः तांस्ते प्रेत्याभिं[10] गच्छन्त्यविद्वांसोबुधा जनाः" (ईशा. ३.), एतदग्रे च "ये तद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयं[11]" (बृह. ६. ४. १४.) न्तीत्यादिरूपा, एतच्च निन्दामात्रेण साम्यमुक्तमापाततः, वस्तुतस्तु "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतं[12]मेव प्रव्राजिनो लोकमी[13]प्सन्तः प्रव्रज" (बृह. ६. ४. २२.) न्तीतिश्रुत्या ज्ञानसाधनत्वेनैवाश्रमकर्मकरणोक्ते-

नेत्यर्थः, संसारहेतुत्वात् कर्मणां प्ररोहैकस्वभावत्वादित्यर्थः, 'तमेवं वेदानुवचनेने'त्यादिनिष्कामकरणादेर्मुक्तौ तात्पर्यावसायादेवं गम्यत इत्यर्थः, जीवश्रेयो मुक्तिरूपं, अन्यथा श्रुतीनां जीवश्रेयोर्थत्वाभावे, निषेधविधि'र्न कलिञ्जं भक्षये'दित्यादिरूपो नरकनिवारणार्थः, परम्परया चित्तशुद्ध्या ज्ञानद्वारा, तं परम्परया मोक्षोपयोगिनं, अपवदति यतो 'न कर्मणे'त्यादिश्रुतिरचोदनात्वादर्थवादोतोपवदतीत्यर्थः, मोहकेत्यादि, तदुक्तं पाद्मोत्तरखण्डे मोहकशास्त्रगणनाप्रस्तावे 'द्विजन्मना जैमिनिना पूर्ववेदमपार्थतः निरीश्वरेण वादेन कृतं शास्त्रं महत्तर'मिति पराशरोपपुराणे'प्यक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः त्याज्यः श्रुतिविरुद्धोंश. श्रुत्येकशरणैर्नृभिः जैमिनीये' चेत्युक्तमितिहेतोर्मोहकत्वमुक्तं, तत्प्राप्तिरीश्वरप्राप्तिः, जैमिनिमते सन्न्यासाधिकारिण आहुः कर्मेत्यादिना, अन्यथा कर्मसमर्थानां कर्मत्यागं कृत्वा सन्न्यासकरणे, अतः समर्थस्य कर्मकरणावश्यकत्वात्, स सन्न्यासाधिकारी, सूत्रे चोदना चेतिभागं व्याकर्तुमाहुरपि चेत्यादि, तत्त्वेनालौकिकफलसाधकत्वेन, लिङाद्यभावाज्ज्ञानस्य मुक्तिसाधकताबोधकश्रुतिषु लिङादिविधेरभावादित्यर्थः, स्तुतिपरा अर्थवादरूपेत्यर्थः ॥ १८ ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ जैमिनिसिद्धान्तनिरासकं सूत्रं विवृण्वन्ति बादरायण इत्यादिना, तदेव कर्मैव, पूर्वेण पूर्वसूत्रस्थेन, सकलाश्रमधर्माणां ज्ञानार्थत्वप्रतिपादिकां श्रुतिमाहुर्वस्तुतस्त्वित्यारभ्य 'तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव

१. परम्परामोक्षः सर्वत्र । २. परामृश्यते सर्वत्र । ३. सिद्धान्तं क । ४ परामर्श सर्वत्र । ५. श्रुतिर्न कंबपापुंगो । ६. °साधकत्वेन विहित° कबपापुगो । ७. लिङ्गा° कंपागो । ८. एवं पुं । ९. असूर्या. क । १०. °पि कपुपुं । ११ °वाप° पा । १२. °न° क । १३. °क्ष° वाचकदोपः, °मभीप्सन्त. पुं ।

णोक्तेश्च न स्वातन्त्र्यं कर्मणो वक्तुं शक्यं, अत एव शुकस्य न ब्रह्मचर्यादिकमपि, फलस्य जातत्वेन तत्साधनानपेक्षणात्, न च स्वर्गपदश्रवणान्नैवमिति वाच्यं, त्वदभिमतलोकात्मस्वर्गे "यन्न दुःखेन सम्भिन्न" (आप. श्रौ.) मितिवाक्यशेषोक्तस्वर्गपदप्रवृत्तिनिमित्तधर्माभावादात्मसुखस्यैव तादृशत्वात् तस्यैव तत्रोक्तेः, एवं सति "तमेतं वेदानुवचनेने" (बृह. ६.४.१४.) तिश्रुत्यैकवाक्यतापि सम्पद्यते, अन्यथा तु विरोध एव, ननु दृष्टफलका अपि कारीरीचित्रादियागाः श्रूयन्त इति नैवंनिर्णय इति चेत्, उच्यते, नित्यकर्मणो हि ज्ञानसाधनत्वमुच्यते, व्रीहिपश्वादीनां तन्निर्वाहकत्वात् तच्छेषत्वेन तेषां विधानं, एवं सति "वीरहे"तिश्रुतिः साग्निकस्य गृहिण आलस्यादिदोषेण तदुद्वासने दोषमाह न त्वाश्रमान्तरपरिग्रह इति मन्तव्यं, अन्यथा तदुच्छेदस्तद्विधिवैयर्थ्यं च स्यात्, न चानधिकृतमादाय तत्समाहितिरिति वाच्यं, अत्र पृच्छामोऽन्धपङ्ग्वादिभिः प्रव्रजनं कार्यमितिविधिरस्त्याहोस्विद् यावज्जीवमग्निहोत्रविधायकप्रव्रजनविधायकवाक्ययोर्विरोधाभावाय विषयो भिन्नः कल्प्यते ? नाद्यः, अश्रुतेः, न द्वितीयः, "यदहरेव विरजे" (जाबा. ४.) दितिश्रुत्या वैराग्यवतः प्रव्रजनविधानात् तेनैव विषयभेदसिद्धौ तत्कल्पनानवकाशात्, तेन "नापुत्रस्य लोकोस्ती" (ऐ.ब्रा. ७.१३.१२.) तिश्रुतिरप्यविद्वद्विषयिणीति न विरोधः, "विद्वांसः प्रजां न कामयन्त" (बृह. ६.४.२२.) इतिश्रुतेः, एतेनर्णत्रयापाकरणमपि प्रत्युक्तं वेदितव्यं, अविद्वद्विषयत्वात्, यदप्युक्तम"चोदना चे" (ब्र. सू. ३.४.१८.) तिसूत्रावयवेन चोदनाबोधकलिङाद्यभावो बाधक इति, तदपि न साधीयः, श्रुतिसाम्यादेव, श्रूयते हि "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये" (बृह. ६.४.१४.) दिति, न च प्रमाणवस्तुपरतन्त्रत्वान्न ज्ञानस्य विधेयतेति वाच्यं, इतरज्ञानस्य तथात्वेपि जीवात्मलक्षणेधिष्ठाने परमात्मनो भगवतो दर्शनस्यान्यतोप्राप्तत्वात्, श्रद्धान्तसाधनैस्तद्दर्शने स्वरूपयोग्यतासम्पत्तावात्मन्यधिष्ठाने परमात्मदर्शनानुकूलप्रयत्नविधानसम्भवाच्छ्रवणविधिना श्रुतिवाक्यजशाब्दज्ञानानुकूलप्रयत्नविधानवत्, एवमेव हि यागविधिनापि क्रियारूपयागस्य स्वानु-

---

'प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ती'तिश्रुत्या कर्मणां ज्ञानार्थत्वबोधनं, अत एव फलार्थकर्मणामनपेक्षत्वादेव फलस्यात्मलाभरूपफलस्य, स्वर्गपदश्रवणादर्शपूर्णमासि ज्योतिष्टोमविधायकवाक्ये स्वर्गपदश्रवणात्, नैवं कर्मणां ज्ञानद्वारा न मोक्षोपयोगित्वं, लोकात्मस्वर्ग इदं लोकात्मस्वर्गे, प्रवृत्तिनिमित्तेत्यादि 'यन्न दुःखेने'तिवाक्योक्तप्रवृत्तिनिमित्तधर्माभावादित्यर्थः, तादृशत्वात् तादृशप्रवृत्तिनिमित्तधर्मवत्त्वात्, तस्यैवात्मसुखस्यैव, तत्रोक्तविधिवाक्यस्थस्वर्गपदे, एवं सति कर्मणामात्मसुखसाधकत्वोक्तिसत्त्वे, अन्यथा कर्मणामिन्द्रलोकार्थत्वोक्तौ, नैवमित्यादि, सकलकर्मणां न ज्ञानार्थत्वनिर्णय इत्यर्थः, एवं सति कर्ममात्रस्य श्रौतस्य ज्ञानार्थत्वे सिद्धे सति, वीरहेतिश्रुति'र्वीरहा एष देवानां योऽग्निमुद्वासयती'तिश्रुतिः, अन्यथा गृहिणः कर्मकरणावश्यकत्वे, तदुच्छेदो 'यदहरेवे'ति 'गृहाद्वे'तिश्रुत्युक्तसन्न्यासोच्छेदः, तद्विधीति तयोर्विध्योरित्यर्थः, अनधिकृतं कर्मानधिकृतान्धपङ्ग्वादिकं, तच्छ्रुतिविरोधः, तत्कल्पनं यावज्जीवाग्निहोत्रविरोधकल्पनं, तेन 'न कर्मणा न प्रजये'तिश्रुत्या विदुषः कर्मत्यागनिर्वचनेन 'विद्वांसो न कामयन्त' इत्यनेन च, ऋणत्रयेत्यादि 'ऋणत्रयमपाकृत्य मनो मोक्षे निवेशये'दितिश्रुत्युक्तमित्यर्थः, बाधको ज्ञानपक्षे बाधकः, श्रुतिसाम्याज्ज्ञानकर्मपक्षद्वयेपि विधिसाम्यादित्यर्थः, ज्ञानविधिमाहु'स्तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दिति, प्रमाणेत्यादि, पुरुषप्रयत्नासाध्यत्वादितिभावार्थः, इतरज्ञानस्य ब्रह्मातिरिक्तज्ञानस्य, तथात्वेपि पुरुषप्रयत्नसाध्यत्वेपि, अन्यतो वेदाति-

---

१. स्वर्गकामपद° बप्रपापुपुंगो । २ लोकात्मक° सर्वेप्यादर्शाः । ३. °वचनेति° कैंगो । ४. °वाक्यप्रवर्तन° कें °वाक्यप्रव्रजन° बपागो । ५. बोधकः कैंगो । ६. °ज्ञानस्य तस्य कें ।

कूलप्रयत्नाधीनत्वेन स प्रयत्न एव विधीयतेऽन्याप्राप्तत्वान्न तु क्रिया, तत्प्रयत्ने सति तस्याः स्वत एव सम्भवात् ।

अथवा[1] ननु यथा "वीरहे" ( तै. सं. १.१.५.२. ) तिश्रुत्या कर्मत्यागो निन्द्यते तथैव "सूर्या नाम ते लोका अन्धेन तमसा वृताः तांस्ते प्रेत्याभि[2] गच्छन्त्यविद्वांसोबुधा जनाः" ( ईशा. ३. ) "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती[3]" ( बृह. ६.४.२४. ) त्यादिश्रुत्या भगवज्ज्ञानाभावो निन्द्यते, एवं सति कर्मज्ञानानुकूलप्रयत्नयोर्विधेयत्वे मिथो विरोधादधिकारिभेदेन विधेयत्वं वाच्यं, न च "तावत् कर्माणि कुर्वीत न निर्विद्येत यावते" ( भाग. ११.२०.९. ) तिभगवद्वाक्याद् रागिणः कर्म विधीयते तद्रहितस्य ज्ञानमिति वाच्यं, "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज" ( बृह. ३.१.१. ) इतिश्रुतेर्नीरागत्वेन प्रसिद्धस्यापि तस्य कर्मणि प्रवृत्तिर्या सा न स्यादधिकाराभावात्, अथ जनकदृष्टान्तेन कर्मणोऽङ्गित्वं ज्ञानस्य तदङ्गत्वं वाच्यं, तथा च ज्ञानवता कर्मानुष्ठेयमिति प्राप्ते[4] प्रतिवदति,

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

ज्ञानमङ्गं तदङ्गित्वेनानुष्ठेयं कर्मेतिमतं बादरायणोपवदतीति पूर्वेण सम्बन्धः, तत्र हेतुमाह साम्यश्रुतेरिति, स्वतोपुरुषार्थं कर्म फलार्थिनैवानुष्ठेयं, तथा 'चैष नित्यो महिमे" ( बृह. ६.४.२४. ) तिश्रुत्या ज्ञानवति विहितनिषिद्धयोः कर्मणोः फलाजनकत्वेन साम्यं श्रूयत इति फलार्थिप्रवृत्त्यसम्भवेन ज्ञानिनस्तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्याङ्गत्वं वक्तुं शक्यं, कृषीवलस्य व्रीहीणां वपने भर्जनस्येव, तथा च ज्ञानिनः प्रवृत्त्यसम्भवेनान्येषां चा "थेतरे दुःखमेवोपयन्ती[5]" ( बृह. ६.४.१४. ) तिनिन्दाश्रवणेन तथात्वात् सर्वार्थतत्त्वज्ञा श्रुतिर्ज्ञानबहिर्भूतं कर्म कथं विदध्यादिति ज्ञानस्य पुरुषार्थासाधकत्वोक्तिमसहमानेनाचार्येण प्रौढ्या निरूपितम् ॥ १९ ॥

एवं सति पूर्वकाण्डवैयर्थ्यमापततीति तत्तात्पर्यमाह ।

## विधिर्वा धारणवत् ॥ २० ॥

यथा योगशास्त्रे मनःसमाधेरेव साध्यत्वात् तत्साधनत्वेनैव मानस्या मूर्तेर्धारणं विधीयते न तु स्वतन्त्रतया फलसाधकत्वेन मनःसमाधौ तत्त्यागात्, "ततः किञ्चन न स्मरेत्[6]"

---

रिक्तप्रमाणतः, न तु क्रिया, तस्याः प्रयत्नासाध्यत्वादित्यर्थः, तत्प्रयत्नेति क्रियानुकूलप्रयत्ने, विधिसाम्यमुपपाद्य निषेधसाम्यमुपपादयन्त्यथवेत्यादिना, कर्मत्यागनिन्दिका श्रुति'वीरहे'तीति, ज्ञानाभावनिन्दिका'सूर्या नाम ते लोका अन्धेन तमसा वृताः तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोबुधा जनाः' 'ये तद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती'ति, मिथो विरोधात् कामतदभावरूपशान्त्योरधिकारिविशेषणयोर्विरोधादित्यर्थः, अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ सूत्रमवतारयन्ति 'न च तावत् कर्माणी'त्यादि, अधिकाराभावाज्जनकस्य निर्वेदसत्त्वेन सर्वदा भावरूपाधिकाराभावात्, प्रतिवदति सूत्रकारो दूषयति, पूर्वेण पूर्वसूत्रस्थेन, तत्र दूषणे, साम्यश्रुतिं प्रतिपादयन्ति स्वतोपुरुषार्थमित्यादिना, तथात्वाभावेन कर्मफलार्थित्वाभावेन, भर्जनस्येतिव्यतिरेकदृष्टान्तः, तथा च व्रीह्यावापे यथा भर्जनं नाङ्गमेवं कर्मण्यपि न ज्ञानमङ्गमित्यर्थः, अन्येषां ज्ञानिभिन्नानाम् ॥ १९ ॥

विधिर्वा धारणवत् ॥ २० ॥ सूत्रमवतारयन्त्येवमित्यादिना, एवं सति ज्ञानितद्भिन्नाभ्यां कर्मकरणासम्भवे सति, तत्साधनत्वेन ततो मनःसमाधिसाधनत्वेन, तत्त्यागान्मनःसमाधिसिद्धौ मूर्तिधारणत्यागवचनात्, ततो

---

१. श्रीनाथद्वारे श्रीमत्प्रभुचरणहस्ताक्षराणि इत आरभ्योपलभ्यन्त आभाष्यान्त कपुस्तकं च शुद्धप्रायमिति रश्मिग्रन्थप्रकाशक । २. °पि गच्छन्ति क। ३ °वापि° के। ४. प्राप्तं क, प्राप्तौ के। ५. °पि यन्ति पा। ६ °च्यै° के।

( भाग. ११.१४.४४. ) "तत्रापि चित्तबडिशं शनकैर्वियुङ्क्त" ( भाग. ३.२८.३४. ) मित्यादिवाक्येभ्यस्तथा, तथा भक्तिसाधनत्वेनैवानुष्ठेयमितितात्पर्येण कर्मविधिरुच्यते न तु स्वतन्त्रतया फलसाधकत्वेन, ननु तत्र समाधिमधिकृत्य यमादीन्युक्तानीति तन्मध्यपातित्वेन धारणस्य तथात्वं युज्यते प्रकृते ज्ञानं भक्तिं वाधिकृत्य न कर्म विहितमिति दृष्टान्तवैषम्यमिति चेत्, न, उक्तानुपपत्त्या सानिन्द्यमेव कर्म श्रुतिर्विदधातीत्यवश्यं वाच्यं, निन्दायां चेतरपदाज् ज्ञानमध्यपातिन एव तद्विषयस्य प्राप्तेरावश्यकत्वात्, तथा च भगवज्ज्ञानस्येतरनिरपेक्षत्वेन स्वरूपोपकारित्वमस्य कर्मणो वाच्यं, तथा चोक्तं "दानव्रततपोहोमजपस्वाध्यायसंयमैः श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत" ( भाग. १०.४५.२४. ) इति, "एष नित्यो महिमे" ( बृह. ६.४.२३. ) तिश्रुतिरपि यज्ज्ञाने सति विहितनिषिद्धकर्मफलासम्बन्धस्तद्वित् स्यादित्यनुक्त्वा "तस्यैव पदवित् स्या" ( बृह. ६.४.२३. ) दिति यदुक्तवती तेन पदयोर्भक्तिमार्गरूपत्वेन मुख्यत्वात् तज्ज्ञानानुकूलप्रयत्नमेव पूर्वं विदधे, तेन "शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनास्त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज" ( भाग. १.९.२६. ) मितिवाक्याच्च वर्णाश्रमधर्मा आत्मधर्माश्च पदज्ञानसाधनत्वेन कर्तव्या इति सिद्धं, "तस्यैवे" तच्छब्दस्य प्रसिद्धार्थकत्वाल्लोकवेदप्रसिद्धस्य पुरुषोत्तमस्यैव तत्रापि "पदवि"देव दीनभावेन भक्तिमार्गीयज्ञानवानेव "स्यादेवे""त्येव"कारः सर्वत्रानुषज्यते, तथा सति भक्तौ जातायां स्वत एव भगवज्ज्ञानं भवतीति ज्ञापयितुं "तं विदित्वे" ( बृह. ६.४.२४. ) ति पश्चादुक्तवतीति तदाशयो ज्ञायते, अत एव पूर्वं कर्म निरूपितं साधनत्वात्, स्यादेतद्, भक्तिसाधनत्वमेव चेत् कर्मणः श्रुतेरभिप्रेतं तदा भगवद्विदि तत्फलासम्बन्ध इत्यनुपपन्नमिति चेत्, मैवं, कर्मणां हि भक्त्युत्पत्तौ स्वरूपयोग्यतासम्पादकत्वमेव "नायमात्मे" ( कठोप. २.२२. ) तिश्रुतेः कर्मज्ञानाभ्यामलभ्यत्वाद् भगवतः, स्वरूपयोग्यतापेक्षापि मर्यादिकस्य न तु पौष्टिकस्यात एव वाशब्द उक्तोनियमवाची, तथा सति भगवदनुग्रहश्चेत् तदा भक्तिस्तया पुरुषो-

---

मनःसमाधिसिद्ध्यनन्तर, तथा मूर्तिधारणस्यान्यार्थत्वं मानसमूर्तिधारणस्य यथान्यार्थत्वं तथेत्यर्थः, तत्र योगशास्त्रे, धारणस्य मूर्तिधारणस्य, तथात्वं मनोधारणार्थत्वं, प्रकृते कर्मणो ज्ञानभक्तिसाधनत्वे, उक्तानुपपत्त्यै'ष महिमा ब्राह्मणस्ये'तिश्रुत्या ज्ञानिनि कर्मणां फलाजनकत्वोक्त्या कर्म निन्दितं, ज्ञानिभिन्ने चा 'थेतरे दुःखमेवोपयन्ती'तिश्रुत्या कर्माधिकारो निन्दितः, इत्थं च तदुभयनिन्दया कृत्वा यानुपपत्तिः कर्मणस्तत्रेत्यर्थः, सानिन्द्यं श्रुत्यानिन्दितस्थलीयं, इतरपदाद्'थेतरे'इत्यनेन ज्ञानिभिन्ननिन्दाबोधकेतरपदात्, ज्ञानमध्येत्यादि, तथा च प्राप्तज्ञानस्य 'न कर्मणे'तिश्रुत्या कर्मत्यागोक्तेर्ज्ञानस्वरूपयोग्यस्यैवै कर्मश्रुतिविषयस्यावश्यम्प्राप्तेरित्यर्थः, एतदेव निगमयन्ति तथा चेत्यादिना, भगवज्ज्ञानस्य शुकर्षभादिनिष्ठज्ञानस्य, इतरनिरपेक्षत्वेन फलजनने कर्मादिसहकार्याकाङ्क्षाराहित्येन, स्वरूपोपकारित्वं स्वरूपयोग्यस्याधिकारिणो ज्ञानेन्तःकरणशोधनद्वारोपयोगित्वमेवं जनकस्य कर्मणां विद्योपकारकतया ज्ञानस्वरूपोपकारित्वमवसेयमित्यर्थः, इत्थं च 'तमेतं वेदानुवचनेने'तिश्रुत्यर्थः समर्थितः, फलासम्बन्धः फलासम्बन्धो भवतीत्युक्तेत्यर्थः, तद्विद् ब्रह्मवित्, विदधे तज्ज्ञानानुकूल 'पदवित् स्या'दित्यनेन विदध इत्यर्थः, तस्यैव तच्छब्दस्येति, 'एष नित्यो महिमा ब्राह्मणस्ये'तिश्रुतौ 'तस्यैव पदवित् स्या'दित्यत्र 'तस्ये'तिशब्दस्येत्यर्थः, साधनत्वात् निष्कामकर्मणां परम्परया भक्तिसाधनत्वात्, स्यादेतदिति, एतद् वक्ष्यमाणं, तत्फलासम्बन्धः कर्मफलासम्बन्धो ज्ञानिनि, श्रुतावुक्तमनुपपन्नमित्यर्थः, वाशब्द उक्तो 'न मेधये'तिश्रुतौ वाशब्द उक्तः, सूत्रे वा, अनियमवाचीत्यनुग्रहसत्त्वे प्रवचनादिकं भक्तिर्नापेक्षतेनुग्रहाभावे तु मर्यादाभक्तिः प्रवचनादिकमपेक्षत

---

१. तथा सति बपागो । २. फलं कं । ३. उच्यते कंबपापुगो । ४. स्या° सर्वेप्यादर्शाः । ५. °रूपत्वात् तत्र च पदयोरेव सेव्यत्वेन मुख्यत्वात् कंबपापुंगोश्री । ६. विदधते कंबपागो । ७. तस्यैत° कपु । ८. °साधनमेव क । ९. त्यै कंगो ।

त्तमज्ञानं तदा कर्मतत्[1]फलसम्बन्धगन्धोपि नेति किमनुपपन्नं? एतेन "तमेव विदित्वा मुनिर्भवति" (बृह. ६.४.२२.) "अग्राह्यो न हि गृह्यत" (बृह. २.९.२६.) इत्यादिश्रुतीनां मिथो विरोधः परिहृतः, भक्त्या ग्राह्यत्वात् तदितरसाधनाग्राह्यत्वात्, अत एव "विविदिषन्ति" न तु विदन्त्यपीत्याशयवती "तमेतं वेदानुवचनेने" (बृह. ६.४.२२.) तिश्रुतिः पठ्यते, न चानुपदमेव "तमेव विदित्वा मुनिर्भवती" (बृह. ६.४.२२.) त्युक्तेः सान्निध्यादुक्तसाधनैरेव वेदनमभिप्रेतमिति वाच्यं, वेदानुवचनादीनां सर्वेषां वेदनसाधनत्वे सर्वेषां तत्कर्तॄणां वेदनसम्भवेन मुनिर्भवती' (बृह. ६.४.२२.) त्येकत्वं तद्विदि न वदेत्, अतो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते, "मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत" (भ. गी. ७. ३.) इतिभगवद्वाक्याच्च, तर्हि वेदानुवचनादिषु निःशङ्का प्रवृत्तिः कथम्? इत्थम्, "स वा अयमात्मे[2]" (बृह. ६.४.२२.) त्यादिकया पूर्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथञ्चित् तद्वेदनौत्सुक्ये सति सत्सङ्गाभावेन भक्तिमार्गापरिचयात् कर्ममार्गमात्रमाश्रमधर्मत्वेनालौकिकार्थसाधकत्वेनापि पूर्वं ज्ञातमस्तीति तदेव भगवद्वेदनेपि साधनमिति मन्यमानास्तदेव कुर्वन्ति, ननु वैदिकसाधनानां वैयर्थ्यं कथमिति चेत्, न, भ्रमकृतत्वेपि जन्मान्तरीयाक्षरज्ञानोपयोगिसंस्काराधायकत्वेनावैयर्थ्यात् ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

ननु साम्यश्रुतेर्हेतोः कर्मशेषत्वं ज्ञानस्य यदपास्तं तन्नोपपद्यते, साम्योक्तेर्ज्ञानस्तुतिपरत्वात्[3], अपि च [4]तया ज्ञानिनोपि कर्मोपादानात् कर्मकृतिस्वीकारादितियावत्, अन्यथा ज्ञानिनां कर्मकृत्यभावेन तत्कृतगुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात्, तेषामपि तत्कृतगुणदोषसम्बन्धोस्त्येवेतिज्ञापनाय मात्रपदं, निषेधेनेतरसाधारण्यं परिह्रियते, तथा च ज्ञानिनोपि कर्मकरणात् कर्मशेषत्वं ज्ञानस्य निःप्रत्यूहमिति चेन्नैवं वक्तुं युक्तं, पदज्ञानस्य कर्मफलासम्बन्धफलकत्वस्यापूर्वत्वाद् विधेयत्वमेव, न हि यस्य कर्मणो ज्ञानस्य वा यत् फलं तदुक्ते[5]रपि स्तुतिरेवेति युक्तं, तयोरुच्छेदापत्तेः, विधिर्हि प्रवर्तकः, तस्य पुरुषप्रवृत्त्युप-

---

इत्येवंविधानियमवाचीत्यर्थः, एतेन पूर्वोक्तरीत्या विषयव्यवस्थाकरणेन, अत एव साक्षात्साधनाग्राह्यत्वादेव, तत्कर्तॄणां प्रवचनादिकर्तॄणां, तद्विदि ब्रह्मविदि, तर्हि सर्वेषां ज्ञानप्राप्तिनिश्चयाभावे, तदेव कुर्वन्तीति, तथा चापातत औत्सुक्यादेव कुर्वन्तीति फलितं, इत्थं च पूर्वकाण्डस्योत्तरकाण्डशेषत्वं निर्णीतमितिभावः ॥ २० ॥

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥२१॥ पूर्वोक्तविषय एव किञ्चिदाशङ्क्य परिहरतीत्याशयेन सूत्रे पूर्वपक्षभागमाहुर्नन्वित्यादिना, साम्यश्रुतेर्ज्ञानकर्मणोर्यौ विधिनिषेधौ तयोः श्रुतौ साम्यदर्शनादित्यर्थः, श्रुतिपरत्वादित्यर्थः, स्तुतिपरत्वादिति, तथा च ज्ञानांशेर्थवाद एव न वास्तवं कर्मसाम्यमित्यर्थः, तयार्थवादरूपज्ञानस्तुत्या, स्वीकाराज् ज्ञानांशे विधेरर्थवादत्वात् कर्मार्थत्वावगमाज्ज्ञानस्य कर्मस्वीकारावश्यकत्वादित्यर्थः, अन्यथा ज्ञानिनां कर्मकरणाप्राप्तौ, तत्कृतेति, कर्मकृतिजनितगुणदोषौ, मात्रपदं सूत्रे मात्रपदं तादृशार्थसूचकं, निषेधेन ज्ञानिनां कर्मकृतगुणदोषनिषेधेन, इतरसाधारण्यमज्ञानिनो यथा गुणदोषस्तथा ज्ञानिनोपीतिसाधारण्यं, पदज्ञानस्य पूर्वश्रुत्युक्तभगवत्पदज्ञानस्य, कर्मफलेत्यादि, कर्मफलस्यासम्बन्धतादात्म्यं यस्मिंस्तादृशफलत्वस्य पदज्ञानसम्बन्धिन इत्यर्थः, विधेयत्वमेवेत्येवकारेणार्थवादाविषयत्वं बोध्यते, तदुक्तेरिति, तथा च ज्ञानकर्मणोः फलसम्बन्धबोधकवाक्यमात्रस्य स्तुतिपरत्वे पदज्ञानस्य फलसम्बन्धबोधकमपि स्तुतिपरमेवेतिभावः, तयोर्ज्ञानकर्मविध्योः, उच्छेदापत्तेः सर्वत्राधिकारिविधिषु फलबोधनादुच्छेदापत्तेरित्यर्थः, तस्य विधेः प्रवृत्त्युपयोगीत्यादि, इष्टभावनारूपार्थ-

---

१. °फलं कें । २. अयमि° पा । ३. °रूपत्वात् कबपापुपुंगो । ४. तथा कबपापुपुंगो । ५. तदुक्ति° कबपापुपुंगो ।

योग्यर्थकथनेनैव चारितार्थ्यादन्यार्थकथनस्य स्तुतित्वमस्तु नाम, न ह्येवं प्रकृते, मुमुक्षोः कर्मबन्धाभावप्रेप्सोस्तत्साधनत्वज्ञान एव प्रवृत्तिसम्भवात्, यच्च कर्मफलसम्बन्धनिषेधानुपपत्त्या कर्मसम्बन्ध इत्युक्तं तन्न साधीयः, न हि तरणौ तमःकार्याभाव इत्युक्ते तत्प्राप्तिरपि सम्भवति ।

अथवा पुरुषोत्तमज्ञानमुख्यफलस्यातिमहत्त्वेन साक्षाद् वक्तुमशक्यत्वं ज्ञापयन्ती कैमुतिकन्यायेन परम्परया तदाहानयर्चा "तं विदित्वा ब्राह्मणो भवती"तिश्रुते "ब्राह्मण"पदेन ब्रह्मविदुच्यते, तथा चाद्यपदेन बुद्धिस्थब्राह्मणमाहात्म्योद्देशे कृते स क इत्याकाङ्क्षायामाह "तं" ब्राह्मणं "विदित्वा" विहितनिषिद्धफलासम्बन्धी "भवती"तिलक्षण इत्यर्थः, साक्षाद्भगवद्विदः किमु वाच्यमितिभावः, अत"स्तस्यैव" तच्छब्दस्य पूर्वपरामर्शित्वाद् ब्राह्मणस्यैव भगवद्विदो भक्तस्यैव "पदवित् स्यात्" ( बृह. ६.४.२३. ) तज्ज्ञानानुकूलप्रयत्नवान् स्यात्, तद् भजेतेतियावत्, तथा च यत्र भगवद्विद्विषयकज्ञानस्याप्युक्तरीत्या न कर्मशेषत्वं वक्तुं शक्यं तत्र भगवज्ज्ञानस्य तथात्वं दूरदूरतरमिति सर्वं सुस्थम् ॥ २१ ॥

अथ प्रकारान्तरेण शङ्कते "भृगुर्वै वारुणिः वरुणं पितरमुपससार" (तै.भृ.) "अधीहि भगव" इति होपससाद सनत्कुमारं नारदः, (छान्दो.७.१.१.) "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे" ( कौ. ३.१. ) त्याद्युपाख्यानैर्हि ब्रह्मविद्या निरूप्यते, "सर्वाण्याख्यानानि पारिप्लवे शंसंती" ( आप. श्रौ. ) तिश्रुत्या शंसनशेषत्वं तेषामवगम्यते, शंसने शब्दमात्रस्य प्राधान्येनार्थज्ञानस्यातथात्वादुपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवदप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यं प्राधान्यं तु दूरापास्तं धर्मिण एवासिद्धेरित्याह पारिप्लवार्था इति ।

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥

उक्तरीत्या सर्वा उपाख्यानश्रुतयः कर्मशेषभूता इत्यर्थः, अत्राचार्य एवमपि कर्मशेषत्वं ज्ञानस्य न सम्भवतीत्याह नेति, कुतः ? विशेषितत्वात्, कर्मणः सकाशात् ज्ञानं विशेषितमधिकधर्मविशिष्टत्वेनोक्तमिति न ज्ञानस्य कर्मशेषत्वमित्यर्थः, ननु विशेषितत्वमुपा-

कथनेनेत्यर्थः, अन्यार्थेत्यादि, विधिभिन्नार्थकथनस्येत्यर्थः, न ह्येवमित्यादि, प्रकृते 'पदवित् स्या'दितिमुमुक्षुप्रवृत्तिबोधकविधावेवं प्रवृत्तिप्रयोजकेष्टसाधकत्वान्यकथनं न हीत्यर्थः, तदेवोपपादयन्ति मुमुक्षोरित्यादिना, तत्साधनत्वेति, बन्धाभावसाधनत्वं, निषेधेत्यादि, निषेधस्य प्राप्तिपूर्वकत्वादितिभावः, तरणौ सूर्ये विद्यमान इत्यर्थः, तत्प्राप्तिः सूर्ये विद्यमाने तमःकार्यप्राप्तिः, 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने' त्युक्ताकुतोभयफलकस्य पुरुषोत्तमज्ञानस्य कर्मबन्धाभावफलकत्वमप्रयोजकमित्याशयेनाहुरथवेत्यादि, मुख्यफलस्याकुतोभयरूपफलस्य, अनयर्चेत्यादि, आद्यपदेन 'त'मित्याद्यपदेन, इतिलक्षण इत्यनेन ब्रह्मविदः स्वरूपमुक्तं, साक्षादित्यादि, तथा च ब्रह्मविज्ज्ञानादेतादृशे फले सति साक्षात्पुरुषोत्तमविदः किं माहात्म्यं वाच्यमित्यर्थः, तच्छब्दस्य 'तस्यैव पदवित् स्या'दितिश्रुतिस्थतच्छब्दस्य ॥ २१ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥ एतन्निसूत्र्यारम्भेणाशङ्काविशेषं परिहर्तुमाहुरथेत्यादि, पारिप्लवे अङ्गभावे, तेषामुपाख्यानानां, शंसन उपाख्यानाङ्के शंसने, अतथात्वादुपाख्यानानामर्थज्ञानस्याप्रयोजकत्वात्, प्राधान्यमुपाख्यानार्थज्ञानानां प्राधान्यं, धर्मिणो ज्ञानरूपस्य धर्मिणः, उक्तरीत्येज्यस्तुतित्वेनेज्यायामुपयोगित्वेन, अत्रैतत्सूत्रे, एवमप्युक्तप्रकारेणापि, ज्ञानस्योपाख्यानतात्पर्यविषयीभूतब्रह्मज्ञानस्य, अधिकधर्मेत्यादि, आनन्दविषयताविशिष्टत्वेनेत्यर्थः, ज्ञानस्योपाख्यानार्थज्ञानस्य, उपाख्यानेष्वेवाख्यानार्थ-

---

१. °ज्ञानफल° कें । २. °यार्चा कें । ३. स च कें । ४. यथा कें । ५. °वद्विषय° कपुं, भक्तविद्विषय° बपा । ६. दूरतर कपु° । ७. एतस्याग्रे 'भावशब्दाच्चे'ति सूत्रं पठ्यत एकदेशिभिस्तत्तु प्रयोजनाभावादेवोपेक्षितं श्रीमद्भाष्यकारैरथवा लेखकदोषादेव त्रुटितम् । ८. भगवत कें । ९. होपा० कें । १०. शंसन्ति पा । ११. °ज्ञानस्य तथा° क । १२. °द्धि° केंबपागो । १३. न च पुं । १४. °षितमा° पा । १५. आख्यानेषु सर्वेष्वप्यादर्शाः ।

ख्यानेष्वेवेत्यप्रयोजको हेतुरिति चेत्, मैवं, आचार्याशयानवगमात्, तथा हि 'पूर्वं तुष्यतु दुर्जन' इतिन्यायेनाख्यानानां शंसनशेषत्वमुपेक्ष्योच्यते, न ह्याख्यानेष्वेव ज्ञानं निरूप्यते किन्त्वन्यत्रापि, तथा हि तैत्तिरीयके पठ्यते "ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म" (तै. ब्र. १.) त्युपक्रम्य माहात्म्यविशेषज्ञानार्थमाकाशादिकर्तृत्वमुक्त्वानन्दमयत्वं रसरूपत्वमप्युक्त्वा "भीषास्मा" (तै. ब्र.) दित्यादिना सर्वनियामकत्वं चोक्त्वा भगवानेव पूर्णानन्द इतिज्ञापनायानन्दगणनां कृत्वानन्दमयं पुरुषोत्तमं प्राप्तेनानुभूयमानानन्दस्वरूपं "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै. ब्र.) त्यादिनोक्त्वा तद्विदो माहात्म्यमुच्यत "एत९ ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव" (तै. ब्र.) मिति, अत्र ज्ञानवान् सच्चिद्रूपं देशकालापरिच्छिन्नं सर्वकर्तारं निरवध्यानन्दात्मकं सर्वनियामकं मनोवागगोचरं पुरुषोत्तमं प्राप्नोति, कर्मी तु स्वयं क्लेशात्मकं तद्वांश्च "एषैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" (बृह. ६. ३. ३२.) तिश्रुतेः क्षुद्रतरानन्दजनकस्वर्गपश्वादिफलमाप्नोतीति विहितनिषिद्धकर्मणोश्चाप्रयोजकत्वं तस्मिन्नुच्यत इति कर्मणः सकाशाज् ज्ञानस्य निरवधिरेव विशेष उच्यत इति न धर्म्यसिद्धिर्न वा कर्मशेषत्वं ज्ञानस्य सिध्यति ॥ २२ ॥

तथाप्याख्यानप्रतिपादितविद्यानामसिद्धिरेवेति चेत् तत्राह ।

## तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥

यथा केवलश्रुतेर्विद्याप्राधान्यं तथैवोपाख्यानश्रुतेरित्यर्थः, चकारेण प्रश्नोत्तरैर्निर्णीतार्थप्रतिपादनं, महतामेवात्र प्रवृत्तिः, सापि बह्वायासपूर्विकेति विद्यामाहात्म्यज्ञापनं प्ररोचनं चाधिकमुपाख्यानानामुपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशादित्युच्यते, तत्र हेतुरेकवाक्यतोपबन्धादिति, "आचार्यवान् पुरुषो वेद" (छान्दो. ८.१४.२.) तिश्रुत्यैकवाक्यताज्ञानमाख्यानं विना न भवतीति तदर्थमुपबन्धाद् गुरुशिष्यकथोपबन्धादित्यर्थः ।

अथवोपाख्यानरहितायां श्रुतौ यथा ज्ञानं निरूप्यते तथै "वाधीहि भगव इति होपससाद सनत्कुमारं नारद" (छान्दो. ९.१.१.) इत्याद्याख्यानेष्वपि निरूप्यते इत्यनाख्यान-

---

ज्ञानेष्वेव, एवकारेण मन्त्रब्राह्मणार्थज्ञानस्यान्यस्य व्यवच्छेदः, मैवमाख्यानार्थज्ञानमात्रे विशेषितत्वनिर्वचनमिति नेत्यर्थः, तत्र हेतुराचार्येत्यादि, शंसनशेषत्वं ब्रह्मज्ञानोपयोगिज्ञानप्रतिपादनशेषत्वं, आख्यानेष्वेवेत्येवकारव्यवच्छेद्यार्थमुपादेयत्वेनोपपादयन्ति न हीत्यादिना, आनन्दगणनां शतानन्दाधिकतयानन्दगणनामित्यर्थः, प्राप्तेन भक्तेन कृत्वेत्यर्थः, तद्विदः पुरुषोत्तमविदः, अत्र भगवन्मार्गे, ज्ञानवान् पुरुषोत्तमज्ञानवान्, आप्नोतीत्यस्य तद्वानित्यत्रान्वयः, अप्रयोजकत्वं फलाजनकत्वं, तस्मिन् पूर्वोक्तज्ञानवति, न वा धर्म्यसिद्धिर्ज्ञानसिद्धेः श्रुतावुक्तत्वान्न धर्म्यसिद्धिः ॥ २२ ॥

तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥ सूत्रमवतारयन्ति तथापीत्यादिना, असिद्धिराख्यानानां कर्मशेषत्वाभावस्यासिद्धिः, केवलश्रुते 'रधीहि भगव इति होपससादे'त्यादिश्रुतेः, उपाख्यानश्रुतेर्माहात्म्यबोधकश्रुतेः, प्रश्नोत्तरैर्महतां नारदसनत्कुमारादीनां, अत्रोपनिषन्मार्गे, सा महतां प्रवृत्तिः, अधिकं केवलविद्याबोधकश्रुत्यपेक्षयाधिकं, एकवाक्यताज्ञानं केवलविद्याबोधकश्रुतीनामेकवाक्यताज्ञानं, ननु गुरुशिष्याख्यानरहितकेवलज्ञानप्रतिपादक'ब्रह्मविदाप्नोतिपर'मित्यादिश्रुतीनामाख्यानाकाङ्क्षा न त्वाख्यानवतीनामपीतराकाङ्क्षेतिकेवलज्ञानप्रतिपादकश्रुतीनामाख्यानवतीषु शेषत्वं स्यादत आहुरथवेत्यादि, निरूप्यते ज्ञानं निरूप्यते, तथा चैकवाक्यतया समानैक-

---

१. °शेषित्व° कपु । २. मुपेक्षित्वा बपापुगो । ३. स्वरूपत्वमु° कं, °रूपत्वमु° बगो । ४. °माप्नोति कपु ।
५. °श्रुतीनामि° सर्वेष्प्यादर्शा. ।

श्रुत्यैकवाक्यतयैवाख्याने ज्ञानस्वरूपो[1]पबन्धात् प्रतिपादनादित्यर्थः, नैकट्यवाचिनोपपदे[2]न वस्तु[3]सती या तत्तद्गुरुतत्तच्छिष्यकथा तत्सामीप्यमत्रोच्यते, अन्यथा सामीप्यासम्भवादतः कल्पितत्वशङ्कानिरासः, नन्वेवमपि पारिप्लवार्थत्वे[4]न बाधकं पश्याम इति चेत्, उच्यते, अश्वमेधप्रकरणे "मनुर्वैवस्वतो राजे" (आप. श्रौ.) त्यादीन्याख्यानानि यत्र पठितानि तत्र सामान्यतस्तेषां विनियोगः "सर्वाण्याख्यानानि पारिप्लवे शंसती"त्यनेनोक्त इति 'सर्व'शब्दस्तदाख्यानपर एव नत्वाख्यानान्तरपरोपि, प्रकरणस्य नियामकत्वात्, एवं सति यदा पारिप्लवाख्यकर्मप्रस्तावस्तदा विशेषविनियोग उक्तः "पारिप्लवमाचक्षीते" (आप. श्रौ.) ति, तत्र प्रथमेहनि "मनुर्वैवस्वतो राजे" (आप. श्रौ.) ति द्वितीयेहनी"न्द्रो वैवस्वत" (आप. श्रौ.) इति तृतीयेहनि "यमो वैवस्वतो राजे" (आप. श्रौ.) त्याद्या[5]ख्यानविशेषा वाक्यशेषे विनियुज्यन्ते, आख्यानसामान्यपरत्वे त्वहोविशेष उपाख्यानविशेषविधानं न स्यात्, अत एव पारिप्लवमित्येकवचनमतो नाख्यानान्तरगन्धसम्बन्धोपि, प्रापकाभावात् ॥ २३ ॥

## अत एवाग्नी[6]न्धनाद्यनपेक्षा ॥ २४ ॥

एवं "पुरुषार्थोतःशब्दा" (ब्र. सू. ३.२.१.) दित्युपक्रम्य ज्ञानस्य फलसाधने कर्मानपेक्षत्वमुपपाद्य तत्रैवोपपत्त्यन्तरमाह, यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको जातोत एव जरामर्याग्निहोत्रेग्निस्तदिन्धनं समिदादि तदाद[7]य आज्यादयस्तेषामनपेक्षोक्ता श्रुतौ, तैत्तिरीयके पठ्यते "तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोग्नि" (नारा. ८०.) रित्यादि, एतेन यदन्यस्य यज्ञतासम्पादकं तस्य स्वकार्यसाधने कथं यज्ञापेक्षा भवेदितिभावः सूच्यते ॥ २४ ॥ १ ॥

॥ इति तृतीयाध्याये चतुर्थपादे प्रथमं पुरुषार्थोतःशब्दादिति प्रथमाधिकरणम् ॥१॥

---

धर्मिणो ज्ञानस्योभाभ्यां निरूपणान्नैकस्याप्यन्यशेषत्वमिति फलितं, अन्यथा तत्तद्गुरुतत्तच्छिष्याणामवस्तुत्वाङ्गीकारे, अतः पूर्वोक्तानां वास्तवत्वेनोपनिबद्धत्वात्, आशङ्कान्तरमाहुर्नन्वेवमित्यादिना, पारिप्लवार्थत्वेन 'सर्वाण्याख्यानानि पारिप्लवे शंसती'त्यनेन, बाधकं सर्वाख्यानानामश्वमेधीयपारिप्लवपदार्थाङ्गत्वान्न ब्रह्मविद्योपयोग इति बाधकं, उच्यते समाधानमुच्यत इत्यर्थः, सर्वाण्याख्यानानि 'मनुर्वैवस्वत' इत्यादीनि सर्वाणीत्यर्थः, तदाख्यानपर एवाश्वमेधप्रकरणे पठितानि यानि 'मनुर्वैवस्वत'इत्याद्याख्यानानि तत्परस्सर्वशब्दस्तेन प्रकरणेन सर्वशब्दसङ्कोचान्न ब्रह्मविद्योपाख्यानानामश्वमेधीयपारिप्लवशेषत्वमिति फलितं, विशेषविनियोगो यस्मिन् दिने यदाख्यानमुक्तं तद्द्वितीयपारिप्लवे तदाख्यानविनियोग इत्यर्थः, विशेषविधानं न स्यादिति, तथा च 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्येभ्यस्तक्र'मितिविशेषविधानाद् यथा कौण्डिन्येभ्यो दधिनिवृत्तिस्तथेतरोपाख्यानानां पारिप्लवे निवृत्तिरन्यथा विशेषवाक्यविशेषवैयर्थ्यापत्तेरितिभावः, अत एव यत एवैकैकस्मिन् पारिप्लव एकैकमाख्यानं नियतमुक्तं तत एवेत्यर्थः ॥ २३ ॥

अत एवाग्नीन्धनाद्यनपेक्षा ॥ २४ ॥ सूत्रार्थमाहुर्यत इत्यादिना, तेषां यज्ञोपस्कराणां, उक्ता ज्ञानिसूक्ता, पठ्यते श्रुतिः पठ्यते, 'तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोग्नि'रित्यादि, तस्य ज्ञानस्य ॥ २४ ॥ १ ॥

इति तृतीयचतुर्थे प्रथमाधिकरणम् ॥ १ ॥

---

१. °स्वरूपबन्धात् पा । २. °देशेन कें । ३. वस्तु प्रतीयात् क । ४. °त्वे न बाधकं बपा, बोधकं केंगो । ५. °त्याख्यान° क । ६. °चाग्नी° बप्रपापुंगो । ७. °दायेति पापुस्तकेशुद्धमेव ।

उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेपि स्वरूपोपकारित्वमस्ति न वेति चिन्त्यते, तत्र नेति पूर्वः पक्षः, गुरूपसत्तितदुपदेशैरेव तत्सम्भवादा"चार्यवान् पुरुषो वेदे" ( छान्दो. ८.१२.२. ) तिश्रुतेः, अत्र सिद्धान्तमाह सर्वापेक्षेति ।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥

सर्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानोत्पत्तावस्त्यपेक्षा, अत्र प्रमाणमाह यज्ञादिश्रुते-रिति, यज्ञादिनिरूपिका श्रुतिरेव प्रमाणं यत इत्यर्थः, इदमत्राकूतं, पुरुषोत्तम एव स्वतन्त्रपुरुषार्थ-रूपस्तत्प्राप्तिरेव फलं तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधनमिति "ब्रह्मविदाप्नोति पर" (तै. ब्र.१.) मित्यादिना[2]"य एतद् विदुरमृतास्ते भवन्ती"त्यादिश्रुतिसहस्रैश्च प्रतिपाद्यते, "अथेतरे दुःखमेवोप-यन्ती" ( बृह. ६.४.१४ ) तिश्रुत्या ज्ञानरहितानां दुःखमात्रप्राप्तिरुच्यते, एवं सति स्वतोपुरु-षार्थरूपं यज्ञादिकं सर्वार्थतत्त्वप्रतिपादिका श्रुतिर्यन्निरूपयति तत् सर्वथा पुरुषार्थसाधनत्वेनैवेति मन्तव्यं, तच्च निःकामतयैव कृतं तथा, अत एव वाजसनेयिशाखायां "यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवती" ( बृह. ६.४.५. ) त्युपक्रम्य पठ्यते "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति तु[3] कामयमानोथाकामयमानो योकामो निःकाम आत्मकाम आप्तकामो भवति न[4] तस्मात् प्राणा उत्क्रा[5]मन्त्यत्रैव सम[6]वनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती" ( बृह. ६.२.६. ) त्यादि, अ[7]त्रा'थाकामयमानः' कर्ता निरूप्यत इतिशेषः, य[8]ः पुमान् कर्मकृता-"वकाम"स्ततो "निःकामः"स"न्नात्मकामो" निरुपधिस्नेहवान्[9] [10]भौ ततो भगवत्प्रा"प्त्याप्तकामो भवती"त्यर्थः, "यथाकारी"त्यादिना कर्मकर्तुरेवोपक्रमाद"थाकामयमान" इत्यनेनापि तथाभूतः स एवोच्यते, एवं सति सत्कर्मणि प्रवृत्त्यर्थं विविध[11]फलानि स्वयमेवोक्त्वा जनान् भ्रामितवानिति स्वोक्तकरणाच्चिरेण दयया निःकामं करोति, सकामतयापि क्रियमाणेनै[12]व वैदिक-कर्मणानेकजन्मभिः संस्कारविशेषप्रचयेनापि तथा, "[13]कषाये [14]कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत" ( शा. प. मो. ध. २७६.३९. ) इत्या[15]दिस्मृतिभ्यश्च ज्ञानोत्पत्तौ कर्मापेक्षास्तीति, चकारेण पुष्टावङ्गीकृतस्य सर्वानपेक्षेति सा समुच्चीयते, अत एव "नायमात्मे"त्यादिश्रुतिर्न विरुध्यते, ननु ज्ञानद्वारा कर्मादीनामेव फलसाधकत्वमस्त्वितिशङ्कानिरासाय दृष्टान्तमाहाश्ववदिति, यथा स्वे[16]ष्टफलसाधकदेशव्यवधानात्मकदेशातिक्रमेश्वस्य साधनत्वं न तु [17]तत्र फलसिद्धावपि तथाधि-भौतिकाध्यात्मिकाधिदैविकप्रतिबन्धनिवृत्तावेव तेषां साधनत्वं न तु भगवत्प्राप्तावपीत्यर्थः, इदं च मुमुक्षुभक्तविषयकमिति ज्ञेयं, आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात् ॥ २५ ॥

---

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥ अधिकरणमवतारयन्त्युक्तन्यायेनेत्यादि, उक्तेति, ज्ञानप्रति-पादकश्रुतिभ्यां भगवतस्तज्ज्ञानस्य वाभिव्यक्तिप्रतिपादनेनेत्यर्थः, स्वरूपोपकारित्वेत्यादि, तत्सम्भवाज्ज्ञानसम्भवात्, यज्ञादिनिरूपकेत्यादि, 'यज्ञो वै विष्णु'रित्यादिश्रुतेरित्यर्थः, तच्छ्रुत्या यज्ञादिकर्मणां निरूपणं, सर्वथाव्यभिचारेण, पुरुषार्थेत्यादि, मर्यादामार्गपद्धत्या पुरुषार्थसाधकत्वेनेत्यर्थः, तद्यज्ञादिकर्म, तथा फलोपधायकं, पठ्यते सकाम-स्यापुरुषार्थप्रतिपादक पठ्यत इत्यर्थः, 'इति तु कामयमान' इत्यत्रोक्त इतिशेषः, 'योकाम' इत्यादिना निष्कामस्य पुरुषार्थ उच्यते, 'योकामो निष्काम' इतिश्रुतेरर्थमाहुर्यः पुमानित्यादिना, तथाभूतो निःकामः, स एव कर्मकर्तैव, सत्कर्मणीत्यादि, निषिद्धावैदिककर्मनिवृत्तिप्रयोजनकसत्कर्मणि प्रवृत्त्यर्थमिति फलितोर्थः, तथा पुरुषार्थप्राप्तिः, चकारेण सौत्रचकारेण, समुच्चीयते सर्वानपेक्षा समुच्चीयत इत्यर्थः, स्वेष्टेत्यादि, स्वस्येष्टसाधको यो देशस्तन्मध्ये व्यवधायक इष्टदेशप्राप्तिप्रतिबन्धको यो देशस्तदतिक्रम इत्यर्थः, तत्रेष्टदेशे, तेषां कर्मणाम् ॥ २५ ॥

---

१. °रेषा के[2] । २ इत्यादिनेत्यारभ्य भवन्तिपर्यन्तं लुप्तं कपु । ३. नु पा, तुपदं लुप्तं कपु । ४ नेतिपदं लुप्तं कपु । ५. °त्क्र° के[2] । ६. °ली° कपु । ७. लुप्तं क । ८ यथाकाम° के[2] । ९ क के[2] । १० बभौ के[2] । ११. विफलानि के[2] । १२. एव लुप्तं पा । १३. का° क । १४. लुप्तं ब । १५. आदि लुप्तं पा । १६. स्नेह° पा । १७ तत्तत्फल° पा ।

ननु "तस्मादेवंविच्छान्तो दान्त" ( बृह. ६.४.२३. ) इत्यादिना शमादेरेव ज्ञानसाधनत्वमुच्यते न तु यज्ञादेरिति चेत् तत्राह ।

**शमदमाद्युपेतःस्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥२६॥**

शमदमाद्युपेतो भक्तिमार्गेपि स्यादेव यद्यपि तथापि तदङ्गतया "त्मन्येवात्मानं पश्ये"( बृह. ६.४.२३. )दिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतोर्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात् तथाविधिरित्यर्थः, भक्तिमार्गे स्वत एव शमादीनां सम्भवेप्यावश्यकत्वं न तेषामितिभावः ॥ २६ ॥

ननु सत्त्वशोधकत्वेन यज्ञशमदमादेर्विधानमिति मतं नोपपद्यते "आहारशुद्धौ सत्त्वशुद्धि" (छान्दो. ९.२६.२.) रितिश्रुतेस्तद्विरुद्धा सर्वान्नभक्षणानुमतिरपि यतः श्रूयते छन्दोगानां "न ह वा एवंविदि किञ्चनानन्नं भवति" (छान्दो. ७.२.१.) तथा वाजसनेयिनां "न ह वा अस्यानन्नं जग्धं भवती"(बृह.८.१.१४.)त्यादि, तस्मात् सत्त्वशुद्ध्यर्थं यज्ञादेर्न विधानमिति प्राप्ते विषयव्यवस्थामाह।

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥**

आहारदौर्लभ्येन[1] प्राणात्यय उपस्थिते प्राणधारणस्य ज्ञानान्तरङ्गतमसाधनत्वेनाहारस्य देहपोषकत्वेन ततो बहिरङ्गत्वात्[2] तदनुमतिः क्रियत इत्यर्थः, अत्र प्रमाणमाह तद्दर्शनादिति, "चाक्रायणः[4] किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखादे"( छान्दो.३.१०.१. )त्यादिश्रुतिदर्शनादित्यर्थः[5], यद्यपि ज्ञानसाधनत्वेन सत्त्वशुद्धेरपेक्षितत्वाज्जाते ज्ञाने तत्साधनानपेक्षणा'देवंविदी'तिवचनात् तादृशे सार्वदिक्यपि तदनुमतिर्नानुचिता "अपि च[6] स्मर्यत" (ब्र.सू.३.४.२९.) इत्यनेनाविदुषोप्यनुमतेर्वक्ष्यमाणत्वाच्च तथाप्याचार्येणावस्थाविशेषविषयकत्वमुक्तं यत् तेन ज्ञानिनोप्यनापदि विहितत्यागोविहितकरणं च चित्तमालिन्यजननेन ज्ञानतिरोधायकमितिश्रुत्यभिमतमिति ज्ञाप्यते, अत एव श्रीभागवते द्वितीयस्कन्धे "विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितं सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयं ऋषे[7] विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः यदा तदेवासत्तर्कैस्तिरोभूयेत विप्लुत"( श्रीमद्भा. २.७.३९-४०. )मिति ब्रह्मणोक्तं "ज्ञानिनामपि चेतांसि देवी भगवती हि सा बलादाकृष्य मोहाय महामाया प्रयच्छती" (मा.पु.दे.६.५४.) ति

---

**शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २६ ॥** सूत्रमवतारयन्ति नन्वित्यादिना, न तु यज्ञादेरिति, तथा च पूर्वसूत्रोक्तयज्ञादीनां ज्ञानभक्त्यादिसाधनतोक्तिर्बाधितेत्यर्थः, तत्र पूर्वपक्षे प्राप्ते, आह बाधनिराकरणमाहेत्यर्थः, शमदमादीत्यादिपदेन यज्ञादिसङ्ग्रहः, तदङ्गतया ज्ञानाङ्गतया, तेषां यज्ञशमदमादीनां, तथा ज्ञानाङ्गतया, स्वत एवैहिकामुष्मिकफलकामनाराहित्येन भगवति चित्तवृत्तिनिरोधरूपायां भक्तौ स्वत एव सम्भवादित्यर्थः, तेषां यज्ञशमदमादीनामित्यर्थः, इत्थं च 'तमेतं वेदानुवचनेने'त्यादिनिरूपितत्वात् पक्षद्वयेपि न यज्ञादिबाध इति फलितम् ॥ २६ ॥

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥** किञ्चिदाशङ्क्य परिहर्तुमिदं सूत्रमित्यवतारयन्ति नन्वित्यादि, तथा च छान्दोग्यवाजसनेयिभ्यां शमयज्ञाद्यपवादोपि युक्तो भवति सत्त्वशोधकाहारयज्ञादीनां समानत्वादाहारशुद्धिशमदमयज्ञादिसम्पादनवाक्यानि विद्यास्तावकानीत्यन्नभक्षणश्रुतिभ्यामनुमतिः क्रियत इत्यर्थः, अत्र बहिरङ्गाहारेणान्तरङ्गप्राणरक्षणावश्यकत्वे, तादृशे सिद्धज्ञाने, तदनुमतिरुक्तश्रुतिभ्यामुक्ताऽनुमतिः, नानुचिता सत्त्वशुद्धिकार्यज्ञानस्य जातत्वादनन्तरानुमतेः कार्याप्रतिबन्धकत्वान्नानुचितेत्यर्थः, तथा च विदुषोनौचित्याभावेप्यविदुषोनौचित्यमेवेत्यत आहुरपि चेत्यादि, अत एवानापदि ज्ञानिनोपि वैधत्यागस्यानौचित्यादेव, असत्तर्कैरिति, तथा च 'नैषा तर्केण मतिरापनेये'तिश्रुत्युक्तत्वादवैधतर्काणां त्याग आवश्यक एवमवैधं सर्वमेवानापदि त्याज्यमित्यर्थः, ननु विदुषां चापद्युद्धार

---

१. लुप्तं कपु। २. °दौर्बल्येन कपुं। ३. °रङ्गात् कें। ४. चाक्रा° कैंपु। ५.श्रुतेर्द° कपु। ६. लुप्तं ब्रप्रपा। ७. ऋषेर्वि° कें।

मार्कण्डेयेनाप्युक्तं, एषा ज्ञानमार्गीयज्ञानवतो व्यवस्थेति ज्ञेयं भक्तिमार्गीयस्यैवमापदसम्भवा- "दनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह" (श्रीमद्भग. ९. २२.)मिति भगवद्वाक्यात्, "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त" (श्रीमद्भग.७.१४.) इत्यत्रैव- कारेण पुरुषोत्तमज्ञानवत एव मायातरणोक्तेरक्षरमात्र[1]ज्ञानवतां तथात्वमुचितम् ॥ २७ ॥

## अबाधाच्च ॥ २८ ॥

आपदि तथान्नभक्षणेन ज्ञाने[2] चित्ताशुद्ध्यसम्भवेन तज्जनितप्रतिबन्धाभावाच्च न दोष इत्यर्थः ॥ २८ ॥

## अपि[3] स्मर्यते ॥ २९ ॥

आपद्यविदुषोपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्यते तत्र विदुषि श्रुत्यनुमते का शङ्केत्यर्थः, स्मृतिस्तु "जीविताल्ययमापन्नो योन्नमत्ति यतस्ततः लिप्यते न स पापेन पद्मपत्रमिवाम्भसे" ( मनु. १०. १०४. ) ति ।

अथवा विदुषोष्ट[4]कर्मासम्बन्धो "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"ति ( श्रीमद्भग. ४.३७. ) स्मर्यतेपीत्यर्थः ॥ २९ ॥

## शब्दश्चातोकामकारे ॥ ३० ॥

यतो ज्ञानाग्निरेव सर्वकर्मदहनसमर्थ इति फलदशायां कामकारेपि न दोषोत एव साधन- दशायां तदभावेन "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षु"( बृह. ६.४.२३. )रित्यादिरूपः शब्दः कामकारनिवर्तकः श्रूयत इत्यर्थः ॥ ३० ॥ २ ॥

॥ इति तृतीयाध्याये चतुर्थपादे द्वितीयं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

एवं ज्ञानस्य कर्म[5]नाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म कर्तव्यं न वेति चिन्त्यते तत्र फलस्य जातत्वात् कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्यमिति पूर्वः[6] पक्षस्तत्र सिद्धान्तमाह ।

## विहितत्वाच्चाश्रमकर्मापि ॥ ३१ ॥

यथा ज्ञानिनाप्यनापदि शिष्टानामेवान्नं भक्षणीयं विहितत्वात् तथाश्रमकर्मापि कर्तव्यमेव नित्यं विहितत्वादित्यर्थः, यथानापद्यशिष्टान्नभक्षणं दोषाय निषिद्धत्वात्, एतच्चोपपादितं "सर्वान्नानुमति"(ब्र. सू. ३.४.२७.)रित्यत्र, तथा नित्यत्यागोपि[7] प्रत्यवायजनक इति तत् कर्तव्यमेवेतिभावः ॥ ३१ ॥

---

उक्तो भक्तानां त्वेतदुभयान्यत्वात् तेषामापद्यनुद्धार एवेत्यत आहुर्भक्तीत्यादि, तथा च 'योगक्षेमं वहाम्यह'मिति भगवत्प्रतिज्ञातस्तेषामापद एव नायान्त्यागतासु वा स एव सत्यप्रतिज्ञो रक्षक इति न भक्तानामापत्तिचिन्तेत्यर्थः ॥ २७ ॥

अबाधाच्च ॥ २८ ॥ अत्र भाष्यं स्फुटार्थम् ॥ २८ ॥

अपि स्मर्यते ॥ २९ ॥ स्मृतिस्तु सूत्रोक्ता स्मृतिस्तु 'जीविताल्ययमापन्नो योन्नमत्ति यतस्ततः लिप्यते न स पापेन पद्मपत्रमिवाम्भसे'ति, अष्टकर्मासम्बन्धः, सन्न्यासाङ्गाष्टश्राद्धादिकर्माकरणे दोषासम्बन्ध इत्यर्थः, तत्र सौत्रं हेतुमाहुर्ज्ञानाग्निरिति ॥ २९ ॥

शब्दश्चातोकामकारे॥३०॥ कामकारे ज्ञानिन आपत्तौ निषिद्धाचरणे, तदभावेन निषिद्धाचारस्यासम्भवेन, कामकारनिवर्तको निषिद्धाचारनिवर्तको वैधाचारप्रवर्तकश्चेत्यर्थः ॥ ३० ॥ २ ॥

॥ इति तृतीयचतुर्थे द्वितीयाधिकरणम् ॥ २ ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३१ ॥ नाश्यत्वेन 'ज्ञानाग्नि'रितिवाक्यान्नाश्यत्वेनेत्यर्थः, अप्रयोजकत्वाद् विहितकरणस्याप्रयोजकत्वात् ॥ ३१ ॥

---

१. अक्षरमात्रे कैगो। २. लुप्त बपा। ३. अपि च क। ४. दुष्ट° सर्वत्र। ५. कर्म° कपु। ६. पूर्वप° कै। ७. तत्त्यागोपि कै।

यच्चोक्तं 'कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्य'मिति तत्राह।

## सहकारित्वेन च ॥ ३२ ॥

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्माणीत्येतद्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्तुं शक्यमिति तानि कर्तव्यान्येवेत्यर्थः, संसारवासनाजनकत्वस्वभावो यः कर्मणां स ज्ञानेन नाश्यत इति न सहकारित्वेऽनुपपत्तिः काचिदितिभावः ॥ ३२ ॥

एवं ज्ञानमार्गीयज्ञानस्थैर्यसाधनमुक्त्वा भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामित आधिक्यमावश्यकतां चाह।

## सर्वथापि त एवोभयलिङ्गात् ॥ ३३ ॥

भगवच्छ्रवणकीर्तनादयः साधनान्तरवद् विहितत्वेन कर्तव्या एव यद्यपि तथापि सर्वथाप्यन्येषां युगपदुपस्थितौ तदनुरोधमकृत्वापि त एव भगवद्धर्मा एव कर्तव्या इत्यर्थः, कुतः? श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च, श्रुतिलिङ्गं तु "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः[1] नानुध्यायाद् बहून् छब्दान् वाचो विग्लापनं[2] हि त" (बृह. ६.४.२१.) दिति "तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष[3] सेतु" (मुण्ड. २.२.५.) रित्यपि, अत्रैवकारेण भगवदतिरिक्तं प्रतिषिध्य तद्विषयकज्ञानानुकूलं प्रयत्नं श्रवणात्मकं 'विज्ञाये'ति विधाय स्मरणमपि तन्मात्रविषयकमेव 'प्रज्ञां कुर्वीते'तिवचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्तनमर्थानुसन्धानमपि कर्तव्यं नान्येषामिति 'नानुध्यायाद् बहूनि'त्यनेनोक्तवती, अत्रा'न्वि'त्युपसर्गेण ध्यानस्य पश्चाद्भावित्वमुच्यते, तेन योग्यतया श्रवणकीर्तने एव तत्पूर्वभाविनी प्राप्येते, स्मृतिस्तु "शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज" (श्रीमद्भाग. १. ९. ३६. )मिति "महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासत" (श्रीमद्भग. ९.१३-१४.) इति, एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देहधर्मत्वेन बहिरङ्गत्वात् तदविरोधेनैव तत् कर्तव्यमिति स्थितं, अत एव भगवद्धर्मान्यधर्मं प्रतिषिध्य तेषां सर्वेभ्य आधिक्यं ज्ञापयितुं "स वा अयमात्मा सर्वस्य वशी" ( बृह. ६.४.२२. )त्यादिना भगवन्माहात्म्यमुक्तम् ॥ ३३ ॥

---

सहकारित्वेन च ॥ ३२ ॥ तान्याश्रमकर्माणि, ननु ज्ञाने कर्मणां नाशसम्भवात् तत्करणं 'प्रक्षालनाद्धी'तिन्यायमनुसरतीत्यत आहुः संसारेत्यादि, तथा च संसारजनकसकामकर्मणामेव ज्ञाननाश्यत्वमिति चित्तशोधकानां सहकारित्वे न काप्यनुपपत्तिरित्यर्थः ॥ ३२ ॥

सर्वथापि त एवोभयलिङ्गात् ॥ ३३ ॥ सूत्रमवतारयन्त्येवंज्ञानेत्यादिना, सूत्रभागार्थमाहुः सर्वथापीत्यादिना, उभयलिङ्गादितिसूत्रभागार्थमाहुः कुत इत्यादिना, श्रुती आहु'स्तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः नानुध्यायाद् बहून् छब्दान् वाचो विग्लापनं हि त'दिति 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु'रिति, एवकारेण 'तमेवे'त्येवकारेण, अत्र 'नानुध्याया'दित्यत्रेत्यर्थः ॥ ३३ ॥

---

१. ब्रह्मणः कं। २. विप्लावनमिति प्रदीपः। ३. मुञ्चथ कं। ४. °स्थि° बपागो।

प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्रोपोद्बलकान्तरमनेनोच्यते ।

## अनभिभवं च दर्शयति ॥ ३४ ॥

'सर्वं पाप्मानं तरति नैनं पाप्मा तरति सर्वं पाप्मानं तपति नैनं पाप्मा तपती' (बृह. ६.४.२३.) त्यादिना भगवद्धर्मानुरोधेनाश्रमकर्माकरणजदोषैरनभिभवं च श्रुतिर्दर्शयत्यतो भगवद्धर्मा एव सर्वेभ्य उत्तमा[1] इत्यर्थः ॥ ३४ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥

भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यल्पमुच्यतेपि तु तस्मिन् पुरुषोत्तमे धर्मिण्येव दृष्टिस्तात्पर्यं यस्य पुंसस्तस्याश्रमधर्मा अन्तरा च फलसिद्धौ व्यवधानरूपाश्चेति श्रुतिर्दर्शयतीति पूर्वेण सम्बन्धः, अन्तराशब्दोत्राव्ययात्मको व्यवधानवाचकः, तथा च श्रुति"रेतद्ध स्म वै[2] ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोयमात्मायं लोक" (बृह. ६. ४. २२. ) इत्यृणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वेनापि प्रजाया अभीष्टत्वेपि तदुत्पादनव्यासङ्गेन भगवदानन्दानुभवेन्तरायो भविष्यतीति तद्दृष्ट्या तत्रोपेक्षां दर्शयति ॥ ३५ ॥

## अपि[3] स्मर्यते ॥ ३६ ॥

अपिशब्देनाश्रमधर्माणां तथात्वं किमु वाच्यं यतो ज्ञानतत्साधनवैराग्यादीनामप्यन्तरा[4]रूपत्वं स्मर्यते "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"ति (श्रीमद्भाग. ११.२१.३१.) भगवद्वाक्यम् ॥ ३६ ॥

## विशेषानुग्रहश्च ॥ ३७ ॥

'स्मर्यत' इति पूर्वेण सम्बन्धः, ज्ञानादेः सकाशाद् भक्तिमार्गे फलतोप्युत्कर्षमाह ज्ञानादिसाधनवत्स्वनुग्रहो मुक्तिपर्यन्त एव भक्तिमार्गे त्व"हं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजे" (श्रीमद्भाग. ९.४.६३.)त्यादिवाक्यैर्विशेषरूपो मुक्त्यादिभ्योपि भक्तानां व्यावर्तको भगवदनुग्रहः स्मर्यत इत्यर्थः ॥ ३७ ॥

गूढाभिसन्धिमुद्घाटयन् फलितमर्थमाह ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥

अत इति पूर्वोक्तश्रुतिस्मृतिपरामर्शः, तथा चेतरस्या मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्याय इत्यर्थः, अत्र हेत्वन्तरमाह लिङ्गाच्चेति, मुक्तानां तु मायाविनिर्मुक्तमात्मस्वरूपमेव न तु देहे-

---

अनभिभवं च दर्शयति ॥ ३४ ॥ सूत्रमवतारयन्ति प्राधान्येनेत्यादिना, स्फुटमन्यत् ॥ ३४ ॥

अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥ सूत्रमवतारयन्ति भगवद्धर्मेभ्य इत्यादिना, अल्पमाश्रमकर्माल्पं, ततः किमत आहुरपि त्वित्यादि, अन्तरेत्यादि, तथा चान्तराशब्दो व्यवधायकार्थवाची कोशे सिद्ध इत्यर्थः, एतदर्थोपष्टम्भिकां श्रुतिमाहु'रेतद्ध स्म' इति, स्फुटमन्यत् ॥ ३५ ॥

अपि स्मर्यते ॥ ३६ ॥ एतत्सूत्रस्य पूर्वं व्याख्यातत्वेपि पुनः प्रयोजनान्तरपरतया व्याख्यातुमवतारयन्त्यपिशब्देनेत्यादिना, स्मृतिमाहुस्तस्मादित्यादिना ॥ ३६ ॥

विशेषानुग्रहश्च ॥ ३७ ॥ मुक्तिपर्यन्त एवेत्येवकारेण मुक्त्यधिकफलानुग्रहव्यवच्छेदः ॥ ३७ ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३८॥ सूत्रमवतारयन्ति गूढेत्यादिना, तदीयत्वं भगवदीयत्वं, आत्मस्व-

---

१. उत्तमानि साधनानि कैपापुंगो। २. तत् पूर्वे ब्राह्मणाः कैबपापुंगो। ३. अपि च क। ४. °राय° बपागो।

न्द्रियादिकमप्यस्ति येन भजनानन्दानुभवः स्याद् भक्तानां तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोपि तत् तथेत्यर्थः, न हि मुक्तात्मनां कश्चन भगवदुपयोगोस्तीतिभावः, तदुक्तं श्रीभागवते "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता" (श्रीमद्भाग.२.९.१०.) इत्यादि "मुक्तोपसृप्यत्वं" चोच्यते, अत एव सप्तमस्कन्धे "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना" (श्रीमद्भाग.७.१.३४.)मित्युक्तं, 'पुरवासि'त्वे देहादेरावश्यकत्वान्निषेधो जडात्मकानामेवेत्यवगम्यते, 'इतरज् ज्याय' इतिपाठे तु पूर्वोक्ताश्रमकर्मपरामर्शोत इत्यनेनोक्तयोरेव वा, एतेन "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" ( तै. ब्र. ) तिश्रुत्युक्तफलवत्त्वं तस्य सूच्यते ॥ ३८ ॥ ३ ॥

॥ इति तृतीयाध्याये चतुर्थपादे तृतीयं विहितत्वाचाश्रमकर्मेत्यधिकरणम् ॥ ३ ॥

अथेदं विचार्यते, तदीयानामपि कदाचित् सायुज्यमस्ति न वेति, तत्र भक्तिमार्गस्यापि साधनरूपत्वात् तस्य च मुक्तावेव पर्यवसानात् तदीयत्वस्य साधनदशायामुत्कृष्टावस्थारूपत्वात् तेषामपि मुक्तिरावश्यकी, तथा च कर्मफलतो न कश्चिद् विशेष इति प्राप्त उच्यते ।

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥

तद्भूतस्येत्यादि, तुशब्देन मर्यादामार्गीयव्यवच्छेदः, अत्र विश्वासदार्ढ्यायाहान्यस्य का वार्ता कर्ममात्रनिरूपकस्य जैमिनेरपि यदि कदाचिद् भगवत्कृपयायं भावो भवेत् तदा तद्भूतस्य पुष्टिमार्गीयभगवद्भावं प्राप्तस्य तस्यापि नातद्भाव उक्तभावतिरोधानं न कदाचिदपीत्यर्थः, अत्र हेतूनाह नियमादीन्, तैत्तिरीयके "ते ते धामान्युष्मसी" (तै. सं. १.३.६.) तिमन्त्रे "यत्र भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पद" (तै. सं. १.३.६.) मित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि "विष्णोः कर्माणि पश्यते" (तै. सं. १.३.६.) तिमन्त्रेण निरूप्य पुनः पूर्वोक्तलीलास्थानं "तद् विष्णोः परमं पद" (तै. सं. १.३.६.) मिति पदेनानूद्य तस्य नित्यत्वनिरूपणायोच्यते "सदा पश्यन्ति सूरय" (तै. सं. १.३.६.) इति, 'सूरयो' विद्वांसः पुरुषोत्तमज्ञानवन्त इति यावत्, तच्च भक्त्यैवेति 'सूरि'पदेन भक्ता उच्यन्ते, तथा च भक्तानां सार्वदिकदर्शनं नियम्यते 'सदे'तिपदेन, एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तावुच्यमानायां तन्नियमो भज्येतेत्यर्थः, यच्चोक्तं 'साधनावस्थायामुत्तमावस्थारूपत्वं' परं 'तदीयत्वस्य'फलं 'मुक्ति'रेवेति तत्राहातद्रूपेति,उक्त-

---

रूपमेव प्राप्तमस्तीत्यन्वयः, तज् ज्यायस्त्वं, तथा सिद्धं भवतीत्यर्थः, निषेधो देहादीनां निषेधः, उक्तयोराश्रमकर्ममुक्त्योः परामर्शे त्वित्यर्थः, एतेनोभयापेक्षया भक्तेरुत्कृष्टत्वनिवर्तनेन, तस्य भक्तस्य ॥ ३८ ॥ ३ ॥

॥ इति तृतीयचतुर्थे तृतीयाधिकरणम् ॥ ३ ॥

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥ अधिकरणमवतारयन्त्यथेत्यादिना, तदीयानां ज्ञानमार्गीयाणां, तत्र ज्ञानभक्तिमार्गयोर्मध्ये, तस्य साधनस्य, तदीयत्वस्य साधनरूपभगवदीयत्वस्य, साधनदशायां श्रवणकीर्तनादिकर्तव्यतादशायां, उत्कृष्टेत्यादि, सुखरूपत्वेनानुभवेनोत्कृष्टत्वादित्यर्थः, तेषां भक्तानां, न कश्चिद्विशेषो ज्ञानमार्गापेक्षया भक्तिमार्गे न कश्चिद्विशेष इत्यर्थः, सिद्धान्ते सूत्रं व्याकुर्वन्ति तद्भूतस्येत्यादिना, व्यवच्छेदो मर्यादामार्गीये पुष्टिमार्गीयभगवद्भावव्यवच्छेदः, अयं भावः पुष्टिमार्गीयभगवद्भावः, तस्यापि जैमिनेरपि, भगवदीयानां सदाभगवत्साक्षात्काररूपनियमात्मकं हेतुं निरूपयितुमाहुस्तैत्तिरीयकेत्यादि, तत्र परमपदे, तस्य लीलास्थानस्य, तच्च भक्तैः प्राप्यं लीलास्थानं चेत्यर्थः, इति मुक्तानां दर्शनसाधनेन्द्रियाणामभावात् सदादर्शननियमस्य भङ्ग इत्यर्थः, यच्चोक्तमेतदधिकरणपूर्वपक्ष उक्तमित्यर्थः, तद्रूपेतीति, तथा च तद्रूपाभावेभ्य इत्यस्य तद्रूपं भगवदीयत्वं तस्मादुत्कृष्टपदार्थानामभावेभ्य इति सूत्रभागार्थ इति फलितं, उक्तभगवदीय-

---

१. विपश्चितेत्युक्तफलवत्त्वं बपागो । २. साधनावस्थायां कपुपुंगो, साधनावस्थारूपत्वात् तेषामपि बपा । ३. लुप्तं बपा । ४. पुष्टिमार्गीयस्य कं ।

भगवदीयत्वं न साधनरूपमपि तु मुक्तेरपि फलरूपं, "मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मे" (श्रीमद्भाग.६.१४.५.) तिवाक्याद् "यदा सर्वे प्रमुच्यन्ते[1] कामा येस्य हृदि श्रिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" ( बृह. ६.४.७. ) इतिश्रुत्या'मृत'स्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते, स च "यमेवैष वृणुत" ( कठ. २.२३. ) इतिश्रुतेर्भगवदीयत्वसाध्य एवेति स्पष्टं[2] फलत्व-मस्यातोतद्रूपत्वं, किञ्च फलं हि साधनादुत्तमं भवति भगवदीयत्वादुत्तमस्यार्थस्याभावादपि न तु[3] मुक्तिरुचिता, तदुक्तं श्रीभागवते पञ्चमस्कन्धे पूर्वं[4] भक्तिस्वरूपं निरूप्य "तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्त-सर्वार्था" ( श्रीमद्भाग. ५.६.७. ) इति ॥ ३९ ॥ ४ ॥

॥ इति तृतीयाध्याये चतुर्थपादे चतुर्थं तद्भूतस्येत्यधिकरणम् ॥ ४ ॥

अथेदं विचार्यते, ध्रुवायेव[5] च ब्रह्मादिलोकाधिकारं दत्वा तत्सम्बन्धिफलं ददाति न वेति ।

## न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४० ॥

तत्र नेत्याह न चेति, तत्र हेतुः पतनानुमानादिति, "आब्रह्मभुवना[6]ल्लोकाः पुनरावर्तिनोऽर्जुने" ( श्रीमद्भग. ८.१६. ) तिस्मृतेरित्यर्थः, फलस्य सावधित्वा[7]दितिभावः, किञ्च तादृशस्य[8] भगवदीयस्य[9] पतनं[10]ायोगादपि न तथा ।

अथवा तादृशस्य सदा भक्तिरसानुभवात् तदतिरिक्तस्यानपेक्षणादन्येषां फलानां सम्बन्धाभावादित्यर्थः ॥ ४० ॥

## उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४१ ॥

एके भक्ता आधिकारिके फले पतनमात्रं न[11] हेयत्वप्रयोजकमिति वदन्त्यपि तूपपूर्वं पतनमेव तदिति वदन्ति, भक्तिभावाच्च्युतेः, अधिकारसमाप्तौ भगवदनुग्रहाशापि कदाचित् सम्भवतीत्युपपतनं तत्, मुक्तौ त्वपुनरावृत्तेर्भक्तिरसाशापि नेति महापतनमेव सेतिभावः, तेन निषिद्धकर्मफलतुल्यत्वं ज्ञापितं भवति, अत एव श्रीभागवते "नारायणपरा लोके न कुतश्चन बिभ्यति स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" (श्रीमद्भाग. ६.१८.२८.) इति गीयते, भक्तिमार्गे तु साक्षात्सङ्गा-

---

त्वस्य मुक्तापेक्षयाधिक्ये प्रमाणं प्रदर्शयन्ति मुक्तानामित्यादिना, अतो भक्तेर्मुक्त्यधिकत्वतः, अतद्रूपत्वं मुक्तिसाधनभिन्नत्वमित्यर्थः, न तु मुक्तिरुचिता भगवदीयस्य फलं मुक्तिर्नोचितेत्यर्थः ॥ ३९ ॥ ४ ॥

॥ इति तृतीयचतुर्थे चतुर्थाधिकरणम् ॥ ४ ॥

न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४० ॥ सूत्रमवतारयन्त्यथेत्यादिना, ददाति पुष्टिमार्गीयभक्ताय ददातीत्यर्थः, पतनानुमानादिति पतनबोधकस्मृत्या पतनबोधकश्रुतेरनुमानादित्यर्थः, नन्वेवं सति भगवता ध्रुवाय कथमाधिकारिकफलं दत्तमत आहुः किञ्चेत्यादि, तादृशस्य भगवन्तं प्राप्तस्य पुष्टिमार्गीयभगवदीयस्य, ध्रुवस्य मर्यादामार्गीयत्वेन तथा फलदानमित्यर्थः, तदयोगादित्यस्यार्थमाहुः पतनायोगादिति, पतनायोगादित्यस्यार्थान्तरमाहुरथवेत्यादिना, तादृशस्य मुक्त्यभिलाषाशून्यस्य भगवदीयस्य ॥ ४० ॥

उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥४१॥ आधिकारिकफले पतनविशेषताप्रदर्शनायेदं सूत्रमित्यर्थकथनायाहुरेक इत्यादि, पतनमात्रं सर्वथा पतनमेव, उपपूर्वं पतनमुपपातनमित्यर्थः, सा मुक्तिः, तेन मुक्तेर्महापतनरूपत्वेन, मुक्तेर्महापतनरूपत्वे सम्मतिमाहुरत एवेत्यादिना, 'नारायणपरा लोके न कुतश्चन बिभ्यति स्वर्गाप-

---

१. प्रभिद्यन्ते कें । २. स्पष्टफलत्व० कंबपागो । ३. लुप्त सर्वत्र । ४, सर्व कें । ५ ध्रुवमपि क, ध्रुवादये च पु । ६. °भवनात् ब । ७. सावधिकत्वात् कंगो । ८, °शे सर्वत्र । ९. °ये सर्वत्र । १०. यजना० कंपा । ११. तु कें ।

भावेपि तदीयं[1] भावमात्रमप्यशनवत् साक्षाद्भगवत्स्वरूपभोगवदेव मन्यन्ते[2], तदुक्तं श्रीभागवते "अथ ह वाव तवे" (श्रीमद्भाग. ६.९.३९.) त्यादिना, साक्षाद्भगवद्भोगो जीवस्यासम्भावित इति-शङ्कानिरासायाह तदुक्तमिति, "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" (तै. ब्र.) ति, "अत्र ब्रह्म समश्नुत" (बृह. ६.४.७.) इत्यादिश्रुतिषु साक्षाद्ब्रह्मस्वरूपरसाशनमुक्तमित्यर्थः ॥ ४१ ॥ ५ ॥

॥ इति तृतीयाध्याये चतुर्थपादे पञ्चमं न चाधिकारिकमित्यधिकरणम् ॥ ५ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥

अथेदं चिन्त्यते[3] प्रचुरभगवद्भावमात्रवतः साक्षात्स्वरूपभोगवतो वा गृहत्यागः कर्तव्यो न वेति, फलस्य सिद्धत्वान्नेतिपक्षव्यवच्छेदाय "मद्वार्तायातयामानां न बन्धाय गृहा मता" (श्रीमद्भाग. ४.३०.१९.) इतिवाक्याद् बन्धकत्वेन त्याज्य इतिपक्षव्यवच्छेदाय च तुशब्दः, भावमात्रे साक्षात्प्रभुसम्बन्धे वोभयथापि गृहाद् बहिर्गमनं गृहत्याग इति यावत्, स आवश्यकः, तत्र प्रमाणमाह स्मृतेरित्यादि, "त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गा" (श्रीमद्भाग. ११.७.६.) मित्यादिस्मृतिर्भगवद्भाववतस्तत्सङ्गविशिष्टस्यापि बहिर्गमनमाह, तदाचारोपि तथैव श्रूयतेतस्तथा, अत्रायमाशयः, आश्रमधर्मत्वेन गृहत्यागो "यदहरेव" (जाबा. ४.) त्यादिश्रुतिभ्यः पूर्वमुपपादितोपि यदधुना पुनरुच्यते तेन तदतिरिक्तोयमिति ज्ञायते, तथा चोक्तवाक्यान्मुमुक्षुमुक्तिप्रतिबन्धकत्वाभावेपि व्यासङ्गस्यात्रा[4]वश्यकत्वादुक्तोभयोरप्यनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्तव्यो यद्यपि स्वेष्टान्तरायत्वेन स्वत एव तत्त्यागो भावी तथा "द्याश्रमादाश्रमं गच्छे" (श्रीमद्भाग. ११.१७.३८.) दितिवाक्यादत्राश्रमान्तरत्वाभावेन त्यागस्याविहितत्वशङ्काभावायेयमुक्तिरिति ॥ ४२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥

पुष्टिमार्गीयभक्तस्य विहितत्वादि[5]ज्ञानमप्रयोजकं, तत्र हेतुस्तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेरतो बहिर्गमनं न साधनत्वेनात्र कार्यमितिभावः, अत्र "यमेवैष वृणुत' (मुण्ड. ३.२.३.) इतिश्रुतिरनुसन्धेया, एतदनुपदमेव पठ्यते "नायमात्मा बलहीनेन लभ्य" (मुण्ड. ३.२.४.) इति, अत्र भगवद्वरणानन्तरमपि जीवबलं कतमं[6] यदपेक्षा[7] भगवल्लाभ इतिजिज्ञासायां सर्वात्मभाव एव 'बल'मिति निर्णीयते, तस्यैव मर्यादाबलोपमर्दकत्वाद् भगवद्वशीकारहेतुत्वाच्च व्रजसीमन्तिनीनां प्रभुवचनातिक्रममपि कृत्वा स्वरूपपरिग्रहस्त'द्बले'नैव यत इत्यात्रेय

---

वर्गनरकेष्वपि तुल्यार्थदर्शिनः', अशनवदितिसूत्रभागार्थमाहुर्भक्तिमार्ग इत्यादिना, अशनवद् भगवत्सम्बन्धिसर्वभोगाशनवदित्यर्थः ॥ ४१ ॥ ५ ॥

॥ इति तृतीयचतुर्थे पञ्चमाधिकरणम् ॥ ५ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥ सूत्रमवतारयन्त्यथेत्यादिना, संशयमाहुः प्रचुरेत्यादिना, फलस्य भगवद्भावभगवत्साक्षात्कारान्यतररूपफलस्य, नेतीति, गृहत्यागो न कर्तव्य इत्यर्थः, व्यवच्छेदाय चेति चकारेण फलस्य सिद्धत्वान्न त्याग इतिपक्षसमुच्चयः, तत्सङ्गो भगवद्भाववतः सङ्गः, तदाचारोपि स्मृत्योपदिष्टस्याचारोपि, तथैवोपदेशानुसारेणैव, तथा त्यागावश्यकता, अत्र त्यागे, पूर्वमूर्ध्वरेतःसूत्रे, व्यासङ्गस्य लौकिकव्यासङ्गस्य, अत्र गृहस्थितौ, उक्तोभयोः केवलभाववत्साक्षाद्भोगवतोः, तस्योक्तविधभक्तयोस्तत्त्यागस्य, चकारोप्यर्थः, तथा च प्रतिबन्धकाभावेपि रसास्वादायावश्यक इत्यर्थः, स्वेष्टान्तरायत्वेन गृहस्योक्तरसभोगान्तरायत्वेनेत्यर्थः, अत्र गृहस्थितौ, सूत्रकारस्येयमुक्तिरित्यर्थः ॥ ४२ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥ सूत्रमवतारयन्ति पुष्टीत्यादिना, अप्रयोजकं स्वकर्तव्ये विहितत्वज्ञानं न प्रयोजकमित्यर्थः, तस्य पुष्टिमार्गीयभक्तस्य, अत्र पुष्टिमार्गीयभक्ते, अत्र स्वामिसकाशादेव फललाभे, कतमं

---

१. तदीय° कगो। २. मन्यते बपागो। ३. विचार्यते पा। ४. तत्र सर्वत्र। ५. °दिति° कगो। ६. °मत् बपा। ७. °पेक्षो ब।

आचार्यो मनुते, इदमत्राभिप्रेतं, सर्वात्मभावस्य यद् बलं तत् तदात्मकस्य प्रभोरेव, तस्य चायं स्वभावो यदन्यन्न रोचतेत एव व्रजपरिवृढवदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधि-वचनवीचयो गीयन्ते "यर्ह्यम्बुजाक्ष तव पादतलमस्प्राक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुं पारयाम" (श्रीमद्भाग. १०.२९.३६.) इत्यादयः, अतस्त्यागस्तु पृष्ठलग्न एवायातीति न तदर्थं यतनीयमिति, विष्णववतारत्वेन पुरुषोत्तमभावस्वरूपज्ञोयमिति तथा ॥ ४३ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥

सर्वत्यागपूर्वकं यद् बहिः प्रभुसमीपगमनं भक्तस्य तदार्त्विज्यमृत्विक्कर्मैवेत्यौडुलोमि-राचार्यो मन्यते, तस्यायमभिसन्धिः, यजमानो हि स्वेष्टसिद्ध्यर्थमृत्विज आदौ वृणुते, प्रकृते च "यमेवैष वृणुत" (कठ.२.२३.) इतिश्रुते"स्तस्मादेकाकी न रमत" (बृह. ३.४.३.) इतिश्रुतेश्च स्वक्रीडार्थं भगवान् स्वचिकीर्षिततत्तल्लीलानुरूपान् जीवान् वृणुते "यूनः स्थविरान् वे" (आप. श्रौत.) तिविकल्पादेकरूपाणां यथा सोमादिषु वरणं तथा सर्वात्मभाववत्त्वेनैकरूपाणामेवात्र वरणं, तत्र यथा स्वीयस्वीयतदङ्गमात्रकरणं तेषां तथेतरसम्बन्धनिवर्तनपूर्वकं तद्भोग्यसमर्पकत्व-मत्र, तदुक्तं भगवता "यदा पुमांस्त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो म" (श्रीमद्भाग. ११.२९.३४.) इति, अत्र पूर्वपदेनेतरसम्बन्धनिवर्तनोक्त्या सर्वात्मभाव उक्तो भवति, तदनन्तर-मात्मनिवेदने सत्येतद्विषयकलीलाकरणेच्छाविषयः स भवति, अन्तरङ्गलीलाप्रवेशनमिच्छायां विशेषस्तस्मात् सुष्ठूक्तमार्त्विज्यमिति, एतेन "न ददाति न पचती" (आप. श्रौ. १०.१४.६.७.) त्यादिश्रुतेर्यथा सोमादौ दीक्षितस्य तद्यागेतरधर्मनिवृत्तिः स एव परमो धर्मो यतस्तथा पुरुषोत्तम-स्योक्तभक्तैः सह रमणमेव सार्वदिकमेतदेव च महन्महत्त्वमिति सूचितं भवति, प्रकृते भक्तानामृत्वि-क्त्वेन निरूपणे हेतुत्वेन तात्पर्यान्तरमप्याह तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्री-यते वरणेन स्वकार्यमात्रोपयोगित्वाय स्वीयः क्रियते, तथा प्रकृतेपि, न च "कंचित् कल्याण्यो दक्षिणा" (आप. श्रौत.) इतिप्रश्नवचनात् तदर्थैव तत्प्रवृत्तिरत्र तु स्वतःपुरुषार्थत्वेन भगवदर्था प्रवृत्तिरतो वैषम्यमिति वाच्यं, नीरागस्यापि वरणसमये तत्प्रश्नस्यावश्यकत्वात् तथैव दक्षिणा-दानमपि, अन्यथा निरङ्गत्वापत्तेः, प्रकृतेपि भक्तानां स्नेहादेव प्रवृत्तिर्भगवान् स्वानुभवार्थमेवताननुभावयतीति न वैषम्यम् ॥ ४४ ॥

---

किंरूपमित्यर्थः, तस्य सर्वात्मभावस्य, अन्यन्नगवदतिरिक्तं, पृष्ठलग्न एव सर्वात्मभावस्य पृष्ठलग्न एव, एवकारेण कर्तृताव्यवच्छेदः, नन्वेतावज्ज्ञानमात्रेयस्य कुत इत्याकाङ्क्षायामाहुर्विष्णववतारत्वेनेत्यादि, अत्रये भगवता वरदानाद् विष्णववताररूप एवात्रेयो जात इत्यर्थः, तथा पुष्टिभावाभिज्ञः ॥ ४३ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥ एकरूपाणां यौवनत्ववतां स्थविरत्ववतां वैकधर्म-वतां वरणमित्यर्थः, तत्र सोमादौ, अत्र पुष्टौ वृते, तदुक्तमिति 'यदा पुमा'नितिवाक्यमेकादशस्कन्धीयैकोन-त्रिंशदध्याये भगवतोक्तं, अत्रैतद्वाक्ये, एतद्विषयको निवेदनवाक्यविषयकः, स आत्मनिवेदनकर्ता, अन्तरङ्गेत्यादि, तथा च 'विचिकीर्षितो म' इत्यत्र व्युपसर्गेणेच्छायां विशेषलाभः, रमणमेवेत्येवकारेण सोमयजमानस्येव भगवतो-पीतरकरणं व्यवच्छिद्यते, एतदेव रमणकरणमेव, आह सूत्रकार आह, तथा प्रकृतेपि स्वकीयसाङ्गलीलानिष्पाद-नार्थं भगवतापि भक्ता व्रियन्त इत्यर्थः, तदर्थैव तत्प्रवृत्तिर्दक्षिणार्थैव यज्ञादौ प्रवृत्तिरित्यर्थः, अत्र तु भक्तानां वरण-स्थले तु, वैषम्यमत्र दक्षिणाभावाद् वैषम्यं, नीरागस्यापि यागे दक्षिणामनिच्छतोपि, प्रश्नस्य 'कञ्चित् कल्याण्यो दक्षिणा' इतिप्रश्नस्यावश्यकत्वात्, प्रकृतेपीत्यादि, तथा च यथा वैधस्वमेव प्रश्नादिप्रयोजकं तथात्र स्नेह एव भक्ता-नां निरुपाधिकः प्रयोजकः, तत्र यथा दक्षिणादानेन कर्मसाङ्गता तथात्र भक्तानां साङ्गतेति न वैषम्यमित्यर्थः ॥ ४४ ॥

---

१. अन्यत्रेति पापाठोऽशुद्ध एव । २. इवा° सर्वत्र । ३. सर्वात्मभावत्वेन कपुं । ४. °सम्बन्धि° कंगो । ५. तद्वि° सर्वत्र । ६. सम्भवति कवपागो । ७. विषय इति पापाठोऽशुद्ध एव । ८. क्वचिदिति पापाठोऽशुद्ध एव ।

## श्रुतेश्च ॥ ४५ ॥

आथर्वणोपनिषत्सु पठ्यते "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य" ( गो. पू. ता. १. ) मिति[२] ।

भक्तिमार्गप्रचारैकहृदयो बादरायणः । मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैः ॥ १ ॥ ४५ ॥ ६ ॥

॥ इति तृतीयाध्याये चतुर्थपादे षष्टं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

ननु (कठोप. २. २२.) "यमेवे"तिश्रुतिः साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वमाह (बृ. ६. ४. २३.) "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये"दितिश्रुतिः साधनान्तरमप्याह, एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयं किं नेतिसंशये साधनान्तरविधिरेवादरणीयोन्यथा शास्त्रवैयर्थ्यं स्यादिति प्राप्त उच्यते सहकार्यन्तरविधिरिति ।

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

मर्यादापुष्टिभेदेन वरणं द्विधोच्यते, तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोपि, अपरं च, साधनं हि कायिकं वाचिकं[३] मानसिकं च विधीयते, तत्र (कठोप ४.११.) "मनसैवाप्तव्य"मितिश्रुतेस्तृतीयं मुख्यं, तदपि तावदेव मार्यादिकस्यापि विधेयत्वेन कर्तव्यं यावत् स्नेहो न भवति, यतस्तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत्, यथा तद्वतो विधिरर्थवादो वा प्रवृत्तावप्रयोजकस्तस्य स्वत एव सम्भवात् तथा भगवत्प्राप्ताविदमित्यर्थं कैमुतिकन्यायेन पूर्वयोरप्रयोजकत्वमेतच्छेषत्वादेवायास्यतीति तृतीयमेवोक्तम् ॥ ४६ ॥ ७ ॥

॥ इति तृतीयाध्याये चतुर्थपादे सप्तमं सहकार्यन्तराधिकरणम् ॥ ७ ॥

ननु (ब्र. सू. ३. ४. ४३.) "बहिस्तूभयथे" त्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितं, छान्दोग्ये (छान्दो. १०. १५. १.) त्वा"चार्यकुला" दित्युपक्रम्य छान्दोग्योपनिषदन्त "आचार्यकुलाद् वेदमधीत्य गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स

---

श्रुतेश्च ॥४५॥ सूत्रं विवृण्वन्त्याथर्वणेत्यादिना, 'भक्तिरस्य भजन'मितिश्रुतिः, तद् भजनं, अमुष्मिन् भगवति, मानं भागवतं तत्रावैधव्रजसीमन्तिनीनां सन्न्यासे वैधोद्धवादिसन्न्यासे च श्रीभागवतं प्रमाणमित्यर्थः ॥४५॥६॥

॥ इति तृतीयचतुर्थे षष्ठमधिकरणम् ॥ ६ ॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥ भक्तिमार्गीयस्य प्रदर्शितगृहत्यागसमानतया श्रुत्युक्तशमदमादिकमपि कर्तव्यत्वेन प्रसक्तं भवत्यतोधिकरणमवतारयन्ति नन्वित्यादिना, उच्यते सूत्रेण सिद्धान्त उच्यते, नान्यापेक्षा 'यमेवे'तिश्रुत्या 'नायमात्मे'तिश्रुतिविरोधान्नान्यापेक्षेतिभाव इत्यर्थः, तदपि मानसिकमपि, तद्वतो भगवति प्रेमवत', तस्य 'भगवदनुकूलभक्तेष्टसाधकप्रवृत्तिमात्रस्य, स्वत एव स्नेहत एव, तथा विध्यर्थवादाविव, इदं श्रुतिबोधितशमदमादिकमप्रयोजकमिति विभक्तिविपरिणामेन पूर्वान्वयीत्यर्थः, पूर्वयोः कायिकवाचनिकयोः, एतन्मानसिकम् ॥ ४६ ॥ ७ ॥

॥ इति तृतीयचतुर्थे सप्तमाधिकरणम् ॥ ७ ॥

कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४७ ॥ पूर्वाधिकरणोक्तभक्तिमार्गं दृढीकर्तुं किञ्चिदाशङ्क्य समाधातुं सूत्रमिदमित्यधिकरणमवतारयन्ति नन्वित्यादिना, 'आचार्यकुलादि'त्यादिश्रुत्यर्थस्तु–आचार्यकुलाद् गुरुकुलाद् गुर्वभावे तत्पत्न्यां तत्पुत्रे तद्गोत्रे वा ब्रह्मचर्यं समावर्तनीयमिति ज्ञापयितुं कुलपदं, वेदमधीत्य गुरोः कर्मातिशेषेण गुरोः सेवारूपं यत् कर्म तत् कृत्वा ततोतिशेषोवशेषो यः कालस्तेन कालेन वेदाध्ययनं साङ्गं रहस्यार्थज्ञानपुरःसरं सम्पाद्याभिसमावृत्य जिज्ञासाद्वयसमापनोत्तरमाचार्यकुलान्निवृत्त्य दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहिते कर्मणि तिष्ठन् शुचौ देशे वेदमधीयानो विविक्तस्वाध्यायब्राह्मणोदितप्रकारे पवित्रे देशे यथावदासीन आवृत्तिमधीतस्य कुर्वन्

---

१. छुप्तं कपुपुंगो । २. °श्रुतेश्च कं । ३ वाचनिक कपु । ४. °ति° सर्वेप्यादर्शाः । ५. °त्° सर्वेप्यादर्शाः । ६ °स° सर्वेप्यादर्शाः ।

खल्वेवं वर्तयन् यावदायुषो[1] ब्रह्मलोकमभिसम्पद्यते[2] न च[3] पुनरावर्तते न च[3] पुनरावर्तते," इदं विषयवाक्यं, (छा. १०. १५. १.) "ब्रह्मलोकमभिसम्पद्यत" इति गृहिणोपसंहारः कृतः, वाजसनेयिशाखायां च (बृह. ६. ४. २२.) "तँद्ध[4] स वै तत् पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्त" इत्युपक्रम्य (बृह. ६. ४. २२.) "अथ भिक्षाचर्यं चरन्ती" ति पठ्यते, एवं सति विकल्पे सम्भवत्यप्युपसंहारस्य तात्पर्यग्राहकत्वाद् गृहिण एव यथोक्तकर्तुर्ब्रह्मसम्पत्तिरितिश्रुतेस्तात्पर्यं, त्यागोक्तिस्तु ब्रह्मैतादृशं यदर्थं सर्वं त्यज्यत इतिस्तुतिपरेति प्राप्ते गृहिणोपसंहारे हेतुत्वेन तात्पर्यमाह कृत्स्नेति ।

## कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४७ ॥

त्यागे वाङ्मनसोरेव भगवति विनियोगो न सर्वेन्द्रियाणां, गृहिणस्तु सर्वैः प्रकारैर्भजनं[5] भवतीति परिजनश्च कृतार्थो भवतीति च[6] भजने कृत्स्नता भवतीति तेनोपसंहारः कृत इत्यर्थः, अत एवा"त्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये"त्युच्यते, अ"त्रात्म"पदं भगवत्परमिति ज्ञेयं, कर्ममार्गीयगृहिव्यवच्छेदाय तुशब्दः ।

अत्रेदमाकूतं, (श्रीमद्भा. ३. २९. ७.) "भक्तिमार्गो बहुविध" इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्या मुक्तिमपि तुच्छां मन्यन्ते, तदुक्तं (श्रीमद्भा. ५. १४. ४४.) "मधुद्विट्सेवा[7]नुरक्तमनसामभवोपि फल्गु"रिति, तेन भगवद्भजन एव तत्रापि पुष्टिमार्ग एव श्रुतेर्भर इति ज्ञायते, पूर्वमुत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य गृहिणोपसंहारतात्पर्यं पश्चाद् यन्निरूपितवांस्तेन तादृक्सर्वात्मभाववतैव त्यागः कार्यस्तद्रहितेन तु गृह एवोक्तरीत्या प्रभुभजनं कार्यं तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते, उक्तभावाभावे[8] त्यागधर्मानिर्वाहादिति, केचन भक्ता भाषणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविवशाशया गृहांस्त्यक्त्वा वनं गच्छन्ति, आत्रेयौडुलोमिभ्यां तु भगवदवतारसामयिकभक्तदशोक्ता, एते सर्वे फलमार्गीयाः, वाजसनेय्युक्तास्तु साधनमार्गीया इति नानुपपत्तिः काचित् ॥ ४७ ॥

किञ्च, सन्न्यासिन आवश्यका ये धर्मास्ततोधिकास्ते गृहिणः सिध्यन्तीत्यपि हेतोस्तेनोपसंहारः कृत इत्याशयेनाह मौनवदित्यादि ।

---

धार्मिकान् विदधतः पुत्रान् शिष्यान् वा शिक्षणेन धर्मशीलान् कृत्वा, आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्यान्तर्यामिणि परे ब्रह्मणि बाह्याभ्यन्तरेन्द्रियाणि सम्यक् स्थापयित्वे'श्वरः सर्वभूतानां हृद्देशेर्जुनतिष्ठती'तिन्यायेन तमेव शरणत्वेन ज्ञात्वा कर्माणि तत्र सन्न्यसेदितियावत्, अहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः, तीर्थानि शास्त्रादिष्टानि भिक्षाद्युपायास्तेषु लोकानपीडयन्, स खल्वेवं वर्तयन् सोधिकारी पुत्रादीनप्येवं वर्तयन्, यावदायुषो यावज्जीवं, ब्रह्मलोकमपि सम्पद्यते देहान्ते ब्रह्मलोकं प्राप्नोति, न च पुनरावर्तत इत्यावृत्तिः समाप्तिसूचनाय, गृहिणेत्यादि, गृहिणा सह सर्वधर्माणामुपसंहारः श्रुत्या कृत इत्यर्थः, तथा च त्यागं विनैव तस्यैव ब्रह्मफलावाप्तिरुक्तेत्यर्थः, एवं सति श्रुतिद्वयतुल्यत्वे सति, विकल्पे सम्भवतीति, तथा च पूर्वश्रुतिद्वयोक्तस्य विकल्प उत गृहस्थे प्राप्तं तस्योपसंहार इतिसंशये 'पूर्वपक्षमाहुरुपसंहारे'त्यादिना, तात्पर्यग्राहकत्वाच्छान्दोग्यश्रुतेस्तात्पर्यं, इति प्राप्त इतिपूर्वपक्षे प्राप्ते, तात्पर्यमाह सूत्रकारश्छान्दोग्यश्रुतितात्पर्यमाहेत्यर्थः, कृत्स्नता सर्वेषां कृतार्थता, अत्र श्रुतौ, तुशब्दः सौत्रः, तादृक्सर्वात्मभाववतैवोत्कटसर्वात्मभाववतैव, उक्तरीत्या भगवत्सेवापरतयोक्तरीत्येत्यर्थः, उक्तभावाभावे तादृशसर्वात्मभावाभाव इत्यर्थः, एते सर्वे आत्रेयौडुलोम्युक्ताश्छान्दोग्यश्रुत्युक्ताश्चेत्यर्थः ॥ ४७ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥ सूत्रमवतारयन्ति किञ्चेत्यादिना, ये धर्माः कायवाङ्मनोदण्डरूपा धर्माः, ते ब्रह्मप्रापकाः, इत्यपि हेतोरतो हेतोरित्यर्थः, तेन भगवत्प्रापकधर्माणां गृहस्थ आधिक्येन, उप-

---

१. °ष° सर्वेप्यादर्शा. । २. °भि° सर्वेप्यादर्शाः । ३. स इति भाष्यकारपाठ प्रतिभाति, पु । ४. एतद्ध कपुपुंगो । ५. °ज° क । ६. वा क, लुप्तं पु । ७. °द्विट्ष्वनु° क, मय्युद्धवानु° गो । ८ °त्यतोपि बपागो ।

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

मौनपदमनीहानिलायामादित्रिदण्डिधर्मोपलक्षकं, यथा वागिन्द्रियमात्रदेहमात्रचित्तमात्रनियामकास्ते धर्मा उक्ता न्यासिनस्तथेतरेषामपीन्द्रियनियामकानां धर्माणा "मात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये"तिश्रुत्या गृहिण उपदिश्यन्त इति युक्तो "गृहिणोपसंहार" इत्यर्थः, तत्र नियमनमात्रमत्र तु भगवति विनियोगादाधिक्यमितिभावः, वस्तुतस्तु केवलनियमनस्याप्रयोजकत्वात् तत्रापि भगवति विनियोग एव तात्पर्यमिति ज्ञेयम् ॥ ४८ ॥

ननु भगवति सर्वेन्द्रियविनियोगात् "'"गृहिणोपसंहार" इति न युज्यते "शुचौ देशे स्वाध्यायमधीयान" इत्यादिकर्ममार्गीयसाधनश्रुतेरित्याशङ्क्य तत्तात्पर्यमाहानाविःकुर्वन्निति।

## अनाविःकुर्वन्नन्वयात् ॥ ४९ ॥

भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविःकुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः, गोपने मुख्यं हेतुमाहान्वयादिति, यतो भगवता सम्यमन्वयं[2] सम्बन्धं प्राप्य वर्ततेतो हेतोस्तथा, अत्र ल्यब्लोपे पञ्चमी, एतेन यावदन्तःकरणे साक्षात्प्रभोः प्राकट्यं नास्ति तावदेव बहिराविःकरणं भवति प्राकट्ये तु न तथा सम्भवतीति ज्ञापितम् ॥ ४९ ॥

वैदिककर्मकरणे तात्पर्यमुक्त्वा लौकिकस्यानावश्यकत्वेपि तत्समयमाह।

## ऐहिकमप्रस्तुतप्रतिबन्धे[3] तद्दर्शनात् ॥ ५० ॥

प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासम्भव एवैहिकं कर्म कार्य, नन्वैहिकं कर्मास्तु मा वातस्तत्समयोक्तिर्व्यर्थेत्याशङ्क्याह तद्दर्शनादिति, (छान्दो. १०. १५. १.) "आचार्यकुला"दित्युपक्रम्याग्रे पठ्यते "धार्मिकान् विदधदि" ति, अतो धार्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यतेतस्तत्समयोक्तिरावश्यकी, अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेपि तत्करणे फलप्रतिबन्धः स्यादितिभावः ॥ ५० ॥ ८ ॥

॥ इति तृतीयाध्याये चतुर्थपादेष्टमं गृहिणोपसंहार इत्यधिकरणम् ॥ ८ ॥

ननु (छान्दो. ८. १४. २.) "तस्य तावदेव चिरं यावन्न विमोक्ष्येथ सम्पत्स्य" इतिश्रुतौ मुक्त्यनन्तरं ब्रह्मसम्पत्तिः श्रूयते, सा तु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुमशक्या (ब्र. सू. १. ३. २.) "मुक्तोपसृप्यव्यपदेशात्" (श्रीमद्भा. ६. १४. १५.) "मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुन" इतिस्मृतेश्च मुक्तेः फलं भक्तिरसानुभव एव, एवं सत्युक्तगृहिणस्तत् फलं भवति नवेति संशये निर्णयमाह।

---

संहारः कृतो ब्रह्मप्राप्त्यन्तसाधनकलापस्य गृहस्थ उपसंहारः कृतः, तत्र न्यासिनि, अत्र तु गृहिणि तु, तत्रापि न्यासिन्यपि, तथा चात्र त्रयाणां भगवति विनियोगेपि न सर्वेन्द्रियाणां भगवति विनियोग इति गृहिण्येवोपसंहारः फलितः ॥ ४८ ॥

अनाविःकुर्वन्नन्वयात् ॥ ४९ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, आश्रमधर्मैरिति करणे तृतीया, अनाविःकुर्वन् प्रच्छन्नीकुर्वन्, ते धर्मा आश्रमधर्माः प्रच्छादनार्थमुक्ता इत्यर्थः, तथाश्रमधर्मा आच्छादनार्थाः, अत्रान्वयादितिसूत्रभागे, बहिराविःकरणमाश्रमधर्माणां बहिराविःकरणम् ॥ ४९ ॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ तत्समयो लौकिककर्तव्यकालः, अन्यथा सूत्रकारेण प्रस्तुताबाधेन लौकिककरणस्यानुक्तौ ॥ ५० ॥ ८ ॥

॥ इति तृतीयचतुर्थेष्टमाधिकरणम् ॥ ८ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ अधिकरणमवतारयन्ति नन्वित्यादिना,

---

१. °ल° पा। २. समन्वयं पा। ३. °प्यप्र° क। ४. प्रस्तुतं प्रभुभजनमित्यधिकं कैबपागो। ५. लुप्तं कपु।

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

एवम्भूतस्योक्तरूपस्य मुक्तस्य मुक्तेर्यत् फलं भक्तिरसानुभवस्तस्यानियमस्तस्य भगवदिच्छाधीनत्वात् साधनाप्राप्यत्वात्, अत एव (श्रीमद्भा. ५. ६. १९.) "मुक्तिं ददाति कर्हिचित् स न भक्तियोग" मितिशुकवाक्यं, अत्रौत्सर्गिकं[1] हेतुमाह तदवस्थेति, (छान्दो. १०. १५. १.) "न स पुनरावर्तत" इत्यस्यावृत्त्या मुक्त्यवस्थाया एव सार्वदिकत्वेन निर्धारः क्रियते, यद्यप्येवं मुक्तिफलाभावनियम एवायाति न तु तदनियमस्तथापि (छान्दो. ८. १४. २.) "तस्य तावदेव चिर"मित्यादिप्रमाणै (छान्दो. १०. १५. १.) "नं स पुनरावर्तत" इतिश्रुत्या समं विरोधाभावायौत्सर्गिकी तदवस्था तत्फलं तु कस्यचिदत्यनुग्रहेण पुष्टौ प्रवेशने भवतीतिस्वाभिप्रायं प्रकटीकुर्वता बादरायणेनानियम इत्युक्तं, एवं सति "न स पुनरावर्तत" इतिश्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति न तु तदतीतेपीति ज्ञेयं, समाप्तिज्ञापनायावृत्तिः ।

अथवा श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोतः फलानियमनिश्चयोपीत्यर्थः, एवं सति मुक्तिपर्यन्तं साधनं भगवद्भाव इतिनिर्णयः सम्पन्नः ॥ ५१ ॥ ९ ॥

॥ इति तृतीयाध्याये चतुर्थपादे नवमम्मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः ॥

---

सा मुक्त्युत्तरभाविनी ब्रह्मसम्पत्तिः, उक्तगृहिणश्छान्दोग्यश्रुत्युक्तगृहिणः, तत् फलं पुरुषोत्तमलीलानुभवरूपं, निर्णयमाह नियमितफलं भवतीतिपूर्वपक्षे प्राप्ते सूत्रकारो निर्णयमाहेत्यर्थं, एवम्भूतस्य पूर्वश्रुत्युक्तस्य, उक्तरूपस्य गृहिणः, तस्य लीलारसानुभवस्य, अनियमो मुक्त्यनन्तरं तत् फलं भवत्येवेतिनियमो नास्त्येवेत्यर्थः, तत्र हेतुमाहुस्तस्येत्यादिना, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येथ सम्पत्स्य' इतिश्रुत्युक्तस्येत्यर्थः, श्रुत्यर्थस्तु–तस्य मोक्षोत्तरभाविपरब्रह्मप्राप्तिरूपफलस्य, तावदेव चिरं तावानेव विलम्बो यावन्न विमोक्ष्ये मुक्तो न भवेयमिति, अत एव साधनाप्राप्यत्वादेव, औत्सर्गिकं साधनकलापानुसारेण निष्पन्नं, आवृत्त्या द्विरुक्त्या, मुक्त्यवस्थायाः प्रथममुक्त्यवस्थायाः, सार्वदिकत्वेन सार्वदिकत्वलाभेपि, मुक्तिफलाभावेति पुरुषोत्तममुक्तिफलाभाव इत्यर्थः, तथा च पुरुषोत्तममुक्तेर्भेदग्रहसापेक्षत्वात् प्रथममुक्तौ च तदसम्भवाद् द्वितीयमुक्तेर्नियमतो लाभेपि, तस्येत्यादि, तथा चोक्तश्वेतकेतूपाख्यानश्रुत्या 'न स पुनरावर्तत' इतिश्रुतेर्विरोधपरिहारार्थमौत्सर्गिकी साधनवशसम्पन्ना तदवस्था पुरुषोत्तममुक्त्यवस्था स्वीकार्येत्यर्थः, न तु तदतीतेक्षरातीते पुरुषोत्तमे पुनर्गमनं न निषेधतीत्यर्थः, समाप्तिज्ञापनायाध्यायसमाप्तिज्ञापनाय, आवृत्तिस्तदवस्थावधृतेरित्यस्यावृत्तिः, आवृत्तेरर्थविशेषं द्योतयितुमाहुरथवेत्यादि, श्रुतौ 'तस्य तावदेव चिर'मितिश्रुतौ, तदवस्थावधृतेः पुरुषोत्तममुक्त्यवस्थानिर्णयात्, तदवस्थावधृतिः पुरुषोत्तममुक्तिनिर्णयः, फलानियमनिश्चयः सामग्रीनियमनिश्चयाभावात् फलानियमनिश्चय इत्यर्थः, एवं सत्युक्तश्रुत्योरविरोधे सम्पादिते सति, मुक्तिपर्यन्तं पुरुषोत्तममुक्तिपर्यन्तं, भगवद्भावे पुरुषोत्तमीयसर्वात्मभावे सति सम्भवति नान्यथेत्यर्थः ॥ ५१ ॥

॥ इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतश्रीगोपालजीकृते ब्रह्मसूत्राणुभाष्यपदप्रदीपे तृतीयाध्यायस्य
चतुर्थश्चरणः ॥ ४ ॥

॥ समाप्तोयं तृतीयोध्यायः ॥

---

१. °कहेतुं बप्रपागो ।

# ॥ अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद् यदि ।
तस्याग्रिमव्यवस्था या सा चतुर्थे विविच्यते ॥ १ ॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।
अतो ब्रह्मविदा कार्यमेवमेव न चान्यथा ॥ २ ॥
तामसीं बुद्धिमाश्रित्य ये मूढाः सर्वविप्लवम् ।
वदन्ति शास्त्रनाशाय सद्भिः शोच्याश्च येनु तान् ॥ ३ ॥
ब्रह्मविद्गमनाभावः शतांशेनापि चेद् भवेत् ।
शास्त्रमेतद् वृथा जातं सर्वसूत्रविनाशतः ॥ ४ ॥
स्वाप्ययस्य च सम्पत्तेरत्र ब्रह्मगतिश्रुती ।
अन्यथा न श्रुतेरर्थः स्याचेद् व्यासो वदेन्न किम् ॥ ५ ॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथामतिः ॥ ६ ॥
अतो ब्रह्मविदः कार्यं जीवतः पूर्वमुच्यते ।
आवृत्तिः श्रवणादीनां नवकृत्वोपदेशतः ॥ ७ ॥

---

अथ चतुर्थाध्यायार्थं विवरिषवोऽध्यायार्थं पादार्थांश्च निरूपयन्तः पूर्वाध्यायसङ्गतिं च प्रदर्शयितुं पूर्वाध्यायार्थान् बोधयन्तश्चतुर्थाध्यायार्थं सार्धश्लोकेनाहुः **समन्वयेने**त्यादि, प्रथमाध्याये विचारितो यः परस्परविरुद्धार्थतया भासमानार्थकश्रुतीनां ब्रह्मणि **समन्वयः** सन्दिग्धः समन्वयस्तेन कृत्वा द्वितीयाध्याये स्मृतीनां श्रुतीनां च **योविरोध**स्तद्धेतुकानि यानि तृतीयाध्यायोक्तान्यनुष्ठितानि **साधनानि तैर्यदि** ब्रह्मज्ञानवान् जातः स्यात् **तस्य** पूर्वोक्तक्रमेण सिद्धब्रह्मज्ञानस्या**ग्रिमव्यवस्था** साक्षात्परम्पराभेदेन फलभोगव्यवस्थेत्यर्थः ॥ १ ॥ तथा च पूर्वोक्तक्रमेण साधनवतो **जीवतो** मरणावस्थस्य **गच्छतः सफलस्य** चाभीष्टलाभपर्यन्तं सम्यक्साधनसम्पत्तिमता स्थेयमित्येतस्मिन्नध्याये निरूप्यत इति फलितं, **एवमेव** पूर्वाध्यायोक्तप्रकारेणैव, **अन्यथा** साधनशून्यतया न स्थेयमित्यर्थः ॥ २ ॥ **सर्वविप्लवं** प्रपञ्चमिथ्यात्वं, **शास्त्रनाशाय** 'सर्वं खल्वि'त्यादिवेदविनाशायेत्यर्थः, **येनु** तानिति, **तानन्नु** तन्मतानुयायिनो ये ते ये विप्लवकर्तारस्ते च **शोच्या** इत्यर्थः ॥३॥ **ब्रह्मविद्गमनाभाव** उपनिषत्सु यो ब्रह्मविदां गतिप्रकारोऽर्चिरादिमार्गो निरूपितस्तद्विरुद्धप्रकारनिरूपणमभावपदवाच्यमिति बोद्धव्यं, **एतद्** वेदान्तात्मकं व्याससूत्रमर्चिरादिगतिप्रतिपादकमित्यर्थः, **सर्वसूत्रे**ति, ब्रह्मगतिसर्वसूत्राणामित्यर्थः ॥ ४ ॥ ननु सगुणब्रह्मोपासनं तेन च सगुणब्रह्मप्राप्तिरितीदमुपेक्ष्य परब्रह्मप्राप्तिरेवात्र सूत्रकाराभिप्रेतेत्यत्र किं गमकम्? आहुः, **स्वाप्ययस्य** सुषुप्तेः **सम्पत्ते**र्मोक्षस्य च सम्बन्धिन्यौ, **अत्र** ब्रह्मविदां गतिनिरूपणप्रकरणे, **ब्रह्मगतिश्रुती** ब्रह्मप्राप्तिबोधिके श्रुती तिष्ठत इत्यर्थः, अथ'वैता हृदयस्य नाड्य' इत्यारभ्य 'तेजसा तदा सम्पन्नो भवती'तिसुषुप्तिबोधिकाथ 'यत्रैतदस्माच्छरीरादुत्क्रामती'त्यादिमुक्तिबोधिकैते श्रुती, तत्र मुक्तिश्रुतिर्**ब्रह्मगतिं** परब्रह्मगतिं बोधयति, **अन्यथे**त्यादि, उपासनाश्रुतिभिः सगुणब्रह्मविद्याबोधनं तादृशविद्यया च सगुणं ब्रह्म प्राप्यमिति **न श्रुतेरर्थः**, **स्याच्चे**दित्यादि, यद्युक्तः श्रुत्यर्थः स्यात् तदा व्यासः सूत्रेषु क्वापि कुतो **न वदे**दित्यर्थः ॥ ५ ॥ **तामसी**मित्यादि, तथा चाधर्मे धर्ममतिस्तामसी बुद्धिर्भ्रमात्मिकेत्यर्थः, **तामाश्रित्य** तामुपजीव्यीकृत्य, **या मुक्तिः** सगुणब्रह्मप्राप्तिरूपा मुक्तिः, **कैश्चित्** कल्पितगुरुतदुपासनाप्राप्येश्वरादीनां मायिकत्ववादिभिरित्यर्थः, **सा** सगुणा मुक्तिः, **सुषुप्तिश्रुतेरर्थ**'स्तदा तेजसा सम्पन्नो भवती'तिसुषुप्तिश्रुतेरर्थ इत्यर्थः, **मोहान्** 'मायां मदीयामाश्रित्य वदतां किं नु दुर्घट'मित्युक्तभगवन्मायाकृतमोहादित्यर्थः, **अन्यथामतिः** सुषुप्तिश्रुतिव्यतिरिक्तश्रुतिप्रतिपादितमुक्तिषु मायिकत्वमतिः, इत्थं च प्रथमपादे ब्रह्मविद शिक्षार्थमेव साधनादि निरूपितं न तु साधनोपदेशोपीति फलितम् ॥ ६ ॥ पादप्रयोजनं निर्णीय पादार्थमाहुरत इत्यादिना, **अतः** पूर्वाध्यायोक्तप्रकारेण साधनेन **ब्रह्मविदः** फललाभपर्यन्तं फलविरोधिनस्त्यागः फलोपयोगिनश्च सङ्ग्रह आवश्यको यतोत इत्यर्थः, **पूर्वं** प्रथमपादे,

---

१. च तुर्ये बपाल्गो ।

दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामात्मेति स्याद् दृढा मतिः ॥ ८ ॥
आपाततो दर्शनं तद्भेदेनापि बोध्यते ।
प्रतीकोपासनादीनां नैवम्भावो हि जायते ॥ ९ ॥
आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विशिष्यते ।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥ १० ॥
मनने च निदिध्यासे विशेषश्चोच्यतेधुना ।
आसनादि षडङ्गैस्तु चित्तं श्रौतार्थ एव हि ॥ ११ ॥
धारयेदामतेरेवं ततः सिद्धिमवाप्स्यति ।
धर्माधर्मभयं तस्य नास्त्येवेतिविनिश्चयः ॥ १२ ॥
अग्निहोत्रादिकं कार्यं सन्न्यासः फल एव हि ।
षोढा चेत् पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत् ॥ १३ ॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः ।
द्वितीये म्रियमाणस्य सर्वेन्द्रियलयः पुरा ॥ १४ ॥
लिङ्गस्यापि शरीरस्य नाड्योत्क्रान्तिरिहोच्यते ।
दिनायनकृतो नास्य विशेषोस्तीति चोच्यते ॥ १५ ॥

---

तत्कार्यमेवाहुरावृत्तिरित्यादिना, श्रवणादीत्यादिपदेन मनननिदिध्यासनसङ्ग्रहः, श्रवणाद्यावृत्तौ हेतूनाहुर्नवकृत्व इत्यादि, नवकृत्वो वेदे ब्रह्मोपदेशतात्पर्येणेत्यर्थः ॥ ७ ॥ दर्शनार्थत्वतो ब्रह्मसाक्षात्कारकारणत्वत इत्यर्थः, लिङ्गा 'दावृत्तिरसकृदुपदेशा'दितिव्यासस्मृतिसामर्थ्यादित्यर्थः, व्रीह्यवघातवदिति फलपर्यन्तावृत्तौ दृष्टान्त आत्मेत्यादि, ब्रह्माभिन्नतया स्वात्मनो दृढा मतिः स्यादित्यर्थः, तथा चावृत्तिः श्रवणादीनां प्रथमाधिकरणप्रतिपाद्या दृढात्ममतिस्तु द्वितीयेनेत्यादि बोध्यं, तथा च द्वितीयाधिकरणप्रतिपाद्या दृढा मतिरवान्तरफलं पुरुषोत्तमलाभः परमं फलम् ॥ ८ ॥ मुख्यावयविभिन्नावयवेषूपासनया भेदबुद्धेर्मुख्यफलाजनकत्वमुपन्यस्यन्त्यापातत इत्यादिना, आपाततो दर्शनमवयवेष्ववयविनो दर्शनं, तदापाततो दर्शनं, अभेदेन सर्वस्य वस्तुमात्रस्य ब्रह्मत्वाद् ब्रह्माभेदेन, बोध्यत उपनिषद्वाक्यैर्बोध्यत उपपाद्यत इत्यर्थः, प्रतीकेत्यादि, धर्मित्वशून्ये धर्मित्वेनोपासना प्रतीकोपासना, आदिपदेन कर्ममार्गीया उपासनाः, एवम्भावो भगवत्साक्षात्कारभक्त्यन्यतररूपो भावः ॥९॥ आलम्बनार्थं ब्रह्मत्वेन ध्यानस्य विषयलाभार्थं, तत्रापि धर्मिशून्येपि, ब्रह्मदृष्टिरभेदेन ब्रह्मज्ञानमुपदेशो वा, विशिष्यतेवान्तरफलविशेषसम्पादकत्वेनोपयुज्यते, तच्च फलमिन्द्रियादीनां तावत्कालं संसारव्यावृत्तिरूपं, आदित्यादिब्रह्मदृष्टेरादित्यादेर्ब्रह्मत्वेनोपासनस्य, अङ्गत्वं मुख्यफलब्रह्मसाक्षात्कारभक्त्योरुपकारितयाङ्गत्वं, न स्वतन्त्रता स्वातन्त्र्येण न मुख्यफलसाधकता, आदित्येत्यादिस्तृतीयाधिकरणविषयो बोध्यः ॥ १० ॥ मनन इत्यादि, आदित्याद्युपासनायां मनननिदिध्यासनैर्भावनयान्तर्बहिःप्रकटाय भगवत आसनाद्युपचारकल्पनं, आदिपदेन लीलाविशिष्टस्य प्राकट्ये तद्योग्योपचारकरणं, इत.परं भगवत्प्राकट्यानुकूलान्याहुः षडङ्गैरिति, षडङ्गानि तु श्रवणादित्रिकस्यावृत्तिः स्वात्मनि ब्रह्माभेददृष्टिर्ब्रह्मत्वेन निखिलपदार्थानां ग्रहणं परब्रह्मत्वेन धर्मिण उपासनं सर्वत्र धर्म्यतिरिक्तास्फूर्तिरादित्यादिषु भगवदङ्गत्वबुद्धिश्चेति यथाकारं सम्पन्नैरेतैश्चित्तं श्रौतार्थे उपनिषदेकगम्ये भगवति धारयेत् स्थापयेदामतेर्मननकालमारभ्येत्यर्थः ॥ ११ ॥ ततः षडङ्गनिष्पत्तेरुत्तरकालमेव, सिद्धिं भगवति निरुपधिप्रेमरूपां सिद्धिं, एव'माप्रायण'सूत्रान्तं निरूपणं कृतं, 'तदधिगमा'दिसूत्रार्थमाहुर्धर्मेत्यादिना, धर्माधर्मभयं मुक्तिप्रतिबन्धकीभूतं स्वर्गनरकादिप्राप्तिरूपं भयमित्यर्थः, तस्य निरुपधिप्रेमवतः ॥१२॥ 'अग्निहोत्रा'दिसूत्रार्थमाहुरग्निहोत्रेत्यादिना, सन्न्यास इत्यादि, सन्न्यासफलं मोक्षस्तन्निमित्तमग्निहोत्रादिकं कार्यं, तथा च मोक्षोपयोगिज्ञानस्य सिद्धत्वेप्यग्निहोत्रादिसम्पादकप्रारब्धस्य भोगानाश्यस्याग्निहोत्रादिनाश्यत्वादग्निहोत्राद्यावश्यकमित्यर्थः, षोढाग्निहोत्रादिसोमान्तानि पञ्च कर्माणि ज्ञानं चेतिषड्भिः प्रकारैरित्यर्थः, प्रारब्धान्ते व्यक्त इतियोजना, फलं मोक्षरूपम् ॥ १३ ॥ प्रथमपादे जीवतः कृत्यमुक्त्वा द्वितीयपादेन म्रियमाणस्य कृत्यमाहुर्द्वितीय इत्यादिना, सर्वेन्द्रियेत्यादि, पुष्टिमार्गीयस्येन्द्रियलिङ्गशरीराणां पुरुषोत्तमे लयो मर्यादामार्गीयस्योक्तानां लयो भूततन्मात्रादिषु ॥१४॥ इह हीनाधिकारिण्युक्त-

तृतीये क्रममुक्तौ यो मार्गो यस्य श्रुतेर्मतः।
तन्निर्धारोन्यमार्गीया[1]णामप्राप्यत्वं च वर्ण्यते ॥ १६ ॥
गन्तव्यं च परं ब्रह्म कार्यो लोकस्तु नेति च।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥ १७ ॥
प्रभोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते।
लीलानित्यत्वतः पूर्णगुणत्वं च ततोखिलम् ॥ १८ ॥

अस्य फलप्रकरणत्वेपि साधनरूपस्यापि श्रवणस्यान्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमप्याह, (बृह. ६. ५. ६.) "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यमुतासकृदिति भवति संशयः, किं तावत् प्राप्तम्? सकृदेवेति, तावतैव शास्त्रार्थस्य सम्पत्तेः, नच तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां [2]तत्सिद्धिपर्यन्तमावृत्तिर्न्याय[3]प्राप्तेति वाच्यं, अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु नाम प्रकृते त्वदृष्टद्वारकत्वात् सकृत्कृतेनैवादृष्टद्वारा फलसम्पादनसम्भवादावृत्तिरप्रयोजिकेति प्राप्त उच्यते,

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

आवृत्तिरेव श्रवणादीनां श्रुत्यभिमता, कुतः? असकृदुपदेशात्, छान्दोग्ये श्वेतकेतूपाख्यान (छान्दो. ८. ८.७.) "ऐतदात्म्यमिदꣳ सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इतिवाक्येन जडजीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान्, तथा च सकृदुपदेशेनैव चेदर्थसिद्धिः स्यात् तदैकमेवार्थमेकस्मा एकदैवासकृन्नोपदिशेत्, प्रयोजनाभावात्, एतेनावघातवदन्तःकरणदोषनिवर्तनं दृष्टं द्वार[5]मन्येषामुपदेशानां चरमस्य तस्य ज्ञानसाधकत्वमिति मन्तव्यम् ॥ १ ॥

---

क्तानां नाड्योत्क्रमणमित्यर्थः, दिनायनेत्यादि, अस्य पूर्वोक्तसाधनवतोधिकारिणः, शुभदिनायनादि मुक्तौ सहकारि न भवतीत्यर्थः ॥ १५ ॥ तृतीयपादार्थमाहुस्तृतीयेत्यादिना, यस्येत्यादि, यस्याधिकारिण', श्रुतेर्मतः श्रुतिमुपजीव्यीकृत्याङ्गीकृतः, तन्निर्धारो मर्यादामार्गनिर्धारः, अन्यमार्गीयाणां भक्तिज्ञानमार्गातिरिक्तमार्गीयाणामित्यर्थः, अप्राप्यत्वं ब्रह्मण्यप्राप्यत्वं तत्सम्बन्धिप्राप्यत्वाभाव इत्यर्थः ॥१६॥ लोकप्राप्तिर्या क्रममुक्तौ सा तूत्कृष्टं गन्तव्यं फलं न भवतीत्यादिना, कार्यो लोकः साधनैः सम्पाद्यो लोकः, नेति न मुक्तिः, चस्त्वर्थे, तुरीयपादार्थमाहुस्तुरीयेत्यादिग्रन्थेन ॥ १७ ॥ प्रभोरेव फलत्वमिति, 'आत्मा प्रकरणा'दित्यादिसूत्रद्वये निरूप्यते, तन्निर्दोषत्वं प्रभोर्निर्दोषत्वं, तच्च 'तत्त्वभावे सन्ध्यव'दितिसूत्रद्वये निरूप्यत इत्यर्थः, अन्यन्निरूपणीयं सर्वं 'जगद्व्यापारवर्ज'मित्यादिसूत्रप्रपञ्चोवसेयः, विशिष्टभगवत्स्वरूपस्य फलत्वमुपपादयन्ति लीलेत्यादिना, तत उपनिषत्सु तथा निरूपणतः, अखिलं श्रुत्युक्तयावद्धर्मविशिष्टं पुरुषोत्तमस्वरूपं फलमित्यर्थः ॥ १८ ॥

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ अत्र पादार्थनिरूपणमुखेनाध्यायार्थं निरूप्यैतदध्याये फलस्य प्रकरणात् साधननिरूपणमर्थान्तरमित्येतद्दोषनिराकरणाय प्रयोजनान्तरं च प्रतिपादयितुं सूत्रमवतारयन्त्यस्येत्यादिना, अन्तरङ्गत्वं फलपूर्वाङ्गत्वेन फलमध्यपातित्वं, तथा च मनननिदिध्यासनयो' श्रवणाङ्गत्वं फलितं, तच्छ्रवणं, अपिशब्दोन्तरङ्गत्वनिर्णयसमुच्चयार्थः, अधिकरणमवतारयन्त्यात्मेत्यादिना, शास्त्रार्थस्य 'श्रोतव्य' इत्यादिशास्त्रार्थस्य, तथात्वमावृत्तिः, प्रकृते श्रवणादिस्थले फलसम्पादनसम्भवात्, इति प्राप्ते श्रवणाद्यावृत्तेरप्रयोजकत्वे प्राप्ते, असकृदुपदेशमाहु'रैतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इतिवाक्येन जडजीवयोर्ब्रह्मत्वबोधनार्थं, नवकृत्व उपदिष्टवानिति, अर्थभेदे तद्बोधनार्थमेवावृत्तिः स्यात् 'सकृदुच्चरित शब्द सकृदर्थं गमयती'तिन्यायादत एकमेवार्थमित्युक्तं, पुरुषोद्देशभेदेप्यावृत्तिः स्यादत एकस्मा इत्युक्तं, कालभेदेनैकस्मा अप्युपदेशावृत्तिसम्भवादेकदेत्युक्तं, प्रयोजनाभावाच्च छक्र उपदेशश्चेत् फलसाधकस्तदा प्रयोजनाभावादित्यर्थः, अन्येषां चरमभिन्नानाम् ॥ १ ॥

---

१. मार्गाणाम॰ बपापुगो। २. छुतं कं। ३. छुतं कं। ४. °योजका कपु। ५. दृष्टद्वार° कंबपागो।

अत्रैव हेत्वन्तरमाह ।

## लिङ्गाच्च ॥ २ ॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते, सा च (श्रीमद्भाग. ११. १४. २६.) "यथायथात्मा परिमृज्यतेसौ मत्पुण्यगाथाश्रवणाभिधानैः तथातथा पश्यति तत्त्वसूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्त'मित्यादिरूपा तदावृत्तिमेव फलसाधकत्वेनाह, अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते ॥ २ ॥

(बृह. ६. ५. ६.) "आत्मा वारे द्रष्टव्य" इतिपदेन श्रवणादीनां फलात्मकं दर्शनं पूर्वमुक्त्वा (बृह. ६. ५. ६.) "श्रोतव्यो मन्तव्य" इत्यादिना तत्साधनानि पश्चाद् यदाह तेनात्मनः परोक्षमपि ज्ञानमवान्तरफलरूपमिति भक्तिमार्गे परमफलरूपतत्सजातीयत्वेन च फलमध्यपात्येवेति श्रुत्यभिमतमिति ज्ञायते, तेन सूत्रकृदपि फलप्रकरणेपि साधनविचारं चकारेतिनिगूढाशयः, तथापि "शाब्दक्रमादार्थक्रमो बलीयानि"तिन्यायाद् "द्रष्टव्य" इतिपदस्य पश्चात्सम्बन्धे तूक्तरीतिर्नोवसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासङ्गतत्वमापततीति प्रकारान्तरेण सूत्रार्थ उच्यते,

### आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥

श्रुतिर्हि कर्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्तव्यत्वेन प्रतिपादयति, तत्र तेषां स्वरूपं तृतीयेध्याये बादरायणेन प्रतिपादितमथ तुरीयेध्याये तेषां फलं चिन्त्यते, तत्रादौ कर्ममार्गस्य फलमुच्यते, ज्ञानभक्त्योरेव क्रमेणोत्तमात्युत्तमफलकत्वमतस्तत्साधनत्वेनैव तत् कर्तव्यं न तु स्वातन्त्र्येणेति ज्ञापयितुमावृत्तिरिति कर्ममार्गस्यावृत्तिः पुनर्जन्मफलं तदप्यसकृत्, इदं पदमावृत्त्योभयत्रापि सम्बध्यते, तथा चात्र प्रमाणापेक्षायां तदाह हेतुत्वेनासकृदुपदेशादिति, श्रुतौ कर्ममार्गे पुनर्जन्मासकृदुपदिश्यते यतः, अन्यथा सकृदुपदेशेनैव तदवगमेप्यसकृदुपदेशो व्यर्थः स्यादतस्तथेत्यर्थः, वाज-

---

लिङ्गाच्च ॥ २ ॥ अत्रैवोपदेशावृत्तावेव, सा चोपदेशावृत्तिबोधिका स्मृतिश्च, आत्मान्तःकरणं, सम्प्रयुक्तं सम्यक् सम्पादितं, तदावृत्तिं श्रवणावृत्तिं, अत्र दृष्टान्तेन स्मृतौ 'चक्षुर्यथे'तिदृष्टान्तेन, दृष्टद्वारकत्वं अदृष्टमद्वारीकृत्य फलसाधकत्वं, पूर्वमुक्त्वेति, भगवच्चाक्षुषस्येतरफलापेक्षयोत्कृष्टत्वेन प्राधान्यात् प्रथममुक्तिरित्यर्थः, तेन पूर्वस्य प्राधान्यद्योतने कृते प्रधानस्यापि लाभेन, परमफलरूपेत्यादि, भगवन्मानससाक्षात्कारस्यापि साक्षात्कारत्वेन रूपेण भगवच्चाक्षुषसाजात्यसत्त्वेनेत्यर्थः, तेनावान्तरफलस्यापि फलमध्यपातेन, बलीयानिति 'अग्निहोत्रं जुहोति यवागूं पचती'त्यत्र बलिष्ठत्वस्थापनादित्यर्थः, पश्चात्सम्बन्धे निदिध्यासनोत्तरयोजने, उक्तरीतिर्दर्शनस्य चाक्षुषस्य मुख्येनोक्तावमुख्यस्य मानवस्यावान्तरफलस्य लाभ इतिरीतिः, प्रकृतविचारस्य साधनावृत्तिविचारस्य, फलप्रकरणासङ्गतत्वं फलप्रकरणे साधननिरूपणस्यासङ्गतत्वं, पूर्वाध्यायेनैतदध्यायस्योपजीव्योपजीवकभावरूपां सङ्गतिं प्रदर्शयन्ति श्रुतिर्हीत्यादिना, हीनेत्यादि, हीनाधिकारिणं कर्म प्रदर्शयति, एवं मध्यमाधिकारिणं ज्ञानं प्रदर्शयति, उत्तमाधिकारिणं प्रति भक्तिं प्रदर्शयतीत्यर्थः, तत्र साधननिरूपणप्रस्तावे, तेषां कर्मज्ञानभक्तीनां, स्वरूपं स्वकीयस्वकीयकार्यकरणसामर्थ्यं, बादरायणेन व्यासेन, तेषां तृतीयाध्यायोक्तसाधनानां, अथ साधननिरूपणानन्तरं, तत्र कर्मज्ञानभक्तिफलानां मध्ये, उत्तमात्युत्तमेति, ज्ञानस्योत्तमं फलं भक्तेरुत्तमोत्तमं फलमित्यर्थः, तत्साधनत्वेनैव परम्परया ज्ञानभक्तिफलसाधनत्वेनैव, स्वातन्त्र्येण कर्मज्ञानफलातिरिक्तफलोद्देशेन, इदं पद'मसकृ'दितिपदं, उभयत्रावृत्तावुपदेशे चेत्यर्थः, अत्र कर्ममार्गस्यासकृज्जन्मावृत्तिफले, तदाह सूत्रकारो हेतुमाहेत्यर्थः, अन्यथा जन्मावृत्तेरसकृत्त्वाभावे, तदवगम एकावृत्तेरवगमे, अतोसकृदावृत्तेर्हेतोः श्रुतौ वैयर्थ्यापातात्, तथा

---

१. °सम्मत° कै।

सनेयिशाखायां पठ्यत (बृह. ६. ३. ३६.) "एवमेवाय॰ शारीर आत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवे"ति, तत्रैव पुन (बृह. ६. ४. २.) "स्तेनैव प्रद्योतेनैषं आत्मा निष्क्रामती"त्युपक्रम्य पठ्यते (बृह. ६. ४. २.) "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे"ति, तत्रैवैतदनुपदमेव (बृह. ६. ४. ३.) "तद् यथा तृणजलायुके"त्युपक्रम्य पठ्यत (बृह. ६. ४. ४.) "एवमेवायं पुरुष इद॰ शरीरं निहत्याविद्यां गमयित्वान्यन् नवतरं कल्याणतर॰ रूपं तनुते पित्र्यं वा गान्धर्व वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य"इति, तत्रैवाग्रे पठ्यते (बृह. ६. ४. ६.) "प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययं तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण" इति, अत्र हेत्वन्तरमाह लिङ्गाच्च, वेदानुमापकत्वेन स्मृतिर्लिङ्ग-मित्युच्यते, सा च भगवद्गीतासु (श्रीमद्भग. ९. २०.) "त्रैविद्या मा"मित्युपक्रम्य पठ्यत (श्रीमद्भग. ९. २१.) "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त" इति (श्रीमद्-भग. ८. १६.) "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने"ति च, अथवा (बृह. ६. ४. ५.) "यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेने"तिश्रुतिर्वर्तमानजन्मकर्मणोः पूर्वजन्मसम्बन्धिकर्मानुमापकत्वं वदतीति कर्मिणः पुनर्जन्मावश्यकमिति ज्ञायते, एवं सति लिङ्गत्वेन निरूपणादित्यर्थः सम्पद्यते, निवृत्तिमार्गीयस्यापि तस्य ज्ञानोपकर्तृत्वमात्रं न तु जन्मनिवर्तकत्वं मानाभावात् ॥ २ ॥ १ ॥

॥ इति चतुर्थाध्याये प्रथमपादे प्रथममावृत्त्यधिकरणम् ॥ १ ॥

एवं कर्मफलं विचार्य ज्ञानफलं विचारयति ।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्वार्थनिरूपणव्यवच्छेदाय तुशब्दः, ज्ञानिनो हि भगवन्तमात्मत्वेनैवोपासते, तस्या नैर-न्तर्येणैकजन्मभिस्तथैव तेषां हृदि भगवान् स्फुरति, तदा स्वानन्दांशस्याप्याविर्भावाद् ब्रह्मभूतः सन्नात्मत्वेनैव ब्रह्म स्फुरितमिति तदानन्दात्मकः संस्तमनुभवति, एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति, एतादृशः सर्वोपकारीति परार्थमपि तस्मै भगवता ज्ञानं दत्त-मिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिण्युपस्थिते तच्चोपदिशति च, एतदेवाहात्मे-त्यादिना, उप समीपे गमनं प्रवेश इति यावत् ।

अथ वा ननु ज्ञानभक्त्योरनावृत्तिः फलमत उत्तमे ते न तु कर्मेत्याशयेन कर्मणः फलमा-वृत्तिरिति यन् निरूपितं तत्रेदं चिन्त्यते, (छान्दो. १०. १५. १.) "न स पुनरावर्तत" इतिश्रुतिः सर्वथानावृत्तिमाहोत सावधिकीं ताममरशब्देन तन्निवृत्तिमिव? किमत्र युक्तं? सावधिकीमेवेति,

श्रुतावुपदेशात् कर्ममार्गे जन्मावृत्तिरसकृदङ्गीकार्येत्यर्थः, उपदेशिकां श्रुतिमाहुर्वाजसनेयीत्यादिना, प्रतिन्यायं गर्भोत्पत्तिरीत्या, प्राणाय पुनर्जीवनाय, तेनैव प्रद्योतेन पूर्ववद् भगवतः स्तुत्या, तं जीव, विद्येति, तत्रैव तत्प्र-करण एव, अत्रासकृज्जन्मावृत्तौ, हेत्वन्तरमुक्तश्रुत्यपेक्षयान्य हेतुं, इत्यर्थो जन्मावृत्तिरूपोर्थः, तस्य कर्मणः, ज्ञानोपकर्तृत्वमात्रमन्तःकरणशुद्धिद्वारा ज्ञानोपकारित्वमात्रं, मात्रपदेन जन्मावृत्तेरनिवृत्तिः, अत्र द्वितीयपक्ष-व्याख्याने सूत्रद्वयमात्रं संशयादेरलाभात्, प्रथमव्याख्याने त्वधिकरणमेव ॥ २ ॥ १ ॥

॥ इति चतुर्थप्रथमे प्रथमाधिकरणम् ॥ १ ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ सूत्रमवतारयन्ति पूर्वार्थेत्यादिना, पूर्वार्थनिरूपणं कर्मनिरूपण, तथैव ब्रह्मत्वेनैव, स्वानन्दांशस्येत्यादि, भगवदानन्दस्यापि ज्ञानिहृदय आविर्भावादित्यर्थः, तमनु-भवति भगवदानन्दमनुभवतीत्यर्थ., ग्राहयन्तीतिसूत्रभागं व्याख्यातुमाहुरेतादृश इति, एतदेवारम्भग्रहणमेव, क्रियासङ्गत एवकारोत्यन्तायोगव्यवच्छेदार्थः, उपगच्छन्तीतिसूत्रभागस्यार्थमाहुरुप समीप इत्यादि, पूर्वं सूत्रार्थमात्रमुक्तं न त्वधिकरणमतोधिकरणरचनार्थमाहुरथ वेत्यादि, ते ज्ञानभक्ती, न तु कर्मेत्यस्योत्तममित्यन्वयः, तामनावृत्तिं, तन्निवृत्तिमिव सावधिकमरणनिवृत्तिमिव, अनावृत्तिरपि सावधिकीत्यर्थः, सावधिकीमनावृत्तिं

१. प्रद्योतेनैव कें । २. नवरतरं बगो । ३. °भुव° पा । ४. न जन्म° कें । ५. °नैव स्फु° कंपु ।

तथा हि पूर्वं कर्मनैयत्यस्य[1] त्वयाप्यङ्गीकार्यत्वात् तस्य प्ररोहैकस्वभावत्वात्[2] तस्य दुरतिक्रमत्वात् तत्फलानुभवस्यावश्यकत्वात्, अपि च (बृह. ६. ४. २२.) "य एनं विदु"रितिश्रुतेः सति ज्ञाने हि सा, (तै. ब्रा.) "यतो वाचः" (बृह. ६. ४. २२.) "अगृह्यो न हि गृह्यत" इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासम्भवात्, इत एव भक्तिरपि प्रत्युक्ता वेदितव्या, ज्ञानाविषये स्नेहासम्भवात्, किञ्च (बृह. ६. ४. २२.) "सर्वस्य वशी सर्वस्येशान" इत्यादिश्रुतिभ्यो (श्रीमद्भाग. २. ६. ३७.) "यस्यावतारकर्माणि गायन्ति[3] ह्यस्मदादयः न यं विदन्ति तत्त्वेने"त्यादिस्मृतिभ्यश्च का प्रत्याशा जीवस्यातिहीनस्य तत्प्राप्तावत एवोपदेशासम्भवोपीति प्राप्ते प्रत्याहात्मेतीत्यादिना, तुशब्दः पूर्वपक्षनिरासकः, अत्रायमाशयः, सत्यमुक्तं भवता, तत्रोच्यते, यथागृह्यत्वातिमहत्त्वादिधर्मा भगवति सन्ति तथा सर्वात्मत्वमपि "य आत्मनि तिष्ठन्नि"त्यादिश्रुतिष्वात्मत्वेनैवोक्तेः, सर्वधर्माश्रयत्वेपि यदा यं धर्मं पुरस्कृत्य लीलां करोति तत्कार्यमेव तदा सम्पद्यते, हितकारित्वस्वभावत्वात् तस्य, एवं सति यस्मिन् पुरुषे यदात्मत्वेन लीलां करोति तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधायात्मानं प्रापयति, ननूक्तं दुरतिक्रमः कर्मस्वभाव इति, नैष दोषः, न ह्यन्नरसपाकाय जग्धमौषधमपि गौरवाय भवति तेन न तन्निवृत्तिर्वा व्यापादनैकस्वभावमपि विषमाशीविषं[4] तदपगमपटुतरनिगमसङ्गमो नापगमयति वा, तथा भगवदर्पितं तदर्थं च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यं, (श्रीमद्भाग. ११. ३. ४४.) "कर्मनाशाय[5] कर्माणि विधत्ते ह्यगदं यथे"तिवाक्यात्, अगृह्यत्वगृ[6]ह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैवं[7] पूर्वनिरूपणेन कृत इति नाधिकमत्र निरूप्यं, इतिशब्दो हेत्वर्थे, तथा च भगवानात्मा भवति सर्वेषां जीवानामतो हेतोरुक्तरीत्या तदनुग्रहेण तमुपगच्छन्ति, ज्ञानमार्गेङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुप समीप एव गच्छन्त्युक्तरीत्याक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः,

सावधिकीमित्यर्थः, पूर्वं ज्ञानात् पूर्वं, कर्मनैयत्यस्य चित्तशुद्ध्यर्थं वाचनिककर्मनैयत्यस्येत्यर्थः, त्वयापि ज्ञानस्य मुक्तिसाधकतावादिनापि, तस्य कर्मणः, तस्य पुनरावृत्तिलक्षणप्ररोहस्य, तत्फलानुभवस्य कर्मणो जन्मावृत्तिलक्षणफलानुभवस्य, सा 'य एनं विदुरमृतास्ते भवन्ती'तिश्रुतिबोधिता मुक्तिः, 'यतो वाच' इति, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'तिज्ञाननिषेधकश्रुत्येत्यर्थः, ज्ञानासम्भवादित्यनेन कारणबाधाज् ज्ञानजन्या मुक्तिरसम्भवदुक्तिकेत्यर्थः, इत एव ज्ञानस्यासम्भवादेव, प्रत्युक्ता माहात्म्यज्ञानरूपपूर्वाङ्गस्यासम्भवाद् भक्तिः प्रत्युक्तेत्यर्थः तत्प्राप्तौ ब्रह्मज्ञानप्राप्तौ, अत एवोपदेशकस्य गुरोर्ज्ञानासम्भवादेव, इति प्राप्तेनावृत्तौ साधकाभावेन बाधकसत्त्वेन च सावधिक्या एवानावृत्तेर्लाभः कर्मस्थल इव सर्वत्रेतिपूर्वपक्षे प्राप्ते, प्रत्याह सूत्रकारः समाधानं प्रत्याहेत्यर्थः, तुशब्दः सौत्रस्तुशब्दः, तुशब्दोनावृत्तौ सावधिकत्वरूपपूर्वपक्षनिराकरण इत्यर्थः, अगृह्यत्वेत्यादि, 'अगृह्यो न हि गृह्यते' 'अणोरणीयान् महतो महीयानि'त्यादिधर्माः, तत्कार्यं धर्मकार्यं, तदावतारदशायां, हितकारित्वं स्वनिष्ठानां हितकारित्वं, तस्य भगवतः, विधाय भक्तं तादृशप्रयत्नवन्तं विधायेत्यर्थः, कर्मस्वभावः स्वजन्यफलस्य सावधिकत्वसम्पादकत्वलक्षणः, नैष दोष इति, एष आवृत्तिविशिष्टफलसम्पादकत्वलक्षणः, न निष्कामतया करणेन भगवदर्पणेन वा कर्मणां सावधिकफलजनकत्वलक्षणस्वभावस्य निवृत्तत्वान्नेत्यर्थः, तेनौषधभक्षणेन, न तन्निवृत्तिर्नाजीर्णनिवृत्तिरित्यर्थः, तदपगमो विषनिराकरणं, निगमसङ्गमो विषोद्धारकमन्त्रप्रयोगः, नापगमयति वा किन्त्वपगमयत्येवेत्यर्थः, भगवदर्पितभगवदर्थकृतकर्मणां पूर्वोपार्जितनिखिलधर्मनाशकत्वमेव न तु प्ररोहैकस्वभावत्वमित्याहुस्तथेत्यादिना, कर्मणां कर्मनाशकत्वे प्रमाणमाहुः'कर्मनाशाय कर्माणि विधत्ते ह्यगदं यथे'ति, एतत्पूर्वार्धमेकादशस्कन्धे 'परोक्षवादो वेदोयं बालानामनुशासन'मिति, जीवसामर्थ्यमीश्वरदत्तजीवसामर्थ्यं, ईश्वरेच्छावतारादिविषयिणी 'सर्वे मां पश्यन्त्वि'ति वेश्वरेच्छेत्यर्थः, पुरा 'मनसैवानुद्रष्टव्य' 'कश्चिद् धीरः प्रत्यगात्मान''मानन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति, पूर्वनिरूपणेना'गृह्यो न हि गृह्यत' इति गृह्यत्वागृह्यत्वयोर्विरुद्धधर्मयोर्भगवति स्वीकारेणेत्यर्थः, इतिशब्द आत्मेत्ययं सौत्र इतिशब्दः, उक्तरीत्यानुग्रहेण जीवे सामर्थ्यं दत्वा लीलां करोतीत्याद्युक्तरीत्या, तं भगवन्तं, उप-

१. पूर्वकर्म° कखपागो। २. प्ररोहैकत्वस्वभावत्वात् कं। ३. गायन्ते कं। ४. विषं तदप° कं। ५. कर्ममोक्षाय सर्वेष्वादर्शाः। ६. °ग्रा° खपा। ७. पुरैव कृतः कखपापुगो।

भक्तिमार्गेङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुप समीपं गच्छन्तीत्यर्थः, एवं श्लेषोक्तिरियमिति ज्ञायते, सम्प्रदायानुवृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्त्युपदेशैरत्रोभयत्राप्यात्मत्वमेव हेतुरन्यथात्मारामस्य सर्वनिरपेक्षस्यैवम्प्रकरणासम्भवेन मोक्षमार्गाप्रसिद्धिरेव स्यात्, तस्मात् सर्वथानावृत्तिरेव श्रुत्यभि-प्रेतेति ज्ञेयम् ॥ ३ ॥

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति ।

## न प्रतीकेन हि सः ॥ ४ ॥

अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते, तथा च तादृशेन तेन स मोक्षो न भवतीत्यर्थः, श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमितिभावः ।

अथ वा'त्मत्वेनोक्तिरुपासनार्थे'ति वदन् वादी वक्तव्यः, फलार्थमेव तत्, फलं च श्रुत्युक्त-स्तत्प्रवेश एवेति त्वयापि वाच्यं, एवं सत्यादौ ज्ञानमार्गेनुपपत्तिमाह न प्रतीकेनात्मभूते ज्ञानिन उपगमः पूर्वोक्तः प्रवेशः सम्भवतीतिशेषः, भक्तिमार्गेपि तामाह न हि स इति, न हि प्रतीकोपासने स लोकवेदप्रसिद्धः पुरुषोत्तमोस्त्युपास्यत्वेन येन तत्प्राकट्यं स्यात् तदुपगमनं चेत्यर्थः, एवं ज्ञानभक्त्योः फलसत्ता साधिता ॥ ४ ॥

ननु ( छा. ५. १४. १. ) "सर्वं खल्विदं ब्रह्म" ( छा. ८. २५. २. ) "आत्मैवेद९ सर्व"-मित्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह ।

---

गच्छन्त्यनुग्रहानुसारेण सायुज्यं प्राप्नुवन्तीत्यर्थः, एवं श्लेषोक्तिरियमित्युपगच्छन्तीतिपदे श्लेषोक्तिः, सा च ज्ञानमार्गीयाणां ज्ञानप्राधान्यादक्षरप्राप्तिर्भक्तानां चानन्दप्राधान्येन 'सोश्नुते सर्वान् कामा'नितिश्रुत्युक्तरीत्या भक्तिमार्ग-सम्प्रदायानुरोधेन भगवत्समीपगमनमित्येवम्रूपा, ज्ञानभक्तिमार्गीयोभयेष्वप्यात्मत्वरूपहेतोर्भगवत्सम्बन्धसम्पादकस्य-सत्त्वात् साक्षात् परम्परया वा य उक्तोभयमार्गीयास्तेषां तत्तन्मार्गीयां भगवत्प्राप्तिमाहुः सम्प्रदायेत्यादिना, सम्प्र-दायानुवृत्तिर्ज्ञानिनां भक्तानां चानुवृत्तिश्च, अनुवृत्तिरितरेषां ज्ञानभक्तीच्छूनां भगवत्प्राप्तिकामनेत्यर्थ', एतादृशा ज्ञानभक्तिमन्त', उपदेशैर्ज्ञानभक्त्योरुपदेशैः, उभयत्र ज्ञानभक्तिमार्गीयोभयेषु, आत्मत्वमेव हेतुर्भगवत्सम्बन्ध-सम्पत्तावात्मत्वमेव हेतुरित्यर्थः, एवम्प्रकरणासम्भवेनेतरेषां स्वस्वरूपप्रापणे प्रयोजनाभावेनेत्यर्थ, तस्मा-दात्मत्वेन हेतुना ज्ञानभक्तिभ्यां पुनरावृत्तिरहितात्मलाभात्, श्रुत्यभिप्रेता ब्रह्मणि प्रवेशबोधकोक्तश्रुतेरभिप्रेता ॥३॥

न प्रतीकेन हि सः ॥४॥ ननु ब्रह्मांशे ब्रह्मत्वेनोपासनार्थमेवात्मत्वोक्तिर्न तु मुख्ये ब्रह्मणीति कथं पुनरावृत्ति-रहितभगवल्लाभ इत्यत आहुर्नन्वित्यादि सूत्रावतरणं, सूत्रार्थमाहुरतद्रूप इत्यादिना, तादृशेन प्रतीकेनारोपविषयी-भूतोपास्येन, स भक्तिज्ञानाभ्यां प्राप्यः, नन्वात्मत्वेन धर्मिणो ब्रह्मण उपासनेप्रतीकोपासन एव मुख्यं फलं भवतीत्यत्र किं गमकमत आहुः श्रुतिसिद्धत्वादित्यादि, 'य एनं विदुरमृतास्ते भवन्ति तमेवं विद्वानमृत इह भवती'त्यादि-श्रुतिसिद्धत्वादित्यर्थः, एतद्व्याख्यानेप्रतीकोपासनया मोक्षरूपफलस्योपपादनेपि न भक्तेः फलमुपपादितमत आहु-रथ वेत्यादि, तदुपासनं, तत्प्रवेशो यथायोग्यं ब्रह्मणि प्रवेशः, प्रतीकेनात्मभूते प्रतीकोपासनाविषयेवयविभिन्न इत्यर्थ', पूर्वोक्तो ब्रह्मसायुज्यरूपः, न प्रतीक इतिसूत्रभागं व्याख्याय सूत्रशेषं व्याख्यातुमाहुर्न हि स इति, व्याख्यानमाहुर्न हि प्रतीकेत्यादि, तत्प्राकट्यं पुरुषोत्तमप्राकट्यं, तदुपगमनं पुरुषोत्तमप्राप्तिः ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ सूत्रमवतारयन्ति नन्वित्यादि, एतच्छ्रुतिद्वयं छान्दोग्यस्थं, प्रथमं छान्दोग्य-शाण्डिल्यविद्यास्थं तदग्रे 'यस्य स्यादद्धे'त्यनेन पुरुषोत्तमप्राप्तिफलमुक्तं भक्तेः, द्वितीयं सनत्कुमारनारदसंवादस्थं मुक्तिप्रतिपादकं, सर्वत्र ब्रह्मदृष्टिं कार्यरूपे प्रपञ्चे ब्रह्मदृष्टिं, मुक्तीत्यादि, छान्दोग्य एव मधुविद्यायां ॥ ५ ॥ २ ॥

॥ इति चतुर्थप्रथमे द्वितीयाधिकरणम् ॥ २ ॥

---

१. °वङ्कर° कबपापुगो । २. °मते° कबपापुगो ।

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्वस्य वस्तुतो ब्रह्मात्मकत्वात्, सा च नोपदेशसाध्यातो नोपदिश्यते किन्त्वनूद्यते, सा त्वधिकारोत्कर्षात् स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तं, एतदेवोक्तमनेन सूत्रेण ॥ ५ ॥ २ ॥

॥ इति चतुर्थाध्याये प्रथमपादे द्वितीयमात्मेतीत्यधिकरणम् ॥ २ ॥

छान्दोग्ये (७. १३. १.) “अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य [1]कं त्वमात्मानमुपास्स” इत्या“दित्यमेव भगवो राजन्निति होवाचे”ति, (७.१४.१.) “अथ होवाचेन्द्रद्युम्न”मित्युपक्रम्य “कं[2] त्वमात्मानमुपास्स” इति “वायुमेव भगवो राजन्निति होवाचे”ति, एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशापप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः, तत्रैवा (५. १. १.) “सौ वा आदित्यो देवमध्वि”त्युपक्रम्यान्ते पठ्यत (५. १९. ४.) “य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त”इति, अत्रेदं चिन्त्यते, अत्र प्रतीकोपासनत्वमस्ति न वेति, अस्तीति पूर्वः पक्षः, तथा हि (५. १४. १.) “सर्वं खल्विदं ब्रह्मे”तिश्रुतौ सर्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति न क्वचित् प्रतीकोपासनमस्तीति हि पूर्वं निरूपितं, तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्या नोपपद्यते, ब्रह्मण एकत्वादेकप्रकारकेणैवोपासनेन सर्वेषां फलसिद्धेः पृथक्पृथगुक्तौ गौरवात् प्रयोजनविशेषाभावाच्च, तादृशाधिकाराभावात् पृथक् तदुक्तिरिति चेन्न, सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भवात्, एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं नाभिमतं किन्तु यथादित्यादीनां तत् तथा[3] सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र तेनैव फलमिति प्राप्ते प्रतिवदति ।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

आदित्यादौ या ब्रह्मत्वमतय उच्यन्ते तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ता विधीयन्ते, उपपन्नं चैतत्, न हि साकारव्यापकब्रह्मणोऽङ्गं न ब्रह्मातो न प्रतीकोपासनत्वं तत्र, अपरं चा( छा. ५. १. १. )“सौ वा आदित्यो देवमध्वि”त्युक्त्वा तस्य प्रतिदिग्[4]रश्मीनां कृपावलोकनरूपाणां मधुत्वं निरूप्य (छान्दो.५.१०.२.) “तद् यत् प्रथमममृतं तद् वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्तीत्येते देवा अमृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ती”ति पठ्यते, तथा च दर्शनमात्रेणान्यधर्मनिवृत्तिस्तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानमतिशयितस्नेहजविगाढभावेन

---

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ प्रतीकोपासनात्वमिति, ब्रह्मावयवे ब्रह्मत्वोक्तेः संशयबीजत्वं हस्ताद्यवयवे पुरुषत्वोक्तेरिवेत्यर्थः, सर्वमनूद्य सर्वत्वमुद्देश्यतावच्छेदकीकृत्येत्यर्थः, पूर्वं पूर्वसूत्रे ‘सर्वं खल्वि’त्यादिश्रुतिष्वित्यर्थः, तत्र सर्वस्मिन्, इदमेव सर्वं तद्ब्रह्मेत्यनेन बोध्यं, उक्तश्रुतिभिः प्रत्येकमङ्गोपासनाबोधकश्रुतिभिः, नोपपद्यत इत्युक्तं तत्र हेतूनाहुर्ब्रह्मण इत्यादिना, एकप्रकारकेणैव सर्वत्वावच्छिन्नोद्देश्यताकब्रह्मत्वप्रकारेणैवेत्यर्थः, सर्वेषां नानातत्तद्धर्मावच्छिन्नविशेष्यकब्रह्मत्वप्रकारकत्वेन बोधितनानोपासनानां, पृथक्पृथगुक्तौ सूर्यवाय्वादिप्रत्येकधर्मिकनानोपासनोक्तौ, तादृशाधिकारः सर्वंब्रह्मेत्याकारोपासनाधिकारः, इति चेन्न पृथगुपासनोक्तिर्नोचितेत्यर्थः, सर्वत्रेत्यादि, सर्वस्मिन् पदार्थे सर्वंब्रह्मेतिभावनायां क्रियमाणायां सर्वंब्रह्मेत्युपनीतनानात्मकज्ञानस्य सम्भवादुत्तमाधिकारो नापेक्षित एव, इत्थं च सर्वस्य ब्रह्मत्वाभावेप्युक्तरीत्या सर्वंब्रह्मेतिज्ञानसम्भवात्, फलितमाहैवं सतीत्यादि, एवं सत्युत्कृष्टाधिकाराभावेप्युक्तरीत्या सर्वंब्रह्मेतिज्ञानसम्भवे सति, तद् ब्रह्मत्वेनोपासनं, तथा फलोपयोगि, सर्वस्यापि ब्रह्मत्वेन सर्वस्याप्युपासनं फलायेत्यर्थः, प्रतिवदति सूत्रकारः समाधत्ते, ता अङ्गेषु ब्रह्मत्वेनोपासनाः, उपपन्नं युक्तिसिद्धं, एतदङ्गेषु ब्रह्मोपासनं, तत्र ब्रह्माङ्गेषु, पूर्वोक्तमृगर्थं स्पष्टीकुर्वन्नन्यपरं चेत्यादिना, देवमध्विति, आदित्यो भगवच्चक्षुः, मधुत्वं तस्य मधुनाडीत्वेन ‘प्राच्यो मधुनाड्य’ इतिश्रुतेः, अन्यधर्मनिवृत्तिः क्षुधारूपप्राणधर्मनिवृत्तिः, तस्यैव भगवच्चक्षूरूपादित्यस्यैव, तत्रैव तदादित्य एवेत्यर्थः, तद्दर्शन-

---

१. कि कंपु । २. त्वं कमा° बपागो । ३. तथा तथा बपापुगो । ४. °दिक्° बपापु । ५. °न्त्येतद् बपुगो ।

तत्रैव लयः पुनस्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्वभावं सम्पादयतीति तस्माद्रूपादुदयश्चैतत् सर्वं भगवदङ्गत्व एवोपपद्यत इत्यपि हेत्वभिप्रेतोर्थो ज्ञेयः, न हि प्रतीकत्व इदं सर्वं सम्भवति, भक्तिमार्गीयत्वादस्यार्थस्येतिभावः, अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति-ज्ञापनायैकवचनं, एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवति ॥ ६ ॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वमुक्त्वाधुना धर्मिणः फलत्वं तत्साधनं चाह ।

## आसीनः सम्भवात् ॥ ७ ॥

सम्भवादुत्कटस्नेहात्मकसाधनस्य सम्भवात् तदधीनः संस्तदग्र आसीनो भगवान् भवति, एतेन भक्तवश्यतोक्ता ॥ ७ ॥

एवं बहिःप्राकट्यमुक्त्वान्तरं तदाह ।

## ध्यानाच्च ॥ ८ ॥

भावनौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्यानादपि हृदि प्रकटः सन्नासीनो भवतीत्यर्थः, तेन स्थैर्यमुक्तं भवति ॥ ८ ॥

एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्काराविष्करणं चापि तदिच्छयैवेत्याह ।

## अचलत्वं चापेक्ष्य ॥ ९ ॥

भक्तेच्छामपेक्ष्याचलत्वं, चकाराच्चलत्वमपीत्यर्थः ॥ ९ ॥

## स्मरन्ति च ॥ १० ॥

केचन भक्ताः स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्मृतापवर्गान्तफला भवन्ति, चकाराच्छ्रवणकीर्तनादयोपि समुच्चीयन्ते, तदुक्तं (श्रीमद्भाग. ६.९.३९.) "मथ ह वाव तव महिमामृतसमुद्रविप्रुषासकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विसारितदृष्टश्रुतसुखलेशाभासाः-परमभागवता" इति ।

अथ (श्रीमद्भाग. ९. ४. ६३.) "वाहं भक्तपराधीन" इत्यादिस्मृतिः पूर्वोक्ते प्रमाणत्वेनोक्ता ॥ १० ॥ ३ ॥

॥ इति चतुर्थाध्याये प्रथमपादे तृतीयमादित्याद्यधिकरणम् ॥ ३ ॥

अथेदं विचार्यते बहिराविर्भावो येभ्यो येभ्यश्चान्तस्तेषां तेषां च मिथस्तारतम्यमस्ति न वेति, तत्र निर्णयमाह ।

---

मादित्यदर्शन, पूर्वभावमादित्यसायुज्य, तस्मादित्यादि, आदित्यरूपादित्यर्थः, उदय उपासकस्य वाञ्छितलाभ, इत्यपि पूर्वोक्तसर्वोपपत्तिरूपोपि, हेत्वभिप्रेत उपपत्तेरितिसौत्रहेतुबोधकपदस्य तात्पर्यविषयीभूतो भगवदङ्गत्वस्यादित्यादौ साधकः, प्रतीकत्व आदित्यादे प्रतीकोपासनाविषयत्वे, इदं पूर्वोक्त फलदानादि, अस्यार्थस्य स्नेहजविगाढभावेन तत्र लयादिरूपार्थस्य, एकवचनं सौत्राङ्गपद एकवचनं, एतेन स्वरूपैक्यस्याङ्गे सत्त्वेन ॥ ६ ॥

आसीनः सम्भवात् ॥७॥ सूत्रावतरणमाहुः पूर्वसूत्रेणेत्यादिना, धर्ममात्रस्येत्यादि, तथा च पूर्वसूत्रेणाङ्गोपासकस्याङ्गफलमुक्तमेतत्सूत्रेण त्वङ्गोपासकस्याङ्गिरूपफलं फलसाधनं चाह सूत्रकार इत्यर्थः, तदग्रेऽङ्गोपासकस्याग्रे ॥७॥

ध्यानाच्च ॥ ८ ॥ सूत्रमवतारयन्त्येवं बहिरित्यादिना, उक्त्वा'सीन' इत्यनेनोक्त्वा, तेन स्थैर्यं ह्यासीन इतिनिर्वचनेन ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥ सूत्रमवतारयन्त्येवं भक्तेच्छयेत्यादि ॥ ९ ॥

स्मरन्ति च ॥ १० ॥ सूत्रार्थमाहुः केचनेत्यादिना, स्फुटमन्यत् ॥ १० ॥ ३ ॥

॥ इति चतुर्थप्रथमे तृतीयाधिकरणम् ॥ ३ ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ अधिकरणमवतारयन्त्यथेत्यादिना, अथ पूर्वाधिकरणीयादित्याद्यङ्गोपासनाप्रयुक्तसाधनभक्त्युत्कर्षजनितान्तर्बहिःपुरुषोत्तमप्राकट्यविचारानन्तरं, इदं वक्ष्यमाणं, येभ्यो येभ्य इति, यद्यद्भक्तार्थं, मिथस्तारतम्यं तेषां भक्तानामन्तर्बहिःप्राकट्ये च तारतम्यं, एकाग्रता चेतसो भगवन्मात्रविषयता,

---

१. भावानौत्कृ° बपु ।

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यत्र भक्तेष्वेकाग्रता भगवत्स्वरूपे प्रकट एवैकस्मिन् ग्राहकचित्तधारा न त्वन्तर्बहिर्विज्ञानं तत्रोभयोरन्तःपश्यतो बहिःपश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्तीत्यर्थः ॥ ११ ॥ ४ ॥

॥ इति चतुर्थाध्याये प्रथमपादे चतुर्थं यत्रैकाग्रताधिकरणम् ॥ ४ ॥

उक्तेर्थ एवायं संशयः, अन्तःप्राकट्यवतो यदा बहिःसंवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेति, तत्र वैलक्षण्याद् भवितुमर्हतीति पूर्वः पक्षः, तत्र सिद्धान्तमाहाप्रायणादिति ।

## आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

श्रीभागवते (श्रीमद्भाग.११.११.४८.) "प्रायणं हि सतामह"मितिभगवद्वाक्यात् प्रायणशब्देन स्वतःपुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते, तथा च तंन्न मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी न तु बहिःप्राकट्येपि बहिष्ट्वानुसन्धानमित्यर्थः, ततस्तस्य तत्र सायुज्यं भवति न वेतिसंशये निर्णयमाह,तत्रापि प्रायणेपि प्राप्ते तस्य पूर्ववत् प्रभुणा सममालापावलोकनश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्यमित्यर्थः, यतः शुद्धपुष्टिमार्गेङ्गीकृतोन्यथा पूर्वोक्तभावसम्पत्तिः कथं स्यादित्युपपत्तिर्हिशब्देन सूच्यते, एतच्च ( ब्र. सू. ३. ४. ४०. ) "तद्भूतस्य तु नातद्भाव" इत्यत्र निरूपितम् ॥ १२ ॥ ५ ॥

॥ इति चतुर्थाध्याये प्रथमपादे पञ्चममाप्रायणाधिकरणम् ॥ ५ ॥

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्यादामार्गीयस्य तस्य फलं चिन्त्यते, तत्र तु ज्ञानपूर्वकत्वं भक्तेरावश्यकं, कर्ममर्यादाया अपि स्वकृतत्वात् तामनुल्लङ्घ्यैव भगवता फलं दीयते, तच्च (ब्रह्मवै. प्र. ख. २६. ७०. ) "नाभुक्तं क्षीयते," तद्भोगानुकूलकर्मणा स्वसजातीयतत्सन्तानजननादनिर्मोक्ष एव सर्वस्य सम्पद्यते, न च प्रायश्चित्तवज् ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यं, तद्वत् तस्य तदुद्देशेनाविहितत्वात्, तथाकथने चान्योन्याश्रयः, दुरितस्य चित्ताशुद्धिहेतुत्वेन तन्नाशे ज्ञानोदयो यतः, अतो मर्यादामार्गे मुक्तिरनुक्तिविषयेति प्राप्त उच्यते ।

---

एकस्मिन् भगवत्येव, ग्राहकचित्तधारा भगवद्ग्राहकस्य चित्तस्य वृत्तिरूपा धारा, न त्वित्यादि, न तु धाराभिन्नविज्ञानमात्रमित्यर्थः, न तारतम्यमित्यादि, तथा च पूर्वोक्तरीत्या यत्रोभयोर्भावसाम्यं तत्राविशेष एव, यत्र तु भावे न्यूनाधिकभावस्तत्र भक्तानामन्तर्बहिःप्राकट्ये च तरतमभावो न तु पूर्वोक्तयोरित्यर्थः ॥ ११ ॥ ४ ॥

॥ इति चतुर्थप्रथमे चतुर्थाधिकरणम् ॥ ४ ॥

आप्रायणात् तत्रापि हि दृष्टम् ॥१२॥ अधिकरणान्तरमवतारयन्त्युक्तेर्थ इत्यादिना,उक्तेर्थे बहिःप्राकट्यरूपेर्थे, अन्तःप्राकट्यवतोन्तर्भगवत्प्राकट्यवतो भक्तस्य, बहिःसंवेदने बहिःप्रकटस्य भगवतो भक्तानुभवे, पूर्वानुभूतेति, तदा बहि.प्रकटानुभवकालेपि, संशयमुक्त्वा पूर्वपक्षमाहुस्तत्रेत्यादिना, तत्र बहिःप्रकटे, वैलक्षण्यात् पूर्वोत्तरकालसम्बन्धकृतवैलक्षण्यात्,तन् मर्यादीकृत्यान्तःप्रकटभगवदनुभवं मर्यादीकृत्य,सैवावस्थान्त.प्रकटानुभवरूपावस्था, ततः सर्वदानुभवतः, तत्रान्त.प्रकटे, अन्यथा पुष्ट्यङ्गीकाराभावे, पूर्वोक्तभावसम्पत्तिरन्तर्बहिःप्रकटानुभवरूपा, एतच्च सर्वदा भगवदनुभववत्त्वं च, 'तद्भूतस्य' भगवन्तं प्राप्तस्य, 'नातद्भावो' न तत्प्राप्तिविच्छेदः ॥ १२ ॥ ५ ॥

॥ इति चतुर्थप्रथमे पञ्चमाधिकरणम् ॥ ५ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ अधिकरणमवतारयन्ति पुष्टीत्यादिना, तस्य भक्तस्य,तत्र तु मर्यादाभक्तिमार्गे तु,मोक्षो भवति 'ज्ञानादेवे'तिवाक्यान् न भवति दुरितस्य प्रतिबन्धकत्वेन ज्ञानानु-

---

१. फलं तन् मर्या° बपा । २. अनुक्त °बपा ।

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावादेवोत्तराघस्याश्लेषोसम्बन्धः पूर्वस्य तस्य विनाशो भवतीत्यर्थः, अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थस्तस्यात्मन्येवोत्पत्तेस्तदतिरिक्तस्य श्लेषस्याभावादतोनुत्पत्तिरेवार्थः, न चैवं मर्यादामार्गीयत्वभङ्गः, साधनं विना स्वस्वरूपबलेनैव कार्यकरणे हि पुष्टिः, इह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथासम्पत्तेः, अत एव (छान्दो. ७.२४.३.) "तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति श्रुतिरग्निदृष्टान्तमाह, स्मृतिरपि (भगवद्गीता.४.३७.) "यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"ति (बृह. ६.४.२३.) "सर्वं पाप्मानं तरति" (तै. सं. ५.३.१२.) "तरति ब्रह्महत्यां योश्वमेधेन यजत" इत्यादिश्रुतिभ्यस्त्वयापि न तद्भोगनियमो वक्तुं शक्यः, एतेनाभुक्तस्याक्षयाद् भोगे च कर्मान्तरजननान् मोक्षासम्भव इति निरस्तं वेदितव्यं, न चान्योन्याश्रयः, अनाद्यविद्याजनितसंसारवासनात्मिका हि सा, सा च गुरूपसत्तिश्रवणमननविष्णूपासनादिरूपया[1] ज्ञानसामग्र्यैव नाश्यते, अविद्या परं ज्ञानेन नाश्यत इति क्व तत्प्रसङ्गः ? ज्ञानसामग्र्या बलिष्ठत्वात् कर्मणो दुर्बलत्वान्न तत्प्रतिबन्धकत्वमिति[2] ज्ञाननाश्यत्वबोधक[3]श्रुतिश्रुतिमता[4] त्वयाप्यूरीकार्य, इममेव हेतुमाहाचार्यस्तद्व्यपदेशादिति ॥ १३ ॥

पापस्य[7] शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम धर्मस्यातथात्वेनाविरोध एवेत्याशङ्कानिरासाय पूर्वन्यायातिदेशमाह ।

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

इतरस्य पुण्यस्याप्येवं पूर्वस्य नाश उत्तरस्याश्लेष इत्यर्थः, अतिदेशाद्धेतुरपि स एव ज्ञेयः, तथा हि(बृह.६.४.२२.) "उभे उँ[5] हैवैष[6] एते तरति" (मुण्ड.२.२.८.) "क्षीयन्ते चास्य कर्माणी"ति सामान्यवचनाज् (भग. ४.३७.) "ज्ञानाग्निः सर्वकर्माणी"तिस्मृतौ 'सर्व'शब्दाच्च तथा, अथेदं शङ्क्यते, मर्यादामार्गीयत्वाज् ज्ञानानन्तरं भरतवत् सङ्गदोषेण भगवद्भावाच् च्युतौ सङ्गजदोषोत्पत्तिवदग्रे विहितनिषिद्धकर्मणोरप्युत्पत्तिर्वक्तुं शक्येति ज्ञानस्य न सर्वात्मना कर्मविरोधित्वमिति, तत्र निर्णयमाह पाते, भक्तिमार्गे भगवद्भावाच्युतिः पात इत्युच्यते, तुरप्यर्थे, अपिशब्दे वाच्ये व्यवच्छेदार्थकतुशब्दोक्त्यास्मिन् मार्गे पातस्य व्यवच्छेद एव, (श्रीमद्भाग.३.२५.३८.) "न कर्हिचिन् मत्परा" इति—

---

दयादितिसंशयमुद्घाटयन्ति तच्चेत्यारभ्य यत इत्यन्तेन, तत्सन्तानो भोगानुकूलकर्मसन्तानः, सर्वस्य मर्यादामार्गीयस्य, तद्वत् तस्य प्रायश्चित्तवज् ज्ञानस्य, तदुद्देशेन पापनाशोद्देशेन, अन्योन्याश्रयमुपपादयन्ति दुरितस्येत्यादिना, तथा च दुरितनाशे सति ज्ञानोदयो ज्ञानसत्त्वे च दुरितनाश इतिस्थितावन्योन्याश्रय इतिभावः, पूर्वपक्षमाहुरतो मर्यादेत्यादिना, अनुक्तिविषया वक्तुमयोग्येत्यर्थः, सिद्धान्तमाहुः सूत्रेण तदधिगम इत्यादिना, आत्मन्येवोत्पत्तेरिति, तथा चाश्लेषो बाधितः स्यादितिभावः, तदतिरिक्तस्यात्मन्युत्पत्त्यतिरिक्तस्य, एवं ज्ञानेन भोगातिरिक्तप्रारब्धनाशाङ्गीकारे, इह तु ज्ञानेन प्रारब्धनाशाङ्गीकारे तु, तथासम्पत्तेः पूर्वोत्तराघयोरसम्बन्धसम्पत्तेः, अत एव ज्ञानस्योक्तसामर्थ्यवत्त्वादेव, एतेन श्रुतिस्मृतिभ्यां ज्ञानस्य प्रारब्धनिवर्तकनिर्वचनेन, सा च दुरितसन्ततिश्च, तस्याः कारणीभूतवासनात्मता कार्यकारणयोरभेदेनोक्ता, तत्प्रसङ्गोन्योन्याश्रयप्रसङ्गः ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥ सूत्रमवतारयन्ति पापस्येत्यादिना, शास्त्रविरोधित्वेन शास्त्रनिषिद्धतया निर्वचनेन, शास्त्रीयज्ञानेन पापनाशकतया शास्त्रोक्तं यज् ज्ञानं तेन, विरोधो नाश्यनाशकभावेन सहानवस्थानलक्षणो विरोधः, अतथात्वेन ज्ञाननाश्यतया शास्त्रेनुक्तत्वेनानिषिद्धत्वेन च ज्ञानेन सह सहानवस्थानलक्षणविरोधासम्भवेन, अविरोध एव धर्मे ज्ञाननाश्यत्वासम्भव एव, इत्याशङ्केति, पूर्वधर्मस्यानाशो ज्ञान उत्तरधर्मस्य च संश्लेष इत्याकारिका शङ्केत्यर्थः, पूर्वन्यायातिदेशं ज्ञानेन पूर्वधर्मस्य नाश उत्तरस्य चासंश्लेष एवंविधावस्थानीयातिदेशमित्यर्थः, हेतुरपि पूर्वे धर्मनाश उत्तरस्यासंश्लेषे हेतुरपि, स एव ज्ञानमेव, उभे इत्यादि, उभे एते पुण्यपापे, एष

---

१. °विध्यु° बपागो । २. तत्तत्प्रति° कं । ३. ज्ञानानाश्वास° कं । ४. श्रुतिस्मृति° कबपा । ५. उररी° बपा । ६. उभे है° ब, उभे ह्येवैष प्र । ७. पापस्य कबपायो ।

वाक्यात्, परन्तु मर्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत् तथा करोति, तद्भावे पूर्णे सति तद्भोगो-सम्भावित इति, तदेवं भवतीति व्यासाभिप्रायो ज्ञायते, तथा च तस्मिन् सत्यप्युत्तरस्य कर्मणोऽसंश्लेष एवेत्यर्थः, पूर्वसूत्र एवमेवाश्लेषशब्दस्य व्युत्पत्तेः, अतिदेशस्यैवम्पदेनैव प्राप्तेः सर्वं सूत्रं तत्परत्वेनं न व्याख्येयं, पातशब्दस्य देहपातं तुशब्दस्यावधारणमर्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थ इति चोक्तिर्न साधीयसी, मुक्तिप्रापकपदाभावाद् (ब्र.सू. ४.१.१९.) "भोगेन त्वितरे क्षपयित्वाथ सम्पद्यत" इत्यग्रे वक्तव्यत्वाच्च ॥ १४ ॥

ननु देहस्य कर्मजन्यत्वात् तन्नाशे तन्नाशस्यावश्यकत्वाद् ब्रह्मविदः प्रवचनानुपपत्तिः, एवं सति ब्रह्मजिज्ञासोर्गुरूपसत्त्यादिसाधनासम्भव (छान्दो. ८. १४. २.) "आचार्यवान् पुरुषो वेदे"तिश्रुतेस्तदभावेन ज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसङ्ग इत्याशङ्क्य समाधत्ते ।

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वे पूर्वसूत्राभ्यां ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्ये ते नाशेषे किन्त्वनारब्धं[4] भोगायतन-लक्षणं कार्यं याभ्यां त एवेत्यर्थः, नन्वितरनिरपेक्षं हि ज्ञानं स्वशक्त्यैवाग्निरेध इव कर्माणि दहतीति पूर्वमुक्तं, तथा सत्यशेषमेव तद् दहतीति वक्तुं युक्तं न तु सशेषं, शक्तेरविशिष्टत्वात्, न च कर्मनाशेपि संस्कारवशात् कुलालचक्रभ्रमिवत् तद्वासनावशाद् देहादिसत्तया प्रवचनाद्युपपत्ति-रिति वाच्यं, ज्ञानस्य सर्वतो बलवत्त्वात् सवासनस्य तस्य नाशनात्, न हि महाशिलानिपाते चक्र-भ्रमिरनुवर्तितुं शक्नोतीत्याशङ्क्यारब्धकार्यादहने हेतुमाह तदवधेः, तज् ज्ञानेनारब्धकार्यादहनं यत् तदखिलकारणकारणत्वेनाखिलस्य पूर्वावधिरूपभगवदिच्छालक्षणाद्धेतोरित्यर्थः, यत्र तस्यापि दहनेच्छा तत्र तथैवेतिनिगूढाशयः, अत एवाग्रे तथा वक्ष्यते, अत एव श्रीभागवते(भाग.५.८.२६.) "मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशित" इति, उपभोगेन (भाग.५.१०.१४.)

ब्रह्मज्ञानी, तरति नाशयति, विति निश्चयेन, ह इति प्रसिद्धावित्यर्थः, सामान्यवचनात् सुकृतदुष्कृतसाधारण-कर्मपदोपादानात्, तथा पुण्ये ज्ञाननाश्यत्व, पाते त्वितिसूत्रभागमवतारयन्त्यथेत्यादिना, मर्यादेत्यादि, ज्ञानस्य मर्यादामार्गीयत्वादित्यर्थः, अस्मिन् मार्गे 'न कर्हिचि'दितिवाक्यं तृतीयस्कन्धे कापिलं "न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेनिमिषो लेढि हेतिर्येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्ट"मिति भक्तानां पाताभाव-बोधकं, तथा करोति भक्तिफले किञ्चित्प्रतिबन्धं करोति, कुत इत्याकाङ्क्षायामाहुस्तद्भाव इत्यादि, यतो भक्तिभावे पूर्णे सम्पन्ने सति प्रारब्धभोगो बाधितः स्यादत इत्यर्थः, एवं भवति मध्येन्यासक्त्या भरतवज् जन्मादिव्यवधानं भवति न तु पात इत्यर्थः, व्यासाभिप्रायो ज्ञायते भरतादिषु महत्सु तथादर्शनाज् ज्ञायत इत्यर्थः, तस्मिन् सत्यपि भरते पूर्वप्रारब्धभोगे सत्यपि, असंश्लेष एव जीवन्मुक्तावस्थाया ब्राह्मणशरीरदशायां विद्यमानत्वादसंश्लेष एवेत्यर्थः, एवमेवानुत्पत्तिरूपार्थकत्वेनैव, एवम्पदेन सूत्रस्थैवम्पदेन, तत्परत्वेनातिदेशपरत्वेन, तथा च पाते त्वेत-दर्थे नातिदेश इत्यर्थं, दूषयितुं कस्यचिन्मतमुपन्यस्यन्ति पातशब्दस्येत्यादिना, मुक्तीत्यादि, सूत्रे मुक्तिबोधकपदा-भावादित्यर्थः, अग्र इत्यादि, तथा चैतत्सूत्र एवंव्याख्यानेग्रिमसूत्रवैयर्थ्यमित्यर्थ. ॥ १४ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ सूत्रमवतारयन्ति नन्विति, तन्नाशे तन्नाशस्य ज्ञानेन कर्मनाशे देहनाशस्य, प्रवचनानुपपत्तिर्ब्रह्मोपदेशानुपपत्तिः, तथा च ब्रह्मज्ञानात् पूर्वं तस्योपदेशे योग्यतैव न स्थिता ज्ञाने जाते तु तस्य सद्योदेहपातात् प्रवचनानुपपत्तिरित्यर्थः, ब्रह्मजिज्ञासोः शिष्यस्य, तदभावेनाचार्याभावेन, सूत्रेण समाधानमाहुः पूर्वे इत्यादिना, कार्यं शरीररूप, तथा च प्रारब्धकार्ये ये पुण्यपापे सकार्ये तदतिरिक्तयोः सञ्चितक्रियमाणयो-रेव पुण्यपापयोर्ज्ञानेन नाश इति नोक्तानुपपत्तिगन्धोपि ब्रह्मविद्योपदेशकस्य सत्त्वात्, प्रारब्धकार्ययोरदहन उक्तस्य तद-वधेरितिहेतोरुपपादनं कर्तुं पूर्वपक्षमाहुर्नन्वित्यादि, पूर्वमुक्तं 'ज्ञानाग्नि'रित्यादिना सामान्यग्रहणेनोक्तमित्यर्थः, तथा सति सामान्योपादाने कृते सति, सशेषं प्रारब्ध परिरक्ष्य, अविशिष्टत्वाज् ज्ञानशक्तेरशेषनाशसामर्थ्यात्, देहादि-सत्तया ब्रह्मविदो देहादिसत्तया, तस्य सकार्यप्रारब्धस्य, यत्र तस्यापि भक्तविशेषे कार्यप्रारब्धस्यापि, अग्रेतोन्या-

१. परत्वेन व्या° क। २. °त्वाच्च बपा। ३. भक्त्य° बप्र। ४. °रब्धभोगा° कैगो।

"कर्मारब्धं व्यपनयन्नि"ति च भरतं प्रति वचनं गीयते, एवं सति मणिमन्त्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यं, इच्छाप्रतिबद्धतादशायां न प्राचीना दशास्तीति तद्व्यवच्छेदज्ञापनाय तुशब्दः, एतेन भगवद्भावस्य सर्वतो बलवत्त्वात् 'कथं तस्य पात' इतिशङ्का निरस्ता, भगवदिच्छाया मूलकारणत्वेनोक्तेस्तस्याः सर्वतो बलिष्ठत्वात्, तथेच्छा च स्वकृतमर्यादापालनाय पुष्टावङ्गीकृते न तथेति सर्वमनवद्यम् ॥ १५ ॥

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोग एव कर्तव्यो ब्रह्मविदा न तु विहितमन्यदप्यग्निहोत्रादि प्रयोजनाभावात्, दृश्यते च तादृशानां तत्करणमत उत्तरस्य कर्मणः संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह ।

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

तुशब्दः शङ्काव्युदासकः, अग्निहोत्रादि विहितकर्मकरणं तत्कार्यायैव भोगकार्याय प्रारब्धनाशायैवेत्यर्थः, येषामग्निहोत्रादिकारकं प्रारब्धमस्ति तैरेव तन्नाशाय भोगवत् तदपि क्रियते न त्वतादृशैरत एव न सनकादीनां तथात्वं, कुत एतत्? तद्दर्शनात् (बृह. ६. ४. ५.) "यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेने"तिश्रुतिः पूर्वकर्मणोऽग्रिमकर्महेतुत्वं दर्शयतीति नानुपपत्तिः काचित् ।

केचित् तु 'ज्ञानस्य यत् कार्यं तदेवाग्निहोत्रादे'रिति तत्कार्यायेतिपदस्यार्थं वदन्ति, स न साधुः, (ब्र. सू. ४. १. १३.) "तदधिगम" इत्युपक्रमाद् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्वज्ञानेनैव सम्पत्तेः कर्मणो वैयर्थ्यापातात्, (बृह. ६. ४. २२) "तमेतं वेदानुवचनेने"त्यादिश्रुतिदर्शनं'दर्शन'पदार्थ इत्यपि पूर्वविरोधादुपेक्ष्यः, तदेवं पूर्वसूत्रचतुष्टयेन मर्यादामार्गीयभक्तस्य मर्यादयैव मुक्तिप्रतिबन्धसम्भवस्तयैव तन्नाशश्चेति निरूपितम् ॥ १६ ॥ ६ ॥

॥ इति चतुर्थाध्याये प्रथमपादे षष्ठं तदधिगम इत्यधिकरणम् ॥ ६ ॥

अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते, तत्र भोगैकनाश्यस्वभावत्वात् तस्य न तं विनास्यापि तन् नश्यतीति प्राप्ते निर्णयमाह ।

---

पीतिसूत्रे, अत एव ज्ञानेन प्रारब्धान्यस्य नाशादेव, इच्छाप्रतिबद्धतेच्छया प्रारब्धनाशे प्रतिबद्धता, प्राचीना प्रारब्धस्य सञ्चिततुल्यतया नाशप्रतियोगित्वरूपा, तद्व्यवच्छेदः प्रारब्धव्यवच्छेद इत्यर्थः, एतेन प्रारब्धनाशे भगवदिच्छया प्रतिबन्धकत्वनिर्वचनेन, तस्य भक्तस्य, पातः प्रारब्धानाशेन फलविलम्बरूपो यथा भरतादेः, स्वकृतमर्यादा प्रारब्धकर्मणां भोगादेव क्षय इत्येवम्रूपा, पुष्टावङ्गीकृतेजामिलादौ, न तथा न प्रारब्धभोगनाश्यत्वम् ॥ १५ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, प्रयोजनाभावादग्निहोत्रादीनामभोगरूपत्वेन प्रारब्धनाशकत्वासम्भवात्, तादृशानां ब्रह्मविदां जनकवसिष्ठादीनां, तदग्निहोत्रादि, कर्मण. सकार्यस्याग्निहोत्रादेः, सूत्रं विवृण्वन्ति तुशब्द इत्यादिना, शङ्काग्निहोत्रादे. प्रारब्धभोगातिरिक्तत्वशङ्का, तैरेवेत्यादि, अग्निहोत्रादिभिरेव प्रारब्धनाशायेत्यर्थः, अतादृशैरग्निहोत्रजनकप्रारब्धशून्यैः, पूर्वकर्मणः प्रारब्धरूपस्य, मतान्तरमुद्घाट्य दूषयन्ति केचित्त्विति, कार्यं मोक्षरूपं, स केनचिदुक्तोर्थः, तदधिगम इत्यादि, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशा'दितिसूत्रमुपक्रम्येत्यर्थः, दर्शनपदार्थः सूत्रे तद्दर्शनादित्यस्यैतच्छ्रुत्युक्ताग्निहोत्रादिकमर्थः, पूर्वविरोधात् तदधिगमसूत्रविरोधात्, कर्मणो विविदिषायामुपक्षीणत्वेन ज्ञानफलकत्वासम्भवादित्यपि दूषणम् ॥ १६ ॥ ६ ॥

॥ इति चतुर्थप्रथमे षष्ठाधिकरणम् ॥ ६ ॥

## अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥

एकेषां पुष्टिमार्गीयाणां भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति, कुत एतत्? तत्राहातः, श्रुतेः कर्मणो ज्ञाननाश्यत्वनिरूपिकायाः, ब्रह्मविद एव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्माक्षेपकश्रुतेश्चान्यापि श्रुतिः पठ्यते, (शाट्या. ) "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति, ज्ञानभोगाभ्यां कर्मनाशनिरूपकश्रुत्यास्याः श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्यः, न च 'काम्यकर्मविषयेयं श्रुति'रिति वाच्यं (ब्र. सू. ४. १. १३.) "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशा"विति सूत्रेणे"तरस्याप्येव"मितिसूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्मणोरखिलयोर्नाशनिरूपणात्, पापकृत्यायां काम्यत्वासम्भवाच्च, तस्मादत्यनुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवानस्य प्रारब्धमेतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति, प्रारब्धं भोगैकनाश्यमितिस्वकृतमर्यादापालनाय न नाशयति, न च तयोरमूर्तत्वेनाकृताभ्यागमप्रसङ्गेन च नैवं वक्तुमुचितमिति वाच्यं, ईश्वरत्वेनान्यथापि करणसम्भवात्, मर्यादाविपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचनात्रानुपपत्तिर्भावनीया, तस्या अत्र भूषणत्वात्, अत एवैकेषामिति दुर्लभाधिकारः सूचितः ।

ननु (छान्दो. ३. १. १०.) "यदेव विद्यया करोती"तिश्रुत्या विद्यापूर्वकं कर्मकरणे वीर्यातिशयः फलं श्रूयतेतो ब्रह्मविद्यावतोपि तथात्वस्योचितत्वादुत्तरस्याश्लेष इति यदुक्तं तन्नोपपद्यत इति प्राप्त आह यदेवेति ।

## यदेव विद्ययेति हि ॥ १८ ॥

हि यस्माद्धेतोस्त्वया (छान्दो. ३.१.१०) "यदेव विद्यया करोति श्रद्धयोपनिषदे"तिश्रुतिरेव ब्रह्मविदोपि कर्मोत्पत्तिप्रसञ्जिकात्वेनोदाहृता सा तु न तत्समर्था, तथा हि ( छान्दो. ३.१.१. ) "ओमित्येतदक्षरमुद्गीथमुपासीते"त्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वमनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वं च निरूप्यैतदग्रे "यदेव विद्यये"त्याद्युक्त्वे"ति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती"त्युपसंहारादुद्गीथोपासनाविषयमेव "यदेव विद्यये"तिवाक्यमिति ज्ञायते, तेनोक्तरसतमत्वादिप्रकारकोपासनानां मध्ये "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति तदर्थ इति न ब्रह्मविद्यागन्धोपीति न सा शङ्कात्र सम्भवतीत्यर्थः ।

---

अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥ अधिकरणमवतारयन्ति तदेवमित्यादिना, मर्यादयैव भोगरूपयव, पूर्वपक्षमाहुस्तत्रेत्यादिना, तस्य प्रारब्धरूपप्रतिबन्धस्य, तं विना भोगं विना, अस्यापि पुष्टिभक्तस्यापि, तत् प्रारब्धं, सूत्रेण सिद्धान्तमाहुरेकेषामित्यादिना, प्रवचनादिनिरूपणेन प्रवचनान्यथानुपपत्त्येत्यर्थः, तदनाश्यं ब्रह्मज्ञानानाश्यं, कर्माक्षेपकश्रुतेर्भोगेन प्रारब्धनाशबोधकश्रुतेः, श्रुतिः शाट्यायनिनां श्रुतिः, विषयभेदः पुष्टिमर्यादाभक्तभेदरूपः, नाशनिरूपणाज् ज्ञानेन नाशनिरूपणात्, एतत्सम्बन्धिगतं पुष्टिभक्तसम्बन्धिपुत्रमित्रारिगत, तस्य प्रारब्धस्य, तेन भक्तसम्बन्धिना, तयोः पुण्यपापरूपप्रारब्धयोः, तस्या अमर्यादायाः, अत्र पुष्टिमार्गे, सर्वमोचकस्य ब्रह्मणो विभक्तैर्बन्धनकरणादितिभावः ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, तथात्वस्योत्तरकर्मश्लेषस्य, नोपपद्यत इति, तथा चाश्लेषप्रतिपादकानि वाक्यानि विद्यास्तावकानि न तु स्वार्थे प्रमाणभूतानीत्यर्थः, न तत्समर्था ब्रह्मविदो नोत्तरकर्मसंश्लेषसम्पादिका, इति ज्ञायते वाक्यप्रमाणाभ्यां ज्ञायत इत्यर्थः, तेन न विद्यास्तुत्यर्थत्वमस्येतिभावः, श्रद्धोपनिषद्भ्यां समानत्वाद् विद्यायां सङ्कोचे मानाभाव इत्यरुच्या पक्षान्तरमाहुर्यद्वेत्यादि, उक्ताशङ्केति, ब्रह्मविद्युत्तराघसंश्लेषस्य

यद्वोक्ताशङ्कानिरासायैवाह यदेवेति, ब्रह्मविद्धि प्रारब्धक्षययैव कर्म कुरुते तत्त्वन्यकृतात् कर्मणः सकाशात् सवासनतन्नाशनाद् वीर्यवत्तरं भवत्येवेति नानुपपत्तिः काचिदित्यर्थः ।

यद्वा ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं विनैव नाश इति श्रुत्वासम्भावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारमाह यदेवेत्यादि, जीवनिष्ठा विद्या हि भगवज्ज्ञानशक्तेरंशभूता, एवं सति यत्र धर्मसम्बन्धिसम्बन्धादन्येभ्योतिशयं कर्मणि वदति श्रुतिस्तत्र साक्षाद्धर्मिसम्बन्धेतिशयितकार्यसम्पत्तौ कथमसम्भावना कर्तुमुचितेतितिनिगूढाशयः, अत एव हेतुवाची हिशब्दः ।

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिप्रकारमाह ।

**भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥**

इतरेग्रे प्राप्यालौकिकदेहाद् भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य, अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं, भोगेन सम्पद्यते (तै. ब्र.) "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"तिश्रुत्युक्तेन भोगेन सम्पद्यत इत्यर्थः, श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः, अलौकिकत्वं विनोक्तदेहं विना चोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ॥ १९ ॥ ७ ॥

॥ इति चतुर्थाध्याये प्रथमपादे सप्तममतोन्यापीत्यधिकरणम् ॥ ७ ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥

---

शङ्केत्यर्थः, सवासनतन्नाशनात् सवासनप्रारब्धनाशकत्वात्, नानुपपत्तिरिति, तथा च यथाश्रुतार्थतयैव विद्यास्तावकत्वं कल्पनीयमित्यर्थः, एतत्सूत्रस्य प्रयोजनान्तरमप्याहुर्यद्वेत्यादि, एवं सति जीवनिष्ठविद्याया भगवज्ज्ञानशक्त्यंशत्वे सति, धर्मसम्बन्धिसम्बन्धाद् धर्मो भगवज्ज्ञानशक्तिरूपस्तत्सम्बन्धिजीवनिष्ठा विद्या तत्सम्बन्धादित्यर्थः, अन्येभ्यः कर्मभ्य इत्यर्थः, कर्मणि ब्रह्मविद कर्मणि, तत्र साक्षाद्धर्मिसम्बन्धे भगवति ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥ सूत्रमवतारयन्ति पुष्टीत्यादिना, उक्तदेहं लीलोपयोगिदेहम् ॥ १९ ॥ ७ ॥

इति चतुर्थप्रथमे सप्तमाधिकरणम् ॥ ७ ॥

॥ इति श्रीवल्लभजीसुतगोस्वामिश्रीगोपालजीकृतेणुभाष्यपदप्रदीपे चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

# ॥ अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

पूर्वपादे लौकिकशरीरे क्षपयित्वालौकिकं तत् प्राप्य फलेन सम्पद्यत इति निरूपितं, अथात्रेदं चिन्त्यते, भक्तस्य सूक्ष्मशरीरस्य क्षपणं नाम किं तत्स्वरूपनाशनमुत मणिस्पर्शादयश्चामीकरत्वमिव तस्यैवालौकिकत्वसम्पादनं भगवदनुग्रहादिति, तत्रोत्तर एव पक्षः साधीयानिति भाति, तथा हि, यथा पूर्व संसारिण एव जीवस्य तदनुग्रहात् पूर्वावस्थापगमो मुक्त्यवस्था चोच्यते तथात्रापि वक्तुं शक्यत्वात्[1], (बृ. ६. ४. ६.) "न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त[2]" इतिश्रुतिस्तु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथैवाह, अत एवाग्रे (बृ. ६. ४. ६.) "ब्रह्मैव सन् ब्रह्माप्येती"त्युच्यते, पुष्टिमार्गीयस्योक्तमुक्त्यभावान्नेयं तद्विषयिणीति प्राप्ते प्रतिवदामः, ब्रह्मांशत्वेन जीवस्यानन्दात्मकत्वान्निर्दोषस्वरूपत्वान्नित्यत्वाच्च दोषाणां[3] चागन्तुकत्वात् तदपगमे तस्य तथात्वमुचितं प्राणादयस्तु न तादृशा इति तद्दृष्टान्तेनात्रापि तथात्वं न वक्तुं शक्यं, (श्रीमद्भाग.७.१.३४.)"देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना"मितिश्रीभागवतवाक्याच्च, न च लौकिकत्वविशिष्टदेहादिरत्र निषिध्यत इति वाच्यं, सामान्यनिषेधे बाधकाभावात्, न च तदनुभव एव बाधक इति वाच्यं, भगवत इव तदीयानामपि तेषां तथात्वे बाधकाभावात्, नन्वागन्तुकत्वमेव बाधकमिति चेन् मैवं, यथा र्व्यापिवैकुण्ठस्या[4]क्षरात्मकत्वेनानागन्तुकत्वेन नैसर्गिकतद्गताखिलवस्तुरूपत्वेन सामीप्यादिमुक्तिं प्राप्नुवतां भक्तानां देहेन्द्रियादिरूपमप्यनागन्तुकमेव वैकुण्ठप्राप्तिमात्रेण[5] शुद्धजीवानां सम्पद्यते, तदीयत्वेन तत् फलतीति यावत्, तथा पुरुषोत्तमलीलाया अपि पुरुषोत्तमात्मकत्वात् तत्राङ्गीकारमात्रेण प्राचीनाशेषप्रावाहिकधर्मनिवृत्तौ शुद्धजीवस्य पुरुषोत्तमलीलात्मकदेहादिरपि तदीयत्वेन सम्पद्यत इति नानुपपन्नं किञ्चिदित्यवहितोवेहि, अयमेवार्थो वाजसनेयिशाखाया (बृह.६. ४. ६.) "मथाकामयमान" इत्युपक्रम्या"त्मकाम आप्तकामो भवति न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीर्यन्ते[6] ब्रह्मैव सन्

---

वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ पूर्वपाद इत्यादिना द्वितीयपादेन सहोपोद्घातसङ्गतिं प्रदर्शयन्तो द्वितीयपाद निरूपयन्ति पूर्वेत्यादिना, लौकिकशरीरे स्थूललिङ्गशरीरे, तच्छरीर, अथ प्रथमचरणनिरूपणानन्तर, इदं वक्ष्यमाण, सूक्ष्मशरीरस्य लिङ्गशरीरस्य, पूर्वावस्था ससाररूपा, मुक्त्यवस्था विद्योत्तरावस्था, तथात्रापि पुष्टिमार्गीयभक्तेपि, वक्तुं शक्यत्वात् स्पर्शमणिन्यायेन लौकिकावस्थां त्यक्त्वालौकिकत्वस्य वक्तुं शक्यत्वात्, तथैवाह भगवति सायुज्यमाहेत्यर्थः, उक्तमुक्त्यभावात् सायुज्यमुक्त्यभावात्, इति प्राप्ते संशयोत्तरमुक्तो 'यस्तत्रोत्तर एवे'त्यादिपूर्वपक्षस्तस्मिन् प्राप्त इत्यर्थ., तदपगमे दोषाणामपगमे, तस्य पुष्टिभक्तजीवस्य, तथात्वमानन्दात्मकत्वं, न तादृशा न जीववद् ब्रह्मांशा', तद्दृष्टान्तेन जीवदृष्टान्तेन, अत्रापि प्राणेन्द्रियादिष्वपि, तथात्वं 'ब्रह्मैव सन् ब्रह्माप्येती'त्यादिनोक्तं प्राणादीनामानन्दरूपत्वं, तत्र प्रमाणमाहुर्देहेन्द्रियेत्यादिना, तदनुभवो वैकुण्ठवासिनां देहेन्द्रियानुभवः, तदीयानां भक्तसम्बन्धिनां देहेन्द्रियाणा, तथात्व आनन्दरूपत्वे, आगन्तुकत्वमेव देहेन्द्रियादीनामागन्तुकत्वमेव, मर्यादिकमुक्तिदृष्टान्तेन पुष्टिभक्तेः समाधानमाहुर्यथेत्यादि, तद्गतेत्यादि, अक्षरस्वरूपदेहेन्द्रियादिस्वरूपत्वेनेत्यर्थ., भक्तानां मर्यादामार्गीयभक्ताना, शुद्धजीवानां सम्पद्यते पूर्व तिरोहितशुद्धतादशायामाविर्भवतीत्यर्थः, तदीयत्वेन भक्तसम्बन्धित्वेन, तद् देहेन्द्रियादि, तथा प्राप्ताक्षरसारूप्यमर्यादाभक्तवत्, देहादीत्यादिपदेन प्राणेन्द्रियादि, तदीयत्वेन पुष्टिमार्गीयभक्तिमत्त्वेन, सम्पद्यत आविर्भवति, आत्मकामः पुरुषोत्तमकामो न तु मुक्तिकाम इत्यर्थः, आप्तकामः प्राप्तमनोरथः, तस्माद् भक्तदेहात्, अत्रैवान्त.प्रकटे भगवत्येव, ब्रह्मैव सन्नात्मरूप सन्,

---

१. उचितत्वात् सर्वेष्यादर्शा. । २. समवलीयन्ते वपा । ३ वा° ब । ४. वैकुण्ठस्य क । ५. °वै° पुगो ।
६. समवलीयन्ते कवपा ।

ब्रह्माप्येती''त्यन्तेन वाक्येन निगद्यते, अत्र 'प्राण'शब्देन प्राणाः सर्वेन्द्रियाणि चोच्यन्ते, 'आत्मकाम'शब्देन भगवद्वाचकात्मपदग्रहणेन भक्तस्य स्नेहातिशयजनितप्रभुदिदृक्षार्त्यतिशयस्तादृशो जातो येन मरणमेव सम्पद्येत यदि प्रभुप्राकट्ये क्षणमपि विलम्बः स्यादतो भगवत्प्राकट्येनैवात्मस्थितिरिति ध्वन्यते, भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन तद्दर्शनेना'प्तकामो' भवति, ततः साक्षादाश्लेषादिकामनायां प्राचीनदेहप्राणादेस्तदयोग्यत्वात् 'ते तत्रैव लीना भवन्ति', बहिःप्रकटस्यैवान्तरपि प्राकट्यादुत्क्रमणाभाव उच्यते, आत्मातिरिक्तस्य गतिमुक्त्वा तस्य तामाह 'ब्रह्मैव सन् ब्रह्माप्येती'त्यनेन, उक्तरीत्या पुरुषोत्तमात्मकतल्लीलोपयोगिदेहेन्द्रियादिसम्पत्त्या 'ब्रह्मैव सन्' न तु ब्रह्मातिरिक्तदेहादिमानपि, तादृशः सन् 'ब्रह्म' बृहत्त्वाद् बृंहणवृत्त्वात् पुरुषोत्तमस्वरूपं प्राप्तो भवतीत्यर्थः, अन्यथा जीवस्य ब्रह्मांशत्वेनानन्दांशाविर्भावेन च ब्रह्मत्वे प्राणादिलयोक्त्या तदितरव्यवच्छेदे चानुक्तसिद्धे सति 'ब्रह्मैव सन्नि'ति न वदेत्, अत एवैतदग्रे श्लोकोक्ति (बृह. ६. ४. ७.) 'रथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति, मृतिधर्मवच्छरीरं हि 'मर्त्यं' तद्वत्त्वेन जीवोपि तथोच्यते, तथा चायं पूर्वं तादृश एव, अथ पुष्टिलीलाप्रवेशानन्तर'ममृत' उक्तरूपशरीरवान् 'भवति' ततो'त्रा'स्मिन्नेव शरीर इदं 'ब्रह्म' 'स'म्यग'श्नुते' भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः, भगवान् बादरायण इमामेव श्रुतिं विषयीकृत्य तत्रोक्तप्राणानां लय एकदैवोत क्रमनियमोऽस्तीतिसंशये निर्णयमाह वाङ्मनसीति,

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

तत्र हेतुर्दर्शनादिति, एतदुक्तं भवति, भक्तेः स्नेहात्मकत्वात् तस्य प्रभुप्राकट्यफलकत्वात् तदौत्कण्ठ्ये तस्यावश्यकत्वादयं मां पश्यत्विति प्रभिच्छया तस्मिन् सम्पन्ने चक्षुर्भ्यां मनसा च तद्रूपामृतमनुभवतः स कोप्युत्कटो भावः समजनि येन प्रभुणा सह सर्वेन्द्रियव्यापारकृतीच्छा समभूत्, तत्र तेषामसामर्थ्याद् भगवदानन्दसम्बन्धिमनःसम्बन्धेन तं प्राप्स्याम इति तत्रैव सङ्गतास्तेनानन्देन सम्पन्ना जाताः, अयमेवार्थोऽनेन सूत्रेणाग्रिमेण 'चात एव सर्वाण्यन्वि'तिसूत्रेण निरूप्यते, दर्शनानन्तरमादौ सह सम्भाषणेच्छैव जन्यत इति (छान्दो. ८.८.६.) ''वाङ् मनसि सम्पद्यत'' इति छान्दोग्ये स्फुटोक्तं सम्मत्या चादौ सैवोक्ता, एवं सति वाङ् मनसि सङ्गता सती भगवदानन्देन सम्पद्यत इति सूत्रार्थः सम्पद्यते, दर्शनाभावेपि वेण्वादिशब्दादपि तथा सम्पद्यत इति हेत्वन्तरमाह शब्दाच्चेति ॥ १ ॥

---

अत्रोक्तश्रुतौ, ध्वन्यते 'काम'पदेन ध्वन्यते, तदयोग्यत्वाद् भगवदाश्लेषायोग्यत्वात्, अत्रैवान्तःप्रकटे पुरुषोत्तम एव, लीनाः सायुज्यं प्राप्ता न तु लीलायामुपयुज्यन्त इत्यर्थः, आत्मातिरिक्तस्य प्राणेन्द्रियादेः, तस्यात्मन, तां गतिं, बृहत्त्वात् भक्तात्मनोपि महत्त्वाविर्भावादेः, बृंहणवत्त्वादनेकभगवद्धर्मसम्बन्धेन भक्तस्य बृंहणवत्त्वादित्यर्थः, अन्यथा जीवस्य ब्रह्ममात्र सिध्यति न तु लीलाप्रवेश इत्यर्थकरणे ब्रह्मत्वे सिद्धे सतीत्यर्थः, तदितरः प्राणेन्द्रियातिरिक्तदेहतद्धर्मादिः, अत एव जीवस्य भगवद्भोगावश्यकत्वादेव, तथा च श्लोके 'मर्त्योऽमृतो भवती'त्येव वदेन् न तु 'ब्रह्म समश्नुत' इत्यपि वदेत्, उक्तोर्थो नाभिप्रेतः स्यादित्यर्थः, पूर्वं पुष्टिलीलाप्रवेशात् पूर्वं, तादृश एव मर्त्य एव, उक्तरूपानन्दरूपं, अस्मिन्नेव प्राप्तानन्दमयशरीर एवेत्यर्थः, इदमेवा'प्तकामाप्तकाम'रूपं, उक्तप्राणानां मुख्यप्राणसर्वेन्द्रियाणां, लयः पुरुषोत्तमे लय., सूत्रेण सिद्धान्तमाहुर्वाङ् मनसीती'ति, तथा च प्राधान्येनादौ वाङ्मनसोर्लयः पूर्वं मनसि लीनानामितरेषां प्राणानां मनोद्वारको लय इत्यर्थः, तत्र सौत्रो हेतुर्दर्शनादिति, दर्शनस्य हेतुत्वं व्युत्पादयन्त्येतदित्यादिना, तस्य भगवति स्नेहस्य, तदौत्कण्ठ्ये भक्तोत्कण्ठायां, तस्य प्रभुप्राकट्यस्य,

---

१. °शब्दे भग° पु । २. तत्रे° सर्वेष्यादर्शाः । ३ भवन्तीति बपा । ४. °बृहणत्वात् बपागोवि । ५. प्राप्नोति कश्चिदादर्शे । ६. °लयोक्त्या ब्रह्म बपादादो । ७. नास्त्येतत्पदमन्यत्र क्वापि । ८. तदौत्कव्ये कपुगोवि । ९. स्फुटोक्तेस्संमत्या पु, स्फुटोक्तेस्तं मत्वा रश्मिः ।

## अत एव सर्वाण्यनु ॥ २ ॥

अत एव दर्शनाच्छब्दाच्च हेतोः, सर्वाणीन्द्रियाणि, अनु सान्निध्याद् वाचः पश्चात्, मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्त इत्यर्थः,

केचित्त्वत्र छान्दोग्यस्थं (छान्दो. ८. ८. ६.) "वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया"मितिवाक्यं विषयत्वेनोक्त्वा सूत्रे 'वाक्'पदस्य तद्वृत्तिपरत्वं वदन्ति, 'सम्पत्तिं' तन्नाशं च, तन्न साधीयः, तथा हि 'वाक्'पदस्य वृत्तिपरत्वं चेच्छ्रुत्यभिमतं स्यात् सूत्रकारस्तदा तथैव वदेत्, न तु तत्स्वरूपमेव वाक्यं, तन्निर्णयार्थमेव प्रवृत्ते'र्मुख्यार्थत्यागो लक्षणापत्तिश्च, किञ्चैवं 'मनसी'तिपदवैयर्थ्यं स्याद् विषयवाक्योक्तक्रमत्यागानुपपत्तिश्चेति ॥ २ ॥

## तन् मनः प्राण उत्तरात् ॥ ३ ॥

पूर्वोक्तसर्वेन्द्रियवैशिष्ट्यवन् मनः प्राणे सम्पद्यते न तु केवलं, तत्र हेतुरुत्तरादिति, (छान्दो. ८. ८. २.) "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन् मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयत" इत्युक्त्वा तत्र हेतुमुत्तरेण वाक्येनाह (छान्दो. ८. ८. २.) "प्राणबन्धनं हि सोम्य मन" इति, तस्माद्धेतोस्तथेत्यर्थः ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरो हृदि वा प्रकटे भगवति सम्पद्यत इत्यर्थः, अत्र हेतुरुपगमादिभ्य इति, उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत् ततस्तथेत्यर्थः, आदिपदाद् भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं च, अभ्युपगमे सिद्धे स्नेहादयोऽवश्यं भवन्त्येवेत्याशयेन तदादित्वमुक्तं नोद्देशः कृतः, मर्यादामार्गेऽङ्गीकृतानां तु मुक्तिपर्यवसायित्वेन मुमुक्षुत्वादुत्कटस्नेहासम्भवेन प्रभुप्राकट्यासम्भवात् स्वस्वप्रकृतौ सङ्घातलये शुद्धजीवस्य भगवदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः सम्पद्यत इति बह्वेव तारतम्यमितिनिगूढाशयेनेदमुक्तं, अभ्युपगमाद्यस्तु मुण्डकोपनिषत्सु पठ्यन्ते (मुण्ड. ३. २. ४.) "नायमात्मे"त्युपक्रम्य "यमेवैष वृणुते तेन

---

तस्मिन् प्राकट्ये, इच्छा तादृशभक्तस्य, तेषां लौकिकेन्द्रियाणां, आनन्दसम्बन्धादावानन्दे लीनत्वेन भगवत्सम्बन्धि, मनःसम्बन्धेन मनसि प्रविश्येत्यर्थः, तं भगवन्तं, प्राप्स्याम इतीन्द्रियाधिष्ठातृदेवेच्छा, तत्रैव पुरुषोत्तम एव मनोद्वारा इत्यर्थः, अग्रिमेण चेत्यन्तस्य निरूप्यते इत्यग्रिमेणान्वयः, सम्पद्यतो भगवत्यादौ लीना भवतः ॥ १ ॥

अत एव सर्वाण्यनु ॥ २ ॥ सान्निध्याद् वाच इति, तथा च श्रुतौ 'वाक्'पदमितरेन्द्रियान्तःकरणानामुपलक्षणं, स्वोक्तार्थदृढत्वाय मतान्तरं दूषयितुमाहुः केचिदित्यादि, सम्पत्तिं सम्पत्तिपदार्थं, तन्नाशं वाचो वृत्तिनाशं, तत्स्वरूपं वाक्स्वरूपं, तद् वाक्, वैयर्थ्यमिति, वृत्तिनाशे मनोरूपाधिकरणस्याप्रयोजकत्वान्मनसीत्यस्य वैयर्थ्यमित्यर्थः, नाशेऽधिकरणानपेक्षणाच्छ्रुत्युक्तक्रमानुपपत्तिरित्यर्थः ॥ २ ॥

तन् मनः प्राण उत्तरात् ॥ ३ ॥ 'स यथे'तिश्रुतिश्छान्दोग्ये श्वेतकेतूपाख्यानस्था, तस्माद्धेतोः 'प्राणबन्धन'मितिवाक्याद्धेतोः, तथा सर्वेन्द्रियवैशिष्ट्यवन्मनसः प्राणे सम्पत्तिः ॥ ३ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ अध्यक्षेऽन्तर्यामिणि पुरुषोत्तमे, इदं मर्यादामार्गानुसारेणोक्तं, पुरो हृदीति पुष्ट्यनुसारेणोक्तं, ततोऽनुग्रहात्, तथा विशिष्टप्राणस्य भगवति सम्पत्तिः, आदिपदात् सौत्रादिपदात्, तदादित्वमनुग्रहादित्वं, नोद्देशो न स्नेहादीनामेकैकश उक्तिः कृतेत्यर्थः, स्वस्वप्रकृतौ जीवस्य पुरुषाक्षरादौ भूतानां तत्-

---

१. तस्मि॰ सर्वेष्वादर्शः । २. स्वप्र॰ बपा ।

लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाथ लिङ्गात्, एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे''ति ॥ ४ ॥ १ ॥

॥ इति चतुर्थाध्याये द्वितीयपादे प्रथमं वाङ्मनसीत्यधिकरणम् ॥ १ ॥

उक्तं निगूढमाशयं प्रकटयति ।

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

ननु मर्यादामार्गीयाणामप्येवमेव वागादिलय उतान्यथेतिसंशये निर्णयमाह, तेषां ते भूतेषु लीयन्ते न तूक्तरीत्या भगवति, अत्र प्रमाणमाह तच्छ्रुतेः, (बृह. ५. २. १३.) ''यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयत'' इतिश्रुतेः, न चाविद्विषयिणीयं श्रुतिरिति वाच्यं, (बृह. ६. २. ११.) ''याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातोमृतः शेत'' इतिपूर्ववाक्यात्, न ह्यविदुषः प्राणानामनुत्क्रमः, (बृह. ६. ४. २.) ''तमुत्क्रामन्तं प्राणोनूत्क्रामती''त्यादिश्रुतेः, ननु (बृह. ५.२.३.) ''यत्रास्य पुरुषस्ये''त्युपक्रम्य ''रेतश्च निधीयत''इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यं, यत एतदग्रे ''क्वायं तदा पुरुषो भवती''तिप्रश्ने याज्ञवल्क्यार्तभागाभ्यां विचारितमुत्तरमुच्यते ''तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने''ति, एतेन कर्माश्रयस्तिष्ठतीतिनिर्णयः सम्पद्यते, एवं सति प्राणानुत्क्रमणोक्त्या सङ्घातलयोक्त्या च विद्वद्विषयत्वमत्रावसीयते, यतस्तस्यैवोक्तद्वयं सम्भवति, अग्रिमश्रुत्युक्तकर्माश्रयत्वं चास्मिन् विरुद्धमतः पूर्वोत्तरविरोधाद् विषयानिश्चये प्राप्ते प्रतिवदामः, मर्यादामार्गीयविद्वद्विषयिण्येवेयं श्रुतिरिति, अत एव प्रश्ने ''क्व तदा पुरुषो भवती'' त्येतावतैव चारितार्थ्येपि साधारणपुरुषव्यावृत्त्या मर्यादामार्गीयतत्प्रापक''मय''मिति पदं, तस्यैवोपक्रान्तत्वात् तथाग्रिमविचारितोर्थोपि तद्विषयक एवेति बुध्यस्व, ननूक्तं बाधकमिति चेत्, हन्त श्रुतिशिरःसमाकलितमाकलय, मर्यादामार्गे हि विधिप्राधान्यं, तथैव तन्निर्माणात्, तत्र ह्येवं कृत एवं फलं दास्ये न स्वंकृतेपीति भगवदिच्छा, अतः

---

तन्मात्रादावित्यर्थ, मुक्तिर्भक्तितरतमभावेन तरतमभावापन्ना मुक्ति, तारतम्यमेतन्मार्गापेक्षया पुष्टिमार्गे तरतमभाव इत्यर्थः, इदमुक्तमभ्युपगमादिभ्य इतीदमुक्तमित्यर्थः ॥ ४ ॥ १ ॥

॥ इति चतुर्थद्वितीये प्रथमाधिकरणम् ॥ १ ॥

भूतेषु तच्छ्रुतेः ॥५॥ अधिकरणमवतारयन्ति नन्वित्यादिना, एवमेव यथा पुष्टिमार्गीयाणामित्यर्थः, अन्यथा भूतेषु, निर्णयमाह सूत्रकारो निर्णयमाहेत्यर्थः, इतिश्रुतेर्बृहदारण्यकश्रुतेः, न ह्यविदुषोवस्था उच्यते तमुत्क्रामन्त'मित्यादिना, एतेन पूर्वोक्तरीत्या कर्मविचारणेन, कर्माश्रयः पुण्यापुण्यकर्माश्रित एव पुरुषो भवति न तु ब्रह्माश्रित इत्यर्थः, सम्पद्यते उक्तश्रुतिबलादायातीत्यर्थः, एवं सति सद्योमुक्तिप्रतिपादकपूर्ववाक्यस्य कर्मफलभागप्रतिपादकद्वितीयवाक्यस्य चैकस्मिन् प्रकरणे सत्वे सति, अत्र सद्योमुक्तिप्रतिपादकवाक्ये, तस्यैव सद्योमुक्तस्यैव, उक्तद्वयं प्राणानुत्क्रमणं सङ्घातलयश्चेत्यर्थः, अस्मिन् विरुद्धं मुक्ते विरुद्धं, तत्प्रापकं मुक्तबोधक, तस्यैव मुक्तस्यैव, तथायमितिपदं मुक्तबोधकं, अग्रिमविचारितो याज्ञवल्क्यार्तभागाभ्यां विचारितः, तद्विषयको मुक्तिविषयकः, उक्तं बाधकं

---

१. °न्ति ब। २. °ली° क। ३. °च्छा° बपागो। ४. इत आरभ्य कर्माश्रयत्वं चेत्यन्तं लुप्तं कै. ५ च तस्मिन् सर्वेष्यादर्शाः। ६. तथा तदग्रिम° बपा। ७. तद्विषय कै। ८. °प्राधान्यात् कबपागो। ९. निर्माणात् कैपा। १० त्व० सर्वेष्यादर्शा.।

कर्म प्रधानं, एवं सत्यार्तभागस्यायमाशयः, वागादिरेतोन्तलयेन प्रारब्धस्यापि तदा नाशाच्छुद्धं जीवं विध्यविषयं कदाचित् पुष्टौ प्रवेशयति न वेतिसंशयेन तदायं क्व मर्यादामार्गे एवोत पुष्टावपि प्रवेशितो भवतीतिप्रश्नः, तदास्यार्थस्येश्वरेच्छारीतिमविदुषो दुर्ज्ञेयत्वं जानन्तौ स्वयमेव यदवधारितवन्तौ तदपि रहस्यमिति स्फुटमनुक्त्वा श्रुतिः पर्यवसितमर्थमुक्तवती "तौ हे"त्यादिना, अत्र "कर्म"पदं मर्यादामार्गपरं, तथा च मर्यादामार्ग एव तस्य स्थितिरित्यर्थः सम्पद्यते, मुक्त एव भवतीति यावत्, अत एव तत्प्रशंसापि, यत ईश्वरत्वेन सर्वकरणसमर्थोपि तद्दाने तदपेक्षते, अत्र हेतुत्वेन मर्यादामार्गस्वरूपमुक्तं "पुण्यो वे"त्यादिना ॥ ५ ॥

ननु मर्यादामार्गीयौ भक्तो ज्ञानी च भवत उक्तनिर्णयस्तु ज्ञानमार्गीयविषय एव भक्तं तु तादृशमपि कदाचित् पुष्टावपि प्रवेशयतीत्याशङ्क्य तन्निर्णयमाह ।

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न किन्तूभयोरपि, तत्र हेतुर्दर्शयत इति, यतो याज्ञवल्क्यार्तभागौ ज्ञानिभक्तसाधारण्येन मर्यादानियमं दर्शयत उक्तरीत्या "तौ हे"त्यादिना, अन्यथा प्राकृताङ्गीकारोन्यथा भवेदित्युपपत्तिर्हिशब्देन सूच्यते, पूर्वोक्तपूर्वोत्तरश्रुतिविरोधपरिहारान्यथानुपपत्तिरत्र मूलमिति ज्ञेयम् ।

केचित् 'तूपसंहृतेषु वागादिषु शरीरान्तरप्रेप्सासामयिको जीवः "क्वायं तदा पुरुष" इतिप्रश्नविषय' इति वदन्ति, तन्न साधीयः, (बृह. ६. ४. २.) "तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"तिश्रुतिर्भाविदेहान्तरजीवस्य प्राणानामिन्द्रियाणां च सहैवोत्क्रमणं वदतीति वागादिलयस्य तत्रासम्भवान्नोक्तस्य प्रश्नविषयत्वं वक्तुं शक्यं, पूर्ववाक्ये—"त्रैव समवनीयन्त" इत्युक्तत्वाच्च, अतोस्मदुक्त एव मार्गोनुसर्तव्यः, एतेन 'नायं परविद्यावान् यतोमृतत्वमेव तत्फलमिति तच्च देशान्तरानायत्तमित्युत्क्रमणापेक्षकर्माश्रयत्वं च न स्यात् किन्त्वपरविद्यावांस्तस्यास्तु ब्रह्मलोकावधि फलमिति कर्माश्रयत्वोत्क्रमणादिकं सम्भवती'त्यपि निरस्तं वेदितव्यम् ॥ ६ ॥ २ ॥

॥ इति चतुर्थाध्याये द्वितीयपादे भूतेष्वित्यधिकरणम् ॥ २ ॥

---

कर्माश्रितत्वापत्तिरूपमित्यर्थः, तथैव विध्यधीनतयैव, तत् मर्यादामार्गः, न स्वकृते न पुष्टिमार्गे, विध्यविषयं वेदातीतं, अत्र श्रुतौ, तत्प्रशंसा मर्यादामार्गरूपकर्मकरणप्रशंसा, तद्दाने मर्यादामार्गफलदाने, तदपेक्षते वैधमपेक्षते, अत्र मर्यादामार्गे ॥ ५ ॥

नैकस्मिन् दर्शयतो हि ॥६॥ सूत्रमवतारयन्ति नन्वित्यादि, उक्तनिर्णयो मर्यादामार्गीयस्य वैधमुक्तिनिर्णयः, तादृशं मर्यादामार्गीयं, सूत्रेण समाधानमाहुरेकस्मिन्नित्यादि, प्राकृता मर्यादामार्गीया मर्यादा, अत्र तयोः पुष्टावनङ्गीकारे, स्वसिद्धान्तदृढीकरणाय मतान्तरमुपन्यस्यन्ति केचित् त्विति, उपसंहृतेषु वागादिषु पूर्वशरीरीयवागादिषूपसंहृतेष्वित्यर्थः, सहैव जीवोत्क्रमणेन सहैव, एतेनानुपदोक्तरीत्या शरीरान्तरप्रेप्सासामयिकजीवनिराकरणेन, इदं चाग्रे निरस्तमित्यनेनान्वेति, अयं 'क्वायं तदा पुरुष' इतिश्रुत्युक्तो जीवः, तत्फलं परविद्याफलं, तच्चामृतत्वरूपं फलं च, देशान्तरानायत्त 'मिहैव समवनीयन्त' इतिश्रुतेरित्यर्थः, न स्यात् तस्य जीवस्य श्रुत्युक्तं तन्न स्यादित्यर्थः ॥६॥२॥

॥ इति चतुर्थद्वितीये द्वितीयाधिकरणम् ॥ २ ॥

---

१. तदपि बपा । २. किं कबपा । ३. जानन्ती कबपा । ४. °वती बपा, °वन्ती क । ५ °यो बपा । ६. लुप्तं क । ७. °कृतिः बपा । ८. °ली° बपा ।

'मर्यादापुष्ट्योर्न कदाचिदन्यथाभाव' इति यदुक्तं तत्र हेत्वपेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह **समाने**त्यादि ।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

अत्रायमाशयः, साधनक्रमेण मोचनेच्छा हि **मर्यादामार्गीया मर्यादा, विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा,** तथा सति सदैकरूपत्वं तयोर्युक्तमिति, एतदेवाह, **सृतिः** संसृतिर्जीवानां स्वस्मात् पृथक्कृतानामविद्ययाहन्ताममतास्पदीकरणं तदुपक्रम आरम्भस्तं मर्यादीकृत्य मुक्तिपर्यन्तमुक्तरूपा मर्यादा **समाना** सदैकरूपा, मध्ये नान्यथा भवतीत्यर्थः, एवमेवानुपोष्य व्रतमकृत्वामृतत्वमपि पुष्टिमार्गे **समान**मित्यर्थः, अत्रोपोषणपदमशेषमुक्तिसाधनोपलक्षकम् ॥७॥

एवं प्रासङ्गिकमुक्त्वा प्रकृतं परामृश्यते, (ब्र. सू. ४. ३. ४.) "सोऽध्यक्ष" इतिसूत्रेण पुष्टिमार्गीयभक्तसङ्घातस्य भगवत्येव लय इत्युक्तमग्रिमेण तेन मर्यादामार्गीयभक्तसङ्घातस्य भूतेषु लयमुक्त्वा प्रश्नानन्तरं शुद्धजीवस्य तस्य मुक्तिरेव भवतीति वक्तव्ये सत्या (बृह. ५. २. १३.) "हर साम्य हस्त"मित्यादिना स्वाशयमन्येष्वप्रकटयन्तौ कर्म यन् निरूपितवन्तौ तत् कुत इत्याशङ्क्य तयोराशयं निगूढं प्रकटयति ।

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयाया **अपीते**र्मुक्तेः संसारत्वाभावेपि पुरुषोत्तमभजनानन्दानुभवाभावात् **संसार** इत्येव पुष्टिमार्गे **व्यपदेशो** यतः क्रियतेतस्तदभिसन्धाय तथा रीत्या निरूपणं, अत एव श्रीभागवते श्रीशिववचनं गीयते (श्रीमद्भाग. ६. ७. २८.) "नारायणपराः सर्वे न कुतश्चन बिभ्यति स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन" इति, श्रीभगवद्गीतास्वपि (श्रीमद्भग. ७. १३.) "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी"तिवाक्येन मर्यादामार्गीयभक्तमुक्तेरितरसाधारण्यमुच्यते ॥ ८ ॥

ननु संसारवन् मुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयं तत्त्वं तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापततीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

**पुष्टिमार्गीयं तत्त्वं सूक्ष्मं** दुर्ज्ञेयमित्यर्थः, अत्रायमाशयः, पुष्टिमर्यादामप्यतिक्रम्य पुष्टिपुष्टौ प्रवेशो तत्तत्त्वमनुभवविषयो भवति, नान्यथा, तत्र प्रवेशस्त्वतिदुरापोतिशयितानुग्रहेतरासाध्यत्वादत उक्तेतराज्ञेयमेव तद् भवति, तेषां तु मुक्तिरेव फलं, तस्या

---

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ पुष्टिमर्यादास्थयोरधिकरणद्वयेन श्रुत्वा वागादिक्रमं व्युत्पाद्यैतदधिकरणारम्भो नवभिः सूत्रैः पूर्वोक्तार्थदार्ढ्याय, प्राप्ताशङ्कां निराकरिष्यन्त. सूत्रमवतारयन्ति **मर्यादे**त्यादिना, उक्तं पूर्वाधिकरण उक्तं, तत्र अन्यथाभावाभावे, **वस्तुस्वरूपं** मर्यादापुष्टिमार्गयोः स्वरूपमेव, तयोर्भगवदिच्छयोः, सूत्रार्थमाहु. **सृति**रित्यादिना, तदुपक्रमोविद्यासम्बन्धोपक्रमः, व्रतं साधनानुष्ठानम् ॥ ७ ॥

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ एवं प्रासङ्गिकमित्यारभ्य सूत्रावतरणं बोध्यं, अग्रिमेण 'भूतेषु तच्छ्रुते'रितिसूत्रेण, सूत्रं व्याकुर्वन्ति **तदे**त्यादिना तथा रीत्या निरूपणमित्यन्तं, मुक्तेर्मार्यादिकमुक्तेः ॥८॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥ तद्बोधकानि मार्यादिकमुक्तिबोधकानि, तत् पुष्टिमार्गीयफलं, नन्वित्यारभ्यावतरणं व्याख्यातं, सूत्रं व्याकुर्वन्ति **पुष्टी**त्यादिना, उक्तेतरोत्यनुगृहीतेतरः, तत् पुष्टिमार्गीयं तत्त्वं, तेषां तु

एवेष्टत्वाद् रागिणां स्वर्गादिवत्, इष्टफलाप्राप्तौ हि प्रतारकत्वं, अन्यथा प्रवृत्तिमार्गीयफलबोधिकाया अपि श्रुतेः प्रतारकत्वं स्यात्, इच्छा चाधिकारानुसारिणीति नानुपपन्नं किञ्चिदिति, नन्वेवं-विधार्थास्तित्वे किं मानमित्याकाङ्क्षायामाह प्रमाणत इत्यादि, प्रमाणं श्रुतिः, सा तु (तै. ब्र.) "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने"ति (तै. ब्र.) "एतꣳ ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव"मिति, अत्र पूर्वार्धेन दुर्ज्ञेयत्वमुत्तरार्धेन तत्सत्ता च बोध्यते, अन्यथा मनसोप्यप्राप्यस्य वेदनकथनं विरुद्धं स्यात्, अतो दुर्ज्ञेयत्वेनैव धर्मिग्राहकमानसिद्धं तदित्यर्थः, चकारात् तादृशानामनुभवः परिगृह्यते ॥ ९ ॥

तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचित् श्रूयेत न चैवमतः पूर्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुमाह ।

## नोपमर्देनातः ॥ १० ॥

उपदेशनं तदा स्याद् यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्यात्, यतस्तेषां विरहदशा प्रिय-सङ्गमदशा चेतिदशाद्वयमेव भवति नान्या, पूर्वस्यास्तस्यास्त्वतिदुःसहत्वेन सर्वेषां भावानामुपमर्देन तिरोधानेनोपदेशो न भवतीत्यर्थः, सङ्गमे त्वतः पुरःप्रकटपरमानन्दस्वरूपाद् भगवत एव हेतो-रुपदेशोन्यस्मै न भवतीत्यर्थः, न हि भगवदग्रे तत्[1] सम्भवतीतिभावः ॥ १० ॥

ननु (तै. ब्र.) "रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दीभवती"त्युपक्रम्य "ए ह्येवानन्द-याती"तिश्रुतेरुक्तरूपानन्दप्राप्तौ दुःसहविरहतापोशक्यवचनः, आनन्दतिरोधान एव तत्सम्भवात्, तद्धेतोरसम्भवात्, तत्[2]सम्भवे तु तत्प्राप्तिरेव न स्यादिति प्राप्त उत्तरं पठति ।

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

आनन्दात्मकरसात्मकस्यास्यैव भगवत एव धर्म ऊष्मा विरहताप इत्यर्थः, विरोधपरि-हारायाहोपपत्तेरिति, इदमुक्तं भवति, भगवद्विरहस्य[3] सर्वसाधारणत्वेपि स्थायिभावात्मकरसरूप-भगवत्प्रादुर्भावो यस्य[4] हृदि भवति तस्यैव तदप्राप्तिजस्तापस्तदनन्तरं नियमतस्तत्प्राप्तिश्च भवति न त्वतथाभूतस्येत्यन्वयव्यतिरेकाभ्यामुक्तरसस्यैवैष धर्म इति निश्चीयते, तस्य वस्तुन[5] एव तथात्वात् स तापोपि रसात्मक एव ।

---

मर्यादामार्गीयाणां तु, अन्यथा श्रुत्युक्तफलसाधकत्वेपि श्रुतेः प्रतारकत्वाङ्गीकारे, ननु क्वचिन्मर्यादाफलदानेच्छा क्वचिच्च पुष्टिफलदानेच्छेतीच्छावैषम्ये किं नियामकमित्यत आहुरिच्छेत्यादि, नन्वेवमित्यादि, अनुग्रहेतराप्राप्यातितरानु-ग्रहेणैव प्राप्यैवंविधार्थास्तित्वे, तत् पुरुषोत्तमस्वरूपं, चकारात् सौत्रचकारात् ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥ सूत्रमवतारयन्ति तर्हीत्यादिना, तादृशानां वक्रीणां श्रुतीनां, पूर्वोक्तं पुष्टिफलस्य सर्वोत्तमता, तत्र पूर्वपक्षे, हेतुमनुपदेशने हेतुं, सूत्रार्थमाहुरुपदेशनमित्यादिना, तत् परस्पररहस्यविद्योपदेशनं, भगवदग्र उपदेशो न सम्भवतीत्यर्थः ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ सूत्रमवतारयन्ति नन्वित्यादि, तत्सम्भवादुक्ततापसम्भवात्, तद्धेतोरा-नन्दतिरोधानहेतोः, तत्सम्भवे तिरोधानहेतुसम्भवे, तत्प्राप्तिरानन्दप्राप्तिः, सूत्रं व्याख्यान्त्यानन्दात्मकेत्यादिना, विरोधपरिहाराय वस्तुगत्या भगवद्विरहभावस्य सर्वत्र लोके सत्त्वात् सर्वेषां पूर्णानन्दलाभः स्यादितिविरोधपरिहारा-येत्यर्थः, उपपत्तिं विशदीकुर्वन्तीदमित्यादिना, तदप्राप्तिजो भगवदप्राप्तिजः, तत्प्राप्तिर्भगवत्प्राप्तिः, अतथाभूतस्य रत्यात्मकस्थायिभावशून्यस्य, तस्य 'रसो वै स' इत्यादिना प्रतिपाद्यरसस्वरूपस्य ॥ ११ ॥

---

१. स सर्वादर्शेषु । २. सम्भवे सर्वादर्शेषु । ३. °स्या° कैपुदा । ४. यस्य हि कै । ५. वस्तुत क ।

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

ननु (छान्दो. ९. २६.२.) "न पश्यो मृत्युं पश्यति न रोगं नोत दुःख"मितिश्रुत्या दुःखप्रतिषेधस्तादृशे भक्ते क्रियत इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति नेति, कुतः? शारीरात्, शरीरसम्बन्धिनो हेतोर्यद् दुःखं, कर्मजनितमितियावत्, तस्यैव श्रुतौ प्रतिषेधान्नात्रानुपपत्तिरित्यर्थः, एतेन दुःखत्वेन कर्मजन्यत्वानुमानमपि निरस्तं वेदितव्यं, लौकिक एव दुःखे तज्जन्यत्वनियमात् ॥ १२ ॥

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्तनलक्षणोर्थः स्पष्टः पठ्यते, तथा हि (तै. ब्र.) "रसो वै स रस९ ह्येवायं लब्ध्वानन्दीभवति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाति", अत्र रसात्मकभगवत्स्वरूपलाभे मत्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते, मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत्, स रसस्तु संयोगविप्रयोगभावाभ्यामेव पूर्णो भवत्यनुभूतौ नैकतरेण, तत्र विरहतापस्यात्युपमर्दित्वेन तदा प्राणस्थितिरपि न स्याद् यदि रसात्मको भगवान् हृदि न स्यादित्याशयेनाह "को ह्येवान्या"दिति, यद् यदि एष हृदिस्फुरद्रूप आकाशो भगवान् न स्यात् कस्तदान्यात्? अन प्राणने, को वा जीवयेत्? न कोपीत्यर्थः, तादृशस्य भगवत्स्वरूपातिरिक्तान्न जीवनमिति ज्ञापनाय सामान्यपदं, ब्रह्मानन्दाधिकपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यमतादृशस्योचितमेवेति- ज्ञापनाय हिशब्दः, तादृशस्य जीवनसम्पादनं प्रभोरावश्यकमितिज्ञापनायैवकारः, तापात्मकस्याप्यानन्दात्मकत्वमेवेतिज्ञापनायानन्दपदं, तदा प्रलापगुणगानादयो ये भवन्ति तेपि तद्धर्मा एव, नीलाम्बुदश्यामोतिक्लेशवशाद्धृदयादपगच्छत्विति भावेपि हृदयान्नापसारयितुं शक्य इतिज्ञापनाय चाकाशवत्त्वमुक्तं, तदनन्तरं प्रकटीभूय तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेनान्यात् पूर्वतापनिवृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः, (तै. ब्र.) "रस९ ह्येवायं लब्ध्वानन्दीभवती"तिपूर्ववाक्येनैवान्यव्यवच्छेदपूर्वकं भगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत् पुनराह तत्रापि व्यतिरेकमुखेन तत्रापि जीवनहेतुत्वं तदपि सामान्यविशेषाभ्यां वारद्वयं तेन

---

**प्रतिषेधादिति चेन्न शारीरात्** ॥ १२ ॥ सूत्रमवतारयन्ति **नन्वित्यादिना**, **पश्यो** भगवद्दर्शी, **तस्य** पश्यस्य, **दुःखित्वं** विरहादिजनितदुःखवत्त्वं, **शरीरसम्बन्धिनः** शरीरावच्छेद्यपापादित्यर्थ, अत्र विरहादिसम्पादिते, **अनुपपत्ति**र्दुःखत्वसम्बन्धरूपानुपपत्तिरित्यर्थः, **एतेन** तत्र वास्तवदुःखत्वाभावेन, **लौकिकेत्यादि**, तथा च विजातीयदुःखत्वावच्छिन्नं प्रत्येव पापस्य कारणता, एवं विजातीयसुखं प्रत्येव पुण्यस्य कारणत्वं वाच्यं. अन्यथा भगवदीयनित्यसुखे व्यभिचारापत्तेर्विरहस्य प्राकृतदुःखरूपत्व उँक्तरसदलत्वानुपपत्तिश्च ॥ १२ ॥

**स्पष्टो ह्येकेषाम्** ॥ १३ ॥ विरहदुःखस्य कर्मजत्वाभावः सूत्रतात्पर्यविषय इति विवृण्वन्त्ये**केषामित्यादि**, **अयं** भक्तः, **मरणहेतु**र्विरहभाव, **अनुभूतावनुभवविषयतासत्त्वे**, **एकतरेण** संयोगविप्रयोगयोर्मध्य एकेनेत्यर्थः, **सामान्यपदं** तादृशभक्तानां बोधकं 'क' इति श्रुतौ पदमित्यर्थः, **तादृशस्य** भगवतः, **उचितमेव** तत्राविश्य प्राणरक्षणमुचितमेवेत्यर्थः, **एवकारः** 'को ह्येवे'त्येवकारः, **आनन्दपद**'माकाश आनन्दो न स्या'दित्यानन्दपदं, **तद्धर्मा** आविष्टानन्दधर्माः, **आकाशवत्त्वं** भगवत आकाशवत्त्वं, **तदनन्तरं** विरहभावानन्तरं, **यत् पुनराह** 'को ह्येवान्या'दित्यनेन पुनराहेत्यर्थः, **व्यतिरेकमुखेना**न्यथा कोपि न जीवेदितिव्यतिरेकप्राप्तिलाभेनेत्यर्थः, **जीवनहेतुत्व**'मन्याज्' जीवेदित्यर्थादित्यर्थः, **सामान्येत्यादि**, जीवनं **सामान्यं** प्राणनं विशेषः, **वारद्वय**'मन्यात्' 'प्राण्या'दितिवारद्वयम् ॥ १३ ॥

---

१. स कं। २. °त्यादि° कंगो। ३. °न्नानुप° कं। ४. स्पष्टं क। ५. भूतो सर्वादर्शेषु। ६. °त्व° सर्वत्र। ७. °उत्तर°

विरहसामयिकोक्तरूप एवार्थः श्रुतेरभिप्रेत इति निश्चीयते, अन्यथा मरणहेत्वनुपस्थितौ जीवनहेतुत्वं न वदेदित्युक्ततदवस्थापन्नः को वा पुरुषो जीवेदिति वार्थः ॥ १३ ॥

## स्मर्यते च ॥ १४ ॥

भगवद्भावस्य मरणहेतुत्वं तेनैव च जीवनं तस्य ब्रह्मादिदुरापत्वं च श्रीभागवते स्मर्यते (श्रीमद्भाग. १०. ४३. ४.) "ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ये[1]त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यह"मित्युपक्रम्य (श्रीमद्भाग. १०. ४३. ६.) "धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने"त्यादि श्रीप्रभुवचनं, श्रीमदुद्धववचनं (श्रीमद्भाग. १०. ४४. ५८.) "नैताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्ये"त्यादि, तेन भगवत एव जीवनहेतुत्वं भावस्य च परमपुरुषार्थत्वं दुरापत्वं च स्फुटमवगम्यते ॥ १४ ॥

ननु हृदि बहिश्च रसात्मकभगवत्प्राकट्यं तददर्शनजनितो विरहभावस्तज्जनितस्तापस्तेन मरणोपस्थितिस्तन्निवर्तनं तदौत्कट्यं तदा प्राकट्यं पूर्णस्वरूपानन्दा[3]दिकं च लोके क्वचिदपि न दृष्टं श्रुतं वा वैकुण्ठेपीति कुत इत्याशङ्कायामाह ।

## तानि परे तथा ह्याह ॥ १५ ॥

तान्युक्तानि वस्तूनि, परे प्रकृतिकालाद्यतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुल एव, सन्तीतिशेषः, तत्र प्रमाणमाह तथा ह्याह श्रुतिः, ऋग्वेदे पठ्यते (ऋक्सं. २.२.२४.) "ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि", ता तानि वां भगवत्तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुश्मसि कामयामहे, तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगाश्च,वसन्तीतिशेषः,अयासः शुभावहाः, तदुक्तगुणविशिष्टमुरु गीयत इत्युरुगायस्तस्य, गोप्यो हि सततं तं गायन्ति, अत एव तदादिभक्तेषु कामान् वर्षतीति वृषा तस्य, परमं प्रकृतिकालाद्यतीतं, पदं स्थानं भगवतो वैकुण्ठं भवति, तत्रैतादृशलीलाभावेन तस्मादपि परममुत्कृष्टमत्र भूमाववभाति प्रकाशत इत्यर्थः, तथापि स्वदृग्गोचरो न भवतीति खेदेनाहेत्याह श्रुतिः, उरु गीयते सर्वत्र परं कामवर्षणं भक्तेष्वत्रैवेतितात्पर्येण वा विशेषणद्वयमुक्तं, यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपं, तथा चैतादृशं यत् परमं पदमवभाति तत्सम्बन्धीनि वास्तूनि कामयामह इतिवाक्यार्थः सम्पद्यते, ते[4] पदार्था इति वक्तव्ये सति तानीत्युक्तिर्या सा विषयवाक्यानुरोधादिति ज्ञेयं, पुरुषोत्तमसम्बन्ध्यर्थानां तत्प्राकट्यस्थान एव प्राकट्यं युक्तमिति हिशब्देनाह ॥ १५ ॥ ३ ॥

॥ इति चतुर्थाध्याये द्वितीयपादे तृतीयं समानाधिकरणम् ॥ ३ ॥

---

स्मर्यते च ॥ १४ ॥ भाष्यमत्र स्फुटार्थम् ॥ १४ ॥

तानि परे तथा ह्याह ॥ १५ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, तददर्शनं भगवददर्शनं, तज्जनितो विरहभावजनितः, तेन तापेन, तदा विरहकाले, न दृष्टं श्रुतं वा फलकोटौ न क्वापि दृष्टं श्रुतं वेत्यर्थः, सूत्रेण समाधानमाह तानीत्यादि, उक्तानि 'हृदी'त्यारभ्या'नन्दादिकं चे'त्यन्तेनोक्तानि, श्रुति'स्ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी'त्यृग्वेदश्रुति., भूरिशृङ्गा इत्यस्यार्थो बहुशृङ्गा रुरुप्रभृतय इति, तानीत्युक्तिर्येत्यादि, तथा च सूत्रे ते पदार्था इति वक्तव्ये तानीति यत् सूत्रकृतोक्तं तद् 'वास्तूनी'तिनपुंसकदर्शनात् स्वयमपि तथोक्तवानित्यर्थः ॥ १५ ॥ ३ ॥

॥ इति चतुर्थद्वितीये तृतीयाधिकरणम् ॥ ३ ॥

---

१. यत् क । २. °न्त्यथ कबगो । ३. °न्ददाना° सर्वत्र । ४. परं सर्वत्र सर्वादर्शेषु । ५. लुप्त कै ।

ननु लीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यं तथा तादृक्साधनाभावेपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति चेत् तदा कश्चित् कालं स्थापयित्वा ततस्तं वियोजयति न वेतिसंशयः, तोषस्य कादाचित्कत्वात् तत्साध्या तत्र स्थितिरपि तथैवेति वियोजयतीति पूर्वः पक्षस्तत्र सिद्धान्तमाह।

## अविभागो वचनात्॥ १६ ॥

तत्र प्रवेशितस्य तस्मादविभाग एव, कुतः वचनात्, तैत्तिरीयक उक्तर्गनन्तरमेव (तै. सं. १. ३. ६.) "विष्णोः कर्माणि पश्यते"त्यृचा तत्र कृतानि कर्माण्युक्त्वा तदग्रे वदति (तै. सं. १.३.६.) "तद्विष्णोः परमं पद९ सदा पश्यन्ति सूरय" इति, पुरुषोत्तमस्वरूपवित्त्वं सूरित्वं तच्च भक्त्यैवेति सूरयो भक्ता एव, तेषां सदा दर्शनमुच्यते, अन्यथा लीलानित्यत्वेनैव पूर्वगर्भ्यां तत्र स्थितगवादीनां प्रभुकर्मविषयाणां च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वादिदं न वदेत्, तस्मादविभाग एव, एतेनापि लीलानित्यत्वं सिध्यति, एतद् यथा तथा विद्वन्मण्डने प्रपञ्चितम्॥१६॥४॥

॥ इति चतुर्थाध्याये द्वितीयपादे चतुर्थमविभागाधिकरणम्॥ ४ ॥

एवं पुष्टिमार्गीयभक्तवृत्तान्तमुक्त्वा ज्ञानमार्गीयस्य वृत्तान्तमाह।

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७ ॥

पूर्व (ब्र. सू. ४. २. ५.) "भूतेषु तच्छ्रुते"रित्यादिना मर्यादामार्गीयस्य वागादिलय उक्तोधुना तस्य जीवात्मन उत्क्रमणप्रकार उच्यते, (बृह. ६. ४. १.) "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामती"तिश्रुतेस्तस्यात्मन ओक आयतनं हृदयं तदग्रं पूर्वं प्रज्वलति, पूर्वं तथाप्रकाशमानमपि तदा प्रकाशत इतियावत्, तदा तत् प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृश उत्क्रामति, यतः श्रुतिस्तथाह (छान्दो. ६. ४. २.) "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वे"त्यादि, यद्यप्येतावत् सर्वजीवसाधारणं तथापि विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति किन्तु शताधिकया, एकशततम्या नाड्या मूर्धन्या निष्क्रामति,

---

अविभागो वचनात्॥ १६ ॥ पूर्वोक्तरीत्या प्राप्ताशङ्कानां नवभिः सूत्रैर्निराकरण कृत्वा वागादिप्राणाना लयावश्यकतां व्यवस्थाप्य पुष्टिमार्गीयकं विशेषं सूत्रकारः प्रतिपादयतीत्यधिकरणमवतारयन्ति ननु लीलाया इत्यादिना, तादृक् पुष्टिस्थपुरुषोत्तमप्रापकं, तत्र पुष्टिस्थस्य समीपे, तोषस्य कादाचित्कानुकम्पारूपस्य, तथा कादाचित्कीत्यर्थः, तत्र प्रवेशितस्य कदाचिदनुकम्पया लीलायां प्रवेशितस्य, तस्माल्लीलास्थानात्, अन्यथा नूतनाभिप्रवेशितस्यानया श्रुत्याविभागाप्रतिपादने॥ १६ ॥ ४ ॥

॥ इति चतुर्थद्वितीये चतुर्थाधिकरणम्॥ ४ ॥

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७ ॥ अधिकरणमवतारन्त्येवमित्यादिना, वृत्तान्तमाह सूत्रकार आह, तस्य ज्ञानमार्गीयस्य, अत्र मर्यादामार्गीयाणां सद्योमुक्तिर्द्वेधा, तत्र हृदय एव सामग्रीप्राबल्याद् ब्रह्मप्राप्तिरित्येकः प्रकारः, तदन्यस्तु ब्रह्माण्डमध्ये दशमद्वारा निर्गतस्य तत्रैव ब्रह्मतासम्पत्तिः, क्रममुक्तिस्त्वाभ्यां भिन्ना ब्रह्माण्डभेदेनोत्तरकालीना, तत्राद्यायां जीवस्य नोत्क्रमणं, द्वितीयायां तस्योत्क्रमणमस्ति, तत्र विद्वदुत्क्रमणाविद्वदुत्क्रमणयोः साम्यमस्ति न वेतिसंशयः, तत्र भाविकामनाया उभयोस्तुल्यत्वादुत्क्रमणे साम्यमेवेतिपूर्वपक्षे, समाधानं, हृदयागमनपर्यन्तं साम्यमेव, अग्रे तु नेतिसमाधानमाहुरुच्यत इत्यादिना, स द्वितीयसद्योमुक्त्यधिकारिजीवः, एनास्तेजोमात्राः सूर्यपुरुषात् सन्मुखमागता इन्द्रियमात्राः, समभ्याददानो लभमानः, तदग्रं हृदयाग्रं, पूर्वं निष्क्रमणपूर्वकाले, पूर्वं तथेत्यादि, निष्क्रमणपूर्वकालान्यकाले, तदा निष्क्रमणकाले, उत्क्रामति स मुक्त्यधिकारी, तेन सकाममार्गेणैतावता विद्वदुत्क्रमणे विशेषो द्योतितः, तत्र विशेषे प्रमाणमाहुर्यत इत्यादिना, 'तस्ये'त्यादिश्रुतिर्बृहदारण्यकशारीरब्राह्मणस्था, श्रुत्यर्थस्तु स्फुटः, विद्वदविद्वज्जीव साधारण-

---

१. लुप्तं कं। २. लुप्तं क। ३. तमाह सर्वेष्यादर्शाः। ४. °न्वक्रा° कं। ५. लुप्तं कं।

(छान्दो. १०. ६६.) "शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति यतः श्रुतिराह, अत्र हेतुमाह हार्दानुगृहीत इति हेत्वन्तर्गर्भं विशेषणं, (कठोप. ३. १.) "गुहां प्रविष्टौ परमे परार्धे" इति श्रुतेर्हृदयाकाशसम्बन्धी यः परमात्मा तदनुग्रहात् तथैव भवतीत्यर्थः, अनुग्रहे हेतुर्विद्यासामर्थ्यादिति, तस्या विद्याया शेषभूताङ्गभूता या गतिः प्रव्रजनरूपा तच्छेषभूतैव या भगवत्स्मृतिपरम्परा च ताभ्यां च यो भगवदनुग्रहस्तेन तथेत्यर्थः ॥ १७ ॥ ५ ॥

**चतुर्थाध्याये द्वितीयपादे पञ्चमं तदोकोधिकरणम् ॥ ५ ॥**

(छान्दो. १०. ६. १.) "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल" इत्युपक्रम्याग्रे पठ्यते (छान्दो. १०. ६. ५.) "तमभित आसीना आहुर्जानासि मां जानासि मा"मिति "स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज् जानात्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वं आक्रमत" इति, अत्र "तमभित" इत्याद्युक्तेः सर्वसाधारण्युत्क्रान्तिः प्राप्यते, पूर्वमादित्यत्वेनोक्तस्य पिङ्गलस्य रश्मिभिरूर्ध्वाक्रमणं च तथा, अत्र संशय 'ओकोग्रज्वलनादे'रितरसाधारण्येपि यथा 'हार्दानु'ग्रहाद् विलक्षणा गतिर्विदुष उक्ता तथा रश्म्यनुसारित्वमपीतरसाधारणमुतास्मिन्नेवेति, तत्रावधारणमाह ।

## रश्म्यनुसारी ॥ १८ ॥

**रश्म्यनुसारी निष्क्रामत्ययमेवेति ॥ १८ ॥**

विदुष उत्क्रमणेहार्दानुग्रहकृतो यथा विशेषस्तथा कालविशेषकृतोपि विशेषो भविष्यतीत्याशङ्क्य तन्निरासमाह, तत्राहोरात्रकृतोयनकृतो वा स भवेत्, तत्राद्यकृतो नास्तीत्याह निशि नेति ।

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च ॥ १९ ॥

तत्र हेतुः सम्बन्धस्येत्यादि, अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसम्बन्धस्तस्य यावद्देहभावित्वात् तत्कार्यस्यानुग्रहस्यापि तथात्वात् कालस्याप्रयोजकत्वमित्यर्थः, अत्र प्रमाणमाह दर्शयति यतः[3] श्रुतिः, (बृह. ६. ४. २२.) "तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ती"ति ॥ १९ ॥

मित्यर्थः, इतरनाड्या शताधिकेतरया नाड्येत्यर्थः, एका शतोत्तरैकेत्यर्थ., आयन् गच्छन्, सूत्रशेषं व्याख्यातुमाहुरुत्क्रामतीत्यादि, सर्वजीवेत्यादि, अत्रेत्यादि, अत्रैवमवस्थापत्तौ, तच्छेषभूता विद्याशेषभूता, तथा च विद्याशेषभूत यत् प्रव्रजनं भगवत्स्मृतिपरम्परा च ताभ्यां यो भगवदनुग्रहस्तेन गृहीतस्तथा सम्पन्नो भवतीत्यर्थः ॥१७॥५॥

॥ इति चतुर्थद्वितीये पञ्चमाधिकरणम् ॥ ५ ॥

रश्म्यनुसारी ॥ १८ ॥ अधिकरणमवतारयन्त्यथेत्यादिना, विषयवाक्यमाहुर्या एता इत्यादिना, विषयवाक्यं छान्दोग्यस्थदहरविद्यायां, अर्थस्तु यो हृदयपुण्डरीकगतयथोक्तगुणविशिष्टब्रह्मोपासकः स या एता हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलाद् रश्मय इव ता एताः पिङ्गलस्य वर्णविशिष्टस्य, अणिम्नः सूक्ष्मस्य, पूर्णा इति सर्वत्राध्याहारः, तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य सौरं तेज एव शरीरे स्थितं तत् पार्थिवेन केनन्यूनाधिकभेदादनुविद्धं तच्छरीरस्य रसं पाचयत् तत्तद्वर्णं करोति तत्रादित्यसम्बन्ध एव कारणं, पित्तरूपेण तेजसादित्यस्य तत्र सत्त्वात्, तदाह श्रुति 'रसौ वा आदित्यः पिङ्गल एष शुक्ल' इत्यादि, तथा चादित्यमण्डलस्य पञ्चवर्णत्वात् तादृशं च भूतं पित्तमपि तादृशमिति स्वपाचितमुपरञ्जयति, तत्र नाडीस्थो रसस्तथा भवतीत्यर्थः, अत्र प्रकृतश्रुतौ, सर्वसाधारणी सद्योमुक्तक्रममुक्तसाधारणी, तथा सर्वसाधारणं, इतरः क्रममुक्तादिः, इतरसाधारणमविद्वत्साधारणं, तत्रेतरसाधारणमितिपूर्वपक्षः, सिद्धान्तस्तु विदुष एव नाविदुष इति, तदेवाहू रश्मीत्यादिना ॥ १८ ॥

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च ॥ १९ ॥ सूत्रमवतारयन्ति विदुष इत्यादिना, इत्याशङ्क्य निशि नेतिसूत्रभागेनाशङ्क्य, तथा च निशीतिपदं मुक्तिप्रतिबन्धककालमात्रोपलक्षकं, आह सूत्रकार. समाधानमाहेत्यर्थः, अत्र कालविशेषस्य मुक्तिप्रतिबन्धकत्वाभावे ॥ १९ ॥

---

१. °त्का° क । २. °भ° क । ३. लुप्तं कै ।

हार्दानुग्रहस्य मुक्तिहेतोर्विद्यमानत्वादयनविशेषोप्यप्रयोजक इत्याह ।

**अतश्चायनेपि दक्षिणे ॥ २० ॥**

स्पष्टार्थमिदम् ॥ २० ॥

ननु ( श्रीमद्भग. ८. २३. ) "यत्र काले त्वनावृत्ति"मितिकालप्राधान्येनोपक्रम्य "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना" इतिभगवद्वाक्याद् ब्रह्मविदोप्युक्तकालापेक्षास्तीत्याशङ्क्य विषयभेदेन समाधत्ते ।

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥**

ज्ञानमार्गाद् योगमार्गो हि भिन्नः, तथा च योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते न तु ज्ञानमार्गीयस्य श्रौतस्य, इतरनिरपेक्षत्वात्, न च योगसाङ्ख्ये अपि श्रौते एवेति वाच्यं, यतः स्मार्ते एते, चो हेत्वर्थे, एते योगसाङ्ख्ये ( श्रीमद्भग. ८. २४. ) "अग्निर्ज्योतिर्धूमो रात्रि"रितिवाक्यद्वयोक्तगती वा, इदं तु श्रुत्युक्तदेवयानपितृयानातिरिक्तमार्गमभिप्रेत्य समाहितं, ते एव चेदत्राप्युच्येते शब्दभेदेन तदा न विरोधः ॥ २१ ॥ ६ ॥

॥ इति चतुर्थाध्याये द्वितीयपादे[2] षष्ठं रश्म्यधिकरणम् ॥ ६ ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

**अतश्चायनेपि दक्षिणे ॥ २० ॥** सूत्रमवतारयन्ति हार्देत्यादिना, स्पष्टार्थमिदमिति, 'इति चेन्ने'ति पूर्वसूत्रादनुवर्तनीयं, तथा च चकारो निर्णयार्थकः, इत्थं चायने दक्षिणेपि मुक्तिर्नेति चेन्नेत्यर्थ., अतःशब्देन पूर्वपक्षसमाधानयोः पूर्वसूत्रादेव लाभात् स्पष्टार्थमिदं सूत्रमिति फलितम् ॥ २० ॥

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥** सूत्रमवतारयन्ति ननु यत्र काल इत्यादिना, अनावृत्तिमावृत्त्यभावं, इतरनिरपेक्षत्वा'द्धार्दानुगृहीत'स्य मुक्तावनुग्रहेतरानपेक्षणादित्यर्थः, गती वेति, सूत्रस्थैतेइतिपदस्योक्तगतिद्वयमर्थ इतिभावः, सूत्रे साङ्ख्यबोधकपदाभावादेते इत्यनेन साङ्ख्यग्रहणमयुक्तमत आहुरग्निरित्यादि, इदं तु स्मृत्युक्तमार्गद्वयं, ते एव छान्दोग्य उक्ते देवयानपितृयानरूपे गती एव, अत्रापि स्मृतावपि, शब्दभेदेनाऽग्न्यादिशब्दभेदेन, न विरोधः श्रुतिस्मृत्योर्न विरोधः, तादृशश्रुत्युक्तमार्गद्वयेपि प्रकारापेक्षासत्त्वान् न विरोध इत्यर्थः, तथ च हार्दानुगृहीतमुक्तौ नान्यापेक्षागन्धोपीति फलितम् ॥ २१ ॥ ६ ॥

॥ इति चतुर्थद्वितीये षष्ठाधिकरणम् ॥ ६ ॥

॥ इति श्रीवल्लभजीसुतगोस्वामिश्रीगोपालजीकृतेणुभाष्यपदप्रदीपे चतुर्थाध्यायस्य द्वितीयः पादः ॥ १ ॥

---

१. °णा° पा । २. प्रकाशमतेनातश्चेतिसूत्रादारभ्य सप्तममधिकरणम् ।

# ॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

ननु ज्ञानमार्गीयस्येव मर्यादामार्गीयभक्तस्याप्यर्चिरादिमार्गेणैव गमनमुत सद्योमुक्तिरेव भवती''तिसंशयः, तत्र यथा ज्ञानिनो नियमाभावस्तथात्रापीति प्राप्त आह ।

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अर्चिरादिमार्गेण तस्य ज्ञानमार्गीयस्यैवोत्कर्षकथनात् स एव तेन मार्गेण गच्छति न तु भक्तोपीत्यर्थः, तथा हि पञ्चाग्निविद्याप्रकरणे (छान्दो. ७. १०. १.) "तद् य इत्थं विदुर्ये चेमेरण्ये श्रद्धा तप इत्युपासते तेर्चिषमभिसम्भवन्त्यर्चिषोहरह्न आपूर्यमाणपक्ष"मित्यत्रोपक्रमे भक्तातिरिक्तानेवाधिकृत्य तथागतिरुच्यते, स्मृताव (श्रीमद्भग. ८. २४.) 'ग्यग्निर्ज्योतिरहः शुक्ल' इत्यत्र 'ब्रह्मविदो जना' इतिवचनेन ज्ञानमार्गीयस्यैव स पन्था उच्यते,

अथेदं चिन्त्यते, सामोपनिषत्सु पठ्यते ( छान्दो. १०. ६. १. ) "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल" इत्युपक्रम्यादित्यरूपस्य पिङ्गलस्य रश्मिरूपत्वं नाडीनामुक्त्वाग्रे वद (छान्दो. १०. ६. ५.) "त्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत" इति नाडीरश्मिसम्बन्धेनैका परलोकगतिः श्रूयतेर्चिरादिका चान्या ( छान्दो. ७.१०.१. ) "तेर्चिषमभिसम्भवन्त्यर्चिषोह"रित्यादिश्रुत्युक्ता, ( कौशी. १. १३. ) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छती"ति चापरा, ( बृह. ७. १०. १. ) "स यदा वै पुरुषोस्माल्लोकात् प्रैति स वायुमागच्छती"ति चेतरा, (मुण्ड. २. १३.) "सूर्यद्वारेण ते विरजाः प्रयान्ती"ति चान्या, एवमनेकेषु मार्गेषु सत्स्वर्चिरादेरेवोक्तिः कुत इति, तत्र सर्वेषां पारिभाषिकमर्चिरादित्वमत एवा ( छान्दो. ७. १०. ८. ) "थैतयोः पथोर्न कतरेणचने"ति मार्गद्वयभ्रष्टानामतिकष्टं ( छान्दो. ७. १०. १०. ) "जायस्व म्रियस्वेति तृतीयं स्थान"मित्युक्तं, अन्यथानेकेषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्येत, अतः प्रकरणभेदाद् भिन्नोपासनशेषत्वान् मिथोनपेक्षा भिन्ना एवैते मार्गा ब्रह्मप्रापका इति मन्तव्यमिति चेत्, तत्रोच्यते, न हीयं परिभाषा सर्वेषु श्रुतास्ति यतस्तथोच्येत, अतो

---

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ द्वितीयपादे प्रथमतः पुष्टिमार्गीयस्य सद्योमुक्तिप्रकारो दर्शितस्ततो मर्यादामार्गीयस्य सद्योमुक्तिप्रकारो दर्शितस्तदनन्तरं मुक्तोत्क्रमद्वारादिकं प्रदर्शितं, तृतीयचरणे तु हृदयान्निर्गतस्य मुक्त्यधिकारिणो ब्रह्मप्राप्तिमार्गो ब्रह्मलोकप्रकारश्च निरूप्यते, अत्राधिकरणमवतारयितुं संशयादिकमाहुर्नन्वित्यादिना, पूर्वपक्षमाहुस्तत्र यथेत्यादिना, सिद्धान्तमाहुरर्चिरादिनेत्यादिना, भक्तातिरिक्तान् पञ्चाग्निविद्यावतोरण्ये श्रद्धया तपश्चरतश्च, तथार्चिरादिमार्गेण, स पन्था अर्चिरादिमार्गः तथा च मर्यादामार्गीयभक्तस्य सद्योमुक्तिरेवेत्यर्थः, मर्यादामार्गभक्तानामेकान्ततः सद्योमुक्तिरेवेति न निर्णेतुं शक्यते बहूनां मुक्तिमार्गाणां सत्त्वात्, एवं बहूनां मुक्तिमार्गाणां भेदोस्ति न वेति चिन्त्यन्त इत्यर्थ, पठ्यते विद्याभेदेन गतिभेदः पठ्यत इत्यर्थः, श्रुतयस्तु दहरविद्यास्थाः, 'तेर्चिष'मिति पञ्चाग्निविद्यास्था, 'स एतं देवयान'मिति कौशीतकीब्राह्मणस्था, 'स यदा वै पुरुष' इति बृहदारण्यस्था, 'सूर्यद्वारेणे'ति प्रथममुण्डकस्था, एव पूर्वपक्षे प्राप्त एकदेशी समाधातु प्रतिवदति तत्रेत्यादिना, सर्वेषां पूर्वश्रुत्युक्तसर्वमार्गाणां, पारिभाषिकं साङ्केतिकं, एतयोः पूर्वश्रुत्युक्ताः सर्वमार्गाः पारिभाषिक एकोर्चिरादिमार्ग. स देवयानमार्गो द्वितीयः पितृयानमार्ग एतयोरन्यो 'जायस्वे'त्यादिरूपस्तृतीयमार्ग इत्यर्थः, अन्यथा पूर्वोक्तानामनेकेषां मार्गाणां वास्तवैकत्वाङ्गीकारेण पारिभाषिकैकत्वानङ्गीकारे चेत्यर्थः, भिन्ना एव साङ्केतिकैकत्वाङ्गीकारेपि वस्तुतो भिन्ना एवेत्यर्थः, एते पूर्वश्रुतिभिरुक्ताः, एवमेकदेशी स्वसिद्धान्तमुक्तपूर्वपक्षोपर्युक्त्वा तत्पूर्वपक्षोपर्यन्येन केनचित् कृतं समाधानं दूषयितुं तदनुवदति तत्रोच्यत इत्यादिना, सर्वेषु श्रुता सर्वेषु विद्वत्सु प्रसिद्धा, तथोच्येतामेकेषु तेषु पारिभाषिकैकत्वमुच्येतेत्यर्थः, नन्वित्यादि, तथाचैकस्यानेकावयवेषु पर्वत्व-

---

१. लुप्तं कपु । २. °वौ° के । ३. °ह° बपा । ४. इत्यु° बपा । ५. °मा° पा । ६. एव तं कपु, एनं बपागो । ७. लुप्तं पा । ८. °मशेष° कैपापु ।

लाघवादनेकपर्वविशिष्ट एक एव मार्ग इति मन्तव्यं, न तु पर्वभेदेन मार्गभेद इति, गौरवप्रसङ्गात्, न चैव "मथैतैरेव रश्मिभि"रित्यवधारणानुपपत्तिरिति वाच्यं, तस्याः श्रुतेरुत्क्रमणमात्रमार्गनिरूपकत्वात्, तथा हि तत्रोपक्रमे (छान्दो. १०. ६. ५.) "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत" इत्युच्यते, एतस्मात् पुरस्ता (छान्दो१०.६.१.) "अथ या एता हृदयस्य नाड्य" इत्युपक्रम्य पिङ्गलस्यादित्यत्वमुक्त्वा (छान्दो.१०.६.२.) "तद् यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेमुष्मिन्नादित्ये सृप्ता" इत्यन्तेन वाक्येन नाडीषु रश्मिप्रचारमुक्त्वाग्रे(छान्दो.१०.६.५.)"थ यत्रैतदस्मा"दित्याद्युक्तं, उपसंहारे च (छान्दो.१०.६.६.) "शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति, एवमुपक्रमोपसंहाराभ्यामुत्क्रमणमात्रमार्गनिरूपकत्वं न तु ब्रह्मप्रापकमार्गस्य, अतस्तदनुपपत्तिपरिहारोनर्थकः, नन्वनेकपर्वविशिष्टत्वेन मार्गस्यैकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किञ्चित् पर्व निरूपयति क्वचिन्नेति कथम् उपसंहारेण प्राप्स्यन्ते इतितात्पर्येण तथेति चेद् ब्रवीषि तदा शाखान्तरमविदुषस्तदसम्भवेन तं प्रति श्रुतेर्न्यूनतापातः, न हि सर्वशाखाविदं प्रत्येव कथनमिति वक्तुमुचितं, तस्यासम्भवात्, अतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा, अध्ययनविधेरपि तावन्मात्रपरत्वात्, शाखान्तरसंवादिपर्वकथनानुपपत्तिश्च,उपसंहारेणैव तस्यापि प्राप्तिसम्भवात्, अतो विरुद्धदिक्कानां स्वस्वमार्गेणैकग्रामप्राप्तिवदिहापि भवितुमर्हति, स्वातन्त्र्येण सर्वैर्मार्गैर्ब्रह्मप्राप्तिः, न चैव (छान्दो.७.१०.८.) "मथैतयोः पथो"रितिद्विवचनानुपपत्ति (छान्दो.७.१०.८.) 'जायस्व म्रियस्वे'त्यस्य तृतीयत्वं चानुपपन्नमिति वाच्यं, अर्चिरादिकमुक्त्वोपसंहर (छान्दो. ७.१०.२.) "त्येष देवयानः पन्था" इति, श्रुत्यन्तरे च (कौ. १.३.) "स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छती"ति, तथा च ब्रह्मप्रापकाः सर्वे मार्गा देवयाना इत्युच्यन्ते,(श्रीमद्भग.१६.५.) "दैवी सम्पद् विमोक्षाये"तिभगवद्वाक्याद् दैव्यां सम्पदि ये जातास्ते

---

प्रसिद्धेस्तेषां पृथक्प्राधान्याङ्गीकारे पर्वत्वमेव न भवत्येवेत्यर्थः, गौरवप्रसङ्गात् तेषां पृथक्कार्यकारणभावाङ्गीकारे गौरवात्, पुनः श्रुत्या मुक्तिमार्गानेकत्वमाशङ्क्य निषेधति न चेत्यादि, एवं मुक्तिमार्गस्यैकत्वे, अवधारणेत्यादि, तथा चैतस्याप्येकमार्गत्वादितरपर्वत्वाभावाच्च कथं मार्गैकत्वमित्याशङ्का, 'अथैतैरेवे'त्यस्य मुक्तिमार्गखण्डने हेतुस्तस्या इत्यादि, उत्क्रमणेत्यादि, तथा चोत्क्रमणमार्ग एवैतच्छ्रुतिप्रतिपाद्यो न तु मुक्तिमार्ग इति न तन्मार्गनानात्वमित्यर्थः, उत्क्रमणमात्रपदेन मुक्तिमार्गप्रतिपादकत्वव्युदासः तत्रोपक्रम उत्क्रमणमार्गोपक्रमे, तदनुपपत्तीत्यादि, एतच्छ्रुतिप्रतिपाद्यस्य मुक्तिमार्गत्वाभावेनैतदर्थस्य परिहारोनर्थक एवेत्यर्थः, एकमार्गवादिमतं दूषयितुं पृच्छति नन्वित्यादि कथमित्यन्तेन, एकमार्गवादिमतं दूषयितुं तन्मते समाधानमाहोपसंहारेणेत्यादि, उपसंहारेण सर्वशाखोक्तपर्वणां लाभो भविष्यतीति, तथैकमार्गसिद्धान्ततोपसंहारेणैकमार्गता, समाधानं दूषयतीति चेदित्यादिना, तदसम्भवेन सकलपर्वोपसंहारासम्भवेन, न्यूनतापातो निखिलपर्वविशिष्टैकमार्गबोधकत्वाभावापत्तिरित्यर्थः, कथनं श्रुतेर्मुक्तिमार्गकथनं, तस्यासम्भवात् सर्वशाखाविद इदानीं कलावधिकारिणः श्रोतुरसम्भवादित्यर्थः, अतः सर्वशाखाविदोसम्भवतः, तथा श्रुतेर्मुक्तिमार्गबोधनं, तावन्मात्रमेकशाखाध्ययनमात्रं, शाखान्तरसंवादीत्यादि, तथा च शाखान्तरप्रसिद्धमुक्त्यङ्गानां शाखान्तरे प्रतिपादितत्वं नोचितं स्यादित्यर्थः, तत्र हेतुरुपसंहारेणेत्यादि, तथा चाङ्गिप्रयोजनाभेदयोरुपसंहारप्रयोजकयोः सत्त्वादुपसंहारेणैवार्थसिद्धेः शाखान्तरसंवादिपर्वण. शाखान्तरे कथनमनुपपन्नमित्यर्थः, एवमेकमुक्तिमार्गवादिनं दूषयित्वैकदेशी स्वसिद्धान्तं स्थापयत्यतो विरुद्धेत्यादि, विरुद्धदिक्कानां मध्यस्थग्रामस्य चतुर्दिक्षु विद्यमानलोकानां, इहापीत्यादि, नानामुक्तिमार्गीयाणां स्वस्वमार्गेणैव ब्रह्मप्राप्तिरित्यर्थः, एवं मुक्तिमार्गाणां नानात्वं,

---

१. °स्मा° क । २. °त° बपागो । ३ °भा° कैपु ।

'देवा' इत्युच्यन्ते, तेषां 'यानं' गमनं यत्रेति ते सर्वेपि मार्गा 'देवयान'शब्देनोच्यन्ते, द्वितीयस्त्व-विशिष्टः, एवं द्वित्वं त्रित्वं चोपपद्यते, न चोक्तरीत्या लाघवादेक एव स मन्तव्यः, स्वतःप्रमाणभूता हि श्रुतिः, सा येन यदा या श्रुता तदर्थावधारणे द्वितीयस्यानुपस्थितत्वान्न लाघवगौरवतद्विचाराव-सरः, क्वचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः, अपरं च, ब्रह्मविदः क्रममुक्तौ गन्तव्यो मार्गो ह्ययमुपदिश्यते, तत्तल्लोके तदानन्दानुभवश्चावश्यकः, तथा चोपासनभेदात् फलभेदस्यावश्यकत्वान् मार्गभेदोपि तथेति सर्वेष्वेकरूपफलप्रसञ्जक उपसंहारो न युक्तः, किं चोपासने कर्मणि चोप-संहारः सम्मतः, मार्गस्तु नान्यतररूपोतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः, अविधेयत्वादपि तथा, एतद् यथा तथा पुरस्तान् निरूपित (ब्र.सू.३.३.५.)"मुप-संहारोर्थाभेदाद् विधिशेषवत् समाने च"त्यत्र, एवं सत्यर्चिषशब्देनार्चिरुपलक्षितो मार्ग उच्यते, आदिपदेनान्ये सर्वे मार्गाः संगृह्यन्त इति नानुपपत्तिः काचिदिति चेत्,

अत्र वदामः, 'अर्चिरादिभ्य' इत्युक्तं भवेत् त्वद्रीतिरेव चेदभिप्रेता भवेत्, तस्मान्नैव-मित्यवधार्यते, अर्चिरादिनेत्येकवचनान्यथानुपपत्त्या मार्गस्यैकत्वमवश्यमूरीकार्यं, एवं सति श्रुतिषु यावन्ति पर्वाण्युक्तानि तानि सर्वाण्येकस्मिन्नेवार्चिरादिमार्गे वर्तमानान्यपि यस्योपासकस्य यावत्पर्वभोगो भावी तं प्रति तावत्पर्वोक्तिर्यस्य यावतां तेषां स न भावी तं प्रति न तदुक्तिस्तद्भोगाभावादिति नानुपपन्नं किञ्चित्, ननु त्वयाप्यनुक्तानां पर्वणां तत्र स्थितिं वदतोपसंहार एवोक्तो भवति प्रापकत्वेनेति चेत्, स्यादेतदेवं यदि तस्यैव गन्तुर्भोगाय तदपि पर्व तत्रोच्येत, न त्वेवं, किन्त्वेकवचनानुरोधान् मार्गैक्ये निश्चिते यं प्रति यत् पर्वोच्यते तत् तत्र कण्ठोक्तमेवेति नोपसंहारापेक्षा, अग्रेन्यत्रोक्तानां पर्वणामनुक्तस्थले सन्नि-वेशोक्त्यापि सूत्रकाराभिमत एक एव मार्ग इति ज्ञायते, श्रुतौ सर्वत्र पूर्वपरामर्षादपि तथा॥ १॥

---

द्वितीयः पितृयानमार्गः, द्वित्वं देवयानपितृयानमार्गावादाय द्वित्व त्रित्वं च 'जायस्वे'तिमार्गमादाय बोध्यं, उक्तरीत्या मार्गनानात्वकल्पने गौरवान् नानापर्वविशिष्टो मुक्तिमार्गः, द्वितीयस्य द्वितीयमुक्तिमार्गस्येत्यर्थः, नेत्यादि, तथा च द्वयोरुपस्थितौ लघुपक्षोपादानं गुरोस्त्यागोनुपस्थितौ तु विचारानवसर एवेत्यर्थः, क्वचिदुपस्थितौ कस्यचिदेकशाखाध्यायिनो नानाशाखाध्ययनवशान्नानाशाखीयमुक्तिमार्गाणामुपस्थितौ लाघवगौरवविचारप्रसक्ता-वपीत्यर्थः, उक्तबाधकैः स्वाध्यायविधिबलादेकशाखाध्ययनं तदर्थमेव च शाखाविभाग एकशाखानुसरणेन स्वस्य सर्वशास्त्रार्थसम्पत्त्या शाखान्तरीयोपसंहारे प्रयोजनाभावश्चेत्युक्तबाधकैरित्यर्थ , परोक्तं दूषयित्वा स्वमते युक्त्यन्तरं वदत्यपरं चेत्यादिना, मार्गो मुक्तिमार्ग., नान्यतररूपो न कर्मोपासनयोर्मध्य एकरूपोपीत्यर्थः, उपसंहारे दूषणान्तरमाहुरविधेयत्वादिति, उपसंहारस्याविहितत्वान्न तथा भवतीत्यर्थः, नन्वविहितत्वं कुत्रोपसंहारे दृष्टं तत्स्थलमाहैतद् यथेत्यादि, तन्न् निरूपितमिति, निरूपणप्रकारे हि समाने योर्थाभेदादुपसंहार. स विधिशेषा येग्निहोत्रादयस्तद्वदित्युक्तं, अग्निहोत्रादयो हि सर्वेषां समाना अपि येषां शाखिनां दशाङ्गविशिष्टा विहितास्तेषामेव ते तथानुष्ठेया नेतरेषां, तथाविधानाभावात्, एवं यद्यत्पर्वविशिष्टो मुक्तिमार्गो यद्यच्छाखायामुक्तस्तेन मार्गेणैव तस्य तस्य सकलशास्त्रार्थसम्पत्त्या कृतार्थतासम्भवात्तत्तन्मार्गस्य तत्तच्छास्त्रीयं प्रत्येव विहितत्वान्नोपसंहारशङ्कालेशोपीतिभावः, सिद्धिमाहैवमित्यादि, एवमुक्तरीत्यान्यमुखेन पूर्वपक्षमुक्त्वा सिद्धान्तमाहुरत्र वदाम इत्यादिना, तस्मात् सूत्रे बहु-वचनाभावात्, नैवं न वाद्युक्तरीत्या मार्गभेद इत्यर्थः, तद्भोगाभावात् तत्र तावत्पूर्वोक्तभोगाभावात्, तत्रैकस्मिन् मार्गे, तस्यैकस्य मुक्त्यधिकारिणः, तदपि तद्भोगार्थंतरदपि, एकस्मिन् मार्गे यं प्रति यं मुक्त्यधिकारिणं प्रति, तत् पर्व, तत्र मार्गे, कण्ठोक्तमेव तस्य भोगार्थमेवेत्यर्थः, अग्रे अग्रिमसूत्रे, अन्यत्रोक्तानामन्यशाखोक्तानां, अनुक्तस्थले शाखान्तरीयोपासकभोगार्थं, पूर्वपरामर्षाद्'र्चिषोहरह्न आपूर्यमाणपक्ष' मित्यादिश्रुतिभिरर्चिमार्गस्यैकस्यैव सर्वत्र परामर्षादित्यर्थः, तथा मार्गैक्यं, इत्थं च ज्ञानिनामेव क्रममुक्तिर्मर्यादामार्गीयभक्तानां तु सद्योमुक्तिरेवेति सिद्धम् ॥१॥

---

१. °र्चिः° पा। २ °त्ये° कै। ३ °प्यु° कैगो। ४ °मु° बपागो। ५ °र्शो° सर्वेष्यादर्शाः। ६ प्रदीपकारस्यैवायं पाठः।

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

छान्दोग्ये वायुर्न पठ्यते, कौशीतकिश्रुतौ तु (कौ.१.३.) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक"मिति वाय्वादयः श्रूयन्ते, तत्रार्चिषोऽग्नेश्चाभेदान्न विचारणीयमस्ति, वायुलोकं कस्माल्लोकात् गच्छतीत्याकाङ्क्षायामाह वायुमब्दादिति, (छान्दो.७.१०.२.) "अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्य"मित्यत्र संवत्सरलोकात् परस्ताद् वायुलोको निवेशयितव्यः, तथा च संवत्सरलोकाद् वायुलोकं गच्छतीत्यर्थः, तत्र विनिगमकमाहाविशेषविशेषाभ्यामिति, अत्रेदं ज्ञेयं, अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनाभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वान्ते ब्रह्म प्राप्नोति, कर्म त्वग्निसाध्यं भूलोक एव च भवत्यत आदौ तत्रत्यो भोगस्ततस्तदुपरितनलोकानां, (तै.ब्रा.३.७.७.) "पृथिवी दीक्षा तयाग्नि[1]दीक्षया दीक्षितः", (आप.कल्प.१.१३.५.) "यथा पृथिव्यग्निगर्भे"त्यादिश्रुतिभ्यो भूरग्निप्रधाना भवत्यतोऽर्चिराख्यमग्निलोकमादौ गच्छति, ततः कर्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात् तत्र तत्र[2] गत्वा भुङ्क्ते, तथा च संवत्सरान्तानां भूसम्बन्धित्वेनाविशेषात् तन्मध्ये वायोर्न प्रवेशः, भूलोकादुपर्यन्तरिक्षलोकस्तदुपरि द्युलोकः, तथा च (तै.सं.३.४.५.) "वायुरन्तरिक्षस्याधिपति"रितिश्रुतेः (तै.सं.३.४.५.) "सूर्यो दिवोधिपति"रितिश्रुतेस्तयोः पौर्वापर्ये विशेषो हेतुरस्तीत्यादित्यलोकात् पूर्वमुक्तरीत्या भूलोकमध्यपातिसंवत्सरस्य परस्ताच्च वायुर्निवेशयितव्य इत्यर्थः, ननु (छान्दो. ७.१०.१.) "तेर्चिषमभिसम्भवन्त्यर्चिषोह"रित्यादिश्रुतिरुक्तमुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्वोत्तरयोरव्यवधानं सूचयतीति नोक्तमादरणीयमिति चेत्, सत्यं, यस्योपासकस्य न वायुलोकभोगस्तं प्रति सोक्तिर्यस्य तु तद्भोगस्तस्योक्तरीतिर्मार्गैक्यादिति नानुपपत्तिः काचित्।

केचित् तु "स एनं[5] देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोक"मित्यविशेषेण वायुरुपादिश्यते मिथः पौर्वापर्यप्रापकपदाभावात्, (बृह.७.१०.१.) "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छती"तिश्रुत्यादित्यात् पूर्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले निवेशयितव्य इत्यर्थं वदन्ति, स चिन्त्यते, यथा (छान्दो. १०.६.५.) "तेन स ऊर्ध्व आ-

---

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ अनुक्तपर्वस्थलमुदाहर्तुं सूत्रमवतारयन्ति छान्दोग्य इत्यादिना, तत्र विनिगमकं संवत्सरलोकाद् वायुलोकगमने विनिगमकं, अविशेषविशेषौ कौ वेत्याकाङ्क्षायां तौ विवेक्तुमाहुरत्रेदमिति, अत्र सूत्रे, इदमविशेषविशेषयोर्निर्वचनं, एवं चार्चिरादिसंवत्सरान्तानां भूसम्बन्धोऽविशेषो वायोरधोलोकाधिपत्यमादित्यस्य च तदुपरिलोकाधिपत्यमितिविशेषस्ताभ्यामविशेषविशेषाभ्यामित्यर्थः, तावेवोपपादयन्त्यग्निहोत्रेत्यादिना, छान्दोग्यश्रुतिविरोधमुपन्यस्यन्ति नन्वित्यादिना, अपादानत्वं वदन्तीति, तथा च यस्माल्लोकाद् यं लोकं गच्छन्ति तेषामवधीभूतानां कर्मभूतानां च सर्वेषां निरूपणात् तत्र वायुकर्मकगमनावधीभूतं वस्तु वा शब्दं श्रुतौ न केनापि शब्देन प्रतिपादितमित्यतो नोक्तमादरणीयं संवत्सरलोकाद् वायुलोकगमनं नादरणीयमित्यर्थः, उक्तविरोधपरिहारमाहुः सत्यमित्यादिना, सोक्तिश्छान्दोग्यश्रुत्युक्तिः, तद्भोगो वायुलोकभोगः, उक्तरीतिः संवत्सरलोकाद् वायुगमनोक्तिः, केचित् तु शङ्कराचार्यास्तु, अविशेषेणापादानबोधकपदव्यतिरेकेण, पदाभावात् पञ्चम्यन्तपदाभावादित्यर्थः, तथा चैवमुपपादितोऽर्थोऽविशेषपदवाच्योऽग्र आदित्यलोकगमनोक्तिर्विशेषपदार्थः, यदा मुक्तिदशायां, पुरुषो मुक्त्यधिकारी, तस्मा आगताय, स वायुः, तत्र स्वस्थाने, विजिहीते स्थानदानं करोति, स्थानस्वरूपं यथेत्यादि, रथचक्रस्य खं छिद्रं, तेन छिद्रेण, अब्दादित्ययोरन्तरालेऽवधित्वेनोक्तोऽब्दपदवाच्य आदित्यश्च तयोरन्तराल इत्यर्थः, तन्मतं दूषयन्ति स चिन्त्यत इत्यनेन, स तदुक्तो विशेषपदार्थः, चिन्त्यत उक्तस्य

---

१. °षी° पागो। २. °रात कालात् क। ३. °र्दी° कपा। ४. लोके कं। ५. °तं कपु।

क्रमते स आदित्यमागच्छती"तिविशेषोपदेश इत्युच्यते तथा "स वरुणलोक"मित्यत्रापि वक्तुं शक्यं, न च "स आदित्यमागच्छ"तीत्यत्र तच्छब्दस्य पूर्वपरामर्शित्वाद् वायुलोकगतस्यैव पूर्वत्वात् तथेति वाच्यं, (कौ.१.३.) "अग्निलोकमागच्छति स वायुलोकं स वरुणलोक"-मित्यत्रापि तुल्यत्वात्, किं चैवमग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यमतो विद्वद्भिरुपेक्ष्योयं, वाजसनेयिनस्तु (बृह.८.२.१५.) "मासेभ्यो देवलोकं देवलोकादादित्य"मिति पठन्ति, तत्राप्यादित्यात् पूर्वो देवलोकात् परो वायुर्ज्ञेयः, एकत्रादित्यात् पूर्वत्वे सिद्धे मार्गैक्यादन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात्, सूत्रकारेण तु छन्दोगश्रुत्यपेक्षयोक्तं वायुमब्दादिति, एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्यं, न च "वायुमब्दादि"तिसूत्रान् मार्गभेदापत्तिः, देवलोकस्यादित्याधिष्ठेयत्वेनादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती तदनुसारेण व्यासोप्यतो नानुपपत्तिः॥२॥

## तडितोधि वरुणः सम्बन्धात् ॥ ३ ॥

(छान्दो.६.१५.५.)"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युत"मित्यत्र पठितविद्युल्लोकात् परतो वरुणलोको निवेशनीयः, तत्र हेतुः सम्बन्धात्, तडितोप्सम्बन्धित्वाद् वरुणस्य तत्पतित्वात् तथा ॥ ३ ॥

## वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

स्पष्टमिदं, अर्चिरादिपाठे विद्युदनन्तरं (छान्दो.६.१५.५.) "तत्पुरुषो मानवः स एतान् ब्रह्म गमयती"ति पठ्यते, तत् तु यस्योपासकस्य वरुणादिलोकगमनापेक्षा नास्ति तमपेक्ष्येति ज्ञेयम् ॥ ४ ॥ १ ॥

॥ इति चतुर्थाध्याये तृतीयपादे प्रथममर्चिराद्यधिकरणम् ॥ १ ॥

---

विशेषत्वमुपपद्यते न वेति विचार्यत इत्यर्थः, तेन रथचक्रस्य छिद्रेण, इतिविशेषोपदेश'स्तेने'ति यत् पद 'मूर्ध्व आक्रमत' इति चाभ्यां सूत्रोक्तो विशेषोपदेश उदाहरणेपि, वक्तुं शक्यं तच्छब्दस्यानापन्नैतच्छब्दस्य स इति तच्छब्दस्य सत्त्वाद् विशेषोदाहरणत्वं वक्तुं शक्यमित्यर्थः, स्वोक्तदूषणदृढीकरणायाशङ्कन्ते न चेत्यादि, स इति तच्छब्दस्य सत्त्वाद् तथा विशेषोदाहरणत्वं, तुल्यत्वात् स इति तच्छब्दस्यार्थाल्लब्ध्योर्ध्वलोकाक्रमणस्य च सत्त्वाद् विशेषोदाहरणत्वस्य तुल्यत्वादित्यर्थः, दूषणान्तरं भावयन्ति किं चेत्यादिना, एवं पूर्वपरामर्षकतच्छब्दार्थोर्ध्वलोकाक्रमणरूपार्थस्य विशेषपदार्थत्वे, अग्निलोकेत्यादि, तथा चा'ग्निलोकमागच्छति स वायुलोक'मेतद्भागेपि स इति तच्छब्दस्यार्थाल्लब्ध्योर्ध्वक्रमणस्य च सत्त्वादग्निलोकवायुलोकयोर्मध्येप्यब्दलोककल्पनापत्तिस्तथा च विशेषलक्षणस्य विशेषोदाहरणेतिव्याप्तिरितिभावः, नन्वादित्यात् पूर्वं वायुलोकं देवलोकात् स गच्छतीतिक्रमस्वीकारे वायुमब्दादितिसूत्रेणाब्दात् संवत्सरलोकाद् वायु गच्छतीत्युक्तार्थविरोध इत्यत आहुः सूत्रकारेणेत्यादि, एवं सति वाजसनेयिच्छान्दोग्याभ्यामेकमार्गस्योक्तत्वे सति, मासेभ्य इत्यादि, तथा च वाजसनेयिश्रुतौ मासेभ्यः परस्तादादित्यलोकात् पूर्वमब्दनिवेशः कार्य इत्यर्थः, ननु मासेभ्योऽब्दलोकं ततो देवलोकं ततो वायुं तत आदित्यमितिगमनक्रमे मध्ये देवलोकस्य व्यवधानाद् 'वायुमब्दा'दितिसूत्रोक्तमार्गाद् भेदापत्तिरित्याशङ्कते न चेत्यादिना, समाधानमाहुर्देवेत्यादिना, आदित्यमध्यपातित्वमिति, तथा च देवलोकस्यादित्यकोटौ निवेशेऽब्दाद् वायुं वायोरादित्यमित्येव क्रमः सिद्ध इति न मार्गभेदापत्तिरितिभावः, व्यासोपि तथोक्तवानिति विभक्तिविपरिणामेनान्वयः ॥ २ ॥

तडितोधि वरुणः सम्बन्धात् ॥ ३ ॥ नन्वादित्यलोकपर्यन्त मार्गैक्योपपादनेपि वरुणलोकनिवेशने स्थाननियामकाभावान् मार्गभेदापत्तिरित्यतः सूत्रेण समाधानमाहुरादित्यादित्यादि, तत्र विद्युल्लोकात् परतो वरुणलोकनिवेशे, तत्पतित्वादप्पतित्वात्, तथा विद्युल्लोकानन्तर वरुणलोकनिवेशः ॥ ३ ॥

वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥ स्पष्टमिदं, इदं सूत्रं स्पष्टार्थमित्यर्थः, नन्वर्चिरादिमार्गे विद्युल्लोकानन्तरं ब्रह्मप्राप्तिः श्रूयते न वरुणलोकप्राप्तिरितिमार्गैक्यविरोध इत्यत आहुरर्चिरादीत्यादि, तत् तु विद्युल्लोकाद् ब्रह्मलोकगमनं तु तमपेक्ष्योक्तमित्यर्थः ॥ ४ ॥ १ ॥

॥ इति चतुर्थप्रथमे प्रथमाधिकरणम् ॥ १ ॥

मार्गैक्यनियममभिप्रेत्य सूत्रकारोन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशनमाह, विद्युदनन्तरं "तत्पुरुषो मानवः स एतान् ब्रह्म गमयती"त्यत्र भवति संशयः, उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते, स च विद्युदनन्तरमेव पठ्यते, एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयित्रप्राप्तेर्ब्रह्मप्राप्तिर्भवति न वेति, तत्र वाचनिकस्य यावद्वचनत्वात् तदभावेन सा न भवतीति प्राप्त आह, आतिवाहिका इति ।

## आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥ ( ४. ३. २. )

एतदुक्तं भवति, यस्योपासकस्य यावत्फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी तस्य तावत्तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवत्यत एव कौशीतकिश्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते, अन्यथा कृतसाधनवैयर्थ्यं तेषां ब्रह्मप्राप्तिसाधनत्वबोधकश्रुतिविरोधश्च स्यात्, तथा च यत्रातिवाहिकश्रुतिर्नास्ति तत्राप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयं, वस्तुतस्तु बहव एव तादृशाः सन्तीतिज्ञापनाय बहुवचनमत्रोक्तं, तन्मध्ये कश्चनागत्यैक एव नयतीतिज्ञापनाय श्रुतावेकवचनं, तत्र हेतुस्तल्लिङ्गात्, 'तत्पुरुषोमानव' इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते, तेनेदं ज्ञाप्यते यथा विद्याबलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति न किन्तु भगवदीयपुरुषानुग्रहेणैवेति, न च पूर्वपूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्पदेन स लोक एवोच्यत इति वाच्यं, तदेतरलोकेषु तदकथनं यथा तथात्रापि न कथयेत्, लोकाधिष्ठातृदेवानामातिवाहिकत्वोक्तावर्चिर्लोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात्, तथा सति देवयानमार्ग एवोच्छिद्येत, अतो यथा विद्याबलेनैवार्चिषः प्राप्तिस्तथेतरेषामपीति बुध्यस्व, कस्यचिदल्पलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः कस्यचिद् बहुलोकगत्यनन्तरं सोच्यत इति भोगभूमित्वमेव तेषामवगन्तव्यं, सर्वेषां सर्वत्र गमने देवयानं पन्थानं वदन्त्याः[2] श्रुतेः सामितत्कल्पनमनुपपन्नं स्यात्, अत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्तमुत्पश्यामः ॥ ५ ॥

ननु ( बृह.८.२.१५. ) "तेषामिह न पुनरावृत्ति"रस्तीत्यादिश्रुतिभ्यो देवयानं पन्थानं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यं, तेन सद्योमुक्तौ सम्भवत्यां सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन

---

आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥ सूत्रमवतारयन्ति मार्गैक्येत्यादिना, मार्गैक्यं सर्वेषां क्रममुक्तिमार्गाणां देवयानपथत्वेन मार्गैक्यं, तत्रैवार्चिरादिमार्ग एव, निवेशनं पर्वत्वेन निवेशनं, उपोद्घातसङ्गत्याधिकरणमारचयितुं संशयादिकमाहुर्विद्युदित्यादिना, वचनाभावेन विद्युल्लोकानन्तरं ब्रह्मप्रापकपुरुषवचन यथास्ति तथा वरुणलोकं गतस्य ब्रह्मप्रापकपुरुषवचनाभावेनेत्यर्थः, तत्रेत्यादिना पूर्वपक्षमाहुः, तत्र ब्रह्मप्राप्तिविषये, तदभावेन गमयितुर्वाचनिकत्वाभावेन, सा वरुणलोकं गतस्य ब्रह्मप्राप्तिः, आह सूत्रकारः समाधानमाहेत्यर्थं, ब्रह्मप्राप्तिरमानवपुरुषेण कारिता ब्रह्मप्राप्ति, अन्यथोपासकस्य ब्रह्मप्राप्त्यभावे, तेषामुपासनानां, आतिवाहिकोपकृष्टस्थानादुत्कृष्टस्थानप्रापकः पुरुषः, तादृशा उत्कृष्टस्थानप्रापकाः पुरुषा, अत्र सूत्रे, नयति ब्रह्म नयति, एकवचन'ममानवःपुरुष' इत्येकवचनं, तत्पदेनामानवपुरुषावाचकपदेन, स लोक एव ब्रह्मप्राप्त्यव्यवहितदेवलोक एव, तदेतरलोकेषु ब्रह्मप्राप्तिव्यवहितलोकेषु, तदकथनममानवपुरुषाकथनं, अत्राप्यव्यवहितलोकस्थलेपि, न कथयेत् पूर्वलोकस्थानामेवाग्रे प्रापकतायास्तुल्यत्वादातिवाहिक न कथयेदित्यर्थः, अर्चिर्लोकेत्यादि, अर्चिर्लोकस्य भूर्लोकान्तर्गतत्वादमानुषाद्यसम्भवादित्यर्थः, कस्यचिदुपासकस्य, सा ब्रह्मप्राप्तिः, तेषां लोकानां, श्रुतेः स्वल्पलोकगमनप्रतिपादिकायाः श्रुतेः, सामितत्कल्पनं मुक्तिमार्गीयाल्पलोकप्रतिपादकत्वं, अतोल्पकथनदोषप्रसक्तिः ॥ ५ ॥

---

१. स त° क[2]बपागो । २. °न्त्या क[2] ।

च हेयानां परमफलप्राप्तिविलम्बहेतूनामर्चिरादिलोकानां कामना कुतो यतस्तद्धेतुभूतोपासनाः सम्भवन्ति? किञ्च, (ब्र.सू.४.३.१.) "अर्चिरादिना तत्प्रथिते" रित्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्चिरादिप्राप्तिर्न भक्तिमार्गीयस्येति, तदप्यनुपपन्नं, (श्रीमद्भाग. ११.२१.३२.) "यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यदि" त्युपक्रम्य(श्रीमद्भाग.११.२१.३३.) "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसा स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छती" तिभगवद्वाक्याद् भक्तस्याप्येतद्वाञ्छाफले सम्भवतोन्यथा प्रभुर्न वदेत्, एवं सति भक्तिसुखं हित्वान्यत्र कामनायां हेतुर्वाच्य इत्याकाङ्क्षायां तमाह ।

## उभयव्यामोहात् तत्सिद्धेः ॥ ६ ॥

अत्रेदं ज्ञेयं, देवयानः पन्था अपि भगवतैव सृष्टोस्ति, तथा चोक्तहेतुभिस्तत्र कस्यापि कामाभावे तत्सृष्टिर्व्यर्था स्यादतो भगवानेव कांश्चन व्यामोहयति ज्ञानिनो मर्यादामार्गीयभक्तांश्चातस्तत्कामनासिद्धेस्तत्फलभोग इति ।

यत् त्व'र्चिरादेर्मार्गगन्तृणां देहवियोगेन पिण्डितकरणग्रामत्वेनास्वातन्त्र्यं व्यामोहः, अर्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः, कार्यकरणासामर्थ्यमिति यावत्, तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्त इति सिद्ध'मितिव्याख्यानं, तन्न साधीयः, व्यामोहशब्दस्यान्यथाज्ञानवाचकत्वेनासामर्थ्यावाचकत्वात्, तथा सत्यर्चिर्लोकमपि न प्राप्नुयात् प्रापकाभावादित्युक्तम् ॥ ६ ॥

ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषोस्त्युत स स्वत एव तत् प्राप्नोतीतिसंशय उत्तरं पठति ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥

न हि ब्रह्मप्राप्तिर्विद्युल्लोकसम्बन्धिपुरुषसामर्थ्येनोच्यते किन्तु ब्रह्मसम्बन्धितत्सामर्थ्येन, तथा च यत एव लोकात् तत्प्राप्तिस्ततो ब्रह्मसम्बन्धिपुरुषादेव, एवं सति विद्युल्लोकात् तत्प्राप्तौ यो ब्रह्मसम्बन्धी पुरुषः प्रापक उक्तस्तेनैव ततो वरुणादिलोकेभ्योपि ब्रह्मप्राप्तिः, तत्र हेतुमाह तच्छ्रुतेः, (बृह.८.२.१५.) "तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयतीतिश्रुतेः, अत्रै'त्ये'तिवचनाद् यत एव लोकाद् ब्रह्मप्राप्तिर्भवित्री तत्रैवागत्य ब्रह्म प्रापयतीति गम्यते,

---

उभयव्यामोहात् तत्सिद्धेः ॥ ६ ॥ तेषां ब्रह्मप्राप्त्यधिकारिणां, तद्धेतूभूतोपासनास्तत्तल्लोकीयक्षुद्रानन्दहेतुभूतोपासनाः, भक्तिसुखं परमानन्दात्मकं, ननु तेषामित्यारभ्यावतरणमुक्तं स्फुटार्थं, सूत्रेण समाधानं वक्तुमाहुरत्रेदमित्यादि, उक्तहेतुभिरुत्कृष्टफलं त्यक्त्वा क्षुद्रफल इच्छासम्भवादित्यादिहेतुभिः, तत्रार्चिरादिलोकफले, तत्सृष्टिरर्चिरादिलोकसृष्टिः, उभयव्यामोहादितिसूत्रभागार्थमाहुर्ज्ञानिन इत्यादिना, अतो भगवत्कृतव्यामोहात्, दूषयितुं कस्यचिन्मतानुवादमाहुर्यत् त्वित्यादिना, पिण्डितेत्यादि, ऊर्ध्वलोकगमनासमर्थकरणग्रामत्वेनेत्यर्थः, अस्वातन्त्र्यं स्वतोगमनासामर्थ्यं, अस्वातन्त्र्यं स्वयमूर्ध्वलोकप्रापणेसामर्थ्यं, व्यामोह 'उभयव्यामोह'पदार्थः, दूषयन्ति तन्नेत्यादिना, दूषणहेतुमाहुर्व्यामोहेत्यादिना, तथा सति गन्तुः करणानां सामर्थ्याभावे सति, प्रापकाभावात् प्रापककरणानामभावात् ॥ ६ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥ सूत्रमवतारयन्ति ननु विद्युत इत्यादिना, विद्युतो विद्युल्लोकप्राप्त्यनन्तर, तल्लोकसम्बन्धी तल्लोकवासीत्यर्थः, स गन्ता, तद् ब्रह्म, विद्युल्लोकसम्बन्धी विद्युल्लोकवासी, तेनैव पूर्वं ब्रह्मप्राप्तिकारकत्वेनोक्तेनैव, ततो ब्रह्मप्रापकत्वोक्तितः, उक्तिश्च श्रुता 'वेत्ये'त्यादिरूपा, तथा भगवदीयपुरुष

---

१. तत्तत् कं । २. °दि° कपु । ३ सम्पि° सर्वेप्यादर्शाः । ४. °कानाम° कबपुगो ।

श्रुतौ (बृह.८.२.१५.) "वैद्युतं" लोकमागत्य तस्माद् "ब्रह्मलोकान् गमयती"त्युक्तमिति स पुरुषो वैद्युत इत्युच्यते, न तु तल्लोकवासित्वेन, तथा स "त्येत्ये"ति न वदेत् तत एव ब्रह्मप्रापणे, अत एव "मानस" इत्युक्तिश्च, यदैवं भगवन्मनसि भवत्यथैनं मां प्रापयत्विति तदैव प्रापयतीति तथा, छान्दोग्ये (छान्दो.६.१५.५.) "त्वमानव" इति पठ्यते, तच्चालौकिकत्वं, तदप्युक्तरूपमेवेति न कश्चिद् विशेषः, वाजसनेयके (बृह. ८.२.१५.) "ब्रह्मलोकान् गमयती"ति पठ्यते छान्दोग्ये तु 'ब्रह्मे'ति, तत्रायं भावः, भक्तं तु वैकुण्ठलोकं नयति, ते बहुविधा इति "ब्रह्मलोका"नित्युक्तं, ज्ञानमार्गीयं त्वक्षरं ब्रह्म प्रापयतीति "ब्रह्मे"त्युक्तं, अत एवो'भयव्यामोह' उक्त आचार्येण ॥७॥२॥

॥ इति चतुर्थाध्याये तृतीयपादे द्वितीयमातिवाहिकाधिकरणम् ॥ २ ॥

अत्र सिद्धान्तदार्ढ्यार्थमुक्तमर्थं हस्तपिहितमिव कृत्वा बादरिमतं पूर्वपक्षत्वेनाह ।

(छान्दो.६.१५.४.) "स एतान् ब्रह्म गमयती"त्यत्र 'ब्रह्म'पदेनाविकृतं परमेव ब्रह्मोच्यत उत कार्यरूपो ब्रह्मलोक इति भवति संशयः, परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितयोरुक्तेः,

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥ ( ४. ३. ३. )

कार्यरूप एव स 'ब्रह्म'पदेनोच्यत इति बादरिराचार्यो मन्यते, कुतः? अस्य गत्युपपत्तेः, तस्य परिच्छिन्नत्वेन तत्स्थितिदेशं प्रत्यस्य गन्तुर्गतेरुपपत्तेरित्यर्थः ॥ ८ ॥

## विशेषितत्वाच्च ॥ ९ ॥

(बृह.८.२.१६.) "ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती"तिश्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिता लोका गन्तारश्च दूरदेशगत्या विशेषिता इति न परं ब्रह्म तत् किन्तु कार्यमेवेत्यर्थः, 'लोक'पदं तज्जन्यभोगपरं, तेन तस्यैकत्वेपि विविधभोगज्ञापनाय बहुवचनं घटते ॥ ९ ॥

तत्र ब्रह्मशब्दप्रयोगे[3] हेतुमाह ।

## सामीप्यात् तु तद्व्यपदेशः ॥ १० ॥

तल्लोकस्थितानां नान्यलोकव्यवधानं परप्राप्तौ किन्तु तत एवेति परब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः, तुशब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति ॥ १० ॥

---

एव ब्रह्मगमयितेत्यर्थः, उक्तरूपमेव भगवन्मनोविषयसम्पादकत्वरूपमेव, ते भक्ता लोकाश्च, लोकानित्युक्तं 'तान् वैद्युता'दिति बृहदारण्यश्रुतावुक्तमित्यर्थः, अत एवैतदुभयोः सूत्रकाराभिप्रायविषयत्वादेव ॥ ७ ॥ २ ॥

॥ इति चतुर्थतृतीये द्वितीयाधिकरणम् ॥ २ ॥

**कार्यं बादरिरस्य गत्युपपत्तेः** ॥ ८ ॥ क्रममुक्तिमार्गविचारानन्तरं तत्फलं विचारयतीत्येतदभिप्रायेण सूत्रमवतारयन्त्यत्र सिद्धान्तेत्यादिना, अत्रैतदधिकरणे, सिद्धान्तदार्ढ्यार्थं मर्यादामार्गेपि प्राप्यं परं ब्रह्मैवेति-सिद्धान्तदार्ढ्यार्थं, उक्तमर्थमित्यादि, जघन्याधिकारिणां परब्रह्मप्रापकोर्चिरादिमार्ग इतीममर्थमनुक्त्वेत्यर्थः, अधिकरणरचनार्थं विषयादिकमाहुः 'स एता'नित्यादिना, ब्रह्मपदार्थनिर्धारो विषयः, संशयः स्फुटः, परस्येत्यादि-पूर्वपक्षः, उक्तेः श्रुतावुक्तेः, तस्य कार्यब्रह्मणः ॥ ८ ॥

**विशेषितत्वाच्च** ॥ ९ ॥ ब्रह्मपदस्य कार्यपरतोपपादकश्रुतिं पूर्वपक्ष्यभिमतां प्रदर्शयन्तः सूत्रमवतारयन्ति ब्रह्मेत्यादिना, विशेषिताः श्रुतौ बहुत्ववासाधिकरणत्वाभ्यां विशिष्टा उक्ता इति परब्रह्मणो व्यापकत्वेन दूरदेशस्थ-त्वासम्भवाद्धेतोरित्यर्थः, तद् गन्तृभिर्गम्यं, तज्जन्यः कार्यब्रह्मजन्यः, तस्य कार्यब्रह्मणः ॥ ९ ॥

---

१. °क्तः सर्वेष्वादर्शेषु । २. द्युतं पा, °वं कैबगीं । ३. °गहे° कपु । ४. त क ।

न "न्वा ब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुने" तिवाक्यात् (श्रीमद्भग.८.१६.) ततः पुनरावर्तते, अत्र (बृह.८.२.१६.) "तेषामिह न पुनरावृत्तिरस्ती" ति पठ्यत इति परमेवात्र 'ब्रह्म' शब्देनोच्यत इति प्राप्त उत्तरं पठति ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥

कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मुखेन ब्रह्मणा सहातो ब्रह्मणः सकाशात् परमीश्वरं प्राप्नोत्यतोऽपुनरावृत्तिश्रुतिर्न विरुध्यते, अत्र प्रमाणमाहाभिधानादिति, श्रुतौ तथाभिधानादित्यर्थः, सा तु (तै. महानारा.१२.३.) "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति, 'परान्तकाल' इत्यत्र 'पर' शब्देन ब्रह्मणः पूर्णमायुरुच्यते ॥ ११ ॥

उक्तेऽर्थे श्रुतिं प्रमाणत्वेनोक्त्वा स्मृतिमप्याह ।

## स्मृतेश्च ॥ १२ ॥

(कूर्म.पू.ख.९२.२६९.) "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मान प्रविशन्ति परं पद" मितिस्मृत्यापि स एवार्थः प्रतिपाद्यते ॥ १२ ॥

अत्र सिद्धान्तमाह ।

## परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥

"स एतान् ब्रह्म गमयती" त्यत्र ब्रह्मपदेन परमेव ब्रह्मोच्यत इति जैमिनिराचार्यो मनुते, कुतः? मुख्यत्वात्, बृहत्त्वादिधर्मविशिष्टं हि ब्रह्मपदेनोच्यते, तादृक् परमेव ब्रह्म भवतीति मुख्या वृत्तिर्ब्रह्मपदस्य परस्मिन्नेवान्यत्र गौणी, तथा च मुख्यगौणयोर्मध्ये मुख्यस्यैव बलिष्ठत्वात् तथा॥१३॥

## दर्शनाच्च ॥ १४ ॥

( कौ. १. ३. ) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक" मितिकौशीतकिश्रुतिरग्न्यादिलोकप्राप्तिवद्विशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिं दर्शयति, न हि तत्र 'ब्रह्मलोक' शब्देन कार्यः स उच्यत इति वक्तुं शक्यं, पार्थक्येन प्रजापतिलोकस्योक्तत्वात् ।

अपरं च (छान्दो.७.१०.१.) "ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसम्भवन्ती" ति च्छान्दोग्यश्रुतिं विषयीकृत्य ( ब्र. सू. ४.३.१. ) "ह्यर्चिरादिना तत्प्रथिते" रित्युपक्रमं आचार्येण

---

सामीप्यात् तु तद्व्यपदेशः ॥ १० ॥ वाद्यभिमतसूत्रावतरणमाहुस्तत्रेत्यादिना, तल्लोकः कार्यब्रह्मलोकः, नान्येत्यादि, भूरादिलोकस्थितानामिवेत्यर्थः, तत एव कार्यब्रह्मलोकादव्यवहित एव परब्रह्मलोक इत्यर्थः, व्यवच्छिनत्ति कार्यब्रह्मणि व्यवच्छिनत्ति ॥ १० ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥ प्रजापतौ परब्रह्मसामीप्याद् ब्रह्मपद एवमुक्तावपुनरावृत्तिश्रुतिविरोधस्तत्प्राप्तावित्याशङ्क्य वादी समाधत्त इति सूत्रमवतारयन्ति नन्वित्यादिना, ततः कार्यब्रह्मलोकात्, अत्र देवयानमार्गे, तेषां गन्तॄणां, सूत्रार्थं विवृण्वन्ति कल्पेत्यादिना ॥ ११ ॥

स्मृतेश्च ॥ १२ ॥ स एवार्थो ब्रह्मणा सह सर्वेषां मुक्तिरूप एवार्थः ॥ १२ ॥

परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥ पञ्चभिः सूत्रैर्बादरिपक्षोपन्यासं कृत्वा जैमिनिमतोपन्यासमुखेन स्वसिद्धान्त प्रतिपादयतीत्यभिप्रायेण सूत्रमवतारयन्त्यत्र सिद्धान्तमित्यादिना, तादृक् परं बृहत्त्वादिधर्मविशिष्टं परं, एवेत्येवकारेण कार्यब्रह्मव्यावृत्तिः, मुख्या वृत्तिरवयवशक्तिसमानाधिकरणरूढिशक्तिर्ब्रह्मपदस्य अन्यत्र कार्यब्रह्मणि, तथा ब्रह्मपदं परब्रह्मप्रतिपादकमेवेत्यर्थः ॥ १३ ॥

दर्शनाच्च ॥ १४ ॥ सूत्रमवतारयन्ति स एतमित्यादिना, दर्शयति कौशीतकीश्रुतिर्बोधयति, तत्र श्रुतौ, तथैव

---

१. °भु° भापा । २. °ते° कबपागो । ३ °म्य पा ।

कुतोन्यत्रार्चिःशब्दस्याभावात् तत्र चान्ते (छान्दो. ७. १०. १.) "ब्रह्म गमयती"त्युच्यते, तथा च छान्दोग्येनुक्तानामन्यत्रोक्तानां लोकानां मार्गैक्यसिद्ध्यर्थ तत्रैव सन्निवेशो "वायुमब्दात्" "तडितोधिवरुणो" "वरुणादधीन्द्रप्रजापती" (ब्र.सू. ४. ३. २-४.) इत्यन्तेनोक्तः, एवं सत्यादावर्चिषं ततोहस्ततः सितपक्षं तत उदगयनं ततः संवत्सरं ततो वायुं ततो देवलोकं तत आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापतिं ततश्चामानवेन पुरुषेण ब्रह्मप्राप्तिरितिनिर्णयः सम्पद्यते, एवं सति प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासम्भवात् तच्छङ्कापि भवितुं नार्हति यद्यपि तथापि व्यासोक्तमार्गैक्यममन्वानस्तथावददिति ज्ञायते, परन्तु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद् भगवदवतारत्वाच्च तदुक्त एव शास्त्रार्थ इति मन्तव्यं, किञ्च, (कौ. १. ३.) "स प्रजापतिलोकं स ब्रह्मलोक"मित्यत्र 'ब्रह्म'पदस्य परवाचकत्वं तेनापि वाच्यं चेत् तद्दृष्टान्तेनान्यत्रापि तथैव वाच्यं, बाधकाभावात्।

ननु परस्य व्यापकत्वान्निर्विशेषत्वाच्च न गन्तव्यतोपपद्यते, जीवस्याप्यविद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासम्भवात् तन्नाशे च वस्तुतोभिन्नत्वात् स्वरूपेणावस्थानमेव भवतीति न गन्तृत्वमप्युपपद्यते, तस्यैवाभावात्, जीवत्वदशायामुपाध्यवच्छेदाद् गन्तृत्वं जीवस्यापरस्य ब्रह्मणश्चाविद्यकरूपनामवत्त्वेन गन्तव्यता चोपपद्यते, उपासनाफलत्वादस्य गमनस्योपास्यस्य च सगुणत्वेन तत्प्राप्तेरेवोचितत्वाच्च, निर्गुणब्रह्मविद्यावतो गन्तृत्वासम्भव इत्युक्तमतो बादरिमतमेव साधीयः, न च 'ब्रह्म'पदस्य मुख्यार्थत्वमुक्तरीत्यात्र सम्भवत्यतोत्रामुख्यार्थत्वमेवानुसर्तव्यमिति चेत्।

स्यादेतदेवं यद्यौपाधिकमुपास्यरूपं जीवत्वं वा स्यात्, न त्वेवं, (ब्र. सू. ३. २. २२.) "प्रकृतैतावत्त्वं हि प्रतिषेधती"त्यादिभि (ब्र. सू. २. ३. २९.) "स्तद्गुणसारत्वाच्च तद्व्यपदेश" इत्याद्यधिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणामौपाधिकत्वस्य जीवपुरुषोत्तमाभेदस्य च पुरस्तादेव निरस्तत्वात्, न च व्यापकत्वं गन्तव्यत्वे बाधकं, प्रारब्धभोगं विना तत्प्राप्त्यसम्भवात्, यदा यत्र तद्भोगसमाप्तिस्तदा तत्र तत्प्राप्तेर्निःप्रत्यूहत्वात्, किं चोपास्यरूपाणां सर्वेषां निर्गुणत्वमेवोपासकस्य परं सगुणत्वेन तत्तारतम्यात् फलतारतम्यं, यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोभूत् स निर्गुणब्रह्मविद्यावानित्युच्यते, तादृशस्यैव मुक्तिप्रकारद्वयमुक्तं सद्योमुक्तिक्रममुक्तिभेदेन, (बृह. ६. ४. २२.) "न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येती"त्यादिश्रुतिस्तु प्रारब्ध-

---

सन्निवेशश्छान्दोग्येनुक्तानामन्यत्रोक्तानां पर्वत्वेनार्चिरादिमार्ग एव सन्निवेशः कार्य इत्यर्थः, ततोहस्तदनन्तरमहर्गच्छतीत्यर्थः, अमन्वानो 'वायुमब्दा'दित्यधिकरणे पूर्वपक्षे मार्गभेदवादी जैमिनिरमन्वानः, तथा मार्गभेदं, तथा च फलांशे वैषम्याभावेपि मार्गांशे व्याससिद्धान्तवैषम्यं जैमिनेर्बोद्धव्यमिति फलितं, तदुक्त एव व्यासोक्त एव, तेनापि मार्गभेदवादिनापि, तद् दृष्टान्तेन कौशीतकीश्रुत्युक्तप्रकारदृष्टान्तेन, अन्यत्रापि यत्र श्रुतौ मुक्तस्य लोकेषु गमनक्रमे प्रजापतिब्रह्मलोकेतिद्वयस्योपादानं नास्ति तत्रापीत्यर्थः, तथैव वाच्यं ब्रह्मपदस्य परब्रह्मवाचकत्वमेव वाच्यमित्यर्थः, दूषयितुं शङ्कराचार्यमतमाशङ्कन्ते नन्वित्यादिना, तन्नाशेविद्योपाधिनाशे, तस्यैव गन्तुरेव, बादरिमतमेवामानवपुरुषश्चतुर्मुखं प्रापयतीतिबादरिमतमेवेत्यर्थः, इति चेदित्यन्तेनोक्तपूर्वपक्षे समाधानमाहुः स्यादेतदित्यादिना, प्रतिषेधति 'नेति नेती'तिश्रुति, प्रकृतं यत् परिच्छिन्नत्वं परिच्छिन्नप्रमाणवत्त्वमेतदेव प्रातीतिकं श्रुतिः प्रतिषेधति न तु ब्रह्मात्मकं जगत् प्रतिषेधतीत्यर्थः, यदा यत्र यस्मिंल्लोके यस्मिन् काले, तत्प्राप्तेर्ब्रह्मप्राप्तेः, फलतारतम्यं विलम्बाविलम्बादिरूपं तारतम्यमित्यर्थः, अन्यथा निर्गुणब्रह्मविद्यावतः प्रारब्धभोगानङ्गीकारे ॥ १४ ॥

---

१. °नी° पुगो।

रहितविषया, निर्गुणब्रह्मविद्यावतोपि प्रारब्धभोगस्तु त्वयापि वाच्यः, अन्यथा प्रवचनासम्भवेन ज्ञानमार्ग एवोच्छिद्येत, (तै. महा. नारा. १२. ३.) "ते ब्रह्मलोके तु परान्तकाल" इतिश्रुतिरपि 'परान्तकाल' एव येषां प्रारब्धभोगसमाप्तिस्तद्विषयिणीति मन्तव्यं, अन्यथा (तै. महा. नारा. १२. ३.) "वेदान्तविज्ञाने"त्याद्युक्तधर्मविशिष्टानां मुक्तौ विलम्बो नोपपद्येत इतिदिक् ॥ १४ ॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥

अपि च (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मिति संक्षेपेणोक्त्वा "तदेषाभ्युक्ते"ति तद्विवरिकामृचं प्रस्तुत्य सोक्ता, (तै. ब्र.) "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति, अत्रोपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिरुच्यत इति कार्यरूपे वस्तुमात्रे प्रतिपत्तिर्न क्वापि श्रुतेरभिप्रेतातोत्रापि परमेव 'ब्रह्म'पदेनोच्यते, ऋगर्थस्त्वानन्दमयाधिकरणे प्रपञ्चित इति नात्रोक्तः॥ १५ ॥ ३ ॥

॥ चतुर्थाध्याये तृतीयपादे तृतीयं कार्याधिकरणम् ॥ ३ ॥

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वामानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्तीति सिद्धं, तत्रेदं सन्दिह्यते, अर्चिरादिलोकप्राप्तिर्ह्युपासनाविशेषफलमेवं सत्यमानवः पुरुषस्तान् सर्वान् ब्रह्म प्रापयत्युत कांश्चिदेवेति ?

किमत्र युक्तं ? सर्वानेवेति, यतोर्चिरादिमार्गगतानामन्ते ब्रह्मप्रापणार्थमेव स नियुक्तस्ततोन्यथाकरणे हेत्वभावात् तथैव स कर्तेति प्राप्त उच्यते ।

## अप्रतीकालम्बनान् नयतीति बादरायण उभयथादोषात् तत्क्रतुश्च ॥ १६ ॥

श्रुतौ ब्रह्मत्वेनैव सर्वत्रोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वेनोपासनायाः फलसाधनत्वं वदति न तूपास्ये ब्रह्मतामपीति मन्वाना य उपासते ते प्रतीकालम्बना इत्युच्यन्ते, तथा च सत्यपि वेदविहितत्वेनोपासनायाः कृतत्वेन सफलत्वात् तत्फलत्वेनोपासकानामर्चिरादिलोकप्राप्तावपि तानमानवः पुरुषो ब्रह्म न

---

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥१५॥ पूर्वोक्तरीत्या प्रासङ्गिकं मतान्तरं परिहृत्य जैमिनिमतं सिद्धान्तत्वेनोरीकृत्य सूत्रं व्याकुर्वन्त्यपि चेत्यादिना, तद्विवरिकां 'ब्रह्मविदाप्नोति पर'मित्यस्य विवरिकां, सोक्ता 'सत्यं ज्ञान'मित्यृगुक्ता, उपक्रमानुरोधेन 'ब्रह्मविदाप्नोति पर'मित्यस्यानुरोधेन, प्रतिपत्तिर्मुक्तिफलभोगरूपा, अभिप्रेतेत्यभिसन्धिरितिसूत्रभागस्यार्थः, अत्रापि 'ब्रह्म गमयती'तिश्रुतावपि, ऋगर्थस्तु 'सत्यं ज्ञानमनन्त'मित्यृगर्थस्तु ॥ १५ ॥ ३ ॥

॥ इति चतुर्थतृतीये तृतीयाधिकरणम् ॥ ३ ॥

अप्रतीकालम्बनान् नयतीति बादरायण उभयथादोषात् तत्क्रतुश्च ॥१६॥ पूर्वाधिकरणसिद्धान्तमनुवदन्तः सूत्रमवतारयन्ति क्रममुक्त्यधिकारिण इत्यादिना, सिद्धमेतत्सूत्रपूर्वसूत्रेषु सिद्धं, तत्रामानवपुरुषेण प्रापणे, तानर्चिरादिमार्गगतान्, संशयमुक्त्वा पूर्वपक्षमाहुः सर्वानित्यादि, सोमानवः पुरुष', समाधानमाहुः श्रुताविल्यादिना, शुद्धब्रह्मरूपेषु ब्रह्मविभूतिरूपेष्वित्यर्थ', अतथात्वं ज्ञात्वा शुद्धब्रह्मत्वमज्ञात्वा, उपास्ये ब्रह्मताम-ब्रह्मत्वेन निर्णीते ब्रह्मत्वेनोपसना कार्या, इति मन्वाना य इति, उपासनाप्रकारानङ्गीकुर्वतः, तथा चैतादृशानुद्दिश्याग्र उच्यत, उपासते त इत्यादि, तेब्रह्मत्वेन निर्णीते ब्रह्मत्वेनोपासनाकर्तारः, सत्यपि तेषां प्रतीकालम्बनत्वे सत्यपीत्यर्थ', शुद्धब्रह्मत्वमुपास्यविभूतिरूपेषु शुद्धब्रह्मत्वं, बादरायणो व्यासः, एतदन्तसूत्रार्थमुक्त्वावशिष्टभागार्थं वक्तुमाहुस्तत्रेत्यादि, यद् ब्रह्मरूपं विभूत्यात्मक ब्रह्मस्वरूपमित्यर्थ', तस्य तादृशप्रतीकोपासकस्य, सूत्रशेषं व्याकर्तुं-

---

१ °द्येते° ख्रार्कप । २. °त्वोपा° बपागो ।

प्रापयति किन्तु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते, तत्र हेतुमाहोभयथा दोषादिति, वस्तुतो यद् ब्रह्मरूपं तत्राब्रह्मत्वनिश्चय उपासनार्थं च ब्रह्मत्वेन भावनमेवमुभयथाकरणे दोषः सम्पद्यत इति तस्य न ब्रह्मप्राप्तावधिकारोस्तीति युक्तं तदनयनमित्यर्थः, तथा च श्रुति (तै. ब्र.) "रसन्नेव स भवति असद् ब्रह्मेति वेद चेदि"ति (महा. भा. शा. प. २२१. २७.) "योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते किं तेन न कृतं पापं चौरेणात्मापहारिणे"ति,

एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्यापि तामाह तत्क्रतुश्चेति, (श्रीमद्भाग. ११.२०.३२.) "सर्वं मद्भक्तियोगेने"तिवाक्यान्न तस्योपासनापेक्षेति न प्रतीकादिसम्भावना तत्र, (श्रीमद्भाग. ११. २० ३२.) "कथञ्चिद् यदि वाञ्छती"तिवाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभजनलक्षणक्रतुश्च नीयत इत्यर्थः, वस्तुतस्तु भक्तस्यामानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोतीतिज्ञापनाय प्रथमान्त उक्तः, ननु ब्रह्मणोधिकं न किञ्चिदस्ति (श्वे. ६. ८.) "न तत्समश्चाभ्यधिकश्च दृश्यत" इतिश्रुतेः, एवं सति छान्दोग्ये सनत्कुमारनारदसंवादे (छान्दो. ९. १०. १.) "स यो नाम ब्रह्मेत्युपास्त" इत्यादिना नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्वस्मात् पूर्वस्माद् भूयस्त्वं चोच्यतेतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमिति चेत्, मैवं, विभूतिरूपाणां नियतफलदातृत्वाद् येन रूपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनं येन रूपेण ततोधिकफलदानं तत्र ततोधिकगुणप्रकटनमिति पूर्वस्मादाधिक्यमुच्यते, एवमेव सर्वत्र, नियतफलदानं तु स्वतन्त्रेच्छत्वाल्लीलारूपमिति नानुपपन्नं किञ्चित्, प्रतिमादिष्वावाहनेन सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे, भक्तिमार्गे तु भक्त्या[2] तत्र प्रकटे तथा, गुरौ तु (श्रीमद्भाग. ११. ३. २१.) "शाब्दे परे च निष्णातं ब्रह्मणी"तिविशेषणवत्त्वेन भगवदावेशात्तत्र तद्भावनमिति सर्वमवदातम् ।

अपि च बादरिजैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वमत्रापीत्यवगम्यते, तत्र च कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्तिविषयत्वमुक्तं पूर्वोत्तरपक्षभेदेन, बादरिमते सविशेषस्यैवोपास्यत्वाद् विशेषाणां चाविघ्नकत्वादुपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति, एवं सत्यप्रतीका-

---

माहुरेवमित्यादि, तत्क्रतुश्चेतीति, तद् भजनं क्रतुर्यस्य स तत्क्रतुर्भक्त इत्यर्थः, न तस्येत्यादि, भक्तियोगस्यैव प्रापकत्वान्नेतरापेक्षेत्यर्थः, प्राचीनभजनेत्यादि, प्राचीनभजनलक्षणः क्रतुर्यस्येत्यर्थः, नीयते भक्तियोगेन नीयत इत्यर्थः, नीयत इतिलकारव्यत्ययात् सूत्रे नयतीत्यस्यानुसारात् पक्षान्तरमाहुर्वस्तुत इत्यादि, ब्रह्मलोकानिति नानालीलास्थानाभिप्रायेणोक्तं, प्रथमान्त उक्तः सूत्रे नयतीतिकर्तरिप्रयोग उक्त इत्यर्थः, प्रथमान्तकर्तृकप्रयोगेण 'स्वतन्त्रः कर्ते'तिस्मृतेर्गमने कर्तुः स्वातन्त्र्यमपि द्योतितं,उपास्यरूपेष्वसत्त्वेन ज्ञानेब्रह्मत्वेन ज्ञाने 'चासन्नेव स भवती'त्यादिदूषणान्युक्तानि, वादी शङ्कते नन्वित्यादि, उत्तरोत्तरं पूर्वपूर्वापेक्षयाधिकाधिकत्वेन, भूयस्त्वमुत्तरोत्तरस्य भूयस्त्वं, न ब्रह्मत्वं ब्रह्मत्वेनाभिमतपूर्वस्मादुत्तरस्याधिक्यश्रवणा'न्न तत्सम'इत्यादिश्रुतिविरोधान्न ब्रह्मत्वमित्यर्थः, समाधानमाहुर्मैवमित्यादिना, तथा च न्यूनाधिक्यफलदातृत्वरूपमेव तेषु न्यूनाधिक्यव्यवहारहेतुर्न तु वस्तुनि ब्रह्मणि परिच्छिन्नत्वादिकमपीतिभावः, ननु वस्तुतोतद्रूपे प्रतिमादौ तत्त्वेन भावनाद् यथावाचनिकं तत्तत्फलं भवति तथा ब्रह्मणि तत्तद्रूपे सत्यपि ब्रह्मत्वेनोपासनेपि वाचनिकं फलं भविष्यतीत्यत आहुः प्रतिमेत्यादि, सन्निहित इति, तथा च तत्र विद्यमानस्यैव भावनात् फलं न स्वसतः सकाशादित्यर्थः, तत्र प्रतिमादौ, तथा भावनं फलदानं चेत्यर्थो न त्वविद्यमाने, तत्र गुरौ, तद्भावनं ब्रह्मभावनं, सर्वं पूर्वपक्षितं, अवदातं विद्यमानस्यैव भावनाद् वाचनिकं फलं न स्वसतः सकाशादिति समाहितमित्यर्थः, ऋषिद्वयमतनिरूपणोत्तरं स्वसिद्धान्तनिरूपणे व्यासाशयमाहुरपि चेत्यादि, तत्समानविषयत्वमप्रतीकालम्बनान् नयतीतिसूत्रभागेन प्रतीकालम्बनकर्तुर्बादरेर्निराकरणं जैमिनिमताङ्गीकारश्चेति सूत्रे

---

१. प्राचीनभगवद्भजन° सर्वेप्यादर्शाः । २. °क्त्यां क ।

लम्बनान् नयतीति वदता व्यासेन बादरिमतानुसारिण उपासकस्य न कस्यापि ब्रह्मप्राप्तिरिति ज्ञाप्यते, वस्तुतस्तूपासनायामुपास्यस्वरूपज्ञानस्याप्यङ्गत्वात् तन्मतीयानामुक्तरीत्या तदभावेन निरङ्गत्वादर्चिरादिप्राप्तिरपि न सम्भवति किं पुनर्ब्रह्मण इतिनिगूढाशयो व्यासस्य, एवं सति परप्राप्तावेवोपोद्बलकमुक्तं भवतीति सैव व्यासाभिमतेति सिद्धम् ।

ये तु प्रतीकेष्वब्रह्मक्रतुत्वं वदन्तः पञ्चाग्निविद्यायास्तथात्वेपि वचनबलात् तद्वतो ब्रह्मप्राप्तिरिति वदन्ति, तत्रेदमुच्यते, वचनं तु वस्तुसतः पदार्थस्य बोधकं न तु कारकमतस्तच्चेद् बोधयति तदा प्रतीकालम्बनान् नयतीतिव्यासोक्त्यविरोधाय तत्राप्यप्रतीकत्वमूरीकार्यं, अन्यथा पञ्चाग्निविद्यानिरूपिकां श्रुतिं पश्यन्नेवं स न वदेत्, न 'चौत्सर्गिकं पक्षमाश्रित्य तथोक्त'मिति वाच्यं, तस्य बाधकापनोद्यत्वाद् वचनस्य चोक्तन्यायेनाबाधकत्वात्, यत्र वचनस्य बाधकत्वमुच्यते तत्र बाधबोधकत्वमेव न तु तथात्वमित्युपेक्षणीयास्ते, ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे (छान्दो. ९.३.२.) "मनो ब्रह्मोपास्त" इति वदेन् न तु प्रकारवाची'ति'शब्दशिरस्कं 'ब्रह्म'पदमत उपासनाप्रकारावच्छेदकत्वमेव 'ब्रह्म'पदस्य न तु स्वरूपनिरूपकत्वमिति चेत्, हन्तेदं शब्दार्थानवगमविजृम्भितमेव, यतो (छान्दो. ९. ३. १.) "मन उपास्स्वे"त्युक्त्वा तदुपासनाफलं "यावन्मनोगतं तत्रास्य कामचारो भवती"ति वदिष्यंस्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह (छान्दो. ९.३.१.) 'मनो ब्रह्मेति', 'इति'शब्दोत्र हेतुत्ववाची, तथा च यतो 'मनो ब्रह्मातो हेतोस्तदुपासनं तादृक्फलसाधकमित्यर्थः, अत एव (छान्दो.९.३.१.) 'मनो हि ब्रह्म मन उपास्स्वे'ति पूर्वमुक्तं, सर्वत्रैवमेव ज्ञेयम् ॥ १६ ॥ ४ ॥

॥ इति चतुर्थाध्याये तृतीयपादे चतुर्थमप्रतीकाधिकरणम् ॥ ४ ॥

---

तात्पर्यवत्त्वमित्यर्थः, तत्र बादरिजैमिनिमतयोः, प्राप्तिविषयत्वं प्राप्तेर्विषयत्वमित्यर्थः, पूर्वोत्तरेत्यादि, बादरिमतं पूर्वपक्षत्वेन जैमिनिमतं चोत्तरपक्षत्वेनेत्यर्थः, उक्तरीत्योपासनानामाविद्यकत्वेनालीकत्वादित्युक्तरीत्येत्यर्थः, तदभावेनोपास्यप्रमाभावेनेत्यर्थः, उपोद्बलकं साधकं सूत्रं, सैव परप्राप्तिरेव, दूषयितुं शाङ्करमतमनुवदन्ति य इत्यादिना, प्रतीकेष्वारोपितब्रह्मत्वप्रकारकज्ञानविशेष्येषु, तथात्वेपि प्रतीकालम्बनत्वेपि, अब्रह्मक्रतुत्वेपीति फलितं, तद्वतः पञ्चाग्निविद्यावतः, तद् दूषयन्ति तत्रेदमित्यादिना, कारकं ब्रह्मप्राप्तौ कारणमित्यर्थः, तत् पञ्चाग्निविद्यावाक्यं, बोधयति प्रतीकोपासकस्य ब्रह्मप्राप्तिं बोधयति, तत्रोपासनाविषये, अप्रतीकत्वं वास्तवं ब्रह्मत्वं, स सूत्रकारः, एवं न वदेदप्रतीकोपासकानां नयनं न वदेत्, इत्थं च पञ्चाग्निविद्यायां 'मूर्धैव सुतेजा' इत्यादिश्रुतिभिरुपास्यानामङ्गत्वबोधनादङ्गोपासनैवेयं न प्रतीकोपासनेत्यर्थः, औत्सर्गिकमित्यादि, तथा च बाधकापोद्यो नियम उत्सर्गः यावदुपासकस्य सर्वत्र ब्रह्मातिरिक्ते मिथ्यात्वनिश्चयो नास्ति तावत् सर्वत्रोपास्येङ्गत्वं जानाति तद्दशामभिप्रेत्य चाप्रतीकान् नयतीति व्यासैरुक्तं वस्तुत'स्त्वथात आदेशो नेति नेती'त्यादिवाक्यैः सर्वस्य मिथ्यात्वे निश्चिते सर्वस्मिन्नुपास्ये ब्रह्मत्वाङ्गत्वादीनां बाधनादप्रतीकोपासनासम्भवादुत्सर्गपक्षमादाय व्यासैस्तथोक्तत्वेपि प्रतीकोपासनापक्ष एव व्यासाभिप्रेत इत्यर्थ., तस्य प्रतीकोपासनपक्षस्य, बाधकेत्यादि, सकलोपास्यानां मिथ्यात्वेब्रह्मत्वेनोपासने प्रतीकोपासनं स्यात् तच्च 'सर्वं खल्विदं ब्रह्म' 'तदात्म्यमिदं सर्वं' 'मेकोहं बहु स्या'मित्यादिश्रुतिवाक्यैर्बाधितत्वान्न वाच्यमित्यर्थः, वचनस्य मिथ्यात्वबाधकवचनस्यैवमन्यस्यापि विधिभिन्नस्य, उक्तन्यायेन 'वस्तु सतः पदार्थबोधकं न तु कारक'मित्युक्तरीत्येत्यर्थः, तथा च वचनस्याबाधकत्वेपि बाधकबोधकता तिष्ठत्येवेतिभावः, तत एव निवृत्तिसिद्धेरितिभावः, पञ्चाग्निविद्याया ब्रह्मविद्यात्वे शङ्कते नन्वित्यादि, इतिशब्दशिरस्कं 'मनो ब्रह्म इत्युपासत' इत्याकारकमित्यर्थः, प्रकारावच्छेदकत्वं ब्रह्मत्वेनोपासनं कार्यमितिप्रकारबोधकत्वमुपास्ये ब्रह्मस्वरूपं वा बोधकत्वमित्यर्थः, हन्तेति श्रुत्यर्थानवबोधात् खेदार्थकं, इदं ब्रह्मपदसमभिव्याहाराद् ब्रह्मत्व उपासनाप्रकारावच्छेदकत्वनिर्वचनं, शब्दार्थेत्यादि, श्रुतिशब्दार्थाज्ञानविजृम्भितमित्यर्थः, बाधज्ञानं प्रकटीकुर्वन्ति यत इत्यादिना, तन्मनोगतं मनसा विचारितं, तत्र फले, अस्योपासकस्य, कामचारो यावद्वाञ्छितसिद्धिरूपः, तदुपासनाया मनउपासनायाः, एतत्फलेत्यादि, वाञ्छितफलसाधकत्व इत्यर्थः, सर्वत्र 'ब्रह्म'पदोत्तरे'ति'शब्दस्थले ॥ १६ ॥ ४ ॥

॥ इति चतुर्थतृतीये चतुर्थाधिकरणम् ॥ ४ ॥

---

१ °त सत क।

सर्वाण्युपास्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेवेति सिद्धं, तत्रेदं चिन्त्यते, ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिरुत कश्चिद् विशेषोस्तीति ? तत्रोभयोरपि ब्रह्मोपासकत्वेनाविशेषेणैव फलं भवतीति प्राप्ते प्रत्याह ।

## विशेषं च दर्शयति ॥ १७ ॥ ( ४. ३. ५. )

**विशेषं च श्रुतिर्दर्शयति, तैत्तिरीयके पठ्यते** (तै. ब्र.) "ब्रह्मविदाप्नोति परमि"ति, गूढाभिसन्धिना सामान्यत एतावदुक्त्वा गूढं तमुद्धाटयन्त्यतिगोप्यत्वमस्मिन्नर्थेनुभवैकवेद्यत्वं च ज्ञापयन्त्याह "तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति, 'तत्' पूर्वोक्तं प्रतिपाद्यन्तेनाभिमुखीकृत्ये'ष'-र्गु'क्ता,' तदनुभवकर्तृभिरितिशेषः, 'ब्रह्मवि'दक्षरब्रह्मवि'दाप्नोति' सान्निध्यादक्षरमेवाप्नोति, एतावानर्थो 'यो वेदे'त्यन्तयर्चोक्तः,

अथ 'परमाप्नोती'त्यस्यार्थ उच्यते 'निहित'मित्यादिना, अत एव मध्येक्रियापदमुभयसम्बन्धित्वज्ञापकत्वमुक्तं, तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा, तत्रादौ मर्यादायामुच्यते, इहायमाशयो ज्ञेयः, (कठोप.२.२२.) "नायमात्मा प्रवचनेने"तिश्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ, एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोधः स्यात् तेनैवमेतदर्थो निरूप्यते ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदेकपर्यवसायित्वात्, भक्तानामेव पुरुषोत्तमपर्यवसायित्वात्, तदुक्तं भगवद्गीतासु (भग. १२. २.) "एवं सततयुक्ता य" इतिप्रश्ने (भग. १२. २.३.) "मय्यावेश्य मनो ये मां" "ये त्वक्षरमनिर्देश्यं" श्रीभागवते च (श्रीम.११.१४.२१.) "भक्त्याहमेकया ग्राह्य" "स्तस्मान् मद्भक्तियुक्तस्ये"त्युपक्रम्य ( श्रीमद्भाग. ११. २०. ३१. ) "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"त्यादिना, तथा च ब्रह्मविदं चेद् भगवान् वृणुते तदा भक्तिरुदेति, तत्प्रचुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं त"द्गुहायां" हृदयाकाशे प्रकटीकरोति तत्"परमव्योम"शब्देनोच्यते, अलौकिकप्रयोगेण तस्यालौकिकत्वं ज्ञाप्यते, यथा स्वस्थापितं वस्त्ववश्यं स्वदर्शनयोग्यं भवति तथात्र भगवानपीतिज्ञापनाय 'निहित'मित्युक्तं, तथा च 'परमाप्नोती'तिपदविवृतिरूपत्वादस्य 'गुहायां' 'परमे व्यो'म्नि निहितं यो वेद स' (बृह. ६. ४. २२.) "नास्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येती"तिश्रुत्युक्तरीत्या 'परमाप्नो'तीत्यर्थः सम्पद्यते,

---

**विशेषं च दर्शयति ॥ १७ ॥** पूर्वाधिकरणसिद्धान्तमनुवदन्तोधिकरणमवतारयन्ति **सर्वाणी**त्यादिना, **तदुपासकानां** ब्रह्मत्वेन विभूतिरूपोपासकानां, **इदं** वक्ष्यमाणं, संशयमुक्त्वा पूर्वपक्षमाहुस्**तत्रे**त्यादिना, **अत एवा**धिकारभेदेन फलभेदावश्यकत्वादेव, उभयसम्बन्धित्वज्ञापनायोभयफलप्राप्तिः, **इह** फले, **अयं** वक्ष्यमाणः, **एवं सति** पुरुषोत्तमस्य वरणमात्रलभ्यत्वे सति, **तत्साधनत्वे** पुरुषोत्तमप्राप्तिसाधनत्वे, **तद्विरोधो** वरणमात्रलभ्यत्वविरोधः, **एतदर्थ** उक्तश्रुत्यर्थः, **तेषां** ज्ञानमार्गीयाणां, **तदेके**त्यादि, अक्षरज्ञानमात्रविश्रान्तत्वादित्यर्थः, **भक्तानामेवे**त्येवकारेण ज्ञानिव्यवच्छेदः, **ब्रह्मविद**मक्षरविदं, **तत्प्रचुरे**त्यादि, **तस्य** वृतस्य, भगवति प्रचुरभावे सतीत्यर्थः, **तत्** निहितव्यापिवैकुण्ठं हृदयाकाशं, **अलौकिकप्रयोगेण** 'परमे व्योम'न्नित्यलौकिकप्रयोगेण, **तस्य** तादृशहृदयाकाशस्य, **अत्र** गुहायां, **भगवानपीति**, दर्शनयोग्यो भवतीतिविभक्तिविपरिणामेनान्वयो बोध्यः, **तथा च पर**मित्यादि, अत्र ह्येवं बोध्यं, 'ब्रह्मविदाप्नोति पर'मित्यत्र देहलीदीपन्यायेन क्रियापदमुभयत्रान्वेति ब्रह्मविद् ब्रह्माप्नोति परमाप्नोतीतिरीत्या, च इत्थं विवरणर्च्यपि 'यो वेदे'त्यन्तो भागो 'ब्रह्मविदि'त्यन्तस्य विवरणं 'निहितं गुहाया'मित्यादि-

---

१. स्वद° कगो । २. °नी गो ।

अथ शुद्धपुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह 'सोश्नुत' इत्यादिना, अत्रायमभिसन्धिः, यथा स्वयं प्रकटीभूय लोके लीलां करोति तथात्यनुग्रहवशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीला रसानुभवं कारयतीति 'स' भक्तो 'ब्रह्मणा' परब्रह्मणा पुरुषोत्तमेन 'सह' 'सर्वान् कामानश्नुत' इति, चकारादुक्ता श्रुतिः स्मृतयश्च संगृह्यन्ते, एवं सति ज्ञानमार्गीयाणामक्षरप्राप्तिरेव भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम् ॥ १७ ॥ ५ ॥

॥ इति चतुर्थाध्याये तृतीयपादे पञ्चमं विशेषाधिकरणम् ॥ ५ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ।

---

भागस्तु 'परमाप्नो'तीत्यस्य विवरणं बोध्य, 'यो वेदे'त्यस्यापि देहलीदीपन्यायेनोभयत्रान्वय इति फलितं, 'स' इति यत्पदसमानार्थक पदं बोध्य, अस्य परवेत्तुः, ब्रह्मैव संश्चतुर्भुजाद्याकारवान् सन्, ब्रह्माप्येति पूर्वोक्तरीत्यानुग्रहबलाद् व्यापिवैकुण्ठस्थं पुरुषोत्तमं प्राप्नोतीत्यर्थः, मर्यादापुष्टिज्ञानिभक्तिगतिं निरूप्य शुद्धपुष्टिभक्तस्य श्रीगोकुललीलाप्रवेशमाहुरथ शुद्धेत्यादिना, स्वान्तःस्थितमपीति, अपिशब्दाद् भक्तस्नेहातिशयेनातिकृपया, बहिःस्थितांस्तु स्वलीलामनुभावयत्येवेति सिद्धं, स शुद्धपुष्टिमार्गीयः, चकारात् सूत्रस्थचकारात्, स्मृतयश्च 'मय्यावेश्य मनो ये मां' श्रीभागवते 'भक्त्याहमेकया ग्राह्यस्तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवे'दिहेत्यादिरूपा ॥ १७ ॥ ५ ॥

॥ इति चतुर्थतृतीये पञ्चमाधिकरणम् ॥ ५ ॥

इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतगोपालजीविरचितेऽणुभाष्यपदप्रदीपे चतुर्थाध्यायस्य
तृतीयः पादः ॥ ३ ॥

# ॥ अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥



(तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्युपक्रम्य "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति तैत्तिरीयके पठ्यते, तत्रेदं सन्दिह्यते, किमन्तःस्थित एवाश्नुत उत पुनर्जन्म प्राप्येति, तत्रान्त्यस्त्वनुपपन्नः (छान्दो. १०. १५. १.) "न स पुनरावर्तते" (बृह. ८. २. १५.) "तेषामिह न पुनरावृत्तिरस्ती"त्यादिश्रुतिविरोधात् कर्माभावाच्चेति प्राप्ते प्रतिवदति,

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ (४. ४. १.)

सम्पद्य ब्रह्म सम्पद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशात् स्वरूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो भवत्येव, आविर्भावस्य भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वं नोक्तं, ननूक्तं (छान्दो. १०. १४. १.) "न स पुनरावर्तत" इत्यादिश्रुतिविरोधः कर्माभावश्च बाधक इत्यत आह स्वेनेति, स्वशब्दोत्र भगवद्वाची, तथा च भगवत्स्वरूपबलेनैवाविर्भाव इत्यर्थः, एवं सत्युक्तश्रुतिर्मर्यादामार्गविषयिणीति न विरोध इतिभावः, 'तेषामिह' प्रपञ्चे 'न पुनरावृत्ति'रस्तीति हि श्रुतिराह, लीलायाः प्रपञ्चातीतत्वात् तत्राविर्भावस्य निषेधाविषयत्वादपि न विरोधः, अत्र प्रमाणाकाङ्क्षायामाह शब्दादिति, (तै. ब्र.) "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"तिश्रुतिः पुरुषोत्तमेन सह सर्वकामभोगं वदति, स च न विग्रहं विना सम्भवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थः ॥ १ ॥

हेत्वन्तरमाह,

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

अत्रोपक्रमे (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मितिवाक्येन परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव 'सोश्नुत' इत्यादिना क्रियते, तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्याशनस्य सिध्यत्यतोपि हेतोस्तदाविर्भावस्य न लौकिकत्वं न चावृत्तिरूपत्वमित्यर्थः ॥ २ ॥

ननु परस्य ब्रह्मणो निर्गुणत्वात् कामभोगस्य गुणसाध्यत्वात् 'सह ब्रह्मणे'त्यत्र 'ब्रह्म'पदं सगुणतत्परमतो न तस्य मुक्तिरूपत्वमित्यत आह।

---

**सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥** द्वितीयपादे सद्योमुक्तौ क्रममुक्तौ प्राप्यस्वरूपप्राप्तिप्रकारं दर्शयित्वा समाप्तौ ज्ञानमार्गीययोः सद्योमुक्तावक्षरप्राप्तिपुरुषोत्तमप्राप्तिरूपः फले विशेषोस्तीति दर्शितमिदानीं तत्पुरुषोत्तमप्राप्तिरूपं फलं भक्तः कथमनुभवतीत्यतस्तत्प्रकारः कीदृशं पुरुषोत्तमस्वरूपमिति तत्प्रकारश्चेत्येतदस्मिन् पादे विचार्यत इत्याशयेन सूत्रमुपन्यस्य विचारमारभन्ते ब्रह्मविदित्यादि, तत्रा 'श्नुत' इतिविवरणांशरूपे विषये, इदं वक्ष्यमाणं, अन्तःस्थित इतिपक्षे तस्य स्वातन्त्र्येण 'स' इत्यनेन भोगकर्तृत्वोक्तिर्विरुद्धा, अन्तःस्थितस्याभेदेन स्वातन्त्र्याभावात्, पूर्वपक्षमाहुस्तत्रेत्यादि, अन्त्यो जन्म प्राप्येतिपक्षः, समाधानमाहुः सम्पद्येत्यादि, तत्कृतो भगवत्कृतः, अस्य भक्तस्य, तत्राविर्भावे, एवं सति भक्ताविर्भावस्यावश्यकत्वे सति, उक्तश्रुति'र्न स पुनरावर्तत' इति मुक्तस्य संसारावृत्तिनिषेधिका श्रुतिः, ननु मर्यादामार्गे पुनरावृत्त्यभावः पुष्टिमार्गे च तत्सत्त्वमितिन्यूनतेत्यत आहुस्तेषामित्यादि, तेषां मुक्तानां, इहेति, यद्यप्येतच्छ्रुता'विहे'तिपदं तथा'पीमं मानवं नावर्तन्त' इतिश्रुत्येकवाक्यतया स एवार्थः, निषेधाविषयत्वान् 'न स पुनरावर्तत' इत्युक्तनिषेधाविषयत्वादित्यर्थः, अपिशब्दान्निषेधस्य पुष्टिमार्गसाधारण्येपि न विरोध इत्यर्थः, अत्र पुष्टिमार्गीयस्य भगवत्स्वरूपलीलाया आविर्भावे, तथा भगवत्स्वरूपाद् भक्ताविर्भावः ॥ १ ॥

**मुक्तः प्रतिज्ञानात् ॥ २ ॥** सूत्रमवतारयन्ति हेत्वन्तरमित्यादिना, ननु भक्तस्य भगवति सम्पन्नस्य पुनर्लीलार्थमाविष्करणमनावृत्तिरूपमलौकिकमेव न तु प्रपञ्चमध्यपातरूपं तत्र किं गमकमित्यतो हेत्वन्तरमाहेत्यर्थः, सूत्रं व्याकुर्वन्त्यत्रेत्यादिना, मुक्तिं प्रतिज्ञाय ब्रह्मविदो मुक्तिं प्रतिज्ञाय, तद्विवृतिः 'परमाप्नोती'त्यस्य विवृतिः, सूत्रार्थस्तु श्रुत्याविर्भूतस्य मुक्तिप्रतिज्ञाकरणाल् लीलार्थमाविर्भूत 'सोश्नुत' इतिप्रतिपादितो मुक्त इति ॥ २ ॥

**आत्मा प्रकरणात् ॥ ३ ॥** सूत्रमवतारयन्ति नन्वित्यादि, तत्परं ब्रह्मपरं, तस्य कामभोगाशनस्य ॥ ३ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

अत्र 'ब्रह्म'पदेनात्मा व्यापको मायातद्गुणसम्बन्धरहितो यः स एवोच्यते, कुतः? **प्रकरणात्**, (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्युपक्रम्य तत्पाठाद् गुणातीतस्यैवैतत् प्रकरणमिति तदेवात्र 'ब्रह्म'शब्देनोच्यत इत्यर्थः ॥ ३ ॥

ननु (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मिति भिन्नं वाक्यमृग् भिन्नातोनैकं प्रकरणमिति सगुणमेव तत्र 'ब्रह्म'पदेनोच्यत इत्याशङ्क्य प्रतिवदति,

## अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्ववाक्येन सममविभागेनैवेयमृक् पठिता न तु विभागेन, कुतः? **दृष्टत्वात्**, 'ब्रह्मविदि'ति-वाक्यानन्तरं 'तत्' पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्यैषर्गुक्तेतिश्रुतिर्दृश्यते "तदेषाभ्युक्ते"ति, तेन पूर्ववाक्योक्तार्थमधिकृत्यैवर्गुच्यत इति गुणातीतमेव तदत्र वाच्यमित्यर्थः ॥४॥ १ ॥

**॥ इति चतुर्थाध्याये चतुर्थपादे प्रथमं सम्पद्याविर्भावाधिकरणम् ॥ १ ॥**

पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिराविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामानश्नुत इति सिद्धं, अथ तत्रैवेदं विचार्यते, आविर्भूतो जीवः प्राकृतेन शरीरेण भुङ्क्ते उताप्राकृतेनेति? तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यमिति मन्वानं प्रत्याह,

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ (४. ४. २.)

**ब्राह्मेण** ब्रह्मसम्बन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुत इति **जैमिनिराचार्यो** मनुते, तत्र हेतु**रुपन्यासादिभ्य** इति, (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय, तदर्थस्यैवोपन्यासोग्रिमयर्चा क्रियते (तै. ब्र.) "सोश्नुत" इत्यादिना, तथा च परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवम्भूपत्वादक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात् तदात्मकमेव शरीरं तस्य वक्तुमुचितं न तु प्राकृतं, एतद्बोधनायैवाग्रेन्नमयादीनि विभूतिरूपाण्युक्तानि भक्तशरीरे प्रतीयमानानामर्थानां विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति, इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते, एतदानन्दमयाधिकरणे प्रपञ्चितमतो नात्र पुनरुच्यते, यत्र कर्मवादी जैमिनिरेवं मनुते तत्रान्येषामेवमङ्गीकारे किमाश्चर्यमितिज्ञापनाय तन्मतोपन्यासः कृतः ॥ ५ ॥

---

**अविभागेन दृष्टत्वात्** ॥४॥ सूत्रमवतारयन्ति नन्वित्यादि, **ऋग् भिन्ना** 'सत्यं ज्ञान'मित्यृग् भिन्ना, **तत्रर्चि**, **तद् ब्रह्म**, **अत्रर्चि** ॥ ४ ॥ १ ॥ ॥ इति चतुर्थचतुर्थे प्रथमाधिकरणम् ॥ १ ॥

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** ॥५॥ अत्र प्रथमाधिकरणीयसूत्रचतुष्टयमध्ये पूर्वसूत्रद्वये भगवद्दत्तालौकिकविग्रहेण भगवता सह भोगः साधितोपरसूत्रद्वयेन च भगवतः पुरुषोत्तमत्वमुक्तं तत्र पूर्वसूत्रद्वयसिद्धभक्तविग्रह सूत्रकारो विचारयतीति तमर्थमनुवदन्तोधिकरणमवतारयन्ति **पूर्वेणे**त्यादिना, **अनुग्रहातिशयेच्छा**तित्वरया फलदानानुकूलकृतिविषयिणीच्छा, **सिद्धमित्यन्तो** विषय उक्तः, संशयमाहुराविर्भूत इत्यादिना, पूर्वपक्षमाहुस्तत्रेत्यादिना, **तदायतनस्य** शरीरस्य, **तादृशेनैव** लौकिकेनैव, **पूर्वोक्तान्** सर्वान् कामान्, **तत्र** ब्राह्मशरीरेण भोगे, **उपन्यासादिभ्यो** विवरणादिभ्य इत्यर्थः, उपन्यासमेवोपपादयन्ति **ब्रह्मविदि**त्यादिना, **तस्या** मुक्तेः, **एवम्भूपत्वात्** सर्वकामाशनरूपत्वात्, **तदात्मकमेवा**क्षरब्रह्मात्मकमेव, **तस्य** भक्तस्य, **न तु प्राकृत**मिति 'शरीरा'न्वयि, ननु भक्तशरीराणामक्षरात्मकत्वे किं प्रमाणमित्यत आहुरेतद्बोधनायेत्यादि, शरीरस्याक्षरात्मकत्वबोधनायैवर्गात्मकोपन्यासानन्तरमन्नमयादीनि **विभूतिरूपाणि पुरुषविध**त्वेने ब्रह्मत्वेनोपास्यत्वेन **चोक्तानि** निरूपितानि तादृशे, तादृशनिरूपणस्य फलमाहुर्भक्तशरीर इत्यादिना, तादृशविभूतिरूपभक्तशरीरे इत्यर्थः, **अर्थाना**म्रूपरसगन्धस्पर्शादिसकलधर्माणामित्यर्थः, **तेन** पूर्वोक्तरीत्या विभूतिनिरूपणेन, **इदमेव** तादृशभक्तशरीरधर्माणां श्रुत्युक्तब्रह्मरूपत्वमेव, **आदिपदे**त्यादि, **उपन्यासादिभ्य** इत्यादिपदेबहुवचनेन तत्प्रकरणसकलब्रह्मरूपताप्रतिपादकश्रुतीनां ग्रहणमिति बोध्यं, **प्रपञ्चितं** वर्णकान्तरे प्रपञ्चितमित्यर्थः, **अन्येषां** ज्ञानिभक्तानां, **एवमङ्गीकारे** भक्तशरीराणामुक्तरीत्याक्षररूपताङ्गीकारे ॥ ५ ॥

## चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥

(बृह. ६. १. १३.) "स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन" इतिश्रुतौ 'घन'पदेन ज्ञानात्मकविग्रहात्मत्वं ब्रह्मणो बोध्यतेन्यथा न वदेत् प्रयोजनाभावात्, तथा च तादृशेन सह भोगकर्त्रा तादृशेनैव भाव्यमिति चिति चिद्रूपे ब्रह्मणि तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेण, श्रुतौ जीवस्य तथात्वस्यानुक्तेः, पूर्णानन्दत्वाद् भगवतस्तत्सम्बन्धेन तदानन्दाननुभवतीत्यर्थः सम्पद्यते, चिदात्मत्वं जीवस्य यतो नैसर्गिकमित्यौडुलोमिराचार्यो मनुते, (छान्दो. १०. १२. १.) "अशरीरं वावे"तिश्रुतिरेतादृशान्यविषयिणीति ज्ञेयं, मुक्तिदशायां तदनुभवस्य भगवदिच्छाविषयत्वाभावान्न तथा, तथा चैतदेतज्जातीयकानन्दानुभवोस्य भवत्वितिभगवदिच्छैव श्रुतौ "काम"शब्देनोच्यते ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

परमाचार्यो बादरायणस्तु नैवं मनुते (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्यस्योपन्यास एवमपि विग्रहवत्त्वेनापि कृतो यतः, तथा हि (तै. ब्र.) "यो वेद निहितं गुहाया"-मित्यत्र 'गुहा'या उक्तत्वात् तस्या विग्रह एव सम्भवात्, किञ्च प्रथमान्तोपस्थितत्वेन 'प्राप्नोती'-त्युक्त्या च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते, तदेव "ब्रह्मणा सहे"तिपदेनोपन्यस्तं, तेन ब्रह्मणोपि तत्समानक्रियावत्त्वं ज्ञाप्यते परन्त्वप्राधान्येन, तथा च भक्तस्यैव कामा वक्तुमुचितास्ते च न विग्रहं विना सम्भवन्ति, किञ्च "विपश्चिते"तिविशेषणेन विविधं पश्यच्चिद्रूपत्वमुच्यते, कामभोगोक्तिप्रस्ताव एतदुक्त्या तदुपयोग्येव सर्वं वाच्यं, एवं सति भक्तविविधभावान् पश्यति

---

चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥ सूत्रमवतारयन्ति स यथेत्यादिना, अन्यथा ज्ञानात्मकविग्रहानङ्गीकारे, न वदेच्छ्रुतौ 'घन'पदं न वदेदित्यर्थः, तादृशेन सच्चिदानन्दविग्रहेण भगवतेत्यर्थः, भोगकर्त्रा भक्तेन, तादृशेनैव सच्चिदानन्दवतैव, सूत्रार्थमाहुश्चितीत्यादि, चिन्मात्रेण रूपेण सच्चिदानन्दशरीरेणेत्यर्थः, न तु विग्रहेण सच्चिदानन्दात्मकातिरिक्तभौतिकविग्रहेणेत्यर्थः, तथात्वस्य सच्चिदानन्दविग्रहत्वस्य, तत्सम्बन्धेन सच्चिदानन्दविग्रहं प्राप्येत्यर्थः, तदानन्दान् भगवदानन्दान्, 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत' इतिश्रुतिः, अशरीरं भौतिकशरीरशून्यं, एतच्छ्रुतौ प्रत्येकं प्रियाप्रिययोर्भोगनिषेधादप्रियमिश्रितप्रियभोक्तृविषयिणीति न विरोध इत्यर्थः, नन्वशरीरस्य तादृशस्य मुक्तिसुखं कुतो न भवतीत्यत आहुर्मुक्तीत्यादि, तदनुभवस्य मुक्तिसुखानुभवस्य, भगवदिच्छेत्यादि, मुक्तिसुखवानयं भवत्वितिभगवदिच्छाविषयत्वाभावादित्यर्थः, 'कामानि'तिबहुवचनं समर्थयितुमाहुस्तथा चेत्यादि, एतज्जातीयकेति, भगवता 'सह' भुज्यमानत्वेन प्रतिपादितसजातीयेत्यर्थः, इत्येवविधाकारेत्यर्थः ॥ ६ ॥

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सिद्धान्तमाहुः परमेत्यादिना, नैवं मनुते चिदतिरिक्तविग्रहाभावं न मनुत इत्यर्थः, सूत्रेण सिद्धान्तं वक्तुमाहुर्ब्रह्मविदित्यादि, उपन्यास ऋमूप उपन्यासः, एवमपीतिसूत्रभागस्यार्थो विग्रहवत्त्वेनेत्यादि, तादृशार्थकरणमेव प्रदर्शयन्ति तथा हीत्यादिना, तस्या गुहायाः, प्राधान्येन श्रुतौ भक्तकामप्रतिपादनमुखेन भक्तानां विग्रहवत्त्वं साधयन्ति किञ्चेत्यादिना, प्रथमान्तेत्यादि, 'आप्नोती'-त्यस्य कर्तुः प्रथमान्तपदोपस्थाप्यत्वेनेत्यर्थः, स्वातन्त्र्यमित्यर्थः, उपन्यस्तं तृतीयान्तार्थस्य गौणत्वं प्रथमान्तार्थस्य प्राधान्यमिति 'सह'शब्देन बोधितमित्यर्थः, तत्समानेत्यादि, भक्तक्रियासमानक्रियानुकूलयत्नवत्त्वमित्यर्थः, कामाः 'सोश्नुते सर्वान् कामा'नित्यत्र भुज्यमानपदार्थगोचरा कामा भक्तनिष्ठा एवेत्यर्थः, विविधं नानाप्रकारकं नानाविशेष्यकं चेत्यर्थः, उच्यते भगवत उच्यते, एतदुक्त्या विविधपश्यच्चिद्रूपत्वोक्त्या, तदुपयोग्येव, इत्युक्तं भवतीति,

---

१. °नन्दमनु° बपागो। २. एव तदुक्त्येति क, तदुक्त्या श्रीहस्ताक्षरेषु।

स्वयं भोगचतुरश्चेत्युक्तं भवति, एतेनापि भक्तविग्रहः सिध्यति, ननु विग्रहस्यागन्तुकत्वेन लौकिकत्वादलौकिकेन ब्रह्मणा भोगो विरुद्ध इत्यत आह पूर्वभावादिति, भक्तप्राप्तेः पूर्वमेव भगवदित्सितभोगानुरूपविग्रहाणां सत्त्वान्न विरोधः, किञ्चोक्तश्रुतिसूत्रैः पुरुषोत्तमेन सह भक्तस्य कामभोगो निरूपितः, स यावतार्थेन विना नोपपद्यते तावान् स श्रुत्यभिमत इति मन्तव्यं, तथा च ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव, यथानुग्रहो यस्मिञ्जीवे स तादृशं तदाविश्य भगवदानन्दमश्नुत इति सर्वमवदातम् ॥ ७ ॥

एवं परप्राप्तिः केषाञ्चिदेव भवति, तत्र हेत्वपेक्षायामाह ।

## सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

भजनानन्दं दातुं यमेव सङ्कल्पविषयं करोति स एवैवं प्राप्नोतीति भगवत्सङ्कल्प एव तत्र हेतुः, तत्र प्रमाणमाह तच्छ्रुतेः, (कठ. २. २२.) "नायमात्मे"त्युपक्रम्य "यमेवैष वृणुते तेन लभ्य" इतिश्रुतिः श्रूयते, अतः स एवात्र हेतुः, श्रुतौ प्रवचनादिनिषेधः कृत इत्यत्राप्येवकार उक्तः, चकारात् तज्जनितैवैतदनुरूपा परमार्तिः सङ्गृह्यते ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव नान्योतो हेतोस्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति नान्यस्तेनानन्यास्ते तेषामेवाधिपतिः पुरुषोत्तमः, अन्यत्राधिपत्यं विभूतिरूपैः करोत्यतः (बृह. ६. ४. २२.) 'सर्वस्याधिपति'रितिश्रुतिरपि तदभिप्रायेणैवेतिभावः, चकारान् (श्रीमद्भाग. ९. ६. ८.) "मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपी"तिभगवद्वाक्यं सङ्गृह्यते, अन्यथा सर्वज्ञस्याकुण्ठितज्ञानशक्तेरेवङ्कथनमयुक्तं स्यात्, अतः पुष्टिमार्गोनुग्रहैकसाध्यः प्रमाणमार्गाद् विलक्षणस्तत्र विश्वासश्च तथेति सिद्धम् ॥ ९ ॥

मुक्तोपि जीवः पुष्टिमार्गेङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धं, अत्र प्रत्यवतिष्ठते[2] ।

## अभावं बादरिराह ह्येवम् ॥ १० ॥

बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते, तत्र हेतुराह ह्येवमिति, ब्रह्मविदो हि मुक्तिरुच्यते

---

'विपश्चित्'पदेनोक्तं भवतीत्यर्थः, एतेन भक्तविविधभावदर्शनोपपादनेन भक्तप्राप्तेः भगवता सह भक्तप्राप्तेः, भगवदित्सितो भगवता भक्ताय दातुमिच्छित इत्यर्थः, पूर्वोक्तविचारेण फलितो योर्थस्तमाहुः किञ्चेत्यादिना, सोर्थः, तदाविश्य शरीरमाविश्येत्यर्थ. ॥ ७ ॥

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥ सूत्रमवतारयन्त्येवमित्यादि, एवं पूर्वोक्तरीत्या, केषाञ्चिदेवेत्येवकारेण सर्वेषां प्राप्तिव्यवच्छेद , यमेव य जीवमेव, प्रवचनादीत्यादि, 'नायमात्मा प्रवचनेन लभ्यो न मेधये'त्यादीनां निषेधः कृत इत्यर्थः, अत्रापि सूत्रेपि, चकारात् सौत्रचकारात्, तज्जनिता सङ्कल्पजनिता, तदनुरूपा सङ्कल्पविषयीभूतफलानुरूपा ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥ सूत्रविवरणमाहुर्यत इत्यादिना, अन्यत्र पुष्टिभक्तभिन्नेषु, श्रुतिरपि 'सर्वस्य वशी सर्वस्येशान' इत्यादिना, तदभिप्रायेणान्यत्र विभूतिरूपेणाधिपत्याभिप्रायेण, चकारात् सौत्रचकारात्, तथा प्रमाणमार्गाद् विलक्षणः ॥ ९ ॥

अभावं बादरिराह ह्येवम् ॥१०॥ पूर्वसूत्रसिद्धार्थमनुवदन्तः सूत्रमवतारयन्ति मुक्तोपीत्यादि, अत्र विग्रह-

---

१. °क्तस्य ब । २. °ति कं[?] ।

क्रम्यात्मत एवेद९ सर्वमि''ति, तेनाशरीरत्वं सिध्यति, अव्ययप्रयोगेणाविकृतादेव पुरुषोत्तमात् प्राणाद्याविर्भाव उच्यते, अत्र ल्यब्लोपे पञ्चमी, पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसंस्ततस्तत्प्राकट्ये तत एव प्राणादयोपि सम्पन्ना इति तत्प्राप्तेर्निमित्तत्वं, यतो विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः, ''आत्मरति''रित्यादिना ''सोश्नुत'' इत्यनेन च शरीरत्वं, जैमिनिरप्यत एव (ब्र. सू. ४.४.५.) ''ब्राह्मेणे''ति मनुते, एकस्य विरुद्धोभयधर्मवत्त्वममन्वानं प्रति वैदिकं दृष्टान्तमाह द्वादशाहवदिति, (तै. सं. ७. २. ९.) ''यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते''तिचोदनया (तै. सं.७.१.४.) ''द्विरात्रेण यजेते''त्यादिवन्नियतकर्तृकैत्वेनाहीनत्वं गम्यते द्वादशाहस्य,(तै.सं.७.५.१.) ''द्वादशाहमृद्धिकामा उपेयुर्य एवं विद्वा९सः सत्रमुपयन्ती''तिश्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते, एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तःकरणात्मभि'रश्नुत' इति सत्रतुल्यत्वं, वस्तुतो भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयविधं, सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वाच्चेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते, अत एव श्रीभागवते (७.१.२४.) ''देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामि''ति गीयते ॥ १२ ॥ २ ॥

॥ इति चतुर्थाध्याये चतुर्थपादे द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

अथेदं चिन्त्यते भगवत्स्वरूपे प्राकृतशरीर इवावस्था दृश्यन्ते तत्कालीनैः पुंभिरिति कथमप्राकृतत्वमुपपद्यत इति तत्रोपपत्तिमाह ।

## तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ (४. ४. ३.)

तद्दर्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय तुशब्दः, तत् प्राकृततुल्यतादर्शनमभावे तथात्वस्याभाव एव भवति, न तु तत्र प्राकृता धर्माः सन्ति, नन्वविद्यमानानामर्थानां कथं दर्शनमुपपद्यत इत्यत आह सन्ध्यवदिति, स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं भवति तथा भगवदिच्छावशात् तत्रापि प्राकृततुल्यत्वदर्शनस्योपपत्तेर्न प्राकृतत्वं तत्र ज्ञेयमित्यर्थः, तथा च श्रुतिः (बृह. ६. ३. ९.) ''सन्ध्यं तृतीय९ स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानञ्च,'' ''अथ यथाक्रमोयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति स यत्रायं प्रस्वपिती''त्युपक्रम्य

भूतान्यत्वेनेत्यर्थः, आतमत आत्मस्वरूपात्, अव्ययप्रयोगेणा'त्मत'इतिप्रयोगेण, पञ्चम्यर्थकथनेन श्रुत्यर्थमाहुः पूर्वमित्यादिना, ततो विरहदशोत्तरकाले, तत्प्राकट्ये भगवति दर्शनविषयीभूते, तत एव भगवत एव, तत्प्राप्तेर्भगवत्प्राप्तेः, निमित्तत्वं भक्तानां प्राणादिसकलदेहधर्मप्राप्तौ निमित्तत्वं, शरीरत्वं भक्तदेहस्य शरीरत्वं, ब्राह्मेण विभूतिरूपशरीरेण, अहीनत्वं द्वादशाहस्याहीनत्वं सत्रत्वमित्येकस्योभयरूपत्वं श्रुतिसिद्धमित्यर्थः, एवं भक्तस्य सत्रतुल्यतामुपपादयन्त्येवमेवेत्यादिना, शरीरस्य द्वादशाङ्गता निबन्धे स्फुटा तेन भोगाशनं, एकमन्तःकरणसहितान्येकादशेन्द्रियाण्यात्मा चैतैरपि द्वादशभिर्भोगाशनं, एवं सङ्ख्यया सत्रतुल्यत्वं पूर्वोक्तरीत्या शरीरद्वैविध्येनापि शरीरस्य भक्तीयस्य तुल्यत्वं बोध्यं, भक्तशरीरसत्रयोर्भगवद्विभूतित्वभगवद्रूपत्वाभ्यां द्वैविध्येन साम्यमुपपादयन्ति वस्तुत इत्यादिना, तादृगुक्तसर्वकामभोक्तृ, देहेन्द्रियेत्यादि, भौतिकदेहेन्द्रियादिहीनानामित्यर्थः ॥ १२ ॥ २ ॥

॥ इति चतुर्थचतुर्थे द्वितीयाधिकरणम् ॥ २ ॥

**तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥** भक्तदेहस्वरूपं विचारयितुमधिकरणमवतारयन्त्यथेत्यादिना, भगवत्स्वरूप इत्यादिना संशयादिकमाहुः, तथा चात्र फलरूपं भगवत्स्वरूपं प्रकृतिसम्बन्धवन्न वेतिसंशयः प्रकृतावस्थादर्शनात् प्राकृतमितिपूर्वपक्षः प्राकृतत्वेन दर्शनस्य स्वप्नतुल्यत्वादप्राकृतमितिसिद्धान्तः, तत्र पूर्वपक्षनिवृत्तिनिमित्तं, उपपत्तिं तुशब्देनोपपत्तिं, आह सूत्रकार इत्यर्थं, तद्दर्शनस्येति भगवति प्राकृतावस्थादर्शनस्य

१ °नः क । २ पूर्वविरह° कैगो । ३ श्रीहस्ताक्षरेषु नास्ति ततःपदम् । ४. °कर्तृत्वेन कै । ५. लुप्तं कैपा । ६. °मर्थानां कपु, °मानार्थानां कै । ७. °तीती° क ।

(बृह. ६.३.१०.) "स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति न तत्र रथा न रथयोगा न पन्थानो भवन्ती"त्यादिरूपा, एवमेव भगवानासुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसम्पादनाय तादृशीमिव लीलां दर्शयत्यतो न प्राकृतत्वशङ्कागन्धोऽप्यत्र, अत एव भगवतोक्तं (भ. गी. १६. १८.) "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका" इत्युपक्रम्य (१६.२०.)"ततो यान्त्यधमां गति"मिति, तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणं, अतः सुष्ठूक्तं सन्ध्यवदुपपत्तेरिति ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

लौकिकवद् भासमाने लीलापदार्थे यद् दर्शनं भक्तानां तत् तु भावे विषये विद्यमाने सति भवति, अत्र दृष्टान्तमाह जाग्रद्वत्, यथा मोहाभाववतः पुंसः एवार्थस्य दर्शनं तथेति ।

एताभ्यां सूत्राभ्यामेतदुक्तं भवति, (तै.ब्र.) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"तिश्रुत्या भक्तकामपूरणाय भगवाँल्लीलां करोतीति गम्यते यद्दर्शनश्रवणस्मरणैर्भक्तानां दुःखं भवति तादृशीमपि तां करोतीति श्रूयते, यथा सौभयुद्धे मोहवचनानि हस्तादायुधच्युतिः प्रभासीयलीला च, उक्तरीत्या 'सोऽश्नुत' इतिश्रुत्या परब्रह्मत्वमवगम्यत उक्तलीलया तद्वैपरीत्यं च, एवं सत्येकस्या वास्तवत्वमन्यस्या अवास्तवत्वं वाच्यं, (तै.सं.१.३.६.) "ते ते धामान्युश्मसि" "विष्णोः कर्माणि पश्यत" "तद् विष्णोः परमं पदं" "तद् विप्रासो विपन्यव" इत्यादिश्रुतिभिः (म. ना. १३.१.) "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं विश्वं नारायणं देवमक्षरं परमं पदं विश्वतः परमं नित्यं विश्वं नारायणꣳ हरिं विश्वमेवेदं पुरुषस्तद् विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरꣳ शाश्वतं शिवमच्युत"मित्यादिभिश्च शुद्धब्रह्मणस्तद्विपरीतदर्शनेवश्यं हेतुर्वाच्यः, स त्वासुरव्यामोहनमेवेति पूर्वसूत्रेणोपपादितः, भक्तेभ्यः स्वरूपानन्ददानाय (ब्र. सू.२.१.३३.) "लोकवत् तु लीला कैवल्य"मितिन्यायेन या लीलाः करोति यथा रिङ्गणादिलीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव ता भक्ताः पश्यन्तीति द्वितीयसूत्रेणोक्तं, अत एव लीलाया अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच् छुद्धब्रह्मधर्मत्वं न सम्भवतीतिशङ्कानिरासाय 'कैवल्य'मित्युक्तं, (श्वेता. ६.११.) "साक्षी चेता केवलो निर्गुण"श्चेत्यादिश्रुतिषु यान्यधर्मराहित्यलक्षणा 'केवल'तोक्ता सा लीलात्मिकैव, लीलाविशिष्टमेव शुद्धं परं ब्रह्म न कदाचित् तद्रहितमित्यर्थः पर्यवस्यति, तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वं, एतद् विद्वन्मण्डने प्रपञ्चितं, अथवा 'लीलै'व 'कैवल्यं' जीवानां मुक्तिरूपं, तत्र प्रवेशः परमा मुक्तिरितियावदित्यर्थः ॥१४॥३॥

॥ इति चतुर्थाध्याये चतुर्थपादे तृतीयं तत्त्वभावाधिकरणम् ॥ ३ ॥

---

वास्तववस्तुविषयकत्वाभावेनाभाव एवेति सादृश्यस्य भेदघटितत्वादित्यर्थः, तत्र भगवति, तत्रापि भगवत्यपि, उपपत्तेर्भ्रान्तत्वेन दर्शनस्योपपत्तेरित्यर्थः, अन्यत् स्फुटम् ॥ १३ ॥

भावे जाग्रद्वत् ॥१४॥ सूत्रमवतारयन्ति लौकिकेत्यादि, पूर्वं दोषकार्यमुक्तमिदं गुणकार्यमुच्यत इति बोद्धव्यं, अत्र पूर्वसूत्रा'दुपपत्ते'रित्यनुवर्तनीयं, तथा च 'लोकवत् तु लीलाकैवल्य'मित्यादिरीत्या पौगण्डबालकिशोराद्यवस्थापन्नस्य दर्शनं वास्तववस्तुदर्शनमेवेति बोध्यं, एताभ्यामनुपदमुक्ताभ्यां, तां लीलां, उक्तलीलया 'सोऽश्नुते' इतिलीलया, तद्वैपरीत्यं मोहकलीलाजन्यदुःखवैपरीत्यसुखरूपमित्यर्थः, तद्विपरीतदर्शने ब्रह्मधर्मातिरिक्तधर्मप्रकारेण ब्रह्मविशेष्यकदर्शने, स तु शुद्धस्य ब्रह्मण आविद्यकधर्मेण दर्शने हेतुः, एकरसत्वेत्यादि, नानाविधलीलासु भगवत एकरसरूपत्वमित्यर्थ , तेन स्वरूपात्मकत्वेन, प्रकारान्तरेण 'कैवल्य'पदार्थमाहुरथ वेत्यादि, तत्र प्रवेशो लीलायां प्रवेशः॥ १४॥३॥

॥ इति चतुर्थचतुर्थे तृतोयाधिकरणम् ॥ ३ ॥

---

१. °सम्भवं क. लुप्तं कं ।